तीर्थे स्नात्वा, पितृभ्यः पिण्डान् ददुः । माधवोऽपि कपिले स्नात्वा स्वपितृभ्यः श्रद्धया मृदा पिण्डान् कृत्वा ददौ । पुण्यतीर्थप्रभावं किं ब्रूमः ? मृत्-पिण्डदानेनापि माधवस्य पितृपितामहादयः श्रीहरि-अनुग्रहात् मुक्तिं आपुः । ततः ते नृपाः सपरिवारं शेषाद्रिं आरुरुहुः । माधवोऽपि पुण्यतमं शेषाचलं आरुरोह । तदा किं ब्रूमः ? माधवस्य तद्भूधरस्पर्शमात्रेण तत्कृत-सुरापान-मांसाशन-चण्डालस्त्री-सङ्गादिजन्यं महापातकं तस्य शरीरात् निर्गन्तुं अयतत । तदा माधवस्य मक्षिकां भक्षितस्य इव वमने अतिकष्टं समभूत् । किन्तु कोऽपि अग्निः हरीच्छया तद्देहात् उद्भूतः तत्पापं परितः आवृण्वन् अदहत् । एवं तद्गिरिस्पर्शमात्रेण तद्गिरिनाथानुग्रहेण माधवः सर्वपापविनिर्मुक्तः विरेजे ।

पापरहितं परमपवित्रं माधवं दृष्ट्वा देवाः आनन्देन तस्य शिरसि पुष्पवृष्टिं ववृषुः । तदा ब्रह्मा देवैः सह आगत्य हरीच्छां स्मरन् माधवं करैः स्पृष्ट्वा तं प्रति "विप्रेन्द्र ! अद्य त्वं गतपापः । इदानीं त्वं स्वामितीर्थे स्नात्वा श्रीवराहं नत्वा तत्पादोदकं पीत्वा तव देहं त्यज । भाविजन्मनि पाण्डवानां दौहित्रकुले सुधर्मस्य राज्ञः पुत्रत्वेन अवतीर्य आकाशराज इति नाम्ना ख्यातः सन् तोण्डदेशाधीशो भूत्वा नारायणपुरे वसन् राज्यं निष्कण्टकं पालय । साक्षात् जगन्माता रमा तव पुत्रीत्वेन अवतरिष्यति । साक्षात् जगदीशो हरिः तव जामातृत्वेन अवतरिष्यति । तयोः श्रीश्रीनिवासयोः त्वमेव कल्याणं करोषि । चिरं सुखं अनुभूय अन्ते वैकुण्ठं प्राप्स्यसि" इति ब्रुवन् धाता माधवाय वरं दत्वा "अयं गिरिः वें पापं कटते परिहरति" इति हेतोः अस्य वैकुण्ठगिरेः 'वेङ्कटाचल' इति नाम चकार । तदारभ्य इमं गिरिं वेङ्कटगिरिं इति देवा जगुः । अत एव जनकनृप ! पापहरणहेतोः अयं वैकुण्ठगिरिः कलौ वेङ्कटाचल इति विख्यातः ॥

इमं गिरिं नित्यं यः पुमान् प्रातः कीर्तयति तस्य गङ्गा-सेतुयात्रासहस्रजन्यं यत्फलं तत्सदृशफलं भवेत् ॥ एतत् वेंकटाचलमाहात्म्यं ये शृण्वन्ति । तेषां सकलकल्याणानि भवन्ति । श्रवणात् श्रोतारः पवित्राः भवन्ति च ॥ इत्येवं चतुर्युगमहिमाविशेषं यं शतानन्दः जनकं प्रति निरूपयामास तमेव विषयं सूतः शौनकादिविप्रेभ्यः निरूपयामास ॥

*इति स्थले श्रीमद्भविष्योत्तरपुराणे श्रीवेङ्कटेशमाहात्म्ये प्रथमाध्यायकथासङ्क्षेपः ॥*

॥ श्रीकृष्णार्पणमस्तु ॥



॥ श्रीः ॥

# श्रीमद्भविष्योत्तरपुराणान्तर्गतं

# श्रीवेङ्कटेशमाहात्म्यम्

श्रीमत्पूज्यनृपश्चानननामभिः प्रणीतेन

कल्याणकाण्डदीपव्याख्यानेन समेतम्

तथा

गूढकर्तृक-व्याख्यानसहितं च

## मूलम्

### मङ्गलाचरणम्

ब्रह्मरुद्रादिवन्द्यं त्वां भजे वेङ्कटनायकम् ।
[१]निवारयस्वानिष्टानि साधयेष्टानि माधव ॥

१. निवारयाइवनिष्टानि ।

### श्रीवेङ्कटेशमाहात्म्यं श्रोतुं शौनकमुनिकृतप्रार्थनाप्रकारः

शौनक उवाच—

सूत सूत महाभाग सर्वशास्त्रविशारद ।
त्वत्तोऽहं श्रोतुमिच्छामि माहात्म्यं पुण्यवर्धनम् ॥ १ ॥

कथितं रङ्गमाहात्म्यं त्वया हस्तिगिरीशितुः ।
जगन्नाथस्य वै विष्णोर्माहात्म्यमतुलं मुने ।
इदानीं श्रोतुमिच्छामि माहात्म्यं वेङ्कटेशितुः ॥ २ ॥

तीर्थे स्नात्वा, पितृभ्यः पिण्डान् ददुः । माधवोऽपि कपिले स्नात्वा स्वपितृभ्यः श्रद्धया मृदा पिण्डान् कृत्वा ददौ । पुण्यतीर्थप्रभावं किं ब्रूमः ? मृत्-पिण्डदानेनापि माधवस्य पितृपितामहादयः श्रीहरि-अनुग्रहात् मुक्तिं आपुः । ततः ते नृपाः सपरिवारं शेषाद्रिं आरुरुहुः । माधवोऽपि पुण्यतमं शेषाचलं आरुरोह । तदा किं ब्रूमः ? माधवस्य तद्भूधरस्पर्शमात्रेण तत्कृत-सुरापान-मांसाशन-चण्डालस्त्री-सङ्गादिजन्यं महापातकं तस्य शरीरात् निर्गन्तुं अयतत । तदा माधवस्य मक्षिकां भक्षितस्य इव वमने अतिकष्टं समभूत् । किन्तु कोऽपि अग्निः हरीच्छया तद्देहात् उद्भूतः तत्पापं परितः आवृण्वन् अदहत् । एवं तद्गिरिस्पर्शमात्रेण तद्गिरिनाथानुग्रहेण माधवः सर्वपापविनिर्मुक्तः विरेजे ।

पापरहितं परमपवित्रं माधवं दृष्ट्वा देवाः आनन्देन तस्य शिरसि पुष्पवृष्टिं ववृषुः । तदा ब्रह्मा देवैः सह आगत्य हरीच्छां स्मरन् माधवं करैः स्पृष्ट्वा तं प्रति "विप्रेन्द्र ! अद्य त्वं गतपापः । इदानीं त्वं स्वामितीर्थे स्नात्वा श्रीवराहं नत्वा तत्पादोदकं पीत्वा तव देहं त्यज । भाविजन्मनि पाण्डवानां दौहित्रकुले सुधर्मस्य राज्ञः पुत्रत्वेन अवतीर्य आकाशराज इति नाम्ना ख्यातः सन् तोण्डदेशाधीशो भूत्वा नारायणपुरे वसन् राज्यं निष्कण्टकं पालय । साक्षात् जगन्माता रमा तव पुत्रीत्वेन अवतरिष्यति । साक्षात् जगदीशो हरिः तव जामातृत्वेन अवतरिष्यति । तयोः श्रीश्रीनिवासयोः त्वमेव कल्याणं करोषि । चिरं सुखं अनुभूय अन्ते वैकुण्ठं प्राप्स्यसि" इति ब्रुवन् धाता माधवाय वरं दत्वा "अयं गिरिः वें पापं कटते परिहरति" इति हेतोः अस्य वैकुण्ठगिरेः 'वेङ्कटाचल' इति नाम चकार । तदारभ्य इमं गिरिं वेङ्कटगिरिं इति देवा जगुः । अत एव जनकनृप ! पापहरणहेतोः अयं वैकुण्ठगिरिः कलौ वेङ्कटाचल इति विख्यातः ॥

इमं गिरिं नित्यं यः पुमान् प्रातः कीर्तयति तस्य गङ्गा-सेतुयात्रासहस्रजन्यं यत्फलं तत्सदृशफलं भवेत् ॥ एतत् वेंकटाचलमाहात्म्यं ये शृण्वन्ति । तेषां सकलकल्याणानि भवन्ति । श्रवणात् श्रोतारः पवित्राः भवन्ति च ॥ इत्येवं चतुर्युगमहिमाविशेषं यं शतानन्दः जनकं प्रति निरूपयामास तमेव विषयं सूतः शौनकादिविप्रेभ्यः निरूपयामास ॥

*इति स्थले श्रीमद्भविष्योत्तरपुराणे श्रीवेङ्कटेशमाहात्म्ये प्रथमाध्यायकथासङ्क्षेपः ॥*

॥ श्रीकृष्णार्पणमस्तु ॥



॥ श्रीः ॥

## श्रीमद्भविष्योत्तरपुराणान्तर्गतं

# श्रीवेङ्कटेशमाहात्म्यम्

श्रीमत्पूज्यनृपश्चाननननामभिः प्रणीतेन

कल्याणकाण्डदीपव्याख्यानेन समेतम्

तथा

गूढकर्तृक-व्याख्यानसहितं च

मूलम्

मङ्गलाचरणम्

ब्रह्मरुद्रादिवन्द्यं त्वां भजे वेङ्कटनायकम् ।
[१]निवारयस्वानिष्टानि साधयेष्टानि माधव ॥

---

१. निवारयाऽवनिष्टानि ।

श्रीवेङ्कटेशमाहात्म्यं श्रोतुं शौनकमुनिकृतप्रार्थनाप्रकारः

शौनक उवाच—

सूत सूत महाभाग सर्वशास्त्रविशारद ।
त्वत्तोऽहं श्रोतुमिच्छामि माहात्म्यं पुण्यवर्धनम् ॥ १ ॥

कथितं रङ्गमाहात्म्यं त्वया हस्तिगिरीशितुः ।
जगन्नाथस्य वै विष्णोर्माहात्म्यमतुलं मुने ।
इदानीं श्रोतुमिच्छामि माहात्म्यं वेङ्कटेशितुः ॥ २ ॥

**कल्याणकाण्डदीपः**

श्रीगणाधिपतये नमः ॥ श्रीश्रीनिवासाय नमः ॥
श्रीमध्वादिगुरुभ्यो नमः ॥ श्रीराघवेन्द्रतीर्थगुरुभ्यो नमः ॥

निखिलगुणनिकायं नित्यनिर्धूतहेयं
शुभतममतिमेयं शुद्धसौख्यास्त्युपायम् ।
सकलनिगमगेयं सर्वशब्दाभिधेयं
नवजलधरकायं नौमि लक्ष्मीसहायम् ॥ * ॥

भास्वच्चन्द्रसमे यदीयनयने भार्या यदीया रमा
यस्माद्विश्वसृगप्यभूदृषिकुलं यज्ज्ञानयुक्तं सदा ।
नाथो यो जगतां नगेन्द्रदुहितुर्नाथोऽपि यद्भक्तिमान्
तातो यो मदनस्य यो दुरितहा तं वेङ्कटेशं भजे ॥ * ॥

॥ हरिः ॐ ॥

श्रीनिवासं सम्प्रणम्य तथा मध्वादिकान् गुरून् ।
पुराणानि समालोच्य नन्दितीर्थोक्तमार्गतः ॥ * ॥

ज्वालानृकेसरीक्षेत्रे वासिना तत्कृपाबलात् ।
पादीन्मध्यमलान्तादिनृपञ्चानननामिना ॥ * ॥

पुराणेऽखिलकल्याणे सभविष्ये सहोत्तरे ।
श्रीनिवासस्य कल्याणकाण्डदीपः प्रकाश्यते ॥ * ॥

न व्युत्पत्त्यभिमानेन नापि डम्भाशयात् क्वचित् ।
यत्नोऽयं किन्तु धीवाचोविशुद्ध्यै मम नान्यथा ॥ * ॥

स्पष्टार्थो य इह ग्रन्थः स न व्याक्रियते मया ।
नामूलं लिख्यते प्रायो नानपेक्षितमुच्यते ॥ * ॥

पदवाक्यमाननिपुणा निपुणं विमृशन्त्विदं विवरणम् ।
गुणदोषनिर्णयनिमित्ततया प्रथिता हि पण्डितजना जगति ॥ * ॥

विद्वांसो यदि मम दोषमुद्गिरेयुर्यद्वा ते गुणगणमेव कीर्तयेयुः ।
तुल्यं तद्बहु मनुते मनो मदीयं कष्टं तद्बहु मनुते यदाह मन्दः ॥ ※ ॥

[1]आपरितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम् ।
बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः ॥ ※ ॥

गुरुचरणसरोजसन्निधानादपि वयमस्य गुणैकलेशभाजः ।
अपि महति जलार्णवे निमग्नाः सलिलमुपाददते मितं हि मीनाः ॥ ※ ॥

अथ खलु परमकारुणिकः शौनकः कलिकलिलकालकलितकालुष्यदोषेण तत्त्वाकलनकला-विकलानां विविधसांसारिकदुःखपरिश्रमिणां सताम् अस्मिन् कलावपि धर्मज्ञानवैराग्यसम्पत्समृद्धिद्वारा समस्तमङ्गलावाप्तये अमृताय शेषाचलनिवासिनः श्रीनिवासस्य कल्याणकथां प्रस्तावयितुं सूतं पृच्छति **'कथितं रङ्गमाहात्म्यम्'** इत्यादिना ।

*अथ तावदेकादशलक्षणीलक्षणकल्याणकाण्डस्य,*

१. आद्ये लक्षणे युगभेदेन शैलस्य नामचतुष्टयप्रवृत्तिनिमित्तानुवर्णनम्,

२. द्वितीये रमारमेशयोर्वैकुण्ठाद्वसुन्धरावतरणाद्युक्तिः,

३. तृतीये श्रीनिवासनिवासवल्मीके धेनोः क्षीरसेचनं चोलराजनिबन्धनादिकथनम्,

४. चतुर्थे जगदीशसुरगुर्वोः समागमसम्भाषणम्,

५. पञ्चमे बकुलाजनिनिदान श्रीनिवासमानुषलीलातत्त्वालपनम्,

६. षष्ठे हरेः किरातीकरणं, पुत्रार्थं लालप्यमानराजविलापनं, पद्मावतीसन्दर्शनं, पुत्रसम्पत्, नारदागमनं चेति बहुकथाकथनम्,

७. सप्तमे किरातपद्मासल्लापविप्रलापौ, शिलाप्रहारघोटराट्पतने च निरूप्यन्ते,

८. अष्टमे पद्मावतारनिमित्तं बकुलाप्रस्थानसहितपुलिन्दिनीसमागमश्च इत्येतौ कथ्येते,

९. नवमे माङ्गल्यपत्रिकालाभः,

१०. दशमे सर्वदेवतासमागमो लक्ष्मीसमागमश्च प्रतिपाद्येते,

११. एकाधिके दशमे पद्मावतीपरिणयनाभिनन्दनमिति कल्याणकाण्डलक्षणार्थः ॥

१. 'ख'मातृकायां अयं श्लोकः न दृश्यते । (अभिज्ञानशाकुन्तलम् प्रथमाङ्के श्लो. २)

अत्र शौनकः प्रष्टा । वक्ता सूतः । तस्य मनःप्रसादजननाय वृत्तकथनपूर्वकं वर्तिष्यमाणं पृच्छति **'कथितम्'** इत्यादिना । अन्यथा यैः सावधानमनोभिर्न श्रूयते तथा श्रुतमपि न धार्यते तेभ्यः पुराण-कथनमेडमूकमृडीकरणमित्यनादरो वक्तुः स्यात् ।

अत्रेदमनुसन्धेयम्— न हि पुराणवक्ता वदनमस्तीति व्यवहारव्यसनितया सुखेन कालयापनाय वा जनमनोरञ्जनेन वर्तनाय वा वक्ति, श्रोता वा श्रोत्रमस्तीति व्यसनितया शृणोति, अपि तु विशाल-वसुधात्वसम्मार्जनीकुसूलकुड्डुपचालिन्यादि गृहोपकरणोष्णीशकञ्चुकपादुकादिविग्रहोपस्करणावकाश-नवकीर्णत्वमार्जितत्वकथानर्हजनसम्बन्धरहितत्वादिदेशनियमेन तथा सूर्योदयमारभ्य आप्रहरमित्यादि-कालनियमेन-स्नातत्वप्रक्षालितपादत्वाचान्तत्वधृतोर्ध्वपुण्ड्रत्व-धृतश्रीतुळसीमणिमालात्वादि-शरीर-नियमेन लोकवार्ता-धनागार-पुत्रादिचिन्ताव्युदस्तत्वाद्याभ्यन्तरनियमेन भक्तिश्रद्धातिशयगुणवत्तया भक्त्यर्थम् उच्यते श्रूयते च रसज्ञैः ।

*तदुक्तं पाद्मे विंशेऽध्याये—*

"विशाला वसुधा यत्र कर्तव्यं तत्कथास्थलम् ।
शोधनं मार्जनं भूमेर्लेपनं धातुमण्डनम् ॥
गृहोपस्करमुद्धृत्य गृहकोणे निवेशयेत् ।
अनेकधर्मविभ्रान्ता स्त्रैणाः पाखण्डवादिनः ॥
शुकशास्त्रकथोच्चारे त्याज्यास्ते यदि पण्डिताः ।
पुस्तकस्यासनं दिव्यं कर्तव्यं च महत्तरम् ॥
वक्तुश्चापि तथा दिव्यमासनं परिकल्पयेत् ।
आसूर्योदयमारभ्य सार्धत्रिप्रहरान्तकम् ॥
वाचनीया कथा सम्यक् धीरकण्ठेन धीमता ।
लोकवार्ताधनागारपुत्रचिन्तां व्युदस्य च ।
कथासक्तः शुद्धमतिः स लभेत् फलमुत्तमम् ॥" इत्यादि ।

*भागवते च (१.२०.१७)—*

"तस्मादेकेन मनसा भगवान् सात्वताम्पतिः ।
श्रोतव्यः कीर्तितव्यश्च ध्येयः पूज्यश्च नित्यदा ॥" इति ।
"आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः ॥"

*—(बृ.आ.उ. २.४.५) इति श्रुतेश्च ॥*

तथा च अस्माभिः श्रुतोऽर्थो मत्वा धृतो न विस्मृत इति सूचनाय वृत्तानुकथनम् ॥

**रङ्गमाहात्म्यम्**— रङ्गस्य = रङ्गनाथस्य। माहात्म्यं = महान् श्लाघनीयः विपुलः अनेकः आत्मा देहः कल्याणगुणस्वभावः यस्य सः महात्मा, तस्य भावः कर्म च माहात्म्यम्।"गुणवचनब्राह्मणादिभ्यः कर्मणि च" (अ.सू.५.१.१२४) इति भावकर्मणोः ष्यञ्। सुन्दरविग्रहानवद्यकल्याणगुणक्रियादिमत्त्वमिति यावत्। भगवति च औचित्यात् निरवधिकानन्तानवद्यकल्याणगुणक्रियानामरूपादिमत्वं माहात्म्यम्। मह्यते पूज्यत इति महान्। मह पूजायाम्।

"विशाले च त्रिलिङ्गः स्यान्महद्राज्ये च न द्वयोः।
शततन्त्रीविपञ्च्यां तु महती परिकीर्तिता।
आत्मा यत्नो धृतिर्बुद्धिः स्वभावे परमात्मनि ॥" इत्यमरः।

**हे मुने!** = वेदशास्त्रतत्त्वज्ञानिन्, **त्वया, कथितम्** = उक्तम्, यद्वा— कथा = विरचितप्रबन्धः साऽस्य सञ्जातेति तारकादित्वादितच्। तथा च कथितं स्वबोधकपुराणप्रबन्धरूपेणास्माकं श्रावितमिति यावत्। तच्चास्माभिरुपदिष्टवाक्यार्थज्ञानरूपश्रवणविषयीकृतम्। तेनाऽज्ञानं निवृत्तम्। ततो न्यायेन श्रुतार्थानुसन्धानुरूपं मननं कृतम्। ततोऽपरोक्षज्ञानाङ्गस्वच्छान्तःकरणप्रतिबिम्बितवासनामयमूर्तेरविच्छिन्नमानसावलोकनरूपध्यानाङ्गधृढधारणं च कृतमिति फलितम्। पुराणश्रवण एतत्पर्यन्तत्वस्य "आपीयतां कर्मकषायशोषान्" (भा. २.६.४५) इत्यादिश्रवणविधेः "श्रोतव्यः कीर्तितव्यश्च" (भा. १.२.१४) इत्येतत्परिभाषैकवाक्यतया सिद्धत्वात्। इयं च जिज्ञासा विधिमूला।

अत्रायं क्रमः— "सात्त्विकप्रकृतेः पूर्वं पुण्यतीर्थनिषेवणम्। तेन सत्सेवारोचकपापनाशः। ततः साधुसेवा। तया सद्धर्मश्रद्धा। ततः सच्छास्त्रश्रवणेच्छा। ततः सत्कथारुचिः। ततः श्रवणम्। ततो मननम्। ततो धारणम्। तस्माद् ध्यानम्। तेन ज्ञानम्। ततो भक्तेरात्यन्तिकी परिपक्तिः (परिपक्वभक्तिः)। ततः प्रसादः। तेनानन्दाविर्भावः" इति। एतत्सर्वं भागवतादौ प्रसिद्धम्।

श्रोत्राकाङ्क्षापूर्तये रङ्गमाहात्म्यं किञ्चिल्लिख्यते।

*तार्क्ष्य(गरुड)पुराणे अष्टमेऽध्याये—*

"विभीषणेन चानीतं श्रीरङ्गं भगवत्प्रियम्।
यस्यास्तीरे महद्धाम ततः सा सरितां वरा ॥
तत्तीरसौख्यात् सौगन्ध्यात् तच्छैत्यात् तत्प्रियत्वतः।
रक्षसाऽभ्यर्चितश्चापि तदन्यत्र निनीषता ॥

कावेरी न जहौ रङ्गीं कीर्तिं लक्ष्मीं यथा पुरा ।
यथा पतिं चिरप्राप्तं भुजाभ्यां प्रियमङ्गना ।
तद्धामोभयतो गच्छत् परिक्रम्य सरिद्वरा ॥'' इत्यादि ।

*तथा पञ्चचत्वारिंशोऽध्याये—*

वेधा उवाच—

''शृणु दिव्यं महद्धाम श्रीरङ्गमिति शब्दितम् ।
महता तपसा लब्धं इदं शक्र मया पुरा ॥

एतद्धि मनवे दत्तं तस्मादिक्ष्वाकुराप्तवान् ।
ततश्चैतत् क्रमाल्लब्धं राघवेण महात्मना ॥

ददौ विभीषणायासौ प्रियाय प्रियकारिणे ।
सोऽपि गच्छन् स्वकं देशं अवतीर्य नदीतटे ॥

विमाने परमप्यत्र पूजयामास राक्षसः ।
तदुद्धर्तुमसौ यत्नमकरोद्बलवानपि ॥

न शशाक मनागस्मादेतच्चालयितुं तदा ।
अथापतद्धरण्यां वै विलपन् सोऽतिदुःखितः ॥

आर्तं विभीषणं दृष्ट्वा विलपन्तमनाथवत् ।
उवाच भगवान् रङ्गी स्वरेण महता ततः ॥

आर्य धर्मज्ञ देशोऽयं रमणीयो हि मे मतः ।
प्रसन्ना देवता चेयं नदी प्रियसखी मम ॥

अस्मिन्नेव शयानोऽहं रंस्ये त्वामभिवीक्ष्य च ।
विभीषणानुजानीहि कुरुष्व मम च प्रियम् ॥

मा भूस्त्वं दुर्मना याहि क्षिप्रं लङ्कां निशाचर ।
तत्र त्वं सुसमृद्धार्थां श्रियं भुङ्क्ष्वानपायिनीम् ॥

इत्युक्तः प्रययौ चार्तो लङ्कामेव विभीषणः ।
मर्त्यानां भाग्यवैषम्यात् शयानस्तु शतक्रतोः ॥'' इत्यादि ।

*तथा पञ्चदशेऽध्याये—*

"एतत्पुण्यं महत्क्षेत्रं सर्वलोकेषु पूजितम् ।
यत्र संवासमात्रेण मुच्यते सर्वपातकैः ॥
यस्य प्रसन्नो भगवान् संशेते रङ्गधामनि ।
श्रीमद्रङ्गमिति ब्रूयादजस्रं यत्र पूरुषः ॥
स पूज्यः सर्वलोकेषु सर्वकल्मषनाशनः ।
रङ्ग रङ्गेति यो ब्रूयाद् रङ्गिन् रङ्गिन् अवेत्यपि ॥" इत्यादि पूर्वसमम् ।
"असारसारसंसारतापतप्ताश्रयं महत् ।
श्रीमच्छ्रीरङ्गमित्याहुस्तं शेषशयनं बुधाः ॥
श्रियायुतं श्रीमदिति स्म वै [१]जगज्जगद्विभूद्रङ्गमुदाहरिष्यति ।
इदं जगज्जन्मलयेऽप्यनाकुलं सदा मया यच्छयनं च शाश्वतम् ॥" इत्यादि ।

**त्वयेति** । 'तथा' इत्यध्याहारः । 'माहात्म्यं', 'कथितं' इत्यनयोरनुषङ्गः । तथा हस्तिगिरीशितुः माहात्म्यं च त्वया कथितम् इत्यन्वयः । यद्वा 'तथा' इत्युपमायाम् । "यद्वा यथा तथैवैवं साम्ये" इत्यमरः । यथा आदराद्यतिशयेन रङ्गमाहात्म्यं कथितं तथा हस्तिगिरीशितुर्माहात्म्यमित्यादि पूर्ववत् ।

हस्त्याकारो गिरिः हस्तिगिरिः । हस्तिलक्षणे वा । इति कविना ।

"य एष राजत्कटकः सदाऽलिभिः समाश्रितः शेषनिदानसम्पदा ।
स नित्यबद्धं वरदं तमुद्वहन् यथार्थनामा गजभूभृदीक्षते ॥" इति ब्राह्मे ।

*हस्तिगिरिमाहात्म्येऽपि—*

"करिगिरिवरभृ(शृ)ङ्गे पुण्यकोटीविमाने
अजगरगुरुशेषैः सेव्यमानं क्रमाच्च ।
विकसितमुखपद्मं विश्वमात्रा समेतं
शशिशतसमवर्णं देवराजं भजेऽहम् ॥" इत्यादि ।

ईष्टे ईशिता । "ईश ऐश्वर्ये" तृन्तृचौ शंशिक्षदादिभ्यः "संज्ञायां चानिटौ" इति तृन्तृज्वा । "तृन्नन्तत्वे गम्यादीनामुपसङ्ख्यानम्" इत्यस्मात् हस्तिगिरिम् ईशिता हस्तिगिरीशिता इति द्वितीया-

१. जगुर्विभुं जगद्रङ्गमुदाहरिष्यति ।

तत्पुरुषः । तृजन्तत्वे हस्तिगिरेरीशितेति कर्मणि षष्ठ्या समासः । स च "याजकादेशकृतिगणत्वात् कर्तृतृजकान्तैर्याजकादिभिः षष्ठी समस्यत" इति प्रतिप्रसवात् समाधेयः । शेषषष्ठीसमासे तु गिरेः ईशनसम्बन्धितामात्रं बुध्येत, न तु कर्मता । सकर्मकं हीशनकर्म कर्मरूपसम्बन्धिविशेषसापेक्षं न सम्बन्धिसामान्यापेक्षम् । न च विशेषस्य सामान्यान्तर्भावात् गिरितदितरतदाश्रितादीशनलाभात् द्विजकार्यलाभाच्च शेषषष्ठीपरिग्रह इति वाच्यम् । सम्बन्धजातेः साक्षात्परम्परासाधारण्येन हस्ति-गिरीशिता इति न व्यपदिशेत् । असाधारण्येन व्यपदेशा भवन्तीति न्यायात् ।

नन्विदमल्पमुच्यते— सर्वेशितुर्वरदराजस्य करिगिरीशितृत्वमिति चेन्न । सन्निधानविशेषत-स्तदुपपत्तेः । *तदुक्तं छान्दोग्यभाष्ये प्रथमे सप्तमपर्वान्ते*—

"यथा बदरिकानाथो द्वारकानाथ इत्यपि ।
अर्वाङ्नाथः पराङ्नाथ इति तद्वदिहोच्यते ।
सर्वनाथोऽपि भगवान् सन्निधानविशेषतः ॥" इति चेति ।

तस्माच्छेषषष्ठीं विहाय ब्रह्मजिज्ञासेत्यत्रेव कर्मणि षष्ठीपरिग्रह इति ध्येयम् ।

*एतन्माहात्म्यं श्रावकेभ्यः ईषदुन्मेषयामि*—

"क इति ब्रह्मणो नाम तेन तत्राञ्चितो हरिः ।
तस्मात्काञ्चीति विख्याता पुरी पुण्यविवर्धिनी ॥
गङ्गाया दक्षिणे भागे योजनानां शतद्वये ।
पञ्चयोजनमात्रेण पूर्वाम्भोधेश्च पश्चिमे ॥
वेगवत्युत्तरे तीरे पुण्यकोट्यां हरिः स्वयम् ।
वरदः सर्वभूतानामद्यापि परिदृश्यते ॥
चैत्रे मासि सिते पक्षे चतुर्दश्यां शुभे दिने ।
शोभने हस्तनक्षत्रे रविवारसमन्विते ॥
वपाहोमे प्रवृत्ते तु प्रातःसवनकालिके ।
धातुरुत्तरवेद्यन्तः प्रादुरासीज्जनार्दनः ॥" इत्यादि ।

**जगन्नाथस्येति** । 'तथा' इत्यध्याहारः । 'त्वया', 'कथितम्' इत्यनयोरनुषङ्गः । **जगन्नाथस्य विष्णोः माहात्म्यम् अतुलं वै** तत् तथा **त्वया** कथितमित्यन्वयः । जगतां नाथो जगन्नाथः तस्य भुवनप्रभोः विष्णोः व्याप्तस्य नारायणस्य माहात्म्यं निरवधिकानन्तानवद्यकल्याणगुणक्रियानामरूप-

वत्त्वम् । **अतुलं** = न विद्यते तुला उपमा अस्येत्यतुलम् । असदृशम् । **वै** = प्रसिद्धम् । "अदो यद्दारु प्लवते सिन्धोः पारे अपूरुषम्" इत्यादि (ऋ.१०.१५५.०३) श्रुतिसिद्धम् । तत्तथा तदपि त्वया कथितमित्यर्थः ।

*अतुलमाहात्म्यं च पुरुषोत्तमक्षेत्रमाहात्म्ये नवमेऽध्याये—*

"बहूनि सन्ति क्षेत्राणि पुण्यानि मम नारद ।
मुक्तिदानि नृणां विद्धि देहं मे पुरुषोत्तमम् ॥
रथ्यान्तरे गृहे वापि प्रदत्तं येन केन वा ।
मत्प्रसादं तु योऽश्नाति तस्मै मुक्तिं ददाम्यहम् ॥
यथा सुवर्णे रत्ने च स्पर्शदोषो न विद्यते ।
तथैव मम नैवेद्ये स्पर्शदोषो न विद्यते ॥
अत्र पाचयते लक्ष्मीर्भोक्ताऽहं यज्ञभुक् स्वयम् ।
भोक्तव्यं मुनिभिर्विप्रैर्नात्र कार्या विचारणा ॥
उपवासदिने वापि मत्प्रसादं सुपावनम् ।
अयाचितहृतं भोज्यं अनश्नन् पतितो भवेत् ॥" इत्यादि ।

*एतदुक्तं कविभिः—*

निवेदितस्यात्र रमासखाय नीचाहृतस्यापि किलोदनादेः ।
भक्त्याऽदनं हन्त भवार्जितानां महांहसां नाशकमामनन्ति ॥ —इति ॥

**इदानीमिति** । 'त्वया', 'कथितम्' इत्यनयोरनुषङ्गः । अहमिति लभ्यते । **इदानीम्** = अधुना । त्वया कथितं **वेङ्कटेशितुः माहात्म्यं श्रोतुम्** अहम् **इच्छामि** इत्यन्वयः । **वेङ्कटेशितुः**— अत्र वेङ्कटस्येशिता वेङ्कटश्चासौ ईशिता चेति विग्रहद्वयम् । *तथा च ब्रह्माण्डे—*

"वें प्राहुः सर्वपापानि कटस्तद्दाह उच्यते ।
सर्वपापदहो यस्माद्वेङ्कटाद्रिरिति स्मृतः ॥"

ई लक्ष्मीः । ईः एव ईङ्का । सैव स्निग्धा ईङ्कामुपगूढो विटः वेङ्कटः । निरुक्तत्वात् साधुः ।

*इत्थं च वराहे पञ्चमेऽध्याये—*

"स कदाचिन्महामायी विटवेषं च धारयन् ।
गिरेरुत्तरदिग्भागे चचार रमया सह ॥" इत्यारभ्य

"वेश्यावेषं धारयन्तीं लीलाम्बुजकराम्बुजाम् ।
अभूतपूर्वसौन्दर्यां साक्षाल्लक्ष्मीमिव स्थिताम् ॥"

इत्यन्तैरियं निरुक्तिः सूच्यते ॥

**गूढकर्तृकव्याख्यानम्**

॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये ॥ १ ॥

सर्वविघ्नप्रशमनं सर्वसिद्धिकरं परम् ।
सर्वजीवप्रणेतारं वन्दे विजयदं हरिम् ॥ २ ॥

वेदे रामायणे चैव पुराणे भारते तथा ।
आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते ॥ ३ ॥

श्रियः कान्ताय कल्याणनिधये निधयेऽर्थिनाम् ।
श्रीवेङ्कटनिवासाय श्रीनिवासाय मङ्गलम् ॥ ४ ॥

कल्याणाद्भुतगात्राय कामितार्थप्रदायिने ।
श्रीमद्वेङ्कटनाथाय श्रीनिवासाय ते नमः ॥ ५ ॥

वेङ्कटाद्रिसमं स्थानं ब्रह्माण्डे नास्ति किञ्चन ।
वेङ्कटेशसमो देवो न भूतो न भविष्यति ।
एतेन सत्यवाक्येन सर्वार्थान् साधयाम्यहम् ॥ ६ ॥

सत्यवत्यालवालोत्थं सद्विद्यालतया वृतम् ।
शुकादिद्विजसन्नादं व्यासकल्पद्रुमं भजे ॥ ७ ॥

नमस्ते प्राणेश प्रणतविभवायावनिमगा
नमः स्वामिन् रामप्रियतम हनूमन् गुरुगुण ।
नमस्तुभ्यं भीम प्रबलतमकृष्णेष्ट भगवन्
नमः श्रीमन् मध्व प्रदिश सुदृशं नो जय जय ॥ ८ ॥

अभ्रमं भङ्गरहितमंजडं विमलं सदा ।
आनन्दतीर्थमतुलं भजे तापत्रयापहम् ॥ ९ ॥

भवति यदनुभावादेडमूकोऽपि वाग्मी
जडमतिरपि जन्तुर्जायते प्राज्ञमौलिः ।
सकलवचनचेतोदेवता भारती सा
मम वचसि निधत्तां सन्निधिं मानसे च ॥ १० ॥

मिथ्यासिद्धान्तदुर्ध्वान्तविध्वंसनविचक्षणः ।
जयतीर्थाख्यतरणिर्भासतां नो हृदम्बरे ॥ ११ ॥

पूज्याय राघवेन्द्राय सत्यधर्मरताय च ।
भजतां कल्पवृक्षाय नमतां कामधेनवे ॥ १२ ॥

दुर्वादिध्वान्तरवये वैष्णवेन्दीवरेन्दवे ।
श्रीराघवेन्द्रगुरवे नमोऽत्यन्तदयालवे ॥ १३ ॥

विष्णोः पदश्रिद्वाव्रातैः स्वान्तध्वान्तनिवारकः ।
श्रीसत्यसन्धसूर्योऽयं भासतां नो हृदम्बरे ॥ १४ ॥

स्वस्त्यस्तु सतां अशेषसन्मङ्गलानि भवन्तु । श्लोकैकश्रवणपठणमात्रेण वक्तुश्च श्रोतृणां निखिलकलिकृतकल्मषापनोदनपटुतरे धर्माद्यखिलपुरुषार्थसाधनीभूते श्रीमद्भविष्योत्तरपुराणे शतानन्दजनकसंवादे श्रीवेङ्कटेशमाहात्म्ये अद्यकथाप्रारम्भे सति किञ्चित् पूर्वकथानुवादः ॥

इह लोके शाश्वतस्वरूपानन्दाविर्भावलक्षणं मोक्षाख्यपरमपुरुषार्थं सम्पादयितुकामः आदौ गुरुमुखेन श्रवणमननादिभिः वेदादिसच्छास्त्रं समभ्यस्य परमात्मविषयकज्ञानं कृत्वा तेन परमात्मनि निरन्तरभक्तिं कुर्वन् मुकुन्दप्रसादात् मुक्तिं व्रजेत् । परन्तु वेदशास्त्राणां अत्यन्तं दुरवगाहत्वात् लोकहितेच्छया श्रीवेदव्यासैः वेदार्थोपबृंहकभारताख्येतिहासभागवतादिपुराणानि निर्मितानि । प्रकृते पुराणं नाम कदा प्रादुर्बभूव ? पुराणं किं लक्षणम् ? पुराणं केन प्रोक्तम् ? केन श्रुतम् ? पुराणं कतिविधम् ? इति प्रश्ने प्राप्ते—

"मत्स्य उवाच—

पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणा श्रुतम् ।
अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः ॥

पुराणमेकमेवासीत् तदा कल्पान्तरेऽनघ ।
त्रिवर्गसाधनं पुण्यं शतकोटिप्रविस्तरम् ॥

अङ्गानि चतुरो वेदाः पुराणं न्यायविस्तरम् ।
मीमांसा धर्मशास्त्रं च परिगृह्य मया कृतम् ॥
अशेषमेतत् कथितं उदकान्तर्गतेन च ।
श्रुत्वा जगाद च मुनीन् प्रतिवेदांश्चतुर्मुखः ॥
प्रवृत्तिः सर्वशास्त्राणां पुराणस्याभवत्ततः ।
कालेनाग्रहणं दृष्ट्वा पुराणस्य ततो नृप ॥
व्यासरूपमहं कृत्वा सम्भवामि युगे युगे ।
चतुर्लक्षप्रमाणेन द्वापरे द्वापरे सदा ॥
तथाऽष्टादशधा कृत्वा भूलोकेऽस्मिन् प्रकाश्यते ।
अद्यापि देवलोकेऽस्ति शतकोटिप्रविस्तरम् ॥
पुराणानि दशाष्टौ च साम्प्रतं तदिहोच्यते ।''

इति मत्स्यपुराणोक्तेः ॥ आदौ एतत्पुराणं मत्स्यरूपिभगवता विधये तथा विधिना मरीच्यादि-मुनिभ्यः इत्येवं वक्तृश्रोतृपरम्परया आगतम् । ''एतत् पुराणं सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च । वंशानुचरितं चैव पुराणं पञ्चलक्षणम्'' इत्युक्तेः पञ्चलक्षणविशिष्टम् ॥ ''अष्टादश-पुराणानां कर्ता सत्यवतीसुतः'' इत्युक्तेः इहलोकहितार्थाय साक्षात् नारायणः व्यासत्वेन अवतीर्य शतकोटिप्रविस्तरं पुराणं सङ्क्षेपेण अष्टादशधा विभज्य आख्यान-उपाख्यानविशिष्टपुराणसंहितां निर्माय स्वशिष्य-रोमहर्षणपुत्रसूताय ददौ । सूत एव शौनकादीन् विप्रान् प्रति पुराणार्थं विशदयति—

''ब्राह्मं पाद्मं वैष्णवं च शैवं भागवतं तथा ।
तथाऽन्यत् नारदीयं च मार्कण्डेयं च सप्तमम् ।
आग्नेयं अष्टकं प्रोक्तं भविष्यं नवमं स्मृतम् ।
दशमं ब्रह्मवैवर्तं लैङ्गमेकादशं स्मृतम् ।
द्वादशं वामनं प्रोक्तं वाराहं तु त्रयोदशम् ।
मात्स्यं चतुर्दशं प्रोक्तं कौर्मं पञ्चदशं स्मृतम् ।
षोडशं गारुडं प्रोक्तं स्कान्दं सप्तदशं स्मृतम् ।
अष्टादशं तु ब्रह्माण्डं पुराणानि यथाक्रमम् ॥''

एतानि अष्टादश पुराणानि ॥ एतेषु प्रकृते भविष्यत्पुराणे चतुर्थभागः भविष्योत्तरम् । भविष्य-विचारनिरूपकत्वात् भविष्योत्तरपुराणम् इति संज्ञा । अस्मिन् एव श्रीवेङ्कटेशमाहात्म्यं निरूपितम् ।

अस्मिन् युगे सर्वपाप-परिहारक-सद्गतिप्रद-श्रीवेङ्कटाचलपतिः । श्रीवेङ्कटेशमाहात्म्यं द्वादशपुराणेषु निरूपितम् । १. वाराहपुराणम्, २. पाद्मपुराणम्, ३. गारुडपुराणम्, ४. हरिवंशान्तर्गत-शेषधर्मपुराणम्, ५. ब्रह्माण्डपुराणम्, ६. मार्कण्डेयपुराणम्, ७. वामनपुराणम्, ८. ब्रह्मपुराणम्, ९. ब्रह्मोत्तरखण्डान्तर्गतम्, १०. स्कान्दपुराणम्, ११. आदित्यपुराणम्, १२. भविष्योत्तरपुराणं चेति ॥

*प्रकृते भविष्योत्तरपुणान्तर्गतं श्रीवेङ्कटेशमाहात्म्यं उच्यते—*

॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

**ब्रह्मरुद्रादिवन्द्यं त्वां भजे वेङ्कटनायकम् ।**
**निवारयाऽवनिष्टानि साधयेष्टानि माधव ॥**

विधिः रुद्रः एतदादिसकलदेवैः स्तुतिनतियोग्यं वेङ्कटाख्यपर्वतस्य नाथं लक्ष्मीपतिं त्वां अहं भजे । हे माधव ! शीघ्रं अस्माकं इहपरत्रभवितव्य-सर्व-अनिष्टानि निवारय । इष्टार्थं साधय ।

शौनक उवाच—

एकदा नैमिषारण्ये परमदयालुः शौनकः एवं आलोचयामास—

अत्यन्तं पापभूयिष्ठं कलियुगं प्राप्तम् । सन्तः नानाविधमनः(इहामुत्रलभ्यसुखरूप)कालुष्यरूपदोषैः दूषिताः प्रवृद्धाज्ञानाः यथार्थज्ञानं किमिति ज्ञातुं असमर्थाः आध्यात्मिक-आधिभौतिक-आधिदैविकाख्य विविधैः सांसारिकदुःखनिमग्नाः अतीव परितपन्ति । ईदृशाः केनोपायेन उद्धृताः स्युः इति आलोचयन् अन्ते ईदृशेऽपि कलियुगे एषां सतां, धर्मज्ञान-भक्तिसम्पदां समृद्धिद्वारा समस्त-कल्याणप्राप्तये शाश्वतानन्दाविर्भावरूपमुक्तिप्राप्तये च, श्रीशेषाचलवासि-श्रीश्रीनिवासकल्याणमहोत्सवकथाश्रवणमेव मुख्यसाधनोपाय इति निश्चित्य तदर्थं तां दिव्यकथां प्रस्तावयितुं पौराणिकाग्रेसरं सूतमुनिं पृच्छति, **कथं** इत्यादिश्लोकेन ।

सूतमुनिः शौनकादिविप्रान् प्रति, श्रीरङ्गनाथमाहात्म्यं, [1]हस्तिगिरीशापरनामक-काञ्चीवरदराज-माहात्म्यं, जगन्नाथक्षेत्राधीशजगन्नाथमाहात्म्यं च कथितवान् ।

***श्रीरङ्गमाहात्म्यं किम्*** ? पूर्वं विधिः श्रीहरिं तपसा आराध्य श्रीरङ्गनाथयुतं रङ्गधामाख्यं विमानं लेभे । ततः कालान्तरे वसिष्ठप्रेरितः सूर्यवंशीयः इक्ष्वाकुः विधिं तपसा सन्तोष्य तस्मात् तत् रङ्गधाम प्राप । तत् नित्यं पूजयति स्म । ततः कालक्रमेण श्रीरामचन्द्रः तत् रङ्गधाम पूजयन् एकदा प्रियभक्त-

१. कालहस्तीश्वरस्य माहात्म्यं इति न वदन्ति ।

विभीषणाय ददौ। दैत्याधिपः तत् लङ्कां आनयन् मध्येमार्गं कावेरीतीरगतचोलदेशे अवतरन् तत्र रङ्गधामं संस्थाप्य पूजयामास।

ततः पुरतः गमने विमानं उद्धर्तुं प्रयतत। तत् चालयितुं अपि न शशाक। भृशं दुःखितः भुवि निपत्य अलुठ्यत्। अनाथमिव विलपन्तं दृष्ट्वा श्रीरङ्गनाथः प्रत्यक्षीभूय, "हे धर्मज्ञ विभीषण! दुःखं मा कृथाः। कावेरीगत-एतद्रमणीयदेशे क्रीडितुं इच्छामि। मे इष्टं पूरय। त्वं मनसि दुष्टं अकृत्वा शीघ्रं लङ्कां याहि। तत्र ते अनपायिनी श्रीः भूयात्" इति तं श्रीरङ्गः अनुजग्राह। तथेति विभीषणः लङ्कां ययौ। तत् रङ्गधाम किञ्चित् कालं चोलदेशे स्थितं सत् कालान्तरे यथापूर्वं विधिं आससाद। श्रीरङ्गः श्रीरङ्गक्षेत्रे शेषे शयानः विराजते। श्रीरङ्गधामसन्निधानिनः श्रीरङ्गक्षेत्रं रङ्गधाम इति लोके विख्यातम्।

***हस्तिगिरीशमाहात्म्यम्***— हस्तिगिरिर्नाम हस्तिनः आकार इव आकारः यस्य गिरेः सः हस्तिगिरिः, तस्य ईशः हस्तिगिरीशः, तस्य माहात्म्यम्। माहात्म्यं नाम परमात्मनः निरवधिक-निर्दुष्ट-ज्ञान-आनन्दादि-मङ्गलकरगुणक्रियारूपाणां प्राप्तिमत्त्वम्। एतत् हस्तिगिरीशमाहात्म्ये ब्रह्मपुराणे एवं उक्तम्—

करिगिरिवरशृङ्गे पुण्यकोटीविमाने
अजगजगुरुशिष्यैः सेव्यमानं क्रमाच्च।
विकसितमुखपद्मं विश्वमात्रासमेतं
शशिशतसमवर्णं देवराजं भजेऽहम्॥

तस्य हस्त्याकारगिरिशिखरे पुण्यकोटिनामकविमाने विधिगुरुशेषादिदेवैः सेव्यमानं विकसित-कमलवत् प्रसन्नमुखेन शोभमानं जगज्जनन्या रमया युतं शशिशतसमदेहकान्तिं देवोत्तमं भजे इति। पुनः इदं उच्यते—

क इति ब्रह्मणो नाम तेन तत्राञ्चितो हरिः।
तस्मात् काञ्चीति विख्याता पुरी पुण्यविवर्धिनी।
गङ्गाया दक्षिणे भागे योजनानां शतद्वये।
पञ्चयोजनमात्रेण पूर्वाम्भोधेश्च पश्चिमे।
वेगवत्युत्तरे तीरे पुण्यकोट्यां हरिः स्वयम्।
वरदः सर्वभूतानां अद्यापि परिदृश्यते।
चैत्रे मासि सिते पक्षे चतुर्दश्यां शुभे दिने।
शोभने हस्तनक्षत्रे रविवारसमन्विते।

वपाहोमे प्रवृत्ते तु प्रातः स नवकालिके ।
धातुरुत्तरवेद्यन्तः प्रादुरासीत् जनार्दनः ॥ इत्यादि ।

क इति ब्रह्मा । तेन अञ्चितः पूजितः श्रीहरिः अत्र इति काञ्ची इति प्रसिद्धिः । गङ्गादक्षिणतः द्विशतयोजनदूरे पूर्वसमुद्रपश्चिमतः पञ्चयोजनदूरे वेगवती-उत्तरतीरे पुण्यकोटिविमाने श्रीहरिः भक्तेभ्यः दर्शनादिवरान् ददत् विराजते । चैत्रशुक्लशोभनहस्तनक्षत्ररविवारयुतचतुर्दशीशुभदिने प्रातः कल्याणोत्सवे हवनहोमे प्रवृत्तः उत्तरवेद्यां साक्षात् हरिः प्रादुरासेति वदन्ति । एवं हस्तिगिरीशो नाम काञ्चीवरदराज इति प्रसिद्धिः ।

जगन्नाथमाहात्म्ये पुरुषोत्तममाहात्म्ये एवं पठितम्—

बहूनि सन्ति क्षेत्राणि पुण्यानि मम नारद ।
मुक्तिदानि नृणां विद्धि देहं मे पुरुषोत्तमम् ।
रथ्यान्तरे गृहे वाऽपि प्रदत्तं येन केन वा ।
मत्प्रसादं हि योऽश्नाति तस्मै मुक्तिं ददाम्यहम् ।
यथा सुवर्णे रत्ने च स्पर्शदोषो न विद्यते ।
तथैव मम नैवेद्ये स्पर्शदोषो न विद्यते ।
अत्र पाचयते लक्ष्मीः भोक्ताऽहं यज्ञभुक् स्वयम् ।
भोक्तव्यं मुनिभिः विप्रैः नात्र कार्या विचारणा ।
उपवासदिने चापि मत्प्रसादं सुपावनम् ।
अयाचितहृतं भोज्यं अनश्नन् पतितो भवेत् ॥

श्रीजगन्नाथः नारदं प्रति "नारद ! मया अधिष्ठितक्षेत्राणि बहूनि सन्ति । मम पुण्यक्षेत्रं एकैकं नृणां मुक्तिदम् । किञ्च मम जगन्नाथप्रतिमां रथसञ्चरणमार्गे वा गृहे वा यो ददाति तस्मै मुक्तिं ददामि । मे निवेदितं नैवेद्यं यो भुङ्क्ते तस्मै मुक्तिं ददामि । सुवर्णे वा रत्ने वा स्पर्शदोषो यथा न, तथा मत्सम-र्पितनैवेद्ये स्पर्शदोषो न । मम नैवेद्यपदार्थं साक्षात् रमा पाचयते । पक्वपदार्थं यज्ञभोक्ता अहं भुञ्जे इति मन्तव्यम् । मम नैवेद्यं मुनयो विप्रा वा निःशङ्कं भुञ्जताम् । याचनां विना आहृतं मम नैवेद्यं, परमपवित्रं, एकादश्यां अपि असंशयं भोक्तव्यम् । अन्यथा पतितो भवेत् ॥ एवं जगन्नाथमहिमा ॥

एवं प्रकारेण "हे सूतमुने ! एतत् त्रिविधं माहात्म्यं अस्माकं सादरं कथितवान् खलु ॥

अद्य श्रीवेङ्कटाचलनाथ-श्रीश्रीनिवासमाहात्म्यं श्रोतुं इच्छामः तद्वक्तव्यम्" इति शौनके पृच्छति सूत आह ।

**मूलम्**

**प्रसन्नस्य सूतस्योत्तरम्**

सूत उवाच—

**साधु पृष्टं त्वया ब्रह्मन् चरितं वेङ्कटेशितुः ।**
**यथाश्रुतं मया पूर्वं व्यासेनामिततेजसा ।**
**[1]तदध्यायं समाचक्षे सावधानमनाः शृणु ॥ ३ ॥**

१. तत्तथाऽहं ।

**कल्याणकाण्डदीपः**

सम्प्रति सूतः प्रसन्नः प्रश्नं स्तौति **साध्विति** । 'यत्' इत्यध्याहारः । "हे ब्रह्मन् ! यत्त्वया पृष्टं तत्साधु" इत्यन्वयः । **हे ब्रह्मन् !** = ब्राह्मण ! अत एवार्जवलक्षण, कथाश्रद्धावृद्ध । यत् **वेङ्कटेशितुः चरितं** = माहात्म्यं **त्वया पृष्टं** = प्रश्नविषयीकृतं तत् **साधु** । साध्नोति साधयति वा फलं साधु । इष्टानिष्टप्राप्तिपरिहारसाधनम् । रमणीयं वा । "ब्रह्मा विप्रः प्रजापतिः" इत्यमरः । "आर्जवं ब्राह्मणे साक्षाच्छूद्रोऽनार्जवलक्षणः" इति छान्दोग्यभाष्ये ।

स्तुतिः हेतुवृत्तकथनपूर्वकं वर्तिष्यमाणप्रश्नः । "ब्रूहि नः श्रद्धधानानाम्" इत्यादेः । बृहि वृद्धौ । "साधु रम्येऽपि च त्रिषु" इत्यभिनन्द्य प्रतिवचनं प्रतिजानन् श्रवणं विधत्ते **हे ब्रह्मन्** इत्यादिना **शृणु** इत्यन्तेन । ब्रह्मन्नित्यत्रापि सम्बध्यते । **हे ब्रह्मन् ! अमिततेजसा** व्याप्तज्ञानमहसा **व्यासेन** उक्तं वेङ्कटेशितुः **चरितं** माहात्म्यं मया **पूर्वं** पुरा **यथा** येन प्रकारेण **श्रुतं** धृतं च, **तत् अध्यायम्** अधीयते प्रतिपाद्यते अस्मिन् माहात्म्यम् इति अध्यायः । तस्य अध्यायः तदध्यायः तम् । तन्माहात्म्य-प्रतिपादकग्रन्थसन्दर्भरूपभविष्योत्तरपुराणं तथैव तुभ्यम् अहम् **आचक्षे** ब्रवीमि । त्वं च **सावधान-मनाः** अप्रमत्तमनाः **शृणु** ॥

**गूढकर्तृकव्याख्यानम्**

सूतः शौनकं प्रति ब्रह्मन् इति सम्बोधितवान् । हे ब्राह्मण ! त्वं वेकटेशमाहात्म्यं वक्तव्यं इति यं प्रश्नं अकरोः, सः प्रश्नः साधुरेव । किञ्च त्वं ब्राह्मणोऽसि । ब्राह्मणो नाम कः ? स किंलक्षणः ? "आर्जवं ब्रह्मणे साक्षात् शूद्रोऽनार्जवलक्षणः" इति छान्दोग्यभाष्योक्तेः । आर्जवरूपलक्षणं यस्मिन् सः ब्राह्मणः । आर्जवं नाम सरलहृदयता ।

ब्राह्मणो नाम क इत्यत उक्तं *महाभारतवनपर्वपतिव्रतोपाख्याने*—

यः क्रोधमोहौ त्यजति तं देवा ब्राह्मणं विदुः ।
यो वदेदिह सत्यानि गुरुं सन्तोषयेत वा ।
हिंसितोऽपि न हिंसेत तं देवा ब्राह्मणं विदुः ॥ इति ।

क्रोधो नाम मनुष्याणां शरीरान्तर्गतः रिपुः । ईदृशं क्रोधं तज्जन्यं मोहं च यः त्यजति तं देवा ब्राह्मणं विदुः । यः सत्यं वदति, पित्रादिगुरुराजान् प्रीणयति, अन्यैः हिंसितोऽपि त्रिकरणपूर्वकं अन्यान् न हिनस्ति, यः जितेन्द्रियः, धर्मानुष्ठानपरः, देहेन्द्रियमनःशुद्ध्या वेदान् नित्यं अधीयमानः, तमेव देवाः ब्राह्मणं विदन्ति, इति एका साध्वी कौशिकाख्यविप्रं, ब्राह्मणलक्षणं निरूपयति ॥

एवं हे ब्राह्मण ! त्वं अद्य श्रीवेङ्कटेशमाहात्म्यं श्रोतव्यं इति, मनसि कृत्वा तद् वक्तव्यं इति वाचा, मां पृष्टवान् । किञ्च प्रष्टव्यविषयो हि वेङ्कटेशकथा । अतः तव प्रश्नः साधुः । श्रीवेङ्कटेशमाहात्म्यं नाम अनिष्टनिवर्तकं इष्टप्रापकं च । वेङ्कटेशशब्दार्थः ब्रह्माण्डपुराणे एवं अभिहितम्—

वें प्राहुः सर्वपापानि कटस्तद्दाह उच्यते ।
सर्वपापदहो यस्मात् वेङ्कटाद्रिरिति स्मृतः ॥

वें इति पापानि । कटः दाहकः । अत वेङ्कटः पापपरिहारकः । अतः वेङ्कट इति गिरेः नाम । वेङ्कटस्य गिरेः ईशः स्वामी वेङ्कटेशः श्रीनिवासः । वेङ्कटशब्दस्य श्रीहरिः इति अपरोऽर्थः । वेङ्कट इत्यत्र वि टः ईंका इति पदच्छेदः । ईः लक्ष्मीः । ईः एव ईंका । ईंकां लक्ष्मीं विटः उपगूढः विटपुरुषः । वेङ्कटः लक्ष्मीप्रियवल्लभः । अत्र विषये वाराहपुराणे पञ्चमे अध्याये—

"स कदाचिन् महामायी विटवेषं च धारयन् ।
गिरेरुत्तरदिग्भागे चचार रमया सह ॥" *इत्यारभ्य*
"वेश्यावेषं धारयन्तीं लीलाम्बुजकराम्बुजाम् ।
अभूतपूर्वसौन्दर्यां साक्षाल्लक्ष्मीमिव स्थिताम् ॥" *इत्यन्तम् ।*

एकदा जगज्जनकः श्रीहरिः महामायावी सन् लीलाविनोदार्थं विटवेषं धृत्वा वेङ्कटगिरेः उत्तरदिशि सञ्चरति स्म । तदा जगज्जननी साक्षाल्लक्ष्मीः वेश्यावेषं धरन्ती, करे कमलं धृत्वा पूर्वं अश्रुत-अदृष्ट-सौन्दर्यवती तद्देशे आजगाम । हरिः तदा तां दृष्ट्वा, प्रेमालिङ्गनपूर्वकं, तत्र वेङ्कटाचलदेशे तया सह विहरति स्म इति उच्यते । अतः वेङ्कटशब्दस्य वेङ्कटगिरिरिति श्रीनिवास इति च अर्थद्वयम् ।

भो शौनक ! अद्य इदं वेङ्कटेशमाहात्म्यं, सर्वत्रव्याप्तज्ञानाख्यतेजोविशिष्टेन मम गुरुणा श्रीवेद-व्यासेन यथा श्रुतवान्, श्रुतं च यथा मनसि धारितवान्, तथैव अद्य मनसा स्मरन् श्रीवेङ्कटेशमाहात्म्यं कथयामि । त्वं विषयान्तरे मनः अगमयन् कथां शृणु । इति उक्त्वा कथां उपक्रमते ।

**मूलम्**

**जनकनृपानुभूतशोकातिरेकप्रकारः**

**पुरा तु जनको नाम राजा परमधार्मिकः ।**
**सत्यवाक् सर्वशास्त्रेषु कोविदः कोपवर्जितः ॥ ४ ॥**

**कल्याणकाण्डदीपः**

प्रतिज्ञातमुपक्रमते **पुरा त्विति** । पुरा कृतादौ । **परमधार्मिकः** । धर्मं चरति असकृद् असौ इति धार्मिकः, धर्मं चरतीति ठक्, परमः उत्तमश्चासौ धार्मिकश्च स तथा । **सत्यवाक्** । "सत्यं भूतहितं प्रोक्तं न यथार्थाभिभाषणम् । असत्यमपि तत्सत्यं उत्तमानां हितं वचः" इत्येवंरूपा सत्या वाग् यस्य स तथा । "ऋग्यजुःसामाथर्वाश्च" इत्याद्युक्त-अखिलशास्त्रेषु **कोविदः** सुधीः । **कोपवर्जितः** शत्रुभृत्यभार्यादिकृतवधाऽवज्ञादिना मनःप्रज्वलनं क्रोधः । स त्रिविधः । क्रोधः कोपो रोषश्चेति । तत्र वधादिपर्यन्तः क्रूरजनाश्रयः क्रोधः । अभ्यर्थनावधिर्वीरजनाश्रयः कोपः । स्त्रीपुंसयोरन्योन्यविषयः प्रत्यायनपर्यन्तो रोषः । अत्र कोपेन वर्जितः रहितः । अक्रूरत्वप्रत्यायितपत्नीत्वाभ्यामाद्यन्तयोरप्रसक्ते-रेवमुक्तम् । **राजा** प्रजा रञ्जयतीति राजा । **जनको नाम** जनक इति प्रसिद्धः । अयं च जनकः तृतीयः ।

*तदुक्तं कवीन्द्रकृतप्रमाणसङ्ग्रहे*—

"आदौ तु जनको नाम राजाऽऽसीन्मिथिलापुरे ।
स वै तत्याज ममतां व्यासाज्ज्ञानमवाप्य च ॥
तदन्वये तदन्यो वै वैदेहं विषयेश्वरः ।
राजा बभूव जनकः तदन्योऽभूत् तृतीयकः ।
जनको नाम राजाऽभूत् सीताया जनको महान् ॥" इति ॥

**मूलम्**

**वासुदेवप्रसादस्य [1]मुख्यपात्रोऽभवन्नृपः ।**
**निर्ममो नित्यतृप्तश्च निरहङ्कृतिरात्म[2]दृक् ॥ ५ ॥**

१. मुख्यपात्रमभून्नृपः । २. वित् ।

**कल्याणकाण्डदीपः**

**वासुदेवप्रसादस्य** = कृष्णप्रसन्नतायास्तदर्पितान्नादेश्च । **मुख्यपात्रः** = परमभाजनम् । "पाति त्राति हरिः साक्षात् पात्रशब्दोदितस्ततः । तस्मात्पात्राणि मुख्यानि विष्णुपादाम्बुजाश्रया" इत्युक्तेः । पाति देयं वस्तु त्राति दातारं चेति पात्रं हरिर्हरिभक्ताश्च । **निर्ममः** = स्वामित्वाभिमान-रहितः । **नित्यतृप्तः** = यदृच्छालाभसन्तुष्टः । निर्गतोऽहङ्कृतेः **निरहङ्कृतिः** = कर्तृत्वाभिमानरहितः । **आत्मदृक्** = ब्रह्मज्ञानी । **नृपः** राजा । **अभवत्** = आसीत् । न च "पत्रपात्रक्षेत्राणि नपुंसक" इत्यनुशासनविरोधः । "अर्धर्चाः पुंसि च पत्रपात्रपवित्रसूत्रच्छत्राः पुंसि च" इत्यनुशासनाच्च पुंस्त्व-स्यापि सम्भवात् । अमरोऽपि "त्रिषु पात्री पुटी वाटी" इत्यादि ॥

**गूढकर्तृकव्याख्यानम्**

पुरा इत्युक्ते कृतयुग-आदौ मिथिलाख्यदेशे जनको नाम राजा आसीत् ।

*अत्र कवीन्द्रकृतप्रमाणसङ्ग्रहे—*

आदौ तु जनको नाम राजाऽऽसीन्मिथिलापुरे ।
स वै तत्याज ममतां व्यासात् ज्ञानमवाप्य च ।
तदन्वये तदन्यो वै वैदेहं विषयेश्वरः ।
राजा बभूव जनकः तदन्योऽभूत् तृतीयकः ।
जनको नाम राजाऽभूत् सीताया जनको महान् ॥ इत्युक्तेः ।

अत्र जनकः तृतीयजनक इति मन्तव्यम् । जनक इति राजा आसीत् । राजा नाम कः ? राजा प्रकृतिरञ्जनात् । यः प्रजानां सर्वथा हितं करोति, ताः प्रीणयति, स एव राजशब्दवाच्यः । प्रकृते जनकः राजशब्दवाच्यः । जनकः पुनः कीदृशः ? परमधार्मिकः । धर्मानुष्ठानपरेषु श्रेष्ठः । धार्मिको नाम "धर्मं चरति असकृत्" इति धार्मिकः । अत्र धर्मो नाम, "वेदप्रणिहितो धर्मः, अधर्मः तद्विपर्ययः । यत्त्वार्याः क्रियमाणं प्रशंसन्ति स धर्मः । धर्मो विश्वस्य जगतः प्रतिष्ठा । चोदनालक्षणोऽर्थो धर्मः । स्वधर्मे निधनं श्रेयः" इत्यादि बहुस्थलेषु धर्मशब्दं शृणुमः । धरति लोकान् इति धर्मः इति व्युत्पत्त्या धर्मशब्दः "मुख्यतः सर्वशब्दैश्च वाच्य एको जनार्दनः" इत्यादिना परममुख्यवृत्त्या परमात्मानं वक्ति । "धर्मो धर्मविदुत्तमः" विष्णुसहस्रनामोक्तेः । योगरूढवृत्त्या जगत्प्रतिष्ठायाः हेतुः उच्यते । अयं धर्मः वेद-विहितः । अयं धर्मः नानारूपः । कालधर्मः, देशधर्मः, कुलधर्मः, वर्णाश्रमधर्मः, आपद्धर्मः, दम्पतिधर्मः, गुरुशिष्यधर्मः, राजप्रजाधर्मः इत्यादि ।

प्रकृतेः जनकः, राजप्रजाधर्मरहस्यं विदित्वा तदनुष्ठाननिरतेषु श्रेष्ठ आसीत् । पुनः कीदृशः ? सत्यवाक् । अत्र किं नाम सत्यम् ? "सत्यं भूतहितं प्रोक्तं, न यथार्थाभिभाषणम् । असत्यमपि तत्सत्यं उत्तमानां हितं वचः ॥" भूतानां हितं यथा तथा वचनं सत्यम् । एवं अन्यहितकरं सत्यं वदति स्म । सत्य-असत्ययोः विवेकी, भाषते स्म । पुनः कीदृशः ? सर्वशास्त्रेषु कोविदः । अत्र शास्त्रं नाम । "शिष्यते अनेनेति शासनं वा शास्त्रम् । इदं न्याय्यं इदं अन्याय्यं, इदं हितं इदं अहितं, इदं उपादेयं इदं हेयं इत्यादिकं शासत् शास्त्रम् । शास्त्रं द्विविधं, अपौरुषेयं पौरुषेयं चेति । अपौरुषेयं वेदः । पुरुषकृतं पौरुषेयम् । वेद-वेदाङ्ग-मीमांसा-न्याय-धर्म-आयुर्वेद-गान्धर्व-चतुर्वेदादिशास्त्रं विविधम् । अयं जनकः वेदादिसकलशास्त्रं अधीत्य अर्थानुसन्धानपूर्वकं विदितवान् । पुनः कीदृशः ? कोपवर्जितः । कोपं त्यक्तवान् ॥

*अत्र विचारः*— क्रोधो नाम त्रिविधः । क्रोधः रोषः कोपश्चेति । क्रोधो नाम सतीसुतबन्धु-भृत्यादिभिः वध-अवज्ञा-दुश्चरितादीनि कृतानि चेत् मनःप्रज्वलनरूपविकारः यो जायते, स एव । कोपो नाम, क्षमायाचनान्तः वीरजनाश्रितः मनःप्रज्वलनरूपविकारः यः, स एव । रोषो नाम, स्त्रीपुंसोः चित्तप्रसादान्तः मनःप्रज्वलनरूपविकारः, स एव ॥ अत्र जनकः कोपवर्जितः इत्युक्ते, विमर्शं अकृत्वा कोपं न करोति स्म । दुष्टदमने शिष्टपालने कोपः आवश्यकः खलु । उत्तमानां कोपः लोकहिताय । लोककण्टको रावणः कोपं चकार । अतः सबन्धुपरिवारं ननाश । रामः कोपं चकार । अतः रावणादि-दुष्टदैत्यवधद्वारा सतां श्रेयसे अभूत् ।

जनकः पुनः कीदृशः ? निर्ममः । एतत् सतीसुतबन्धुधनगृहक्षेत्रआरामादयः मम । इदं राज्यं मम । अस्य सर्वस्य अहं स्वामी इति अभिमानः ममता । जनकः नानासम्पत्सम्पन्नोऽपि तत्स्वामित्वाभिमानवान् न । पुनः कः ? नित्यतृप्तः । यदृच्छालाभसन्तुष्टः । "ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत् । तेन त्यक्तेन भुञ्जीथाः मा गृधः कस्यस्वित् धनम्" इत्यादि अनुसन्दधत्, यदा यावत् लभ्यते तावतैव तृप्तः । पुनः कः ? निरहङ्कृतिः । इदं अहं अकार्षम्, इदं महत्कार्यं मत्सकाशादेव जातम्, इत्याकारकः सर्वकार्यकर्तृत्वाभिमानः अहङ्कारः । ईदृश अहङ्कारो नासीत् । पुनः कः ? आत्म-वित् । आत्मानं वेत्ति इति आत्मवित् । आत्मा नाम "यो गुणैः सर्वतो हीनो यश्च दोषविवर्जितः । हेयोपादेयरहितः स आत्मेत्यभिधीयते" इति वामने । आत्मशब्दः मुख्यवृत्त्या परमात्मानम्, अमुख्यवृत्त्या जीवं वक्ति । जनकः "परमात्मा सर्वोत्तमः तन्त्रः, जीवाः परतन्त्राः" इत्यादि पञ्चभेद-तारतम्यज्ञानवान् । वासुदेवप्रसादस्य मुख्यपात्रो भवन्नृपः । अनिरुद्धप्रद्युम्नसङ्कर्षणवासुदेवरूपि परमात्मनः अनुग्रहस्य तन्निवेदित-अन्नादिनैवेद्यपदार्थस्य च मुख्यभागी ।

**मूलम्**

**तस्य भ्राताऽभवत् पूर्वं कुशकेतुरिति स्मृतः ।**
**कुशध्वजस्य तनयास्त्रयस्त्रैलोक्यसुन्दराः ॥ ६ ॥**

**कल्याणकाण्डदीपः**

**तस्य** = जनकस्य । **पूर्वं** = कृतयुगे । बृहस्पतिपुत्रतावस्थायां कुशध्वज इति यः स्मृतः सः भ्राताऽभवदित्यन्वयः । **कुशध्वजस्येति** । कुशकेतोः तनयाः पुत्राः त्रयः विचिकित्सुः विकर्तनः प्रतर्दनश्चेति त्रयः ।

*तदुक्तं वामने प्रथमे— (क्षेत्रखण्डे अ. १० श्लो. १४-१५)*

"......................................... जनकः ।
अजो विविक्तो विमलो विष्णुभक्तो ममात्मजाः ।
चत्वार एते शिशवः शासने नात्र कोविदाः ॥

ममानुजस्य पुत्राश्च विचिकित्सुर्विकर्तनः ।
प्रतर्दनश्च इति ते त्रयश्च शिशवस्तथा ॥" इति ।

त्र्यवयवो लोकस्त्रिलोकः । स एव त्रैलोक्यम् । यद्वा त्रयाणां लोकानां समाहारस्त्रिलोकी सैव त्रैलोक्यम् । स्वार्थे ष्यञ् । तत्सम्बन्धि सुन्दरगणगणिता इत्यर्थः । शेषषष्ठ्या समासः, न निर्धारण-षष्ठ्या । "न निर्धारणे" इति निषेधात् । न च "निर्धारणे सप्तमी" इति सप्तमीसमासः । त्रैलोक्यस्थानां एतदन्येषां देवगन्धर्वादीनां एतेभ्यः असौन्दर्यप्रसक्तेः । तथाहि यत्कुलजातेषु यः सुन्दरः स तत्कुल-सुन्दरः । अन्ये तदसुन्दराः । एवं देशसुन्दरः लोकसुन्दर इत्यादि । अतः शेषषष्ठीसमासः । सुन्दरा रूपसम्पन्नदेहाः । कुण्डलमुक्ताहारनूपुराङ्गदादिचतुर्विधभूषणाभावेऽपि भूषितवद्भासमानाकारविशेषो रूपम् ।

*तदुक्तं भावप्रकाशे—*

"आबध्यारोप्य विक्षेप्य बन्धनीयैरभूषितम् ।
यद्भूषितमिवाभाति तद्रूपमिति कथ्यते ॥" इति ॥

'अभवत्' इति वचनविपरिणामेनान्वयः ॥

**मूलम्**

**[१]दुहितृत्रितयं तस्य कुशकेतोर्महात्मनः ।**
**जनकस्याभवत् पुत्री जानकी नाम सा रमा ॥ ७ ॥**

१. दुहितॄणां त्रयं ।

**कल्याणकाण्डदीपः**

**दुहित्रिति** । **महात्मनः** = महाबुद्धेः । कुशकेतोः । **दुहितृत्रितयं** दुहितॄणां त्र्यवयवोपेतः समुदायः । **अभवत्** इत्यस्ति । अस्ति भवति विद्यतिपरः प्रथमपुरुषोऽप्रयुज्यमानः सर्वत्रास्तीति भाष्यकारवचनात् । तिस्रो दुहितर आसन्नित्यर्थः ।

*ननु वामने प्रथमेऽध्याये—*

"ममापि दुहिता चैका ह्यूर्मिला नाम नामतः ।
कुशाध्वजस्य दुहिते कनिष्ठभ्रातुरेव मे ।
माण्डवी श्रुतिकीर्त्याख्ये सुशीले सुमनोहरे ॥" इत्येवमस्ति ।

*वाल्मीकीयेऽपि— (बा.का. ७१.६,७)*

"भ्राता यवीयान् धर्मज्ञ एष राजा कुशाध्वजः ।
अस्य धर्मात्मनो राजन् रूपेणाप्रतिमं भुवि ।
सुताद्वयं नरश्रेष्ठ पत्न्यर्थं वरयामहे ॥" इति ।

*तात्पर्यरामायणेऽपि—*

"कुशाध्वजस्य ते भ्रातुर्भ्राजमाने सुते उभे ।
दातव्ये भरतायाङ्ग शत्रुघ्नाय च शोभन ॥" इति ।

अतो विरोध इति चेत् । अत्रेत्थं भाति— दशरथस्येव जनकस्यापि प्रवयसः सन्ततिर्जाता । तत्र सर्वज्येष्ठाऽयोनिजा सीता । तदनुजाश्चत्वारो जनकपुत्राः । तदनुजाता एका ऊर्मिला जनकदुहिता । ऊर्मिला समहायना । कुशाध्वजस्य त्रयः पुत्राः । द्वे दुहितरौ । एवं स्थिते तत्र ऊर्मिला कुशाध्वज-सुताद्वयसमशीलवयोगुणोपेता सीता चाधिकवयोगुणशीला नोर्मिलाया वयस्या भवति । न च सीताया तस्या रतिः, किन्तु मिहिरप्रभया ताराप्रभाया इवारतिरेव । अत एव एकाकिनी न रमत इत्यालोच्य

कुशकेतुसुताभ्यां पालिता तत्रैव ववृधे। वैभवातिशयात् सीतायामेव जानकीति प्रसिद्धेश्च। तथाच तेन पालनाल्लोकव्यवहाराद् धर्मतश्च तत्सुतात्वम् ऊर्मिलाया इति। अतो न विरोधः।

अत्र सर्वाः कन्या असहोदर्यः। अतो नैकस्मिन् दिने विवाहनिषेधः। दुहितृद्वयमिति पाठः सुगमः। न च कल्पभेदेनाविरोधः।

"ऋते तु पाण्डवकथां कार्ष्णीं रामायणं तथा।
एतदापादकं चान्यदृते कल्पादिभेदतः।
कथाभेदस्तु विज्ञेयः ...................... ॥"

इति भागवतचतुर्थतात्पर्योदाहृतपरिभाषाविरोधात्। यद्वा प्रकाशरीतिं परित्यज्य प्रबोधनीरीत्या अर्थान्तरं परिकल्प्य वा अनित्यत्वं प्रायिकत्वं वा आश्रित्य कल्पभेदेनाविरोधे सर्वं सुगमः इति।

**जनकस्येति**। सा जानकी रमा। रमात्मिका।

*तथा च पूर्वतापनीये*—

"रमानाथाय रामाय श्रीरामायात्ममूर्तये।
जानकीदेहभूषाय रक्षोघ्नाय शुभाङ्गिने॥" इति॥

**मूलम्**

**भ्रात्रा च कारयामास राज्यं जनकभूपतिः।**
**स भ्रातुराज्ञया राज्यं चकारार्येषु भक्तिमान् ॥ ८॥**

**कदाचिज्जनको राजा मनसीत्थमचिन्तयत्।**
**सुखमेव सदा मे स्याद्दुःखं मा [1]भूदिति स्मरन्।**
**दुःखं न [2]पश्ये नेत्राभ्यां सुखं [2]पश्ये सदाऽऽत्मनः ॥ ९॥**

१. भूत् कदाचन। २. वीक्ष्ये।

**कल्याणकाण्डदीपः**

**भ्रात्रा च** = भ्रात्रैव। **राज्यम्** = राज्ञः कर्म। प्रजारञ्जनादि॥ **कदाचिदिति**। सार्धपद्यमेकं वाक्यम्। **कदाचित्** धीरललितावस्थायाम्। **जनको राजा** = नृपः। **सुखमेव** = एवकारो विरोधि-

योगव्यवच्छेदार्थः । दुःखासम्भिन्नं सुखं स्यादिति । **"मा भूत्"** इति माङि लुङ् । सर्वलकारापवादः । "मास्म माऽलं च वारणे" इत्यमरः । तथा च मा भवतु इति निषेधः । **कदाचिदपि** । 'मनागपि' इति शेषः ।

तथाच इयं योजना— **मे** सचिवानुजादिनिहितसुतराज्यादियोगक्षेमतया निश्चिन्तस्य धीर-ललितस्य । **भ्रात्रा च कारयामास** इत्यादिना **भक्तिमान्** इत्यन्तेन । तस्य धीरललितत्वसूचनात् । "निश्चिन्तो धीरललितः कलासक्तः सुखी मृदुः" इत्यादि तल्लक्षणात् । **सदा** भविष्यति काले, तत्रापि सदा जाग्रत्स्वप्नमनोरथोन्मादजविकारवातगतिमायाक्रीडापरिहासाद्यवस्थासु **सुखमेव** दुःखासम्भिन्नं सुखं **स्यात्** । **कदाचिदपि** = मनागपि **दुःखं मा भूदिति** स्वाभिलषितं **स्मरन्** । नेत्राभ्यां सदात्मनः सुखं पश्यन्नहं **दुःखं न पश्ये** = न पश्येयम् । इत्थं मनसि अचिन्तयद् इत्ययमेक आपातार्थः । पदलकारयोर्व्यत्यय आर्षः ।

***विचारितार्थस्तु***— "दुःखकारणानुभवाभावाविनाभाविसुखमेव सदा मे स्यात्, दुःखं मा भूदिति सर्वाभिलषितसाधारणस्वाभिलाषोपनीतमनुभूतं सुखकारणरूपं व्याप्तिमल्लिङ्गं स्मरन्, आत्मनः सदा सुखं पश्यन् अहम् इति तादृशलिङ्गस्य स्वस्मिन् समुचितदेशवृत्तित्वं साक्षिणाऽध्यक्षीकुर्वन्, दुःखं सदा आगामिकालेऽपि न पश्य" इति सदा दुःखकारणानुभवाभावमन्विष्यन्नास्त इति ।

*तथाच प्रयोगः*— "अहं यावत्साधनपूर्तिपर्यन्तं दुःखकारणानुभवाभाववान् । आजन्माशीति-सहस्रवर्षपर्यन्तैतत्पूर्वकालावच्छेदेन यथाभिलाषोपनीतसुखकारणानुभवितृत्वात् पुरा जनकवत् स्वर्गिवत् वा" इति ।

यद्वा न केवलमेतावत् । किन्तु, आत्मसम्भावनामुखेन सगर्वितं वाक्यं जगाद चेत्याह— **दुःखं न पश्ये नेत्राभ्यामिति** । 'अहम्' इति लभ्यते । 'नेत्राभ्याम्' इति द्विवचनस्वारस्यात् "पूर्वचीर्ण-पुण्यप्रभावलब्धसुखावलोकनाय मे लोचने नालमिति याभ्यां लोचनाभ्यां सुखमपश्यन् तयोरेकेनापि लोचनेन ईषदपि" इति वाक्यमुपस्क्रियते । "दुःखं न पश्ये" इत्यस्यावृत्तिः । "ताभ्यामहम्" इत्यस्या-प्युपस्कारः । "किमु वक्तव्यं किन्तु" इति चोपस्क्रियते ।

इत्थञ्च आजन्मसुख्यहं पूर्वचीर्णपुण्यप्रभावलब्धसुखावलोकनाय मे लोचने नालमिति याभ्यां लोचनाभ्यां सुखमेवापश्यम्, तयोरेकेनापि लोचनेन कटाक्षेणापि ईषदपि **दुःखं** दुःखकारणं नापश्यम्, सोऽहं बलवान् कर्मठः ताभ्यामेव द्वाभ्यां लोचनाभ्यां अहं दुःखकारणं न पश्यामि इति किमु वक्तव्यम्, न पश्याम्येवेत्यर्थः । किन्तु, आत्मनः सदा यथा पूर्वं तथोत्तरत्रापि जाग्रत्स्वप्नमनोरथाद्यवस्थास्वपि

सुखकारणमेव पश्यामि । तादृशं मत्कृतसुकृतसामर्थ्यमिति आत्मसम्भावनपूर्वकं वचनम् । एतेन परमसमर्थोऽहं न यादृशतादृशेतरसंसारिजीवसाधारण इति महान् गर्वपर्वत उज्जृम्भितः । "क्वचिद्वीणा-वादः क्वचिदपि च हाहेति रुदितम्" इत्यादि नारदोक्तिस्तु प्रायोऽभिप्रायेति भावः । 'पश्येयम्' इति वक्तव्ये आत्मनेपदिनि लटि उत्तमपुरुषप्रयोगादयमर्थो लभ्यते ।

अत्र सुखदुःखशब्दौ तत्कारणपरौ । "..... सुखं स्वर्गाम्बुशर्मसु । वरुणस्य नगर्यां तु सुखं द्रव्ये त्वयं त्रिषु" इति रत्नकोशात् । अथ "त्रिषु द्रव्ये पापं पुण्यं सुखादि च" इत्यमरेऽपि । "सुखकामि-कुलद्रव्यं सुखो वासः सहाम्बया । सुखा युवतिरिच्छन्ति" इत्यादिप्रयोगादौचित्याच्च । "अर्थात्प्रकरणा-ल्लिङ्गादौचित्यात् अर्थनिर्णयः" इत्युक्तेः । न चैवं वाक्यादुपस्कारादौ व्याख्याबहिर्भावः ।

"पदच्छेदः पदार्थोक्तिः विग्रहो वाक्ययोजना ।
आक्षेपस्य समाधानमिति व्याख्यानलक्षणम् ।
अतिरिक्तं पदं त्याज्यं हीनं वाक्ये नियोजयेत् ।
विप्रकृष्टं च सन्दध्याद् दानं पूर्वं च कल्पयेत् ।
लिङ्गं धातुं विभक्तिं च योजयेच्चानुलोमतः ।
वाक्यार्थस्यानुसारेण तेषां च प्रत्ययोऽपि च ॥"

इति तल्लक्षणलक्षितत्वात् । पदरत्नावल्यामेतत्फूत्करणं तु श्रुतत्यागांशपरम् ।

"यत्रानवसरोऽन्यत्र पदं तत्र प्रतिष्ठितम् ।
वाक्यं वेति सतां नीतिः सावकाशो न तद्भवेत् ॥"

इति श्रीमद्भाष्याच्च (१-१-१) । किञ्च पुराणकथनलक्षणलक्षितत्वाच्च ।

*तथा हि । पद्मपुराणे—*

"भाषया रचितं शास्त्रमिह लोके सुखप्रदम् ।
परलोके भयकरं तस्मात् तत्परिवर्जयेत् ॥

भाषया रचितं शास्त्रं स्त्रीमुखेभ्यः शृणोति यः ।
शूद्रेभ्यश्च प्रशृण्वन्ति ते वै निरयगामिनः ॥

एवं वाच्यं पुराणं तु शब्दभावसमन्वितम् ।
पदं पदं संविभज्य परस्परविमिश्रितम् ॥

सुव्यक्तं मधुरं रावं गम्भीरं शास्त्रगर्भितम् ।
अघघ्नं रागसंयुक्तं स्त्रीरागमथवा वदेत् ॥

मन्द्रमध्यमतारैश्च ध्वनिभिः सम्मितं वदेत् ।
एवं वदन् द्विजो दक्षः श्रोतॄणामघनाशनः ।
अथवा सर्वरागांश्च वदन् स्वर्गे महीयते ॥" इत्यादि ।

वाक्यार्थज्ञानहेतुश्च आसत्तिर्योग्यता ज्ञानम् । द्विधाऽऽकाङ्क्षा चतुर्विधतात्पर्यज्ञानम् ।

संयोगो विप्रयोगश्च साहचर्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥

सामस्त्यमौचिती देशः कालो व्यक्तिस्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥" इत्युक्तः ।

एतेषामनुसन्धाने हर्यनुग्रहेण वाक्यार्थः स्फुरति । अत्र "अगदच्च" इत्यपि संयोज्यम् । "श्रुत्वा तद्गदितम्" इत्युत्तरानुगुण्यात् । ननु निगर्विशिखामणेः कथमयं गर्वपर्वत उज्जृम्भितः ? इति चेत्, प्रतिबद्धप्रारब्धशेषसम्भोगावसरदानाय हरीच्छयेति ध्येयम् ॥

## गूढकर्तृकव्याख्यानम्

जनकस्य कृतयुगे बृहस्पतिपुत्रतायां कुशध्वज इति यः आसीत्, स एव जनकस्य अनुजत्वेन जज्ञे । अनुजस्य कुशकेतुरिति नाम । कुशकेतोः त्रयः पुत्राः अभवन् । तेषां विचिकित्सुः, वितर्दनः, प्रतर्दनः इति नामानि । एते त्रयः पुत्राः स्वर्गमर्त्यपातालाख्यलोकत्रये सुन्दराः । महाबुद्धिशालिनः कुशकेतोः तिस्रः दुहितरः आसन् इति उक्तम् ।

*अत्र विचारः*— वस्तुतः कुशकेतोः द्वे दुहितरौ एव, माण्डवी श्रुतकीर्तिरिति । अपि तु दुहितृत्रितयं इति वक्तुं किं बीजम् ? उच्यते— दशरथराजस्य यथा, तथा जनकस्य, प्रवयसि सन्ततिः अभूत् । तस्य सर्वस्य अपत्येषु ज्येष्ठा शुक्लशोणितसम्बन्धरहिता पुत्री सीता । कुशकेतोः सुताद्वयजननात् प्रागेव सीतायाः समागममहिम्ना जनकस्य अजः विविक्तः विमलः विष्णुभक्त इति चत्वारः पुत्राः जाताः । अन्ते ऊर्मिला इति पुत्री जाता । कुशकेतोः दुहितरौ ऊर्मिलायाः समहायने । सीता तु रूपवयोगुणशीलादिषु अधिका । सीता जनकस्य ज्येष्ठपुत्री । ऊर्मिला कनिष्ठपुत्री । ऊर्मिलायाः

सीता वयस्या न। अतः तयोः क्रीडादिषु साङ्गत्यं न युज्यते। अतः ऊर्मिला एकाकी न रमते इति आलोच्य कुशकेतुसुताभ्यां माण्डविश्रुतकीर्तिभ्यां सह लालिता पालिता तत्रैव कुशकेतुभवने ववृधे। तथा च कुशकेतुपालनात् लोकव्यवहारात् धर्मतः ऊर्मिलायाः कुशकेतुसुतात्वं युज्यत एव। एवं कुशकेतोः दुहितुत्रितयत्वम्। अत्र सर्वाः कन्याः एकोदरा न। अतः एकस्मिन् दिने आसां विवाहो न निषिध्यते।

जनकस्य या पुत्री सीता, सा साक्षात् लक्ष्मीस्वरूपा। जनकः अनुजेनैव कुशकेतुना प्रजा-रञ्जनादिरूपं राज्यं कारयामास। स तु कुशकेतुः श्रीहरिगुर्वार्यजनेषु भक्तिमान्। अतः ज्येष्ठभ्रातृजनकस्य आज्ञया राज्यं पालयति स्म। जनकस्तु सुखाभिलाषी, धीरललितः, स्वस्य सचिवैः अनुजेन च सुतानां राज्यस्य योगक्षेमं निर्वाह्य स्वयं निश्चिन्तः॥ एवं सति किमभूत्?

एकदा जनकः मनसि एवं आलोचयामास। सर्वदेशकालावस्थासु जाग्रदवस्था स्वप्नावस्था मनोरथं उन्मादजन्यविकारवातगतिक्रीडापरिहासकरण इत्यादिनामा अवस्थासु दुःखासम्बद्धं सुखमेव मे स्यात्। दुःखं यदाकदापि मनागपि मा भूत् इति मनसि सस्मार। अहं जन्मनः प्रभृति अशीतिवर्षसाहस्रपर्यन्तं सुखमेव अन्वभवम्। दुःखं मनागपि नानुभूतवान्। एतावत् आभ्यां मम नेत्राभ्यां दुःखजनकान् कानपि सन्दर्भान् नापश्यम्। सुखकारणभूतानेव दृष्टवान्। किञ्च मया जन्मान्तरेषु अमितपुण्यं आर्जितम्। तज्जन्यसुखं अवलोकितुं इमे मम नेत्रे नालम्। मदार्जितपुण्यराशिः तावान्। एतावत् यथा तथा पुरतोऽपि मम नेत्राभ्यां दुःखजनकसन्दर्भान् नैव पश्यामि। सुखजनकदृश्यानेव पश्यामि इति गर्वेण स्पष्टं अगादीच्च। एवं सति,

**मूलम्**

**असाधुसम्मतं वाक्यं श्रुत्वा तदुदितं हरिः।**
**[1]स दुःखं दर्शयामास [2]आजन्मत्वाच्च भूपतेः ॥ १० ॥**

१. दुःखं स दर्शयामास।, दुःखं प्रदर्शयामास।
२. राज्यमत्तस्य।

**कल्याणकाण्डदीपः**

ततः किमभूत्? इत्यतः प्रतिमुखनिष्ठुरवचनरूपदुःस्वप्नाख्यानकथनात्मकवाग्वज्रप्रहारेण गर्व-पर्वतमभिनत् इत्याह— **असाध्विति**।

अयमत्र सङ्ग्रहः— आदौ राज्ञः स्वप्ने बद्धप्रारब्धशेषसम्भोगः । आशावत्सप्रेक्षोत्पत्तावानन्द-सम्भूतिरिति । सः दुःखं दर्शयामासेति भिन्नं पदम् । अथवा दुःखं सन्दर्शयामासेत्येकं पदम् । आजन्मत्वादिति समस्तं व्यस्तं वा । इदानीम् आप्तब्राह्मणादिरूपेण आकाशभाषितेन वेति च शेषः । दुःखदर्शनमाचख्यौ दुःखं दर्शयामासेति व्युत्पत्तिः । अस्यां व्युत्पत्तौ दुःखदर्शनपदार्थः दुःखसाधन-विषयकस्वप्नसमानाकारज्ञानजनकशब्दसन्दर्भरूपाख्यानम् । णिजर्थ आख्यानं कथनं आख्यातार्थ आश्रयत्वम् । रूपावतारस्तु प्रातिपदिकाद्धात्वर्थे बहुलमिष्टवच्चेति सूत्रप्रपञ्चात्मकम् । ''तत्करोति तदाचष्टे धातुरूपं च'' इति सूत्रद्वयस्याख्यानात्कृतस्तदाचष्टे कृल्लुक् प्रकृति प्रत्यापत्तिः । प्रकृतिवच्च कारकमिति वार्तिकादिभिर्भवति । ''दर्शनं दर्शनस्वप्नबुद्धिशास्त्रार्थदृष्टिषु'' इति त्र्यक्षरनान्तनानार्थकोशाद्दर्शनशब्दः स्वप्नार्थः । ''निद्रा गुडाका सुप्तं च स्वप्नस्त्वेवात्र दर्शनम् । संस्कारमात्रजं स्वप्नः कामिको रसकोऽपि चे''ति वैजयन्त्याश्च । तस्मिन् स्वप्ननिदर्शने ''स्वप्नो ह्यद्य मया दृष्ट'' इत्यादिषु स्वप्ने बहुदृशो दृशि-प्रयोगाच्च ।

**आजन्मत्वादिति** । ''आङ् मर्यादाभिविध्योः'' इति अव्ययीभावो वा । 'उ॒तामृ॑त॒त्वस्येशा॑नो' इति पुरुषसूक्ते तथा भागवतस्य प्रथमे पञ्चमेऽध्याये एकादशश्लोके ''धृत्या ह्यपानं सोत्सर्गं तत्परत्वे ह्यजोहवीत् । त्रित्वे हुत्वाऽथ पञ्चत्वे'' इति । तथा द्वितीये पञ्चमेऽध्याये त्रयस्त्रिंशश्लोके ''सदसत्त्व-मुपादाय नो भयं ससृजुर्हृदः'' इत्यादाविव जन्मत्वादिति भवितृप्रधानः । भस्मधरोग्रत्वादि तच्छब्दा-भावादितिवत् स्वार्थिको वा त्वप्रत्ययः । ''अशीतिवर्षसाहस्रं सम्प्राप्तं मम भामिनि । एतावत्कालपर्यन्तं न दृष्टं दुःखसञ्चयम्'' इत्युत्तरानुगुण्यात् । ''एतावन्तमहं कालं सुखी राज्यमशासिषम् । इदानीमस्मि दुःखार्तो वृद्धः पुत्री तपोधना'' इति वामनानुगुण्याच्च । तथा च जन्मत्वादित्यस्य जन्मन इत्यर्थः ।

अतश्चेत्थं योजना— **असाधुसम्मतम्** = साधूनामसम्मतं वाक्यम् । ''दुःखं न पश्ये नेत्राभ्यां सुखं पश्यन् सदात्मन'' इति वाक्यम् । **तद्वदितं** = येन आजन्माशीतिवर्षपर्यन्तं नेदृशं सुखविषयकं सगर्वितं हर्यनुसन्धानरहितं वाक्यं उक्तचरम् । तेनेदृशज्ञानिना जनकेन गदितं व्यक्तमुक्तम् । **श्रुत्वा** = आकर्ण्य । **सः** = आरब्धस्यानुगुण्येन फलदाता । **हरिः** = कल्मषहारी । **भूपतेः** = जनकराजस्य । **आजन्मत्वात्** = जन्मारभ्य । इदानीं च प्रतिबद्धप्रारब्धशेषानु-गुणसम्भोगावसररूपासाधुवचन-समयानन्तर एव **दुःखं** = दुःखकारणं **दर्शयामास** = स्वप्नमुत्पादयामास इत्यर्थः । अथवा प्रत्यायित-ब्राह्मणादिरूपेण, आकाशभाषितेन वा दुःखं दर्शयामास । दुःखसाधनमीलितचित्तजन्यवासनोपादानक-वस्तुविषयकज्ञानात्मकसंवेशसमानाकारज्ञानजनकशब्दसन्दर्भरूपाख्यानमाचख्यौ इति ।

नन्विदमयुक्तमिवाभाति । दृशेश्चाक्षुषज्ञानार्थत्वं प्रसिद्धम् । एवमेव परित्यज्याप्रसिद्धस्वप्नार्थत्वपरिग्रहे प्रसिद्धाप्रसिद्धत्यागयोगौ स्याताम् । किञ्च उत्कटदुःखसाधनस्वप्नस्यानुत्कटदुःखसाधनासाधुवचनरूपवाचनिकापराधानानुगुण्याच्च । अपि च, उत्तररामायणे अगस्त्यरामसंवादे रावणदिग्विजयप्रसङ्गे तस्य वेदवतीशापप्रकारकथनवेलायां पञ्चदशसर्गान्तिमे—

"एवमेषा महाभागा पुनर्मर्त्येष्वजायत ।
क्षेत्रे हलमुखग्रस्ते जनकस्य महात्मनः ।
सैषा जनकराजस्य पूर्वमासीत् कृते युगे ॥" (वा.रा.)

इत्यादिना कल्पभेदेन रामचरितस्य व्यत्यासाभावोक्त्या "विना रामायणं कार्ष्णीम्" इत्यादि परिभाषाबलाच्च सीतास्वयंवरे कुशकेत्वभावस्य कदाऽप्यभावे स्वप्नोपादानरूपवासनाभावे स्वप्नायोगात् । कल्पभेदेन जाग्रत्कुशाभावकल्पने च स्वप्नार्थत्वकल्पनस्य वैयर्थ्यात् इति चेन्न । यदुक्तं "तूष्णीमेव प्रसिद्धाप्रसिद्धत्यागपरिग्रहौ स्याताम्" इति । तन्न । "अशङ्खचक्रो हरिः" इत्यत्रेव, "भर्तुः प्रियं द्रौणिरिति स्म पश्यन्" इत्यत्रेव च बाधात् प्रसिद्धं परित्यज्य, अप्रसिद्धार्थपरिग्रहो न तूष्णीम् । तथाहि । यथा "अशङ्खचक्रो हरिः" इत्यत्र सशङ्खचक्रत्वरूपासाधारणधर्मसम्बन्धबाधादप्रसिद्धेन्द्ररूपार्थपरिग्रहः । यथा च "द्रौणिरिति स्म पश्यन्" इत्यत्र द्रौपदीसान्त्वनदर्शने किरीटिकृतत्वविशिष्टविषयकत्वस्य भीमसेनकृतत्ववैशिष्ट्यबोधकनिरवकाशैषीकविरोधेन बाधात् प्रसिद्धचाक्षुषत्वं विहाय, अप्रसिद्धस्वप्नदर्शनत्वपरिग्रहः । तथा सीतास्वयंवरादर्वाक्कुशध्वजाभावे तत्साहित्यबोधकनिरवकाशवाल्मीकीयतात्पर्यं रामायणादिविरोधात्, प्रसिद्धचाक्षुषत्वबाधेनाप्रसिद्धस्वप्नदर्शनत्वपरिग्रहादिति ।

तथाच उक्तं प्रथमे सप्तमान्तभागवततात्पर्ये 'स्वप्नोऽयम्' इत्यादिना 'नैषीकविरोधः' इत्यन्तेन । एतेन यत्र दृशेश्चाक्षुषज्ञानार्थत्वे प्रबलप्रमाणविरोधः, तत्रौचित्ये च सति, दृशिः स्वप्नार्थ इति परिभाषैतत्तात्पर्यमूला सिद्ध्यति । "इति स्म पश्यन्" इत्यनेनापि सङ्क्षेपेणायमर्थ उक्तः । तथाहि 'इति' वक्ष्यमाणप्रकारेण । "स्मातीतेऽस्तमदर्शने" इति कोशात् 'स्म' इत्यस्यातीतमित्यर्थः । 'पश्यन्' इत्यत्र प्रकृत्यर्थस्य चाक्षुषत्वबाधात् प्रत्यक्षसमानाकारदर्शनमित्यर्थः । अतीतविषयकप्रत्यक्षसमानाकारदर्शनं च स्वाप्नदर्शनमेवेति । एवं कृते भागवततात्पर्ययोर्मूलमूलिभावसङ्घटना कृता भवति इति ज्ञेयम् ।

रामायणे च बालकाण्डे सप्ततितमे सर्गे "यवीयान्मम भ्राता कुशध्वजः सांकाश्यां पुरीमध्यास्ते" इत्यादावुक्त्वा "तमहं द्रष्टुमिच्छामि यज्ञगोप्ता स मे मतः । प्रीतिं सोऽपि महातेजा इमां भोक्ता मया सह" इत्यादि । यदुक्तं "किं च" इत्यादिना तदपि वार्तम् । यद्यपि "दुःखं न पश्ये" इत्यादिवाचनिकाप-

राधस्य "सुखं न पश्ये नेत्राभ्यां दुःखं पश्ये सदाऽऽत्मनः" इत्येतावतैव वाचनिकप्रायश्चित्तेनालम्, यथात्मसम्भावनायास्तदनुगुणनिन्दया। तथाऽपि सयुक्तिकं आलोच्योक्तत्वेन बुद्धिपूर्वकत्वात् प्रतिबद्ध-प्रारब्धशेषसम्भोगाय चोत्कटदुःखविशेषांशोक्तेरुपयोगः।

*तदुक्तं पराशरपुराणे—*

"इहैव फलदं कर्म प्रारब्धं प्रतिबद्धच च।
फलं ददाति स्वप्ने वा जाग्रत्कालेऽथ वाऽनघ॥
निवृत्तप्रतिबद्धं तु प्रारब्धं कर्म सत्तम।
निरुद्धांशफलं स्वप्ने ददाति स्थिरमुत्तमम्॥
निरुद्धांशसमो भोगो यदोद्भूतश्च जाग्रति।
तदा निरुद्धं तेनैव सहकर्म ददाति वै॥
एवं निरुद्धभोगं तु स्वप्ने जाग्रति वा फलम्।
आरब्धस्यानुगुण्येन भुङ्क्ते देही न संशयः॥" इत्यादि।

यदपि "अपि च" इत्यादिनोक्तं तदप्यपेशलं स्वप्नोपादानभूतवासनायाः यथायोगं शाब्दाद्यनुभव-जन्यायाः सम्भवात्। तथाहि। अत्रायं क्रमः। आजन्मसुखिनो राज्ञो वार्धके महान् सीतालाभः। तत्सुमुहूर्तवशादेव सन्ततिर्द्वयमभूत्। एतन्मध्ये यथा यथा सीता ववृधे तथा तथा "नक्तञ्चरस्य चलतिर्नक्तमेवेति दिवैवेति वा न" इत्येवमव्यवस्थया क्रिया समभिव्याहारेणाभूत्। किमेतत्कारणमिति जिज्ञासमानस्य राज्ञस्तयोद्भूतपूर्वानुभवजनितसंस्कारेण नाना चिन्ता जाता। पूर्वानुभवश्च।

पूर्वं कृतयुगमेवमासीत्। बृहस्पतिसुतस्य कुशाध्वजस्य वाङ्मयी वेदवती नाम कन्या। "सैषा रमा हरेर्भागो नान्यस्मै देया" इत्येवं स्वकृतेन दृढनिर्बन्धेन रात्रौ दैत्यशम्भुना हिंसितः। तस्य पत्नी तेन सह ज्वलनं गता। ततः शम्भुस्तु "अन्यकामकन्याप्रधर्षणं न धर्मः" इति निवृत्तः। वेदवतीं च विष्णवे तप्यन्तीं रावणः केशमात्रे परामृशत्। तद्धस्तं स्वहस्तासिना च्छित्वा भीषयामास। परस्पर्शप्रायश्चित्तार्थं शप्त्वा ज्वलनं गता। तद्भस्म समुद्रे प्लावयामास। ततस्तेजःपिण्डमभूत्। तत्कुम्भे निक्षिप्य समुद्रतीरे महीसादकारयन् मन्त्रिभिरिति। एतदनुभवो राज्ञः शाब्द आसीत्। इदानीं चिन्तयोद्बुद्धतत्संस्कारेण ध्यानमास्थितो राजा।

तथाहि— किंस्विद्रावणागमनकारणम्? सीतानिरीक्षणं वा स्यात्? उत अन्यत्? इत्यालोच्य (स्थितस्य) सीताभिवृद्ध्यनन्तरभावित्वात् सीतानिरीक्षणमेव कारणम्। यथा वेदवत्या शप्तो रावणः,

सैषा सीता, प्रायः स एवायं कुशध्वजः, तत्पत्नी च सैषा । सीता चात्रापि धर्मतस्तत्पुत्री । एते पुनर्मनोरथसम्पादनाय जाताः । ममैष महाननुग्रहो हरेः ।

> "धनागमो नित्यमरोगिता च सती च भार्या प्रियवादिनी च ।
> पुत्रश्च वश्योऽर्थकरी च विद्या षड्जीवलोकस्य सुखानि राजन् ॥" (महाभारते ५-३३-८९)

इत्युक्त षड्जीवसुखदानात् । यद्यपि स एवायं हि रावणो दारुणः । अहं च राजा जराजीर्णाङ्गः । सुताश्च शिशवः । आहोस्वित् पूर्ववत् कुशध्वजादीनामापत् स्यात् । न स्यात् । रावणेन युद्धं चेदभविष्यत् । हरिरेवारक्षिष्यत् । न हि हरिरस्थानकुपितो भवति । रसज्ञः अहं च तत्प्रसादमुख्यपात्र इत्यादि ॥

ईदृशस्याप्येतन्मध्ये कालकर्महरीच्छानुसारेण गर्वकारणमभूत् । तथाहि सीताया गर्भाष्टमे विवाह इति भाति । गर्भसप्तम एवमासीत् । तत्किम् ? उच्यते । यूनापि सुधन्वना वृद्धस्यापि सीतानिमित्तं विजयो जातः । विजयिनः स्वराज्यसम्पत्समृद्धस्यापि स्वबहुसत्पुत्रशैशवनिरीक्षया तत्पुत्राननादृत्य राज्यरागेणानुजं तत्राभिषिक्तवान् । वृद्धानां ज्ञानिनामपि बहुसुगुणेषु शिशुषु सुतेषु सत्सु राज्यरागो लोकसङ्ग्रहात् प्राप्तः । अर्थशास्त्रनैपुण्याच्च विषयरागः सुखे सुखमिति न्यायेन क्षणिक ईषन्मोहः । तेन तत्त्वविस्मृतिः । तया नष्टदृष्टेः सगर्वितं वाक्यम् । अयमेव प्रतिबद्धप्रारब्धस्यावसर इति दुःखाख्यान-कथनमिति । अतः स्वप्नोपादानवासनालाभ इति भावः । एवमुपादानभूतपटुतरवासनावशाच्छ्रुत-वाक्यार्थस्वप्नोऽभूदित्याशयः ।

यद्वा एकस्मिन् दिने आख्यानश्रवणम्, अन्यस्मिन् स्वप्नदर्शनम् । अत एवाहुः प्रशस्तपादाः । "यमर्थमादृतश्चिन्तयन् स्वपिति सैव चिन्तासन्ततिः प्रत्यक्षाकारा जायते" इति । रामायणेऽपि "विचिन्तयन्ती सततं तमेव तथैव पश्यामि तथा शृणोमि" इति । कल्पभेदेन समाधाने तु स्पष्टोऽर्थः ॥

### गूढकर्तृकव्याख्यानम्

ननु जनकः अहङ्कारममकाररहित इत्युक्तम् । ईदृशस्य इयान् गर्वः कथं जातः इति चेत्, तस्य प्रारब्धकर्मशेषस्य सत्त्वात् श्रीहरीच्छया एवं गर्वोऽभूत् । "दुःखं न पश्ये नेत्राभ्यां सुखं पश्ये सदाऽऽत्मनः" एतद्वाक्यं तु सज्जनानां असम्मतं वाक्यम् । ईदृशं सुखैकविषयकं सगर्वितं श्रीहरेः अनुसन्धानरहितं वाक्यं न कदापि उक्तचरं ज्ञानिना जनकेन । तथाऽपि अद्य तेन उक्तं आकर्ण्य तस्य प्रारब्धकर्मानुगुण्येन फलदाता सकलकल्मषहारी श्रीहरिः तस्य प्रारब्धकर्मशेषभोगावसरस्य प्राप्तत्वात् दुःखकारणभूतं स्वप्नं तस्य उत्पादयामास ॥ स स्वप्नः कीदृशोऽभूत् ?

मूलम्

**कदाचिद्दैवयोगेन कुशकेतुरगान्मृतिम् ।**
**हतेऽनुजे च तद्भार्या तेन साकं ममार च ।**
**राज्यं पुत्रांस्ततस्त्यक्त्वा जगाम पतिलोकताम् ॥ ११ ॥**

कल्याणकाण्डदीपः

तदाख्यानं दर्शयति **कदाचित्** इत्यारभ्य **बालकान्** इत्यन्तेन सार्धसप्तश्लोकेन । 'इति' इति शेषः । **दैवयोगेन** = राज्ञः प्रतिबद्धप्रारब्धशेषसम्भोगयोगेन । आद्येऽर्थे स्वप्न इति लभ्यते ।

मूलम्

**तौ दम्पती नृपो दृष्ट्वा त्यक्तपुत्रौ सुखोचितौ ।**
**विललाप महाराजो भ्रातरं भ्रातृवल्लभाम् ॥ १२ ॥**

कल्याणकाण्डदीपः

**विललाप** = परिदेवनमकरोत् ।

मूलम्

**हा भद्रे बालकांस्त्यक्त्वा वृद्धं मां जानकीं तथा ।**
**क्व गच्छसि वरारोहे पतिमालिङ्ग्य मङ्गले ॥ १३ ॥**

कल्याणकाण्डदीपः

तदेव शोकार्तवाक्यरूपं परिदेवनमाह **हा भद्र** इति । "हा विषादशुगार्तिषु" इति कोशात् 'हा'शब्दः प्रारब्धकार्यभङ्गे । अपराधपरिज्ञानविघ्नविपदादिजन्यचेतोभङ्गात्मकविषादेष्टजनवियोगादिजन्यशोकातिभूमिरूपशोकेत्यर्थः । **भद्रे** = शुभ्रवस्त्राभरणहरिद्राकुङ्कुमसिन्दूराञ्जनगन्धपुष्पादिना मङ्गलाकारे । **बालकान्** = शिशून् । **वृद्धं** = जीर्णम् । **मां** = लक्ष्मीस्वरूपभूताम् । **जानकीं** = स्वसन्दर्शनमात्रेणेतरसुखमधरीकुर्वन्तीं सीतां च त्यक्त्वा । **वरारोहे** = मत्तकाशिनि । **मङ्गले** = वैधव्यविरोधिशुभलक्षणसम्पन्ने । तदुक्तं शङ्खेन—

"मृते भर्तरि या नारी समारोहेद्धुताशनम् ।
अरुन्धती समचरी स्वर्गलोके महीयते ॥" इति ।[१]

**मूलम्**

**अशीतिवर्षसाहस्रं सम्प्राप्तं मम भामिनि ।**
**एतावत्कालपर्यन्तं न दृष्टं दुःखसञ्चयम् ।**
**अद्य दृष्टं वरारोहे त्वद्वियोगेन केवलम् ॥ १४ ॥**

**कल्याणकाण्डदीपः**

**हे भामिनि !** कोपने । मम चाशीतिवर्षसाहस्रं प्राप्तम् । एतावत्कालपर्यन्तं मया किञ्चिन्नापराद्धं तथापि मह्यं (मयि) कुपिता क्व गच्छसीति ज्ञापनाय भामिनीत्युक्तम् । "भामक्रोधे क्रुधमण्डार्थेभ्यश्च" इति युच् । पतिमालिङ्ग्य क्व = कुत्र स्वर्गे गच्छसि रमसे । तदुक्तं मिताक्षरायाम्— "अथान्यारोहणं स्त्रीणामात्मनो भर्तुरेव च । अनेकस्वर्गफलदं मुक्तिदं च तथैव च" इत्यादि । 'अशीतिवर्षसाहस्रम्' इत्येतदुत्तरत्रापि सम्बध्यते । दुःखानां सञ्चयो यस्मात्, दुःखानि सञ्चीयन्ते येनेति वा **दुःखसञ्चयम्** । बहुदुःखकारणम् । **केवलम्** आत्यन्तिकम् । **अद्य दृष्टं** इत्येतत् "सुखमेव सदा मे स्यात्" इत्यस्य प्रतियोगि ॥

**मूलम्**

**इति सञ्चिन्त्य मनसा वारं वारं महीपतिः ।**
**चकार प्रेतकार्याणि पुत्राणां चैव शैशवात् ॥ १५ ॥**

**मातृहीनतया बालानालिङ्ग्याङ्के निधाय च ।**
**[१]हा पुत्रा बालभावेऽपि मातृहीनाश्च कर्शिताः ।**
**कथं पश्यामि नेत्राभ्यां मातृहीनांश्च बालकान् ॥ १६ ॥**

---

१. भो पुत्रा बालभावेन ।

---

१. गर्भिणी नानुगन्तव्या मृतं भर्तारमव्ययम् । ब्रह्मचर्यव्रतं कुर्याद्यावज्जीवमतन्द्रिता ।
केशरञ्जनताम्बूलगन्धपुष्पादिसेवनम् । भूषणं रङ्गवस्त्रं च .................... ।
मृते भर्तरि या नारी ब्रह्मचर्यव्रते स्थिता । सा मृता लभते स्वर्गं यथा ते ब्रह्मचारिणः ॥

**कल्याणकाण्डदीपः**

**चकारेति** । "दुःखं दर्शयामास" इत्यन्वयः । ततः किं चकार ? इत्यत आह— **इति सञ्चिन्त्येति** । भो पुत्राः ! बालभावेऽपि = शैशवे । पितृमातृहीना अभूत । किमेतत् ? **कर्शिताः** कृशतां प्राप्ताश्च यानहं याभ्यां नेत्राभ्यां सुखिन एव बालकानपश्यम्, ताभ्यामेव नेत्राभ्यां तान् बालकान् पितृमातृहीनांश्च कथं पश्यामीति **वारं वारं** कर्मण अवसरमवसरं मनसा सञ्चित्य मातृहीनतया बालानालिङ्ग्य, अङ्के निधाय च पुत्राणां शैशवात् स्वयमेव प्रेतकार्याणि **चकार** । "इति दुःखं प्रदर्शयामास" इति पूर्वेणान्वयः ॥

**मूलम्**

**[1]स च चिन्तापरो भूत्वा त्यक्तराज्योऽतिदुःखितः ।**
**त्यक्तान्नस्त्यक्तभोगश्च त्यक्तनिद्रोऽतिकर्शितः ॥ १७॥**

१. एवं ।, इति ।

**कल्याणकाण्डदीपः**

ततः किमभूदित्यतः आह **स चेति** । न केवलं दुःखकारणज्ञानी अपि तु दृष्टस्वप्नश्च । **चिन्तापरः** । इदानीमेव महाप्रस्थानगमने तु स्वप्नस्य प्रारब्धसम्भोगरूपत्वे हरीच्छया रावणनिर्बन्धाभावे च । ऐहिकपारत्रिकोभयहानिः । आगाम्यनिष्टसूचकत्वे रावणनिर्बन्धे च अनन्तरं महाप्रस्थाने

"वृद्धौ च मातापितरौ सती भार्या सुतः शिशुः ।
अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत् ॥" इति **मनुवचनविरोधः** (११-१०-१) ।

ततः किं भविष्यं न ज्ञायते इति चिन्तासक्तः दुःखशान्त्यर्थं क्षणेन देवं दध्यावित्याह— **त्यक्तराज्य इत्यादिना** । त्यक्तराज्यपालनः, अतः **अतिदुःखितः**, ततः **त्यक्तान्नः** । अत एव **त्यक्तभोगः** । ततः **त्यक्तनिद्रः**, **अतिकर्शितः** अतिकृशतां प्राप्तः । 'अभूत्' इति शेषः ।

**गूढकर्तृकव्याख्यानम्**

एकदा दैवयोगेन इत्युक्ते जनकस्य प्रारब्धकर्मशेषभोगावसरे प्राप्ते तस्य अनुजः कुशध्वजः मृतिं गतः । ततः "मृते भर्तरि या नारी समारोहेत् हुताशनम् । अरुधन्ती समचरी स्वर्गलोके महीयते ॥" इति शङ्खोक्तेः । कुशध्वजपत्नी सहगमनविधिना प्राणान् तत्त्याज । ततः "राज्यं, पुत्रान्, अतिवृद्धं मां, अनुत्तमसौन्दर्ययुतां, साक्षात् रमारूपां सीतां च परित्यज्य मृतौ दम्पत्यौ उद्दिश्य जनकः परिदेवते ।

हा वैधव्यादिदोषरहित शुभसौभाग्यलक्षणवति ! इमान् शिशून् त्यक्त्वा तव पतिं परिरभ्य कुत्र यासि ? स्वर्गं वा पतिलोकं वा ? चितारूढे हा भद्रे ! शुभवस्त्राभरणहरिद्राकुङ्कुमसिन्दूरअञ्जनगन्धपुष्पादिना अलङ्कृते ! अद्य मम तु अशीतिवर्षसाहस्रमितं आयुर्गतम् । एतावत् त्वयि मया यदाकदाऽपि किमपि नापराद्धम् । एवं सत्यपि भामिनि कुतो मे कुप्यसि । जन्मनः प्रभृति एतावत् दुःखजनकं न दृष्टवान् । अद्य तव वियोगेन आत्यन्तिकं दुःखं अभूत्" इति अतीव सन्तपन् तयोः शिशूनां स्थाने स्वयं अधिकारी पुरतः कर्तव्य-उत्तरक्रियादिकं चकार । ततः मातृहीनशिशून् आलिङ्ग्य अङ्के निधाय तानुद्दिश्य विललाप । बालकाः शैशवे एव मातापितृहीनाः अभूवन् । मातृवियोगं ईषदपि सोढुं अशक्ताः । अतिकृशत्वं गताः । याभ्यां मम नेत्राभ्यां सुखिनः युष्मान् अपश्यं, ताभ्यां एव मातृहीनकृशशिशून् कथं पश्यामि इति । एतत्सर्वं दृष्ट इव कृत इव दुःस्वप्नोऽभूत् ।

ईदृशस्वप्नदर्शनानन्तरं सुखदुःखकार्यकारणभावविचार-दक्ष-महाज्ञानि-जनकस्य नानाचिन्ताः युगपदेव जाताः । किमिति ? जन्मनः प्रभृति अशीतिवर्षसाहस्रपर्यन्तं सुखी एव आसम् । ईदृशस्य मम वार्धके महाश्रेयस्करसीतालाभः । तल्लाभमहिम्ना अपुत्रस्य मे सन्ततिः अभूत् । एतन्मध्ये सीता यथा यथा ववृधे तथा तथा नक्तञ्चरस्य चलतिः नक्तं वा दिवा वा भवेत् ? उत नैव भवेत् ? इत्येकम् । एतत्सम्बन्धने एकः पूर्वानुभवो जातः । पूर्वं कृतयुगे बृहस्पतिसुत-कुशध्वजस्य वाक्स्वरूपा वेदवती नाम कन्या जाता । सा वेदवती साक्षात् रमास्वरूपा । सा वेदवती हरेः भागः । अतोऽन्यस्मै न देया इति कुशध्वजः निश्चिकाय । इमं कुशध्वजं रात्रौ अकस्मात् आगत्य शम्भुर्नाम दैत्यः जघान । कुशध्वजपत्नी सहगमनविधिना पत्या सह अग्निं विवेश । ततः शम्भुः अन्यसङ्कल्पितः अन्यकामित-कन्याप्रधर्षणं अधर्म इति निववृते । ततः वेदवती विष्णुं पतित्वेन उद्दिश्य तताप । ईं ईदृशीं तपन्तीं पृष्ठतः सहसा आगत्य रावणः केशमात्रे परामृशत् । तदा वेदवती क्रुद्धा हस्तधृतखड्गेन रावणस्य हस्तं छित्वा तं शशाप ।

परपुरुषस्पर्शः अभूत्, प्रायश्चित्तं कर्तव्यं इति मत्वा अग्निं विवेश । तस्याः भस्म समुद्रे प्लावयामास । तद्भस्म तेजःपिण्डोऽभूत् । तत् पिण्डं कुम्भे निक्षिप्य मन्त्रिणः महीसात् चक्रुः । एतदनुभवः जनकस्य श्रुतः आसीत् । तदनुभवस्य अद्य उद्बुद्धत्वात् पुनः विचारयति । तदा तदा रावणः आगच्छन् अस्ति । अस्य आगमनस्य सीतानिरीक्षणं भवितव्यम् । एतन्निरीक्षणेन आगच्छन् रावणः एव वेदवत्या शप्तः रावणः । सा वेदवती मां अनुग्रहीतुं सीतात्वेन अद्य अवतीर्णा । यः शम्भुना हतः गुरुसुत-कुशध्वजः स एव अद्य मदनुजत्वेन जातः । तस्य पत्नी मम अनुजस्य पत्नी । इयं सीताऽपि धर्मतः तत्पुत्री अत्र वर्तते । एते सर्वे मन्मनोरथपूरणाय जाताः । एतत्सर्वं हर्यनुग्रह एव ।

यद्यपि रावणः सुदारुणः । अहं तु जरा जीर्णाङ्गः । सुताश्च शिशवः । पूर्ववत् कुशध्वजादीनां आपत् आहोस्वित् स्यात् न वा स्यात् । रावणेन युद्धं अभविष्यत् तर्हि श्रीहरिः आरक्षिष्यत् । रसो वै सः इति श्रुतेः रसज्ञः हरिः अस्थाने न कुप्यति । अहं हरिप्रसादपात्रः । किञ्च यूना अपि सुधन्वना वृद्धस्यापि मे युद्धे सीतानिमित्तं विजयो जातः । राज्यादिसकलसम्पत्सम्पन्नस्यापि बहुसत्पुत्रशैशव्य-निरीक्षया तत्पुत्रान् अनादृत्य राज्यरागेण अनुजं तत्र अभिषिक्तवान् । एवं क्षणिको मोहः । एतेन तत्त्वं नाम विस्मृतम् । एवं नष्टदृष्टिना मया "सुखमेव सदा मे स्यात् दुःखं माऽभूत् कदाचन" इति सगर्वितवाक्यं निस्सृतम् । अयमेव काल-कर्महरिसङ्कल्पः । अयमेव मे प्रारब्धकर्मशेषभोगावसरः । अत एव दुःस्वप्नो जातः । किञ्च श्रीहरीच्छया प्रकृते रावणबाधा न । पुरतोऽपि तद्बाधा न हीयते । ईदृशादि अनिष्टं किमपि माऽभृन । महाप्रस्थानगमनं कुतो न क्रियेत । भवबन्धो मुच्यतां इति चेत् न । "वृद्धौ च मातापितरौ सती भार्या सुतः शिशुः । अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत्" इति मनूक्तेः आत्यन्तिकधर्महानिः भवत्येव । एवं सति "किं करवाणि ? किं भविष्यति ? न ज्ञायते" इत्येवं चिन्तासक्तः । एतच्चिन्तया अन्नं पानं निद्रा राज्यभोगादिकं त्यक्तवान् । अतिदुःखं जातम् । अतीव कृशोऽभूत् । एवं स्थिते किं अभूत् ?

**मूलम्**

**तस्य दुःखस्य शान्त्यर्थं शतानन्दः पुरोहितः ।**
**सम्प्राप्तो दैवयोगेन वामदेवात्मजो मुनिः ॥ १८ ॥**

**कल्याणकाण्डदीपः**

ततः किमभूत् ? इत्यत आह— **तस्येति** । **तस्य** = राज्ञः । **तस्य दुःखस्य** = दुःस्वप्नज-दुःखस्य । **शान्त्यर्थं** "तस्य दुःखसमासार्थम्" इति पाठे समासो नाम निरासः । **वामदेवात्मज इति** ।

ननु रामायणे "गौतमाद् अहल्यायां जातः" इति गौतमोऽयं शतानन्द इति प्रसिद्धः । अत्रापि गौतम इत्युक्तः । तत्कथं वामदेवात्मजः ? इति चेन्न । "हंसः शुचिषद्गौतमपुत्रो वामदेवः सूर्यो जगति" इति छन्दोऽनुक्रमणिकावशात् यथा शतानन्दस्य शतानन्द इति विशेष नाम, गौतम इति साधारणं गोत्र नाम, तथा शतानन्दपितुरपि गौतम इति वामदेव इति च नामद्वयम् । अतः शतानन्दस्य वामदेवात्मज इति च नामद्वयम् इत्थं इति बोध्यम् ॥

मूलम्

प्राप्तं पुरोहितं [1]दृष्ट्वा राजा पूजामकल्पयत् ।
सम्पूजितो मुनिवरः [2]प्रविष्टो मृगचर्मणि ।
ततः कालोचितां वार्तां कथयामास गौतमः ॥ १९ ॥

१. नत्वा । २. निविष्टो ।

कल्याणकाण्डदीपः

**गौतम इति** । गौतमस्य अपत्यं गौतमः । ऋष्यण् । अहल्यात्मजः । अयमर्थो बालकाण्डे विश्वामित्रोपाख्याने प्रसिद्धः ।

गूढकर्तृकव्याख्यानम्

किमपि कर्तुं अकर्तुं अन्यथाकर्तुं वा अजानन् जनको यदा चिन्ताक्रान्तः तस्य स्वप्नजन्य-दुःखपरिहाराय श्रीहरीच्छया तत्कुलपुरोहितः गौतमगोत्रोत्पन्नः वामदेवमुनिसुतः शतानन्दनामा जनकं प्राप्तः । अत्र पुरोहितो नाम कीदृशः ? पुरः दृष्टादृष्टफलेषु कर्मसु धीयते आरोप्यते अयं इति । पुरः आदावेव हितं मङ्गलं यस्मात् इति वा ? शान्त्यादिकर्ता । पुरोहितलक्षणम्— वेदवेदान्ततत्त्वज्ञः जपहोमपरायणः । आशीर्वादवचोयुक्तः एष राजपुरोहितः । वर्जनीयलक्षणम्— काणं व्यङ्गं अपुत्रं वाऽनभिज्ञमजितेन्द्रियम् । न ह्रस्वं व्याधितं वाऽपि नृपः कुर्यात् पुरोहितम् ॥ एवं पुरोहितशब्द-वाच्यशतानन्ददर्शनमात्रेण प्रत्युत्थाय साष्टाङ्गं प्रणम्य अर्घ्यपाद्यादिसत्कारं चकार । शतानन्दस्तु आदृतः राजदत्तकृष्णाजिने उपविश्य तत्कालोचितलोकवार्तां कथयामास । ततः जनकः स्वदुःखानि कथयति ।

मूलम्

**शतानन्दं प्रति जनककृतस्वशोकनिवृत्त्युपायप्रार्थना**

**जनक उवाच—**

**शतानन्द महाप्राज्ञ का गतिः पुरतो मम ॥ २० ॥**

कल्याणकाण्डदीपः

**का गतिरिति** । **पुरतः** = अग्रे, आगामिनि काले । मम सुजीवनस्य । गम्यतेऽनया गतिः सृतिर्मार्गः । **का** = कीदृशी । ज्ञानमार्गः कर्ममार्गो वा । अथवा, पुरतो गतिः भविष्यम् । का सुखं दुःखं वा । "इति पप्रच्छ" इति शेषः ।

यद्यपि रावणः सुदारुणः । अहं तु जरा जीर्णाङ्गः । सुताश्च शिशवः । पूर्ववत् कुशध्वजादीनां आपत् आहोस्वित् स्यात् न वा स्यात् । रावणेन युद्धं अभविष्यत् तर्हि श्रीहरिः आरक्षिष्यत् । रसो वै सः इति श्रुतेः रसज्ञः हरिः अस्थाने न कुप्यति । अहं हरिप्रसादपात्रः । किञ्च यूना अपि सुधन्वना वृद्धस्यापि मे युद्धे सीतानिमित्तं विजयो जातः । राज्यादिसकलसम्पत्सम्पन्नस्यापि बहुसत्पुत्रशैशव्य-निरीक्षया तत्पुत्रान् अनादृत्य राज्यरागेण अनुजं तत्र अभिषिक्तवान् । एवं क्षणिको मोहः । एतेन तत्त्वं नाम विस्मृतम् । एवं नष्टदृष्टिना मया "सुखमेव सदा मे स्यात् दुःखं माऽभूत् कदाचन" इति सगर्वितवाक्यं निस्सृतम् । अयमेव काल-कर्महरिसङ्कल्पः । अयमेव मे प्रारब्धकर्मशेषभोगावसरः । अत एव दुःस्वप्नो जातः । किञ्च श्रीहरीच्छया प्रकृते रावणबाधा न । पुरतोऽपि तद्बाधा न हीयते । ईदृशादि अनिष्टं किमपि माऽभून । महाप्रस्थानगमनं कुतो न क्रियेत । भवबन्धो मुच्यतां इति चेत् न । "वृद्धौ च मातापितरौ सती भार्या सुतः शिशुः । अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत्" इति मनूक्तेः आत्यन्तिकधर्महानिः भवत्येव । एवं सति "किं करवाणि ? किं भविष्यति ? न ज्ञायते" इत्येवं चिन्तासक्तः । एतच्चिन्तया अन्नं पानं निद्रा राज्यभोगादिकं त्यक्तवान् । अतिदुःखं जातम् । अतीव कृशोऽभूत् । एवं स्थिते किं अभूत् ?

**मूलम्**

**तस्य दुःखस्य शान्त्यर्थं शतानन्दः पुरोहितः ।**
**सम्प्राप्तो दैवयोगेन वामदेवात्मजो मुनिः ॥ १८ ॥**

**कल्याणकाण्डदीपः**

ततः किमभूत् ? इत्यत आह— **तस्येति** । **तस्य** = राज्ञः । **तस्य दुःखस्य** = दुःस्वप्नज-दुःखस्य । **शान्त्यर्थं** "तस्य दुःखसमासार्थम्" इति पाठे समासो नाम निरासः । **वामदेवात्मज इति** ।

ननु रामायणे "गौतमाद् अहल्यायां जातः" इति गौतमोऽयं शतानन्द इति प्रसिद्धः । अत्रापि गौतम इत्युक्तः । तत्कथं वामदेवात्मजः ? इति चेन्न । "हंसः शुचिषद्गौतमपुत्रो वामदेवः सूर्यो जगति" इति छन्दोऽनुक्रमणिकावशात् यथा शतानन्दस्य शतानन्द इति विशेष नाम, गौतम इति साधारणं गोत्र नाम, तथा शतानन्दपितुरपि गौतम इति वामदेव इति च नामद्वयम् । अतः शतानन्दस्य वामदेवात्मज इति च नामद्वयम् इत्थं इति बोध्यम् ॥

**मूलम्**

**प्राप्तं पुरोहितं [१]दृष्ट्वा राजा पूजामकल्पयत् ।**
**सम्पूजितो मुनिवरः [२]प्रविष्टो मृगचर्मणि ।**
**ततः कालोचितां वार्तां कथयामास गौतमः ॥ १९ ॥**

१. नत्वा । २. निविष्टो ।

**कल्याणकाण्डदीपः**

**गौतम इति** । गौतमस्य अपत्यं गौतमः । ऋष्यण् । अहल्यात्मजः । अयमर्थो बालकाण्डे विश्वामित्रोपाख्याने प्रसिद्धः ।

**गूढकर्तृकव्याख्यानम्**

किमपि कर्तुं अकर्तुं अन्यथाकर्तुं वा अजानन् जनको यदा चिन्ताक्रान्तः तस्य स्वप्नजन्य-दुःखपरिहाराय श्रीहरीच्छया तत्कुलपुरोहितः गौतमगोत्रोत्पन्नः वामदेवमुनिसुतः शतानन्दनामा जनकं प्राप्तः । अत्र पुरोहितो नाम कीदृशः ? पुरः दृष्टादृष्टफलेषु कर्मसु धीयते आरोप्यते अयं इति । पुरः आदावेव हितं मङ्गलं यस्मात् इति वा ? शान्त्यादिकर्ता । पुरोहितलक्षणम्— वेदवेदान्ततत्त्वज्ञः जपहोमपरायणः । आशीर्वादवचोयुक्तः एष राजपुरोहितः । वर्जनीयलक्षणम्— काणं व्यङ्गं अपुत्रं वाऽनभिज्ञमजितेन्द्रियम् । न ह्रस्वं व्याधितं वाऽपि नृपः कुर्यात् पुरोहितम् ॥ एवं पुरोहितशब्द-वाच्यशतानन्ददर्शनमात्रेण प्रत्युत्थाय साष्टाङ्गं प्रणम्य अर्घ्यपाद्यादिसत्कारं चकार । शतानन्दस्तु आदृतः राजदत्तकृष्णाजिने उपविश्य तत्कालोचितलोकवार्तां कथयामास । ततः जनकः स्वदुःखानि कथयति ।

**मूलम्**

**शतानन्दं प्रति जनककृतस्वशोकनिवृत्त्युपायप्रार्थना**

**जनक उवाच—**

**शतानन्द महाप्राज्ञ का गतिः पुरतो मम ॥ २० ॥**

**कल्याणकाण्डदीपः**

**का गतिरिति** । पुरतः = अग्रे, आगामिनि काले । मम सुजीवनस्य । गम्यतेऽनया गतिः सृतिर्मार्गः । का = कीदृशी । ज्ञानमार्गः कर्ममार्गो वा । अथवा, पुरतो गतिः भविष्यम् । का सुखं दुःखं वा । "इति पप्रच्छ" इति शेषः ।

**मूलम्**

**वृद्धत्वादात्मनश्चैव पुत्राणां चैव शैशवात्।**
**कन्यकानां च रत्नत्वात् हतबन्धोर्महामुने ॥ २१ ॥**

**कल्याणकाण्डदीपः**

भो राजन् ! षड्जीवलोकात् सुखिनः तवेदानीं सुजीवने किमातङ्ककारणं इत्यत आह— **वृद्धत्वात्** इत्यादिना **कथितम्** इत्यन्तेन ।

तर्हि त्वमेवासहायशूरो देहीत्यत आह— **वृद्धत्वादात्मन इति** । वृद्धं शूरा यूनो अतिथित्वेनान्नत्वेन न पुरस्कुर्वन्तीति भावः । "युद्धमखे त्वतिथिर्न हविः" इति भावः । एवमपि लोके वृद्धानां पुत्रा यूनः सम्भवन्तीति ते दद्युरिति अत आह— **पुत्राणां चैव शैशवादिति** । शिशोर्भावः शैशवम् । इगन्ताच्चेति भावेऽण् । शिशवोऽपि युद्धमखेनातिथिरिति भावः । स्यादेवं कलहकारणाभावान्नेयं शङ्का कर्तव्येत्यत आह— **कन्यकानां च रत्नत्वादिति** । तदुक्तं रामायणे "रत्नं हि भगवानेतद्रत्नहारी च पार्थिवः" इति । **रत्नं** = श्रेष्ठं वस्तु । पृथिव्याः ईश्वरः पार्थिवः । तर्हि कन्यकानां रत्नत्वेऽपि वरेभ्यः प्रदाने निरातङ्कं भवतीत्यत आह— **हतबन्धोरिति** । हे महामुने ! अतीतानागतज्ञानिन् ! हताः मनोहताः विमुखाः बन्धवो जामातरो यस्य स तथा । तस्य मे तत्कथं घटत इति शेषः । कन्यानां वीर्यशुल्कत्वाद्वराणां हीनवीर्यत्वादिति भावः । तर्ह्युद्दीप्तवीर्येभ्यो देहीत्यत आह— **हतबन्धोरिति** । **बन्धुः** = जामाता । अनेन तत्सम्पादनादृष्टं लक्ष्यते । हतं प्रारब्धकर्मणा प्रतिबद्धं बन्धुः तत्सम्पादनादृष्टं यस्य स तथा । तत्परिपाके उपाय इति भावः । एतत्सर्वं रामायणादौ स्पष्टम् । अत एव "कन्यानां च वराभावात्" इति क्वचित्पाठः । "मनो हतः प्रतिहतः प्रतिबद्धो हतश्च सः" इत्यमरः । तर्हि कुशकेतोर्युद्धदानं घटत इत्यत आह— **हतबन्धोरिति** । "आशंसायां भूतवच्च" इति भूतवद्भावाद्वा आदिकर्मणि वा क्तः । हतः मृत्योर्हन्तुर्मा शंसितः उपक्रान्तो वा बन्धुरनुजो यस्य स तथा । "कल्पेन कल्पौ व्याख्यायत" इति न्यायात् पूर्वकल्पे तथा जातत्वात्, स्वप्नसूचनाच्च । एतादृशस्य कथं घटत इति भावः ॥

**मूलम्**

**बहवः शत्रवः सन्ति रावणेन्द्रजिदादयः ।**
**तेभ्यो युद्धं कथं दास्ये ह्यसहायोऽतिजीर्णवान् ॥ २२ ॥**

**कल्याणकाण्डदीपः**

**रावणः** = लङ्कापतिः । स च इन्द्रजित् मेघनादश्च तावादी मुख्यौ येषां ते तथा । **बहवः** कोटिशः । **शत्रवः** परिपन्थिनः सन्ति । **तेभ्यः** युद्धातिथिभ्यः अहं क्षत्रियो **युद्धं** युद्धभिक्षां कथं दास्यामि ? सम्प्रदाने चतुर्थी । त्वं क्षत्रियः शूरो न किम् ? इत्यतः आह— **जीर्णवानिति** । ''मौलं भृतं सुहृच्छ्रेणी द्विषदाटविकम्बलम् । इत्युक्तषड्बलान्नानि आयुधमुखेभ्यो अतिथिभ्यो दत्तानि तैः भुक्तानि जीर्णानि स्वर्गतानि अस्य मम सन्तीति जीर्णवान् । एतादृशोऽहं कथं युद्धं दास्य इत्यन्वयः । देयाभावाद् दानासम्भवादिति भावः ।

*तदुक्तं वामने—*

''राजानो विषयासक्ताः कामक्रोधसमन्विताः ।
कन्यारत्ननिमित्तं च आगमिष्यन्ति कोटिशः ॥
तेभ्यो युद्धं कथं दास्ये एकोऽहं ब्रह्मवित्तम ॥'' इति । (वा.पु. १.११)

*बालरामायणे षट्षष्टितमे च—*

''ततः संवत्सरे पूर्णे क्षयं यातानि सर्वशः ।
साधनानि मुनिश्रेष्ठ ततोऽहं भृशदुःखितः ॥'' इति । (बा.रा. १.६६.३०)

यद्वा जीर्णवान् इत्यस्य जीर्णान्यङ्गानि करणानि अस्य सन्तीति जीर्णवान् । जराजीर्णाङ्गेन्द्रिय इत्यर्थः । वृद्धत्वादित्यस्य पुत्रशैशवाद्यधिकविधानार्थं प्रतिसम्बन्धितयाऽनुवादान्न पौनरुक्त्यम् । एवं तर्हि सन्धिषष्ठेन ''यदा परमासहायानुगमनीयतमो भवेत् । तदा तु संश्रयेत्क्षिप्रं धार्मिकं बलिनं नृपम्'' इत्युक्ताश्रयेण सहायसम्पदा देहीत्यत आह— **असहाय इति** । कन्यानिमित्तं बहवो राजानो बद्धवैराः केचन रावणभयादसहाया इति भावः ॥

**गूढकर्तृकव्याख्यानम्**

शतानन्द महाप्राज्ञ ! इति सम्बोधितवान् । ''स्मृतिर्व्यतीतविषया मतिरागामिगोचरा । बुद्धिस्तात्कालिकी ज्ञेया प्रज्ञा त्रैकालिकी मता'' इत्युक्तेः वेदवेदाङ्गादितत्त्वज्ञ, भूतभव्यभावि-त्रैकालिकज्ञानिन् शतानन्द ! एतावत्सुखितस्य मम का गतिः ? बन्धविमुक्ती भवितुं कोऽस्ति मार्गः । ज्ञानमार्गः कर्ममार्गो वा ? किं मे साधनम् ? वक्तव्यम् । तर्हि ''अर्थागमो नित्यमरोगिता च सती च भार्या प्रियवादिनी च । वश्यश्च पुत्रोऽर्थकरी च विद्या षड्जीवलोकस्य सुखानि राजन्'' इत्युक्त-

**मूलम्**

**वृद्धत्वादात्मनश्चैव पुत्राणां चैव शैशवात् ।**
**कन्यकानां च रत्नत्वात् हतबन्धोर्महामुने ॥ २१ ॥**

**कल्याणकाण्डदीपः**

भो राजन् ! षड्जीवलोकात् सुखिनः तवेदानीं सुजीवने किमातङ्ककारणं इत्यत आह— **वृद्धत्वात्** इत्यादिना **कथितम्** इत्यन्तेन ।

तर्हि त्वमेवासहायशूरो देहीत्यत आह— **वृद्धत्वादात्मन इति** । वृद्धं शूरा यूनो अतिथित्वेनान्नत्वेन न पुरस्कुर्वन्तीति भावः । "युद्धमखे त्वतिथिर्न हविः" इति भावः । एवमपि लोके वृद्धानां पुत्रा यूनः सम्भवन्तीति ते दद्युरिति अत आह— **पुत्राणां चैव शैशवादिति** । शिशोर्भावः शैशवम् । इगन्ताच्चेति भावेऽण् । शिशवोऽपि युद्धमखेनातिथिरिति भावः । स्यादेवं कलहकारणाभावान्नेयं शङ्का कर्तव्येत्यत आह— **कन्यकानां च रत्नत्वादिति** । तदुक्तं रामायणे "रत्नं हि भगवानेतद्रत्नहारी च पार्थिवः" इति । **रत्नं** = श्रेष्ठं वस्तु । पृथिव्याः ईश्वरः पार्थिवः । तर्हि कन्यकानां रत्नत्वेऽपि वरेभ्यः प्रदाने निरातङ्कं भवतीत्यत आह— **हतबन्धोरिति** । हे महामुने ! अतीतानागतज्ञानिन् ! हताः मनोहताः विमुखाः बन्धवो जामातरो यस्य स तथा । तस्य मे तत्कथं घटत इति शेषः । कन्यानां वीर्यशुल्कत्वाद्वराणां हीनवीर्यत्वादिति भावः । तर्ह्युद्दीप्तवीर्येभ्यो देहीत्यत आह— **हतबन्धोरिति** । **बन्धुः** = जामाता । अनेन तत्सम्पादनादृष्टं लक्ष्यते । हतं प्रारब्धकर्मणा प्रतिबद्धं बन्धुः तत्सम्पादनादृष्टं यस्य स तथा । तत्परिपाके उपाय इति भावः । एतत्सर्वं रामायणादौ स्पष्टम् । अत एव "कन्यानां च वराभावात्" इति क्वचित्पाठः । "मनो हतः प्रतिहतः प्रतिबद्धो हतश्च सः" इत्यमरः । तर्हि कुशकेतोर्युद्धदानं घटत इत्यत आह— **हतबन्धोरिति** । "आशंसायां भूतवच्च" इति भूतवद्भावाद्वा आदिकर्मणि वा क्तः । हतः मृत्योर्हन्तुर्मा शंसितः उपक्रान्तो वा बन्धुरनुजो यस्य स तथा । "कल्पेन कल्पौ व्याख्यायत" इति न्यायात् पूर्वकल्पे तथा जातत्वात्, स्वप्नसूचनाच्च । एतादृशस्य कथं घटत इति भावः ॥

**मूलम्**

**बहवः शत्रवः सन्ति रावणेन्द्रजिदादयः ।**
**तेभ्यो युद्धं कथं दास्ये ह्यसहायोऽतिजीर्णवान् ॥ २२ ॥**

**कल्याणकाण्डदीपः**

**रावणः** = लङ्कापतिः । स च इन्द्रजित् मेघनादश्च तावादी मुख्यौ येषां ते तथा । **बहवः** कोटिशः । **शत्रवः** परिपन्थिनः सन्ति । **तेभ्यः** युद्धातिथिभ्यः अहं क्षत्रियो **युद्धं** युद्धभिक्षां कथं दास्यामि ? सम्प्रदाने चतुर्थी । त्वं क्षत्रियः शूरो न किम् ? इत्यतः आह— **जीर्णवानिति** । "मौलं भृतं सुहृच्छ्रेणी द्विषदाटविकम्बलम् । इत्युक्तषड्बलान्नानि आयुधमुखेभ्यो अतिथिभ्यो दत्तानि तैः भुक्तानि जीर्णानि स्वर्गतानि अस्य मम सन्तीति जीर्णवान् । एतादृशोऽहं कथं युद्धं दास्य इत्यन्वयः । देयाभावाद् दानासम्भवादिति भावः ।

*तदुक्तं वामने—*

"राजानो विषयासक्ताः कामक्रोधसमन्विताः ।
कन्यारत्ननिमित्तं च आगमिष्यन्ति कोटिशः ॥
तेभ्यो युद्धं कथं दास्ये एकोऽहं ब्रह्मवित्तम ॥" इति । (वा.पु. १.११)

*बालरामायणे षट्षष्टितमे च—*

"ततः संवत्सरे पूर्णे क्षयं यातानि सर्वशः ।
साधनानि मुनिश्रेष्ठ ततोऽहं भृशदुःखितः ॥" इति । (बा.रा. १.६६.३०)

यद्वा जीर्णवान् इत्यस्य जीर्णान्यङ्गानि करणानि अस्य सन्तीति जीर्णवान् । जराजीर्णाङ्गेन्द्रिय इत्यर्थः । वृद्धत्वादित्यस्य पुत्रशैशवाद्यधिकविधानार्थं प्रतिसम्बन्धितयाऽनुवादान्न पौनरुक्त्यम् । एवं तर्हि सन्धिषष्ठेन "यदा परमासहायानुगमनीयतमो भवेत् । तदा तु संश्रयेत्क्षिप्रं धार्मिकं बलिनं नृपम्" इत्युक्ताश्रयेण सहायसम्पदा देहीत्यत आह— **असहाय इति** । कन्यानिमित्तं बहवो राजानो बद्धवैराः केचन रावणभयादसहाया इति भावः ॥

**गूढकर्तृकव्याख्यानम्**

शतानन्द महाप्राज्ञ ! इति सम्बोधितवान् । "स्मृतिर्व्यतीतविषया मतिरागामिगोचरा । बुद्धिस्तात्कालिकी ज्ञेया प्रज्ञा त्रैकालिकी मता" इत्युक्तेः वेदवेदाङ्गादितत्त्वज्ञ, भूतभव्यभावि-त्रैकालिकज्ञानिन् शतानन्द ! एतावत्सुखितस्य मम का गतिः ? बन्धविमुक्ती भवितुं कोऽस्ति मार्गः । ज्ञानमार्गः कर्ममार्गो वा ? किं मे साधनम् ? वक्तव्यम् । तर्हि "अर्थागमो नित्यमरोगिता च सती च भार्या प्रियवादिनी च । वश्यश्च पुत्रोऽर्थकरी च विद्या षड्जीवलोकस्य सुखानि राजन्" इत्युक्त-

षड्विधसुखसम्पन्नस्यापि त्वादृशस्य दुःखजनकं किमभूत् ? इति चेत् वच्मि । रावणः इन्द्रजित् इत्यादि राक्षसाः परमवैरिणः मे कोटिशः सन्ति । ते सर्वे युद्धं याचमानाः अतिथयः । तेभ्योऽहं युद्धभिक्षां कथं दास्ये ? त्वं क्षत्रियो न किम् ? युद्धं तव धर्मो न किम् ? मम सर्वाङ्गेन्द्रियाणि अतिशिथिलानि । वयसा अतिवृद्धः । ईदृशः कथं युध्ये ? तव स्थाने पुत्राः सन्ति खलु ? ते कुतः युद्धं न कुर्युः । ते तावत् शिशवः ? अतः किं कर्तव्यम् ? यद्यपि त्वं बलरहितः तथापि न्यायमार्गानुसारी धार्मिकः । कुतः त्वं अन्यनृपबलसाहाय्येन युद्धभिक्षां न दद्याः ?

तदपि अशक्यम् । कुतः ? मम कन्यानिमित्तं बहवो नृपाः मयि बद्धवैराः सन्ति । परन्तु ते रावणभयात् मे साहाय्यं न कुर्वन्ति । तर्हि वृद्धेन त्वया भूयताम् । किं तेन ? यथाशक्ति देहि । अहं तु सिद्धः । अपि तु युवानः शूराः मां युद्धे अतिथित्वेन न पुरस्कुर्वन्ति । तर्हि कलहं कारणं न । स्वस्थो भव । तथा न । मम कन्यानि रत्नानि । तानि रत्नानि रत्नहारिवरेभ्यः दत्तानि चेत् निरातङ्कः भवति । कुतः तथा न क्रियताम् ? समागतजामातारः हतमनस्काः विमुखाः भवन्ति । एवं सति अनुरूपवराः कथं घटन्ते ? कन्यास्तु वीर्ययुक्ताः । वरास्तु हीनवीर्याः । तर्हि उद्दीप्तवीर्येभ्यः वरेभ्यः तव कन्यारत्नानि देहि । तादृशोद्दीप्तवीर्यजामातृसम्पादनादृष्टमेव न । तर्हि तव कुशकेतोः युद्धदानं घटते । अतः स एव युद्धं दद्यात् । स्वप्नदर्शनानुसारेण तस्य मृत्युः आसन्नः । अद्य वा क्षणान्ते वा दिनान्ते वा । को नाम वेत्ति ? अतः ईदृशस्य युद्धं कथं घटते ?

**मूलम्**

**दिवानक्तं समायाति रावणः [1]केन कारणात् ।**
**न जाने मुनिवर्याहं प्रज्ञाचक्षुर्न विद्यते ॥ २३ ॥**

१. केन हेतुना ।

**कल्याणकाण्डदीपः**

सोऽयमातङ्कः तव रावणपर्यवसायी । स इदानीं किमायात इत्यत आह— **दिवानक्तमिति** । उक्तार्थं नक्तं दिवा समायाति रावण इत्याह जनकः स्यादेवमन्यकार्यविषयकः काममायातु किमिदानीं सीतायै त्वां निरुणद्धीत्यत आह— **केनेत्यादिना** । निमित्तपर्यायप्रयोगे सर्वासां प्रायोदर्शनमिति 'कस्मात्' इति भाव्ये 'केन' इति व्यत्ययः कुत्सने । "व्यत्ययोऽतिशयकुत्सनभेदेषु" इति सूत्रात् क अत्र कुत्सितकार्यहेतोरायातीति नाहं जाने । इह अस्मिन्विषये मम **प्रज्ञाचक्षुर्न विद्यते** किञ्चिन्न भासत इत्यर्थः ॥

मूलम्

**निमित्तमेकं कथितं ...........................**

**कल्याणकाण्डदीपः**

उक्तस्यैवमुपर्युपरि वक्तव्येति स्ववृत्तान्ताकर्णने मुनेरनादरः स्यादित्युपसंहरति **निमित्तमेकमिति**। सुजीवनप्रतिकूलागाम्यातङ्ककारणमेकमुक्तमित्यर्थः । यद्यप्ययमातङ्कस्त्रिलोकीसाधारणस्त्रिलोकधर्म-कण्टकरावणादिमूलत्वात् । तथापि स्वस्यापि तन्मध्यगतत्वाद्धर्मस्यैव सम्पत्तिः केनोपायेन स्यादिति ह्यत्र तात्पर्यम् ।

मूलम्

**............................द्वितीयं प्रवदामि ते**
**सीतायाश्चातिरूपायाः सरूपः पुरुषो यथा ॥ २४ ॥**

**लभ्यते वद ...................................**

**कल्याणकाण्डदीपः**

एवं त्रिलोकीकण्टकरावणादिगर्वमुल्बणक्रौर्यादिमूलकत्रिलोकीसाधारणधर्मस्थैर्यनिश्चयनिवृत्त्या-ऽऽतङ्ककारणमुक्त्वा स्वेष्टानवाप्तिमूलकध्यानलक्षणासाधारणचिन्ताकारणोक्तिपूर्वकं ज्ञानरूपेष्टसाधनं पृच्छति **द्वितीयम्** इत्यादिना **वद** इत्यन्तेन । यतः अकारणे नायान्ति अन्वेषणे न लभ्यन्ते यदृच्छा-गतयो मुनयोऽत एकं प्रश्नं समाधाय गच्छेयुरिति भिया प्रकारमनुक्त्वा पूर्वं प्रकारप्रतिज्ञा कृता । "न जाने मुनिवर्योऽहं प्रज्ञाचक्षुर्न विद्यत" इत्येतदत्रापि सम्बध्यते ॥ भो मुनिवर्य ! परावरज्ञ ! श्रेष्ठ ! द्वितीयं निमित्तम्— ज्ञानरूपेष्टानवाप्तिमूलचिन्ताकारणं प्रवदामि पृच्छामि । कीदृशी चिन्ता ? इत्यत आह— **सीताया इति**। **अतिरूपायाः** = अनुपमसुन्दरायाः **सरूपः** = अनुरूपः **पुरुषः** = वरः **यथा लभ्यते** = यथा प्राप्तो भवति इत्येतत् "अहं न जाने, इह प्रज्ञाचक्षुर्मम न विद्यते, अस्मिन्विषये किञ्चिदपि कारणं न दृश्यते ।"

मूलम्

**................. विप्रेन्द्र तृतीयं प्रवदामि ते ।**
**दीर्घायुष्याश्च मे पुत्राः पुत्र्यश्चापि सभर्तृकाः ॥ २५ ॥**

षड्विधसुखसम्पन्नस्यापि त्वादृशस्य दुःखजनकं किमभूत् ? इति चेत् वच्मि। रावणः इन्द्रजित् इत्यादि राक्षसाः परमवैरिणः मे कोटिशः सन्ति। ते सर्वे युद्धं याचमानाः अतिथयः। तेभ्योऽहं युद्धभिक्षां कथं दास्ये ? त्वं क्षत्रियो न किम् ? युद्धं तव धर्मो न किम् ? मम सर्वाङ्गेन्द्रियाणि अतिशिथिलानि। वयसा अतिवृद्धः। ईदृशः कथं युध्ये ? तव स्थाने पुत्राः सन्ति खलु ? ते कुतः युद्धं न कुर्युः। ते तावत् शिशवः ? अतः किं कर्तव्यम् ? यद्यपि त्वं बलरहितः तथापि न्यायमार्गानुसारी धार्मिकः। कुतः त्वं अन्यनृपबलसाहाय्येन युद्धभिक्षां न दद्याः ?

तदपि अशक्यम्। कुतः ? मम कन्यानिमित्तं बहवो नृपाः मयि बद्धवैराः सन्ति। परन्तु ते रावणभयात् मे साहाय्यं न कुर्वन्ति। तर्हि वृद्धेन त्वया भूयताम्। किं तेन ? यथाशक्ति देहि। अहं तु सिद्धः। अपि तु युवानः शूराः मां युद्धे अतिथित्वेन न पुरस्कुर्वन्ति। तर्हि कलहं कारणं न। स्वस्थो भव। तथा न। मम कन्यानि रत्नानि। तानि रत्नानि रत्नहारिवरेभ्यः दत्तानि चेत् निरातङ्कः भवति। कुतः तथा न क्रियताम् ? समागतजामातारः हतमनस्काः विमुखाः भवन्ति। एवं सति अनुरूपवराः कथं घटन्ते ? कन्यास्तु वीर्ययुक्ताः। वरास्तु हीनवीर्याः। तर्हि उद्दीप्तवीर्येभ्यः वरेभ्यः तव कन्यारत्नानि देहि। तादृशोद्दीप्तवीर्यजामातृसम्पादनादृष्टमेव न। तर्हि तव कुशकेतोः युद्धदानं घटते। अतः स एव युद्धं दद्यात्। स्वप्नदर्शनानुसारेण तस्य मृत्युः आसन्नः। अद्य वा क्षणान्ते वा दिनान्ते वा। को नाम वेत्ति ? अतः ईदृशस्य युद्धं कथं घटते ?

**मूलम्**

**दिवानक्तं समायाति रावणः [१]केन कारणात्।**
**न जाने मुनिवर्याहं प्रज्ञाचक्षुर्न विद्यते ॥ २३ ॥**

१. केन हेतुना।

**कल्याणकाण्डदीपः**

सोऽयमातङ्कः तव रावणपर्यवसायी। स इदानीं किमायात इत्यत आह— **दिवानक्तमिति**। उक्तार्थे नक्तं दिवा समायाति रावण इत्याह जनकः स्यादेवमन्यकार्यविषयकः काममायातु किमिदानीं सीतायै त्वां निरुणद्धीत्यत आह— **केनेत्यादिना**। निमित्तपर्यायप्रयोगे सर्वासां प्रायोदर्शनमिति 'कस्मात्' इति भाव्ये 'केन' इति व्यत्ययः कुत्सने। "व्यत्ययोऽतिशयकुत्सनभेदेषु" इति सूत्रात् क अत्र कुत्सितकार्यहेतोरायातीति नाहं जाने। इह अस्मिन्विषये मम **प्रज्ञाचक्षुर्न विद्यते** किञ्चिन्न भासत इत्यर्थः॥

**मूलम्**

**निमित्तमेकं कथितं ............................**

**कल्याणकाण्डदीपः**

उक्तस्यैवमुपर्युपरि वक्तव्येति स्ववृत्तान्ताकर्णने मुनेरनादरः स्यादित्युपसंहरति **निमित्तमेकमिति**। सुजीवनप्रतिकूलागाम्यातङ्ककारणमेकमुक्तमित्यर्थः । यद्यप्ययमातङ्कस्त्रिलोकीसाधारणस्त्रिलोकधर्म-कण्टकरावणादिमूलत्वात् । तथापि स्वस्यापि तन्मध्यगतत्वाद्धर्मस्यैव सम्पत्तिः केनोपायेन स्यादिति ह्यत्र तात्पर्यम् ।

**मूलम्**

**..............................द्वितीयं प्रवदामि ते**
**सीतायाश्चातिरूपायाः सरूपः पुरुषो यथा ॥ २४ ॥**
**लभ्यते वद ....................................**

**कल्याणकाण्डदीपः**

एवं त्रिलोकीकण्टकरावणादिगर्वमुल्बणक्रौर्यादिमूलकत्रिलोकीसाधारणधर्मस्थैर्यनिश्चयनिवृत्त्या-ऽऽतङ्ककारणमुक्त्वा ' स्वेष्टानवाप्तिमूलकध्यानलक्षणासाधारणचिन्ताकारणोक्तिपूर्वकं ज्ञानरूपेष्टसाधनं पृच्छति **द्वितीयम्** इत्यादिना **वद** इत्यन्तेन । यतः अकारणे नायान्ति अन्वेषणे न लभ्यन्ते यदृच्छा-गतयो मुनयोऽत एकं प्रश्नं समाधाय गच्छेयुरिति भिया प्रकारमनुक्त्वा पूर्वं प्रकारिप्रतिज्ञा कृता । ''न जाने मुनिवर्योऽहं प्रज्ञाचक्षुर्न विद्यत'' इत्येतदत्रापि सम्बध्यते ॥ भो मुनिवर्य ! परावरज्ञ ! श्रेष्ठ ! द्वितीयं निमित्तम्— ज्ञानरूपेष्टानवाप्तिमूलचिन्ताकारणं प्रवदामि पृच्छामि । कीदृशी चिन्ता ? इत्यत आह— **सीताया इति** । **अतिरूपायाः** = अनुपमसुन्दरायाः **सरूपः** = अनुरूपः **पुरुषः** = वरः **यथा लभ्यते** = यथा प्राप्तो भवति इत्येतत् ''अहं न जाने, इह प्रज्ञाचक्षुर्मम न विद्यते, अस्मिन्विषये किञ्चिदपि कारणं न दृश्यते ।''

**मूलम्**

**................. विप्रेन्द्र तृतीयं प्रवदामि ते ।**
**दीर्घायुष्याश्च मे पुत्राः पुत्र्यश्चापि सभर्तृकाः ॥ २५ ॥**

**¹एकदेशाधिपत्यस्य सुषास्ताश्च भवन्त्विति ।**
**जामातरश्च चत्वार एकराजसुतास्तथा　　　॥ २६ ॥**

१. एकदेशाधिपस्यैव ।

**कल्याणकाण्डदीपः**

"सीतानुरूपवरलाभनिश्चयरूपेष्टसाधनं वद" इति ज्ञानसाधनं पृष्ट्वा वैराग्यपरिपाकरूपेष्टा-नवाप्तिमूलकचिन्तां कारणोक्तिपूर्वकं तदिष्टसाधनं पृच्छति **विप्रेन्द्र** इत्यादिना **एकराजसुतास्तथा** इत्यन्तेन । **मे पुत्राः** सप्त । भर्तृभिः सह वर्तन्त इति **सभर्तृकाः** । सहेति समासे वोपसर्जनस्येति सभावः । नद्यृतश्चेति कप् । सभर्तृकाः **पुत्र्यश्च** चतस्रः । दीर्घमायुष्यं येषां ते **दीर्घायुष्याः** । दीर्घमायुष्यं यासां ताः ते च ताश्च तथा भवन्तु । ताश्च तादृशसभर्तृकपुत्र्यश्च । **एकदेशाधिपत्यस्य** = एकदेशे आधिपत्यं यस्य स तथा । अथवा देशे आधिपत्यं यस्य स तथा । एकश्चासौ देशाधिपत्यश्च इति । **तस्य** = राज्ञः **सुषाः** = जन्यो भवन्तु । आशिषि लोट् ॥

भो राजन् ! किमहोऽशोकतोककामस्त्वमतादृशीनां पुत्रीणां अतिकष्टं सापत्न्यमाशंसत इत्यत आह **जामातरश्च चत्वार एकराजसुतास्तथेति । तथा जामातरश्च** = दुहितृपतयश्च । एकराजस्य सुता भवन्तु, न त्वेकस्य पत्न्यः इति । एवमाशंसायां किन्निमित्तम् ? इति चेत्, शृणु । सीता चातिरूपा चिन्ताशान्तयेऽपरिमितशक्तये देया । अन्याश्चापरिमितबलाद्दूरे दूरे सद्भ्योऽपरिमितबलस्नेहानुबन्ध-रहितेभ्यो वरेभ्यः प्रदत्ताश्चत् तासामपि रत्नत्वात् तानन्ये बलवता भीषयन्ति । तांश्चान्ये बलवत्तराः तानपि बलवत्तमा इति न चिन्ताशान्तिरित्येवमाशंसेति । सहरतानामपि श्लेषादिप्रयोजनाय चेत्यपि बोध्यम् । भिन्नमातृकाश्चेत्यपि ध्येयम् । विशेषविधेः शेषनिषेधाभ्यनुज्ञाफलकत्वादिति न्यायेन न्याय्यत्वाच्च इयत्येवाशोकतोकसुखैकविषयिण्येव लालसा ममास्ति । एतादृशसुतसुखेतरविषयसुखस्य सम्भोगातिरेकेण तदनुरागगन्धाभावात् । भो विप्रेन्द्र ! वि अतिशयेन प्राति मनोरथं पूरयति इति विप्रः । 'प्रा पूरणे' । 'आतश्चोपसर्गे' इति कः । तेषां श्रेष्ठ । यद्वा वि विशिष्टेषु प्र प्रकृष्ट विप्र । तेषां श्रेष्ठ । ते तुभ्यं तृतीयं निमित्तं वैराग्यपरिपाकनिमित्तं प्रवदामि पृच्छामि तत्कारणं वदेत्यर्थः ।

अयमाशयः— आजन्माशीतिवर्षसाहस्रपर्यन्तं साधुविषयभोगात् नित्यानित्यसारासारविवेक-ज्ञानाद्वार्धक्यादात्यन्तिकचिन्तादिभिश्च विषयतृष्णारहितस्यैवं सतो मम सन्ततिरभूत् । साऽपि लोको-त्तरा । अत इदानीं निवृत्ततृष्णस्यापि अनिषिद्धपुत्रसुखानुरागो जातः । न मया पूर्वमनुभूतं पुत्रसुखम् ।

एवं सति इदानीं ममापत्य एवेच्छा । ममापत्त्या निरुद्धः । अहमपि मा पुत्ररोदं रुदम् । अशोकतोक-सुखमात्रमनुभवेयमिति एतदिच्छाया अपि विषयसिद्धौ विषयानुरागजातीयसर्वस्वनिवृत्तौ वैराग्यस्याति-शयपरिपाकः स्यादिति तत्कारणं वद इति ।

"यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः ।
अथ मर्त्योऽमृतो भवति अत्र ब्रह्म समश्नुते ।
यदा सर्वे प्रभिद्यन्ते हृदयस्येह ग्रन्थयः ।
अथ मर्त्यो मृतो भवति एतावदनुशासनम् ॥" इति ।

(काठकोपनिषत् ९-५-१५,१६)

**मूलम्**

**[1]बहुधान्यं च मे राज्यं स्वयमेव पुरोहित ।**
**केनोपायेन मे भूयादिति तत्कारणं वद ॥ २७ ॥**

१. भ्रातृहीनं ।, वर्धितं चैव ।

**कल्याणकाण्डदीपः**

अथ प्रजाहितेच्छया परदुःखप्रहाणेच्छारूपपरमदयालुर्जनकः प्रजानां बह्वन्नप्राप्तिसाधनविश्वम्भर-प्रसादोपायं पृच्छति **बहुधान्यम्** इत्यादिना **वद** इत्यन्तेन । **भो पुरोहित ! स्वयमेव** व्यवसायाद्यायासं विना । लीलाकृष्येति वा । **मे राज्यं** राष्ट्रम् । **बहुधान्यं** बह्वन्नम् । **केनोपायेन** साधनेन **भूयादिति** इच्छा **मे** अस्ति । **तत्कारणं** लक्ष्मीसम्पत्कारणं चतुर्थं पृच्छामि, तद्वदेत्यर्थः । इत्थं धर्मज्ञानवैराग्य-सम्पत्साधनानि पृष्टानीति ध्येयम् ॥

**गूढकर्तृकव्याख्यानम्**

पुनश्च रावणो नाम कस्य हेतोः आयाति ? दिवा नक्तं वा आयाति ? अत्र किमपि न भासते ? हे गुरुवर ! **इदमेकं प्रतिकूलम् । द्वितीयं वच्मि** । मम सीता अनुपमसुन्दरी । ईदृश्याः अनुरूप-वरलाभोपायं वद । मम पुत्राः सप्त । पुत्र्यश्च चतस्रः । एतत्सर्वे दीर्घायुषः भूयासुः । पुत्र्यः चतस्रः अपि एकराजस्य स्नुषाः भवन्तु । मम चत्वारो जामातारः एकराजस्यैव सुताः भवन्तु । कुतः एवम् ? सीता अतिरूपवती । अतः मम चिन्ताशान्तये अपरिमितशक्तियुताय एव वराय देया । इतरपुत्र्यः तद्वत्

अपरिमितबलस्नेहानुबन्धरहितेभ्यः दूरे दूरे सद्भ्यः वरेभ्यः प्रदत्ताश्चेत्, उर्मिला-माण्डवी-श्रुतकीर्तयः कन्यारत्नानि, न तु सामान्याः । तान् अन्ये बलवन्तः नृपाः भीषयन्ति । तान् तेभ्यो बलवत्तराः, तान् बलवत्तमाः भीषयन्ति । एतेन मम चिन्ता न शाम्यति । अत एव "एकत्र स्थित्वा सङ्क्रीडितवतीनां विश्लेषादिकं मा भूत्, एतदर्थं एताः सर्वाः पुत्र्यः एकदेशाधिपस्यैव राज्ञः सुतानां सहोदराणां वैमात्रेयाणां वा एकैकस्य एकैका पत्नी भवितव्या । न तु चतस्रोऽपि एकराजपुत्रस्य पत्न्यः" इति मे आशयः ।

"भो विप्रवर्य ! मन्मनोरथपरिपूरक-जन्मप्रभृति-अशीतिवर्षसाहस्रपर्यन्तं साधुविषयान् अन्वभवम् । इदं नित्यं इदं अनित्यम्, अयं सारः अयं असारः, इति विवेकज्ञानात् मम वार्धक्यात् आत्यन्तिकचिन्तादिभिश्च विषयेषु तृष्णा नास्ति । एवं सतो मम सन्ततिः अभूत् । साऽपि सन्ततिः लोकोत्तरा । अतः अद्य विषयाशारहितस्य मे अनिषिद्धपुत्रसुखे अनुरागो जातः । पूर्वं इदं सुखं मया नानुभूतम् । इदानीं मम इयत्येव इच्छा । मा मम अपत्यानि रुद्युः । अहमपि मा पुत्ररोदं रुदम् । तोकानां शोकराहित्यपूर्वकं यत् सुखं तादृशसुखमात्रं अनुभवेयम् । किञ्च मम राष्ट्रं अल्पायासपूर्वकव्यवसायेन बहुधान्यसमृद्धिमत् भवितव्यम् । एतत् कथं भवेत् ? अस्य उपायं वद ।" इत्येवं विवेकी जनकः धर्मज्ञानवैराग्यसम्पत्साधकचतुर्विधोपायान् पप्रच्छ । अथ शतानन्दः वक्ति— राजन् ! शृणु । तव दुःस्वप्नः, अनिष्टप्रारब्धकर्मशेषभोगरूप एव । किञ्च अयं भाविशुभसूचकः । चिन्तां त्यज । अद्य तव चिन्तातङ्कनिवृत्तिकारणं धर्मज्ञानवैराग्यसम्पत्साधनम्, तत्साधनं दिग्वत्सवेदनम्, इति सूचयन् तं प्रति वेङ्कटगिरेः युगभेदेन नामप्रवृत्तिनिमित्तचतुष्टयं आह— **अस्ति कश्चिदिति** ।

***अवतारिका—***

अथ शतानन्दः मन्दभाग्यानां हर्यनुग्रहोज्झितानामसतां प्रतिबद्धेष्टप्रारब्धशेषः स्वप्ने जाग्रति च मनोरथे जाड्ये च चित्तमोहे वा वातगतौ वा उन्मादजविकारे वा भ्रान्तौ वा झडिति शिथिलो जायते प्रतिबद्धानिष्टप्रारब्धशेषसम्भोगस्तु जागरित एव लम्बायमान उत्कटो जायते । सुकृतीनां हर्यनुग्रहपात्राणां सात्त्विकानां तु प्रतिबद्धेष्टप्रारब्धशेषसम्भोगो जागरित एव लम्बायमानः स्फुटो जायते । अनिष्टप्रतिबद्धप्रारब्धशेषसम्भोगस्तु स्वप्नमनोरथादावल्पोऽनुत्कट इति कर्मविपाकविदां मतम् । तथा चायं स्वप्नः प्रतिबद्धानिष्टप्रारब्धसम्भोगरूपो न भाव्यनिष्टसूचकः किन्तु शुभसूचनायैव । तस्मात् तदातङ्कं त्यज । यच्च रावणादिनिमित्तातङ्कचिन्ताकारणादिकमुक्त्वा तन्निवृत्तिकारणधर्मज्ञानवैराग्यसम्पत्साधनचतुष्टयं पृष्टम् । तत्साधनं दिग्वत्सवेदनं इति सूचयन् गिरेर्युगभेदेन नामचतुष्टयप्रवृत्तिनिमित्तचतुष्टयमाह— **अस्ति कश्चिद्विशेष** इत्यादिना **अध्यायान्तेन** ।

**मूलम्**

**जनकाय शतानन्दोक्तः श्रीवेङ्कटाचलप्रभावः**

**शतानन्द उवाच—**

**अस्ति कश्चिद्विशेषोऽस्मिन् भूलोके भूमिपालक।**
**दुहितुस्तव [1]कल्याणं सुखदं शत्रुनाशनम्।**
**वैकुण्ठगिरिमाहात्म्यं सभविष्यं सहोत्तरम् ॥ २८॥**

१. कल्याणसुखदं।

**कल्याणकाण्डदीपः**

दिग्वत्सविद्या च—

"अन्तरिक्षोदरः कोशो भूमिबुध्नो न जीर्यति।
दिशो ह्यस्य स्रक्तयो द्यौरस्योत्तरं बिलम्।
स एष कोशो वसुधानस्तस्मिन्विश्वमिदं श्रितम्।

तस्य प्राची दिग् जुहूर्नाम सहमानानां दक्षिणां राज्ञी नाम प्रतीची सुभूता नामोदीचीं तासां वायुर्वत्सः। स य एतमेवं वायुं दिशां वत्सं वेद मा पुत्ररोदं रोदितो सोऽहमेतमेवं वायुं दिशं वत्स वेद मा पुत्र रोदं रुदमरिष्टं कोशं प्रपद्ये अमुना अमुना" इत्यादि।

सूचनप्रकारश्च तत्तन्नामप्रवृत्तिनिमित्तकथनान्ते प्रदृश्यते। **भूमिपालक** भूपाल। **अस्मिन् भूलोके** भरतखण्डात्मके कश्चित्। एकः **विशेषः** सामान्यदुर्विज्ञेयो **विद्वद्भिः** ज्ञेयो रहस्यधर्मः। तत्प्रतिपादकोऽपि तथा। अस्मिन् त्वत्प्रश्नविषये उत्तररूपोऽस्तीत्यर्थः। स क इत्यत आह— **दुहितुरित्यादिना**। दोग्धि मात्रादिमनोरथान् पूरयतीति दुहिता सीता। एतस्या एवांशावताररूपायाः पद्मावत्याः "वैकुण्ठादागतत्वेन वैकुण्ठाद्रिरिति स्मृतः" इति वचनात् वैकुण्ठगिरिरयम्। तदुक्तं वाराहे तृतीयेऽध्याये।

ननु शेषमारुतसंवादादागतोऽयं हेमगिरिनन्दन इति प्रसिद्धेः कथमुच्यते वैकुण्ठादागतः ? इति चेत्, इत्थम्— श्वेतलोकनिवासाय वैकुण्ठादागतो प्राकृतस्तेजोमय इदानीं हेमगिरिनन्दनेऽन्तर्धाय,

अन्तःसन्निहितो यथारण्यामरणीसुतः । तस्य माहात्म्यं माहात्म्यप्रतिपादकं सभविष्यं यस्मिन्नाख्याने यदंशे स्वमुख्यविषयस्य मानुषान् प्रति साक्षात्सम्भाषणाद्यभावरूपा दैनी स्थितिः । स्वमुख्यविषया-वताप्रयोजनस्य यत्प्रधानाङ्गं तस्य यस्यकस्यचित्परा गतिर्वोच्यते तदैकदेशाख्यानं भविष्यम् । "यद्भविष्यो दैवपरः" इत्यत्र भविष्यशब्दस्य दैवे प्रयोगात् । परगतेर्दैवव्यापारत्वात् । भवितव्ये भवतेः ष्यन् । अत्र च स्वमुख्यविषयस्य श्रीनिवासस्य साक्षात्कलिमानुषसम्भाषणाद्यभावस्य साक्षात्सम्भाषणं नास्तीत्यादिना वक्ष्यमाणत्वात् । प्रधानाङ्गस्य आकाशतोण्डमानस्यैकादशादौ त्रयोदशान्ते परगते-रुक्तत्वात् ।

यद्वा भविष्यच्छब्दपर्यायो भविष्यशब्दः । स्वमुख्यविषयस्य अवताराय यद्देवानां प्रार्थनं तद् भूतम् । यदवतारकृत्यं तद् वर्तमानम् । यदवतारसमाप्तौ स्वर्गमनादि तद् भविष्यम्, तेन सहितम् । **सहोत्तरम्** । यदाख्याने यदंशे विषयस्य प्राचुर्येण परतत्त्वताभिव्यक्तिः । तदुत्तरम् । तथा चात्र त्रयोदशे श्रीनिवासस्य प्राचुर्येण सर्वोत्तमत्वाभिव्यक्तेः ।

यद्वा पूर्वग्रन्थे मोहकप्राचुर्यतत्त्वावेदकाल्पत्वाभ्यां उभयविधवाक्यप्राबल्यादज्ञानविपर्ययसंशयै-र्जाताक्षेपस्य उत्तररूपत्वात् उत्तमार्थत्वात् उत्तरत्वाच्च उत्तरम् । तेन सहितम् ।

यद्वा तव दुहितुः सीतायाः सभविष्यम् । भविष्यत्पद्मावतारकल्याणसहितम् । अथवा प्रायो भविष्यदर्थे प्रश्नः । अतः सप्रश्नोत्तरम् ।

यद्वा भविष्यतीति प्रवृत्तत्वात् सभविष्यं पूर्वकालिकं जनकं प्रति कलिकालिक-श्रीनिवास-कल्याणकथाया भविष्यत्वात् । अत एव 'वक्ष्यन्ति' 'नाम भविष्यति' इत्यादिप्रयोगः । अस्य भविष्योत्तरत्वं रामायणवद् ध्येयम् ।

**सुखदं** कीर्तनश्रवणाभ्यां उभयोर्लोकयोः सुखसाधनम् । **शत्रुनाशनं** बाह्याभ्यन्तरारिक्षयकारि **कल्याणं** पद्मावतीकल्याणाख्यानरूपम् । "एतदात्मा कश्चिद्विशेषोऽस्ति" इति पूर्वेणान्वयः ॥ एतत् त्वदिष्टचतुष्टयसाधनमिति ॥

**मूलम्**

**कलौ तत्कीर्तनं पुण्यं सर्वदुःखहरं शिवम् ।**
**धनकामस्य धनदं [1]ज्ञानिनो ज्ञानसाधनम् ॥ २९ ॥**

१. ज्ञानिनां ।

**कल्याणकाण्डदीपः**

त्वदिष्टसाधनमाह **कलौ तत्कीर्तनमिति**। "कलहे संयुगे कलिः" इति वचनात् धर्माधर्मयोः ज्ञानाज्ञानसंशयविपर्ययोः विरागानुरागयोः सम्पदापदयोः परस्परं कलहे सर्वकलहास्पदे **कलौ** च **तत्कीर्तनं** यः कल्याणाख्यानरूपः कश्चिद्विशेषः। तस्य कीर्तनं कीर्तनादि। **पुण्यं** धर्मसाधनम्। **ज्ञानिनः** ज्ञानयोग्यस्य। **सर्वदुःखहरं** सर्वचिन्तासन्तापहरम्। **शिवं** विघ्नभेषजम्। **धनकामस्य धनदं** सम्पत्प्रदम्।

**मूलम्**

**[1]यां श्रुत्वा सर्वलोकेशो ब्रह्मा ब्रह्मपदं गतः।**
**नीलकण्ठस्तु [2]यां श्रुत्वा निर्विषः सुखमासवान् ॥ ३० ॥**

**वज्री नाकपदं प्राप्तो यत्कथाश्रवणादरात्।**
**किमुक्तेन विशेषेण [3]तत्फलं [4]सङ्क्षिपेमहि ॥ ३१ ॥**

१. यच्छ्रुत्वा। २. तच्छ्रुत्वा।
३. तदनन्तफलं शृणु। ४. क्षिप्रमेष्यसि।

**कल्याणकाण्डदीपः**

श्रोतुः श्रवणादरातिशयजननाय दृष्टफलप्रदानत्वमाह— **यां श्रुत्वा** इत्यारभ्य **सङ्क्षिपेमहि** इत्यन्तेन। **किमुक्तेनेति** विशेषेण स्वविभाजकोपाधिरूपेणोक्तेन फलेन किं साध्यमस्तीति शेषः। **तत्** तस्मात्। तत् **सङ्क्षिपेमहि** उपसंहरेमहि। तव श्रोतुः श्रवणादरस्य स्वतःसिद्धत्वादिति भावः॥

अत्रेदमनुसन्धेयम्— अस्य कल्याणकाण्डस्य वेदव्यासो महान् ऋषिः। महालक्ष्मी आदि-ऋषिः। शतानन्दादय अनन्तर-ऋषयः। श्रीश्रीनिवासो देवता। यथोचितं छन्दांसि। धर्मज्ञानवैराग्य-सम्पदर्थे कीर्तनश्रवणादौ विनियोगः। व्यासेनामिततेजसेत्युक्ते महालक्ष्मीदृष्टदिग्वत्सविद्याभाष्य-रूपत्वादुक्तर्षिकत्वं युक्तम्। वृषनाम्नि धर्मतत्प्रवर्तकचक्रयोर्माहात्म्यकथनात्। अञ्जनाम्नि ज्ञानाधिदेवता वायुमाहात्म्यकथनात्। शेषनाम्नि वैराग्याधिदेवता शेषनिगर्वकथनात्। पश्चाद्रुद्रस्यैव शेषत्वात्। वेङ्कटनाम्नि पद्माप्रसङ्गादुक्तफलकत्वं च युक्तमिति॥

अन्तरिक्षोदरः कोशो भूमिबुध्नो न जीर्यति। दिशो ह्यस्य शक्तयो द्यौरस्योत्तरं बिलम्। स एष कोशो वसुदानस्तस्मिन्विश्वमिदं श्रितम्। तस्य

अन्तःसन्निहितो यथारण्यामरणीसुतः । तस्य माहात्म्यं माहात्म्यप्रतिपादकं सभविष्यं यस्मिन्नाख्याने यदंशे स्वमुख्यविषयस्य मानुषान् प्रति साक्षात्सम्भाषणाद्यभावरूपा दैनी स्थितिः । स्वमुख्यविषयावतारप्रयोजनस्य यत्प्रधानाङ्गं तस्य यस्यकस्यचित्परा गतिर्वोच्यते तदैकदेशाख्यानं भविष्यम् । "यद्भविष्यो दैवपरः" इत्यत्र भविष्यशब्दस्य दैवे प्रयोगात् । परगतेर्दैवव्यापारत्वात् । भवितव्ये भवतेः ष्यन् । अत्र च स्वमुख्यविषयस्य श्रीनिवासस्य साक्षात्कलिमानुषसम्भाषणाद्यभावस्य साक्षात्सम्भाषणं नास्तीत्यादिना वक्ष्यमाणत्वात् । प्रधानाङ्गस्य आकाशतोण्डमानस्यैकादशादौ त्रयोदशान्ते परगतेरुक्तत्वात् ।

यद्वा भविष्यच्छब्दपर्यायो भविष्यशब्दः । स्वमुख्यविषयस्य अवताराय यद्देवानां प्रार्थनं तद् भूतम् । यदवतारकृत्यं तद् वर्तमानम् । यदवतारसमाप्तौ स्वर्गमनादि तद् भविष्यम्, तेन सहितम् । **सहोत्तरम्** । यदाख्याने यदंशे विषयस्य प्राचुर्येण परतत्त्वताभिव्यक्तिः । तदुत्तरम् । तथा चात्र त्रयोदशे श्रीनिवासस्य प्राचुर्येण सर्वोत्तमत्वाभिव्यक्तेः ।

यद्वा पूर्वग्रन्थे मोहकप्राचुर्यतत्त्वावेदकाल्पत्वाभ्यां उभयविधवाक्यप्राबल्यादज्ञानविपर्ययसंशयैर्जाताक्षेपस्य उत्तररूपत्वात् उत्तमार्थत्वात् उत्तरत्वाच्च उत्तरम् । तेन सहितम् ।

यद्वा तव दुहितुः सीतायाः सभविष्यम् । भविष्यत्पद्मावतारकल्याणसहितम् । अथवा प्रायो भविष्यदर्थे प्रश्नः । अतः सप्रश्नोत्तरम् ।

यद्वा भविष्यतीति प्रवृत्तत्वात् सभविष्यं पूर्वकालिकं जनकं प्रति कलिकालिक-श्रीनिवास-कल्याणकथाया भविष्यत्वात् । अत एव 'वक्ष्यन्ति' 'नाम भविष्यति' इत्यादिप्रयोगः । अस्य भविष्योत्तरत्वं रामायणवद् ध्येयम् ।

**सुखदं** कीर्तनश्रवणाभ्यां उभयोर्लोकयोः सुखसाधनम् । **शत्रुनाशनं** बाह्याभ्यन्तरारिक्षयकारि **कल्याणं** पद्मावतीकल्याणाख्यानरूपम् । "एतदात्मा कश्चिद्विशेषोऽस्ति" इति पूर्वेणान्वयः ॥ एतत् त्वदिष्टचतुष्टयसाधनमिति ॥

**मूलम्**

**कलौ तत्कीर्तनं पुण्यं सर्वदुःखहरं शिवम् ।**
**धनकामस्य धनदं [1]ज्ञानिनो ज्ञानसाधनम्** ॥ २९ ॥

---

१. ज्ञानिनां ।

**कल्याणकाण्डदीपः**

त्वदिष्टसाधनमाह **कलौ तत्कीर्तनमिति**। "कलहे संयुगे कलिः" इति वचनात् धर्माधर्मयोः ज्ञानाज्ञानसंशयविपर्यययोः विरागानुरागयोः सम्पदापदयोः परस्परं कलहे सर्वकलहास्पदे **कलौ** च **तत्कीर्तनं** यः कल्याणाख्यानरूपः कश्चिद्विशेषः। तस्य कीर्तनं कीर्तनादि। **पुण्यं** धर्मसाधनम्। **ज्ञानिनः** ज्ञानयोग्यस्य। **सर्वदुःखहरं** सर्वचिन्तासन्तापहरम्। **शिवं** विघ्नभेषजम्। **धनकामस्य** धनदं सम्पत्प्रदम्।

**मूलम्**

**[1]यां श्रुत्वा सर्वलोकेशो ब्रह्मा ब्रह्मपदं गतः।**
**नीलकण्ठस्तु [2]यां श्रुत्वा निर्विषः सुखमासवान् ॥ ३० ॥**

**वज्री नाकपदं प्राप्तो यत्कथाश्रवणादरात्।**
**किमुक्तेन विशेषेण [3]तत्फलं [4]सङ्क्षिपेमहि ॥ ३१ ॥**

१. यच्छ्रुत्वा। २. तच्छ्रुत्वा।
३. तदनन्तफलं शृणु। ४. क्षिप्रमेष्यसि।

**कल्याणकाण्डदीपः**

श्रोतुः श्रवणादरातिशयजननाय दृष्टफलप्रदानत्वमाह— **यां श्रुत्वा** इत्यारभ्य **सङ्क्षिपेमहि** इत्यन्तेन। **किमुक्तेनेति** विशेषेण स्वविभाजकोपाधिरूपेणोक्तेन फलेन किं साध्यमस्तीति शेषः। **तत्** तस्मात्। तत् **सङ्क्षिपेमहि** उपसंहरेमहि। तव श्रोतुः श्रवणादरस्य स्वतःसिद्धत्वादिति भावः ॥

अत्रेदमनुसन्धेयम्— अस्य कल्याणकाण्डस्य वेदव्यासो महान् ऋषिः। महालक्ष्मी आदि-ऋषिः। शतानन्दादय अनन्तर-ऋषयः। श्रीश्रीनिवासो देवता। यथोचितं छन्दांसि। धर्मज्ञानवैराग्य-सम्पदर्थे कीर्तनश्रवणादौ विनियोगः। व्यासेनामिततेजसेत्युक्ते महालक्ष्मीदृष्टदिग्वत्सविद्याभाष्य-रूपत्वादुक्तर्षिकत्वं युक्तम्। वृषनाम्नि धर्मतत्प्रवर्तकचक्रयोर्माहात्म्यकथनात्। अञ्जनानाम्नि ज्ञानाधिदेवता वायुमाहात्म्यकथनात्। शेषनाम्नि वैराग्याधिदेवता शेषनिगर्वकथनात्। पश्चाद्रुद्रस्यैव शेषत्वात्। वेङ्कटनाम्नि पद्मप्रसङ्गादुक्तफलकत्वं च युक्तमिति ॥

अन्तरिक्षोदरः कोशो भूमिबुध्नो न जीर्यति। दिशो ह्यस्य शक्तयो द्यौरस्योत्तरं बिलम्। स एष कोशो वसुदानस्तस्मिन्विश्वमिदं श्रितम्। तस्य

प्राची दिग् जुहूर्नाम । सहमानानां दक्षिणां राज्ञी नाम प्रतीचीं सुभूता नाम उदीचीं तासां वायुर्वत्सः । स य एतमेवं वायुं दिशां वत्सं वेद मा पुत्ररोदं रोदिति सोऽहमेतमेवं वायुं दिशं वत्सं वेद मा पुत्र रोदं रुदमरिष्टं कोशं प्रपद्ये अमुना अमुना अमुना प्राणं प्रपद्ये अमुना अमुना अमुना भूः प्रपद्ये अमुना अमुना अमुना भुवः प्रपद्ये अमुना अमुना अमुना स्वः प्रपद्ये अमुना अमुना अमुना यदवोचं प्राणं प्रपद्य इति प्राणो ह वा इदं सर्वं भूतं यदिदं किं च तमेव तत्प्रापत्स्यथाथ यदवोचं भूः प्रपद्य इति पृथिवीं प्रपद्येऽन्तरिक्षं प्रपद्ये दिवं प्रपद्य इत्येवं तदवोचम् अथ यदवोचं भुवः प्रपद्य इत्यग्निं प्रपद्य वायुं प्रपद्य आदित्यं प्रपद्य इत्येव तदवोचम् अथ यदवोचं स्वः प्रपद्य इत्यृग्वेदं प्रपद्ये यजुर्वेदं प्रपद्ये सामवेदं प्रपद्य इत्येव तदवोचं तदवोचम् ॥

***दिग्वत्सविद्यातात्पर्यार्थस्तु***— आनन्देच्छास्वरूपस्य अन्तरिक्षकुक्षेर्भूपादमूलस्य द्युशीर्षस्य सर्वदेवतावसुधानस्य सकलजगदाधारकस्य भगवतो विष्णोर्धर्मज्ञानवैराग्यसम्पदतिदेशनात्प्राच्यवाची प्रतीच्युदीची दिङ्नामकानां तदाश्रयाणां धृतरथचरणाब्जगदाब्जानां जुहूसहमाना राज्ञी सुभूताभिधानानां क्रमाद्दक्षिणवामोर्ध्वाधः स्रक्तीनां वायुर्मुख्यप्राणो वत्सस्तदुपासकानां नन्दनन्दनतत्परा बहवो नन्दना आनन्दना एव जायन्ते ते च मुक्ता भवन्तीत्यैहिकामुष्मिकफलमुच्यत इति ॥

**मूलम्**

**इत्युक्तो मुनिना तेन जनको वाक्यमब्रवीत् ॥ ३२ ॥**

**गूढकर्तृकव्याख्यानम्**

हे महीपते जनकराज ! शृणु । अस्मिन् भूलोके भरतखण्डे जनसामान्यदुर्ज्ञेयः महाज्ञानिजन-सुज्ञेयः एकरहस्यधर्मः अस्ति । तत्प्रतिपादकग्रन्थोऽपि तादृश एव । तदेव वेङ्कटगिरिमाहात्म्यम् । इदं कीदृशम् ? या तव दुहितृत्वेन अवतीर्णा सीता तदंशादवतीर्णपद्मावत्याः कल्याणकथायुक्तम् । वैकुण्ठगिरिः इत्यत्र वैकुण्ठो नाम विष्णोः आवासस्थानम् । वैकुण्ठः अस्य अस्ति आवासत्वेन इति वैकुण्ठः विष्णुः । "वैकुण्ठादागतत्वेन वैकुण्ठाद्रिरिति स्मृतः" इति वाराहोक्तेः साक्षात् विष्णुः वैकुण्ठात् आगत्य अत्र गिरौ वसति इति वैकुण्ठगिरिः इति प्रसिद्धिः । किञ्च श्वेतकोलनामकपरमात्मक्षेत्रे वासं कर्तुं अप्राकृतगृहस्थ रमाप्रणयि परमात्मा मायावी परमानन्दं त्यक्त्वा वैकुण्ठं उत्तमं हेमगिरिसुत-आनन्दाद्रौ अरणौ अग्निरिव अन्तर्हितः । साक्षात् वैकुण्ठसन्निधानमहिम्ना गिरेः माहात्म्यं जातम् ।

एवं इदं माहात्म्यं कीदृशम् ? सभविष्यम् । भविष्येण सह वर्तते इति । अत्र यस्मिन् आख्याने यस्मिन् अंशे परमात्मनः मानुषाणां च साक्षात् सम्भाषणाभावरूपदेवताव्यापारः प्रधानाङ्गभूतपरमात्म-अवतारकथारूपदेवताव्यापारः । एतदेव भविष्यम् । स्वस्य अवताराय देवानां प्रार्थनं भूतम् । अवतार-कृत्यं वर्तमानम् । अवतारसमाप्तौ स्वर्गगमनादिकं भविष्यम् । एतत्सहितम् । अथवा तव दुहितृसीता-द्वितीयाऽभूतपद्मावतीकल्याणकथानिरूपणं भविष्यम् । तत्सहितम् । पुनः कीदृशम् ? सहोत्तरम् । उत्तरेण सह वर्तत इति । यस्मिन् आख्याने यस्मिन् अंशे परतत्वविषय एव प्रचुरं निरूप्यते तदंशः उत्तरम् । श्रीवेङ्कटेशमाहात्म्यस्य उत्तरभागे श्रीनिवासस्य सर्वोत्तमत्वं प्रचुरं निरूपितम् । यद्वा पूर्वग्रन्थ-भागे मोहकविषयाः प्रचुरं निरूपिताः । तत्त्वावेदकविषयाः स्वल्पं निरूपिताः । एतेन श्रोतॄणां संशयादिकं जायते । कथाविषयकसंशयादिकस्य समाधान-उत्तराणि उत्तरग्रन्थे विद्यमानानि । अत एव इदं माहात्म्यं भविष्यदंश-उत्तरांशनिरूपणसहितं अस्ति ।

पुनः कीदृशम् ? दुहितुस्तव कल्याणम् । अत्र दुहिता नाम दोग्ध्री - मातापितृमनोरथान् पूरयति इति । अद्य तव दुहिता सीता । सीतारूपा पद्मा । एषा सकलकल्याणकथाकीर्तनश्रवणादिभिः तव दुःखानि दूरीकृत्य तव मनोरथं पूरयति । अतः तव दुहितरि दुहितृत्वं सार्थकम् ।

इदं वेङ्कटगिरिमाहात्म्यं ये शृण्वन्ति कीर्तयन्ति तेषां कामक्रोधादि-अन्तःशत्रूणां बाह्यशत्रूणां च निवारकम् । ऐहिकामुष्मिकसुखप्रदम् । सकलविधकारणभूते अस्मिन् कलौ एतत् कीर्तनं पुण्यकरम् । फलापेक्षया शृण्वतां तु, धनलाभाकाङ्क्षिभ्यः धनप्राप्तिः, ज्ञानार्थिभ्यः ज्ञानवृद्धिः भवति । इदं माहात्म्यं श्रुत्वा ब्रह्मा ब्रह्मपदं = सृष्टिकर्तृत्वं गतः । विषकण्ठः शिवः अस्य श्रवणेन विषबाधारहितः सुखमाप । सादरश्रवणेन इन्द्रः नाकपदं = देवराजपदं प्राप । किं बहुना उक्तेन ? श्रवणात् फलस्य स्वतःसिद्धत्वात् वयं एतत् उपसंहरेम इत्याह ॥ फलमिदं अत्र अनुसन्धेयम् ॥ अस्य कल्याण-काण्डस्य श्रीवेदव्यासः महाऋषिः । शतानन्दादयः अनन्ता ऋषयः । श्रीश्रीनिवासो देवता । यथोचितं छन्दांसि । धर्मज्ञानवैराग्यसम्पदर्थे विनियोगः इति ॥

**मूलम्**

**जनक उवाच—**

**वद वैकुण्ठमाहात्म्यं कलौ तच्चरितं कथम्** ॥ ३३ ॥

**शतानन्द उवाच—**

**कृते वृषाद्रिं वक्ष्यन्ति त्रेतायामञ्जनाचलम् ।**

**द्वापरे शेषशैलं च कलौ श्रीवेङ्कटाचलम्।**
**नामानि युगभेदेन शैलस्यास्य भवन्ति हि ॥ ३४ ॥**

**कल्याणकाण्डदीपः**

**चतुर्युगेष्विति । हे मुने** ! चतुर्युगेषु मध्ये तस्य गिरेः । **कृते वृषाद्रिरिति** । "कृते वृषाद्रिं वक्ष्यन्ति" इत्यनेन अर्थात् वृषाद्रिरिति यन्नाम प्रोक्तं तच्च नाम कलौ कथं भविष्यतीत्यन्वयः । पूर्वत्र वैकुण्ठगिरिमित्येकनाम्नैव व्यवहार इति भावः ।

**गूढकर्तृकव्याख्यानम्**

पुरोहितोक्तं श्रुत्वा जनकः, भो गुरवः ! वेङ्कटगिरिमाहात्म्यं कीदृशम् ? कलौ युगे तच्चरितं कीदृशम् ? इति पप्रच्छ । शतानन्दः अस्य वै गिरेः कृते वृषभाचल इति, त्रेतायां अञ्जनाचल इति, द्वापरे शेषाचलं इति, कलौ वेङ्कटाचल इति च एकैकयुगे एकैकनाम आयातम् । अत्र वृषनाम्नि धर्ममाहात्म्यकथनात्, अञ्जनानाम्नि ज्ञानाधिदेवता-वायुमाहात्म्यकथनात्, शेषनाम्नि वैराग्याधिदेवता-शेषनिगर्वकथनात्, प्राक्तन रुद्रः शेष इति वचनात्, वेङ्कटनाम्नि सम्पदधिदेवता-पद्माकथाप्रसक्तेः तत्तन्माहात्म्यविशिष्टं इति उक्तं भवति ।

**वृषभाचलनामनिष्पत्तिः**

**जनक उवाच—**

**चतुर्युगेषु यत्प्रोक्तं नाम तस्य गिरेर्मुने।**
**(तस्य तस्य च हेतुं वै विस्तराद्वद मे गुरो ।)**
**कृते [1]वृषाद्रिरिति तु कथं नाम भविष्यति ॥ ३५ ॥**

१. वृषाचल इति ।

**गूढकर्तृकव्याख्यानम्**

ततः जनकः, "भो मुने ! चतुर्युगेषु चतुर्नामानि इत्युक्तम् । आदौ कृते वृषाद्रिरिति नाम वैकुण्ठगिरेः कथं जातम् ? वद" इति पप्रच्छ ।

**मूलम्**

**शतानन्द उवाच—**

**पुरा तु वृषभो नाम राक्षसो रूक्षकर्मकृत् ।**
**आक्रम्य शेषशैलं च [१]तापसानतिबाधयत् ॥ ३६ ॥**

१. तापसानप्यबाधयत् ।, तापसानत्यबाधयत् ।

**कल्याणकाण्डदीपः**

**रूक्षकर्मकृत्** अप्रियतपःकर्ता । "रूक्षस्त्वप्रेम्ण्यचिक्कण" इत्यमरः । यथा मुखराः नेत्रयोः धूलिं प्रक्षिपन्ति अङ्गुल्यादिकं छिन्दन्ति इष्टसिद्ध्यै तद्वदिति भावः ।

"दयाक्षमानसूया च शौचानायासमङ्गलम् ।
अकार्पण्यं चास्पृहत्वं सर्वसाधारणानि तु ॥" (लोहितस्मृतिः)

इत्युक्तसर्वसाधारणतपोऽष्टाङ्गमध्यगानि तयोः ।

"शरीरं पीड्यते येन सुशुभेनापि कर्मणा ।
अत्यन्तं तन्न कर्तव्यमनायासस्स उच्यते ।
प्रशस्ताचरणं नित्यमप्रशस्तविवर्जनम् ।
एतद्धि मङ्गलं प्रोक्तमृषिभिस्तत्त्वदर्शिभिः ॥" (अत्रिसंहिता ३७)

इत्युक्तलक्षणयोरनायासमङ्गलस्याभावात् । **अतिबाधयत्** अत्यन्तं पीडामकरोत् । "पीडाबाधा-व्यथादुःखम्" इत्यमरः । बाधशब्दात् करणे णिच् । जनमेजयादींश्चतुरस्तस्यामुत्पादयत् तान् इत्यादिवत् अडाभाव आर्षः ।

**मूलम्**

**[१]तापसास्तेन सङ्क्रुद्धाः तद्वधे शरणं गताः ।**
**श्रीनिवासं हृषीकेशं [२]भक्तानामभयङ्करम् ॥ ३७ ॥**

१. तेन ते भग्नतपसः । २. भक्तानामभयप्रदम् ।

तुष्टुवुर्हृष्टमनसः स्रष्टारं सर्वचेतसाम् ।
प्रादुर्बभूव भगवान् मुनीनां पुरतो हरिः ।
व्यज्ञापयन् मुनिश्रेष्ठाः [1]तस्य कृत्यं कृतस्तवाः　॥ ३८ ॥

१. असकृत्कृतसंस्तवाः ।

**कल्याणकाण्डदीपः**

**व्यज्ञापयन्** विज्ञापनं चक्रुः ॥

**मूलम्**

मुनय ऊचुः—

भगवन्नरविन्दाक्ष वृषभो नाम राक्षसः ।
अबाधयत् सदा क्रूरस्तपोभङ्गकरः [1]शठः　॥ ३९ ॥

तस्माद्रक्ष [2]जगन्नाथ भयाद्राक्षसकल्पितात् ।
बाढमित्युक्तवान् कृष्णो दुष्टमभ्यद्रवद्रुषा　॥ ४० ॥

१. खलः ।　२. क्षरातीत ।, -स्व नो देव ।

**कल्याणकाण्डदीपः**

तपस्विनां विज्ञापनप्रकारमाह **भगवन्नित्यादिना** । **शठः** – अनृजुः । **सदा तापसान्** तपोधनान् **बाधयत्** । अतस्त्वां तद्वधे वयं शरणं गताः इति शेषः । **बाढमित्युक्तवान्** । रक्षामीति भृशं प्रतिज्ञां कुर्वन्नेवेति शेषः ।

**गूढकर्तृकव्याख्यानम्**

हे राजन् ! एतच्चतुर्नामप्राप्तेः पूर्वं गिरेः वैकुण्ठगिरिरिति व्यवहार आसीत् । कृते वृषाद्रिरिति नामप्रवृत्तिनिमित्तं वच्मि— पुरा वृषभो नाम राक्षसः आसीत् । सः लोकस्य अप्रियं तपः चरति स्म । कुतः ? केचन लोके स्वेष्टसिद्धये नेत्रयोः धूलिप्रक्षेपणं, अङ्गुल्यादिच्छेदनं, कण्टकोपरि उत्तानशयनं, इत्यादि कुर्वन्ति । इदं सहजम् । तद्वत् अयं वृषभोऽपि चकार । लोके तपो नाम— "दयाक्षमाऽनसूया च शौचानायासमङ्गलम् । अकार्पण्यं अस्पृहत्वं सर्वसाधारणानि हि" परन्तु अस्य

वृषभस्य तपसः अनायासमङ्गलं द्वयमपि नासीत् । अत एव रूक्षकर्मकृत् । अयं असुरः अस्मिन् गिरौ स्थित्वा तत्रत्यतपस्विनः अति पीडयामास । एतेन तेषां तपः भग्नम् । तदा ते ऋषयः लोकस्रष्टारं श्रीनिवासं तद्राक्षसवधाय शरणं ययुः । तं सन्तोषेण तुष्टुवुः ।

तदा भगवान् अव्याकृतषड्गुणैश्वर्यसम्पन्नः भक्ताघहारी श्रीहरिः तेषां प्रादुर्बभूव । ततः मुनयः देवं स्तुत्वा वृषभस्य सर्वदुष्कृत्यं विज्ञापयामासुः, "भो कमलदलायताक्ष ! देवादिदेव ! राक्षसकल्पित-भयप्रकारेभ्यः अस्मान् पाहि पाहि" इति । तदा दुष्टदमनः श्रीहरिः मुनीन् "सत्यं खलात् रक्षामि" इति अभयं दत्वा, वृषभं महता कोपेन अभ्यद्रवत् ।

**मूलम्**

**स राक्षसो महाराज तीर्थे तुम्बुरुसंज्ञके ।**
**स्नात्वा [1]नित्यं वरां पुण्यां सालग्रामशिलां नृप ॥ ४१ ॥**

**नारसिंहात्मिकां दिव्यां सकरालामधोमुखः ।**
**नित्यमाराधयेद्देवमिति निश्चित्य [2]राक्षसः ॥ ४२ ॥**

**पूजान्ते स्वशिरःपुष्पं खड्गेनाहृत्य भूपते ।**
**[3]समर्पयित्वा सततं तच्छिरः पुनरागतम् ।**
**एवं पञ्चसहस्राणि वर्षाणि विगतानि च (वै) ॥ ४३ ॥**

१. त्रिषवणं । २. पूजयन् । ३. समर्पयामास ततः ।,
३. समर्पयत्ससौ नित्यं आगच्छति शिरः पुनः ।

**कल्याणकाण्डदीपः**

स राक्षसः कुत्र कीदृशं रूक्षं कर्म कियन्तं कालं कुर्वन्नासीदिति राज्ञो मानसीं शङ्कां अपनुदति **स राक्षस** इत्यादिना **विगतानि च** इत्यन्तेन । भो **महाराज** ! **स राक्षसो** वृषभनामा **तुम्बुरुसंज्ञके तीर्थे नित्यं** अजस्रं **स्नात्वा वरां** लक्षणोत्तमां **पुण्यां** बहुजन्मार्जितपुण्यलब्धां तत्साधनां वा **सकरालां** दंष्ट्रादन्तुरवदनान्वितां **दिव्यां** देवदुर्लभां **नारसिंहात्मिकां** नृसिंहप्रतिमारूपां शालग्रामशिलां **पूजान्ते** सङ्कल्पितपूजापरिसमाप्तौ **स्वशिरःपुष्पं** कण्ठनालमुखाम्बुजं **खड्गेन आहृत्य** आहरणं कृत्वा देवाय **समर्पयित्वा** नित्यं देवमाराधयेत् । पुनः पूजा देवचित्ते स्थिता चेत् तच्छिरः **पुनरागतं** भवतीति

निश्चित्य दृढनिर्बन्धं कृत्वा **अधोमुखः** दिशोऽनवलोकयन् । **सततं** देवमाराधयन् । 'आसीत्' इति शेषः । 'आराधयेत्' इति पाठे 'आराधयन्' इति शेषः । 'आराधयन्' इति पाठे 'आराधयेत्' इति । समर्पयित्वा इत्यस्य "वंशं कुरोर्वंशदावाग्निना हृतं संरोहयित्वा भवतापनो हरिः" इत्यत्रेव आर्षत्वाद्वा ण्यन्तात्समर्पिधातोः क्त्वा वा "हरिं वन्दन्तीति समर्पयित्वा" इत्यत्रेव साधुत्वं ज्ञेयम् ॥

**मूलम्**

**तस्मिन् कालेऽरविन्दाक्षः प्रत्यक्षः [1]समभूदजः ।**
**शिलान्तर्यामि भगवान् श्रीनिवासः सतां गतिः ॥ ४४ ॥**

१. समजायत ।, समभूत्तदा ।

**कल्याणकाण्डदीपः**

**तस्मिन्काले** पूजान्ते । शिरःपुष्पसमर्पणात् पूर्वम् ।

**मूलम्**

**तमालोक्य हृषीकेशं वृषभो दण्डवद्भुवि ।**
**पपात राजशार्दूल स विसंज्ञामुपेयिवान् ॥ ४५ ॥**

**कल्याणकाण्डदीपः**

**विसंज्ञमिति** । संज्ञायाश्चेतनायाः अभावो विसंज्ञम् । अर्थाभावेऽव्ययीभावः । मूर्च्छामिति यावत् । क्रियाविशेषणं वा । इष्टसिद्ध्या महाघोरतपोभारपरिखिन्नतया प्रायः शिथिलबलानां बाह्येन्द्रियाणां निमीलनात् मनस आभ्यन्तरीयमध्यमवृत्तिरूपा मूर्च्छा जातेत्यर्थः ।

**गूढकर्तृकव्याख्यानम्**

हे जनकनृप ! सः वृषभो नाम, नित्यं तुम्बरुतीर्थे स्नात्वा, सुलक्षणः बहुजन्मार्जितपुण्यलब्धः दंष्ट्रादन्तुरवदनयुतः देवदुर्लभः नृसिंहप्रतिमारूपः अधोमुखसालिग्रामशिलां श्रीनृसिंहः सर्वोत्तम इति बुद्ध्वा पूजयन् स्वसङ्कल्पानुसारेण स्वकण्ठनालमुखाम्बुजं खड्गेन आहृत्य दिशः अनवलोकयन् सततं एवं देवाय समर्प्य आराधयेत् । "पुनः पूजा देवस्य चित्ते स्थिता चेत् तच्छिरः पुनः आगतं भवति" इति मनसा निश्चित्य दिशः अनवलोकयन् एवं आराधयन् आसीत् । एवं नित्यं पूजयति । ततः स्वशिरः देवे समर्पयति । पुनः तच्छिरः समायाति । एवं पञ्चसहस्रवर्षं गतम् ।

एवं सति तदा सतां रक्षकः हरिः शिलान्तर्यामी वृषभस्य प्रत्यक्षः अभूत्। तदा भगवत्तेजः द्रष्टुमपि अशक्नुवन् क्षणात् भुवि निपत्य मूर्च्छितः। मुहूर्तान्ते संज्ञां प्राप्य समुत्थाय विधिभवादिनियामक-श्रीहरिं प्रति भाषते। अस्य वृषभस्य विधेः वक्षस्त्वगुद्भूतधर्मजातत्वात् स्वयोग्यतानुसारं हरिं भाषितुं शक्नोति।

**मूलम्**

**मुहूर्तान्ते समुत्थाय प्रत्यभाषत केशवम्।**

**वृषभ उवाच—**

**केशवानन्त गोविन्द श्रीनिवास सुरोत्तम ॥ ४६ ॥**

**न च मोक्षं न च स्वर्गं पारमेष्ठ्यपदं हरे।**
**न याचे जगतां नाथ युद्धभिक्षां च देहि मे ॥ ४७ ॥**

**दशावतारविभवं श्रुतं ते [1]विक्रमं हरे।[2]**
**अद्य तत्सत्यमाधत्स्व विक्रमं पुरुषोत्तम ॥ ४८ ॥**

१. पुरुषोत्तम।, विक्रमं विभो।
२. दशावतारविभवे श्रुतस्ते विक्रमो हरे।

**कल्याणकाण्डदीपः**

अत्रेयं मामक्यौत्प्रेक्षकी परीक्षा। तत्र तावदुच्चानां देवादिनरान्तानां नीचदैत्यादिपिशाचकान्ता-द्वन्द्वपरिपन्थिनोऽनेकशः एकशः सनामानो भिन्ननामानश्च सन्ति। ब्रह्मवाय्वोः कल्यादयः। इन्द्रस्य बलपाकवृत्रादयः। चन्द्रसूर्ययो राहुकेतु इत्याद्येवं शास्त्रदृष्ट्यनुसारेण द्रष्टव्यम्। एते इतरबलादुच्चात् प्रबलाः बाहुशालिनो उद्देश्याप्रियघोरतपःशालिनो बहुभोगाः स्वविरोध्युच्चापेक्षया प्रागेव सम्पूर्ण-स्वयोग्यगतिसाधनाः स्वयोग्यगतिं प्राप्नुवन्ति। उच्चाः निसर्गबलाः गुप्तरूपाः। उद्देश्यप्रियमृदुतपः कर्तारः। अल्पभोगाः स्वविरोधिनी चानन्तरमेव सम्पूर्णसाधनाः स्वयोग्यसिद्धिं कालेन आप्नुवन्ति। एते च परस्परं सर्वेषां सर्वे वर्गविरोधिनः। द्वन्द्वविरोधिनस्तु ते एव। एते देशकालदेहसामानाधि-करण्येन वैय्यधिकरण्येन परस्परं विप्रकुर्वन्ति। हर्यनुग्रहादेवोच्चैर्जय्याः। एते गरुडशेषे ब्रह्मवायू विना परस्परमाविष्टाः परिभवन्ति इति। तथा च प्रकृते ब्रह्मवक्षत्वगुद्भवो धर्मो वृषनामा देवः। तस्यायं

सनामा वृषभासुरो द्वन्द्वपरिपन्थी । तथा च तावत् स्वयमेव स्वानुरूपं भाषत इत्याह— **मुहूर्तान्त** इत्यादिना **पुरुषोत्तम** इत्यन्तेन ॥

**दशावतारेति** । दशावताराणां विभवो विभूतिः यस्मिन् शास्त्रे तच्छ्रुतिस्मृतिपुराणादि । विक्रमोऽतिशक्तिः सोऽस्मिन्नस्तीति विक्रमं शास्त्रं तद्विक्रमं प्रत्यक्षं दर्शयित्वा प्रामाण्यं द्रढयेत्यर्थः ।

यद्वा उत्कर्षापकर्षसाम्यावस्थात्रयसाधारणस्थितिमात्रविवक्षायां सामान्ये नपुंसकम् । अस्मिन्पक्षे मया यत् ते विभवं **विक्रमं** च श्रुतं, तद्विभवं विक्रमं च **सत्यमाधत्स्व** । प्रत्यक्षं दर्शयेत्यर्थः ।

यद्वा ते "इदं विष्णुर्विचक्रमे" (ऋ. १.२२.१७) इत्यादिना श्रुतं विक्रमम् इति प्रत्यभाषतेति पूर्वेणान्वयः ॥

### गूढकर्तृकव्याख्यानम्

भो विधिभवादिनियामक ! नाशरहित ! वेदोद्धारक ! देवदेवोत्तम ! हरे ! अद्य अहं शाश्वतानन्दाविर्भावलक्षणं मोक्षं न याचे नापि स्वर्गं न वा विधिपदम्, किन्तु, हे भक्तवत्सल ! स्वामिन् ! युद्धभिक्षां याचे । अतः तां देहि । श्रुतिस्मृतिपुराणोक्तं तव मत्स्यकूर्मवराहादिदशावतारवैभवचरित्रं, "इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम्" इति पुंसूक्तोक्तं तव विक्रमं च श्रुतम् । अद्य "तत् सत्यम् इति प्रत्यक्षं निरूपय" इति प्रार्थयामास । तदा परमात्मा आह—

### मूलम्

**देवस्तद्भारतीं श्रुत्वा किञ्चिद्धास्यमुखो हरिः ।**
**उवाच वचनं तं च राक्षसं युद्धदुर्मदम् ॥ ४९ ॥**

**श्रीभगवानुवाच—**

**[१]अलमित्युक्तवान् कृष्णस्तथाऽस्त्वित्यरिमर्दनः ।**
**[२]तयोर्युद्धमभूत् तत्र वृषभश्रीनिवासयोः ॥ ५० ॥**

१. श्रुत्वा तदुक्तवान् । २. ततो युद्ध ।

### कल्याणकाण्डदीपः

ततः किमकरोत् श्रीनिवास इत्यत आह— **देव** इत्यादिना **अरिमर्दन** इत्यन्तेन । **किञ्चिद्धास्यमुख इति** । आत्मनः परस्य वा वेषभाषाकारविकारविरुद्धालङ्कारास्पष्टभाषणकुब्जत्वादिदर्शनश्रवणजन्यो

मनोविकासो हासः । अयमेव बाष्पाद्यनुभावो निद्रालस्यादिसहकृतश्चर्व्यमाणो हास्यो भवति । तदुक्तं "विकृताकृतिवाग्वेषैरात्मनो वा परस्य वा । हासः स्यात् परिवेषोऽस्य हास्यस्त्रिप्रकृतिः स्मृत" इति । स्मितमिह विकासितनयनम् । किञ्चिल्लक्ष्यद्विजं हसितम् । मधुरस्वनं विहसितम् । सांसशिरःकम्पम् उद्धसितम् । अपहसितं साश्राक्षम् । विक्षिप्ताङ्गं भवति अतिहसितम् । द्वे द्वे हसिते चैषां ज्येष्ठे मध्येऽधमे क्रमः । उत्तमस्य स्वीयपरकीयविकारादिदर्शनात् क्रमेण स्मितहसिते । मध्यमस्य विहसितोद्धसिते । अधमस्य विहसितातिहसित इति ।

प्रकृते तु हरिणा दशावतारविभवे दर्शनीये । अत्रैव आनन्दो तुम्बुरुतीर्थे सत्यलोकः । तत्र वेदाभ्यासरतो ब्रह्मा । तं चोपासन्त्यो वेदाभिमानिन्यो देव्यश्च दर्शनीयाः । तत्र तदाऽयं तदपहाराय सुरमोहिन्या मायया हयग्रीवः, तदा मया मत्स्यावतारेण भवितव्यम् । ततस्तस्य आकाममाबलं युद्धं भविष्यति । ततः सोऽपि मत्स्यकः ततो युद्धोपरमस्तदवतारस्य । एवं कूर्मावतारोऽयं वृषभं कलशार्णवम् अर्णवं मन्थानं मन्दरं नेत्रं वासुकिं मथ्नतो देवासुरान् दर्शयति, तदा मया कूर्मेण भवितव्यम् । ततस्तस्य आकाममित्यादि पूर्ववत् । एवं वराहादिषु द्रष्टव्यम् । मत्स्यस्य मत्स्यकः, कूर्मस्य कूर्मकः, वराहस्य वराहकः इत्येवं युद्धावसाने दर्शयिष्यतीति भाविनीमप्यासुरीं मायां अनुपचरितसर्वापरोक्षो हरिः प्रत्यक्षी-कृत्य स्वकीयावतारपरकीयविकृतिदर्शनादिना हसितमुखः । अयमेव हासो बाष्पाद्यनुभावो राक्षस-कल्पितनिद्राऽलसनादिभिः सहकृतश्चर्व्यमाणः पश्यतां देवानां हास्यो रसो भवति । तदनुकरणाद्वा । हास्यमुख इति वा । नित्यस्मितस्यापि तस्य व्यक्तस्मितविशेषणं तत् युद्धम् । तत्र तुम्बुरुतीर्थे ॥

**मूलम्**

**यत्कृतं श्रीनिवासेन तत्कृतं वृषभेण ह (च) ।**
**तदद्भुतमभूत् तत्र देवानां पश्यतामपि ।**
**तद्युद्धकौशलं दृष्ट्वा भगवान् पर्यपूजयत् ॥ ५१ ॥**

**कल्याणकाण्डदीपः**

तत्रैकं देवाद्भुतमभूत् इत्याह **यत्कृतमिति** । स्वदत्तवरं सत्यं विधातुं तदा कृतदशावतार-विभवप्रदर्शनाय **यद्यत्** मत्स्यादिकं **कृतं** प्रादुर्भावितं **तत्तत्** मत्स्यकादिकं वृषभेण **कृतं** सुरमोहिन्या मायया कल्पितम् । **ह** खेदे । **तत्** मत्स्यादिकम् । **अद्भुतं** अदृष्टचरम् । **तद्युद्धकौशलं** तत्तदवतारोचित-स्वकर्तव्यपूर्वोत्तराङ्गसाकल्यकल्पनापुरःसरं उन्मर्यादसमरविमर्दननैपुण्यम् । **पर्यपूजयत्** बहुमानमकरोत् ।

**मूलम्**

**भो राक्षसकुलोत्पन्न पश्य मे पौरुषं बलम्।**
**[1]ततः संदर्शयामास गरुडं विकृताकृतिम् ॥ ५२ ॥**

**तत्रस्थं वासुदेवं च विश्वरूपिणमव्ययम्।**
**सहस्रभुजसंयुक्तं सहस्रायुधभूषितम् ॥ ५३ ॥**

१. इत्युक्त्वा दर्शयामास।

**कल्याणकाण्डदीपः**

ततः किमभूत् ? इत्यतो वृत्तं द्वितीयं पुंसूक्तोक्तविक्रमं प्रदर्शितवान् इत्याह— **भो** इत्यादिना **भूषितम्** इत्यन्तेन। **विकृताकृतिं** विस्तृताकृतिम्। विश्वम्भरमूर्तिपर्याप्तं तद्भारसहम्।

**मूलम्**

**तन्मायां राक्षसो दृष्ट्वा प्रत्येकं गरुडं हरिम्।**
**दर्शयामास राजेन्द्र स्वमायां सुरमोहिनीम् ॥ ५४ ॥**

**कल्याणकाण्डदीपः**

ततः किमभूदित्यत आह— **तन्मायाम्** इत्यादिना **मोहिनीम्** इत्यन्तेन। **तन्मायां** तदिच्छा-प्रादुर्भूताम् इतीति शेषः। **माया** परव्यामोहनकारी। इयं च हरेर्ममेव असुरमोहिनीं मायेति **दृष्ट्वा** ज्ञात्वा। **प्रत्येकं** एकैकं प्रति प्रत्येकम्। गरुडस्य गरुडकं हरेः हरिप्रतिकृतम्।

**मूलम्**

**नक्तञ्चरस्य चरितमतिक्रान्तुं क्षमो हरिः।**
**शशंस राक्षसं वीरं साधु साध्वित्यभाषत ॥ ५५ ॥**

**कल्याणकाण्डदीपः**

ननु दशावतारविभूतेः पुंसूक्तोक्तविभूतेश्च विक्रमस्य च प्रतिदर्शने राक्षसस्य कोऽभिप्रायः ? इति चेत्, इत्थं भासते— तवैतत् सर्वं मायिकं, न परमार्थसत्। अन्यथा मामकमपि मायिकं तथा किं न स्यात् इति। स हि सिद्धान्त आसुराणां यन्मानानामतत्त्वावेदकत्वम्। तद्दुर्मनसि तदेव शोभनं

स्यादिति । तुष्यत्विति न्यायेन तं शशंसेत्यत आह— **नक्तञ्चरस्येति** । साधु साधु शोभनं शोभनम् ।

**मूलम्**

**रे रे [1]राक्षसवर्य त्वां चक्रेण शतनेमिना ।**
**आहरिष्ये शिरः कायाद्यथा पक्वफलं द्रुमात् ॥ ५६ ॥**

१. ते राक्षसश्रेष्ठ ।, राक्षसवर्याद्य ।

**कल्याणकाण्डदीपः**

सदसद्विवेकः पराक्रमाद्भविष्यति । अतोऽहं पराक्रमे त्वमपि पराक्रमस्व इत्याह— **रे रे** इत्यादिना **द्रुमात्** इत्यन्तेन । रे दुष्टसम्बोधने । वाक्यादेरामन्त्रितस्येत्यादिना सूयार्थे द्विर्भावः । सर्वप्लुतस्य पाक्षिकत्वात् 'स्वरितमाम्रेडितम्' इत्यादिना प्लुताभावः । 'त्वाम्' इत्यकथितं कर्म । "तथा स्यान्नीह्-कृष्वहाम्" इत्युक्तेः । तव **शिर** इत्यर्थः । पूर्वं साधनावस्थायां शिरःपुष्पं इदानीं तत्फलमभूदिति फलोपमा । इत्युक्त्वा चक्रमुज्जृम्भे इत्यर्थः ।

इतःपरं एतदाविष्टसद्वृषभवृत्तान्तः द्विजीवसाधारणः । वामने द्वितीयाध्याये वृषभासुरकथायाः सद्वृषभवृत्तान्ते पर्यवसानात् । तथा हि— शङ्करः

"धर्मो मनुस्तपस्तेपे सोऽयं वृष इतीरितः ।
तपश्चरित तस्मिंस्तु ववृधे धर्म उत्तमः ।
ततः प्रसन्नो भगवान् महाकोलो महीयुतः ।
समक्षमब्रवीद्धर्मं शरन्मेघ इव स्थितः ।
धर्म त्वया तपस्तीव्रं वृषश्च ववृधे यतः ।
तस्मादयं गिरिवरो वृषभाख्यां गमिष्यति ।
विष्वक्सेनः पुराऽधर्मं जघान वृषभासुरम् ।
विनाशितस्तेन धर्मः पुनस्संवर्धितस्त्वया ।
तवापि लोकपालत्वं यमात्पश्चाद्भविष्यति ॥" इति ।

**मूलम्**

**इत्युक्तो देवराजेन वृषभो दण्डवद्भुवि ।**
**प्रणिपत्याह विश्वेशमस्तुवद्राक्षसेश्वरः ॥ ५७ ॥**

**मूलम्**

**भो राक्षसकुलोत्पन्न पश्य मे पौरुषं बलम्।**
**[१]ततः संदर्शयामास गरुडं विकृताकृतिम् ॥ ५२ ॥**

**तत्रस्थं वासुदेवं च विश्वरूपिणमव्ययम्।**
**सहस्रभुजसंयुक्तं सहस्रायुधभूषितम् ॥ ५३ ॥**

१. इत्युक्त्वा दर्शयामास।

**कल्याणकाण्डदीपः**

ततः किमभूत् ? इत्यतो वृत्तं द्वितीयं पुंसूक्तोक्तविक्रमं प्रदर्शितवान् इत्याह— **भो** इत्यादिना **भूषितम्** इत्यन्तेन। **विकृताकृतिं** विस्तृताकृतिम्। विश्वम्भरमूर्तिपर्याप्तं तद्भारसहम्।

**मूलम्**

**तन्मायां राक्षसो दृष्ट्वा प्रत्येकं गरुडं हरिम्।**
**दर्शयामास राजेन्द्र स्वमायां सुरमोहिनीम् ॥ ५४ ॥**

**कल्याणकाण्डदीपः**

ततः किमभूदित्यत आह— **तन्मायाम्** इत्यादिना **मोहिनीम्** इत्यन्तेन। **तन्मायां** तदिच्छा-प्रादुर्भूताम् इतीति शेषः। **माया** परव्यामोहनकारी। इयं च हरेर्ममेव असुरमोहिनीं मायेति **दृष्ट्वा** ज्ञात्वा। **प्रत्येकं** एकैकं प्रति प्रत्येकम्। गरुडस्य गरुडकं हरेः हरिप्रतिकृतम्।

**मूलम्**

**नक्तञ्चरस्य चरितमतिक्रान्तुं क्षमो हरिः।**
**शशंस राक्षसं वीरं साधु साध्वित्यभाषत ॥ ५५ ॥**

**कल्याणकाण्डदीपः**

ननु दशावतारविभूतेः पुंसूक्तोक्तविभूतेश्च विक्रमस्य च प्रतिदर्शने राक्षसस्य कोऽभिप्रायः ? इति चेत्, इत्थं भासते— तवैतत् सर्वं मायिकं, न परमार्थसत्। अन्यथा मामकमपि मायिकं तथा किं न स्यात् इति। स हि सिद्धान्त आसुराणां यन्मानानामतत्त्वावेदकत्वम्। तद्दुर्मनसि तदेव शोभनं

स्यादिति । तुष्यत्विति न्यायेन तं शशंसेत्यत आह— **नक्तञ्चरस्येति** । साधु साधु शोभनं शोभनम् ।

**मूलम्**

**रे रे [1]राक्षसवर्य त्वां चक्रेण शतनेमिना ।**
**आहरिष्ये शिरः कायाद्यथा पक्वफलं द्रुमात् ॥ ५६ ॥**

१. ते राक्षसश्रेष्ठ ।, राक्षसवर्याद्य ।

**कल्याणकाण्डदीपः**

सदसद्विवेकः पराक्रमाद्भविष्यति । अतोऽहं पराक्रमे त्वमपि पराक्रमस्व इत्याह— **रे रे** इत्यादिना **द्रुमात्** इत्यन्तेन । रे दुष्टसम्बोधने । वाक्यादेरामन्त्रितस्येत्यादिना सूयाद्यर्थे द्विर्भावः । सर्वप्लुतस्य पाक्षिकत्वात् 'स्वरितमाम्रेडितम्' इत्यादिना प्लुताभावः । 'त्वाम्' इत्यकथितं कर्म । "तथा स्यान्नीहृ-कृष्वहाम्" इत्युक्तेः । तव **शिर** इत्यर्थः । पूर्वं साधनावस्थायां शिरःपुष्पं इदानीं तत्फलमभूदिति फलोपमा । इत्युक्त्वा चक्रमुज्जृम्भे इत्यर्थः ।

इतःपरं एतदाविष्टसद्वृषभवृत्तान्तः द्विजीवसाधारणः । वामने द्वितीयाध्याये वृषभासुरकथायाः सद्वृषभवृत्तान्ते पर्यवसानात् । तथा हि— शङ्करः

"धर्मो मनुस्तपस्तेपे सोऽयं वृष इतीरितः ।
तपश्चरित तस्मिंस्तु ववृधे धर्म उत्तमः ।
ततः प्रसन्नो भगवान् महाकोलो महीयुतः ।
समक्षमब्रवीद्धर्मं शरन्मेघ इव स्थितः ।
धर्म त्वया तपस्तीव्रं वृषश्च ववृधे यतः ।
तस्मादयं गिरिवरो वृषभाख्यां गमिष्यति ।
विष्वक्सेनः पुराऽधर्मं जघान वृषभासुरम् ।
विनाशितस्तेन धर्मः पुनस्संवर्धितस्त्वया ।
तवापि लोकपालत्वं यमात्पश्चाद्भविष्यति ॥" इति ।

**मूलम्**

**इत्युक्तो देवराजेन वृषभो दण्डवद्भुवि ।**
**प्रणिपत्याह विश्वेशमस्तुवद्राक्षसेश्वरः ॥ ५७ ॥**

**मूलम्**

**भो राक्षसकुलोत्पन्न पश्य मे पौरुषं बलम् ।**
**[1]ततः संदर्शयामास गरुडं विकृताकृतिम् ॥ ५२ ॥**

**तत्रस्थं वासुदेवं च विश्वरूपिणमव्ययम् ।**
**सहस्रभुजसंयुक्तं सहस्रायुधभूषितम् ॥ ५३ ॥**

१. इत्युक्त्वा दर्शयामास ।

**कल्याणकाण्डदीपः**

ततः किमभूत् ? इत्यतो वृत्तं द्वितीयं पुंसूक्तोक्तविक्रमं प्रदर्शितवान् इत्याह— **भो** इत्यादिना **भूषितम्** इत्यन्तेन । **विकृताकृतिं** विस्तृताकृतिम् । विश्वम्भरमूर्तिपर्याप्तं तद्भारसहम् ।

**मूलम्**

**तन्मायां राक्षसो दृष्ट्वा प्रत्येकं गरुडं हरिम् ।**
**दर्शयामास राजेन्द्र स्वमायां सुरमोहिनीम् ॥ ५४ ॥**

**कल्याणकाण्डदीपः**

ततः किमभूदित्यत आह— **तन्मायाम्** इत्यादिना **मोहिनीम्** इत्यन्तेन । **तन्मायां** तदिच्छा-प्रादुर्भूताम् इतीति शेषः । **माया** परव्यामोहनकारी । इयं च हरेर्ममेव असुरमोहिनीं मायेति **दृष्ट्वा** ज्ञात्वा । **प्रत्येकं** एकैकं प्रति प्रत्येकम् । गरुडस्य गरुडकं हरेः हरिप्रतिकृतम् ।

**मूलम्**

**नक्तञ्चरस्य चरितमतिक्रान्तुं क्षमो हरिः ।**
**शशंस राक्षसं वीरं साधु साध्वित्यभाषत ॥ ५५ ॥**

**कल्याणकाण्डदीपः**

ननु दशावतारविभूतेः पुंसूक्तोक्तविभूतेश्च विक्रमस्य च प्रतिदर्शने राक्षसस्य कोऽभिप्रायः ? इति चेत्, इत्थं भासते— तवैतत् सर्वं मायिकं, न परमार्थसत् । अन्यथा मामकमपि मायिकं तथा किं न स्यात् इति । स हि सिद्धान्त आसुराणां यन्मानानामतत्त्वावेदकत्वम् । तद्दुर्मनसि तदेव शोभनं

स्यादिति । तुष्यत्विति न्यायेन तं शशंसेत्यत आह— **नक्तञ्चरस्येति** । **साधु साधु** शोभनं शोभनम् ।

**मूलम्**

**रे रे [1]राक्षसवर्य त्वां चक्रेण शतनेमिना ।**
**आहरिष्ये शिरः कायाद्यथा पक्वफलं द्रुमात् ॥ ५६ ॥**

१. ते राक्षसश्रेष्ठ ।, राक्षसवर्याद्य ।

**कल्याणकाण्डदीपः**

सदसद्विवेकः पराक्रमाद्भविष्यति । अतोऽहं पराक्रमे त्वमपि पराक्रमस्व इत्याह— **रे रे** इत्यादिना **द्रुमात्** इत्यन्तेन । रे दुष्टसम्बोधने । वाक्यादेरामन्त्रितस्येत्यादिना सूयार्थे द्विर्भावः । सर्वप्लुतस्य पाक्षिकत्वात् 'स्वरितमाम्रेडितम्' इत्यादिना प्लुताभावः । 'त्वाम्' इत्यकथितं कर्म । "तथा स्यान्नीहृ-कृष्वहाम्" इत्युक्तेः । तव **शिर** इत्यर्थः । पूर्वं साधनावस्थायां शिरःपुष्पं इदानीं तत्फलमभूदिति फलोपमा । इत्युक्त्वा चक्रमुज्जृम्भे इत्यर्थः ।

इतःपरं एतदाविष्टसद्वृषभवृत्तान्तः द्विजीवसाधारणः । वामने द्वितीयाध्याये वृषभासुरकथायाः सद्वृषभवृत्तान्ते पर्यवसानात् । तथा हि— शङ्करः

"धर्मो मनुस्तपस्तेपे सोऽयं वृष इतीरितः ।
तपश्चरित तस्मिंस्तु ववृधे धर्म उत्तमः ।
ततः प्रसन्नो भगवान् महाकोलो महीयुतः ।
समक्षमब्रवीद्धर्मं शरन्मेघ इव स्थितः ।
धर्म त्वया तपस्तीव्रं वृषश्च ववृधे यतः ।
तस्मादयं गिरिवरो वृषभाख्यां गमिष्यति ।
विष्वक्सेनः पुराऽधर्मं जघान वृषभासुरम् ।
विनाशितस्तेन धर्मः पुनस्संवर्धितस्त्वया ।
तवापि लोकपालत्वं यमात्पश्चाद्भविष्यति ॥" इति ।

**मूलम्**

**इत्युक्तो देवराजेन वृषभो दण्डवद्भुवि ।**
**प्रणिपत्याह विश्वेशमस्तुवद्राक्षसेश्वरः ॥ ५७ ॥**

**गूढकर्तृकव्याख्यानम्**

ततः क्रीडादिगुणविशिष्टः हरिः वृषभवचनं श्रुत्वा मन्दहासं कृतवान् । कुतः ? स्वेन दशावताराः प्रदर्शनीयाः सन्ति । अत्रैव आनन्दाद्रौ तुम्बुरुतीर्थे सत्यलोकः । अत्रैव ब्रह्मा वेदाभ्यासे निरतः । तं विधिं वेदाभिमानिदेवाः सेवमानाः । एतत्सर्वं दर्शनीयम् । इतः वेदं अपहर्तुं हयग्रीवाख्यो दैत्यः आगमिष्यन् प्रदर्शनीयः । तदा स्वेन मत्स्यावतारः करणीयः । तदा असुरः अमृतसमुद्रं कलशं मन्थानं मन्दरं नेत्रं वासुकिं मथनकर्तॄन् देवासुरान् प्रति दर्शयिता । तदा मया कूर्मावतारेण भवितव्यम् । एवं एकैकस्मिन् अवतारे युद्धावसाने मच्चरितं सर्वमपि विडम्बयति असुर इति भाविदैवकरिष्यमाणप्रतिकृतीः प्रत्यक्षीकृत्य स्वकीयावतारकृतीः परकीयविरुद्धप्रतिकृतीः प्रदर्शयेत् इति मत्वा किञ्चित् हास्यमुखोऽभवत् । ततः युद्धे अतिकाङ्क्षया उन्मत्तं तं वृषभं प्रति शत्रुनाशकः हरिः आह— हे असुर ! तथाऽस्तु । त्वदिष्टं पूरयामि इति । ततः तुम्बुरुतीर्थसमीपे वृषभश्रीनिवासयोः युद्धं प्रावर्तत । तदा तस्मै दत्तवरं सत्यं विधातुं असुरेण काङ्क्षितं दशावतारविभवं प्रदर्शयितुं यत् यत् श्रीहरिणा मत्स्यकूर्मवराहाद्यवतारकृत्यं प्रादुर्भावितं तत् तत् वृषभेण सुरमोहिन्या स्वमायाशक्त्या कल्पितं दर्शितं च । ईदृशयुद्धं पश्यतां देवानामपि अदृष्टचरं अश्रुतचरं अत्यद्भुतं चासीत् । तस्य राक्षसस्य मत्स्यकूर्मादितत्तदवतारेषु-कर्तव्यपूर्वोत्तरा-वान्तरव्यापार-कल्पितव्यापारेषु अतिनैपुण्यं दृष्ट्वा अव्याकृतषड्गुणसम्पन्नः श्रीहरिः तस्य सादरं बहुमानं अकरोत् ।

ततः असुरं प्रति, "असुरकुलोत्पन्न ! अद्य मम पुरुषसम्बन्धिबलं दर्शयामि, पश्य" इति वदन् दैत्येन वृतं विश्वम्भरमूर्तेः पर्याप्तं तद्भारसहं अद्भुताकृतिं गरुडं तद्गरुडे आसीनं अनन्तभुजयुक्तं अनन्तायुधभूषितं अनन्तशिरश्चरणैरुपेतं नाशरहितं स्वस्य वासुदेवात्मकं विश्वरूपं दर्शितवान् । असुरः तदा स्वमायया सुरमोहिन्या प्रति विश्वरूपं दर्शितवान् । तदा हरिः असुरचरितं सर्वं अतिक्रान्तं क्षमोऽपि तं दैत्यं शोभनं शोभनं इति शशंस । कुतः ? आत्मप्रदर्शितं सर्वं मायिकम् । अत एव असुरप्रदर्शितं अपि मायिकम् । हरिप्रदर्शितं सत् चेत् असुरदर्शितमपि सत् अभविष्यत् । तथा नासीत् । अतः हरिचरितं मायिकं इति यत् असुरः ज्ञातवान् तादृशमिथ्याज्ञानं असुरस्य शोभनमेव भाति इति तं शशंस । तदनु हरिः, "हे असुर ! इदं सत् इदं असत् इति विवेकः पराक्रमात् भविष्यति । अतः अहं पराक्रमे, त्वं च पराक्रमस्व" इति वदन् पुनः वक्ति— "रे रे असुरवर, अद्य शतनेमिना मम चक्रायुधेन द्रुमात् पक्वफलं इव तव कायात् शिरः आहरिष्ये इति । एवं हरिणोक्ते वृषभः दण्डवत् भुवि प्रणिपत्य जगदीशं एवं अस्तुवत् ।

मूलम्

**वृषभ उवाच—**

**चक्रपाणे नमस्तुभ्यं चक्रस्य चरितं श्रुतम् ।**
**यच्चक्रेण प्रतप्तस्तु मुक्तिमेति न संशयः ॥ ५८ ॥**

**कल्याणकाण्डदीपः**

श्रुतमिति । चक्रेण प्रतप्तो मुक्तिमेतीति । "यो ह वै लोके भूम्रो धर्माननुतिष्ठमानो विष्णुना चक्रं धत्तेऽग्निर्वै सहस्रारः सहस्रनेमिः नेमिना तप्ततनुः सायुज्यलोकतामाप्नोति" इत्यादि श्रुतिसिद्धम् ।

मूलम्

**यच्चक्रेण पुरा राजा कीर्तिमान् कीर्तिमाप्तवान् ।**
**त्वच्चक्रेण हतः शीघ्रं गच्छामि तव मन्दिरम् ॥ ५९ ॥**

**कल्याणकाण्डदीपः**

**यच्चक्रेणेति** । पुरा पूर्वकल्पे ।

"सार्वभौमः पुरा कश्चिदैक्ष्वाकः कुलभूषणः ।
कीर्तिमानिति विख्यातो नृपपुत्रो महायशाः ॥"

इत्युक्तः कीर्तिमान्नाम राजा । **यच्चक्रेण**

"विष्णुमुक्तं तदा चक्रं शीघ्रमागत्य तद्रणम् ।
यमदण्डेन संयुद्धा ब्रह्मास्त्रं विनिवार्य च ॥"

इत्युक्तचक्रेण कीर्तिं वैष्णवधर्मं श्रद्धादार्ढ्येन हरिभक्ताग्रेसरः कालान्तकयमविजयी वैकुण्ठ-विहारीति कीर्तिम् आप्तवानित्यर्थः । विशेषजिज्ञासायां स्कान्दे वैशाखमाहात्म्ये दशमादि द्वादशान्ता अध्यायाः श्रोतव्याः ।

मूलम्

**एवमुक्त्वा हरेः पादौ संस्पृशन् वृषभासुरः ।**
**वरं ययाचे वृषभश्चायं शैलो ममाभिधः ॥ ६० ॥**

## गूढकर्तृकव्याख्यानम्

ततः क्रीडादिगुणविशिष्टः हरिः वृषभवचनं श्रुत्वा मन्दहासं कृतवान् । कुतः ? स्वेन दशावताराः प्रदर्शनीयाः सन्ति । अत्रैव आनन्दाद्रौ तुम्बुरुतीर्थे सत्यलोकः । अत्रैव ब्रह्मा वेदाभ्यासे निरतः । तं विधिं वेदाभिमानिदेवाः सेवमानाः । एतत्सर्वं दर्शनीयम् । इतः वेदं अपहर्तुं हयग्रीवाख्यो दैत्यः आगमिष्यन् प्रदर्शनीयः । तदा स्वेन मत्स्यावतारः करणीयः । तदा असुरः अमृतसमुद्रं कलशं मन्थानं मन्दरं नेत्रं वासुकिं मथनकर्तॄन् देवासुरान् प्रति दर्शयिता । तदा मया कूर्मावतारेण भवितव्यम् । एवं एकैकस्मिन् अवतारे युद्धावसाने मच्चरितं सर्वमपि विडम्बयति असुर इति भाविदैवकरिष्यमाणप्रतिकृतीः प्रत्यक्षीकृत्य स्वकीयावतारकृतीः परकीयविरुद्धप्रतिकृतीः प्रदर्शयेत् इति मत्वा किञ्चित् हास्यमुखोऽभवत् । ततः युद्धे अतिकाङ्क्षया उन्मत्तं तं वृषभं प्रति शत्रुनाशकः हरिः आह— हे असुर ! तथाऽस्तु । त्वदिष्टं पूरयामि इति । ततः तुम्बुरुतीर्थसमीपे वृषभश्रीनिवासयोः युद्धं प्रावर्तत । तदा तस्मै दत्तवरं सत्यं विधातुं असुरेण काङ्क्षितं दशावतारविभवं प्रदर्शयितुं यत् यत् श्रीहरिणा मत्स्यकूर्मवराहाद्यवतारकृत्यं प्रादुर्भावितं तत् तत् वृषभेण सुरमोहिन्या स्वमायाशक्त्या कल्पितं दर्शितं च । ईदृशयुद्धं पश्यतां देवानामपि अदृष्टचरं अश्रुतचरं अत्यद्भुतं चासीत् । तस्य राक्षसस्य मत्स्यकूर्मादितत्तदवतारेषु-कर्तव्यपूर्वोत्तरावान्तरव्यापार-कल्पितव्यापारेषु अतिनैपुण्यं दृष्ट्वा अव्याकृतषड्गुणसम्पन्नः श्रीहरिः तस्य सादरं बहुमानं अकरोत् ।

ततः असुरं प्रति, "असुरकुलोत्पन्न ! अद्य मम पुरुषसम्बन्धिबलं दर्शयामि, पश्य" इति वदन् दैत्येन वृतं विश्वम्भरमूर्तेः पर्याप्तं तद्भारसहं अद्भुताकृतिं गरुडं तदारुडे आसीनं अनन्तभुजयुक्तं अनन्तायुधभूषितं अनन्तशिरश्चरणैरुपेतं नाशरहितं स्वस्य वासुदेवात्मकं विश्वरूपं दर्शितवान् । असुरः तदा स्वमायया सुरमोहिन्या प्रति विश्वरूपं दर्शितवान् । तदा हरिः असुरचरितं सर्वं अतिक्रान्तं क्षमोऽपि तं दैत्यं शोभनं शोभनं इति शशंस । कुतः ? आत्मप्रदर्शितं सर्वं मायिकम् । अत एव असुरप्रदर्शितं अपि मायिकम् । हरिप्रदर्शितं सत् चेत् असुरदर्शितमपि सत् अभविष्यत् । तथा नासीत् । अतः हरिचरितं मायिकं इति यत् असुरः ज्ञातवान् तादृशमिथ्याज्ञानं असुरस्य शोभनमेव भाति इति तं शशंस । तदनु हरिः, "हे असुर ! इदं सत् इदं असत् इति विवेकः पराक्रमात् भविष्यति । अतः अहं पराक्रमे, त्वं च पराक्रमस्व" इति वदन् पुनः वक्ति— "रे रे असुरवर, अद्य शतनेमिना मम चक्रायुधेन द्रुमात् पक्वफलं इव तव कायात् शिरः आहरिष्ये इति । एवं हरिणोक्ते वृषभः दण्डवत् भुवि प्रणिपत्य जगदीशं एवं अस्तुवत् ।

मूलम्

**वृषभ उवाच—**

**चक्रपाणे नमस्तुभ्यं चक्रस्य चरितं श्रुतम्।**
**यच्चक्रेण प्रतप्तस्तु मुक्तिमेति न संशयः ॥ ५८ ॥**

**कल्याणकाण्डदीपः**

**श्रुतमिति।** चक्रेण प्रतप्तो मुक्तिमेतीति। "यो ह वै लोके भूम्रो धर्माननुतिष्ठमानो विष्णुना चक्रं धत्तेऽग्निर्वै सहस्रारः सहस्रनेमिः नेमिना तप्ततनुः सायुज्यलोकतामाप्नोति" इत्यादि श्रुतिसिद्धम्।

मूलम्

**यच्चक्रेण पुरा राजा कीर्तिमान् कीर्तिमाप्तवान्।**
**त्वच्चक्रेण हतः शीघ्रं गच्छामि तव मन्दिरम् ॥ ५९ ॥**

**कल्याणकाण्डदीपः**

**यच्चक्रेणेति।** पुरा पूर्वकल्पे।

"सार्वभौमः पुरा कश्चिदैक्ष्वाकः कुलभूषणः।
कीर्तिमानिति विख्यातो नृपपुत्रो महायशाः॥"

इत्युक्तः कीर्तिमान्नाम राजा। **यच्चक्रेण**

"विष्णुमुक्तं तदा चक्रं शीघ्रमागत्य तद्रणम्।
यमदण्डेन संयुद्धा ब्रह्मास्त्रं विनिवार्य च॥"

इत्युक्तचक्रेण कीर्तिं वैष्णवधर्मं श्रद्धादार्ढ्येन हरिभक्ताग्रेसरः कालान्तकयमविजयी वैकुण्ठविहारीति कीर्तिम् आप्तवानित्यर्थः। विशेषजिज्ञासायां स्कान्दे वैशाखमाहात्म्ये दशमादि द्वादशान्ता अध्यायाः श्रोतव्याः।

मूलम्

**एवमुक्त्वा हरेः पादौ संस्पृशन् वृषभासुरः।**
**वरं ययाचे वृषभश्चायं शैलो ममाभिधः ॥ ६० ॥**

**कल्याणकाण्डदीपः**

**एवमुक्त्वेति** । हे हरे मयैव पूर्वं प्राणाः शिरःपुष्पार्हणेन त्वत्पदाम्बुजे समर्पिताः ।

जीवितं तु न याचेऽहं क्षुद्रं पापस्य कारणम् ।
त्वच्चक्रेण हतः शीघ्रं गच्छामि तव मन्दिरम् ॥

अतः त्वमिदानीं चक्रेणाहृत्य शिरःफलमनुगृहाण इत्येवमुक्त्वा । ममाभिधः 'अस्तु' इति शेषः । तथा च **ममाभिधः** मत्सम्बन्धि "वृषभ इति नामवानस्तु" इति वरं ययाच इत्यन्वयः ।

**मूलम्**

**भवेदेवं समालिङ्ग्य त्यक्तवान् स्वकलेवरम् ।**
**(समालिङ्ग्य 'भवेदेवमि'त्युक्त्वा हरिणाऽथ सः ।**
**विसृष्टचक्रसञ्छिन्नः त्यक्तवान् स्वकलेवरम् ॥)**
**तस्माद्वृषभशैलोऽयं कृते [१]ख्यातिमगात् पुरा ॥ ६१ ॥**

१. ख्यातिर्मयोदिता ।, ख्यातिमुपेयिवान् ।

**कल्याणकाण्डदीपः**

**भवेदेवमिति** । **एवं** वृषभाचल इति नामवान् **भवेत्** इति वरे दत्ते । **समालिङ्ग्य** । वरदानानन्तरं अरिःशिरो जहार । ततो निशाततरवारतरसाऽऽदृतकदलीकाण्डवत् क्षणं जीवन् समालिङ्ग्येत्यर्थः । अतो न हरेः प्रपन्ना इति दोषो न ह्यालिङ्गनाबाधः ।

*तदुक्तं ब्रह्माण्डे*—

ततः कदाचिन्मृगया विहाराकाङ्क्षमानसः ।
सेनापतिमुवाचेदं प्रहसन्नेव माधवः ।
देशे सविपिनोद्देशे विहर्तुमिति मे मतिः ।
सज्जीभवन्तु सैन्यानि निदेशाद्भवतोऽधुना ।
इत्युक्त्वा भगवांस्तूर्णं निर्ययौ मृगलालसः ।
विचचारोत्तरगिरौ समं शबलबालकैः ।
तस्मिन् काले शिवे भक्तो वृषभाख्यो महासुरः ।"

शिवे भक्तः नृसिंहभक्तः । भविष्योत्तरानुगुण्यात् ।

"तयोस्समभवद्युद्धं बभूव भयदायकम् ।"

ततः शबराकृतिधारिणं हरिं दुर्जयं मत्वा मायां वितत्य स्वयमन्तर्दधे । तन्मायानाशाय चक्रं प्रेरयामास । तेन विनाशितां तां मायां दृष्ट्वा विस्मितः अमानुषं परब्रह्मेति ज्ञात्वा "अनेन हतो मुक्तोऽस्मि" इति चिन्तयन् अभीष्टं प्रार्थयामास—

"जीवितं तु न याचेऽहं क्षुद्रं पापस्य कारणम् ।
अतो यास्यामि निहतश्चक्रेण परमां गतिम् ॥"

"अतःप्रभृति अयं गिरिः वृषभाचल इति मदीयां प्रथां यातु" इत्युक्ते "तथाऽस्तु" इति दत्तवरं वैकुण्ठं ज्ञात्वा

"ततस्सुदर्शनश्चापि ज्वालाजटिलविग्रहः ।
जहार समरे शत्रोः कण्ठनालशिरोम्बुजम् ॥" इति ।

"न च रुषा" इत्येतत् "कुप्यत" इति वाच्यम् । अनुग्रहादेव हननात् ।

अत्रेदं बोध्यम्— देवानां कर्मकारकगणनिविष्टासुरमध्येऽयमपि आजानेयगणे निविष्टोऽसुरः कश्चनेति पक्षे न जीवद्वयं चिन्त्येति ।

यद्वा अयं पुनरेकोऽर्थः सुगमः— तथा हि वृषभेण त्रितयं याचितं युद्धं दशावतारविभवः पराक्रमश्चेति । तयोर्युद्धमित्यादिना युद्धम् । यत्कृतमित्यादिना दशावतारविभवः । रेरे इत्यादिना पराक्रमश्चेति । अस्मिन्नाम्नि चक्रमाहात्म्यकथनात् धर्ममाहात्म्यकथनाच्च प्रथमदिग्वत्समाहात्म्यमुक्तम् । अनेन साधकानां धर्माभिवृद्धिः ।

ननु कथमनेन जनकस्यातङ्कपरिहारः ? इति चेत्, इत्थम्— यथा धर्मग्लापकवृषपेषणं हरिणा कृतम्, तथा

"यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥" (गीता ४-७)

इत्यादि स्ववचनपरिपालनायावतीर्णेन हरिणा रावणातङ्कपरिहारो भवतीति ॥

॥ इति श्रीवृषभनामसेवा श्रीश्रीनिवासार्पणमस्तु ॥

### गूढकर्तृकव्याख्यानम्

भो ! भो ! सुदर्शनधारिन् जगदीश ! तुभ्यं नमो नमः । "यो ह वै लोके भूम्नो धर्माननुतिष्ठमानो अग्निना चक्रं धत्ते अग्निर्वै सहस्रारः सहस्रनेमिः । नेमिना तप्ततनुः सायुज्यलोकतामाप्नोति" इति श्रुतेः यस्य तव चक्रेण प्रतप्तः पुमान् शाश्वतस्वरूपानन्दाविर्भावलक्षणमुक्तिं असंशयं आप्नोति तादृश-चक्रमहिमा मया श्रुता । पूर्वकल्पे इक्ष्वाकुराजवंशभूषणः सार्वभौमः यशस्वी कीर्तिमान् इति राजपुत्रः आसीत् । एकदा महाविष्णुभक्तस्य तस्य यमेन सह युद्धं प्रवृत्तम् । यमः यमदण्डं ब्रह्मास्त्रं च प्रयुक्त-वान् । तदा स्वभक्तरक्षणाय विष्णुना मुक्तं चक्रम् । तत् यमदण्डसंयुक्तब्रह्मास्त्रं निवारयामास । तादृश-चक्रमहिम्ना हरिभक्ताग्रेसरः कीर्तिमान् विष्णुवैष्णवधर्मश्रद्धया कालान्तकं अपि विजित्य वैकुण्ठविहारी इति कीर्तिं आप । अतः अद्य अहं तव चक्रेण हतः द्रुतं तव मन्दिरं वैकुण्ठं यामि । हे हरे ! पूर्वमेव मम प्राणान् तव पादाम्बुजे शिरःपुष्पपूजापूर्वकं समर्पितवान् । इदं मम जीवितं नाथ न नाथे । तत् क्षुद्रं पापसाधनं चास्ति । अतः प्रभो ! इदानीं मम शिरः चक्रेण जहार । ततः क्षणं जीवन् देवं समालिङ्ग्य प्राणान् तत्याज असुरः ।

अस्मिन् वृषनाम्नि धर्ममाहात्म्यं कथितं भवति ॥ अत्र विचारः— येन प्रकारेण धर्मग्लापक-वृषदैत्यपेषणं हरिणा कृतं तेन प्रकारेण "यदा यदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थान-मधर्मस्य तदात्मानं सृजाम्यहम्" इत्यादि स्ववाक्यपरिपालनाय अवतरता हरिणा जनकस्य रावणात् चिन्तापरिहारः भवत्येवेति मन्तव्यम् । एवं जनकनृप ! वृषभनिमित्तेन अयं वै गिरिः कृते वृषाद्रिरिति ख्यातः ॥

### मूलम्

### त्रेतायुगेऽञ्जनाचलनामनिष्पत्तिः

**जनक उवाच—**

**कथमञ्जनशैलेति त्रेतायां नाम मे वद ॥ ६२ ॥**

#### कल्याणकाण्डदीपः

देवदेव जगन्नाथ प्रसीद पुरुषोत्तम ।
परिपालय मां भक्तं शरणागतवत्सल ॥
बुद्धिर्बलं यशो धैर्यं निर्भयत्वमरोगता ।
अजाड्यं वाक्पटुत्वं च हनुमत्स्मरणाद्भवेत् ॥

**कथमञ्जनशैलेतीति**। नामस्वामिनं प्रति सर्वे विद्यादिव्यवहाराः सम्बुध्य प्रवर्तन्ते। "नक्षत्रनामा प्रथमं दद्यात् सम्बुध्य चैव हि" इत्युक्तत्वात्। "राम रामेति रामेति रमे रामे" इति दर्शनात्। "आनन्दतीर्थेति पदम्" इति दर्शनाच्च। सम्बुध्यनुकरणमिदम्। अतोऽञ्जनशैलेत्याद्गुण एव अञ्जन-शैलः इति। अञ्जनशैलेतीत्यन्तः 'सुपसुपा' इति वा समासः, अविभक्तिकनिर्देशो वा।

**मूलम्**

**शतानन्द उवाच—**

**पुरा केसरिणः पत्नी ह्यञ्जना कञ्जलोचना** ॥ ६३ ॥

**कल्याणकाण्डदीपः**

**पुरेति**। त्रेतायाम्। **केसरीति**। "केशान् केसरवर्णाभान् सम्भूतो वानरोत्तमः। केसरीत्येव नामासौ कथ्यते भुवि मानवैः" इत्युत्तररामचरितोक्तप्रकारेण प्रशस्ताः केसराः अस्य सन्तीति केसरी। तन्नामकस्य मरुत्प्रवरावतारस्य ब्रह्मपुत्रस्य कपेः। **पत्नी अञ्जनेति**। अनक्ति केसरिणो मातामहस्य नेत्रस्थानीयं दौहित्रं अञ्जनवत् तपसा व्यक्तीकरोतीति अञ्जना।

*तदुक्तं ब्रह्माण्डे—*

"त्रेतायुगेऽसुरः कश्चित्केसरीत्येव विश्रुतः।
पुत्रार्थी देवमुद्दिश्य तपस्तेपे महायशाः।
प्रीतः प्रादुरभूदग्रे शङ्करो लोकशङ्करः।
न पुत्रं दातुमिच्छामि परितुष्टोऽप्यहं तव।
यस्मात्ते विधिना पूर्वं लिखिता पुत्रहीनता।
तथाऽपि दास्ये कन्यां वै रूपयौवनशालिनीम्।
तस्यां उत्पत्स्यते पुत्रस्त्वदभीष्टचरो ध्रुवम्।
ततस्तस्याऽभवत् कन्या ह्यञ्जना मञ्जुभाषिणी।
ततः कपिवरः कश्चित् केसरीति भुवि श्रुतः।
अभिगम्य ययाचे तां कन्यां यौवनशालिनीम्।
तस्मै तामञ्जनां प्रादात्...................... ॥" इति।

### गूढकर्तृकव्याख्यानम्

भो ! भो ! सुदर्शनधारिन् जगदीश ! तुभ्यं नमो नमः । "यो ह वै लोके भूम्नो धर्माननुतिष्ठमानो अग्निना चक्रं धत्ते अग्निर्वै सहस्रारः सहस्रनेमिः । नेमिना तप्ततनुः सायुज्यलोकतामाप्नोति" इति श्रुतेः यस्य तव चक्रेण प्रतप्तः पुमान् शाश्वतस्वरूपानन्दाविर्भावलक्षणमुक्तिं असंशयं आप्नोति तादृश-चक्रमहिमा मया श्रुता । पूर्वकल्पे इक्ष्वाकुराजवंशभूषणः सार्वभौमः यशस्वी कीर्तिमान् इति राजपुत्रः आसीत् । एकदा महाविष्णुभक्तस्य तस्य यमेन सह युद्धं प्रवृत्तम् । यमः यमदण्डं ब्रह्मास्त्रं च प्रयुक्त-वान् । तदा स्वभक्तरक्षणाय विष्णुना मुक्तं चक्रम् । तत् यमदण्डसंयुक्तब्रह्मास्त्रं निवारयामास । तादृश-चक्रमहिम्ना हरिभक्ताग्रेसरः कीर्तिमान् विष्णुवैष्णवधर्मश्रद्धया कालान्तकं अपि विजित्य वैकुण्ठविहारी इति कीर्तिं आप । अतः अद्य अहं तव चक्रेण हतः द्रुतं तव मन्दिरं वैकुण्ठं यामि । हे हरे ! पूर्वमेव मम प्राणान् तव पादाम्बुजे शिरःपुष्पपूजापूर्वकं समर्पितवान् । इदं मम जीवितं नाथ न नाथे । तत् क्षुद्रं पापसाधनं चास्ति । अतः प्रभो ! इदानीं मम शिरः चक्रेण जहार । ततः क्षणं जीवन् देवं समालिङ्ग्य प्राणान् तत्त्याज असुरः ।

अस्मिन् वृषनाम्नि धर्ममाहात्म्यं कथितं भवति ॥ अत्र विचारः— येन प्रकारेण धर्मग्लापक-वृषदैत्यपेषणं हरिणा कृतं तेन प्रकारेण "यदा यदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थान-मधर्मस्य तदात्मानं सृजाम्यहम्" इत्यादि स्ववाक्यपरिपालनाय अवतरता हरिणा जनकस्य रावणात् चिन्तापरिहारः भवत्येवेति मन्तव्यम् । एवं जनकनृप ! वृषभनिमित्तेन अयं वै गिरिः कृते वृषाद्रिरिति ख्यातः ॥

### मूलम्

### त्रेतायुगेऽञ्जनाचलनामनिष्पत्तिः

**जनक उवाच—**

**कथमञ्जनशैलेति त्रेतायां नाम मे वद** ॥ ६२ ॥

#### कल्याणकाण्डदीपः

देवदेव जगन्नाथ प्रसीद पुरुषोत्तम ।
परिपालय मां भक्तं शरणागतवत्सल ॥
बुद्धिर्बलं यशो धैर्यं निर्भयत्वमरोगता ।
अजाड्यं वाक्पटुत्वं च हनुमत्स्मरणाद्भवेत् ॥

**कथमञ्जनशैलेतीति** । नामस्वामिनं प्रति सर्वे विद्यादिव्यवहाराः सम्बुध्य प्रवर्तन्ते । "नक्षत्रनामा प्रथमं दद्यात् सम्बुध्य चैव हि" इत्युक्तत्वात् । "राम रामेति रामेति रमे रामे" इति दर्शनात् । "आनन्दतीर्थेति पदम्" इति दर्शनाच्च । सम्बुध्यनुकरणमिदम् । अतोऽञ्जनशैलेत्याद्गुण एव अञ्जन-शैलः इति । अञ्जनशैलेतीत्यन्तः 'सुपसुपा' इति वा समासः, अविभक्तिकनिर्देशो वा ।

**मूलम्**

**शतानन्द उवाच—**

**पुरा केसरिणः पत्नी ह्यञ्जना कञ्जलोचना ॥ ६३ ॥**

**कल्याणकाण्डदीपः**

**पुरेति** । त्रेतायाम् । **केसरीति** । "केशान् केसरवर्णाभान् सम्भूतो वानरोत्तमः । केसरीत्येव नामासौ कथ्यते भुवि मानवैः" इत्युत्तररामचरितोक्तप्रकारेण प्रशस्ताः केसराः अस्य सन्तीति केसरी । तन्नामकस्य मरुत्प्रवरावतारस्य ब्रह्मपुत्रस्य कपेः । **पत्नी अञ्जनेति** । अनक्ति केसरिणो मातामहस्य नेत्रस्थानीयं दौहित्रं अञ्जनवत् तपसा व्यक्तीकरोतीति अञ्जना ।

*तदुक्तं ब्रह्माण्डे—*

"त्रेतायुगेऽसुरः कश्चित्केसरीत्येव विश्रुतः ।
पुत्रार्थी देवमुद्दिश्य तपस्तेपे महायशाः ।
प्रीतः प्रादुरभूदग्रे शङ्करो लोकशङ्करः ।
न पुत्रं दातुमिच्छामि परितुष्टोऽप्यहं तव ।
यस्मात्ते विधिना पूर्वं लिखिता पुत्रहीनता ।
तथाऽपि दास्ये कन्यां वै रूपयौवनशालिनीम् ।
तस्यां उत्पत्स्यते पुत्रस्त्वदभीष्टचरो ध्रुवम् ।
ततस्तस्याऽभवत् कन्या ह्यञ्जना मञ्जुभाषिणी ।
ततः कपिवरः कश्चित् केसरीति भुवि श्रुतः ।
अभिगम्य ययाचे तां कन्यां यौवनशालिनीम् ।
तस्मै तामञ्जनां प्रादात्...................... ॥" इति ।

देवं महादेवान्तर्यामिणं नृसिंहमित्यर्थः । अस्यैव कुञ्जर इति नामान्तरम् । "दुहिता वानरेन्द्रस्य कुञ्जरस्य महात्मनः" इत्युक्तेः । तथा च हनूमान् केसरिणः पुत्रो दौहित्रश्च । यथाकथञ्चित् केसरिपुत्र इति ख्यात्यर्थं सनाम्ने कन्यां ददाविति भावः । अञ्जनापिता केसरी यद्यप्यसुरः तथाऽप्यसौ प्राणे रमत इति वायुभक्तः । नृसिंहोपासको वृषभवत् । शचीवदञ्जनाया असुरजत्वेऽप्यदोषात् । इयमञ्जना अप्सरा । अञ्जनात्वेन सञ्जाता । "मञ्जुळा पुञ्जकस्थली" इत्युक्तेः । *रामायणेऽपि*— "इयमप्सरसां श्रेष्ठा विख्याता पुञ्जकस्थली" इति ॥

**मूलम्**

***अनपत्याख्यदुःखेन मतङ्गमुनिमभ्यगात् ।**
**[1]ननाम मुनिशार्दूल[2]मनिन्द्यापत्यकर्शिता ॥ ६४ ॥**

१. आनम्य । २. मनपत्यातिकर्शिता ।

**कल्याणकाण्डदीपः**

**अनपत्याख्यदुःखेनेति** । अपत्यस्याभावोऽनपत्यम् । नञ्समासः । अपत्य इत्याख्या यस्य तत् । तच्च तत् दुःखं च, तेन ।

"अहो मम पिता मां वै पुत्रस्नेहेन निर्भरम् ।
पोषयामास तस्याहमानृण्यं केन वाऽऽप्नुयाम् ।
वृथा मे मन्दभाग्यायाः सन्ततिं च विना कृता ।
पुत्रेण मे विहीनाया किन्तु विश्रामितं कुलम् ।
धन्याः खलु स्त्रियस्ता वै यत्पश्यन्ति तनुस्मितम् ।

* अनपत्योऽपि सद्धर्मा लोजिन्नात्र संशयः । देवैस्तु पृथुजन्मार्थं हविरङ्गस्य नो हृतम् ।
अनपत्यत्वकर्मासौ बालहत्याकृतेः पुरा । अतो दुष्टोऽभवत् पुत्रः इष्टो विष्णुरतः पृथुः ।
नरदेवेह भवता नावधं किञ्चनास्थितम् । अस्त्येकं प्राक्तनमघं यदिहेदृक् त्वमप्रजः ।
पूर्वेऽपि कर्दम......... ........ ........ । ....... ....... ......... ॥
इत्थं विचिन्त्य सविचिन्त्य शतपुत्रसमा पुत्री यदि पात्रो प्रदीयते ।

* दुर्वृत्तिनिग्रहवोब्ब समचित्तवोब्ब । उत्तमनाद नाल्कु मक्कळिद्द मेले ।
हेत्तरेनु इन्नु हेरदिद्दरेनु । सुतरिल्लदवरिगे सद्गति इल्लवेंबेंब कृतकशास्त्रवु लौकिकभावके ॥

मुखमङ्के शयानानां पुत्राणां पुत्रवत्सलाः ।
इति सञ्चिन्त्य बहुधा पुत्रार्थं वामलोचना ॥" —*इति ब्रह्माण्डोक्तदुःखेन ।*

**अनिन्द्या** अपत्यप्रतिबन्धकदुर्लक्षणरहिता । **अपत्यकर्शिता** अपत्यचिन्तातनूकृततनुवत् कृशी (तनुवल्लरी) ।

**मूलम्**

**उवाच वचनं नेत्रनीरसिक्तकलेवरा ।**

**अञ्जनोवाच—**

**किं मे तापसशार्दूल अपुत्रायाश्च का गतिः ॥ ६५ ॥**

**कल्याणकाण्डदीपः**

**किं म इति** । **हे तापसशार्दूल !** मे किं कृतं दुष्कृतं कृतमस्ति । पुरतो मे **अपुत्राया गतिः** पुत्रप्राप्तिकरी रीतिः **का** ?

**गूढकर्तृकव्याख्यानम्**

ततः जनकः "मुनिवर ! भवन्मुखात् कृते वेङ्कटगिरेः वृषभाचलनामप्रवृत्तिनिमित्तं तद्गिरि-माहात्म्यश्रवणेन धर्मसाधनप्रकारं च ज्ञातवान् । अद्य वेङ्कटगिरेः त्रेतायां अञ्जनाचल इति नाम कथं प्राप्तं वद इति पप्रच्छ । शतानन्दो वक्ति— राजन् ! शृणु । 'पुरा' इत्युक्ते त्रेतायुगे केसरिनामा कपिवरः आसीत् । तस्य केसरिनाम कुत आयातम् ? केसरपर्णसदृशकेशविशिष्टत्वात् केसरीति नाम जातम् । अयं ब्रह्मणः पुत्रत्वेन जातत्वात् नरोत्तम इत्युच्यते । अयं अञ्जनां नाम कन्यां परिणिनाय । इयं अञ्जना नृसिंहोपासककेसरिनामकदैत्यस्य पत्नी । इमां रूपयौवनशालिनीं अञ्जनां कन्यां मे देहि इति केसरि-कपिवरः ययाचे । तदा केसरिदैत्यः सुप्रीतः केसरिणे कपिवराय प्रादात् । किञ्च केसरिदैत्यस्य पुमपत्यं नासीत् । केसरिपुत्रः इति दौहित्रस्य ख्यातिः भवेत् इति स्वसमाननाम्ने वराय अञ्जनां अदात् ।

अयं दैत्यः असुरोऽपि वायुभक्तः आसीत् । अतः अञ्जनायाः असुरकन्यात्वेऽपि दोषो नेति उक्तम् । इयं अञ्जना काचित् अप्सरः स्त्री । अस्याः पुञ्जकस्थली इति नाम इति रामायणे पठितम् । इयं केसरिपत्नी अञ्जना सती सचरित्रापि अपुत्रवती जाता । "पुन्नाम्नो नरकात् त्राता पुत्र इत्यभि-धीयते । अपुत्रस्य गतिर्नास्ति इति वेदविदो विदुः" इत्युक्तेः परत्र सद्गतिप्रापकपुत्रस्य अभावात् अञ्जना

अतिदुःखिता । अपत्याख्यदुःखेनेत्युक्तम् । अपत्यं नाम— न पतन्ति पितरः दुर्गता न भवन्ति येन तत् अपत्यम् । सुतः सुता च । अपत्याभावात् दुःखिता ।

तदा अञ्जना एवं आलोचयति— हन्त ! मम पिता मां पुत्रनिर्विशेषप्रीत्या पोषयामास । तस्य पितुः केन अनृण्यं आप्नुयाम् । अहं मन्दभाग्या । पुत्रहीनायाः मम सकाशात् मम कुलं विश्रान्तं नैव । लोके सुपुत्रवन्तः खलु भाग्यवन्तः इति । एवं सन्ततिप्राप्तये उपायं आलोचयन्ती मतङ्गमुनेः आश्रमं अगात् । तं मुनिं दृष्ट्वा प्रणम्य सन्ततिप्रतिबन्धकदुर्लक्षणरहिताऽपि अपत्त्याभावप्रयुक्त-चिन्ताशयेन कर्शितशरीरा अञ्जना मुनिं प्रति नेत्रयोः अश्रु विमुञ्चन्ती, भो तापसश्रेष्ठ ! अहं किं दुष्कृतं कृतवती ? पुरतः अपुत्रवत्या मे का गतिः ? पुत्रप्राप्तकरी रीतिः का वदेति पप्रच्छ ।

**मूलम्**

**[1]इत्युक्तः सोऽञ्जनादेव्या मतङ्गो वाक्यमब्रवीत् ।**

१. एवमुक्तो ।

**कल्याणकाण्डदीपः**

देव्या तपोमयदेहया ।

**मूलम्**

**मतङ्ग उवाच—**

**पम्पायाः पूर्वदिग्भागे पञ्चाशद्योजनान्तरे ॥ ६६ ॥**
**नारसिंहाश्रमो देवि वर्तते वसुधातले ।**
**तस्य दक्षिणदिग्भागे नारायणगिरेस्तटे ॥ ६७ ॥**
**उत्तरे स्वामितीर्थस्य वर्तते क्रोशमात्रके ।**
**वियद्गङ्गेति विख्याता तत्र गच्छ यथासुखम् ।**
**तत्र स्नात्वाऽथ (तु) कल्याणि [1]द्वादशाब्दव्रतं चर ॥ ६८ ॥**

१. द्वादशाब्दं तपश्चर ।

**गूढकर्तृकव्याख्यानम्**

एवं अञ्जनादेव्या विज्ञापितो मतङ्गमुनिः तस्यै एवं हितं उपदिशति— "मङ्गलकरि अञ्जना-देवि ! अत्र भूतले पम्पानाम सरः अस्ति । तस्य पूर्वदिशि पञ्चाशत् योजनदूरे नारसिंहाश्रम इति

आश्रमः । तस्य दक्षिणतः नारायणगिरिः । तस्य पर्यन्तभुवि सर्वतीर्थसमन्वितं स्वामितीर्थं इति तीर्थराजः । तस्य उत्तरतः क्रोशमात्रदूरे आकाशगङ्गाख्यप्रख्याततीर्थम् । तत्तीर्थं यथाभिमतमार्गेण गच्छ । तत्र आकाशगङ्गायां नित्यं स्नात्वा अब्दव्रतं नाम व्रतं यत् तदाख्यं तपः द्वादशकृत्वः चर । तादृशव्रताचरणप्रभावात् ते सद्गुणाधिकः उत्तमपुत्रः जनिष्यते" इति ॥

अब्दव्रतं नाम— एकदिने त्रिकालैः कृतस्नानादिकं यत् तत् कृच्छ्रव्रतम् । अत्र स्नानादिकं इत्युक्ते स्नानं, देवप्रदक्षिणं, देववन्दनं, देवतीर्थप्राशनं च । एतच्चतुर्विधकृत्यं दिने त्रिः चरितं चेत् कृच्छ्रव्रतम् । कृच्छ्रव्रतं त्रिंशत्कृत्वः चरितं अब्दव्रतम् । द्वादशकृत्वः चरितं द्वादशाब्दव्रतम् ॥ "एवं द्वादशाब्दव्रतं चर" इति मुनिः अञ्जनां उपदिदेश ॥

**मूलम्**

**तेन पुण्येन ते पुत्रो भविष्यति गुणाधिकः ।**
**मतङ्गेनैवमुक्ताऽगात् (सा) नारायणगिरिं [1]नृप ॥ ६९ ॥**

१. गता ।, ययौ ।

**कल्याणकाण्डदीपः**

**यथासुखं** यथाभिमतमार्गेण । **द्वादशाब्दव्रतं चरेति** । द्वादशगुणितमब्दनामकव्रतं चरेत्यर्थः । अब्दव्रतं च— 'प्रथमाब्दलक्षणम्' इत्यारभ्य 'विनिर्दिशेत्' इत्यन्तधर्मसङ्ग्रहोक्तरीत्या ।

"स्वामितीर्थसरःस्नानमश्वत्थस्य प्रदक्षिणम् ।
वराहदेवनमनं तत्तीर्थप्राशनं तथा ।
चतुर्विधानामेतेषामब्दसङ्ख्यां प्रकल्पयेत् ।
त्रिकालकृतमेकस्मिन् दिने स्नानादिकं च यत् ।
तदुच्यते कृच्छ्र इति त्रिंशत्ते ह्यब्दसंज्ञिताः ।
अब्दो हि द्वादशावृत्तो द्वादशाब्दव्रतं भवेत् ॥" इति ॥

**मूलम्**

**कृत्वा स्वामिसरःस्नानमश्वत्थस्य प्रदक्षिणम् ।**
**वराहरूपिणं नत्वा पीत्वा तत्सलिलं शुभम् ॥ ७० ॥**

**आकाशगङ्गामासाद्य तपः कर्तुमुपस्थिता ।**
**मुनीनामन्त्र्य भर्तारं [१]भक्षार्थं भक्ष्यवर्जिता ॥ ७१ ॥**

१. व्रतार्थं ।

**कल्याणकाण्डदीपः**

साङ्गमुक्तव्रतशरीरमाह— **कृत्वा** इत्यादिना **भक्ष्यवर्जिता** इत्यन्तेन ।

ततः पूर्वाङ्गतया **भक्षार्थं** भोजनाय **मुनीनामन्त्र्य** "मतङ्गर्षीणां वरमालम्ब्य भवतामाश्रमे भवद्भिरनुज्ञाता पुत्रार्थं तपश्चरिष्यामि । अतस्तन्मङ्गलाङ्गभोजनाय भवन्तोऽनुगृह्णन्तु" इत्यध्येषणं विधाय, अभ्यर्च्य, विधिवद्भोजयित्वा अभीप्सितं तेभ्यो दत्वा आशिषमादाय तेभ्योऽनुज्ञां प्राप्य **भक्षार्थं** स्वोपजीवनार्थं **भर्तारं** अभिमान्यभिमन्यमानयोरभेदव्यपदेशात् भर्त्रभिमन्यमानं नागपुन्नागादिसुपुष्पसुगन्धिमकरन्दपरागोद्वाहिशीतलभूतवायुं भर्तुः सकाशाद्यथाकाममस्त्वित्यनुज्ञां लब्ध्वा पुनः, **भर्तारं** केसरिणं **आमन्त्र्य** व्रतमनुज्ञाप्य **भक्ष्यवर्जिता** पूर्वोक्तवाय्वितराहारनिराहारा प्रत्यहं त्रिषवणं **स्वामिसरःस्नानं अश्वत्थप्रदक्षिणं वराहदेवनमनं** कृत्वा **तत्सलिलं** तत्पादसलिलं **पीत्वा** प्राश्य मातरमिव हितकारिणीं **आकाशगङ्गाम्** आसाद्य तत्तटे **भर्तारं** वायुम् उद्दिश्य आप्रदोषम् आप्रभातं तदभ्युपयाचनरूपं तपः **कर्तुं उपस्थिता** उपक्रान्ता इति, 'आमन्त्र्य' 'भर्तारं' 'भक्षार्थं' इति पदत्रयाणां तन्त्रन्यायेन योजना । इदमेव अब्दव्रतं त्रयोदशादिना अधिकं एकोनविंशतिमासमेवं करिष्यत इति भावः ।

*तदुक्तं ब्रह्माण्डे*—

"......................... पुत्रार्थं वामलोचना ।
द्विजानभ्यर्च्य विधिवदाशिषो वाचयद्यथा ।
ददावभीप्सितं तेभ्यः सर्वदिवयशस्विनी ।
प्रचक्रमे तपस्तप्तुं श्रीवेङ्कटगिरेस्तटे ।
आकाशगङ्गानिकटे सिद्धसङ्घनिषेविते ।
वाय्वाहारा च वायुं च समुद्दिश्य सुदारुणम् ।
तपश्चचार दान्तेयम् ....................... ॥" इत्यादि ।

भक्षार्थं वाय्वाहारमनुज्ञाप्य इति योजनामूलं वाजसनेयके । "तस्मात् समानदेवपुरुषादत्ता आद्यश्चोपधायते उत तर्हि तृतीये सङ्गच्छावहे चतुर्थे सङ्गच्छावहै" इति । तस्मात् समानादेकस्मात् पुरुषादत्ता अत्री भोक्त्री भर्तृस्वामिकधनभोक्त्री तत्कर्तृकयज्ञफलभोक्त्री वा, भार्येति यावत् । आद्यो भोग्यः स्वस्वामिकभागधेयद्वारोपजीव्यः, पतिरिति यावत् । ऋहलोर्ण्यत् ।

"व्रते च तीर्थेऽध्ययने श्राद्धेऽपि च विशेषतः ।
परान्नभोजनादेवि यस्यान्नं तस्य तत्फलम् ॥"

इत्युक्त्या परान्ननियमः सम्पन्नः । "भर्तारं व्रतमनुज्ञाप्य" इत्यत्र "भार्या पत्युर्मतेनैव व्रतादीनाचरेत्सदा" इति कात्यायनोक्तिः । एतेन

"पतिरेव स्त्रियो धर्मः पतिरेव स्त्रियो धनम् ।
पतिरेव स्त्रियो बन्धुः पतिरेव महत्तपः ।
नास्ति स्त्रीणां पृथग्धर्मो न व्रतं नाप्युपोषणम् ॥"

इत्यादिवचनात् धर्मे स्वतन्त्रः पतिः तस्य तत्समेधनी तदनुकूला गृहमेधनी सती । न तु पृथग्धर्मे स्वतन्त्रा ।

"पतिशुश्रूषयैवैताः कामानिष्टान् व्रजन्ति हि ।" इति वचनात् ।

"भुङ्क्ते भुङ्क्ते च या पत्यौ दुःखिते दुःखितायति ।
मुदिते मुदिताऽत्यर्थं प्रोषिते मलिनाम्बरे ।
सुप्ते पश्चाच्च या शेते पूर्वमेव प्रबुध्यते ।
नान्यं कामयते चित्ते साऽभिज्ञेया पतिव्रता ॥"

इत्युक्तलक्षणेन पतिव्रतेन विनाऽन्येष्टसाधनाभावात् कथमेतत् पृथक्-व्रतम् ? इति निरस्तम् । एतद्वचनस्य भर्त्रननुमतिविषयत्वात् । किञ्च अस्य व्रतस्य भर्त्रुद्देश्यकत्वात् पतिव्रतत्वेन न दोष इति ध्येयम् ।

**भक्षवर्जिता** इत्यस्य वाय्वाहारे पर्यवसाने मूलम् । खरविशदमभ्यवहार्यं भक्षं, स एव भक्षः । खरं कठिणं विशदं विविक्तावयवम् । अभ्यवहार्यं खाद्यं कपिराजपत्नीत्वाद्यथापूर्वं भोजने भक्ष्यभोज्य-प्रसक्तौ तद्राहित्यमनेनोच्यते तथा चैकादश्युपवासतत्समानोपवासव्यतिरिक्तसौभाग्याद्यर्थकाम्य-व्रताङ्गोपवासेषु सुपुरन्ध्रीणां निराहारनिषेधात् । ब्रह्माण्डोक्त्या च वाय्वाहारे पर्यवस्यतीति ॥

**आकाशगङ्गामासाद्य तपः कर्तुमुपस्थिता।**
**मुनीनामन्त्र्य भर्तारं [१]भक्षार्थं भक्ष्यवर्जिता ॥ ७१ ॥**

१. व्रतार्थं।

**कल्याणकाण्डदीपः**

साङ्गमुक्तव्रतशरीरमाह— **कृत्वा** इत्यादिना **भक्ष्यवर्जिता** इत्यन्तेन।

ततः पूर्वाङ्गतया **भक्षार्थं** भोजनाय **मुनीनामन्त्र्य** "मतङ्गर्षीणां वरमालम्ब्य भवतामाश्रमे भवद्भिरनुज्ञाता पुत्रार्थं तपश्चरिष्यामि। अतस्तन्मङ्गलाङ्गभोजनाय भवन्तोऽनुगृह्णन्तु" इत्यध्येषणं विधाय, अभ्यर्च्य, विधिवद्भोजयित्वा अभीप्सितं तेभ्यो दत्वा आशिषमादाय तेभ्योऽनुज्ञां प्राप्य **भक्षार्थं** स्वोपजीवनार्थं **भर्तारं** अभिमान्यभिमन्यमानयोरभेदव्यपदेशात् भर्त्रभिमन्यमानं नागपुन्नागादिसुपुष्पसुगन्धिमकरन्दपरागोद्वाहिशीतलभूतवायुं भर्तुः सकाशाद्यथाकाममस्त्वित्यनुज्ञां लब्ध्वा पुनः, **भर्तारं** केसरिणं **आमन्त्र्य** व्रतमनुज्ञाप्य **भक्ष्यवर्जिता** पूर्वोक्तवाय्वितराहारनिराहारा प्रत्यहं त्रिषवणं **स्वामिसरःस्नानं अश्वत्थप्रदक्षिणं वराहदेवनमनं** कृत्वा **तत्सलिलं** तत्पादसलिलं **पीत्वा** प्राश्य मातरमिव हितकारिणीं **आकाशगङ्गाम्** आसाद्य तत्तटे **भर्तारं** वायुम् उद्दिश्य आप्रदोषम् आप्रभातं तदभ्युपयाचनरूपं तपः **कर्तुं उपस्थिता** उपक्रान्ता इति, 'आमन्त्र्य' 'भर्तारं' 'भक्षार्थं' इति पदत्रयाणां तन्त्रन्यायेन योजना। इदमेव अब्दव्रतं त्रयोदशादिना अधिकं एकोनविंशतिमासमेवं करिष्यत इति भावः।

*तदुक्तं ब्रह्माण्डे*—

"........................ पुत्रार्थं वामलोचना।
द्विजानभ्यर्च्य विधिवदाशिषो वाचयद्यथा।
ददावभीप्सितं तेभ्यः सर्वदिवयशस्विनी।
प्रचक्रमे तपस्तप्तुं श्रीवेङ्कटगिरेस्तटे।
आकाशगङ्गानिकटे सिद्धसङ्घनिषेविते।
वाय्वाहारा च वायुं च समुद्दिश्य सुदारुणम्।
तपश्चचार दान्तेयम् ........................ ॥" इत्यादि।

भक्षार्थं वाय्वाहारमनुज्ञाप्य इति योजनामूलं वाजसनेयके । "तस्मात् समानदेवपुरुषादत्ता आद्यश्चोपधायते उत तर्हि तृतीये सङ्गच्छावहे चतुर्थे सङ्गच्छावहे" इति । तस्मात् समानादेकस्मात् पुरुषादत्ता अत्त्री भोक्त्री भर्तृस्वामिकधनभोक्त्री तत्कर्तृकयज्ञफलभोक्त्री वा, भार्येति यावत् । आद्यो भोग्यः स्वस्वामिकभागधेयद्वारोपजीव्यः, पतिरिति यावत् । ऋहलोर्ण्यत् ।

"व्रते च तीर्थेऽध्ययने श्राद्धेऽपि च विशेषतः ।
परान्नभोजनादेवि यस्यान्नं तस्य तत्फलम् ॥"

इत्युक्त्या परान्ननियमः सम्पन्नः । "भर्तारं व्रतमनुज्ञाप्य" इत्यत्र "भार्या पत्युर्मतेनैव व्रता-दीनाचरेत्सदा" इति कात्यायनोक्तिः । एतेन

"पतिरेव स्त्रियो धर्मः पतिरेव स्त्रियो धनम् ।
पतिरेव स्त्रियो बन्धुः पतिरेव महत्तपः ।
नास्ति स्त्रीणां पृथग्धर्मो न व्रतं नाप्युपोषणम् ॥"

इत्यादिवचनात् धर्मे स्वतन्त्रः पतिः तस्य तत्समेधनी तदनुकूला गृहमेधनी सती । न तु पृथग्धर्मे स्वतन्त्रा ।

"पतिशुश्रूषयैवैताः कामानिष्टान् व्रजन्ति हि ।" इति वचनात् ।

"भुङ्क्ते भुङ्क्ते च या पत्यौ दुःखिते दुःखितायति ।
मुदिते मुदिताऽत्यर्थं प्रोषिते मलिनाम्बरे ।
सुप्ते पश्चाच्च या शेते पूर्वमेव प्रबुध्यते ।
नान्यं कामयते चित्ते साऽभिज्ञेया पतिव्रता ॥"

इत्युक्तलक्षणेन पतिव्रतेन विनाऽन्येष्टसाधनाभावात् कथमेतत् पृथक्-व्रतम् ? इति निरस्तम् । एतद्वचनस्य भर्त्रननुमतिविषयत्वात् । किञ्च अस्य व्रतस्य भर्त्रुद्देश्यकत्वात् पतिव्रतत्वेन न दोष इति ध्येयम् ।

**भक्षवर्जिता** इत्यस्य वाय्वाहारे पर्यवसाने मूलम् । खरविशदमभ्यवहार्यं भक्षं, स एव भक्षः । खरं कठिणं विशदं विविक्तावयवम् । अभ्यवहार्यं खाद्यं कपिराजपत्नीत्वाद्यथापूर्वं भोजने भक्ष्यभोज्य-प्रसक्तौ तद्राहित्यमनेनोच्यते तथा चैकादश्युपवासतत्समानोपवासव्यतिरिक्तसौभाग्याद्यर्थकाम्य-व्रताङ्गोपवासेषु सुपुरन्ध्रीणां निराहारनिषेधात् । ब्रह्माण्डोक्त्या च वाय्वाहारे पर्यवस्यतीति ॥

**मूलम्**

**उपवासपरा बाला बाह्यभोगविवर्जिता ।**
**काष्ठवत् [1]पर्यवस्थाय शरीरं स्वात्मनः शुचिः ॥ ७२ ॥**

१. पर्यवस्थाप्य ।

**कल्याणकाण्डदीपः**

**उपवासपरेति** । यत उपवासे तात्पर्ययुक्ता । **बाला** कोमलाङ्गी । **बाह्यभोगविवर्जिता** कायकामौपचारौपयिकसुगन्धस्नेहेन शिरोगात्राद्यभ्यञ्जन-केशधूपन-तत्प्रसाधन-विचित्रतत्पाशरचन-घनसार-कस्तूरीपुष्प-लघुसृणरोचनादिना परिकल्पिताङ्गरागेण लावण्याकरण-स्मरशरसहचरापाङ्गा-ञ्जनलेपन-कुचकुङ्कुमकरण-मकरिकापत्ररचन-गन्धलेपन-शृङ्गारतिलक-धारण-सिन्दूरप्रक्षेपण-कपोलादिक्लोमकरण-सुचैलचोलधारण-चतुर्विध-भूषणपरिष्करण-मदकारिद्रव्यसेवन-ताम्बूलचर्वणादि बाह्यभोगवर्जिता ।

*तदुक्तं हरिवंशे पुण्यव्रतकाण्डे*—

"अञ्जनं रोचनं चैव गन्धान् सुमनसस्तथा ।
व्रते चैवोपवासे च नित्यमेव विवर्जयेत् ।
शिरसेऽभ्यञ्जनं सौम्ये नैवमेतत् प्रशस्यते ।
न पादयोर्न गात्रस्य स्नेहेनेति स्थितिः स्मृता ॥" इति ।

न तु व्रताङ्गशुद्धिभूत-दन्तधावन-मङ्गलस्नान-केशप्रसाधन-सौभाग्यहेतु-हरिद्राभावनोर्ध्वपुण्ड्र-धारण-तदुपरि-गदामुद्राधारण-कुङ्कमधारण-अञ्जना-लेपन-सिन्धूरप्रक्षेपण-निर्माल्यमालाधारण-ताम्बूल-दानादि-वर्जिता सौभाग्यवतीनां एकादशी-तत्समोपवासव्यतिरिक्त-काम्यव्रताङ्गोपवासेषु अवैधव्यकराणां योषां विहितत्वात् ।

*तदुक्तं सुवासिनीव्रतकाण्डे*—

"अञ्जनं च स ताम्बूलं कुङ्कुमं रक्तवाससी ।
धारयेत् सोपवासापि अवैधव्यकरं यतः ।
विधवा यतिमार्गेण कुमारी वा यदृच्छया ॥" इति ।

*मनुरपि*—

"पुष्पालङ्कारवस्त्राणि गन्धधूपानुलेपनम् ।
उपवासे न दुष्यन्ति दन्तधावनमञ्जनम् ॥" इति ।

*विष्णुधर्मेऽपि*—

"धारयेद् रक्तवस्त्राणि कुसुमानि सितानि च ।
विधवा शुक्लवसनं एकमेव हि धारयेत् ॥" इति ।

यद्यप्यन्यसाधारणमानुषस्त्रीणां व्रताङ्ग-शुध्यङ्ग-केशप्रसाधन-दन्तधावनाद्यभावेऽपि निर्जीव-छिन्नकेशसंसर्गात् कर्माङ्गकेशशुद्ध्यभावेन अङ्गवैकल्यं जिगुप्साप्रसक्तिश्च शोषणे च सादवैवर्ण्यं कार्श्याद्यापत्तिश्च भवति । अञ्जनादेहस्य तु तपोमयत्वेन दिव्योपपादकशरीरवत्तेजोमयत्वात् सहज-शिरोरुहाणामेवोपचयात् सूक्ष्माणामरालानामसितानां नीलनागसहचराणां स्निग्धानामभिन्नाग्राणा-मच्छिन्नानां समूहे मालिन्यशङ्कानुदयात् । तपसा शोषणेऽपि विलापनं अयोघट्टनेन पत्रपुटीकरणं सन्तापनं पुनःपुनर्विलापनादीत्येवमष्टादशधानिस्तप्तसुवर्णवत् तेजोबलवीर्यप्रवृद्धिरेव भवति । अत एवोक्तं "भूरिव्रतप्रभवदिव्यसुकान्तिमन्तौ" इति । तथापि सौभाग्यार्थं लोकशिक्षणार्थं एतान्यादृतवती सा इत्याशयेन "बाह्यभोगविवर्जिता" इत्युक्तम् । बाह्यधर्मदीक्षा बाह्या बहिरर्थभावाः कामुकाः तेषां भोगः कायकामोपचारः तद्वर्जितेत्यर्थः । तस्मात् स्वात्मनः शरीरं **काष्ठवत्** श्रीतुळसीकाष्ठवत् पर्यवस्थाय पर्यवसितशोषणं कृत्वा । **शुचिः** परिशुद्धम् अकरोत् ।

### गूढकर्तृकव्याख्यानम्

एवं मतङ्गमुनिना उपदिष्टा अञ्जना तपःपूर्वाङ्गत्वेन तदाश्रमे व्रतं कर्तुं ब्राह्मणभोजनाय मतङ्ग-मुन्यमतान् द्विजान् विधिवत् अभ्यर्च्य भोजयित्वा तेषां आशिषः आदाय व्रताय तदनुज्ञाता ततः व्रताय भर्त्रा केसरिणा अनुज्ञाता केवलं वाय्वाहारा नारायणगिरिं गत्वा प्रत्यहं त्रिषवणं स्वामिपुष्करिणीतीर्थ-स्नानं, अश्वत्थप्रदक्षिणं, वराहदेवनमनं, वराहदेवपादोदकप्राशनं कृत्वा आकाशगङ्गां आसाद्य तस्याः तटे वायुमुद्दिश्य आप्रदोषं आप्रभातं तपः तपेत् इति दृढसङ्कल्पबुद्ध्या तपः कर्तुं उपविवेश । उपवेशनात् प्राक् केन अनुसन्धानेन युक्ता ? "भार्या पत्युर्मतेनैव व्रतादीन् आचरेत् सदा" इति कात्यायनोक्तेः । "नास्ति स्त्रीणां पृथग्धर्मः न व्रतं नाप्युपोषणम्" इत्युक्तेः पतिधर्मं विना पृथग्धर्मे सती स्वतन्त्रा न । पतिशुश्रूषयैव एताः सर्वान् इष्टान् आप्नुवन्ति । किञ्च

**मूलम्**

**उपवासपरा बाला बाह्यभोगविवर्जिता ।**
**काष्ठवत् [1]पर्यवस्थाय शरीरं स्वात्मनः शुचिः　　॥ ७२ ॥**

१. पर्यवस्थाप्य ।

**कल्याणकाण्डदीपः**

**उपवासपरेति** । यत उपवासे तात्पर्ययुक्ता । **बाला** कोमलाङ्गी । **बाह्यभोगविवर्जिता** कायकामौपचारौपयिकसुगन्धस्नेहेन शिरोगात्राद्यभ्यञ्जन-केशधूपन-तत्प्रसाधन-विचित्रतत्पाशरचन-घनसार-कस्तूरीपुष्प-लघुसृणरोचनादिना परिकल्पिताङ्गरागेण लावण्याकरण-स्मरशरसहचरापाङ्गाञ्जनलेपन-कुचकुङ्कुमकरण-मकरिकापत्ररचन-गन्धलेपन-शृङ्गारतिलक-धारण-सिन्दूरप्रक्षेपण-कपोलादिक्लोमकरण-सुचैलचोलधारण-चतुर्विध-भूषणपरिष्करण-मदकारिद्रव्यसेवन-ताम्बूलचर्वणादि बाह्यभोगवर्जिता ।

*तदुक्तं हरिवंशे पुण्यव्रतकाण्डे*—

"अञ्जनं रोचनं चैव गन्धान् सुमनसस्तथा ।
व्रते चैवोपवासे च नित्यमेव विवर्जयेत् ।
शिरसेऽभ्यञ्जनं सौम्ये नैवमेतत् प्रशस्यते ।
न पादयोर्न गात्रस्य स्नेहेनेति स्थितिः स्मृता ॥" इति ।

न तु व्रताङ्गशुद्धिभूत-दन्तधावन-मङ्गलस्नान-केशप्रसाधन-सौभाग्यहेतु-हरिद्राभावनोर्ध्वपुण्ड्र-धारण-तदुपरि-गदामुद्राधारण-कुङ्कुमधारण-अञ्जना-लेपन-सिन्धूरप्रक्षेपण-निर्माल्यमालाधारण-ताम्बूल-दानादि-वर्जिता सौभाग्यवतीनां एकादशी-तत्समोपवासव्यतिरिक्त-काम्यव्रताङ्गोपवासेषु अवैधव्यकराणां योषां विहितत्वात् ।

*तदुक्तं सुवासिनीव्रतकाण्डे*—

"अञ्जनं च स ताम्बूलं कुङ्कुमं रक्तवाससी ।
धारयेत् सोपवासापि अवैधव्यकरं यतः ।
विधवा यतिमार्गेण कुमारी वा यदृच्छया ॥" इति ।

*मनुरपि*—

"पुष्पालङ्कारवस्त्राणि गन्धधूपानुलेपनम् ।
उपवासे न दुष्यन्ति दन्तधावनमञ्जनम् ॥" इति ।

*विष्णुधर्मेऽपि*—

"धारयेद् रक्तवस्त्राणि कुसुमानि सितानि च ।
विधवा शुक्लवसनं एकमेव हि धारयेत् ॥" इति ।

यद्यप्यन्यसाधारणमानुषस्त्रीणां व्रताङ्ग-शुध्यङ्ग-केशप्रसाधन-दन्तधावनाद्यभावेऽपि निर्जीव-छिन्नकेशसंसर्गात् कर्माङ्गकेशशुद्ध्यभावेन अङ्गवैकल्यं जिगुप्साप्रसक्तिश्च शोषणे च सादवैवर्ण्यं कार्श्याद्यापत्तिश्च भवति । अञ्जनादेहस्य तु तपोमयत्वेन दिव्योपपादकशरीरवत्तेजोमयत्वात् सहज-शिरोरुहाणामेवोपचयात् सूक्ष्माणामरालानामसितानां नीलनागसहचराणां स्निग्धानामभिन्नाग्राणा-मच्छिन्नानां समूहे मालिन्यशङ्कानुदयात् । तपसा शोषणेऽपि विलापनं अयोघट्टनेन पत्रपुटीकरणं सन्तापनं पुनःपुनर्विलापनादीत्येवमष्टादशधानिस्तप्तसुवर्णवत् तेजोबलवीर्यप्रवृद्धिरेव भवति । अत एवोक्तं "भूरिव्रतप्रभवदिव्यसुकान्तिमन्तौ" इति । तथापि सौभाग्यार्थं लोकशिक्षणार्थं एतान्यादृतवती सा इत्याशयेन "बाह्यभोगविवर्जिता" इत्युक्तम् । बाह्याधर्मदीक्षा बाह्या बहिरर्थभावाः कामुकाः तेषां भोगः कायकामोपचारः तद्वर्जितेत्यर्थः । तस्मात् स्वात्मनः शरीरं **काष्ठवत्** श्रीतुळसीकाष्ठवत् पर्यवस्थाय पर्यवसितशोषणं कृत्वा । **शुचिः** परिशुद्धम् अकरोत् ।

### गूढकर्तृकव्याख्यानम्

एवं मतङ्गमुनिना उपदिष्टा अञ्जना तपःपूर्वाङ्गत्वेन तदाश्रमे व्रतं कर्तुं ब्राह्मणभोजनाय मतङ्ग-मुन्यमतान् द्विजान् विधिवत् अभ्यर्च्य भोजयित्वा तेषां आशिषः आदाय व्रताय तदनुज्ञाता ततः व्रताय भर्त्रा केसरिणा अनुज्ञाता केवलं वाय्वाहारा नारायणगिरिं गत्वा प्रत्यहं त्रिषवणं स्वामिपुष्करिणीतीर्थ-स्नानं, अश्वत्थप्रदक्षिणं, वराहदेवनमनं, वराहदेवपादोदकप्राशनं कृत्वा आकाशगङ्गां आसाद्य तस्याः तटे वायुमुद्दिश्य आप्रदोषं आप्रभातं तपः तपेत् इति दृढसङ्कल्पबुद्ध्या तपः कर्तुं उपविवेश । उपवेशनात् प्राक् केन अनुसन्धानेन युक्ता ? "भार्या पत्युर्मतेनैव व्रतादीन् आचरेत् सदा" इति कात्यायनोक्तेः । "नास्ति स्त्रीणां पृथग्धर्मः न व्रतं नाप्युपोषणम्" इत्युक्तेः पतिधर्मं विना पृथग्धर्मे सती स्वतन्त्रा न । पतिशुश्रूषयैव एताः सर्वान् इष्टान् आप्नुवन्ति । किञ्च

"भुक्ते भुङ्क्ते च या पत्यौ दुःखिते दुःखितायती ।
मुदिते मुदितात्यर्थं प्रोषिते मलिनाम्बरा ।
सुप्ते पश्चाच्च या शेते पूर्वमेव प्रबुध्यते ।
नान्यं कामयते चित्ते सा विज्ञेया पतिव्रता ॥"

इत्याद्युक्तेः पातिव्रत्यलक्षणस्य ईदृशत्वात् सतीनां पतिसेवां विना अन्यत् व्रतं तप एव न स्यात् । एवं सति तासां पृथक् तपः किम् ? नैव । इति पतिव्रताधर्मं सम्यक् मनसि अनुसन्दधती साध्वी अञ्जना, "पुत्रप्राप्तिः मे इष्टार्थः । सा च त्वदीयाऽपि । अतः सती त्वं मम इष्टं पुत्रं तपश्चर्येण साधय इति प्रसन्नमनसा तपश्चर" इति पत्युः अनुज्ञां लब्ध्वैव सा तपसे उपविष्टा इति मन्तव्यम् । किञ्च कायस्य कामोपचारान् सर्वान् त्यक्त्वा केवलं वाय्वाहारा शरीरं तुलसीकाष्ठवत् चकार । एतेन देहमनःशुद्धिं लेभे ।

### मूलम्

**पूर्णे संवत्सरे जाते [१]बलदेवो महाबलः ।**
**फलमादाय भक्ष्यार्थं प्रत्यहं [२]दापयन्मरुत् ॥ ७३ ॥**

१. वायुदेवो । २. ह्यददान्मरुत् ।

### कल्याणकाण्डदीपः

**पूर्णेति** । द्वादशाब्दव्रते सम्पूर्णे । न च "अतीते सप्तसाहस्रे वत्सराणामनन्तरम्" इत्यादि ब्रह्माण्डविरोधः । तत्र वत्सरशब्दोऽब्दव्रतपरः । तथा च अब्दव्रतेन द्वादशाब्दे सम्पूर्णेऽपि तदुपर्यपि तव तपसा अहं तोषितः तत्पूर्यतामिति सूचनपर्यन्तं वा यावदधिकारं वा इदमेवाचरिष्यामीत्याचरन्त्या पुनरेको मासो जातः । ततश्चतुर्दशमास आद्यदिने सूचनं विनाऽपि गर्भ एव अङ्कुरितः । अत एव तदुपर्यपि गर्भावनाय इदमेवाचरणीयमिति फलदातुर्देवस्येच्छा अस्ति । अलभ्ययोगोपायस्य तस्य क्षेमोपायत्वं कैमुत्यसिद्धमित्यालोच्य पुनरिदमेव व्रतमाचरिष्यामीत्याचरन्त्या त्रयोदशदिनाधिकाः षण्मासा जाताः । तत एकोनविंशे मासे त्रयोदशदिनानन्तरं चतुर्दश आद्यदिने प्रातर्व्रतं सम्पूर्णं कृत्वा ततोऽनधिकाराद्गर्भभाराच्चेति भावः । तथा च त्रयोदशदिनाधिकैकोनविंशतिमासा जाताः । तथा च "समुदाये वृत्ता शब्दा अवयवेष्वपि वर्तन्ते" इत्याकरोक्तन्यायात् षष्ठ्युत्तरत्रिशतसङ्ख्यागणितस्नानादिसमुदायवाचिनोऽब्दशब्दस्य अवयवपरत्वसम्भवात् अब्दानां सप्तसाहस्रत्वम् । पार्वतीशम्भुशब्दा महालक्ष्मीनृसिंहपराः । न च 'अतीत' इत्यनेन विरोधः । अत्येतुं समापयितुं आशांसित इत्यर्थात् । "आशंसायां भूतवच्च" इति भूतवद्भावः । तथा चेत्थं योजना । महाबलो बलदेवो वायुः संवत्सरे पूर्णे वाय्वाहारेणैव

जाते अनन्तरं त्रयोदशे मासे भक्षार्थं स्वयं फलमादाय प्रत्यहं अन्वहं दापयन् स्वयं दृगगोचरः सन् दातारं भूतवायुं प्रेरयन् 'आसीत्' इति शेषः ।

**मूलम्**

**अथ किञ्चिद्दिने वायुः फले वीर्यं प्रपूरयन् ।**
**वीर्यगर्भफलं तस्याः प्राक्षिपत् करसम्पुटे ॥ ७४ ॥**

**कल्याणकाण्डदीपः**

**अथ** त्रयोदशमासानन्तरं **किञ्चिद्दिने** चतुर्दशे आद्यदिने **वायुः** स्वयमेव **फले वीर्यं** नृसिंह-तेजोपबृंहितं **प्रपूरयन्** आसीत् । तत् **वीर्यगर्भफलं तस्याः** अञ्जनादेव्याः **करसम्पुटे** मरुत् – हे मा रुदो मा रुद इति वाचं वाचं वज्रिणा वज्रेण सप्तसप्तधा भिद्यमाना अपि अमृतास्तेषां मुख्यो मरुत् – **प्राक्षिपत्** । 'वायुरूपेण' इति शेषः । 'मरुत्' इति वचनेन दन्तघातादिना जाठराग्निसम्बन्धेन च न वीर्यस्य वीर्यहानिरिति द्रष्टव्यम् ।

*तथा चोक्तं ब्रह्माण्डे*—

"ततः प्रीतमना वायुः फलमेवं दिने दिने ।
भक्षणार्थं ददौ तस्यै दृग्गोचरमनागतः ॥" इति ।

"आत्मा देवानां भुवनस्य गर्भो यथा वयं चरति देव एषः ।
घोषा यदस्य भृण्विरे रूपं तस्मै वाताय हविषा विधेम ते ॥" —*इति श्रुतेः ।*

*अत्र च ब्रह्माण्डे विशेषः (५ अध्याये)*—

"कस्यचित्त्वथ कालस्य दयया धर्मदेवता ।
बिभ्रती पुल्कसीरूपं धृत्वा वेत्रं च पुत्रिकाम् ।
अञ्जनायाः समीपं वै प्रयाता धर्मदेवता ।
अञ्जना तां समाहूय विनिवेश्य वरासने ।
निमित्तज्ञे कथं ब्रूहि मम पुत्रोऽस्ति वा न वा ।"

*पुल्कसी*—

"श्रीवेङ्कटगिरौ सप्तसाहस्रं वत्सरान् पुनः ।
तपः कुरु ततः पुत्रमवाप्स्यसि सुशोभने ।
वाय्वाहारा च वायुं वै समुद्दिश्य सदारुणम् ।

तपश्चकार दान्तेयं प्रीणयन्ती व्रतैरिदम् ।
ततः प्रीतमना वायुः फलमेकं दिने दिने ।
भक्षणार्थं ददौ तस्यै दृग्गोचरमुपागतः ॥"

(कपिरूपेण विद्यमानौ क्रीडन्तौ वाय्वञ्जने दृष्ट्वा पार्वतीपरमेश्वरावपि कपिरूपं स्वीकृत्य क्रीडितवन्तौ ।)

"तयोर्वीर्यं तदा वायुरथ पत्रपुटान्तरे ।
आहृत्य प्रददौ तस्या अञ्जनायाः करान्तरे ।
मन्वाना भक्ष्यमित्येव तद्भक्षितवती ह्यसौ ॥"

अत्र च पार्वतीपरमेश्वरशब्दौ श्रीश्रीपतिवाचकाविति भाति । अन्यथा बहुप्रमाणविरोधः ।

**गूढकर्तृकव्याख्यानम्**

एतैः नियमैः तपः तपन्त्या द्वादशाब्दव्रतं पूर्णम् । द्वादशमासाः जाताः । तदुपरि तव तपसा सन्तुष्टः तत् पूर्यतां इति सूचनान्तं वा यावदधिकारं वा इदं व्रतं इतो आचरिष्यामि इति आचरन्त्या पुनरेको मासः जातः । (ततः चतुर्दशमास-आद्यदिने सूचनां विना गर्भ एव अङ्कुरितः । अत एव एतदुपर्यपि गर्भरक्षणाय इदमेव आचरणीयं इति फलदातुः वायोः इच्छा अस्ति । एतावत् अलभ्ययोगोपायः साधितः । इतः क्षेमोपायः साध्यो भविष्यति इति मत्वा पुनः इदं व्रतं आचरिष्यामि इति आचरन्त्या त्रयोदशदिन-अधिक-षण्मासा जाताः ।) अनन्तरं वायुः अञ्जनायाः वाय्वाहारेण द्वादशमासेषु जातेषु त्रयोदशमाससमारभ्य प्रत्यहं तस्यै अञ्जनायै आहारार्थं स्वयं फलं आदाय स्वयं दृग्गोचरः भूतवायुद्वारा दापयन् त्रयोदशमासानन्तरं चतुर्दशमास-आद्यदिने स्वयमेव फले श्रीनृसिंह-देवतेजोपबृंहितं वीर्यं प्रपूर्य तत् वीर्यगर्भफलं अञ्जनायाः करसम्पुटे प्राक्षिपत् ॥

**मूलम्**

**फलं सा मन्यमाना हि क्षुधार्ता [1]तच्च भक्षिता ।**
**ततो [2]गर्भं समुत्पन्नं अञ्जनायाश्च भूमिप ।**
**मुनीनामभवत् [3]स्वप्नो वायुगर्भसमुद्भवः ॥ ७५ ॥**

---

१. तत् प्रभक्षयत् ।, तदभक्षयत् ।
२. गर्भः समुत्पन्नः ।, गर्भः समुदभूत् । ३. हर्षो ।

**कल्याणकाण्डदीपः**

**फलमिति** । **भक्षिता** तारकादित्वादच् । भक्षितवती । **ततः** तत एव फलप्राशनादेव । न मैथुन-धर्मेण । **गर्भमिति** । अञ्जनायाः समुत्पन्नं गर्भमुद्दिश्य मुनीनां अभवत् **स्वप्न** इति योजना । मुनि-अञ्जनयोः शङ्कातङ्कनिवृत्त्यर्थं इति भावः ।

यद्वा गर्भ इव आचरति गर्भति गर्भतीति गर्भः । अञ्जनाजठरोदय उदितोडुराजमण्डलवत् गर्भ-सदृशं तेजोमण्डलं न तु यातनार्हम् । 'कान्तादृतौ' इत्युक्तेर्न पुंस्त्वहानिः पुंस्त्वे । **मुनीनामिति** । अञ्जनाया गर्भे समुत्पन्ने तस्या नियतेन्द्रियाया दोहदचिह्नानि क्रमेण अभूवन् ।

"........ किमेतन्मे निर्दोषायाः समागतम् ।
अथवा विधिवैरूप्यमहो मे मन्दभाग्यता ।
केन दोषेण चाहं वै ईदृशं रूपमागता ॥"

इत्येवं चिन्तयन्ती दुःखिता अभूत् । तन्मनःसमाधानाय "मुनीनामभवत्स्वप्नो वायुगर्भसमुद्भवः" इत्यभवत् । ततो गर्भः एवं ववृधे—

"अपाण्डरीकृता तस्या रराज तनुवल्लरी ।
कलङ्कहीना चन्द्रस्य लेखेव सितपक्षके ।
विलीनचूचकं रेजे कुचमण्डलमुन्नतम् ।
पद्मकेशस्य सल्लीनभ्रमरस्य श्रियं ददौ ।
न शशाक भुवं गन्तुं गर्भस्यातिभरत्वतः ।
इत्थं प्रववृधे तस्याः गर्भः प्रीतिविवर्धनः ॥" *इति ब्रह्माण्डे ।*

**मूलम्**

**अञ्जना दशमासान्ते सुषुवे पुत्रमुत्तमम् ।**
**हनूमन्तममुं प्राहुर्मुनयो वीतकल्मषाः ॥ ७६ ॥**

**अञ्जना व्रतमास्थाय [१]पुत्रं प्राप गिरीश्वरे ।**
**तस्मादञ्जनशैलोऽयं लोके विख्यातकीर्तिमान् ॥ ७७ ॥**

१. प्राप्तपुत्राऽभवद्गिरौ ।

**कल्याणकाण्डदीपः**

**अञ्जनेति** । दशावयवको मासः दशमासः तस्यान्ते पूर्तौ । त्र्यवयवो लोकस्त्रिलोक इतिवत् । अथवा पात्रादेराकृतिगणत्वात् समाहारद्विगुर्वा । यद्वा पूरणप्रत्ययलोपेन दशशब्दो दशमार्थः । दशमासान्त इत्यर्थः । **उत्तमं** सकलगुणरत्नम् ।

"लब्धावहं महारौद्रं जिह्वालाङ्गूलभूषितम् ।
रक्तवस्त्रं सकौपीनं जटामुकुटमण्डितम् ।
हृत्पद्मविन्यसे न्यासं छन्दयन्तं महाबलम् ।
वानरेन्द्रं महेन्द्राभं वन्देऽहं पवनात्मजम् ॥"

"य एवं वेद" इत्युपनिषत् ।

"असूत बलिनं पुत्रमुदयत्यहिमत्विषि ।
कुण्डलोद्भासिगण्डान्तमुपवीतिनमुज्ज्वलम् ।
कौपीनोद्भासितं चैव दीप्यमानमिव श्रिया ।
बिभ्राणं वानराणां वै रूपमत्यद्भुतं महत् ।
रक्तास्यपुच्छमूलं च शालिशूकसमद्युतिम् ॥" इति ।

एवंरूपं पुत्रं असूत । **हनूमन्तमिति** ।

"मत्करोत्सृष्टवज्रेण यस्मादेष हनुर्हतः ।
नाम्नैष कपिशार्दूल भविता हनुमानिति ॥" —*इतीन्द्रनिरुक्तिः ।* (वा.रा. ७-३६)

"हनुशब्दो ज्ञानवाची हनुमान् मतिशब्दितः ॥" —*इति भगवत्पादीयनिरुक्तिः ।*

प्रशस्तो हनुरस्यास्तीति हनुमान् । प्रशंसायां मतुप् । "शरादीनां च" इति दीर्घः । अञ्जनायाः शैलः अञ्जनाशैलः । "ङ्यापोः संज्ञाछन्दसोर्बहुलम्" इति ह्रस्वः । 'देवकिनन्दन' इतिवत् । एतेन ज्ञानसाधनद्वितीयदिग्वस्त्रस्वरूपं सूचितम् ।

ननु अनेन "सीतायाश्चातिरूपायाः" इत्यादि द्वितीयचिन्तापरिहारः कथम् ? इति चेत् । इत्थम्— रामं प्रति सीतासन्देशहरणादिरूपाञ्जनेयावतारप्रयोजनान्यथाऽनुपपत्त्येत्यवैहि ॥

*इति द्वितीयनामसेवा ॥*

### गूढकर्तृकव्याख्यानम्

तदा अञ्जना पूर्ववत् आहारार्थं दत्तं फलं इति मन्यमाना क्षुधातुरा तत्फलं वीर्यगर्भं भक्षयामास। तत्फलभक्षणप्रभावात् अञ्जनायाः गर्भः समुत्पन्नः। अस्याः अञ्जनायाः वायुदेवानुग्रहसमुत्पन्नगर्भ-विषयकः स्वप्नः तत्रत्यमुनीनां जातः। तेषां अञ्जनायां वाय्वनुग्रहात् पुरतः पुत्रोत्तमः जनिष्यते इति अत्यानन्दः। एवं गर्भे उत्पन्ने नियतेन्द्रियायाः तस्याः क्रमेण दोहदचिह्नानि भूतानि। ततः क्रमात् दशमे मासि पूर्णे अञ्जना उत्तमं पुत्रं सुषुवे। ततः ज्ञानिनः जातस्य हनूमान् इति नाम चक्रुः। किञ्च, वायोः जातः; वातीति वायुः, वा गतिगन्धनयोः, वाशब्दः गत्यर्थकः, ज्ञानार्थकः, ज्ञानवतो वायोर्जात इति हेतोश्च हनूमतः मारुतिः आञ्जनेयः इति नामान्तरम्। एवं जनकराज! त्रेतायां अञ्जना अस्मिन् गिरौ तपस्तप्त्वा पुत्रवरं प्राप इति वेङ्कटगिरेः अञ्जनाचल इति नाम जातं प्रख्यापितं च॥

### मूलम्

### द्वापरयुगे शेषाचलनामनिष्पत्तिः

जनक उवाच—

सन्तोष[1]मभवन् मह्यं श्रुत्वा तन्नाम[2]कीर्तनम्।
द्वापरे शेषशैलेति कथं ख्यातिर्भविष्यति ॥ ७८॥

१. मभवद् ब्रह्मन्। २. कारणम्।

शतानन्द उवाच—

पुरा वैकुण्ठनगरे द्वारि शेषं समादिशत्।
देवाधिदेवो भगवान् रमासार्धं[1]रमापतिः ॥ ७९॥

१. समास्थितः।

तस्मिन् काले महाराज मारुतः प्राणवल्लभः।
[1]अकस्मात् कारणात् प्राप्तो भगवद्दर्शनाय च ॥ ८०॥

१. एकस्मात्।

द्वारं निरोधयामास रुक्मदण्डेन सर्पराट्।

वायुरुवाच—

किमर्थं रुन्धसे मूर्ख कार्यस्य महती त्वरा ॥ ८१ ॥

कल्याणकाण्डदीपः

रुन्धस इति । रुधीति धात्वन्तरस्येदं रूपं आर्षम् ।

मूलम्

शेष उवाच—

अहमाज्ञाधरो विष्णोर्मा गच्छान्तस्ततो मरुत् ।
इति तस्य वचः श्रुत्वा जगत्प्राणोऽब्रवीदिदम् ॥ ८२ ॥

कल्याणकाण्डदीपः

मरुत् इति सम्बोधनम् ।

गूढकर्तृकव्याख्यानम्

जनकः शतानन्दं प्रति, विप्रवर्य ! त्रेतायां अञ्जनाचलनामप्रवृत्तिनिमित्तं श्रुत्वा आनन्दितः । इदानीं द्वापरे शेषाचल इति प्रसिद्धेः कारणं किमिति पप्रच्छ । शतानन्दः वक्ति— पुरा वैकुण्ठनगरे किं अभूत् ? "द्योतनात् विजयात् कान्त्या स्तुत्या व्यवहृतेरपि । गत्या रत्या च देवाख्यः" इत्युक्तेः, देवो नाम क्रीडादिगुणविशिष्टः । भक्तैः आदीयते इति आदिः । आदिश्चासौ देवश्च आदिदेवः ॥ यद्वा रमाब्रह्मादिजगतः आदिभूतः । मुकुन्दात् अन्यतमो को नाम लोके भगवत्पदार्थः ? इति भागवतोक्तेः । अव्याकृतषड्गुणैश्वर्यसम्पन्नः परमात्मा वैकुण्ठे स्वगृहे स्थित्वा अन्तर्गृहे प्रवेष्टुं कस्मै अपि अवकाशं न देहि । त्वं गृहद्वारि स्थित्वा द्वारं पालयन् आस इति सर्पराजं शेषं समादिश्य अन्तर्गृहे रमया रममाण आस । तदा श्रीहरिं द्रष्टुं प्राण-अपान-उदान-समान-व्यानाख्यपञ्चप्राणाधीशः वायुः वैकुण्ठद्वारि प्राप्तः । अन्तर्गन्तुं यतमाने शेषः करधृतसुवर्णदण्डेन शासत् "मा गच्छ अन्तः" इति अवकाशं न ददौ ।

तदा वायुः आत्मनिरोधिनं शेषं प्रति, "रे मूढ ! कुतो मां रुणत्सि ? रोधनं मा कुरु । मम त्वरया देवदर्शनं कर्तव्यं अस्ति" इत्याह । ततः शेषः "वायो ! अहं श्रीहरि-आज्ञानुवर्ती किङ्करः । तदाज्ञया तव प्रवेशो अवकाशो न" इति आह । तदा वायुः बोधयति ।

मूलम्

**वायुरुवाच—**

**जयश्च [१]विजयश्चोभौ शापितौ मुनिभिः पुरा ।**
**अहङ्कारेण [२]मृदितौ कुम्भकर्णदशाननौ ॥ ८३ ॥**

१. विजयश्चैव शप्तौ तौ । २. मृदितौ ।, तौ जातौ ।

कल्याणकाण्डदीपः

**जय इति** । पुरा अहङ्कारेण "हरेर्द्वारपालावावाम्" इति अभिमानेन हरेः सम्मतानपि रुद्ध्वा मुनिभिः शापितौ जयविजयौ कुम्भकर्णदशाननौ भूत्वा रामेण **मृदितौ** चूर्णीकृतौ । तत् कर्म त्वया विस्मृतमित्यर्थः ।

मूलम्

**विस्मृतं तु त्वया मूर्ख [१]द्वारपोऽद्य निरूपितः ।**
**[२]तद्वाक्याज्येन राजेन्द्र प्रजज्वाल विषोल्बणः ।**
**गर्हयन् वचनैस्तीक्ष्णैर्मुख्यप्राणमहीश्वरः ॥ ८४ ॥**

१. द्वारपत्वे नियोजितौ । २. तद्वाक्योनाहि-।, तद्वाक्यान्ते च ।

कल्याणकाण्डदीपः

**हे मूर्ख** । अनात्मज्ञ । **द्वारप इति** । अहं द्वारपाल इति स्वयमेव निरूपितः । किं तेन युक्तायुक्त-विचारशून्येन साहङ्कारेण द्वारपालत्वेनेति भावः । **गर्हयन्** प्रजज्वालेत्यन्वयः । **तीक्ष्णैः** अतिनिष्ठुरैः ।

गूढकर्तृकव्याख्यानम्

रे मूढ ! शृणु, पूर्वं विधिमानसपुत्राः सनकसनन्दनादिमुनयः श्रीहरिं द्रष्टुं वैकुण्ठं आगत्य वैकुण्ठपुरबाह्योद्यानपरिगतविरजायां कृतस्नानाः माध्याह्निकं निर्वर्त्य वैकुण्ठपुरं प्रविश्य देवगृहे षट्कक्ष्या अतीत्य सप्तमकक्ष्यां प्रविशन्तः । एतदनुभावानभिज्ञौ तत्कक्ष्याद्वारपालौ जयविजयौ सौवर्णवित्रेण मुनीन् "मा गच्छत मा गच्छत अन्तः" इति शासनं चक्रतुः । तदा किमु वक्तव्यम् ? जितेन्द्रिया अपि मुनयः महाक्रोधाविष्टाः युवां सर्वसम-असूयादिदोषरहित-श्रीहरिद्वारस्थौ अपि आसुराहङ्कारभावं आपन्नौ । अतः युवां शान्तिनिकेतने अत्र स्थातुं नार्हथ । अतः भूमौ पापीयसीं योनिं प्राप्नुत इति शशपुः ।

मुनिशापतः जयविजयौ कृते हिरण्याक्षहिरण्यकशिपौ त्रेतायां रावणकुम्भकर्णौ दैत्यौ जातौ इत्यंशं मूढ अपि विस्मृतवान् । वृथा गर्वं मा कुरु । इति सर्वेषां च प्राणिनां प्राणभूतः वायुः अवदत् ।

**मूलम्**

**शेष उवाच—**

**किं [1]गरिष्ठं वचः प्रोक्तं जीवनेच्छा न विद्यते ॥ ८५ ॥**

**[2]कुतो [3]भानुगतिं लोके नैव जानन्ति मोहिताः ।**
**[4]तथा त्वं नरवद्वायो वृथा गर्वं प्रभाषसे ॥ ८६ ॥**

१. गरिष्ठवचः । २. यथा । ३. भानुगतिः । ४. तत्कथं ।

**कल्याणकाण्डदीपः**

**कुत** इति **जानन्ति**-अन्तम् आक्षेपः । **मोहिता** इति समाधानम् । **लोके** भूलोके विद्यमाना जनाः । **भानुगतिं** पतत् पतङ्गपतनमिव **कुतो न जानन्ति** न पश्यन्ति । किं भानौ गतेरभावात् उत भावेऽपि । नाद्यः । उदयास्तमयौ न स्याताम् । द्वितीये तु, कुतो न पश्यन्ति । मोहिता इत्येव वक्तव्यम् ॥

***अयं भावः***— भानोः बहून्नतस्थानेऽतिदूरे विद्यमानत्वात् गम्भीररयत्वात् । अतितीक्ष्ण-तेजिष्ठत्वेन दुर्निरीक्षत्वेन च मोहिता गच्छन्तमपि गच्छतीति न पश्यन्तीति । "कुतो भानुगतिर्लोक" इति पाठे, **लोके** अन्तरिक्षलोके । **भानुगतिः** सूर्यचन्द्रादिगतिः **कुतः** कस्य शासनात् भवतीति **लोके** भूलोके विद्यमानजनाः **मोहिताः** अज्ञानमूर्छिता न जानन्ति ।

**मूलम्**

**बले ज्ञाने विरागे च विष्णुभक्तौ न मे समः ।**
**सर्वदाऽन्तःपुरे वासः पुत्राणामधिको हरेः ॥ ८७ ॥**

**[1]नृलोकानां हितार्थाय [2]हितार्थं जगदीशितुः ।**
**स्थापितो द्वारपालत्वे लक्ष्मीनारायणेन च ॥ ८८ ॥**

१. लोकानां च ।, न लोकानां । २. हितार्थे ।

### कल्याणकाण्डदीपः

मा जानन्त्वज्ञानमोहिताः । ज्ञानिनो जानन्त्येवाक्षरस्य शासनादिति । तावता तव किमागतमित्यत आह— **स्थापित इत्यादिना** । तेन लक्ष्मीनारायणो द्वारपालत्वे स्थापितः । तावताऽपि किमित्यतो मदन्योत्तमाभावादित्याह— **बले ज्ञान** इत्यादिना । इत्यर्थो बोध्यः । "भीषाऽस्माद्वातः पवते, भीषोदेति सूर्यः", "एतस्यैवाक्षरस्य प्रशासनं गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इति श्रुतिः । **तथेति** । **हे वायो, त्वं** अपि **नरवत्** तथा भ्रान्तः **वृथा** मृषा **गर्वं** गर्वितं वाक्यं **प्रभाषसे** ब्रूषे ।

अयमभिप्रायः— अहं तावत् भूप्रदेशे मलयाचलवासि त्वदपेक्षयाऽतिदूरे बहून्नतवैकुण्ठादिस्थाने हरेः शय्यासनादिरूपस्थिरस्थितिमत्तया गम्भीरवृत्तित्वात्, अतितेजिष्ठत्वाच्च, भानुस्थानीयः । त्वं च नरस्थानीयः । मदनन्तरोऽपि नासि । महदन्तरमावयोः । एतादृशस्य तव मन्महिमज्ञाने क उपायः ? कूपमण्डूकस्येव पारावारगाम्भीर्यभाने । अतो भ्रान्तोऽसीति । अतः हे समीर ! अरे द्वारात् दूरे अपसर इति । "अप्रस्तुतप्रशंसाव्याजनिन्दयोः सङ्करः" तथेत्युक्तोपमया तयोः संसृष्टिः । नात्मज्ञोऽसीति उभयार्थबाह्यानुगुण्यात् । **बल इत्यादि** । अनेन "अहं त्वत्तोऽधिकः, सदा हरेः अन्तःपुरनिवासित्वात्, साक्षात्सेवकत्वात् वा लक्ष्मीवत्", "त्वमपकृष्टः सदा, बहिर्निवासित्वात् चारीकवत्" इत्यनुमानद्वयमुक्तं भवति ।

### गूढकर्तृकव्याख्यानम्

ईदृशं वायुवचनं श्रुत्वा महता क्रोधेन विषेण प्रवृद्धः सन् शेषः ज्वलन् जज्वाल । तदा वायुं अतिकठिणवचनैः गर्हयामास— "रे वायो ! किं ईदृशं अतिहेयवचनं भाषसे ? दुष्ट ! तव जीवनेच्छा नास्तीति भाति । अतः त्वं अवश्यं निगृहीतव्य एव । लोके ज्ञानशून्यजनाः सूर्यगतिं सूर्यस्वरूप-सञ्चरणमार्ग इत्यादिकं ज्ञातुं न शक्नुवन्ति । अयं गरिष्ठः, अयं कनिष्ठः; अयं महान्, अयं अल्पः; इति विवेकशून्यनर इव वृथा त्वं सगर्वं भाषसे ? अद्य पश्य अहं कीदृश इति । बले ज्ञाने विरक्तौ विष्णुभक्तौ मम सम एव न । अतः विष्णोः मुख्यप्रीतिपात्रोऽस्मि । सदा मे हरि-अन्तःपुरे वासः लब्धः । ईदृश-अलभ्यलाभः कस्य वा अस्ति ? देवस्य पुत्राणां अहमेव अधिकः । मां सामान्यद्वारपालं जानासि ? अहं पुरुषलोकानां हिताय मुख्यतः हरिहिताय च श्रीहरिणा तद्गृहद्वारपालकत्वे स्थापितः । एतादृशं अनन्यलभ्यं भगवत्कैङ्कर्यं मे प्राप्तम्" ॥ इत्युक्तवति शेषे

मूलम्

वायुरुवाच—

बिडालोऽन्तःस्थितो वाऽपि [1]बहिष्टेभसमो न हि ।
शयानं रत्नपर्यङ्के [2]राजानं नृप सेवते ॥ ८९ ॥

कश्चिद्दूतो नियुक्तस्तु पर्यङ्कारूढवान् स्वयम् ।
किमाधिक्यं तस्य शेष पुत्रे का न्यूनता वद ॥ ९० ॥

१. बहिस्थेभसमो । २. राजानमपि ।

कल्याणकाण्डदीपः

अनुमानद्वयस्याप्यनैकान्त्यमाह **बिडाल** इत्यादिना **वद** इत्यन्तेन ।

गूढकर्तृकव्याख्यानम्

ततः वायुः वदति— "रे शेष ! शृणु । कश्चित् बिडालः अस्ति । राजगृहान्तःप्रविश्य सञ्चरति । तत्र वसति । एवं सत्यपि बिडालः राजगृहात् बहिःस्थितगजस्य समो भवेत् किम् ? बिडालस्य अन्तर्गृहे तिष्ठतीति श्रेष्ठता नास्ति । गजस्य यत्र कुत्र वा भवतु सर्वमान्यता । बिडालस्य नृप-अन्तर्गृहे वसतोऽपि न सर्वपुरस्कारः । इदमपरं शृणु । कश्चित् दूतः राजसेवकः राजानं सेवितुं रत्नपर्यङ्कं आरोहति । तेन तस्य सेवकस्य अधिकता का ? राजपुत्रस्य (अधःस्थितस्य) न्यूनता का ? स सेवकः राजपुत्रसमो नैव । एतेन लोके पुरुषस्य योग्यता न स्थानादिलाभेन अपि तु प्रकृति-गुणैरेव ।" इति अबोधयत् ।

मूलम्

तयोर्विवाद[1]मभवच्छेषवाय्वोर्महात्मनोः ।
लक्ष्म्या निबोधितः श्रीमानुत्तस्थौ गरुडध्वजः ॥ ९१ ॥

किमर्थं क्रोशसे [2]वीर कः पुमानागतः परः ।
इत्युक्तो देवदेवेन [3]फणी देवमभाषत ॥ ९२ ॥

१. -दो ह्य- ।
२. शेष पुमान् कोऽत्रागतः । ३. फणिराजोऽभ्यभाषत ।

**कल्याणकाण्डदीपः**

**क्रोशसे** आह्वयसे । "बद्ध्वा तस्थौ ज्वलन् रुषा" इति शेषः । **पर्वतार्थं** पर्वतोद्धरणार्थं श्रीनिवासरूपविशेषसन्निधानपर्वतप्रयोजनाय वा ।

**मूलम्**

**शेष उवाच—**

**मलयाचल[1]वासस्तु वायुरत्यन्तगर्वितः ।**
**अवाच्यवचनं चोक्तं [2]वायुनाऽत्यन्तमानिना ॥ ९३ ॥**

१. वासेन वायुनाऽत्यन्तगर्विणा । २. अनेना- ।

**गूढकर्तृकव्याख्यानम्**

एवं महाबुद्धिशालिनोः शेषवाय्वोः महति कलहे समुत्पन्ने तं कलहकलकलं आकर्ण्य लक्ष्मीः हरिं निबोधयामास— "हे जगदीश ! दीनदयापर ! मङ्गलमूर्ते ! दयानिधे ! दयां कुरु, गृहद्वारे केऽपि कलकलं कुर्वन्तः आसते । लघु उद्बुध्यस्व स्वामिन् ! पश्य बहिः ।" तदा हरिः कलकलं श्रुत्वा शेषं प्रति, "शेष ! किं तत् ? कुतः तथा क्रोशसे ? बहु कलकलः श्रूयते । किं कारणम् ? पुनरपरः कः आगतः ?" इति पप्रच्छ । तदा शेषः "देवादिदेव ! श्रूयताम्, मलयपर्वतप्रान्ते वसन् वायुः आगत्य अन्तर्गृहे प्रविष्टुं प्रावर्तत । अहं देवाज्ञया तं माऽन्तर्गच्छेति अशीशिषम् । तथाऽपि अतीतगर्वी वायुः मदुक्तिं अनादृत्य अवाच्यवचनैः मां निन्दति । कलहं कारितवान् वर्धयन्नेवायम्" इत्युवाच ।

**मूलम्**

**[1]एतस्मिन्नेव काले तु साष्टाङ्गं प्रणिपत्य तम् ।**
**वायुस्तुष्टाव पुरुषं पुराणं वेदगोचरम् ।**
**वायुमालोक्य वचनं वारिजाक्षोऽ[2]ब्रवीत् [3]सुतम् ॥ ९४ ॥**

१. तस्मिन्नेव हि । २. ब्रवीदिदम् । ३. स तम् ।

**भगवानुवाच—**

**किमर्थं कलहः पुत्र शेषेणात्यन्तमानिना ।**
**[1]तूष्णीम्बभूव नृपते वायुरत्यन्तभक्तिमान् ॥ ९५ ॥**

१. तुष्टो बभूव ।

**कल्याणकाण्डदीपः**

**नृपते** इत्याद्यनुपदं बहुशः सम्बोधनम्, आदरातिशयात् ।

**गूढकर्तृकव्याख्यानम्**

शेषे हरौ विज्ञापयति वायुः श्रीहरिं साष्टाङ्गं प्रणम्य, वेदप्रतिपाद्यं, पुर अग्रगमने, गमनं स्थितिः, पुरुषं = जगतः सृष्टेः प्राक् विद्यमानं, पुरु बहुलं षः चेष्टा यस्य तं बहुदैत्यनाशकत्वात् पुरुषम् । पुरु पूर्णं मोक्षाख्यफलं स्वात्मानं सनोति ददाति इति भागवतटीकानुरोधेन पुरुषं हरिं बहु तुष्टाव । ततः महाज्ञानिनं वायुं कृपया आलोक्य वारिजाक्षः वायुं प्रति "पुत्र ! वायो ! शेषेण तव कलहः कृतः । शेषः अति मानी । अतः कलहो माऽस्तु" इति हरिणोक्ते एव हरौ वायुः अतिभक्तिमान् सन्तुष्टः ।

**मूलम्**

**शेष उवाच—**

**अहं समर्थो भगवन् बले ज्ञाने च त्वत्प्रिये ॥ ९६ ॥**

**मत्समो नास्ति भूलोके नाके वा [1]ब्रह्मणो लये ।**
**सरीसृपवचः श्रुत्वा [2]प्रोवाच फणिनं हरिः ॥ ९७ ॥**

१. ब्रह्मणो गृहे ।, ब्रह्मसद्मनि । २. सम्पूज्य ।

**कल्याणकाण्डदीपः**

**नाके वेति । लय इति ।** लीयते आश्लिष्यते स्वस्मिन्निति लयः आलयः । लीङ् श्लेषणे अधिकरणे अच् इति योगेन वा "लयजलं विकारो नामधेयं गतं क्षुर धान" इत्यादिषु निरुपसृष्टैर्लयकारगतधान-पदैरुपसृष्टार्थानां प्रलयप्रकारानुगतापिधानानां ग्रहणवल्लयपदेनापि निरुपसृष्टेनालयस्य निलयस्य वा ग्रहणाद्वा आ इति धातुयोगजार्थस्य ङितः दीर्घेणाश्लिष्टस्थाने वेतिवदत्रापि योजनाद्वा लय इत्यस्यालय इत्यर्थः । "नाके ब्रह्मण आलये" इति सुगमसन्दर्भे सम्भवत्यपि, एवं रचनाप्रयोजनं तु **ब्रह्मणः** वर्तमानब्रह्मणः लये सति, पुनर्ब्रह्मसृष्टौ **अलये** लयविरुद्धसृष्टौ पालने वा जायमानान्तर्जनिष्यमाणान्तः मत्समो नास्ति इत्यर्थस्य सङ्ग्रहः । अस्मिन् प्रकरणे "कुतो भानुगतिम्" इति श्लोके अप्रस्तुतप्रशंसा-व्याजनिन्दयोः सङ्करः । "तथा त्वम्" इत्युक्तोपमया संसृष्टिः । सहृदयस्य उपालम्भस्य सहृदयमेवोत्तरं भवतीति उत्तरत्रापि 'बिडाल' इत्यादि सार्धश्लोके अप्रस्तुतप्रशंसाव्याजनिन्दयोः सङ्कर इति दिक् ।

मूलम्

श्रीभगवानुवाच—

न वाङ्मात्रेण पौरुष्यं क्रिया केवलमुत्तमम्।
[1]बलाबले परीक्ष्यन्ते देवाश्चेन्द्रपुरोगमाः ॥ ९८ ॥

१. बलाबलं परीक्षन्तां।

कल्याणकाण्डदीपः

'न वाङ्मात्रेण' इत्यत्र 'न द्यूत' इत्यत्रेव प्रतिषेधोऽलङ्कारः।

मूलम्

अत्रैवोत्तरदिग्भागे पर्वतं मेरुनन्दनम्।
स्वकायरज्जुना बद्ध्वा बलं ते यावदस्ति हि ॥ ९९ ॥
तिष्ठ भद्र [1]महाभोगिन् विषफूत्कार[2]जृम्भितः।
हृषीकेशवचः श्रुत्वा हृष्टपुष्टाङ्गविभ्रमः ॥ १०० ॥

१. महाराजन्। २. संयुतः।

गूढकर्तृकव्याख्यानम्

ततः शेषः हरिं विज्ञापयति— "स्वामिन्! जगदीश! इदं विदितमेव खलु भवतः यत् बले ज्ञाने भवत्सेवायां नरलोके स्वर्गलोके सत्यलोके वा मत्समः पुरुषो नैव" इति। शेषवचनं श्रुत्वा तस्य वचनं सम्भाव्य एवं तं उपदिशति— "अयि शेष! बलादौ त्वत्समो नेति वदसि खलु। सत्यम्। परन्तु शृणु। लोके पुरुषस्य पौरुषमस्तीति उक्तमात्रेण तत् पौरुषं न। क्रियां कृत्वा दर्शिता चेत् तदैव सा क्रिया पौरुषं इति गण्यते। एवं सति अद्य त्वया एवं क्रियताम्। अत्र देशे उत्तरदिशि मेरुपुत्रः आनन्दाद्रिः अस्ति। तं गिरिं तव कायेन परितः बद्ध्वा विषफूत्कारपूर्वकं यावत् बलेन धृत्वा तिष्ठ" इति।

मूलम्

स्वकायरज्जुना बद्ध्वा ह्यानन्दाद्रिं महीपते।
तमालोक्याग्निदयितः [1]पर्वतार्थमुपागतः ॥ १०१ ॥

१. पर्वतं तमुपागतः।

आज्ञया वासुदेवस्य देवानां पश्यतामपि ।
कनिष्ठाङ्गुलिसम्पर्कात् पर्वतो भोगिसंयुतः ॥ १०२ ॥

सहस्रमर्धलक्षं च दक्षिणाभिमुखो ययौ ।
मेरुस्तुष्टाव नृपते बलदेवं महाबलम् ॥ १०३ ॥

**गूढकर्तृकव्याख्यानम्**

ततः सर्वेन्द्रियनियामके हरौ एवं आदिशति हर्षेण पुष्टाङ्गः शेषः स्वकायरूपरज्जुना आनन्दाद्रिं यावच्छक्ति बद्ध्वा अतिष्ठत् । एतत् दृष्ट्वा वायुः आनन्दाद्रिं उपागम्य हर्याशयं मत्वा, हरौ सर्वदेवेषु पश्यत्सु आनन्दाद्रिं कनिष्ठाङ्गुलिना (उत्थापयामास) अस्पृशत् । तन्मात्रेण आनन्दाद्रिः शेषसहितः एकपञ्चाशत्सहस्रयोजनदूरे दक्षिणदिशं ययौ ।

**मूलम्**

मेरुरुवाच—

त्रायतां त्रायतां स्वामिन् पुत्रं बालं महाबल ।
एवमुक्तो मेरुणाथ [1]वायुस्त्वद्गतमानसः ॥ १०४ ॥

१. वायुस्स्वरितमानसः ।

**कल्याणकाण्डदीपः**

**त्रायतामिति** । भवानिति शेषः । प्रार्थनायां लोट् । हे स्वामिन् इति सम्बोधनम् । **स्वामिन्** जगताम्पते । अनेन स्तुतिः । स्वामिन् भवान् मम पुत्रं त्रायतां त्रायताम् । आबाधे सम्भ्रमप्रवृत्तौ वा द्विर्वचनम् ।

**मूलम्**

शेषेण गिरिपुत्रेण स्वर्णमुख्यास्तटोत्तरे ।
स्थापयामास राजेन्द्र गिरिराजं सपन्नगम् ॥ १०५ ॥

**कल्याणकाण्डदीपः**

**स्थापयामासेति** । तं गिरिं स्वयमाविश्य यथा न शीर्णः स्यात् तथा स्थापयामास ।

**मूलम्**

**शेषो गतमदः पश्चात् तुष्टाव मरुताम्पतिम् ।**
**क्षमस्व मम दौरात्म्यमज्ञानेनागतं विभो ॥ १०६ ॥**

**[1]निर्वैरत्वात् प्रसादं च चकार मरुतां पतिः ।**
**राजन् शेषनिमित्तेन शेषाचलमिमं विदुः ॥ १०७ ॥**

१. निर्वैरः तत्प्रसादं ।

**कल्याणकाण्डदीपः**

'मरुताम्पतिः' इत्यनन्तरं "मरुत्प्राहाहिराजानं भगवानागमिष्यति" इति ग्रन्थः पठनीयः । चित्रकूटकाककथावत् । स्थूलोऽयं पन्थाः । सूक्ष्मोऽपि अस्ति । ब्राह्मे प्रथमे द्वितीये च । तथा हि । **क्षमस्वेति** । 'गुरो' इत्यनन्तरं "इति क्षमापयामास प्रसादयामास च" इति शेषः । उत्तरत्र प्रसादं च इति चशब्दश्रवणात् । तद्यथा । तथा हि मम गिरिजन्मसाफल्यहेतुभूतो यो वैकुण्ठ इव भगवदावासाय तदागमनलक्षणो मन्मनोरथः तस्य हानिः अतर्कितोपरतैतच्चेष्टापराधान्न स्यादिति । **प्रसादं चेति** । न केवलं क्षमाम्, अपि तु प्रसादं च । स कीदृशः ? अविलम्बेनागच्छमानो भगवान् तदपराधात् तपोविलम्बेन आगमिष्यति न सर्वथा हानिरिति एवं प्रसादं च वरदानं च चकार इत्यर्थः ।

एतेन "मरुत्प्राहाहिराजानं भगवानागमिष्यति" इति पुरोवादाभावात् कथमनुवादः ? इति निरस्तम् । एवं व्याख्याने मूलमेतद्व्याख्यानाय माने ब्रह्मपुराणे प्रथमद्वितीययोः स्पष्टं तत्रैव द्रष्टव्यम् । तत्र भगवतैव शेषं प्रति "त्वद्गिरिं प्रत्यागमनोन्मुखं मन्मनोमध्ये तव श्रेष्ठापराधान्निवृत्तं तच्छमनार्थं तत्रैव पर्वतवायव्ये नागतीर्थे वाय्वन्तर्गतं मां प्रति तपस्तप । तत आगमिष्यामि" इत्याद्युक्तम् । ननु महाशेषस्याप्यज्ञानादि कुतः ? इति चेत् अन्यावेशादिति ज्ञेयम् ।

"ज्ञानरूपानपि सुरान् विना प्राणं क्वचित्परे ।
आविशन्ति ह्यतस्तेषामज्ञानादि न तु स्वतः ॥" इत्युक्तेः ।

परे कामाद्यरयः । एतेन पक्वसाधनस्य वैराग्याधिपतेः रुद्रस्यैव शेषत्वात्, तन्माहात्म्यज्ञानेन इच्छाविषयसिद्धिद्वारा इच्छानिवृत्तौ वैराग्यस्य आत्यन्तिकी परिपक्तिः सिद्ध्यतीति तृतीयदिग्वत्स-स्वरूपं सूचितम् ॥

**गूढकर्तृकव्याख्यानम्**

तत् एतत् दृष्ट्वा पुत्रविपत्तिं शङ्कित्वा मेरुः अतिभयभक्त्या पुत्रक्षेमकाङ्क्षी बलदेवं वायुं "भो स्वामिन् ! प्राणेश्वर ! मम बालं दयया रक्षस्व" इति तुष्टाव । तदा वायुः क्षणात् आर्द्रमनाः शेषेण आनन्दाद्रिणा च प्रार्थितः शेषसहितं आनन्दाद्रिं स्वर्णमुख्याः उत्तरतटे स्थापयामास । ततः शेषः गतमदोऽभूत् । सः प्राणेश्वरं "स्वामिन् ! वायुदेव ! प्राणेश्वर ! त्वमेव समर्थः । मम अज्ञानजन्य-गर्वदौरात्म्यं दयया क्षमस्व क्षमस्व" इति प्रार्थितवान् । वायुः सुप्रसन्नः शेषे वैरं तत्याज ॥ अत एव जनक ! शृणु । शेषः ईशेच्छया किञ्चित्कालं अहमेव समर्थ इति अज्ञानदशायां तिष्ठन् वायोः गतमदः सम्यग्ज्ञानं लेभे । विष्णुरेव सर्वस्वतन्त्रः सर्वशक्तः सर्वज्ञः इति सद्ज्ञानमाप ॥ अतः शेषनिमित्तेन द्वापरे वेङ्कटगिरेः शेषाचल इति नाम प्रवृत्तम् । इति शतानन्द आह ॥

*इति शेषाचलनामसेवा ॥*

**मूलम्**

**कलौ श्रीवेङ्कटाचलनामनिष्पत्तिप्रकारः** (१०८ तः २०५)

**माधवब्राह्मणवृत्तान्तः** (१०८ तः ११६)

**जनक उवाच—**

**कलौ वेङ्कटशैलेति कथं नाम महामुने ।**

**शतानन्द उवाच—**

**पुरा पुरन्दरो नाम सोमयाजी दृढव्रतः ॥ १०८ ॥**

**कालहस्त्याख्यनगरे सत्यवाक् ब्राह्मणोऽभवत् ।**
**अपुत्रस्यापि विप्रस्य [१]नाभूत् दुःखं सुताप्तये ॥ १०९ ॥**

१. ह्यभूत् ।

**कल्याणकाण्डदीपः**

वृषभाचलशृङ्गाय ह्यञ्जनाचलसूनवे ।
शेषाचलनिवासाय वेङ्कटेशाय मङ्गलम् ॥

**नाभूद् दुःखमिति ।**

"कुटुम्बपोषाय च यन्निजायुः न बुद्ध्यतेऽर्थं विहितं प्रमत्तः ।
सर्वत्र तापत्रयदुःखितात्मा निर्विद्यते न स्वकुटुम्बरामः ॥" (भागवते ७-६-२०)

"पिता माता सुहृद्बन्धुर्भ्राता पुत्रस्त्वमेव मे ॥"

इत्यादि शास्त्रार्थानुसन्धानादिति भावः ।

**मूलम्**

**दैवेन पूर्वपुण्येन पुत्रोऽभूद्बुद्धभूसुरे ।**
**चकार नाम लिखितं माधवं विप्रसंसदि ॥ ११० ॥**

**कल्याणकाण्डदीपः**

**दैवेनेति** । "भूसुरस्य पुत्रोऽभूत्" इत्यनेन महाकुलीनत्वं व्यज्यते । **चकारेत्यादि** माधवस्य हरेः इदं माधवम् । 'तस्येदम्' इत्यण् । **नामलिखितं** नामलेखनम् ।

**मूलम्**

**पित्रोपनीतो बालस्तु ववृधे चन्द्रवन्नृप ।**
**वेदवेदाङ्गतत्त्वज्ञः सर्वविद्याविशारदः ॥ १११ ॥**

**कल्याणकाण्डदीपः**

**ववृध** इत्यादि । **चन्द्रवदिति** । "सोमवत् प्रियदर्शनः" इत्यत्रेव वदित्यव्ययम् । "वद्वा यथा तथैवैवं साम्ये" इत्यमरः । अन्यथा चन्द्रेण तुल्यमिति व्युत्पत्त्या भिन्नवचनकत्वापत्तेः । तद्दुष्टम् । "द्वे भिन्ने लिङ्गवचने" इत्यनेन वाक्यदोषे परिगणनात् । अनेन रूपसम्पन्नदेहवत्त्वरूपमौज्ज्वल्यम् ।

*तदुक्तम्*—

"अभिरूप्यमकाठिण्यमङ्गानां चातिमार्दवम् ।
एवमादि गुणावस्था प्रथमे यौवने भवेत् ।
शोभा विलासो माधुर्यं गाम्भीर्यं स्वर्यतेजसी ।
ललितौदार्यमित्यष्टौ सात्त्विकाः पौरुषा गुणाः ॥"

इति रूपलक्षणं प्रागनुक्रान्तम् । ब्रह्मवर्चसेन देहेन च दिने दिने चन्द्रवत् ववृधे ।

**गूढकर्तृकव्याख्यानम्**

तत् एतत् दृष्ट्वा पुत्रविपत्तिं शङ्कित्वा मेरुः अतिभयभक्त्या पुत्रक्षेमकाङ्क्षी बलदेवं वायुं "भो स्वामिन् ! प्राणेश्वर ! मम बालं दयया रक्षस्व" इति तुष्टाव । तदा वायुः क्षणात् आर्द्रमनाः शेषेण आनन्दाद्रिणा च प्रार्थितः शेषसहितं आनन्दाद्रिं स्वर्णमुख्याः उत्तरतटे स्थापयामास । ततः शेषः गतमदोऽभूत् । सः प्राणेश्वरं "स्वामिन् ! वायुदेव ! प्राणेश्वर ! त्वमेव समर्थः । मम अज्ञानजन्य-गर्वदौरात्म्यं दयया क्षमस्व क्षमस्व" इति प्रार्थितवान् । वायुः सुप्रसन्नः शेषे वैरं तत्याज ॥ अत एव जनक ! शृणु । शेषः ईशेच्छया किञ्चित्कालं अहमेव समर्थ इति अज्ञानदशायां तिष्ठन् वायोः गतमदः सम्यग्ज्ञानं लेभे । विष्णुरेव सर्वस्वतन्त्रः सर्वशक्तः सर्वज्ञः इति सद्ज्ञानमाप ॥ अतः शेषनिमित्तेन द्वापरे वेङ्कटगिरेः शेषाचल इति नाम प्रवृत्तम् । इति शतानन्द आह ॥

*इति शेषाचलनामसेवा ॥*

**मूलम्**

**कलौ श्रीवेङ्कटाचलनामनिष्पत्तिप्रकारः** (१०८ तः २०५)

**माधवब्राह्मणवृत्तान्तः** (१०८ तः ११६)

**जनक उवाच—**

**कलौ वेङ्कटशैलेति कथं नाम महामुने ।**

**शतानन्द उवाच—**

**पुरा पुरन्दरो नाम सोमयाजी दृढव्रतः ॥ १०८ ॥**

**कालहस्त्याख्यनगरे सत्यवाक् ब्राह्मणोऽभवत् ।**
**अपुत्रस्यापि विप्रस्य [1]नाभूत् दुःखं सुतासये ॥ १०९ ॥**

१. ह्यभूत् ।

**कल्याणकाण्डदीपः**

वृषभाचलशृङ्गाय ह्यञ्जनाचलसूनवे ।
शेषाचलनिवासाय वेङ्कटेशाय मङ्गलम् ॥

नाभूद् दुःखमिति ।

"कुटुम्बपोषाय च यन्निजायुः न बुद्ध्यतेऽर्थं विहितं प्रमत्तः ।
सर्वत्र तापत्रयदुःखितात्मा निर्विद्यते न स्वकुटुम्बरामः ॥" (भागवते ७-६-२०)

"पिता माता सुहृद्बन्धुर्भ्राता पुत्रस्त्वमेव मे ॥"

इत्यादि शास्त्रार्थानुसन्धानादिति भावः ।

**मूलम्**

**दैवेन पूर्वपुण्येन पुत्रोऽभूद्वृद्धभूसुरे ।**
**चकार नाम लिखितं माधवं विप्रसंसदि ॥ ११० ॥**

**कल्याणकाण्डदीपः**

**दैवेनेति** । "भूसुरस्य पुत्रोऽभूत्" इत्यनेन महाकुलीनत्वं व्यज्यते । **चकारेत्यादि** माधवस्य हरेः इदं माधवम् । 'तस्येदम्' इत्यण् । **नामलिखितं** नामलेखनम् ।

**मूलम्**

**पित्रोपनीतो बालस्तु ववृधे चन्द्रवन्नृप ।**
**वेदवेदाङ्गतत्त्वज्ञः सर्वविद्याविशारदः ॥ १११ ॥**

**कल्याणकाण्डदीपः**

**ववृध** इत्यादि । **चन्द्रवदिति** । "सोमवत् प्रियदर्शनः" इत्यत्रेव वदित्यव्ययम् । "वद्वा यथा तथैवैवं साम्ये" इत्यमरः । अन्यथा चन्द्रेण तुल्यमिति व्युत्पत्त्या भिन्नवचनकत्वापत्तेः । तद्दुष्टम् । "द्वे भिन्ने लिङ्गवचने" इत्यनेन वाक्यदोषे परिगणनात् । अनेन रूपसम्पन्नदेहवत्त्वरूपमौज्ज्वल्यम् ।

*तदुक्तम्*—

"अभिरूप्यमकाठिण्यमङ्गानां चातिमार्दवम् ।
एवमादि गुणावस्था प्रथमे यौवने भवेत् ।
शोभा विलासो माधुर्यं गाम्भीर्यं स्वर्यतेजसी ।
ललितौदार्यमित्यष्टौ सात्त्विकाः पौरुषा गुणाः ॥"

इति रूपलक्षणं प्रागनुक्रान्तम् । ब्रह्मवर्चसेन देहेन च दिने दिने चन्द्रवत् ववृधे ।

*तदुक्तं ब्रह्माण्डे षष्ठेऽध्याये—*

"यो गुणैः पितरं स्वीयैरत्यक्राम दिवाञ्जसा ।
क्रमेण मांसलौ बाहू बभार द्विजपुङ्गवः ।
यौवने समनुप्राप्ते वक्षस्यापि विशालताम् ॥" इत्यादि ।

**वेदवेदाङ्गतत्त्वज्ञ इति** । सषडङ्गवेदपरमतात्पर्यविषयीभूतपरब्रह्मज्ञानी । **सर्वविद्याविशारदः** ।

"अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश ॥"

"ऋग्वेदो यजुर्वेदः सामवेद अथर्वणश्चतुर्थ इतिहासपुराणः पञ्चमो वेदानां वेदः पित्र्यो राशिर्दैवो निधिर्वाको वाक्यमेकायनं देवविद्या ब्रह्मविद्या भूतविद्या क्षत्रविद्या नक्षत्रविद्या सर्पदेवयजनविद्याना-मैवैतत् ।"

"अथागमेतिहासौ च काव्यालङ्कारनाटकम् ।
गानशास्त्रं काव्यकृतिः कामशास्त्रं दुरोदरम् ।
देशभाषालिपिज्ञानं लिपिकर्म च वाचकम् ।
गणकव्यवहारौ च स्वरशास्त्रं च शाकुनम् ॥"

इत्याद्युक्तसर्वविद्यासु शब्दार्थतत्त्वज्ञानशाली । एतेन प्रचण्डप्रसङ्गपाण्डित्यं व्यज्यते । महाभाग्यं च— "ऋचः सामानि यजूंषि सा हि श्रीरमृता सताम्" इति श्रुतेः । एतेनानधीतं अध्येयं किमपि नाम नास्तीति नामवत्त्वमुच्यते । अतो न पौनरुक्त्यम् ।

**मूलम्**

**ततः कालान्तरे पुत्रं [1]सदारं तं चकार ह ।**
**स चन्द्रलेखया रेमे बहुकालं च माधवः ॥ ११२ ॥**

१. प्रासदारं ।

**कल्याणकाण्डदीपः**

**तत इति** । **कालान्तरे** स्नातकोत्तरे काले । **बहुकालं रेमे** इत्यनेन अङ्गविद्यावैशारद्यं व्यज्यते । अयं च नायको रससाधारण्ये धीरशान्तः । "धीरः शान्तः प्रसन्नात्मा धीरशान्तो द्विजादिकः"

इत्युक्तेः । विवेकी क्लेशसहिष्णुर्वा क्रोधाद्यनभिभूतान्तःकरणो वा उपक्रान्तोद्योगादचलितो वा शास्त्रचक्षुर्वा धीरः । **शान्तः** शमप्रधानः । **प्रसन्नात्मा** हृष्टान्तःकरणः । शृङ्गारेऽनुकूलः "एकायनोऽनुकूलः स्यात्" इत्युक्तेः । **नायिका** स्वाधीनपतिका । "आसन्नायत्तरमणा स्वाधीनपतिका भवेत्" इत्युक्तेः । सुरतसुखास्वादनलोभेनासन्नः प्रत्यासन्नः आयत्तश्च रमणः पतिः यस्याः सा । जातौ पाञ्चालः । नायिका च पद्मिनी । पद्मगन्धवदना सुकपोला मन्दगा तनुषडङ्गुलगुह्यादानधर्मनिरता कृतपुण्या पद्मिनी विबुधभाषणशीला, नीलकेशा पृथुश्रोणी श्वेताभरणभूषिता श्वेताम्बरप्रिया साध्वी अल्पाहारा सुभाषिणी ।

"कक्षयोः गुह्यदेशेषु तनूरुहविवर्जिता ।
मधुराहारनिरता सदा मधुरभाषिणी ।
एतां तु पद्मिनीं नारीं पाञ्चालः पुरुषो भवेत् ॥" इत्युक्तेः ।

**मूलम्**

***पञ्चयज्ञपरो नित्यं [1]पञ्चयज्ञसमद्युतिः ।**
**[2]द्विसमवर्षो राजेन्द्र द्वितीय इव भास्करः ॥ ११३ ॥**

१. पञ्चाननसमद्युतिः । २. त्रिसमवर्षं ।

**कल्याणकाण्डदीपः**

**पञ्चयज्ञपरः** इत्यनेन धर्मैकायत्तचित्तत्वलक्षणं धार्मिकत्वम् । **पञ्चेति** । "स एष यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्यानि पशुः सोम" इति ।

"पाठो होमश्चातिथीनां सपर्या तर्पणं बलिः ।
एते पञ्च महायज्ञा ब्रह्मयज्ञादि नामकाः ॥" इति वा ।

द्युपर्जन्यपृथिवीपुरुषयोषिद्रूपपञ्चाग्निविद्या वा पञ्चयज्ञः । एतत्पञ्चयज्ञपरः । **पञ्चयज्ञसमद्युतिः** । साङ्गोपाङ्गोक्तपञ्चयज्ञानां मुख्यकल्पानुष्ठानेन यादृशी द्युतिः ब्रह्मवर्चसं तत्सदृशद्युतिरित्यर्थः । एतेन न परं पञ्चयज्ञतत्परोऽपि तु तत्सिद्धोऽपि इति सूच्यते । 'पञ्चाननसमद्युतिः' इति पाठे पञ्चाननः

* पञ्चयज्ञाः— दैवो होमः बलिर्भौतः पित्र्यः पिण्डक्रिया मतः ।
स्वाध्यायो जपयज्ञश्च नृयज्ञोऽतिथिपूजनम् ॥

सिंहः । विश्वामित्रवदुग्रतेज इत्यर्थः । अनेन तेजस्वित्वम् । द्विसप्तवर्ष इत्यनेन तारुण्यम् । विन्यस्तात् द्वेः द्वित्वसङ्ख्याबोधकशब्दानुमापकाङ्कादुपरि विन्यस्तः सप्तः सप्तत्वसङ्ख्याबोधकाङ्को येषां गण्यमानानां वर्षाणां तानि द्विसप्तानि तानि वर्षाणि यस्य स तथा । तथा च सप्तविंशतिवर्ष इत्यर्थः । "आषोडशाद्भवेत् बालः ततस्तारुण्य उच्यते" इति मनुः । माधवस्याष्टमे गायत्रीगर्भजननं द्वादशवर्षं ब्रह्मचर्यं विंशेऽष्टहायिन्या चन्द्रलेखया परिणयः । तस्या द्वादशे वर्षे तस्य चतुर्विंशे वर्षे सोपसर्याऽभूत् । ततस्त्रिवर्षं गृहे तस्य तया सह रतिः । सप्तविंशेऽतीते कुन्तलासहवास इति विवेकः ।

**द्वितीय इव भास्करः** इत्यनेन देवतात्मतारूपं महामहिमत्वम् । इवशब्दः विरुद्धद्वयसंयोगे भवेदेकत्र संयोगः "इवशब्दो विरुद्धयोः धर्मयोः" इत्यादि काठकभाष्ये । दिव्यमूर्तिविकलो नरावतारो भास्कर इत्यर्थः ।

*अत्रेत्थं भासते—* माधवोऽयं प्राक् भीष्मकः । स च राह्वंशयुक्तः मित्रनामकसूर्यांशः शुच्यावतारः । अयमेव वियुक्तराह्वंशः पद्मावतीपरिणयोत्सवानन्दानुभवाय बकुलावत् पुनराकाशराजा भविष्यति । राह्वंशो गोपालः इति । इत्थं च आकाशदीप इवात्यौन्नत्यात् आकाशे इदानीमपि राजत इति आकाशराज इति नामाप्यनुकूलं भवति । अत एवाह नारदः 'सर्वदीर्घसमन्वितम्' इति ।

**मूलम्**

**सा कन्या पाण्ड्यदेशीया [1]पाण्डवानां यथा प्रिया ।**
**पतौ सुप्ते स्वयं शेते पतौ भुक्ते स्वभोजनम् ॥ ११४ ॥**

१. पाण्ड्यानां च तथा ।

**कल्याणकाण्डदीपः**

**सा कन्येति** । पाण्डवानां प्रिया द्रौपदी यथा कन्या, तथा पाण्ड्यदेशीया सा चन्द्रलेखापि कन्या । महापातकनाशनाय सदा पञ्चकन्यावत् स्मर्तव्येत्यर्थः । अन्योऽर्थः स्पष्टः । उपलक्षणतया तस्याः पतिव्रतमाह— **पताविति** । पतिरित्याख्यातः पतिः ।

**गूढकर्तृकव्याख्यानम्**

शेषाचलकथां श्रुत्वा जनकः शतानन्दं प्रति "महामुने ! कलौ वेङ्कटगिरेः वेङ्कटाचल इति नाम कथमायातम्" इति पप्रच्छ । शतानन्दः वदति । पुरा इत्युक्ते कलियुग-आदिभागे पुरन्दरो नाम विप्रः कालहस्त्याख्यनगरे आसीत् । सः सत्यवादी । सोमेन यजते इति सोमयाजी । सोमयागं कुर्वन्

नियत्या व्रतं आचरन् आसीत् । व्रतं नाम कर्मविशेषः । वनितादिविषयेभ्यः व्रतभङ्गभिया निवर्तते तत् व्रतम् । एवं योग्यस्यापि पुरन्दरस्य पुंनामनरकात् तारकः पुत्रो नासीत् । तेन दुःखितः । अपि तु जन्मान्तरसुकृतवशात् तस्य वार्धक्ये पुत्रः जज्ञे । जातस्य काले जातकर्मनामकरणादिकं शान्तिकर्म कारयामास । तस्य माधव इति नाम । "अष्टमे वर्षे ब्राह्मणं उपनयेत् गर्भाष्टमे वा" इति स्मृतेः पुत्रं अष्टमे उपनीतवान् । तदनु माधवः दिने दिने वर्धमानः "आपञ्चविंशतिवर्षं वेदादिविद्याः सेवेत" इत्युक्तेः ऋगादिचतुर्वेद-शिक्षादिवेद-षडङ्गसाङ्ख्ययोगादिषड्दर्शन-काव्य-साहित्य-नाटक-अलङ्कार-नाटक-तर्क-धर्मशास्त्र-अर्थशास्त्र-कामसूत्र-तदङ्गचतुःषष्ठिकला-सकलमहापुराण-मन्त्रशास्त्र-आयुर्वेद-धनुर्वेद-इत्यादि सकलविद्याः समधीतवान् ।

ततः कालेन गुरुणाऽनुमतः स्नात्वा यथाविधि समावृत्तः "उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम्" इति मनूक्तेः माधवः चन्द्रलेखां नाम कन्यां परिणिनीय । एवं गृहस्थः सन् माधवः यजन-याजन-अध्ययन-अध्यापन-दान-प्रतिग्रह इति षट्कर्माधिकारी, नित्यनैमित्तिक-काम्य-निष्काम्य-कर्मानुष्ठानपरः नित्यं वेदान् अधीयानः, "अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् । होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम्" इति पञ्चयज्ञपरः, द्वितीयभास्कर इव महारुद्र इव ब्रह्मतेजस्वी चन्द्रलेखया चिरं सुखेन आसीत् । माधवपत्नी चन्द्रलेखा नाम पाण्ड्यदेशे जाता पाण्डवानां बन्धुवर्गीया । सा पुनः कीदृशी ?

"कुरूपो वा कुवृत्तो वा दुःस्वभावोऽथवा पतिः ।
रोगान्वितः पिशाचो वा मद्यपः क्रोधनोऽथवा ।
वृद्धो वाऽथ विदग्धो वा मूकोऽन्धो बधिरोऽपि वा ।
रौद्रो वाऽथ दरिद्रो वा कदर्यः कुत्सितोऽथवा ।
कातरः कितवो वाऽपि ललनालम्पटोऽपि वा ।
सततं देववत् पूज्यो मनोवाक्कायकर्मभिः ।
अहङ्कारं विहायाथ कामक्रोधौ च सर्वदा ।
मनसो रञ्जनं पत्युः कार्यमन्यस्य वर्जनम् ॥" इति व्यासः ।

"भुक्ते भुङ्क्ते च या पत्यौ दुःखिते दुःखितायती ।
मुदिते मुदितात्यर्थं प्रोषिते मलिनाम्बरा ।
सुप्ते पश्चाच्च या शेते पूर्वमेव प्रबुध्यते ।
नान्यं कामयते चित्ते सा विज्ञेया पतिव्रता ॥"

अनुकूला विमलाङ्गी कुलीना कुशला सुशीलसम्पन्ना इत्यादि पतिव्रतालक्षणगुणशीलवती आसीत् ॥

**मूलम्**

**कदाचित् [1]द्विजपुत्रस्तु दिवासङ्गमतत्परः ।**
**राजपुत्रीं समासाद्य राजन् कामातुरो द्विजः ॥ ११५ ॥**

१. विप्रपुत्रस्तु ।

**कल्याणकाण्डदीपः**

**तत्पर इति** । 'अभूत्' इति शेषः । **राजपुत्रीम्** इत्यनेन भोगसाधनवित्तसम्पत्तिरुक्ता भवति । **'राजन्'** इति जनकसम्बोधनम् । पदे पदे तत्करणं तु श्रोतॄणां केषाञ्चिद्भाग्यवैषम्यात् तत्रापि वृद्धानां विशेषत आगतनिद्रादिनिवृत्तये प्रकृतस्य राज्ञे वृद्धत्वात् आतङ्कात् प्रजागरवेशेन रात्रौ निद्राभावाच्च बोध्यार्थस्य दुर्गमत्वाद्वा ''यथा सौम्य'' इत्यादिवत् ।

**मूलम्**

**चन्द्रलेखामाधवयोः सम्भाषणम्**

**ममेच्छा वर्तते भद्रे सङ्गमे तव भामिनि ।**
**पतिवाक्यमुपाकर्ण्य पतिं प्राह प्रजापते ॥ ११६ ॥**

**चन्द्रलेखोवाच—**

**शरीरमस्थिमांसाद्यैः पूरितं पुरुषर्षभ ।**
**शरीरेण शरीरस्य सङ्गमः साध्वसम्मतः ॥ ११७ ॥**

**कल्याणकाण्डदीपः**

''श्लेष्मागारं मुखं प्राहुः मांसग्रन्थी कुचद्वयम् ।
दृक्सम्भाषणचेष्टाश्च हासः पर्यटनं तथा ।
केशदन्ताश्च नारीणां सर्वथा पापहेतवः ॥

यन्मैथुनादि गृहमेधि सुखं हि तुच्छं
कण्डूयनेन करयोरिव दुःखदुःखम् ।

तृप्यन्ति देहकृपणा बहुदुःखभाजः
कण्डूतिवन्मनसिजं विषहेतु धीराः ॥" इत्यादेः ।

**मूलम्**

**तत्रापि दिवसे क्रीडामयुक्तां मुनयो विदुः ।**
**निकेतने पिता माता अग्निहोत्रं [1]स्वदेवराट् ॥ ११८ ॥**

१. च देवराट् ।

**कल्याणकाण्डदीपः**

विध्यभावेऽपि रागतः प्राप्तत्वात् भोजनादिवदाचरितव्य इत्यतो निषेधमाह— **तत्रापि दिवस इत्यादिना** । "अहोरात्रे वै प्रजापतिः । तस्याहरेव प्राणो रात्रिरेव रयिः । प्राणं वा एते प्रस्कन्दन्ति ये दिवा रत्या संयुज्यन्ते" इति श्रुतेः । **अयुक्तां** निषिद्धाम् । स्मार्तमपि निषेधं स्मारयति **निकेतन** इति ।

"मान्यगोविप्रदेवानां गुरूणां च तथा गृहे ।
न च देवसमीपे तु न सन्ध्यायां दिवा द्विजः ॥"

'संविशेत्' इत्यनेनान्वयः ।

"संवेशो रेतःसिचामुचिते देशे काले योषिता सहैव ॥" इति नियमः ।

**मूलम्**

**प्रभाकरप्रभां पश्य त्यज कामं द्विजात्मज ।**
**वधूवचनमाकर्ण्य माधवो वाक्यमब्रवीत् ॥ ११९ ॥**

**कल्याणकाण्डदीपः**

लज्जाबाधकमप्याह— **प्रभाकरप्रभा** इति । **वधूवचनमिति** । "वधूर्जाया स्नुषा स्त्री च" इत्यमरः ।

"अहोरात्रे तु भगवान् प्राणोऽह्नचथ वाङ्निशि ।
दम्पत्योर्भगवान् विष्णुर्भार्यास्था तु सरस्वती ।
भर्तृस्थः स स्वयं वायुरेवं जानन् विमुच्यते ।"

### गूढकर्तृकन्याख्यानम्

एवं सति एकदा माधवस्य सम्भोगः कार्य इति इच्छा जाता । तदा दिवासमयः । शास्त्रतः निषिद्धकालः रिरंसां असहमानः सतीं उपागम्य "मङ्गलकरि ! अद्य त्वया सम्भोक्तुं मे इच्छा । अतः तां पूरय" इत्याह । पतिवचनं श्रुत्वा चन्द्रलेखा— "नाथ, पुरुषश्रेष्ठ ! श्रूयताम् । इदं पाञ्चभौतिकं शरीरं रस-रक्त-मेदो-मांस-मज्जा-अस्थि-शुक्ल इति सप्तधातुपूर्णम् । नश्वरं अतिहेयं च । नवद्वारेभ्यः नवविधमलानि क्षणे क्षणे निःसरन्ति । "अमेध्यपूर्णं कृमिजन्तुसङ्कुलं स्वभाषदुर्गन्धमशौचमध्रुवम् । कलेवरे मूत्रपुरीषभाजने रमेत मूढो न रमेत पण्डितः ॥' इति ज्ञानिनो वदन्ति । (अतः ईदृशहेय-शरीरयोः सङ्गमः सर्वथा प्रशस्यं नेति साधवः विदन्ति । साध्नुवन्ति परमार्थं इति साधवः । ते इदं साधु न मन्यन्ते ।) तत्राऽपि अयं दिवासमयरतम् । "नोपेयात् पुरुषो नारीं सन्ध्यायां नापि पर्वसु । न गोसर्गे नार्धरात्रे नापि मध्यदिनेऽपि वै ॥" इत्युक्तेः । विप्रवर्य ! अद्य दिवा । गृहे मातापित्रादिगुरु-जनाः सन्ति । अग्निहोत्रं नाम नित्यं अनुष्ठातव्यम् । नित्यं अर्चनीयः देवः । परितः पश्य प्रभाकर-प्रभाम् । अतः अद्य रतिकरणे त्वं अशुचिः गुरुजननिन्दितः नित्यकर्मबहिष्कृतः धर्मभ्रष्टश्च भवसि । अतः भोगेच्छां जहि ।" इति पतिं विज्ञापयामास । पत्नीवाक्यमुपाकर्ण्य माधव आह—

### मूलम्

**माधव उवाच—**

**भामिनी भव मे सौख्ये पूरयाद्य मनोगतम् ।**
**भर्तुर्वचनमाकर्ण्य भर्तारं वाक्यमब्रवीत्** ॥ १२० ॥

### कल्याणकाण्डदीपः

**भामिनीति** । स्मरसमयमनु पुंसा स्त्री रमणा । सैवेर्ष्याकृतकोपात्मकमनाङ्माना भामिनी । "कोपना सैव भामिनी" इत्यमरोक्तेः । **सौख्ये** तादर्थ्ये सप्तमी । विगलितवेद्यान्तरापरिच्छिन्नानन्दा-यानुकूला भवेत्यर्थः । यद्यपि त्वं भामिनी, तथापि स्मरसमये स्त्रीणां प्रागल्भ्यस्यैवोचितत्वात् विश्रम्भ-विहारविरोधिनौ लज्जामानौ विहाय मया विहरेति भावः । अत्र दिवासङ्गमतत्परः इत्यनेन वनक्रीडा-समासक्तः इत्यर्थात् मनःसङ्गस्य ममेच्छा वर्तत इत्यनेन लज्जात्यागस्य च व्यञ्जनात् "चक्षुःप्रीतिः मनःसङ्ग" इत्याद्युक्ता रत्यन्ता पूर्वतना अनुक्तसिद्धाः सप्तानङ्गदशा ज्ञातव्याः ।

**मूलम्**

**चन्द्रलेखोवाच—**

**गच्छामि जलहेतोस्तु गच्छ त्वं पुरतो [1]मम।**
**तदा जगाम राजेन्द्र कुशार्थं कुस्वभावतः ॥ १२१ ॥**

१. मुने।

**कल्याणकाण्डदीपः**

**तदा जगामेति**। अत्रापि कुशार्थं कुस्वभावत इत्यन्वेति। **कुशार्थम्**। "जीवनीयं कुशं विषम्" इत्यमरः।

**मूलम्**

**सा जगामाथ पानीयपात्रमादाय भामिनी।**
**तामन्वगान्माधवोऽपि वनकूटमभिद्रुतम् ॥ १२२ ॥**

**कल्याणकाण्डदीपः**

**वनकूटमिति**। वनकूटं वनमध्यगतगिरिशृङ्गम्।

"कूटो स्त्री गिरिशृङ्गे यन्त्रे राशावयोधने व्याजे।
अनृते मायायामपि शीराङ्गे निश्चये पापे च॥"

इति टान्तद्व्यक्षरमालायां दिवाविहारदेशत्वादिति भावः।

*तदुक्तं भावप्रकाशे—*

"सरितः पुलिनं वेला कान्ताराराममभूधराः।
लतागृहाणि चित्राणि शय्या किसलयान्विताः।
दिवाविहारदेशाः स्युः ...................... ॥" इति।

**गूढकर्तृकव्याख्यानम्**

एवं उन्मार्गात् विरन्तुं उपदिशन्त्याः पत्न्याः सूचनानि श्रुत्वा माधवः "प्रिये मा कुप्यतु। भवदुक्तिः या वा का वा भवतु। येन केन मम सौख्ये मनो निधेहि" इत्याह। चन्द्रलेखा इतोऽधिकोक्त्या

पतिद्वेष्यतां शङ्कित्वा पतिव्रता तदा "नाथ ! मुने ! अन्यथा मा भावय । अद्य एवं भवतु । त्वं पुरतः अनुकूलदेशे गच्छ । तव पृष्ठतः अहमपि जलाहरणव्याजेन आगच्छामि" इत्याह । तेन प्रकारेण माधवोऽपि समित्-तुलसी-पुष्पाहरणव्याजेन ग्रामात् बहिः जगाम । चन्द्रलेखा पानीयपात्रं आदाय प्रस्थिता । माधवः तन्मार्गं अनुरुरोध । एवं उभौ अपि लघुलघु वनमध्यस्थप्रच्छन्नदेशं आससादुः ।

मूलम्

**वनान्तरे [1]वसन्ते च वनितां द्रुममूलगाम् ।**
**विचित्ररूपलावण्यां पूर्णचन्द्रनिभाननाम् ॥ १२३ ॥**

१. वसन्तीं ।

**कल्याणकाण्डदीपः**

**वसन्ते** वसन्तर्तौ ।

"विहारयोग्यदेशे च विजहार महामनाः ।
अथास्मिन्नन्तरे काले वसन्तः प्रादुरास ह ।
उपदेष्टुमिव क्रीडाविशेषांस्तु द्विजन्मनः ।
पुंस्कोकिलाश्च कूजुर्वै चूतवृक्षसमाश्रिताः ॥" —*इत्याद्युक्तं ब्रह्माण्डे ।*

**विचित्र** इत्यादिरूपपदार्थ उक्तः—

"मुक्ताफलेषु या छाया तरलत्वमिहान्तरा ।
प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥" —इति लावण्यपदार्थो ज्ञेयः ।

मूलम्

**धवलाम्बरसम्बद्धां [1]कटिमेखलघट्टिताम् ।**
**सुनासां सुभगां सुभ्रूं [2]सुवर्णां सुपयोधराम् ॥ १२४ ॥**

१. कटिमेखलयान्विताम् । २. सुपूर्ण- ।

**कल्याणकाण्डदीपः**

**धवलाम्बरसम्बद्धाम्** इत्यनेन पद्मिनीति ध्वन्यते । 'श्वेताम्बरप्रिया' इत्युक्तेः । **कटिमेखल-घट्टिताम्** सकलजनहृदयबन्दिनीवासगृहजघनपरिखावलयेनेव मेखलादाम्ना परिवृतजघनस्थलाम् ।

**सुनासाम्** सुतनुद्वारसुलक्षणसुदीप्तसमनासापुटाम् । सुभगशब्दार्थः प्रागेवोक्तः । **सुभ्रूम्** वरकालाहि-समाकृतिपरमभ्रूयुगाम् । **सुवर्णाम्** निरस्तप्तहेमाभाम् । तटिद्गौरीमिति यावत् । **सुपयोधराम्** त्रिभुवन-विजयपरिश्रमखिन्नस्य मकरकेतोर्विजयश्रमावासं गृहायमानसंसारतरुफलात्मकपीनोन्नतघनशोभन-स्तनीम् ।

**मूलम्**

**तां दृष्ट्वा मोहितो विप्रः कुन्तलां नीलकुन्तलाम् ।**
**स्निग्धकञ्चुकसम्बद्धां कोकिलस्वररञ्जिताम् ॥ १२५ ॥**

**कल्याणकाण्डदीपः**

**तां दृष्ट्वेति** । अनेनादरादर्शनरूपा चक्षुःप्रीतिः प्राथमिक्यनङ्गदशोच्यते । **मोहित इति** । विवेक-स्थानाच्चलितः ।

"व्रीडा विज्ञानमास्तिक्यं पौरुषं स्मृतिराधृतिः ।
दर्शनादेव नश्यन्ति स्त्रीणामेतानि सर्वशः ॥" इत्युक्तेः ।

बाह्येन्द्रियाणां निमीलनाच्छून्यान्तःकरणो वा । कुन्तलां कुन्तलानाम्नीम् । प्रवृत्तिनिमित्तमाह— **नीलकुन्तलामिति** । नीलकुञ्चितमूर्धजाम् इत्यर्थः । अतोऽपि पद्मिनी । "नीलकेशा पृथुश्रोणी" इत्युक्तेः । **स्निग्धकञ्चुकसम्बद्धामिति** । चिक्कणमेचकराङ्कवकूर्पासकेन ससम्बाधं बद्धस्तनतटाम् । **कोकिलस्वररञ्जितां** पञ्चमस्वरेण प्रेम्णः षष्ठावस्थामाप्तवतीम् ।

**मूलम्**

**अञ्जनालिप्तनयनां मञ्जुलस्वर[१]रञ्जिताम् ।**
**पादेन विलिखन्तीं गां जानुस्थितशिरोरुहाम् ॥ १२६ ॥**

१. भूषिताम् ।

**कल्याणकाण्डदीपः**

**अञ्जनालिप्तनयनां** इत्युपलक्षणम् । वासोऽङ्गनायाभरणमाल्यमृगमदगन्धाञ्जनलेपन-सिन्धूर-प्रक्षेपण-मकरिकापत्ररचनादि-कामोपचारसम्पूर्णाम् । **मञ्जुलस्वरेति** । स्वरः शब्दः, मनोज्ञभाषा-रञ्जिताम् । अतोऽपि पद्मिनीं "सदा मधुरभाषिणी" इत्युक्तेः । **पादेनेत्यादि** । प्रियं दृष्ट्वा प्रहृष्यन्ति लज्जया मुखविकारगोपनार्थमधोमुखी पदा महीमालिखतीत्यवहित्य अनेनोच्यते ।

*तदुक्तं कामशास्त्रे*—

"कामबाणप्रविद्धाङ्गी स्विन्नयोनिर्वराङ्गना ।
पादाङ्गुष्ठनखेनाधोवदना लिखती क्षितिम् ॥" इति ।

"पदं व्यवसितित्राणस्थानलक्ष्म्याङ्घ्रिवस्तुषु" इत्यमरः ।

**जानुस्थितेत्यादि ।** जान्वालम्बिनीलनागाभवेणीमित्यर्थः ।

**मूलम्**

**दृष्ट्वा क्लिन्नमना भूत्वा चिन्तयन् ब्रह्मनिर्णयम् ॥ १२७ ॥**

**कल्याणकाण्डदीपः**

**क्लिन्नमना** इत्यनेन मनःसङ्गः । **चिन्तयन् ब्रह्मनिर्णयम्** इति ।

"तटिद्गौरीन्दुतुल्यास्या कर्पूरन्ती दृशोर्मम ।
कान्त्या स्मरवधूयन्ती दृष्टा तन्वी रहो मया ।
यत्तया मेलनं तत्र लाभो मे यश्च तद्रतेः ।
तदेतत्काकतालीयमवितर्कितसम्भवम् ॥"

इत्युक्तेः दैववशसम्पन्नं सुखं हरीच्छालब्धम् । देवा अपि मया पुरा चीर्णपुण्यवशात् इच्छन्त्यां मम भोगमिच्छति । न काञ्चन परिहरेदित्युक्तेः । "हस्तगतं सुखं पादाधःक्षिपन् पशुः" इति विटनय-मनुसृत्य हरेः सङ्कल्पोऽयमिति निश्चित्य, अनेन तत्त्वमार्गानुसन्धानेन अर्थनिर्धारणरूपमत्याख्यभावेन सङ्कल्पात्मकानङ्गदृशोक्ता ।

**मूलम्**

**स्वभार्यां प्रत्युवाचेदं गच्छ प्राणप्रिये गृहम् ।
इच्छा मे पूर्णतां [१]याता त्वद्भक्त्या परितोषितः ॥ १२८ ॥**

१. प्राप्ता ।

**चन्द्रलेखोवाच**—

**अलमुक्तं त्वया भद्र गच्छामि भवनं स्वकम् ।
भर्तुराज्ञामुपानीय चन्द्रलेखा गृहं गता ॥ १२९ ॥**

**कल्याणकाण्डदीपः**

**स्वभार्यामिति** । इतःपूर्वावस्थायां स्वाधीनपतिकां चन्द्रलेखां प्रति अनुकूलोऽपि नायको माधवः इदानीं शठकल्पोऽभूदित्याह **स्वभार्याम्** इत्यारभ्य **गृहं गता** इत्यन्तेन ।

यद्यपीयं पूर्वावस्थायां स्वाधीनपतिका । अनुकूलश्च नायकः । अस्यामवस्थायां तु विप्रलब्धा सा । स च शठः ।

"क्वचित्सङ्केतमावेद्य दयितेनाथ वञ्चिता ।
स्मरार्ता विप्रलब्धेति कलाविद्भिः प्रकीर्त्यते ॥" इत्युक्तेः ।

"गूढविप्रियकारी शठः" इति च । यद्यपि एतौ साध्वीयं न स्मरार्ता । तया तत्कृतविप्रकारश्च न ज्ञात इति तयोः परां काष्ठां न प्राप्नुतः । तथापीदानीं तद्देशीयावायन्त्यां च तामपि प्राप्स्येत इति वा, एकदेशविकृतस्यानन्यत्वाद्वा तौ तथेति दिक् ।

**गूढकर्तृकव्याख्यानम्**

ततः किमभूत् ? माधवः स्वयातवनदेशे एकां युवतीं ददर्श । सा वनिता तत्र वनदेशे वसन्ती । तत्र एकवृक्षस्याधः उपविष्टा । सा कुन्तला नाम्नी । सा कथं आसीत् ? विचित्ररूपलावण्या अत्र रूपं नाम कुण्डल-मुक्ताहार-नूपुर-अङ्गद इति चतुर्विधभूषणाभावेऽपि भूषितवत् अवभासमान-आकार-विशेषः । लावण्यं नाम लवणस्य भावः । "मुक्ताफलेषु छायायाः तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यते ॥" कुन्तला ईदृशविचित्ररूपलावण्यवती । शुभ्रवस्त्रं परिदधती । कट्यां मेखलाम् । चम्पकासदृशशोभना नासिका । मन्मथधनुरिव भ्रूयुग्मम् । पीन-उत्तुङ्ग-सम-स्तनयुग्मम् । वक्षसि स्निग्धकञ्चुकं धृतवती । कुन्तलाः नीलाः आजानुदीर्घाः । नेत्रयोः अन्ते अञ्जनं लिप्तवती ।

कोकिलस्वररञ्जिता— अत्र स्वतः रञ्जयति श्रोतृचित्तं स स्वर उच्यते । स्वरः सप्तविधः— निषाद-ऋषभ-गान्धार-मध्यम-पञ्चम-धैवत-षड्जाश्चेति ।

"षड्जं मयूरो वदति गावो ऋषभभाषिणः ।
अनाविकं तु गान्धारं क्रौञ्चः क्वणति मध्यमम् ।
पुष्पसाधारणे काले पिकः कूजति पञ्चमम् ।
धैवतं हेषते वाजी निषादं बृंहते गजः ॥ इत्युक्तेः ।

कोकिला वसन्ते यया पञ्चमस्वरं मञ्जुलं रौति तथा कुन्तला मञ्जुस्वरेण गायन्तीम् । किञ्च स्वपादाङ्गुष्ठेन भुवं विलिखन्तीम् । ईदृशसुलक्षणवतीं असामान्यसुन्दरीं कुन्तलां माधवो दृष्ट्वा तदा सृष्टिकर्तुः सृष्टौ वैचित्र्यं सृष्टिनिर्णयं च मनसि एवं विचारयति— "अहो किमिदम्, किं रूपम्, किं लावण्यम्,

ईदृशं यत्र कुत्र वा स्यात् ? नैव । इदं न कदाऽपि दृष्टवान्, नापि श्रुतवान् । अतिमोहकं रूपं अनिर्वर्णनीयं च । कुतः ? ईदृशा अतिमनोहरसुन्दराकृतिः अन्यत्र यत्र कुत्र वा अभविष्यत् चेत् तर्हि वर्णयितुं शक्यं अभविष्यत् । ईदृशरूपवर्णनासामर्थ्यवान् यः कोऽपि स्यात् चेत् सः ईदृशसौन्दर्य-सृष्टिसमर्थोऽपि अवश्यं भवितव्य एव । तर्हि तादृशः कः ? तादृशो नाम सृष्टिकर्ता चतुरानन एव । ईदृशसौन्दर्यसृष्टिचातुरी तदायत्तसौन्दर्यवर्णनचातुरी च चतुराननस्य यदि न स्यात् को वा लोके तं चतुराननं वदेत् ? किञ्च तस्य सृष्टिविचारः कीदृशः ? अस्थाने रूपं उत्पादितवान् खलु विधिः । यत्र अत्युत्कृष्टरूपं तत्र अत्युत्कृष्टजात्यापि भाव्यम् । प्रकृते अस्या वनिताया रूपं तावत् अत्युच्चम् । जातिस्तु अतिनीचजातिः । ईदृशस्फुरद्रूपां वने अवस्थातुं एव सृष्टवान् हि विधिः ।

किमिदम् ? रूपस्य अननुगुणा जातिः अननुगुणावसतिः । किमिदं अनौचित्यम् ? किं वा अयमेकः सृष्टिचातुर्यप्रकारः, उत विधिसृष्टिचातुर्यग्रहणे अस्मादृशां अपटुता वा ? किमिदं स्यात् ? रूपस्य अननुगुणजातिं रूपाननुगुणवनवासं कल्पयितुं विधेः कः उद्देशो भवेत् ? इदमित्थं भाति— आदौ विधिः अचिन्त्य अद्भुतलोकविलक्षणअत्युज्ज्वलरूपं सृजेत् इति मनसि कृत्वा स्वसृज्यमान-रूपस्य येन केनापि मालिन्यं मा भूत् इति रूपमालिन्यभिया स्वावयवाभ्यामपि अस्पृष्ट्वा एतदुज्ज्वलं रूपं ससर्ज । सृष्टरूपस्य इतरैः लोकैः करस्पर्शादिभिर्मालिन्यं भवेत् । अतः इदं रूपं न कोऽपि स्पृशेत् । अन्यथा रूपं कलङ्कितं स्यात् । विधिः विहितोऽपि नानुष्ठीयते लोकैः । किं कर्तव्यम् ? इति चिन्तयति । पुनरिदं स्मरति विधिः— यत्र स्पर्शे पातित्यभीतिः लोकस्य तत्रैव रूपनिष्पादने जातेरिव रूपस्यापि स्पृश्यताद्यनवकाशः । तथैव नगरादिकं विहाय विजने वने वासस्यापि विधाने रूप-अस्पृश्यतायाः अधिकानुकूलता । इति निर्णीय विधिः इमां वनितां अत्युज्ज्वलरूपां चण्डालजातौ सृष्ट्वा विजने वने अस्याः वासं च कल्पितवान् । अहो ! विधिः किं करोति ? कथं करोति ? इति तस्य निर्णयं को नाम वेत्ति । अहो ! विधिनिर्णयः अचिन्त्याद्भुतः । इत्येवमादिकं माधवः मनसि विचारित-वान् । ततः तद्वनितासौन्दर्येण परिमोहितः भार्यां चन्द्रलेखां प्रति— "प्राणवल्लभे ! तव भक्त्या तुष्टोऽस्मि । इच्छा मे पूर्णा । अतः वनदेशे मा तिष्ठ । लघु लघु याहि गृहम्" इत्याह । तदा चन्द्रलेखा "तथा" इति साध्वी गृहं ययौ ।

**मूलम्**

**कामपीडितेन माधवेन कुन्तलानुगमनम्**

यावद्गच्छति सा भार्या तावत्तत्र [१]स्थितोऽभवत्।
गतायां स्वप्रियायां च तां बालां [२]पर्यधावत।
शनैर्जगाम राजेन्द्र स्मरेण [३]हतचेतसः ॥ १३० ॥

१. स्थिरो। २. पर्यपद्य च। ३. हतलोचनः।

**कल्याणकाण्डदीपः**

**बालां** कुमारीम्। "सम्प्राप्ते द्वादशे वर्षे कुमारीत्यभिधीयते" इत्युक्तेः। **स्मरेणेति**। स्मरा-वेशाद्धतबाह्येन्द्रियव्यापारोऽपि।

**मूलम्**

समीपस्थं मुनिं प्रेक्ष्य सा राजन् पृथुलोचना।
स्वरभेदं प्रकुर्वन्ती वाक्यमूचेऽथ माधवम् ॥ १३१ ॥

**कल्याणकाण्डदीपः**

'समीपस्थं' एतदारभ्य 'तत्सङ्गपरिमोहित' इत्यन्तग्रन्थस्य तावत्-स्वजात्युचितनीत्याचारतत्पर-साधारणचण्डालतरुणीवृत्तान्तमवलम्ब्य संवदतः कश्चिद् ब्राह्मणतरुणोऽहमिति मन्यमानस्येयं कथेति आपातार्थे प्राथमिकी प्रातीतिकीयं योजना। तथा हि। **स्वरभेदं** चण्डालजातीयध्वनिविशेषम्।

**मूलम्**

कुन्तलोवाच—

मा याहि मुनिशार्दूल मत्समीपं महामते।
सोऽपि तद्वचनं श्रुत्वा सहसा वाक्यमब्रवीत् ॥ १३२ ॥

**कल्याणकाण्डदीपः**

**सोऽपीति**। स्मरावेशहतचेतनोऽपि। **सहसा** बलेन।

### मूलम्

**माधव उवाच—**

**का त्वं कल्याणि कस्माच्च जनिता जननी च का।**
**आवासस्तव भद्रं ते कस्मिन् राष्ट्रे वरानने।**
**सा इत्थमुक्ता मुनिना जातिमाह मनस्विनी। ॥ १३३ ॥**

### कल्याणकाण्डदीपः

**का त्वमित्यादि** । **कस्मात्** कारणात् 'नायातव्यम्' इति शेषः । हे **कल्याणि** मङ्गले । त्वं च का ? देवी वा किमप्सरसा उत मानुषी वा । अत्र किंशब्दः सन्देहात् कल्पनानन्त्यात्मकवितर्कार्थः ।

"किं प्रश्नाक्षेपकुत्सासु वितर्के च त्रिलिङ्गकम् ।
किमव्ययं च कुत्सायां विकल्पप्रश्नयोरपि ।
ईषदर्थेऽतिशययोः ............................॥ "

इति नानार्थे । जननी च केत्यादौ किं प्रश्नार्थः ।

### गूढकर्तृकव्याख्यानम्

ततः माधवः भार्या वनं विहाय यावत् सुदूरं गच्छति तावत् निरीक्षमाणः तस्यां गतायां ('सङ्गात् सञ्जायते कामः' इत्युक्तेः) कुन्तलां यदा अपश्यत् ('दर्शनात् चित्तवैकल्यं' इत्युक्तेः) तदा अतीव मन्मथसन्तप्तः । क्षणात् मन्दं मन्दं कुन्तलां उपागच्छत् । तादृशं माधवं कुन्तला ददर्श । विप्रं मुनिं ब्रह्मवर्चसं अपरिचितं अदेशकालयोः सहसा आगच्छन्तं दृष्ट्वा भीता विकृत-अस्पष्ट-ध्वनिव्यत्यासेन विशालाक्षी कुन्तला माधवं प्रति– "मुनिशार्दूल ! महामते ! मत्समीपं मा याहि मा याहि" इत्याह । माधवः तद्भाषणावकाशं अदत्वा "मङ्गलकारि त्वं का ? तव नाम किम् ? तव पिता माता च का ? सुन्दरवदने ते मङ्गलमस्तु । त्वदधिष्ठितदेशः कः । इत्यादिकं दयया वद" इत्याह । कुन्तला बुद्धिमती प्रौढा निष्कपटं तं स्वजातिं कथयति—

मूलम्

**कुन्तलोक्तास्पृश्यतायाः कारणानि**

कुन्तलोवाच—

किं मां पृच्छसि पापिष्ठां [१]व्यभिचारकुलोद्भवाम् ।
अन्त्यजान्त्यजयोर्जातां सुरामांसाशिनीं खलाम् ॥ १३४ ॥

१. अन्त्यजातिकुलोद्भवाम् ।

**कल्याणकाण्डदीपः**

**किं मां पृच्छसि** इत्यादौ किं कुत्सायाम् । पापिष्ठां मां प्रति का त्वमिति यद्वितर्कयसि तत् किम् न शोभनम् । "जनिता जननी च का" इत्यादि च यत्पृच्छसि स प्रश्नो निन्दितः । सा इत्थ-मिति । "वाक्ये तु सा विवक्षामपेक्षत" इत्यसन्धिः । **सुरामांसाशिनीं** सुरासंस्कृतमांसभोजनाम् ।

मूलम्

[१]मध्यदेशनिवासां मां किं त्वं पृच्छसि भूसुर ।
वेदान्तवेद्यो विप्रेन्द्र न मां द्रष्टुं त्वमर्हसि ।

(मां स्प्रष्टुं क्रीडितुं वाऽपि कथमिच्छसि मूढधीः ।
जल्पन्तीं तां समालोक्य माधवो वाक्यमब्रवीत् ॥)

एवं जल्पितमालोक्य माधवोत्तरमाददत् ॥ १३५ ॥

१. मध्यदेशे निवासो मे ।

**कल्याणकाण्डदीपः**

**मध्यदेशनिवासाम्** ।

"हिमवद्विन्ध्ययोर्मध्ये यः प्राग्विनशना नदी ।
प्रत्यगेव प्रयागाच्च मध्यदेशः स उच्यते ॥" (मनुस्मृतिः २-२१)

तत्र नितरां वासो यस्याः सा, ताम् । आददत् । "दद दाने" । अनुदात्तेत्लक्षणस्य आत्मनेपद-स्यानित्यत्वात् लङि साधु ।

मूलम्

**माधवेन चतुर्मुखदूषणं तथा भोगकारणानि**

माधव उवाच—

वृथा नारायणाज्जातो ब्रह्मा लोकपितामहः ।
(अन्ध एव महाराज रोचते मे मतिः सदा ।)
वृथा सञ्जनयामास वनितां वनहेतवे ॥ १३६ ॥

कल्याणकाण्डदीपः

**वृथा नारायणाज्जातो ब्रह्मेति** । वनति पुमांसं सम्भजत इति वनिता । 'वन सम्भक्तौ' इति व्युत्पत्त्या पुमांसं प्राप्यैव जन्मनः साफल्यं लब्धुं योग्यामपि वधूं **वृथा** रतिपुत्रपरिलाभेन निरर्थकम् । **वनहेतवे** । "हेतुः कारणकर्मयोः" इति कोशात् अरण्यभाजनाय । त्वां काक्का 'यदि' इति लभ्यते । अतः तर्कः । यदि जनयामास तर्हि नारायणाज्जातो ब्रह्माऽपि वृथा स्यादित्यर्थः । अतो नाप्रसिद्धिः दोषः ।

मूलम्

[1]तथा किं मम बुद्धिस्तु तत्रैव रमते सदा ।

१. तथाऽपि ।

कल्याणकाण्डदीपः

**तथा किमिति** । तथा एवं सङ्गच्छते । किं न चैवं सम्भवति । किन्तु अमोघदृक्कर्मणो नारायणात् ब्रह्मजनिः न वृथा । तस्मात् तव जनिरपि न वृथा । तव मनसि किं वा भासेत । मम **बुद्धिस्तु** व्यवसायात्मिका तु सदा सर्वसाधकबाधकालोचनदशास्वपि **तत्रैव** "अनयोः सङ्गमो भूयात्" इति हरीच्छाऽस्तीति अत्रैव **रमते** आनन्दमाप्नोति ।

मूलम्

लवणोदकजातानि रत्नानि विविधानि च ।
अङ्गीकुर्वन्ति देवाश्च तेजःप्राधान्यकारणात् ॥ १३७ ॥

**कल्याणकाण्डदीपः**

मूढाश्चण्डाला रतावशौण्डाः त्वं च रूपलावण्यशौण्डीर्यमानिनी । एवं सति यदृच्छालब्धेन अनङ्गविद्यावित्तेन अनुरूपेण मयापि तव सम्भोगाभावे तव जनिर्वृथा स्यादिति भावः । तर्हि लोकापवादस्य का गतिरित्यत आह— **लवणोदकजातानि इति** । **देवाश्च** देवा अपि । **तेज इति** । ''तेषां तेजोविशेषेण प्रत्यवायो न विद्यते । तेजीयसां न दोषाय'' इति वचनात् ।

''विषादप्यमृतं ग्राह्यममेध्यादपि काञ्चनम् ।
नीचादप्युत्तमं वाक्यं स्त्रीरत्नं दुष्कुलादपि ॥'' इत्युक्तेः । (मनुस्मृतिः २-२३९)

**मूलम्**

**तस्मादहं सुरूपत्वात् त्वयि भोगं करोमि च ।**
**[1]नरकं वा मृतो यास्ये पितृभिः सह सुस्मिते ॥ १३८ ॥**

१. इतो वा नरकं ।

**कल्याणकाण्डदीपः**

**तस्मादिति** । **सुरूपत्वात्** सौन्दर्यलक्षणकार्यहेतोरनुमितात् सुकृतरूपतेजोविशेषात् । **तस्मात्** अदोषत्वात् **त्वयि भोगं करोमि** इत्यन्वयः ।

**गूढकर्तृकव्याख्यानम्**

विप्रवर्य !, अहं अतिपापिष्ठा । अतिपापकर्मकारिणी । ईदृशीं मां कुतः पृच्छसि ? अस्मान् अन्त्यजान् वदन्ति । अस्मान् चण्डाल-प्लव-मातङ्ग-श्वपच इत्यादिनामभिः आह्वयन्ति । वयं रजक-चर्मकार-नट-वरुड-कैवर्त-मेद-भिल्ल इति सप्तप्रकाराः । वयं निर्दयं गोमहिषादिजीवान् हन्मः । श्मशाने वासः सञ्चारश्च । मृतचेलादिना जीवामः । गोमांसं अद्मः । मद्यं पिबामः । नीलरक्तवस्त्रं धरामः । शुनकगर्दभाः अस्मद्धनम् । रात्रौ ग्रामादिषु न सञ्चारः । पतितजनसहवासः । पापकर्मसु उत्साहः । नरबलिकरणे धर्मबुद्धिः । पशुरुधिरेण देवपूजा । चौर्यं जीवनम् । विश्वकद्रवः परिचिताः । एते अस्मद्व्यवहाराः । अहं चण्डालमातापितृभ्यां जाता । मम स्वभावः कीदृशः ? लोके सर्पं क्रूरमाहुः । तन्न । कुतः ? सर्पः मन्त्रौषधवशो भवेत् । मादृशी कस्याप्युपायस्य अवशा । अतिक्रूरा । मध्यदेशे वसन्ती । विप्रवर ! इदमादिकं कुतः वृथा पृच्छसि ? विप्र ! त्वं ब्राह्मणः । वेदवेदाङ्गतत्त्वज्ञः । विदन्ति धर्मं अनेनेति वेदः । वेदाः ऋगादयः । वेदानां अन्तो निर्णयो यस्मात् स वेदान्तः । उत्तरमीमांसा । सैव

**मूलम्**

## माधवेन चतुर्मुखदूषणं तथा भोगकारणानि

**माधव उवाच—**

**वृथा नारायणाज्जातो ब्रह्मा लोकपितामहः।**

**(अन्ध एव महाराज रोचते मे मतिः सदा।)**

**वृथा सञ्जनयामास वनितां वनहेतवे ॥ १३६ ॥**

**कल्याणकाण्डदीपः**

**वृथा नारायणाज्जातो ब्रह्मेति**। वनति पुमांसं सम्भजत इति वनिता। 'वन सम्भक्तौ' इति व्युत्पत्त्या पुमांसं प्राप्यैव जन्मनः साफल्यं लब्धुं योग्यामपि वधूं **वृथा** रतिपुत्रपरिलाभेन निरर्थकम्। **वनहेतवे**। "हेतुः कारणकर्मयोः" इति कोशात् अरण्यभाजनाय। त्वां काका 'यदि' इति लभ्यते। अतः तर्कः। यदि जनयामास तर्हि नारायणाज्जातो ब्रह्माऽपि वृथा स्यादित्यर्थः। अतो नाप्रसिद्धिः दोषः।

**मूलम्**

**[1]तथा किं मम बुद्धिस्तु तत्रैव रमते सदा।**

१. तथाऽपि।

**कल्याणकाण्डदीपः**

**तथा किमिति**। तथा एवं सङ्गच्छते। किं न चैवं सम्भवति। किन्तु अमोघदृक्कर्मणो नारायणात् ब्रह्मजनिः न वृथा। तस्मात् तव जनिरपि न वृथा। तव मनसि किं वा भासेत। मम **बुद्धिस्तु** व्यवसायात्मिका तु सदा सर्वसाधकबाधकालोचनदशास्वपि **तत्रैव** "अनयोः सङ्गमो भूयात्" इति हरीच्छाऽस्तीति अत्रैव **रमते** आनन्दमाप्नोति।

**मूलम्**

**लवणोदकजातानि रत्नानि विविधानि च।**

**अङ्गीकुर्वन्ति देवाश्च तेजःप्राधान्यकारणात् ॥ १३७॥**

**कल्याणकाण्डदीपः**

मूढाश्चण्डाला रतावशौण्डाः त्वं च रूपलावण्यशौण्डीर्यमानिनी । एवं सति यदृच्छालब्धेन अनङ्गविद्यावित्तेन अनुरूपेण मयापि तव सम्भोगाभावे तव जनिर्वृथा स्यादिति भावः । तर्हि लोकापवादस्य का गतिरित्यत आह— **लवणोदकजातानि इति** । **देवाश्च** देवा अपि । **तेज इति** । "तेषां तेजोविशेषेण प्रत्यवायो न विद्यते । तेजीयसां न दोषाय" इति वचनात् ।

"विषादप्यमृतं ग्राह्यममेध्यादपि काञ्चनम् ।
नीचादप्युत्तमं वाक्यं स्त्रीरत्नं दुष्कुलादपि ॥" इत्युक्तेः । (मनुस्मृतिः २-२३९)

**मूलम्**

**तस्मादहं सुरूपत्वात् त्वयि भोगं करोमि च ।**
**[1]नरकं वा मृतो यास्ये पितृभिः सह सुस्मिते ॥ १३८ ॥**

१. इतो वा नरकं ।

**कल्याणकाण्डदीपः**

**तस्मादिति** । **सुरूपत्वात्** सौन्दर्यलक्षणकार्यहेतोरनुमितात् सुकृतरूपतेजोविशेषात् । **तस्मात्** अदोषत्वात् **त्वयि भोगं करोमि** इत्यन्वयः ।

**गूढकर्तृकव्याख्यानम्**

विप्रवर्य !, अहं अतिपापिष्ठा । अतिपापकर्मकारिणी । ईदृशीं मां कुतः पृच्छसि ? अस्मान् अन्त्यजान् वदन्ति । अस्मान् चण्डाल-प्लव-मातङ्ग-श्वपच इत्यादिनामभिः आह्वयन्ति । वयं रजक-चर्मकार-नट-वरुड-कैवर्त-मेद-भिल्ल इति सप्तप्रकाराः । वयं निर्दयं गोमहिषादिजीवान् हन्मः । श्मशाने वासः सञ्चारश्च । मृतचेलादिना जीवामः । गोमांसं अद्मः । मद्यं पिबामः । नीलरक्तवस्त्रं धरामः । शुनकगर्दभाः अस्मद्धनम् । रात्रौ ग्रामादिषु न सञ्चारः । पतितजनसहवासः । पापकर्मसु उत्साहः । नरबलिकरणे धर्मबुद्धिः । पशुरुधिरेण देवपूजा । चौर्यं जीवनम् । विश्वकद्रवः परिचिताः । एते अस्मद्व्यवहाराः । अहं चण्डालमातापितृभ्यां जाता । मम स्वभावः कीदृशः ? लोके सर्पं क्रूरमाहुः । तत्र । कुतः ? सर्पः मन्त्रौषधवशो भवेत् । मादृशी कस्याप्युपायस्य अवशा । अतिक्रूरा । मध्यदेशे वसन्ती । विप्रवर ! इदमादिकं कुतः वृथा पृच्छसि ? विप्र ! त्वं ब्राह्मणः । वेदवेदाङ्गतत्त्वज्ञः । विदन्ति धर्मं अनेनेति वेदः । वेदाः ऋगादयः । वेदानां अन्तो निर्णयो यस्मात् स वेदान्तः । उत्तरमीमांसा । सैव

वेदान्तः । तं सम्यक् वेत्सि । "जन्मना ब्राह्मणो ज्ञेयः संस्कारैः द्विज उच्यते । विद्यया याति विप्रत्वं त्रिभिः श्रोत्रिय उच्यते ॥" इत्युक्तेः । त्वं जन्मना ब्राह्मणः । उपनयनादिसंस्कारं प्राप्तः द्विजोऽसि । ईदृशब्राह्मणकुलजातस्त्वं अतिनीचकुलजातां अतिपापिष्ठां मां द्रष्टुमपि श्रेयो न । मादृशीदर्शनेनापि तव पातित्यम् । एवं सति मां स्प्रष्टुं विहर्तुं च सर्वथा अयोग्यम् । ज्ञात्वा ज्ञात्वा एतत् निन्द्यकृत्यं कर्तुं यतमानं त्वां मूढमतिं मन्ये" इति ।

एवं आत्मानं प्रति जल्पन्तीं प्रति माधव आह— "हे वनिते ! विधिविधानज्ञः विधिः यादृश-यादृशवस्तु येन-येन प्रकारेण स्रष्टव्यं तादृश-तादृशवस्तु तेन-तेन प्रकारेण स्रष्टुमर्हति । अपि तु सः तादृशसृष्टिनियममतिक्रम्य प्रवर्तते । अक्रमसृष्ट्या विधिः अन्ध इति भाति । कुतः ? अद्य त्वां वनवासानर्हां वनवासायैव सृष्टवान् । एवं सति विधाता विश्वसृट् इत्यादिशब्दवाच्यः अपि भवेत् । तस्य तव सृष्टिः वृथा जाता । एतेन नाभिजन्मा श्रीमन्नारायणात् जात इति वृथा । किं ब्रूमः ? विधिप्रेरितोऽहमपि मूढः सम्पन्नः । किमिदम् ? मम मनस्तु भामिनि ! त्वय्येव रमते । नानारत्नानि लवणसमुद्रे जातानि । तानि रत्नानि अतिहेयलवणोदके जातानि इति अनिच्छया त्यजति किं लोकः ? रत्नानि उत्कृष्टगुणवत्त्वादेव न त्यजन्ति, स्वीकुर्वन्त्येव । देवा एव स्वीकुर्वन्ति । किमुत अस्मादृशाः ? अतः अयि मनोहररूपलावण्यवति ! अद्य त्वं या वा का वा भवतु । तव कुलशीलादयः ये वा के वा भवन्तु । हेया वा ग्राह्या वा । तव मनोहररूपमेव अद्य उत्कृष्टगुणः । तत्कृते त्वां स्वीकरोम्येव । त्वयि भोगं कर्तुं मे मतिनिश्चयः । अयि सुस्मिते ! एतत्सम्भोगेन मम मानो वा अपमानो वा कीर्तिर्वा अपकीर्तिर्वा पुण्यं वा पापं वा प्राणरक्षणं वा प्राणहानिर्वा स्वर्गो वा नरको वा भवतु, सर्वमपि मम समम् । मत्सकाशात् मत् पितॄन् मां च नरके प्रक्षिपन्तु, न गणयामि । अहं सिद्धः त्वमपि सिद्धा भव भोगाय" इति ।

**मूलम्**

**देवानुद्दिश्य कुन्तलाप्रार्थना**

**इत्येवमुक्ता द्विजबालकेन**
**रुरोद कन्या तरुणारुणप्रभा ।**
**वनौकसां विप्रवरो विमुच्यतां**
**दोषादमुष्मादसतीप्रसङ्गात् ॥ १३९ ॥**

[1]हे देवता याश्च गणाधिपत्ये
भान्विन्दुपूर्वाः सनवग्रहाश्च ।
शृण्वन्तु वाक्यं मम [2]विप्रपुत्रो
वृथा मृतिं यास्यति पापसङ्गात् ॥ १४० ॥

१. दिग्देवतायाश्च गणाधिनाथः सूर्येन्दुपूर्वाः सचराचरश्च ।
२. विप्रमुख्यो ।

**कल्याणकाण्डदीपः**

अथ देवमाया कुन्तला अस्य असतीसङ्गान्मोचनं मानुषप्रयत्नमात्रेण अशक्यकरणं मत्वा हाहा अस्येष्टजना वियुक्ता इति शोकेन रुदित्वा देवताः प्रार्थयते— **इत्येवमुक्त्वेत्यादिना** ।

हे वनौकसां या देवताः । हे याश्च गणाधिपत्ये **देवताः** गणदेवताः ।

"आदित्या द्वादश प्रोक्ता विश्वेदेवाः दश स्मृताः ।
वसवश्चाष्टसङ्ख्याताः षट्त्रिंशत् तुषिताः स्मृताः ।
आभास्वराश्चतुःषष्ठिर्वाताः पञ्चाशदूनकाः ।
महाराजकनामानो द्वे शते विंशतिस्तथा ।
साध्या द्वादश विख्याता रुद्राश्चैकादश स्मृताः ॥" इत्युक्ताः ।

**गणाधिपत्ये** गणानामाधिपत्यं यस्याः सा गणाधिपत्या, तस्याः सम्बुद्धिः । **गणाधिपत्ये** हे गणाधिपदेवते ! **भान्विन्दुपुरस्सराः सनवग्रहाः** । नवग्रहदेवतासहिताः देवताश्च भवन्तः । **असत्याः** कुलटायाः । **प्रसङ्गः** सम्भाषणसन्दर्शनादिः । तस्मात् अमुष्मात् पारत्रिकात् नरकपातकात् अयं विप्रवरो **विमुच्यात्** विमोचनं प्राप्नुयात् । इति **मम वाक्यं** प्रार्थनारूपं आकर्णयन्तु । पारत्रिकमनिष्टमुक्त्वा, ऐहिकमप्याह— **विप्रपुत्र इत्यादिना** । अयं विप्रपुत्रः **वृथा** धर्मज्ञानादि-विप्रजन्मफलमन्तरेण मृतिं विप्रजन्मजीवनत्यागं पापसम्बन्धात् यास्यति ।

**मूलम्**

**विललाप महाराज [१]ब्राह्मणं सा सुमध्यमा ।**
**मा स्पृशाद्य महीदेव [२]पापां मां व्यभिचारिणीम् ।**
**कः स्पृशेदग्निमार्तः सन् सर्पं व्याघ्रं गजं द्विज ॥ १४१ ॥**

१. ब्राह्मणार्थं । २. पापिनीं ।

**कल्याणकाण्डदीपः**

**विललाप** । परिदेवनमकरोत् । शोकार्तवाक्यं परिदेवनं तदूचे इत्यर्थः । "ब्राह्मणं प्रति" इति शेषः । कामार्तोऽहं तन्महार्तिशान्त्यै त्वामहं स्पृशामीत्यत आह— **कः स्पृशेदिति** । हे द्विज, **आर्तः** शीतार्तः को विवेकी **अग्निं स्पृशेत्** । न कोऽपीत्यर्थः । **आर्तः** दारिद्र्यार्तः **सर्पं** निधिस्थम् । चोरार्तो व्याघ्रम् । अध्वार्तो वनगजम् । **'द्विजं'** इति **पाठे** जनसम्बाधे लीलया वा सदा बाह्याभ्यन्तरपरिशुद्धं अशुचिसम्पर्कभीरुं ब्रह्मवर्चसेन ज्वलन्तं द्विजं सेवातिरेकेण न साक्षात् स्पृशेदित्यर्थः । "गामग्निं ब्राह्मणं चैव त्रीणि तेजांसि न स्पृशेत्" इति स्मृतेः ।

**मूलम्**

**[१]परपत्न्योऽहितुल्यास्तु तव चण्डालकन्यका ।**
**उत्तमं पदमास्थाय पदमिच्छन्त्यधोगतिम् ॥ १४२ ॥**

१. परपत्न्यग्नितुल्या स्यात् तत्र चाण्डालकन्यका ।
उत्तमं पदमास्थाय नीच इच्छत्यधोगतिम् ॥

**कल्याणकाण्डदीपः**

किन्तु अमीषु एकजातीया इत्यत आह— **परपत्न्य इति** । "सर्वेषां परपत्न्यस्तु परपत्न्य एव अहिसदृशाः । तत्रापि तव विप्रेन्द्रस्य चण्डालकन्यका अहम् अहिसहचरी किं वाच्यमित्यर्थः ।

**मूलम्**

**[१]ज्ञानिनो न वृथा विप्र तव बुद्धिस्तु नेदृशी ।**
**जाती द्वे निर्मिते पूर्वं विष्णुना द्विजसत्तम ॥ १४३ ॥**

१. ज्ञानिनस्तव बुद्धिस्तु कथमेतादृशी भवेत् ।

**कल्याणकाण्डदीपः**

**वृथेत्यादि** । हे विप्र, तव बुद्धिः ईदृशी ज्ञानिव्यवसायसदृशी न जाता । अपि तु वृथा जाता इत्यर्थः ।

**मूलम्**

**[1]स्त्रीत्वं च पुरुषत्वं च चतुर्वर्णं तु भूसुर ।**
**ब्राह्मणस्य ब्रह्मयोनिं परेषां तु परस्परम् ॥ १४४ ॥**

१. पुंस्त्वस्त्रीत्वप्रभेदेन चतुर्वर्णेषु भूसुर ।
ब्रह्मयोनिर्ब्राह्मणस्य परेषां तु परस्परम् ॥

**कल्याणकाण्डदीपः**

चतुरवयवो वर्णः **चतुर्वर्णः** । तस्मिन् **स्त्रीत्वं पुरुषत्वं च** इति द्वे जाती । 'तथा' इति शेषः । **ब्राह्मणस्येति** । **ब्रह्मयोनिं** ब्रह्मा विप्रः योनिः उत्पत्तिकारणं यस्याः सा, तां ब्राह्मणीम् । तथा च ब्राह्मणस्य ब्राह्मणीम् । तस्याः ताम् । एवं **परेषां परस्परं** क्षत्रियस्य क्षत्रियाम् । तस्याः तम् । आर्यस्य आर्यां तस्याः तम् । ''इत्याद्येवं क्लृप्तिं कल्पितवान्'' इति शेषः ।

**मूलम्**

**नाहं स्पर्शयोग्येति माधवस्योपदेशः तथा माधवस्य जन्मश्रेष्ठत्वम्**

**विपरीतमहं मन्ये धर्मत्यागं द्विजन्मनाम् ।**
**शरीरं तव विप्रेन्द्र वेदपूतं विशेषतः ॥ १४५ ॥**

**कल्याणकाण्डदीपः**

**विपरीतमिति** । धर्ममातिष्ठासूनामपि द्विजन्मनां **धर्मत्यागं** धर्मव्यतिक्रमसाहसकरं **विपरीतं** विरुद्धं इदानीमहं पश्ये । किमत्र विरुद्धं पश्यसि इत्यतः सदसन्मेलनमिति भावेन विप्रशरीरयोः सदसत्त्वं निरूपयति **शरीरमित्यादिना** ।

**मूलम्**

**ऋतुकाले यदा मातुस्तव पित्रा निशागमे ।**
**आयान्ति कश्चिद्राक्षस्यो रुधिराशनतत्पराः ॥ १४६ ॥**

**तासां निरसनार्थाय श्रियमावाहयेत् पतिः ।**
**रेतोत्सृष्टं वेदपूतं गर्भाधानमिदं विदुः ॥ १४७ ॥**

**कल्याणकाण्डदीपः**

रेतमुत्सृष्टं यस्मिन् तत् कर्म । पय आदिवत् रेत अदन्तोऽप्यस्ति । आहिताग्न्यादेराकृतिगणत्वान्निष्ठान्तान्तो बहुव्रीहिः साधुः । **वेदपूतम्** । "विष्णुर्योनिं कल्पयतु" इत्यादि वेदमन्त्रैः पवित्रम् ।

**मूलम्**

**सीमन्तं कल्पयामासुर्मन्त्रैर्वेद[1]समैर्द्विजाः ।**
**दशमासे तु सम्प्राप्ते [2]प्रसूता जननी तव ॥ १४८ ॥**

१. मयैर्द्विजैः । २. प्रासूत ।

**कल्याणकाण्डदीपः**

**सीमन्तमिति** । पुंसवनानवलोभनयोरुपलक्षणं सीमन्तोन्नयनपर्यन्तं कर्म । **वेदसमैः** खिलोद्भवैः ।

*तदुक्तं प्रयोगपारिजाते*—

"पत्न्या प्रथमजं गर्भमत्तुकामाः सुदुर्भगाः ।
आयान्ति कश्चिद्राक्षस्यो रुधिराशनतत्पराः ।
तासां निरसनार्थाय श्रियमावाहयेत् पतिः ।
सीमन्तकरणाल्लक्ष्मीं तामावहतिमन्त्रतः ।
श्रियाश्रितशरीत्वात् तां त्यजन्ति समीहिताः ।
अलक्ष्यो दुर्भगाः क्रूराः राक्षस्यः पिशिताशनाः ।
गृष्टयः सम्प्रगृह्यन्ते पीड्यन्ते च विशेषतः ।
तासां च तादृशी वृत्तिः ब्रह्मणा विहिता पुरा ।
'आते गर्भो योनिमै'त्वित्याद्यं सूक्तं खिलोद्भवम् ।।" इत्यादि ।

न च स्त्रीसंस्कारत्वेन गर्भसंस्कारत्वाभावात् प्रकृतासङ्गतिः इति वाच्यम् । परम्परया गर्भसंस्कारत्वात् ।

मूलम्

[१]तदैव जातकर्माणि कृतवान् शास्त्रपूर्वकम् ।
अन्नप्राशनचौलादि [२]ब्रह्ममन्त्रादिवाचकम् ॥ १४९ ॥

१. तथैव । २. ब्रह्मवाचनपूर्वकम् ।

अग्निसाक्षिविधानेन प्रासदारं चकार सः ।
[१]अधीतवेदशास्त्रश्च आहिताग्निर्व्रते स्थितः ॥ १५० ॥

१. अधीतवेदवेदाङ्गश्चाहि- ।

कल्याणकाण्डदीपः

**चौलादीति** । **ब्रह्ममन्त्रः** वेदमन्त्रः । तस्य वाचकं वेदोपकरणान्तं कृतवानित्यन्वयः । यद्वा, **वाचकम्** अध्येतारम् । प्रासदारं त्वां चकार स पिता इत्यन्वयः । **अधीतेत्यादि** । 'त्वमभूः' इति शेषः ।

गूढकर्तृकव्याख्यानम्

एतादृशमाधववचनं श्रुत्वा उदितसूर्यसदृशप्रभावती कुन्तला माधवे अनुवचन्ती दुःखेन अश्रु मुञ्चन्ती "हा हन्त ! विप्रः जातिभ्रष्टः धर्मभ्रष्टः भवेत्" इति तस्य हितैषिणी देवान् प्रति "भो वनाभिमानिनो देवाः ! इन्द्रादि अष्टदिक्पालकाः ! गणाधिनाथ ! कर्मसाक्षिन् सूर्य ! नवग्रहाः ! स्थावर-जङ्गमात्मकप्राणिनः ! मम प्रार्थनां शृण्वन्तु । योऽसौ विप्रः एतद्व्यभिचारिणी अतिपापिष्ठायाः मम दर्शनवाक्यश्रवणभाषणस्पर्शनादिकं कृत्वा कुलमानकीर्तिधर्मादिभ्यः भ्रष्टः पतितश्च भूत्वा अन्ते वृथा मृतिं यास्यति । हन्त ! एवं मा भूत् । मन्निमित्तेन यत्पातकं अस्य स्यात् तस्मात् एनं रक्षन्तु" इति सकरुणं विलपन्ती "अद्य अयं विप्रः मोहावस्थितः शास्त्रमुखेन धर्माधर्मौ स्मारितश्चेत् पापात् जुगुप्सा" इति कृत्वा तं विप्रं विज्ञापयति— "विप्रवर्य ! अहं अतिपापा व्यभिचारिणी । मां मा स्पृश । लोके कश्चित् कयाचित् बाधया बाधितः अग्निं सर्पं व्याघ्रं गजं वा स्पृशति ? मैव । किञ्च सामान्यतः परस्त्री एव अग्निना समा । तत्रापि किमुत चाण्डालस्त्री ? लोके नीचः नरः उत्तमपदं प्राप्यापि स्वनीचस्वभावं न जहाति । अधोगतिं गच्छति । एवं नीचस्वभावः । विप्रवर ! अद्य त्वं ईदृशो न । जन्मतः ब्राह्मणः, सत्त्वगुणसम्पन्नः, शास्त्रतः संस्कृतमनाः, विवेकी । तव मतिः अधोगतिं गन्तुं नेच्छति । इदं तु ते स्मारयामि—

आदौ विष्णुः "ब्राह्मणोऽस्य मुखमासीत् बाहू राजन्यः कृतः । ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥", "चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः" इत्युक्तेः । (सत्त्वगुणप्राधान्येन "शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च । ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्मस्वभावजम् ॥" इत्युक्तेः कर्मभिः स्वमुखात् **विप्रान्** । स्वस्य बाहुभ्यः रजोगुणप्राधान्येन तद्गुणसारिभिः "शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम् । दानमीश्वरभावश्च क्षात्रं कर्म स्वभावजम् ॥' इति कर्मभिः **क्षत्रियान्** । "कृषि-गो-रक्ष-वाणिज्यं वैश्यकर्मस्वभावजम् ।" इत्युक्तेः तमोगुणसत्त्वेऽपि रजोगुणप्राधान्येन तदनुसारिकर्मभिः ऊरुभ्यां **वैश्यान्** । तमोगुणप्राधान्येन तदनुसारि त्रिवर्णसेवाकर्मभिः पद्भ्यां **शूद्रान्** ससर्ज । सृष्टिं वर्धयितुं स्त्रीपुरुषमिथुनसृष्टिं चकार । पुरुषरूपं स्वायम्भुवमनुः । स्त्रीरूपं तत्पत्नी शतरूपा । एतयोः सकाशात् क्रमेण स्त्रीपुरुषसन्ततिः ववृधे । चतुर्वर्णेषु इतरसङ्करवर्णेषु च ववृधे । ब्राह्मणस्य ब्राह्मण्या, क्षत्रियस्य क्षत्रियाण्या इत्येवं समानवर्णयोर्विवाहः व्यवस्थितः ।

अद्य त्वं विप्र, विप्रवर्णे जातः । तव देहः विशेषतः वेदाध्ययनेन परमपूतः । गर्भाधान-पुंसवन-सीमन्तादिषोडशशान्तिकर्म-सुसंस्कृतमातापितृभ्यां जातः । "ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोडश स्मृताः । तेषां आद्याश्चतस्रस्तु निन्दितैकादशी च या । त्रयोदशी च शेषास्तु प्रशस्ता दश रात्रयः ॥ युग्मासु पुत्रा जायन्ते कन्यास्तु विषमासु च ।" इति भारतोक्तेः । दशम्यादि पुण्यकालं वर्जयित्वा समदिवसे रात्रौ प्रथमयामानन्तरं "श्रीविष्णुप्रेरणया श्रीविष्णुप्रीत्यर्थं वामदेवयज्ञं करिष्ये" इति सङ्कल्प्य आत्मपत्न्यां लक्ष्मीं अनुसन्धाय "विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु । आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ॥' इति विधिं अनतिक्रम्य तव पिता तव मातुः गर्भाशये क्षेत्रे रेतःसेकमकरोत् । एतत् **गर्भाधानं** आहुः । ततः गर्भिण्याः तव मातुः "येन पुमान् प्रसूयते तत् पुंसवनम्" इति द्वितीये तृतीये वा **पुंसवना**ख्यं कर्म, "आधानादष्टमे मासि सीमन्तोन्नयनं भवेत्" इति अष्टमे मासि द्विजाः **सीमन्तं** वेदमन्त्रैः कारयामासुः । ततः "दशमासेषु पूर्णेषु तव माता त्वं असूत । जातस्य तव "जन्मनोऽनन्तरं कार्यं जातकर्म यथाविधि ।" **जातकर्म** तव पिता कारितवान् । "द्वादशे षोडशाहे वा नामकर्म तु कारयेत्" इति तव जननात् द्वादशे दिने तव **नामकर्म** कृतम् । ततः दन्तजननात् पूर्वं द्विगुणसूत्रया सूच्या **कर्णवेधनम्** । "अन्नस्य प्राशनं कार्यं जातेषु दशमेषु च । मध्वाज्यकनकोपेतं प्राशयेत् पायसं च तत् ।" इति जातदन्तस्य जातस्य तव **अन्नप्राशनम्** । पूर्णे संवत्सरे तव **वर्षवर्धन्तीम्** । "तृतीये पञ्चमे वाऽथ सप्तमे जन्मतः शिशोः । गर्भाद्वा चौलकं कुर्यात् इति प्राह पितामहः ।" इति तृतीये वर्षे **चौलम्** । "अक्षरग्रहणं प्राप्ते पञ्चमे वत्सरे भवेत्" इति उत्तरायणगे सूर्ये शुभनक्षत्रयोगवारकरणयुतदिने "ओङ्कारादिनमःशब्दान् उच्चार्यैवाक्षराणि च" इति तव पञ्चमे वत्सरे **अक्षराभ्यासम्** । ततः "अष्टमे

वर्षे ब्राह्मणमुपनयेत्'', ''गर्भाष्टमे वा'', ''येन कर्मणा बटुः उप आचार्यसमीपं वेदविद्योपदेशाय नीयते तत् कर्म उपनयनम्'' इति निरुक्तेः तव अष्टमे पिता त्वां गायत्रीं उपदिश्य आचार्यसमीपे नयनं यत् तत् **उपनयनं** चकार ।

ततः ''गुरुणाऽनुमतः स्नात्वा समावृत्तो यथाविधि । उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम् ॥'' इति गुरुभ्यः वेदवेदाङ्गादिशास्त्रं अभ्यस्य तेभ्यः गुरुदक्षिणां दत्वा ब्रह्मचर्यव्रतसाङ्गतासिद्ध्यर्थं **समावर्तनं निर्वर्त्य** गृहस्थो भवितुं समानवर्णलक्षणयुतकन्यां त्वं **परिणीतवान्** । एवं गृहस्थः सन् आहिताग्निव्रतं अनुतिष्ठन् असि । एतादृशसुसंस्कृतपरमपवित्र-त्वद्देहस्य अति-अपवित्र-अमङ्गल-दूषित-मद्देहेन सङ्गमः कथं युज्यते ? इदमपरं वच्मि, शृणु ।

**मूलम्**

**कर्णौ हरिकथालापात् पावितौ नासिका तव ।**
**[१]हर्यर्पणसुगन्धेन पाविता जठरं [२]मुने ।**
**वासुदेवार्पितान्नेन पूरितं पुरुषर्षभ ॥ १५१ ॥**

१. हर्यर्पित- । २. तव ।

**कल्याणकाण्डदीपः**

पितृकारितसंस्कारेण सत्त्वमुपपाद्य स्वकृतसुकृतेनापि तदाह— **कर्णावित्यादिना** । **हरिकथालापादिति** । ल्यब्लोपनिमित्ता । हरिकथालापमाकर्ण्य ।

''निशाम्य कर्माणि गुणानतुल्यान्
वीर्याणि लीलातनुभिः कृतानि ।
यदाऽतिहर्षोत्पुलको सगद्गदः
प्रोत्कण्ठ उद्गायति रौति नृत्यति ॥ (भागवते ७-७-३५)
तदा पुमान् मुक्तसमस्तबन्धनः ... ॥'' इत्यादेः । (भागवते ७-७-३७)

**गन्धेन** गन्धोपादानेन ।

''त्वयोपभुक्तस्रग्गन्धवासोऽलङ्कारचर्चिताः ।
तुलसीगन्धमाघ्राय मुच्यते सर्वपातकैः ॥ (भागवते ११-६-४६)
यथा नष्टः सुषेणस्य लक्ष्मणः शरशल्यकैः ।

अन्नेन ।

"तुलस्यास्तु रजोजुष्टं नैवेद्यस्य च भक्षणम् ।
निर्माल्यं शिरसा धार्यं महापातकनाशनम् ।
कोट्यैन्दवसहस्रैस्तु मासोपोषणकोटिभिः ।
तत्फलं प्राप्यते पुम्भिः विष्णोर्नैवेद्यभोजनात् ॥" इति वचनात् । (कृ.म.)

मूलम्

**हरिनाम[1]कलापेन जिह्वा ते [2]पावनात्मिका ।**
**कृष्णार्चनप्रसङ्गेन करौ पावित्र्यतां गतौ ॥ १५२ ॥**

१. कथालापात् । २. पावनीकृता ।

कल्याणकाण्डदीपः

**हरिनामकलापेनेति** । **कलापेन** भूषणेन । "कलापो भूषणो बर्हः" इत्यमरः ।

"हस्तस्य भूषणं दानं श्रुतं कर्णस्य भूषणम् ।
जिह्वाया भूषणं नाम ज्ञानं चित्तस्य भूषणम् ॥" इत्यादेः ।

'हरिनामकथालापात्' इति पाठे तयोः सङ्कीर्तनादित्यर्थः । "अधोक्षजालापमिहाशुभात्मनः शरीरिणः संसृतिचक्रनाशनम्" इत्यादेः । **कृष्णार्चनप्रसङ्गेनेति** । "तावेव तु करौ श्लाघ्यौ यौ तत्पूजा-परौ कलौ" इत्युक्तेः । **पावित्र्यतां** प्रज्ञाद्यण् ।

मूलम्

**पुण्यक्षेत्रानुचारेण पादौ ते [1]पावनं गतौ ।**
**एतादृशेन देहेन कथं सङ्गः प्रशस्यते ॥ १५३ ॥**

१. पावनीकृतौ ।

कल्याणकाण्डदीपः

**पुण्यक्षेत्रानुचारेणेति** । "चरणौ तौ तु सफलौ केशवालयगामिनौ" इत्युक्तेः । **पावनं** पवित्रताम् ।

*तदुक्तं भागवते—*

"तत्त्वे मनोदशनि दृगपि स्तुतौ च
वाक्कर्मणि ह्यपि करौ श्रवणं कथायाम् ॥" इत्यादि ।

**गूढकर्तृकव्याख्यानम्**

विप्रवर्य ! तव कर्णौ श्रीहरिसकलाघहारकपरमशुभप्रदमुक्तिमार्गदर्शककथां श्रुत्वा पूतौ सार्थकौ । नासिका हर्यर्पितगन्धमाघ्राय पाविता । उदरं सर्वसारभोक्तृ-वासुदेवसमर्पितं "पुरस्तादन्नमाप्नोति पुनरावर्तिवर्जितम्" इत्युक्तेः मुक्तिसाधक-अन्नादिनैवेद्यं भक्षयित्वा पूतम् । हस्तौ "आसनं स्वागतं पाद्यं अर्घ्यं आचमनीयकम् । मधुपर्काचमस्नानं वसनाभरणानि च । गन्धपुष्पे धूपदीपौ नैवेद्यं वन्दनं तथा" इत्यादि षोडशोपचारैः श्रीकृष्णं भक्त्या सम्पूज्य पूतौ । जिह्वा "मधुरादपि तन्मधुरं मधुरानाथस्य नाम यद्गीतम्" इति मधुरानाथनामकीर्तनेन पठनपारायणेन पूता । पादौ पुण्यतीर्थक्षेत्रसञ्चरणेन पावनौ । एवं परमपवित्र-त्वद्देहस्य पापिष्ठदेहेन सङ्गः युक्तो न । तव परितालापेन सानन्दा । अद्य मम अकथनीयकथां वदामि ।

**मूलम्**

**[1]ममापि शृणु माहात्म्यं देहस्थामितरोगिणः ।**
**अवाच्यवचनेनैव जिह्वा मे दह्यते सदा ॥ १५४ ॥**

१. त्वमपि शृणु माहात्म्यं देहस्य मम भो द्विज ।

**कल्याणकाण्डदीपः**

सत्यं मम देह शुद्धः तथा च तव महान् लाभ इत्यत आह— **ममापि इति** । रोगिणः देहस्थं माहात्म्यम् आमयमहत्ताम् ।

**मूलम्**

**सुरामांसाशनेनैव [1]जठरे गुल्मतां गते ।**
**व्यभिचारकथालापात् कर्णौ मे शिथिलीकृतौ ॥ १५५ ॥**

१. जठरं गुल्मतां गतम् ।

**कल्याणकाण्डदीपः**

**जठरे** अधरोत्तरे । **गुल्मतां** दुर्मांसरुधिरनिरन्तरताम् । **कथालापात्** इति पूर्ववत् ।

**मूलम्**

**पादौ जारगृहं गत्वा पाषाणसदृशौ मम ।**
**गोवधान्मत्करौ क्रूरौ यमदण्डसमप्रभौ ॥ १५६ ॥**

**एतादृशस्य देहस्यं सङ्गमस्तु कथं भवेत् ।**
**उत्तमो नीचतां प्राप्य कथं स्वर्गं गमिष्यसि ॥ १५७ ॥**

**कल्याणकाण्डदीपः**

**एतादृशस्येति** । पूर्वं तृतीयान्तमनुषज्यते । एतादृशेन देहेन एतादृशस्य देहस्य सङ्गमः द्विजसम्मतः कथं भवेत् । तेजःप्राधान्यान्ममाभीष्टः तव सङ्गम इत्यतः तव पारित्रिकहानिरित्याह **उत्तम इत्यादिना** ।

**मूलम्**

**परस्त्रीसङ्गदोषेण बहवो मरणं गताः ।**
**तस्मादुत्तिष्ठ भद्रं ते तव दासी भवामि भो ॥ १५८ ॥**

**कल्याणकाण्डदीपः**

माऽस्तु सुकृतसाध्यं पारलौकिकं सुखम् । ऐहिकं सुखं तु भवेत् इत्यतः तदपि न सिद्ध्यतीत्याह— **परस्त्रीसङ्गदोषेणेति** । **बहवः** रावणशिशुपालकीचकदुर्योधनादयः । सुखमलब्ध्वैव नष्टाः ।

**गूढकर्तृकव्याख्यानम्**

त्वमपि शृणु मम देहमाहात्म्यम् । अवाच्य-अतिकठिनवचनं उक्त्वा उक्त्वा मम जिह्वा दग्धा । अतिमादकसकलेन्द्रियशक्त्यपहारकसुरां पीत्वा पीत्वा शुनकादिमांसं पक्त्वा भक्षयित्वा मम जठरं अति पीनम् । देहेन्द्रियाणि अतिमलिन-क्रूर-उन्मत्तानि । कर्णौ व्यभिचारकथा-चौर्यकथाः श्रुत्वा शिथिलौ । पादौ जारगृहं गत्वा गत्वा पाषाणकठिनौ । करौ बहून् हत्वा हत्वा यमदण्डवत् क्रूरौ । एवं सति अतिपापिष्ठदेहेन सङ्गः सर्वथा अयोग्या । लोके उत्तमः नीचतां नैव गच्छेत् । गच्छेत् चेत् कथं स्वर्गं लभेत ? अतो मां स्प्रष्टुं, विप्र ! नार्हसि । पुनश्च ''परवनिताः अग्निसमाः'' इति पूर्वमुक्तम् । लोके बहवः परदारान् कामयमानाः सगणबन्धुराष्ट्रं विनष्टाः । इन्द्रः अहल्यां गौतमपत्नीं कामयमानः गौतमेन रोषात् ''सहस्रभगो भव'' इति शप्तः, विनाशसमदुरवस्थां प्राप्य इन्द्रस्य अहल्याजार इति अपकीर्तिः अद्यापि

न गता, **रावणः** सीतां अपनीय सपरिवारं रामेण हतः, अतिबलः **कीचकः** द्रौपदीं इच्छन् भीमेन हतः इत्यादयः श्रूयन्ते । अतः, विप्र ! उत्तिष्ठ ! प्रयाहि । अद्य तव दासी भवामि । अकार्यात् अद्य त्वं त्वां च मां च रक्ष" इति प्रार्थितवती ।

**मूलम्**

**माधवेन कुन्तलायाः बलात्कारभोगः**

**वनितावचनं श्रुत्वा वाक्यमूचे [1]द्विजोत्तमः ॥ १५९ ॥**

१. द्विजात्मजः ।

**कल्याणकाण्डदीपः**

**वनितावचनम्** । 'किं मां पृच्छसि' इत्यारभ्य 'त्वमर्हसि' इत्यन्तं समम् (१), 'वनौकसाम्' इत्यादि 'पापसङ्गात्' इत्यन्तं सकरुणम् (२), 'मा स्पृशेत्' इत्यादि 'परस्परम्' इत्यन्तं न्याय्यम् (३), 'शरीरम्' इत्यारभ्य 'कथं भवेत्' इत्यन्तं धर्म्यम् (४), 'उत्तम' इत्यारभ्य 'मरणं गता' इत्यन्तं अर्थ्यम् (५), सर्वं सत्यम् (६), अर्थतो महत् (७), एवं सप्तगुणोपेतं वचनम् ।

**मूलम्**

**माधव उवाच—**

**त्वदङ्गसङ्गो बहुकालपुण्य-**
**प्रभावजो मुक्तिकरः शुभावहः ।**
**दैवेन योगेन हरेः प्रसादात्**
**पुण्येन लब्धः पुरुषार्थहेतुः ।**
**तस्माद्व्रजस्वानुगतोऽस्मि भामिनि**
**त्यजाद्य लज्जां कुरु मे मनोगतम् ॥ १६० ॥**
**[1]गच्छन्ति मम प्राणाश्च त्वद्वियोगेन केवलम् ।**
**तस्माज्जीवय भद्रे त्वं मरणाभिमुखं च माम् ॥ १६१ ॥**

१. गच्छन्त्यद्य मम प्राणाः ।

**कल्याणकाण्डदीपः**

यस्मादावयोर्मेलनमतर्कितं जातं तस्मादेवं ज्ञान इत्याह— **त्वदङ्गसङ्गमित्यादिना** ।

### गूढकर्तृकव्याख्यानम्

एवं अकार्यात् विरन्तुमुपदिशन्त्याः कुन्तलाया वचनं श्रुत्वा माधवः प्रत्याह— "भामिनि ! मे वृथा मा कुप्य । इदं शृणु । तव देहसङ्गः अप्रशस्य इति न । तव देहसङ्गमः मम सुयोग एव । अयं लोके कस्यापि दुर्लभः । तथाऽपि "किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने" इत्युक्तेः बहुजन्मार्जित-पुण्यसञ्चयमहिम्ना श्रीहरीच्छया तव देहसङ्गः मे प्राप्तः । अयं सङ्गः श्रीहरिप्रसादरूपः । किञ्च "यतो नारायणप्रसादमृते न मोक्षः" इत्युक्तेः, ईदृश-त्वद्भोगरूपफलं मयि श्रीहरिप्रसादद्वारा शाश्वतस्वरूपा-नन्दाविर्भावरूपमोक्षप्राप्तौ हेतुः । किं बहुना ? मां कृपया ईशप्रेरिता सेवस्व । त्वां अनुगच्छामि । ईदृश-अलभ्यलाभं मन्दोऽपि न त्यजति । भोगे लज्जां जहि । मे इष्टं पूरय । मङ्गलकारि ! अहं मरणा-भिमुखोऽस्मि । कृपया मां जीवय । अकार्यं कृत्वाऽपि प्राणात्यये प्राणरक्षणं दोषो न इत्याहुः । मां जीवयित्वा कृतार्था भव" इति प्रार्थितवान् ।

### मूलम्

**एवमुक्ता द्विजेन्द्रेण पृथुश्रोणी समुत्थिता ।**
**[1]पलायनाय स्वमतिं चक्रे चण्डालकन्यका ॥ १६२ ॥**

१. पलायनायाशु मतिं ।

### कल्याणकाण्डदीपः

वाचिकया क्रिययाऽनिवृत्तं कायिकया निवर्तयति **पलायनायेत्यादिना** ।

### मूलम्

**धावमानामनुद्रुत्य माधवस्तामुपास्पृशत् ।**
**गौरवं जनकस्याथ जनन्या [1]जननी पितुः ॥ १६३ ॥**

**[2]एवमाक्षोभमाणायां माधवो मन्मथोद्धतः ।**
**बलात्कारेण तां गत्वा बुभुजे भोगमुत्तमम् ॥ १६४ ॥**

१. कुलयोः ध्रुवम् ।
२. स्यादिति क्रोशमानां तां माधवो मन्मथार्दितः ।
बलात्कारेण सङ्गृह्य बुभुजे ब्राह्मणाधमः ॥

**कल्याणकाण्डदीपः**

**आक्षोभमाणायाम्।** कम्पमानायामपि। "कलौ किं भविष्यति" इति प्रश्नस्य इदमुत्तररूपम्— कलावेवं नीचानां कुन्तलाया इव मतिः, उत्तमानां माधवस्येवेति। इदमापातार्थविवक्षया।

अभिसारिका चण्डालतरुणीवृत्तान्तमवलम्ब्य संवदतः स्मराविष्टब्राह्मणतरुणस्येयं कथेति आपातार्थपरेयं योजना। तथा हि सहावस्थितां मां दृष्ट्वा समीपमागतोऽयं मुनिरित्यालोच्य सती स्वरविशेषेण स्वस्य पुंश्चलीत्वं सूचयन्ती माधवमेवमूच इत्याह— **समीपस्थमित्यादिना**। येषु पद्येषु पूर्वोक्तार्थो अत्रानुगुणः तेषामर्थोऽत्र न लिख्यते। येष्वननुगुणाः तेषामत्र अन्यार्था लिख्यन्ते। तत्र तावत्।

"आदौ षिद्गं प्रलोभ्याथ दौर्लभ्यं दर्शयन् महत्।
वशीकृत्य स्वनिर्बन्धे स्थापयेदभिसारिणी॥" इति।

दृष्टस्वैरिण्याचारपरिपाट्यादिभूतं प्रलोभनं करोति **मा याहि इत्यादिना**। मा आयाहि। आयाहीति आङ्प्रश्लेषेण पदच्छेदः। हे मुनिशार्दूल, मा याहि दूरं मा गच्छ। किन्तु मत्समीपं आयाहि।

का त्वं कल्याणि कस्माच्चेति। कस्मात् 'आगन्तव्यम्' इति शेषः। शेषे पूर्वोक्त एवार्थोऽनुगुणो-ऽनुसन्धेयः। 'किं माम्' इत्यारभ्य 'अर्हसि' इत्यन्तं व्यङ्ग्यार्थम्।

"ग्रामेऽस्मिन् प्रस्तरप्राये न किञ्चिदपि विद्यते।
पयोधरोन्नतिं दृष्ट्वा वस्तुमिच्छसि चेद्वस॥"

इत्याद्युन्नेयप्रश्नगूढोत्तरालङ्कृतीनां अभिसारिण्या अभिसरणानुकूलवचनानामुपलम्भात्।

"अनुरागवती चासीदन्ववर्तत तन्मनाः।
तयोर्विद्धमभूच्चेतः सितैर्मदनसायकैः॥"

इत्यादि ब्रह्माण्डानुगुण्याच्च। किम् इत्याक्षेपे। **व्यभिचारकुलोद्भवाम्** यस्मिन्कुले व्यभिचारः कुलधर्मः, तत्कुलं व्यभिचारकुलं, तत्र जाताम्। यद्यपि क्वचिद्दुष्कुलेऽपि जाताऽपि सुशीला जायते, अनादिसुकर्मवशात्। तथापि नाहं तथा, अपि तु कुलागतव्यभिचारपापनिरातङ्का। तथापि क्वचि-द्दुष्कुलजा दुःशीला अपि सद्भ्यां पितृभ्यामाज्ञाशृङ्खलिता दृश्यन्ते न तथा अहं, अपि तु पापिष्ठा, अन्त्यजात् अन्त्यजयोर्जाता, जारजात् जारजायां जाता। तथा च पितृगुणान्मातृजातेश्चोत्सृङ्खले-

त्यर्थः । एवमपि शरीरदोषात् क्वचित् सम्भोगविरागिण्यो दृश्यन्ते । न तथा अहं, अपि तु पापिष्ठा । **सुरामांसाशनी** । काममदकारी कादम्बरी संस्कृतमांससमान्नसंसेवनादुर्न्मर्यादस्मरसमरोन्मर्दसहा । **खलां** कामिनीं बीजधान्यविकिरणस्थानां नापि कश्चिदागमिष्यतीति आशङ्का शङ्कुमतीम् । अपि तु वनवनिताऽस्मीत्याह— **मध्यदेशनिवासामिति** ।

यद्वा, अत्युत्तमातिनीचस्त्रीसम्भोगेन अनर्थशङ्कां मा कुर्वित्याह— **मध्येत्यादिना** । नात्युत्तमा नातिनीचा अपि तु मध्यस्थेत्यर्थः । चण्डो यो उग्रकर्मणि अलति पर्याप्नोति इति चण्डाल इति व्युत्पत्तेर्न विरोधः । हे **भूसुर गूढार्थोत्तरज्ञानिन्** । त्वं कुतः पृच्छसि ? पृच्छया किं विलम्ब्यते ? चुम्बनादिकमिहैव इदानीमेव कुर्विति ।

"अटनं भाषणं दृष्टिर्हासो लज्जा विमोक्षणम् ।
एतानि पञ्च नारीणां व्यभिचार उदाहृतः ॥" इत्युक्तलज्जात्यागो व्यज्यते ।

पत्न्याः पत्युर्व्रतमिव पत्युः पत्नीव्रतमप्यस्ति । स कथं परदार्ये यत इत्युन्नेयप्रश्नोत्तरं गूढमाह— **वेदान्तविदित्यादिना** । 'किम्' इत्यनुषज्यते । 'वेदान्तवित्' 'यः' इति च्छेदः । 'विप्र' 'इन्द्र' इति च । हे विप्र । इन्द्रः वेदान्तवित् न किम् ? वेदान्तविदेव ।

*अयमभिप्रायः*— शास्त्रतत्त्वज्ञानी अपि इन्द्रः अहल्याधर्षितत्वात् काऽत्र चिन्ता तव ? इति भावः । ननु यद्यपीन्द्रः देवकार्यगौरवात् निषिद्धमाचरन्नपि न दुष्यते । "तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा" इति स्मृतेः । कथमहं तूष्णीमल्पसारः तत्र यतः इत्युन्नेयप्रश्नस्य गूढमुत्तरमाह— **वेदान्तविदित्यादिना** । यो विप्रेन्द्रः स वेदान्तवित् । त्वं च विप्रेन्द्रोऽसि । अतो वेदान्तवित् उपमन्त्रयते । "स हिङ्कारोऽज्ञपतये स प्रस्तावः स्त्रिया सह शेते स उद्गीथः प्रतिस्त्रीसह शेते स प्रतिहारः कालं गच्छति । तन्निधनं पारं गच्छति तन्निधनमेतद्वामदेव्यं मिथुने प्रोतं स य एवं वेद मिथुनो भवति मिथुनात् मिथुनात् प्रजायते सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या न काञ्चन परिहरेत् तद् व्रतम्" इति वेदान्तविन्न किम् ? स्वीयसम्भोगारम्भकदैववशसम्पन्नोचिताङ्गनासु मध्ये काञ्चनैकामपि न परिव्रजेत् । एतद् व्रतम् इत्येतदर्थकवेदान्तविदेव त्वमिति भावः । तस्मात् मां द्रष्टुं त्वमर्हसीत्यन्वयः ।

ननु एकपत्नीव्रती पुमान् योषितं पत्न्यन्यां एकामपि योषितं अग्निं ध्यायीतेत्यर्थको "योषितमग्निं ध्यायीत" इत्यप्येको वेदान्तः । यो विप्रेन्द्र एतद्वेदान्तविन्न किं इत्यत आह— **वेदान्तविदिति** । यो विप्रेन्द्रः द्विजराजः उक्तवेदान्तविन्न किम् ? उक्तवेदान्तविदेव । कथं तर्हि तस्य सप्तविंशति-

अङ्गनानामिति भावः । तस्य स्वीयसम्भोगारम्भक-दृढदैवहीनोत्तम-स्त्रीविषयत्वादित्याशयः । इत्यु-न्नेयानुयोगस्य गूढोत्तरम् ।

यद्वा अवहित्यैवालम् । अविलम्बविहाराय तयैव समीपमागतं दृष्ट्वा विश्रम्भविहारविरोधिनौ लज्जमानौ विहाय अधिकमाह्वानमपि मा याहि दूरं मत्समीपमायाहीति कृतम् । तदुपरि अहो अप्रयत्नोऽपि महान् दैवानुग्रहो कुन्तलामनःसङ्गः । इतोऽपि कुलाचाराहारविहाराद्यनुरूप्यं सम्पाद्य विश्रम्भं विहरामि इति निगर्वेणापि पृच्छति । मुनौ तदजानती मुनिरथमाह्वानमात्रेणारूढ इतीर्ष्यामानान्तरमनुप्राप्ताया उपनिबद्धप्रश्नस्य साकूतं गूढोत्तरं कुशलं तस्या जीवति कुशलं पृच्छामि जीवतीत्युक्तं पुनरपि तदेव कथयसि । मृतां न कथयामि या श्वासितीतिवत् । अस्यां योजनायां प्रथमयोजनायामुक्तोऽर्थो-ऽनुगुणः । आकूतभेदमात्रं विशेषः ।

**एवं जल्पितमिति** । जल्पितं जल्पनम् । भावे क्तिन् । एवं जल्पितं यस्याः सा तथा ताम् । "त्वयि भोगं करोमि च" इत्युत्तरपर्यन्तं पूर्वोक्तार्थोऽनुगुणः । स्वगूढप्रलोभनादत्यन्तकामपराधीनेनैव-मुक्ता प्रार्थयमानाऽस्मिन् माधवे स्वाभिमतनियमनिर्बन्धार्हतां निश्चेतुमाह किल वनवनिताषट्कर्मज्ञा कुन्तलानाम्नी कुलटा । मन्त्रौषधादिना वशीकृत्य बालं माधवं ब्राह्मण्याद् भ्रंशयामासेति पुरन्दरादयो ब्राह्मणा मह्यं क्रुध्येयुः । राज्ञेऽपि न्यवेदयेयुः । सोऽपि मह्यं कुप्येत् । अतो यद्यपि स्वैरिण्यापि मया न प्रलोभनादि कृतं प्रत्युत रुदितं शोचितं परिदेवितम् उचितमुपदिष्टं स्मारितमनिष्टं पलायितं च । एवमपि अनिवर्त्यबलात्कारेण कुक्कुटवृत्त्या अलम् अलम् इत्युक्तावपि सम्भोगेऽस्य बलायां कोऽपराध इति स्वस्मिन्नपराधासङ्गार्थं च महद्दौर्लभ्यदर्शनार्थं चाह— **इत्येवमुक्त्वा** इत्यादिना **बुभुजे भोगम्** इत्यन्तेन ।

**मूलम्**

**कुन्तलोक्तवदाचरणं तथा तस्याः मरणम्**

**भोगात्यये द्विजं बाला [1]वाक्यमाह मनस्विनी ।**

**कुन्तलोवाच—**

**अद्यप्रभृति भो विप्र [1]पतिस्त्वं मम भूतले ॥ १६९ ॥**

१. वाचमूचे । १. तिष्ठ त्वं ।

**कल्याणकाण्डदीपः**

स्वाभिमतनिर्बन्धे स्थापयति— **अद्यप्रभृति** इत्यादिना **अभ्याश्रित** इत्यन्तेन । अद्यकृतभोगमारभ्य त्वं मे पतिः । अहं तव पत्नीव । तस्मात् मां नातिचर । त्वां च अहं नातिचरामि । **भूतले** यावज्जीवम् ।

**मूलम्**

**त्यज यज्ञोपवीतं ते मुण्डयित्वा शिरस्तथा ।**
**अब्राह्मण्यमुपागम्य भक्ष गोमांसमुत्तमम् ॥ १६६ ॥**

**कल्याणकाण्डदीपः**

पित्राद्यनुबन्धिनामप्रत्यभिज्ञानार्थमाह— **त्यजेत्यादिना** । **गोमांसम्** । एकादश्यामन्नं तस्य भक्षणम् । किमुत अन्यव्रतानां कामक्षयकारणमिति भावः । यथा गोमांसमुत्तमं स्यात् तथा भक्षेत्यर्थादुक्तार्थोपपत्तिः । "वरं गोमांसभक्षणम्" इत्युक्तेः ।

**मूलम्**

**[1]कुरु मद्योदकं पानं चण्डालत्वमुपाश्रितः ॥ १६७ ॥**

१. पिब मद्योदकं शीघ्रं चण्डालत्वमुपागतः ।

**कल्याणकाण्डदीपः**

**मद्योदकं** मदाय हितं मद्यं तच्च तत् उदकञ्च तर्कर्यादि रसोदकम् । **चण्डालत्वं** चण्डाय क्रूरकर्मणे अनाचाराय पर्याप्तत्वम् । **सर्पगिरिं** शेषगिरिम् इत्यापातार्थे द्वितीया योजना ।

'कदाचिद्विप्रपुत्रस्तु' इत्यारभ्य 'तत्सङ्गपरिमोहितः' इत्यन्तस्याध्यात्मार्थे इयं योजना तृतीया । तथा हि । अत्रापि अनुगुणः पूर्वोक्तार्थो न लिख्यते । अनानुगुण्ये पुनरर्थान्तरं लिख्यते ।

"अजो ह्येको जुषमाणोऽनुशेते" इति श्रुतेः ।

"मनसैव पुरे देवः पूर्वरूपं विपश्यति ।
अनुमीमांसते पूर्वं मनसा भगवानज ॥" *इति भागवतवचनाच्च ।*

तत्र च भगवान् महानुभावो माधवः स्वस्यानादिसंसारापादितचण्डालतरुणीसम्भोगारम्भकप्रारब्धं कर्म स्वीयतपःप्रभावेन अध्यक्षीकृत्य तत्परिपाकस्य जन्मान्तरेऽनवसरदुस्थताया विज्ञानात्

इहैवावश्यमनुभोक्तव्यमिति निश्चित्य मुख्यासम्भवादमुख्यया दिवारत्या तत्क्षपयामीति दिवासङ्गं ऐच्छदित्याह— **कदाचिदिति**। दिवासङ्गस्य श्रुतौ निषिद्धत्वात् तत्प्रतिनिधित्वम्।

"धर्मस्वरूपचित्रत्वाद्यो यो देवमनोगतः।
स एव धर्मो विज्ञेयो न ह्येते लोकसम्मताः॥"

इत्येतत् मनोगतम् इत्यनेन सूच्यते। एतेन इतरनरप्रवृत्तिवन्नाविमृश्य प्रवृत्तिरिति ध्वन्यते।

**भामिनीति**। भामः प्रणयकोपः। **वनकूटं** घनवनम्। वनितां जनिताऽत्यर्थानुरागाम्। "वनिता जनिताऽत्यर्थानुरागायां च योषिति" इत्यमरः। यद्वा केशवेऽन्यथाबुद्धिरूपाम्। *तदुक्तम्*—

"केशवे त्वन्यथाबुद्धिः सैव स्त्री सम्प्रकीर्तिता।
जुष्टत्वाद्योषिदित्युक्ता वननाद्वनितेति च॥"

*इति एकादशतात्पर्ये चतुर्दशाध्याये*। द्रुममूलगां संसारनृत्तशालानेकमूलस्तम्भायमानानेकानेकस्थूल-शरीरप्रकृतिभूतलिङ्गशरीरात्मकद्रुममूलाविद्याश्रिताम्।

*अयं भावः*—

बुद्धिश्च पत्नी सा द्विरूपा खगेन्द्र दुष्टा चैका ह्यपरा सुष्ठु रूपा॥

*—इति ब्रह्माण्डे गारुडवचनात्*।

"तथा दृष्टा मयेत्युपेक्षक एको दृष्टाहमित्युपरमत्यन्या।
सति संयोगेऽपि तयोः प्रयोजनं नास्ति सर्गेऽस्याः।
रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्तात्।
पुरुषस्य तथाऽऽत्मानं प्रकाश्य निवर्तते प्रकृतिः।
प्रकृतेः सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति।
या दृष्टाऽस्मीति पुनर्न दर्शनमुपैति पुरुषस्य॥" (साङ्ख्यकारिका)

इत्यादि युक्तिमत्साङ्ख्यवचनाच्च स्वभर्तुर्जीवस्य बहिर्मूर्त्या स्वात्मानमप्रदर्श्यान्तर्धयैव भर्तारं सम्मोह्य पिशाचवत् तेन सह रन्त्यपि माधवकृततपःप्रसन्नस्य हरेरिच्छयाऽल्पेनैव कालेन कर्मापा-दितस्वापेक्षित इति यावत्। तृप्तिभोगपरिसमाप्त्या कर्मक्षयादनु तमुत्खातुं बहिश्चाण्डालतरुणीमूर्त्या एकांशेनावतीर्णा स्वगुणाच्छादिकादि दुष्प्रकृतिरूपा मूलाविद्योपोद्बलिता दुर्बुद्धिनामिका जीवकनिष्ठभार्या कुन्तलेति भासते।

**तां दृष्ट्वाऽमोहित इति** । दृष्ट्वा अमोहित इति च्छेदः । तां योषिन्मय्यात्ममायां दृष्ट्वाऽमोहितः सन् । **दृष्ट्वा क्लिन्नमना भूयेत्यस्य** श्लोकस्य अयमन्वयः । **ब्रह्मनिर्णयमिति** । हे माधव ! तव प्रकृतप्रारब्धसङ्क्षयायेयं नालं दिवारतिरपि त्वनया रतिरिति बोधनाय कुन्तलां दर्शयामास हरिः । अतोऽनयाऽस्य रतिं सम्पादयामीति ब्रह्मणो हरेर्निर्णयं सङ्कल्पात्मकं चिन्तयन् मीमांसयन् स्वभार्यां सुबुद्धिरूपां ज्येष्ठां चन्द्रलेखां दृष्ट्वा बली बलीयसी केवलमीश्वरेच्छेति कारुण्येन क्लिन्नमनाः साश्रुनयन इति यावत् । भूय भूत्वा स्वभार्यां स्वेन सह मुक्तिभागिनीं प्रत्युवाच उक्तप्रतिकूलवचनमुवाचेति । **स्मरेणेति** । प्रारब्धकर्मणा मातामहेन हरीच्छया मातामह्या च दृढनिरूढेन सावहित्था स्वजननी-दर्शनमात्रेण सद्योजातेन दुष्पूरेण ज्येष्ठेन दुष्पुत्रेण कामेन सन्तापहतं चेतनं चिन्मूलघनं यस्य स तथा ।

अथ कुन्तला स्वापराधाभिव्यक्तिनिर्भीकं धृष्टं पतिम् । अधीराऽपि स्वयं कर्मणा स्वजनकेन स्वजनन्या हरीच्छया स्वदर्शनमात्रेण जातैः कामक्रोधलोभमोहमदादिभिः स्वपुत्रैः दृढमागृह्य स्वबुद्धि-सपत्नीसम्भोगचिह्नं चिरागतमाक्षिप्य रूढित्वा देवानाकृश्य विलप्य अनर्थं स्मारयित्वा प्रलाप्य च खेदयति— समीपस्थम् इत्यादिना चक्रे चण्डालकन्यके इयन्तेन । **किं मां पृच्छसि** इत्यादि **त्वमर्हसि** इत्यन्तमाक्षेपः । किंशब्दस्याक्षेपार्थत्वात् । **पापिष्ठां** सर्वपापमूलाम् । **व्यभिचारकुलोद्भवाम्** अविद्यावंशोद्भवाम् । अविद्याया अर्थव्यभिचारात् । **अन्त्यजान्त्यजयोर्जातां** अजाजयोरुत्पन्नाम् । **सुरामांसाशनीं** सुराः हरेर्गुणाः मांसो मादनात् साररूपत्वात् मांसो हरिः । तावश्नातुं शीलमस्या इति तथा ताम् । निर्गुणवादेन शून्यवादेन च विशेषणविशेष्योभयग्रासिनीमिति यावत् ।

"सुरा हरेर्गुणाः प्रोक्ताः"

"मादनात् साररूपत्वान्मांसोऽस्थित्वावासनात्स्थिरम् ।
एतैर्नामभिरुद्दिष्टो भगवान् पुरुषोत्तमः ॥" *इत्यादिवचनात् ।*

[1]"स्वगुणाच्छादिका त्वेका परमाच्छादिका परा ॥" *इत्याद्युक्तेश्च ।* (भागवततात्पर्ये)

**खलां** दुर्विषयविकिरणस्थानाम् । **मध्यदेशनिवासां** नित्यं संसार्यवियोगिनीम् । **वेदान्तविद्यः** मत्सपत्नीब्रह्मविद्यावृढः । मदर्शने तस्याः कोपो भवेदिति भावः ।

**'इत्येवमुक्ता'** इत्यारभ्य **'तरुणारुणप्रभा'** इत्यन्तं रोदनम् । "दुर्बुद्धिरूपा प्ररुरोद तस्मिन् मात्रे स्वपुत्रैश्च समन्विता सा" *इति गरुडवचनात्* । सपत्नीप्राबल्येन चिरविरहदूनतया पतिं दृष्ट्वा रुरोद इति भावः । सपत्नीजनकयज्ञादिदेवान् कर्मबन्धूनाक्रोशति— **वनौकसाम्** इत्यादिना पापसङ्गात् इत्यन्तेन ।

अनादिसम्बद्धामपि मां चिरं वियोजितवन्तो यूयं किमिदानीन्तनेन फल्गुना प्राणहारिराजदण्ड-नान्तरीयकभोगकल्पेन भोगेनेति विरुद्धानुध्यानम्। '**विललाप**' इत्यारभ्य '**स्वर्गं गमिष्यति**' इत्यन्तं शोकार्तवाक्यरूपं परिदेवनम्। अनादितात्मसंश्लिष्टप्रकृतिरूपाऽग्स्तव कुतो विश्लेषः। प्रत्युत तव सपत्न्या ज्येष्ठाया एव द्विजजन्मनि तत्रापि गायत्रीगर्भजननमारभ्य यावज्जीवं क्वाचित्कः। तव तु सम्भोगकुशलतिर्यग्ज्ञः यावज्जन्मसु यावज्जीवं सम्भोगकुशलनरजन्मन्यपि शूद्रचण्डालाद्यज्ञजन्मसु यावज्जीवं संश्लेषः। एवं सति कुतो रोदनं कुतश्च देवान् प्रत्याक्रोशः कुतस्तरां च परिदेवनमित्यतः तव ज्येष्ठपत्नीजनकेन गर्भादानादिकर्मणा संस्कृतेन तीक्ष्णदण्डेन ताडिता भीता सूक्ष्मदेह एव निलीना आसम्। न तु स्थूलदेहपर्याप्तेत्याह— **शरीरमित्यादिना**।

ननु गर्भादानादिसंस्कारकर्मणां जडत्वात् तेभ्यः तस्याः का भीतिः? इति चेत्। तद्देवता ब्रह्मादयः ता सपत्नीबन्धवः तेभ्यो भीरिति ज्ञेयम्। गर्भादानस्य ब्रह्मा। ननु गर्भादानमारभ्य यावन्न प्रसवः तावद्वैजिकेनैनसाभिसम्बन्धात् त्वद्बन्धूनां रक्षसानामवसरसम्भवात् तदा कस्माद्भीः इत्यत आह— **सीमन्तमिति**। **तद्देवता** धाता। तदुपरि सूत्यां का भीरित्यत आह— **दशम इति**। 'यदा' इति शेषः। यदा प्रसूता तदैव जातकर्म। तत्कर्मदेवता मृत्युः। ततः षण्मासपर्यन्तं मम सर्वथाऽनव-काशः। प्रधानवायुसन्निधानात्। तदुपरि अन्नाशनादिनोच्छिष्टादिसम्पर्कान्न भीरित्यत आह— **अन्नेत्यादिना**। अन्नप्राशनस्य सविता। चौलस्यान्ते प्रजापतिः। उपनयने इन्द्रः श्रद्धामेधे च। विवाहस्योभयत्राग्निः। तदुपरि साक्षान्मूर्तिमत्याः सपत्न्याः सम्बद्धे क्वावकाशो मम तज्जनकस्य कर्मणो भर्त्रैककर्तृकत्वेन स्वगृह एवावासो जातः। शमदमविरागविवेकज्ञानभक्त्यादयः पुत्राः अभूवन्। एवं सपत्न्याः प्राबल्ये जाते क्वावकाशो ममेति विलापः। तदुपरि हरेः महद्भयमित्याह— **कर्णावित्या-दिना**। एतेन हरेः भीरिति भावः। भवतु तदनुसरणं तव किं न स्यात्? इत्यतो मदङ्गकृतदुष्कर्म-शरीरिभिः दुर्जीवैः विरोधान्न सम्भवतीत्याह— **अवाच्यवचनेत्यादिना**।

आपातार्थः स्पष्टः। अध्यात्मार्थस्तु ब्रह्म सर्वशब्दवाच्यमिति वचनेन। सुरामांसाशनेनैव। मायावादे गुणग्रासेन शून्यवादे विशेष्यस्यापि ग्रासेन। **व्यभिचारेति**। शुष्कहेतुवादे व्यभिचारकथा-बाहुल्यात्। **पादौ** दुष्टराद्धान्तमूलत्वेनाभिमतश्रुतियुक्ती। **गोवधात्** सच्छास्त्रवधात्। **करौ** सच्छास्त्र-मोढनदुःशास्त्रप्रसादनोत्तरयुक्ती। **क्रूरौ** कठिणौ।

एवं बहुखेदेऽपि यतो धृष्टोऽतस्त्वदङ्गसङ्गे दैवानुगुण्यं हरीच्छा ऐहिकामुष्मिकलाभश्चास्ती-त्याह— **त्वदङ्गसङ्गमित्यादिना**। त्वदङ्गसङ्गो यस्मात् दैवकृतमेलनात् तत् तथा। **यज्ञोपवीतं**

ब्रह्मसूत्रं त्यज । कण्ठे वाचा न धारयेत्यर्थः । **शिरः** उपनिषदम् । **दैवयोगेन** दैवकृतः **योगः** सम्बन्धो येन तेन कर्मणा सुकृतेन ।

यद्यप्यध्यात्मार्थादिगमे मम मन्दबुद्धेर्विना श्रीनिवासप्रेरणमन्यथा शरणं नास्ति तथाऽप्यात्मशक्तिसमं दिङ्मात्रं सूचितम् । न ह्यपारे पारावारे निमितिमिङ्गिलविहारे तीरोपान्तेन चलति किं निश्चिन्तश्चिलिचिमः । अत्र ममोपलब्धं किञ्चिदुपष्टम्भकमुदाह्रियते । "माधवं गतपाप्मानमजामिलं यथा हरिः" इत्युक्तदृष्टान्तेन । अयं माधवः परमप्रसादविलम्बापादकानभीष्टप्रारब्धस्य अविलम्बेन भोगायैव अनेकजन्मापादितहरिचरणाराधनसच्छास्त्रपरिशीलनादिना प्रसन्नहरिप्रसादेकांशेन बहिर्मूर्त्या जयामिलितो न तु नरकयातनापादकपातकयुक्तः । पातकवदाभासमानत्वेन यदधर्माभासाचरणाव्यवहितोत्तरं लब्धपरमप्रसादत्वात् अजामिलवत् इत्यनुमानसूचनात् । अजायाः स्वात्मसंश्लिष्टाया मिलो मीलनं ज्ञानं यस्य सोऽजामिलः । अजया मिलो मेलनं यस्य स तथेति च । अजस्य हरेः मेलनं सम्बन्धविशेषो यस्य सोऽजमेल इति च विवक्षितम् ।

तथा च ब्रह्माण्डे स्त्रीपुंसासाधारणचेतनभार्यात्वेन भार्यापरपर्यायमालिनी नाम ग्रहणम् । किं च नानार्थशब्दसन्दर्भः । अपि च गरुडपुराणानुगुण्यम् । तथा साधारणचण्डालतरुण्यसम्भाव्यमानज्ञानाद्यन्यथानुपपत्तिश्चेति न किञ्चिदेतत् । इति सर्वं भाव्यम् ॥

**एतादृशेन** परमपरिशुद्धेन पुण्यदेहेन **एतादृशस्य** मम देहस्य **सङ्गः** सम्बन्धः **कथं प्रशस्यते** न कथञ्चिदपीत्याक्षेपः । रोगिणः देहस्थं माहात्म्यं माहात्म्यमिव दोषमहत्तामिव ममापि देहस्थं माहात्म्यं प्रतिवचनं अनिर्वाच्यवचने अस्या इमां जिह्वां धिग्धिगिति जनैः सदा दह्यते यथाक्रमं सुरापानेन मांसभक्षणेन । **अधरोत्तरे** जठरे । **गुल्मतां** प्लीहकुहरताम् । **शिथिलीकृतौ** बधिरीकृतौ । पाषाणसदृशौ । किणीकृतौ । अत्र "पुरीतगुल्मस्तु प्लीहा पुंस्यथ वस्नसा' इत्यमरः । बहुकालचीर्णानभीष्टप्रारब्धपुण्यसामर्थ्यप्रादुर्भूताम् । भोगेन प्रारब्धक्षयकरं शुभावहां पद्मावतीकल्याणोदर्कदैवेन योगेन । अदृष्टोपायेन । यदृच्छया वा हरेः प्रसादाल्लब्धेन पुण्येन ज्ञानोत्तरभाविना मुक्तावानन्दातिशयहेतुना प्रारब्धविलम्बासहिष्णुनाऽभीष्टपुण्येन लब्धम् । अत एव महापुरुषार्थहेतुं मन्ये इति शेषः । जनकादिगौरवबन्धनं कृत्वा मामेति उक्त्वा । **क्षोभमाणायां** सञ्चलन्त्याम् । **मम भूतले तिष्ठेति** चण्डालानां भाषाक्रमः ।

**मूलम्**

**तद्वाक्यमाकर्ण्य जगाम विप्र-**
**स्तया समेतो निकटं कृष्णवेण्याः ॥ १६८ ॥**

(तद्वाक्यमाकर्ण्य तदा तयोक्तं सर्वमाचरन् ।
चाण्डालाचरिताचारं जगाम विधिचोदितः ।
विप्रस्तया समेतस्तु कृष्णवेणीनदीतटं ॥)

द्वादशाब्दं वसन् विप्रस्तत्सङ्गपरिमोहितः ।
अनित्यत्वात् शरीरस्य कालपाशेन यन्त्रिता ।
जगाम मरणं राजन् कुन्तला नीलकुन्तला ॥ १६९ ॥

---

१. शरीराणां ।

**कल्याणकाण्डदीपः**

**कालपाशेन** मृत्युपाशेन । **यन्त्रिता** सती मरणदर्शनं जगाम । कामरूपत्वादिति भावः ।

**मूलम्**

**उन्मादवत् भ्रमन् यात्रार्थिभिः राजभिस्साकं शेषाचलगमनम्**

तया विरहितः श्रीमान् माधवो [१]दुःखभाजनः ।
[२]चरित्वा भवनं सर्वमभ्रमन् विभ्रमन्निव ॥ १७० ॥

---

१. दुःखकातरः । २. अचरद् भुवनं सर्वं उन्मादेनोद्भ्रमन्निव ॥

**कल्याणकाण्डदीपः**

अत एव सर्वं **भवनं** भुवनम् । कदाचित् **अभ्रमन्** सा यत्र कुत्र वा गत्वा मृतेत्यभ्रान्तः । कदाचित् **विभ्रमन्** मां विहाय अन्यं जारं स्वीकृत्य कस्मिंश्चिद्वने निलीनाऽस्तीति भ्रान्त इव आचरन् आस इति शेषः ।

**गूढकर्तृकव्याख्यानम्**

एवं सकरुणं प्रार्थितवतो विप्रवरस्य उक्तिं श्रुत्वा तदा विशालकटिपश्चाद्भागवती सा कुन्तला इतिकर्तव्यमूढा उपायान्तरं अपश्यन्ती पलायनमेव गतिरिति निश्चित्य अधावत् । तदा माधवः किं चकार ? सोऽपि क्षणमपि अकृत्वा तां अनुधावन् अन्ते उपास्पृशदेव । ततः कुन्तला किं कुर्यात् ? ''अरे रे ब्राह्मण ! मा स्पृश मा स्पृश । दूरं गच्छ । मम जनन्याः जनकस्य जननीपितुश्च गौरवं पुरस्कृत्य

वच्मि । मुञ्च मुञ्च मम बाहू" इति अक्रोशत् । माधवस्तु कामपीडितः क्रोशमानामपि बलात् सङ्गृह्य तया रतिं चकारैव ।

ततः किमभूत् ? भोगावसाने प्रशस्तचित्ता कुन्तला माधवं प्रति— "विप्र ! अद्यप्रभृति त्वं विप्रो न । विप्रब्रुवः । इतः त्वं मम पतिः अभूः । अहं चण्डाला । त्वमपि चण्डालो जातः । अत्र संशयो न । इतः चण्डालजातिविरुद्धब्राह्मणचरितानि जहि । "शिखासूत्रवान् ब्राह्मणः", "यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत् सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः" इत्यादिवाक्यैः "यज्ञो नाम हरिपूजा", "भगवत्पूजारूपनित्यनैमित्तिककर्माणि पञ्चमहायज्ञाः", "एतत्कर्मसाधनशिखासूत्रं विप्रलक्षणं" प्रथमं विसृज । शिरोमुण्डनं कुरु । चण्डालजातिव्यवहारे तिष्ठ । इतः गोमांसं भक्षय । सुरां पिब । श्वमांसं पच । गोमहिषादिकं संहर । शववस्त्रं धर । चण्डालत्वं गृहाण । ब्राह्मणत्वं त्यज । नो चेत् इतो भ्रष्टः ततो भ्रष्टोऽसि" इत्यबोधयत् । ततः तदुक्त्यैव माधवः तदुक्तं सर्वमाचरत् । बलवत् विधिप्रेरितः पूर्णं कर्मचण्डालत्वं गतः । एवं स माधवः चण्डालः सम्पन्नः तया कुन्तलया कृष्णवेणीनदीतीरदेशे द्वादशवर्षे तत्सङ्गे अतिमोहितः वसति स्म । एवं सति "कालः पचति भूतानि कालः संहरति प्रजाः । कालः सुप्तेषु जागर्ति कालो हि दुरतिक्रमः । कालेन बलिरिन्द्रः कृतः कालेन व्यवरोपितः ॥" इत्युक्तेः शरीरस्य अनित्यत्वात् कालशब्दवाच्यपरमात्मशासनरूप-पाशबद्धा कुन्तला प्राणान् तत्याज । ततः तद्वियोगात् अतिशोचन् उन्मादेन उद्भ्रमन्निव भुवि सर्वत्र परिबभ्राम ।

**मूलम्**

**[१]अकस्माद्दैवयोगेन राजानो राष्ट्रवासिनः ।**
**यात्रार्थमनुजग्मुस्ते [२]वराहस्याहिपर्वतम् ।**
**मार्गमध्ये ददर्शासौ माधवस्तान् महीपतीन् ॥ १७१ ॥**

१. तदा तु दैवयोगेन राजानश्चोत्तरास्तदा ।
२. वराहस्य तु ।

**कल्याणकाण्डदीपः**

वस्तुतस्तु न तथा । अपरोक्षज्ञानित्वादिति भावः । **तद्राष्ट्रवासिनो राजानः दैवयोगेन** सुकृत-परिपाकात् **वराहस्य** यात्रार्थं अहिपर्वतमनुजग्मुः । **तान्** महीपतीन् मार्गमध्ये माधवः अकस्माद् ददर्शेत्यन्वयः ।

मूलम्

**भ्रमन्नेवाथ तैः सार्धं तदुच्छिष्टान्नभोजनः ।**
**प्राप्तः सर्पगिरिं राजन् दैवयोगेन [१]कर्मणा ॥ १७२ ॥**

---
१. भूसुरः ।

कल्याणकाण्डदीपः

**भ्रमन्नेवेति । तदुच्छिष्टान्नभोजनः ।** तस्य राजभोजनस्य उत् ऊर्ध्वं शिष्टं रन्धनस्थाल्याद्यवशिष्टं अन्नं तस्य भोजनं यस्य स तथा । अत एव भ्रमन्निव कुत्राप्यनवस्थितः सन्नेव । **तैः सार्धम् । कर्मणा** । बार्हस्थस्य कुशध्वजजन्मारभ्य साक्षाद्धरये रमात्मकस्वकन्यादानोद्देश्यकतपःकर्मणा समृद्धेन **दैवयोगेन** देवः श्रीनिवासः तस्य सम्बन्धी दैवः स चासौ योगः प्रसादलक्षणोपायः तेन । **सर्पगिरिं प्राप** । न चैतत् पूर्वविरुद्धम् । माधवस्य मित्रांशशुच्यावतारभीष्मकत्वोन्नयनादिति वाच्यम् । देवानां सांशत्वात् कुशध्वजस्यैव मित्रांशत्वोन्नयनात् ।

अत्रेदं बोध्यम्— प्रथमः कुशध्वजः, कुशकेतुः द्वितीयः, भीष्मकः तृतीयः, माधवश्चतुर्थः, तत आकाशराज इति । इयं कुन्तला मूलाविद्या । गोपालोऽस्य प्रतिद्वन्दी दैत्य इति ।

मूलम्

**ते राजानस्तत्र गत्वा तीर्थे कपिलसंज्ञिके ।**
**स्नात्वा [१]भक्तिशमोपेता वपनं चक्रुरादरात् ॥ १७३ ॥**

---
१. भक्तिसमायुक्ताः ।

कल्याणकाण्डदीपः

**ते राजान इति । भक्तिशमोपेताः** हरिभक्तिपूर्वकभगवन्निष्ठबुद्धयः । कपिलसंज्ञिके तीर्थे स्नात्वा । **आदरात्** पितृभक्तितः **वपनं चक्रुः** कारयामासुः । अन्तर्णीतणिजर्थः ।

मूलम्

**तदा नृपाः सुसंहृष्टाः पार्वणानि ददुर्नृप ।**
**माधवोऽपि शुभे तीर्थे स्नात्वा वपनपूर्वकम् ॥ १७४ ॥**

**पार्वणानि मृदा कृत्वा पितृभ्यः श्रद्धया ददौ ।**
**दैवाद्वा कर्मयोगेन माधवो गतकल्मषः ॥ १७५ ॥**

**माधवः स्वयमभ्येत्य वापयित्वा शिरः स्वकम् ।**
**पिण्डदानमकुर्वंस्ते श्राद्धं राजन्नृपास्तदा ॥ १७६ ॥**

**कल्याणकाण्डदीपः**

माधवस्तु यथाक्रमं जनाचारमनुकरोतीत्याह— **माधव इति** । **स्वयं** आत्मनैव नापितमभ्येत्य **स्वकं शिरं वापयित्वा** तान् स्नातान् दृष्ट्वा स्नातोऽभूत् इति शेषः । **ते** कुशलीकृतशीर्षका राजानश्च ते नृपाश्च राजन्नृपाः सम्बुद्धिर्वा । 'यदा' इति शेषः । यदा **पिण्डदानं** पिण्डानां दानं निर्वापो यस्मिन् तत्पिण्डदानम् । चतुष्पार्वणकं तीर्थश्राद्धं अकुर्वन् ।

**मूलम्**

**माधवस्तु मृदा चक्रे पिण्डानि पृथिवीपते ।**
**दैवाद्वा कर्मणा वापि योगतः पौरुषादपि ॥ १७७ ॥**

**कल्याणकाण्डदीपः**

तदा माधवः मम इदानीं श्राद्धीयं द्रव्यं नास्ति । **पृथिवीपतिः** । सर्वस्य पिता । पृथिवी माता । "पितृधनं पुत्रो गृह्णीयात्" इत्यनुशासनात् । "यदन्नः पुरुषो भवति तदन्नात्तस्य देवताः" इति श्रुतेः । पृथिवी चान्नं तत्साध्यं पार्वणश्राद्धम् । अद्य केऽपि पातित्यशङ्कया श्राद्धशिष्टान्नं न ददति । अतो मृदैव सर्वसाधारणी मम द्रव्यादीत्यादि विशेषबुद्ध्या मृदा पिण्डानि चक्रे । पृथिवीपते इत्यनेनायमर्थः सूच्यते । शतानन्दः सङ्क्षेपेण तीर्थमाहात्म्यं वदन् प्रकृतमनुसरति **दैवादिति** ।

**गूढकर्तृकव्याख्यानम्**

एवं स्थिते "दैवी विचित्रा गतिः" इत्युक्तेः ततः केचन उत्तरदेशीयाः नृपाः नाम विन्ध्यपर्वतस्य उत्तरतः विद्यमानदेशः उत्तरदेशः । तद्देशीयाः नृपाः दैवात् एतद्-भारतपुण्यतीर्थक्षेत्रयात्रां चिकीर्षवः प्रस्थिताः श्रीवराहाधिष्ठितवराहपर्वतमाजग्मुः । तेषां मार्गमध्ये तान् माधवो ददर्श । दैवप्रेरितमाधवः तैः स्वयमपि भ्रमन् तद्भुक्तोच्छिष्टान्नं भुञ्जानः तैः सह शेषाचलं प्राप । ततस्ते नृपाः कपिलतीर्थे गत्वा तत्र कर्तव्यसम्प्रदायागतक्रियाः कर्तुं प्रथमं कपिलतीर्थे वपनं कारयित्वा स्नात्वा भक्त्या सादरं स्वपितृभ्यः पार्वणविधिना पार्वणानि ददुः । माधवोऽपि तदा तूर्णीं नाभवत् । स्वयमपि तत्तीर्थे वपनपूर्वं स्नात्वा

स्वपितृभ्यः इतरपार्वणसामग्र्यभावेऽपि "श्रद्धा हि मुख्या। श्रद्धया यद्दीयते तत् श्राद्धम् ॥ श्रद्धया दत्ते तुष्टो भवेत् जनार्दनः" इति अनुसन्दधत् मृदैव पार्वणानि कृत्वा श्रद्धया ददौ। एतत्करणमहिम्ना जन्मान्तरकृतकर्मबद्धत्वाद्वा "जन्मान्तरकृतं कर्म तद्दैवमिति कथ्यते" इत्युक्तेः जीवकर्मनिर्णायकदैवप्रेरणबलाद्वा स माधवः तत्कालावधिकृतयावत्पापात् विमुक्तोऽभूत्। दैवमेव परं मन्ये। माधवस्य दैवमेव दैवम् ॥

**मूलम्**

**तस्माद्यो मानवो भक्त्या कुर्यात्तीर्थावगाहनम्।**
**पितृश्राद्धं पिण्डदानं तत्र चेत् मुक्तिभाग् भवेत् ॥ १७८ ॥**
**भक्त्या च भयतो राजन्नरस्तीर्थावगाहनम्।**
**कुर्यात्पिण्डप्रदानं तु मुक्तिः तत्र न संशयः ॥ १७९ ॥**

**कल्याणकाण्डदीपः**

**राजन्**। विधिवत् यात्रायाः न्यायार्जितचरधनपुत्रमित्रकलत्रबन्धुजनदैवबलादिसम्पदा शोभमानो नरः। **भयतः** संसारभयतः। **भक्त्या च** श्रीनिवासभक्त्या च। **तीर्थावगाहनं** पिण्डदानं पार्वणं तीर्थश्राद्धं च कुर्यात् चेत्, विशेषेण मुक्तिः। स्वस्य स्वपितॄणां च ब्रह्मप्राप्तिः भवति। तत्र न संशयः। तदेत्यनुषज्यते। तस्माद्यदेति लभ्यते। यदा राजन् विधिवत् यात्राया आपन्नतया अशोभमानः नरः तदा दैवात् विद्यावित्तादिलिप्सावशादन्यत्र गच्छतो भाग्यवशाद्वा। **कर्मणा वा**। कर्मकारीयपचनादिकर्मणा वा। अपि वा योगतः। **मित्रस्नेहात्** पौरुषात् उद्यमाद्वा गच्छन् नरः भयतो भक्त्या च यथालाभं स्नानं यथालब्धेन वित्तेन पिण्डदानमात्रं च कुर्यात् चेत्, तदनुरूपा मुक्तिः भवति। शिष्टं पूर्ववत्। "योगः सन्नहनोपायध्यानसङ्गतियुक्तिषु"। वा विकल्पोपमानयोः।

यद्वा **दैवात्** श्रीनिवासानुग्रहात् वा तथा **कर्मणा** पूर्वार्जितपुण्यकर्मणा। तथा **योगतः** यात्राकारकग्रहयोगतः। पौरुषाच्च ते वनेन यात्राकरणे शरीरसामर्थ्यात्। भक्त्या च भयतो राजन् नरः उक्तं स्नानं दानं च कुर्यात् तु कुर्यादेव। तत्र मुक्तिर्भवत्येवेति निश्चयात्, न संशय इत्यर्थः।

**मूलम्**

**मृत्पिण्डं कृतवान् विप्रः पुण्यक्षेत्रे पुरातने।**
**(किं वर्णयामः पुरुषोत्तमस्य**
**क्षेत्रस्य तीर्थस्य सुपुण्यशक्तिम्।)**

**मृत्पिण्डदानेन [1]पितामहाश्च**
**मुक्तिं प्रयाता मुरवैरिशासनात् ॥ १८० ॥**

१. पितामहाद्याः ।

**कल्याणकाण्डदीपः**

प्रकृतमनुसरन्नाह— **मृत्पिण्डमिति** । अयं देवात् कर्मणा योगतः पौरुषात् भक्त्या भयतश्च पुरातने पुराणप्रतिपाद्ये । पुण्यक्षेत्रे स्नातः विप्रः मृत्पिण्डं कृतवान् । अतः विप्रः विशिष्टेषु प्रकृष्टः । न केवलमेतावत्, तत् समस्तपितरो मुक्ता इत्याह— **मृत्पिण्डदानेनेति** । **पितामहाश्च** । चः पितृसमुच्चायकः । बहुवचनमाद्यर्थे, पितृपितामहाद्याः सर्वे पितरः मुरवैरिशासनात् ।

*वामने चतुर्थेऽध्याये दूर्वाससे—*

"तत्र स्नातास्तु ये पापाः पुरुषा योषितोऽमले ।
सर्वपापविनिर्मुक्ता ब्रह्मलोकं प्रयान्ति वै ॥"

इति ब्रह्मोपदिष्टशिवोक्तमुरवैरिशासनादिति च ।

**मूलम्**

**प्रभाते विमले प्राप्ते राजानो राजसत्तम ।**
**समारुह्य गिरिश्रेष्ठं सपुत्रास्तु सबान्धवाः ॥ १८१ ॥**

**कल्याणकाण्डदीपः**

**प्रभात इति** । **प्रभाते विमले** । सुप्रभाते । हे **राजसत्तम** साधुराजश्रेष्ठ । राजानः । **गिरिश्रेष्ठं** शेषाचलं मस्तकपर्यन्तं ते वनेन समारुह्य । तुः हेत्वर्थे । यतः सपुत्राः सबान्धवास्ते अतः तैर्मिलित्वा पुरतो गन्तुं तत्र स्थिता इति शेषः । ततः सपुत्राः सबान्धवा जाताः तैर्मिलिता इति यावत् ।

**मूलम्**

**तेषामनु महाराज्ञामाप शेषगिरिं द्विजः ।**
**विश्रान्ताः सर्वराजानस्तत्र तत्र [1]परस्परम् ॥ १८२ ॥**

१. महीपते ।

**कल्याणकाण्डदीपः**

**तेषां** महाराज्ञाम् । समासान्तविधेरनित्यत्वात् राज्ञामिति साधुस्थितिः । **अनु** पश्चात् । **द्विजो** माधवोऽपि शेषगिरिमाप । **तत्र तत्र** तस्मिन् तस्मिन् पर्वततले **परस्परं** सभाजयन्त इति शेषः । अस्य परस्य सपरो अन्यो राजा तस्यापि अयं परो राजा आसनव्यजनवीजनप्रीतिसम्भाषणादिभिः स्वस्वसाध्यसजातीयप्रतिनिधिक्रियाभिः प्रीत्या सेवयन्तः **सर्वे राजानः** । **विश्रान्ताः** श्रमविगमं कर्तुमुपक्रान्ताः । आदिकर्मणि क्तः । "कर्तरि च" इति क्तः ।

**मूलम्**

**सोऽपि तस्थौ [१]महाराजन् माधवो गिरिमस्तके ।**
**भूधरस्पर्शमात्रेण तदघं [२]पर्यकम्पत ॥ १८३ ॥**

१. द्विजश्रेष्ठो । २. पर्यतप्यत ।

**कल्याणकाण्डदीपः**

**सोऽपि** प्रकृतप्रतिपाद्यो माधवोऽपि । गिरिशिरसि **तस्थौ** स्थितवान् । **भूधरस्पर्शमात्रेण** गिरिसम्बन्धमात्रेण । **तदघं** तच्च तत् अघं च तदघम् । आपीता भुक्तसुरामांसाद्यघद्रव्यपरिणामरूपं वसाकल्पं दुर्गन्धनीलं किट्टद्रव्यं सुदुर्जीवम् । **अकम्पत** । स्थानात् चलितमभूत् । नाभिदेशामानी तुमिति यावत् । .

**गूढकर्तृकव्याख्यानम्**

अतः यः नरः अस्मिन् कपिलतीर्थे मुण्डनपूर्वकं स्नात्वा स्वपितृभ्यः श्रद्धया पिण्डदानपूर्वकं श्राद्धं चरेत् स मुक्तिपदमर्हत्येव । स माधवः पितृभ्यः मृत्पिण्डदानमात्रेण चण्डालस्त्रीसम्पर्क-गोमांसाशन-सुरापानादिकं कृत्वा यावत्पापसञ्चयं सञ्चितवान् तावत्पापात् मुक्तो मुक्तिभाक् चाभूत् । पुरुषोत्तम-श्रीनिवासस्य पुण्यक्षेत्रस्य कपिलादिपुण्यतीर्थस्य माहात्म्यं पुण्यप्रदशक्तिं च किं वर्णयामः ? न कोऽपि वर्णयितुं शक्तः । कुतः ? मृत्पिण्डदानमात्रेण माधवस्य स्वकृतपातकसर्वस्वपरिहारपूर्वकं पितृपिता-महाद्याः मुक्तिमेव गताः इति । "दैवमेव परं मन्ये दैवमेवात्र कारणम् । परेद्युः निर्मलप्रभाते ते नृपाः गिरिराजं श्रीशेषाचलं स्वस्वपुत्रमित्रकलत्रबन्धुभृत्यैः आरुरुहुः । तदा माधवोऽपि तैः गिरिमारुरोह । ततस्ते सर्वे गिरिमस्तके आरोहणायस्ताः तत्र तत्र विश्रान्ताः । माधवोऽपि तथैव चकार । अहो किं ब्रूमः ? तद्भूधरवरस्पर्शमात्रेण माधवकृतपापसर्वस्वं परितप्तुं प्रारभत ।

**मूलम्**

**माधवस्याभवत् कष्टं यथा मक्षिकभक्षणात् ।**
**[१]वमन्नेवाथ तत्पापं चण्डालीसङ्गसम्भवम् ।**
**(तदङ्गजातः कोऽप्यग्निरद्रिमाहात्म्यतस्तदा ।)**
**प्रजज्वाल [२]महत्पापं सुरामांसाशनोद्भवम् ॥ १८४ ॥**

१. वमन्तमेनं तं पापं समावृण्वन् समन्ततः ।

**कल्याणकाण्डदीपः**

अतः यथा मक्षिकभक्षणाद्धेतोर्नरस्य कोष्ठे सङ्कटं भवति तथा माधवस्य कुक्षौ कष्टं प्राणसङ्कटमभूत् । नाभौ षट्कोणमण्डलमध्यस्थनीलवर्णवायुबीजवाच्यप्रद्युम्नानुगृहीतेन दक्षनासापुटे पूरकरीत्या पूर्णवायुना निर्जीवमभूदिति यावत् । ततः चण्डालीसङ्गसम्भवं तत्पापं पूर्वोक्तनिर्जीवमघद्रव्यं वमन्नेव उद्गिरन्नेव प्रजज्वाल । पर्वतसनामकनागवायुना तद्हृदयदेशमानीय त्रिकोणमण्डलमध्यस्थरक्तवर्णाग्निबीजवाच्यसङ्कर्षणानुग्रहीतेनोक्त-वायुप्रज्वलित-तदुपोढोदर्यजातवेदसा प्रजज्वालेति यावत् । ननु सतीव यावच्छरीरं ज्वलितं किम् ? नेत्याह— **महत्पापं** इति । **सुरामांसाशनोद्भवम्** । महत्पापं उक्तमेवाघद्रव्यं **प्रजज्वाल** निःशेषं भस्मीभूतमभूत् । न तु निजशरीरम् ।

अत्रेदं बोध्यम्— आपीतघृतो घट आपाकनिक्षिप्तो ज्वलन्निःशेषदग्धतत्किट्टमात्रो यथा पुरा रूपमासाद्य निजरूपेणावतिष्ठते तद्वदघद्रव्यमात्रं प्रज्वाल्य यथापूर्वरूपमापन्नो माधवः । शिरसि वर्तुलमण्डलमध्यस्थवरुणजीववाच्यवासुदेवप्रेरितो वरुणो मच्छरीरमापादतलमस्तकं तप्तममृतवृष्ट्या शीतलीकरोत्विति ध्यायन् कुम्भके तस्थाविति ।

*तथा च ब्रह्माण्डे षष्ठेऽध्याये—*

"तस्मिन्नेव क्षणे तस्य शरीरमभितस्तथा ।
आपादचूडं जज्वाल तदद्भुतमिवाभवत् ।
तत् तस्य पापजातं च भस्मीभूय क्षणान्तरे ।
कृत्वा चटचटाशब्दं पतितं धरणीतले ।
जाज्वल्यमानो विप्रोऽपि ब्रह्मतेजोभिरञ्जसा ।
रराज विगतैनस्को शरदीव दिवाकरः ।"

"शरदीव दिवाकर" इत्यनेन सूर्यस्य मेघपटलमिव अस्यापि दूरे अघमाच्छादितमिति सूचितम् । वस्तुतस्तु, अयं दिवाकरः । तत्र किं चित्रम् ।

**मूलम्**

**तस्य दुर्गन्धधूमेन वासिताः सर्वदेवताः ।**
**तद्भाववेदिनो देवा ब्रह्मरुद्र[1]पुरोगमाः ॥ १८५ ॥**

१. पुरस्सराः ।

**कल्याणकाण्डदीपः**

**तस्य दुर्गन्धधूमेन** । तस्य दुर्गन्ध्याद्रेन्धनाग्नेः धूमेन । **वासिताः** । उद्बुद्धानागतानुभवजन्य-संस्काराः ।

**तद्भाववेदिन इति** । **तस्य** माधवस्य । भावं भूधरस्पर्शमात्रेण स्वोदयाग्नौ विशेषतोऽभिव्यक्तेन भूधरात्मक शेषान्तर्गतेन असाधारणेन सङ्कर्षणात्मकाद्येन्धनाग्निना प्रज्वलितमिदं शरीरमसाधारण-जलामृतवृष्ट्या तर्पयेदिति भावं विदन्ति तच्छीला इति तद्भाववेदिनः ॥ १ ॥

यद्वा, माधवस्य भावं स्वरूपोत्तमत्वलक्ष्मीपितृत्वादियोग्यतारूपस्वरूपतत्त्वप्रमितिनिवृत्तकर्मणः प्रवृत्तिलक्षणत्रिविधसत्तां विदन्तीत्यादि पूर्ववत् ॥ २ ॥

अथवा, तस्य माधवस्य भावं अमुत्र राजजन्म ॥ ३ ॥

अन्यो वा, तस्याचलाधिष्ठितश्रीनिवासस्य भावम् । "अस्य पुत्री जगन्माता जामाताऽहं जगत्पिता" इति भावम् ॥ ४ ॥

इतरे वा, तद्भावमिति । व्यस्तं समस्तं च । तदित्यव्ययं तस्मात् इत्यर्थे । "यत् तद्यतस्ततो हेतावसाकल्ये तु चिच्चने" इत्यमरः । यस्मात् भूधरस्पर्शमात्रेण सर्वं तदघं दग्धमभूत्, तस्मात् तस्य । "अरायिकाणे विकटे गिरिं गच्छ सदान्वये । शिपिविष्टस्य सत्त्वभिस्तेभिष्ट्वा चातयामसि" इति वेदवाक्यस्य भावं अभिप्रायं इत्यादि पूर्ववत् । "भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु" इति अमरः ॥ ५ ॥

**मूलम्**

**विमानानि विचित्राणि भासयन्तः समागताः ।**

**खमार्गे संस्थिताः सर्वे दृष्ट्वा तच्चरितं नृप।**
**ववृषुः पुष्पवर्षाणि माधवस्योत्तमाङ्गके ॥ १८६ ॥**

**कल्याणकाण्डदीपः**

तद्भाववेदनफलानि क्रमेण दर्शयति— **विमानानीति** । ब्रह्मरुद्रपुरस्सराः देवाः इन्द्रादयः विचित्राणि विमानानि व्योमयानानि आरुह्य तानि वा दश दिशो वा भासयन्तः समागताः सन्तः खमार्गे संस्थिताः आकाशमार्गे संस्थिताः । एवं सर्वे **तच्चरितं** तस्य माधवस्य चरितं भूधरस्पर्शोपोद्वलिता स्वीयब्रह्मतेजसा सर्वाघदहनलक्षणं कर्म देहान्तप्रायश्चित्तरूपम् । *तदुक्तं स्मृत्यर्थसारे*— "चण्डालीं बुद्धिपूर्वं बहुदिनं गत्वा अग्निना मृतः शुद्ध्येत् ।" इति । दृष्ट्वा **माधवस्योत्तमाङ्गके** शिरसि । **पुष्पवर्षाणि** । आकाशगङ्गामृतं मेघे कृत्वा **पुष्पैः** मालतीकुन्दमन्दारमल्लिकादिपुष्पैः सह आकाशगङ्गामृतवृष्टीः **ववृषुः** सिषिचुः ।

**मूलम्**

**दृष्ट्वा पितामहः श्रीमान् विमानादवरुह्य सः ।**
**माधवं गतपाप्मान[1]मजमेलं यथा हरिः ॥ १८७ ॥**

१. **मजामिलं ।**

**(कृपयोद्धृतवान् कृष्णः कृपालुर्द्विजपुङ्गवम् ।**
**इति सञ्चिन्तयन् तस्य निकटं प्राप सादरम् ।**
**जिघ्रंश्च तच्छिरः श्रीमान् ब्रह्मा वाक्यमथाब्रवीत् ।)**

**कल्याणकाण्डदीपः**

द्वितीयं तद्भावविज्ञानफलमाह— **दृष्ट्वेत्यादिना** । सदेवैर्मिलित आगतः श्रीमान् पितामहः । **गतपाप्मानमजमेलं हरिः यथा** तथा गतपाप्मानं निष्पापं माधवं दृष्ट्वा विमानादवरुह्य ।

**गूढकर्तृकव्याख्यानम्**

ततः माधवशरीरगतपापं परितमुं आरभत । तदा माधवस्य पापोद्गमनकाले मक्षिकाभक्षकस्य यथा तथा पापवमने अतिदुस्सहसङ्कटं आसीत् । तदा तस्य शरीरात् कोऽपि अग्निः उद्भूय तद्वान्तपापं समन्ततः आवृण्वन् अगम्यागमन-अभक्ष्यभक्षण-अपेयपानादि पापं दहन् प्रकर्षेण जज्वाल । दाहकाले दुस्सहदुर्गन्धमयधूमः निस्ससार । तदाघ्रातुं अशक्नुवन्तः सर्वे देवाः त्रासिता बभूवुः । तादृशावस्थां ज्ञातुं इच्छन्तः ब्रह्मरुद्रादिदेवाः स्वस्वविचित्रविमानैः गगने आस्थिताः । तस्य माधवस्य चरितं तच्चरितस्य

पुण्यतमत्वं च विदित्वा तस्य शिरसि पुष्पवृष्टिं ववृषुः । तदा विधिः ईशेच्छां मन्वानः स्वविमानात् अवरुह्य पापमुक्तमाधवमुपाजगाम । पूर्वं कान्यकुब्जे अजामिलो नाम विप्रः शूद्रस्त्रीसङ्गं कृत्वा तस्यां बहुपुत्रान् जनयित्वा स्वमृतिसमये कनिष्ठपुत्रं नारायणं 'नाराधण' इति उच्चैराह्वयत् । अतिपापोऽपि अजामिलः जन्मान्तरकृतपुण्यशेषमहिम्ना अन्त्यकाले नारायणनामोच्चारणं कृतवान् । भगवन्नामकीर्तनात् मरणसङ्कटमुक्तः पुरतः किञ्चित्कालं सुखं जीवन् अन्ते परमगतिमाप । प्रकृते अजामिलं यथा, तथा श्रीहरिः स्वाधिष्ठितगिर्यारोहणमात्रेण माधवस्य पापं परिहृत्य तं उद्धार इति विधिः चिन्तयन् माधवं स्पृष्ट्वा शिर आघ्राय तमुवाच—

**मूलम्**

**भो भो माधव राजेन्द्र गतपापोऽसि केवलम् ।**
**स्वामितीर्थस्य निकटं गत्वा स्नात्वा च तज्जले ।**
**वराहवदनं नत्वा त्यज देहं महीसुर ॥ १८८ ॥**

**कल्याणकाण्डदीपः**

**भो भो माधव !** केवलं गतपापोऽसि । आत्यन्तिकानिष्टनिवृत्तिमान् असि । अनया आत्यन्तिकपापराहित्योक्त्याऽस्य त्रिविधसत्तापि सूचिता । **स्वामितीर्थस्य निकटं** सुखावरोहणप्रदेशं गत्वा स्नात्वा वराहवदनं नत्वा अथ **तज्जले** तद्वनोदके देहं त्यज ।

वाक्यादेरामन्त्रितस्येत्यादिना सम्मतौ द्विर्वचनम् । सम्भ्रमाद्वा । अथवा अहो मयि श्रीनिवासस्य पङ्कूपरि गङ्गाप्रवाहवत्, महाननुग्रह इति । आनन्दाब्धौ मग्नस्य माधवस्य इन्द्रियाणां बहिर्विलुप्तवृत्तित्वात् झडित्यभिमुखीकरणाय द्विरुक्तिः । भो राजेन्द्र इति सम्बोधनं वा । माधवप्रयागादप्यधिकपुण्यतीर्थजले कालप्राप्तदेहत्यागो वैधः ।

*तदुक्तमादित्यपुराणे*—

"स्वयं देहविनाशस्य काले प्राप्ते महामतिः ।
अगाधतोयराशिं च भृगोः पतनमेव च ।
गच्छेन्महापथं वाऽपि तुषारैरिदमादरात् ।
प्रयागवटशाखाग्रात् देहत्यागं करोति च ।
उत्तमानाप्नुयाल्लोकान्नात्मघाती भवेन्नरः ॥" इति ।

तोयराशिं प्रविशेदित्यर्थः ।

मूलम्

**महीपालो [1]भवामुत्र कुरु राज्यमकण्टकम् ।**
**पाण्डवानां च दौहित्रकुले जातोऽतिकीर्तिमान् ॥ १८९ ॥**

१. ऽथ भूत्वा तु ।

कल्याणकाण्डदीपः

तृतीयं तद्भाववेदनफलमाह— **महीपाल** इति । हे महीसुर ! **अमुत्र** भवान्तरे ।

**पाण्डवानां दौहित्रकुले** जातः, तत्रापि सुधर्मस्य सुतो भूत्वा **महीपालो भव** । तत्रापि तोण्डदेशाधिपो भव । अथ **राज्यं** प्रजाराशिम् । **अकण्टकं** निरुपद्रवम् । **कुरु** प्रजाः परिपालय इत्यर्थः । राजभावसाफल्यहेतुराज्यपालनानन्तरम् ।

मूलम्

**सुधर्मस्य सुतो भूत्वा [1]विचरस्वाथ दक्षिणे ।**
**नारायणपुरे वीर तोण्डदेशाधिपो भव ॥ १९० ॥**

१. ऽऽकाशनामाऽथ ।

कल्याणकाण्डदीपः

हे वीर ! आरब्धान्तगामिन् । बार्हस्पत्य कुशध्वज । 'अस्य' इति शेषः । **अस्य** पर्वतस्य । **दक्षिणे नारायणपुरे** । **अथ** पद्मावतीकल्याणमङ्गलम् । **विचरस्व** विशेषेण कुरु ।

मूलम्

**तव पुत्री जगन्माता जामाता च [1]जगत्पिता ।**
**भविष्यति महाराजन् पश्चाद्वैकुण्ठ[2]माप्नुहि ॥ १९१ ॥**

**इति तस्य वरं दत्वा चतुरश्चतुराननः ।**
**तदा नाम चकाराद्रेः वेङ्कटाचल[3]मित्युत ॥ १९२ ॥**

१. जगत्पतिः । २. माप्स्यसि । ३. चल इत्यपि ।

(वें पापं कटते यस्मात् पापदाहनशक्तितः ।
वेङ्कटाचल इत्येव नाम देवास्तदा जगुः ।)

**कल्याणकाण्डदीपः**

तत् कीदृशं कल्याणमित्यतः चतुर्थं तद्विज्ञानफलमाह— **तवेति** । स्पष्टम् । 'भव' इत्यादि सर्वत्र लोट् आशीरर्थः ।

**चतुरः चतुराननः** इति पदद्वयं अर्थभेदेन पूर्वत्रोत्तरत्र च सम्बद्ध्यते । अनेन पदद्वयसन्निवेशेन अयमर्थो लभ्यते । चतुराननो ब्रह्मा ऐन्द्री धार्मी वारुण्युदीची दिगनुक्रमेण महीपालता धर्मेण राज्य-पालनम् । दानधारापूर्वकं मङ्गलदेवताकन्याप्रदानम् । वैकुण्ठप्राप्तिश्च । एवं क्रमेणैकैकेन वदनेनैकैको वर इति चतुरो वरान् । वरमिति समुदायैकवचनं वा । **वरं** वरान् । 'अस्य' इति सम्बन्धसामान्ये षष्ठी । "सान्त्विता मामिका माता दत्तं राज्यमिदं मम । तद्ददामि तवैवाहम्" इत्यादिवत् ।

पञ्चमतद्भावविज्ञानफलमाह— **तदेति** । **चतुराननः** चतुर्भिः वदनैः वेदान् समुद्गिरन् । ब्रह्मा **चतुरः** वेदव्याख्यानकुशलः । 'तस्य' इत्यनुषज्यते । **तस्य** पर्वतस्य । **वेङ्कटाचलमिति नाम उत** । नामापि चकार । उताप्यर्थविकल्पयोः ।

"वें प्राहुः सर्वपापानि कटस्तद्दाह उच्यते ।
सर्वपापदहो यस्मात् वेङ्कटाचल इत्यभूत् ॥"

कट दाहे । आगमिकोऽयं धातुः । "धातवः पठिताः सौत्रलोकागमस्थिताः" इत्युक्तेः ।

**मूलम्**

**तस्माद्वेङ्कटशैलोऽयं लोके विख्यातकीर्तिमान् ॥ १९३ ॥**

**कल्याणकाण्डदीपः**

कलौ वेङ्कटशैलेति कथं नाम ? इति राजप्रश्नस्य उत्तरमाह— **तस्मादिति** । **तस्मात्** । सर्व-पापदाहात् । अयं वेङ्कटशैल इति लोके विख्यातकीर्तिमान् अभूत् । एतेन सम्पत्साधनदिग्वत्स-विद्यामूलत्वं सूचितम् ।

**मूलम्**

**प्रातःकाले पर्वतनामकीर्तनफलम्**

**प्रभातकाले राजेन्द्र यः कीर्तयति भूधरम् ।**
**तस्य पुण्यफलं वक्ष्ये शृणु राजन् यथास्थितम् ॥ १९४ ॥**

**कल्याणकाण्डदीपः**

एतदध्यायकीर्तनलेखनश्रवणफलानि उक्त्वा समूलतां च वदन्नुपसंहरति— **प्रभात इति** । यो धीमान् प्रभातकाले प्रतिदिनं काले काले । सभानिर्भीको धीरः **कीर्तयति** धीरकण्ठेन गायति । **तस्य** गायतः । **यथास्थितं** यथोचितम् । न तु प्रोचनार्थमर्थवादिकं फलं वक्ष्ये । हे राजन् । शृणु । 'यथाश्रुतम्' इति पाठेऽप्ययमेवार्थः ।

**मूलम्**

**[1]गङ्गास्नानं लेखने तु यात्रासाहस्रमेव च ॥ १९५ ॥**

१. फलं भवेत् ध्रुवं गङ्गासेतुयात्रासहस्रजम् ।

**कल्याणकाण्डदीपः**

**गङ्गास्नानमिति** । प्रतिदिनं प्रभाते हिमादिनिर्भीकेण धीरेण धीरकण्ठेन । गङ्गां गायमानेन यत्क्रियते गङ्गास्नानं, तत्पुण्यसदृशफलम् । **लेखने** एतदध्यायलेखने । **यात्रासाहस्रं** गङ्गाजनक-कृष्णप्रदक्षिणरूपयात्रासहस्रजपुण्यसदृशपुण्यफलम् । कलशागतगङ्गाप्रदक्षिणसाहस्रं वा । **यात्रा** नाम प्रदक्षिणम् । "देवार्चनोत्सवे गत्यां यात्रा भोगादिवर्जने" इति कोशात् ।

"पदे पदान्तरं गत्वा करौ चलनवर्जितौ ।
वाचा स्तोत्रं मनो ध्यानं चतुरङ्गं प्रदक्षिणम् ॥"

*लेखनमपि तथा—*

"दृग्भ्यां दृष्टिर्मनो ध्यानं करौ चलनवर्जितौ ।
वाचा जल्पिर्ह्यक्षराणां लिखनं चतुरङ्गकम् ॥" इत्यङ्गसाम्यात् ।

**मूलम्**

**इतिहासमिमं प्रोक्तं गौतमेन मयोदितम् ।
पुण्यं परमकल्याणं श्रवणात् [1]शुभदायकम् ॥ १९६ ॥**

१. भद्रदायकम् ।

*॥ इति श्रीभविष्योत्तरपुराणे वेङ्कटगिरिमाहात्म्ये चतुर्युगमहिमाविशेषवर्णनं नाम प्रथमोऽध्यायः ॥*

**कल्याणकाण्डदीपः**

इति ह पारम्पर्योपदेशः, स अस्मिन्नस्तीति **इतिहासः** । अधिकरणे घञ् ।

> "पारम्पर्योपदेशः स्यादैतिह्यमिति ह्यव्ययम् ।
> इतिहासः पुरावृत्तम् ......................... ॥" इत्यमरः ।

तदस्मिन् अस्तीति **इतिहासम्** । अर्श आद्यच् ।

यद्वा, इतिहासवदाचरतीति **इतिहासम्** । आचारार्थे क्विप् । अथ आर्षो लिङ्गव्यत्ययः । "नान्य-द्दोषं भवेदत्र मृगेभ्योऽन्यत्र विद्धि वै" इति रामायणे अरण्ये । तद्वत् । तथा च गौतमेन प्रोक्तं पुरावृत्तमिदं तुभ्यं मयेरितम् । **श्रवणाच्छुभदायकं पुण्यं** सुकृतहेतुः **परमकल्याणं** सम्पूर्णारोग्यसुखसाधनम् । कल्यमारोग्यं सुखं वा अणति कल्याणमिति टीकासर्वस्वकारः । **शुभदायकं** अभ्युदयहेतुः ।

'इतिहासमिमम्' इति पाठे श्लोकद्वयमेकं वाक्यम् । हे राजन् राजेन्द्र ! श्रावणाच्छुभदायकम् । परमकल्याणं पुण्यं भूधरं प्रति गौतमेन प्रोक्तं मया तुभ्यमीरितं इममितिहासं यः कीर्तयति तस्य पुण्यफलं वक्ष्ये व्याख्यास्ये शृणु । गङ्गास्नानं लेखने प्रदक्षिणसहस्रम् इति अशेषम् अतिकल्याणम् ॥ श्रीवेङ्कटेशाय मङ्गलम् ॥

> वृषभाचलशृङ्गाय अञ्जनाचलसूनवे ।
> शेषाचलनिवासाय वेङ्कटेशाय मङ्गलम् ॥

*श्रीवेङ्कटेशमाहात्म्यस्य भविष्योत्तरपुराणस्य व्याख्याने कल्याणकाण्डदीपे प्रदीपसम्पादनं नाम प्रथमोऽध्यायः पूर्णः ॥*

॥ श्रीभारतीरमणान्तर्गतश्रीकृष्णार्पणमस्तु ॥

> पादीन्मध्यमलान्तादिनृसिंहार्यप्रकाशिता ।
> कल्याणकाण्डदीपेऽभूत् प्रथमाध्यायलेखनम् ।

> वेङ्कटेशो वरीवर्ति यन्मनो मणिमण्टपे ।
> प्रीणातु मम सोऽयं श्रीनृसिंहार्यगुरुः सदा ॥

★ ★ ★

**गूढकर्तृकव्याख्यानम्**

"विप्रेन्द्र ! माधव ! माधवानुग्रहात् त्वत्पापसर्वस्वं गतम् । अद्य त्वं तीर्थराजस्वामितीर्थे स्नात्वा श्रीवराहं नत्वा तव देहं त्यज । भावि भवे पाण्डवदौहित्रकुले च जनिष्यसे । सुधर्मस्य सुतत्वेन अवतीर्य आकाशनाम्ना विख्यातः तोण्डदेशाधीशो भवसि । त्वं वीर महीपालश्च, दक्षिणदिशि नारायणपुरं तव राजधानी भविष्यति । तत्र राज्यं निरातङ्कशायि । तव पुण्यं किं वर्णयामः ? साक्षात् जगन्माता रमा पद्मा नाम्ना तव पुत्रीत्वेन अवतरिष्यन्ती । साक्षात् जगदीशः हरिः तव जामाता भविष्यति । एतन्महिम्ना पश्चात् हरिपदं वैकुण्ठं आप्स्यसि । किमाशास्यमितःपरम् ।" एवं सृष्टिचतुरः चतुराननः भाविसृष्टिप्रकारं संसूच्य माधवाय वरं ददौ ॥

किञ्च अयं शेषाचलः स्पर्शमात्रेण माधवपापराशिं परिजहार । अतोऽयं गिरिः अस्मिन् कलौ वें पापं कटते दहाति इति 'वेङ्कटाचल' इति नाम्ना प्रसिद्धो भवतु इति विधिर्नाम चकार । तेन नाम्ना देवाः गिरिं जगुः ॥

जनकराज ! पापदाहकशक्तित्वात् अयं वै गिरिः कलौ वेङ्कटाचल इति ख्यातः । राजेन्द्र ! नित्यं प्रातः इमं वेङ्कटाचलं यः भक्त्या कीर्तयति तस्य पुण्यं वच्मि, शृणु । एतद्गिरिकीर्तनेन गङ्गासेतुयात्रा सहस्रकृत्वः कृता चेत् यावत् फलं, तावत् फलं लभते ॥

इदं वेङ्कटगिरिमाहात्म्यं अथवा वेङ्कटाचलमाहात्म्यं गौतमेन प्रोक्तम् । इदं पुण्यकरं परममङ्गलप्रदं श्रवणात् श्रोतॄणां श्रेयोदायकं भवतीति चतुर्युगमहिमाविशेषवर्णितं यत् शतानन्दमुनिः जनकराजं प्रति निरूपयामास । तदेव सूतः शौनकादिविप्रान् प्रति निरूपयामास ॥

*॥ इति अत्र श्रीमद्भविष्योत्तरपुराणे वेङ्कटगिरिमाहात्म्ये चतुर्युगमहिमाविशेषवर्णनं नाम प्रथमोऽध्यायः ॥*

॥ श्रीकृष्णार्पणमस्तु ॥



॥ श्रीः ॥

## श्रीमद्भविष्योत्तरपुराणान्तर्गतं

# श्रीवेङ्कटेशमाहात्म्यम्

### ॥ अथ द्वितीयाध्यायकथासङ्क्षेपः ॥

**(गूढकर्तृकव्याख्यानानुसारी)**

॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

॥ श्री वेदव्यासाय नमः ॥

"हे प्राज्ञ ! 'नारायणः शेषाचलं आगमिष्यति' इति पूर्वं उक्तवान् खलु । कुतो हरिः वैकुण्ठं विहाय शेषाचलं प्राप ? तत्र कं कं व्यापारं चकार ? किञ्च श्रीवराहस्य वेङ्कटगिरेः गिरिगततीर्थानां माहात्म्यं इत्यादिकं विस्तरात् वद" इति । शतानन्द आह— पुरा कश्यपादिमुनिश्रेष्ठाः मिलित्वा जाह्नवीतीरे उत्तमसत्रयागं चिकीर्षन्तः तदा तत्र नारदः प्राप्तः । "किं भो मुनयः ! किं कर्तुं प्रवृत्ताः ? उत्तमं यज्ञं चिकीर्षन्तः सन्तः तर्हि अस्य यज्ञस्य अधिदेवता का ? यज्ञफलं कस्मै अर्पयथ ? इति पप्रच्छ । नारदोक्तिं श्रुत्वा यज्ञफलभोगे "सर्वोत्तमदेवता का ?" इति सर्वेषां मुनीनां संशयो जातः । पुनः पुनः विचार्य अन्ते एतद्विषयव्यवस्थापने ब्रह्मज्ञानिषु श्रेष्ठः भृगुरेव समर्थः इति निर्णीय तस्मिन् भयभक्त्या विज्ञाप्य यज्ञफलभोक्तारं सर्वोत्तमं वेत्तुं तं प्रेषयामासुः ।

भृगुः सन्तोषेण आदौ सत्यं गत्वा धातारं ददर्श । धाता भृगुं दृष्ट्वाऽपि नैव उवाच । तदा भृगुः "अयं विधिः किञ्चित् अज्ञानं आश्रितः" इति मत्वा, सत्यं विहाय कैलासं गत्वा रुद्रं ददर्श । रुद्रः उमया क्रीडासक्तः मुनिं नैव ददर्श । तदा उमया मुनेः आगमनं प्रबोधितः महाकोपेन "मुनिं हन्मि" इति अभ्यद्रवत् । भृगुः "हे रुद्र ! इतः लोकेषु तव शिश्नस्यैव पूजा चरतु, न तु तव मूर्तेः" इति तं शशाप । क्षणात् मुनिः वैकुण्ठं गत्वा रमया सह शयितं हरिं दृष्ट्वा तस्य उरसि पादेन तताड । क्षणात् हरिः भक्त्या प्रत्युत्थानं कृत्वा विनीतः मुनेः पादौ उदकेन प्रक्षाल्य पादोदकं शिरसि दधार । "दर्शनादेव साधवः" "साधवः दर्शनमात्रेण पावयन्ति जगत्त्रयम्" इति ब्रुवन् तं प्रशशंस । तत्क्षणे एव "विष्णुरेव

**गूढकर्तृकव्याख्यानम्**

"विप्रेन्द्र ! माधव ! माधवानुग्रहात् त्वत्पापसर्वस्वं गतम् । अद्य त्वं तीर्थराजस्वामितीर्थे स्नात्वा श्रीवराहं नत्वा तव देहं त्यज । भावि भवे पाण्डवदौहित्रकुले च जनिष्यसे । सुधर्मस्य सुतत्वेन अवतीर्य आकाशनाम्ना विख्यातः तोण्डदेशाधीशो भवसि । त्वं वीर महीपालश्च, दक्षिणदिशि नारायणपुरं तव राजधानी भविष्यति । तत्र राज्यं निरातङ्कशायि । तव पुण्यं किं वर्णयामः ? साक्षात् जगन्माता रमा पद्मा नाम्ना तव पुत्रीत्वेन अवतरिष्यन्ती । साक्षात् जगदीशः हरिः तव जामाता भविष्यति । एतन्महिम्ना पश्चात् हरिपदं वैकुण्ठं आप्स्यसि । किमाशास्यमितःपरम् ।" एवं सृष्टिचतुरः चतुराननः भाविसृष्टिप्रकारं संसूच्य माधवाय वरं ददौ ॥

किञ्च अयं शेषाचलः स्पर्शमात्रेण माधवपापराशिं परिजहार । अतोऽयं गिरिः अस्मिन् कलौ वें पापं कटते दहाति इति 'वेङ्कटाचल' इति नाम्ना प्रसिद्धो भवतु इति विधिर्नाम चकार । तेन नाम्ना देवाः गिरिं जगुः ॥

जनकराज ! पापदाहकशक्तित्वात् अयं वै गिरिः कलौ वेङ्कटाचल इति ख्यातः । राजेन्द्र ! नित्यं प्रातः इमं वेङ्कटाचलं यः भक्त्या कीर्तयति तस्य पुण्यं वच्मि, शृणु । एतद्गिरिकीर्तनेन गङ्गासेतुयात्रा सहस्रकृत्वः कृता चेत् यावत् फलं, तावत् फलं लभते ॥

इदं वेङ्कटगिरिमाहात्म्यं अथवा वेङ्कटाचलमाहात्म्यं गौतमेन प्रोक्तम् । इदं पुण्यकरं परममङ्गलप्रदं श्रवणात् श्रोतॄणां श्रेयोदायकं भवतीति चतुर्युगमहिमाविशेषवर्णितं यत् शतानन्दमुनिः जनकराजं प्रति निरूपयामास । तदेव सूतः शौनकादिविप्रान् प्रति निरूपयामास ॥

*॥ इति अत्र श्रीमद्भविष्योत्तरपुराणे वेङ्कटगिरिमाहात्म्ये*
*चतुर्युगमहिमाविशेषवर्णनं नाम प्रथमोऽध्यायः ॥*

॥ श्रीकृष्णार्पणमस्तु ॥



॥ श्रीः ॥

## श्रीमद्भविष्योत्तरपुराणान्तर्गतं

# श्रीवेङ्कटेशमाहात्म्यम्

### ॥ अथ द्वितीयाध्यायकथासङ्क्षेपः ॥

(गूढकर्तृकव्याख्यानानुसारी)

॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

॥ श्री वेदव्यासाय नमः ॥

"हे प्राज्ञ ! 'नारायणः शेषाचलं आगमिष्यति' इति पूर्वं उक्तवान् खलु । कुतो हरिः वैकुण्ठं विहाय शेषाचलं प्राप ? तत्र कं कं व्यापारं चकार ? किञ्च श्रीवराहस्य वेङ्कटगिरेः गिरिगततीर्थानां माहात्म्यं इत्यादिकं विस्तरात् वद" इति । शतानन्द आह— पुरा कश्यपादिमुनिश्रेष्ठाः मिलित्वा जाह्नवीतीरे उत्तमसत्रयागं चिकीर्षन्तः तदा तत्र नारदः प्राप्तः । "किं भो मुनयः ! किं कर्तुं प्रवृत्ताः ? उत्तमं यज्ञं चिकीर्षन्तः सन्तः तर्हि अस्य यज्ञस्य अधिदेवता का ? यज्ञफलं कस्मै अर्पयथ ? इति पप्रच्छ । नारदोक्तिं श्रुत्वा यज्ञफलभोगे "सर्वोत्तमदेवता का ?" इति सर्वेषां मुनीनां संशयो जातः । पुनः पुनः विचार्य अन्ते एतद्विषयव्यवस्थापने ब्रह्मज्ञानिषु श्रेष्ठः भृगुरेव समर्थः इति निर्णीय तस्मिन् भयभक्त्या विज्ञाप्य यज्ञफलभोक्तारं सर्वोत्तमं वेत्तुं तं प्रेषयामासुः ।

भृगुः सन्तोषेण आदौ सत्यं गत्वा धातारं ददर्श । धाता भृगुं दृष्ट्वाऽपि नैव उवाच । तदा भृगुः "अयं विधिः किञ्चित् अज्ञानं आश्रितः" इति मत्वा, सत्यं विहाय कैलासं गत्वा रुद्रं ददर्श । रुद्रः उमया क्रीडासक्तः मुनिं नैव ददर्श । तदा उमया मुनेः आगमनं प्रबोधितः महाकोपेन "मुनिं हन्मि" इति अभ्यद्रवत् । भृगुः "हे रुद्र ! इतः लोकेषु तव शिश्नस्यैव पूजा चरतु, न तु तव मूर्तेः" इति तं शशाप । क्षणात् मुनिः वैकुण्ठं गत्वा रमया सह शयितं हरिं दृष्ट्वा तस्य उरसि पादेन तताड । क्षणात् हरिः भक्त्या प्रत्युत्थानं कृत्वा विनीतः मुनेः पादौ उदकेन प्रक्षाल्य पादोदकं शिरसि दधार । "दर्शनादेव साधवः" "साधवः दर्शनमात्रेण पावयन्ति जगत्त्रयम्" इति ब्रुवन् तं प्रशशंस । तत्क्षणे एव "विष्णुरेव

सर्वोत्तमः। स एव यज्ञफलभोक्ता" इति भृगुः निश्चित्य धरां प्राप्तः। ऋषीन् सर्वान् "विष्णुरेव सर्वोत्तमः" इति बोधयामास। तेन उपदेशेन ऋषयः यज्ञं कृत्वा फलं श्रीहरये समर्पयामासुः।

ततः तत्र वैकुण्ठे रमा हरिं एवं आह— "स्वामिन्! जगदीश! मदालिङ्गनयोग्ये तव वक्षसि भृगुः पादेन तताड। अवमानिताऽहं अत्र अतिष्ठन्ती करवीरपुरं गच्छामि" इति पत्या सह प्रेमकलहं कृत्वा रमा करवीरं जगाम। ततः हरिः रमायाः वियोगात् वैकुण्ठे स्थातुं अनिच्छन् समयं निरीक्षमाणः द्वापरान्ते अष्टाविंशतिमे कलौ प्राप्ते भरतखण्डे गङ्गायाः दक्षिणतः सुवर्णमुखरीतीरदेशे पुण्यकानने साक्षात् शेषावतार-वेङ्कटगिरौ आगत्य तत्र वसतिं कल्पितवान्। तस्य गिरेः वदनं वेङ्कटगिरिः, मध्यं नृसिंहाचलः, पुच्छभागः श्रीशैलः, एवमस्ति। अयं गिरिवरः सर्वतीर्थक्षेत्रमयः। श्रीशसेवां कर्तुकामाः देवऋषिपितरः सर्वे तत्र गिरौ तरु-मृग-पक्षि-प्रभृतिरूपैः वसन्ति॥ एवं प्रभावोऽस्य गिरीन्द्रजन्मनः मेरुगिरिसुतस्य वेङ्कटाचलस्य। तथा श्रीहरेः महिमानं ब्रह्म-रुद्र-इन्द्रादयो देवाः न जानन्ति। इतः अत्यल्पवीर्याः मनुजाः न जानन्ति इति किमु वक्तव्यम्? इति प्रकारेण यत् श्रीशेषाचलवर्णनं शतानन्दः जनकं प्रति निरूपयामास तदेव वर्णनं सूतः शौनकादि विप्रान् प्रति निरूपितवान्॥

*इति श्रीमद्भविष्योत्तरपुराणे श्रीवेङ्कटेशमाहात्म्ये द्वितीयाध्यायकथासङ्क्षेपः॥*

॥ श्रीकृष्णार्पणमस्तु॥



॥ श्रीः ॥

## श्रीमद्भविष्योत्तरपुराणान्तर्गतं

# श्रीवेङ्कटेशमाहात्म्यम्

## अथ द्वितीयोऽध्यायः

**मूलम्**

**भगवतः श्रीवैकुण्ठाद्वेङ्कटाचलगमनम्**

जनक उवाच—

मरुत्प्राहाहिराजानं भगवानागमिष्यति ।
इति त्वयोदितं पूर्वं तन्ममाचक्ष्व विस्तरात् ॥ १ ॥

**कल्याणकाण्डदीपः**

नमस्ते यज्ञरूपाय यज्ञभोक्त्रे नमोऽस्तु ते ।
यज्ञकर्त्रे नमो यज्ञविधाय च नमो नमः ॥ १ ॥

वैकुण्ठशेषाचलहानयोगयोर्हेतुप्रकाराविह लोकसम्मतौ ।
उच्यन्त एतद्गिरिवर्यगौरवं पूर्वापरीकारनिदानचोदनात् ॥ २ ॥

केशवाय नमस्तेऽस्तु हृषीकेशाय ते नमः ।
वासुदेवाय महते श्रीनिवासाय ते नमः ॥ ३ ॥

पूर्वाध्यायेन सह सन्निहितेन प्रसङ्गसङ्गतिमाह— **मरुदिति** । यद्यपि ''दुहितुस्तव कल्याणम्'' इत्यादिना इतोऽपि पूर्वेण अस्य सङ्गतिरियमस्ति तथाऽपि सूचीकटाहन्यायेन तदुपोद्घाततया च सन्निहितेनैव सोक्ता । शेषाचलयोगस्य वैकुण्ठत्यागपूर्वकत्वात् प्रश्नक्रमोल्लङ्घनमुत्तरस्य । न च मरुत्

प्राह इत्यादि न पूर्वं श्रूयते, कथं तदनुवादः ? इति वाच्यम्, पूर्ववृत्तस्यापि यस्योत्तरत्र अवश्यमनूद्यता विवक्षिता तस्य पूर्वमनुक्तत्वेऽपि दोषाभावात् । पूर्वमनुक्तायाः चित्रकूटकथायाः सुन्दरे अनुवादात् इयमपि शतरीतीनां मध्ये काचन रीतिः । स्थूलोऽयं पन्थाः । सूक्ष्मोऽन्योऽपि उक्तो ज्ञेयः । **विस्तरात्** विस्तरमवलम्ब्य ।

**मूलम्**

**कथं नारायणः प्राप्तः कस्माद्वा कारणान्मुने ।**
**तत्रागत्य कृतं कर्म तन्ममाचक्ष्व भूसुर ॥ २ ॥**

**कल्याणकाण्डदीपः**

**कथमिति** । शेषगिरिमिति शेषः । **कथं** केन प्रकारेण, हे मुने ! नारायणः शेषगिरिं **कथं** चतुर्भुजो द्विभुजो वा, असहायः ससहायो वा, मानुषलीलो अमानुषलीलो वा, केन प्रकारेण प्राप्तः ? कारणाद्वा कस्मात् कारणं वा किमिति यावत् ।

**मूलम्**

**कथं वैकुण्ठलोकं तु त्यक्तवान् पुरुषोत्तमः ।**
**चरितं तस्य माहात्म्यं तीर्थानां पर्वतस्य च ॥ ३ ॥**

**कल्याणकाण्डदीपः**

**कथं वैकुण्ठलोकमिति** । कथमित्याक्षेपे । तादृशलोकत्यागे किं बलवद्बाधकमिति प्रश्नपर्यवसायी । **चरितमिति** । **तस्य** वैकुण्ठत्यागिनः तत्त्यागोपयोगिचरितमिति यावत् । **पर्वतस्य तीर्थानां च माहात्म्यं** "वराहरूपिणो विष्णोर्माहात्म्यं वद विस्तरात् । आकाशराज्ञः" इत्यादि उत्तरान्वयि ।

**मूलम्**

**वराहरूपिणो विष्णोर्माहात्म्यं वद विस्तरात् ।**
**[1]आकाशराज्ञश्चरितं भ्रातुस्तस्य [2]महामुने ॥ ४ ॥**

१. आकाशराजचरितं । २. महात्मनः ।

**कल्याणकाण्डदीपः**

**भ्रातुः** इत्युपलक्षणम् । तत्पुत्रस्यापि । **महामुने** इत्यन्तः स्पष्टः ।

मूलम्

[1]पुण्याश्च पुरुषश्रेष्ठा जामाता च जगत्पतिः ।
देवानां च ऋषीणां च देवस्त्रीणां समागमः ॥ ५ ॥

१. यस्य पुत्री रमादेवी ।

**कल्याणकाण्डदीपः**

आकाशराजादयो यूयमिव केचन मानुषाः । तन्माहात्म्यश्रवणेन तव किमित्यत आह— **पुण्याश्चेति** । 'येषाम्' इति शेषः । येषां जगत्पतिः जामाता, तस्मात् ते **पुरुषश्रेष्ठाः** । अतः पुण्याश्च स्वश्रवणकीर्तनाभ्यां सुकृतहेतवः । "यस्य पुत्री जगन्माता जामाता च जगत्पिता" इति पाठे अयमपि राजा कश्चन मानुषः । तव तन्माहात्म्यश्रवणेन किम् ? इत्यवतारिकाक्रमः ।

**गूढकर्तृकव्याख्यानम्**

पूर्वाध्याये शतानन्दः वेङ्कटगिरेः चतुर्युगेषु नामप्रवृत्तिनिमित्तं तत्तद्युगमहिमानं यदा वर्णयामास । जनकः तत् श्रुत्वा, "मुनिवर ! 'भगवान् विष्णुः स्वप्रियतमस्थानं वैकुण्ठं त्यक्त्वा भुवमागमिष्यति' इति वायुः शेषमाह इति पूर्वं मां निवेदितवान् खलु । तत् श्रोतुमिच्छामि, विस्तरेण वद" इति पप्रच्छ । श्रीविष्णुः सच्चिदानन्दस्वरूपः चिन्तासन्तापादिदोषरहितः स्वावासवैकुण्ठं विहातुं किं बीजम् ? शेषाचलं कुतः प्राप्तः ? शेषाचलं द्विभुजः चतुर्भुजो वा प्राप्तः ? सहायसहितः आगतः उत सहायरहित आगतः ? मानुषलीलां दर्शयितुं उत अमानुषलीलां दर्शयितुम् ? शेषाचले अवतीर्णः कान् कान् व्यापारान् चरितवान् ? किञ्च शेषाचलस्य तद्गततीर्थानां श्रीवराहरूपिणश्च माहात्म्यं वक्तव्यम् । यस्य साक्षात् रमा पुत्रीत्वेन अवतीर्णा ? यस्य साक्षात् हरिः जामाता जातः ? तादृश-आकाशचरितं, यस्य पुण्यवतः पुत्रीविवाहमहोत्सवे सकलदेव-देवस्त्री-ऋषीणां समागमः अभूत् तादृश-आकाशचरितम्, आकाशानुजमहात्मतोण्डिमानचरितम्, आकाशसुतवसुदानचरितम्, इत्यादि वक्तव्यमिति पप्रच्छ । शतानन्दः वक्ति—

मूलम्

**सर्वोत्तमदेवतात्वपरीक्षार्थं भृगोः सत्यलोकादिगमनम्**

शतानन्द उवाच—

पुरा तु ऋषयः सर्वे कश्यपाद्या मुनीश्वराः ।
सुमखं जाह्नवीतीरे सन्तोषाच्चक्रिरे द्विजाः ॥ ६ ॥

**कल्याणकाण्डदीपः**

वैकुण्ठाद्वसुन्धरागमनकारणमाह शतानन्दः— **पुरा त्विति** । पुरा द्वापरान्ते, **कश्यपादिमुनीश्वराः** कश्यप आदिः येषां ते कश्यपादयः ते च ते मुनयश्च कश्यपादिमुनयः । सप्त ते ईश्वरा येषां ते तथा, यद्वा **ऋषयः** सत्यवचसः अतीतानागतज्ञा वा, मुनीनामीश्वराः तथा कश्यपादयश्च ते मुनीश्वराश्च तथा इति वा । **सर्वे ऋषयः जाह्नवीतीरे द्विजाः** अपि अनेकबुद्धयोऽपि अस्मिन्यज्ञे बहुभिः दीयमानं न्यायार्जितं यज्ञीयं द्रव्यं बह्वल्पमिति न विवादः । किं वा भवतु सर्वथा कार्ये दृष्टिः इति । **सन्तोषात्** सन्तोषमवलम्ब्य । यद्वा, येषां आप्तव्यं नाप्तमिति असन्तोषो नास्ति तथापि देशकालद्रव्यदैवानुगुण्यातिशयं दृष्ट्वा प्राप्तानां ज्ञानादीनां समृद्धिरस्त्विति सन्तोषादित्यर्थः । **सुमखं** – सु = सात्त्विकं, मोक्षसाधनज्ञानभक्तिवैराग्यसमृद्धिहेतुं मखं = सत्रयागम्, **चक्रिरे** = चक्रुः । "ऋद्धिकामाः सत्रमासीरन्" इति विधेः । षड्भागसुकृतलोभानाम् अप्रतिग्रहाणां नीवारकुल्माषाद्यारण्यकधान्यानां ऋषीणामेकस्य बहुधनसाध्यमखपर्याप्तधनाभावात् प्रायः सत्रयागं कुर्वीरन्निति उपपत्त्या मखं चक्रिर इति बहूनां कर्तृत्वोक्त्या चात्र मखशब्दः सत्रपरः ।

ननु "फलार्थित्वात्तु कर्मणः शास्त्रं सर्वाधिकारं स्यात्" इत्यधिकरणे "सोऽधिकारः किं साङ्गकर्मानुष्ठानासमर्थानां तिरश्चां ऋषिदेवान्धबधिरमूकपङ्ग्वादीनामपि उत समर्थानामपि" इत्यादि संशयपूर्वकोटौ ऋष्युदाहरणविरोध इति चेन्न । ऋषीणां पूर्वऋष्यादिवरणादस्त्येव अधिकार इति ऋष्युदाहरणं चिन्त्यमित्युक्तत्वात् ।

**मूलम्**

**तस्मिन्काले मुनिश्रेष्ठो नारदो मुनिसत्तमः ।**
**उवाच वचनं [1]तेषां ................................**

१. विप्रान् ।

**कल्याणकाण्डदीपः**

यत्कामा ऋषयः सत्रमासत तदर्थं हरिप्रेरितो नारदः तेषां तत्त्वावबोधाय तेषामेव मतमवलम्ब्य पूर्वोत्तरपक्षक्रमेण पृच्छतीत्याह— **तस्मिन्निति** । **तस्मिन्काले** मखानुष्ठानसमये । **मुनिसत्तमो नारदः** सदस्यान् मुनिश्रेष्ठान् प्रति । तेषां जैमिन्यात्रेयौडुलौमिबादरायणादीनां सिद्धान्तसम्बन्धिवचनमुवाच ।

मूलम्

................................ किमर्थं यज्ञमुत्तमम् ॥ ७॥

[1]के भुञ्जते यज्ञफलं को वा ध्येयः सुरोत्तमः ।
कृतं यज्ञफलं यस्य अर्प्यते मुनिसत्तमाः ॥ ८॥

१. को भुङ्क्ते यज्ञसुफलं को वाऽध्वर्युश्च देवताः ।
कृतं यज्ञफलं कस्य चार्प्यते मुनिपुङ्गवाः ॥

कल्याणकाण्डदीपः

किं तद्वचनमित्यत आह— **किमर्थम्** इत्यादिना **मुनिसत्तमा** इत्यन्तेन । हे मुनिसत्तमाः राजसस्तामसो वा यज्ञस्तावदस्तु ''अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यत'' इत्याद्युक्तमुत्तममपि यज्ञं किमर्थं कस्मै प्रयोजनाय यष्टारो यजन्ते । इयं क्रिया गम्यमाना अपि कारकविभक्तौ प्रयोजिका । तथैव न्यायो(न्यासो)पेतवचनात् । किमर्थमित्याक्षेपः । न किमपि प्रयोजनमित्यर्थः ।

यद्यस्ति प्रयोजनं तर्हि षट्कोट्यालम्बनं प्रश्नं करोति **के भुञ्जते इति** । समर्थासमर्थसाधारण्येन फलार्थिनः सर्वे तिर्यग्व्यङ्गदेवा अपि, साङ्गकर्मानुष्ठानसमर्था मानुषा एव, ऋत्विजोऽपि, धर्ममहीपाला अपि, देवा एव, समर्था अर्थिनः सर्वेऽपीति तत्सिद्धान्तन्यायतः प्राप्तानां एषां के यज्ञफलं कर्मजा पूर्वपरिपाकफलं भुञ्जते ''भोगोपभोगात्मसात्करणेषु भुजो नवन'' इत्यात्मनेपदम् इति षट्कोट्यालम्बी एकः प्रश्नः । ''को भुञ्जते'' इति पाठे एकवचनं बहुत्वे । यद्वा, भुजीति इदितो धात्वन्तरस्येदं शपि-रूपमेकवचनम् । अथवा ''कः कालपाशमासज्य कण्ठे मोहान्न जानते'' इतिवत् बहुवचनम् आर्षम् । को भुङ्क्ते यज्ञफलम् ? ब्रह्मा वा हरो वा हरिर्वेति । स्पष्टोऽर्थः ।

अस्मिन्पक्षे उत्तरवाक्यद्वयस्यैव प्रपञ्चः । यद्येको देवः सर्वान्तर्यामी इति मुख्यं मतं तदा पृच्छति— **को वा ध्येय इति** । सर्वान्तर्यामितया भोक्तृत्वेन ध्येयः सुरोत्तमः को वा । हिरण्यगर्भो वा हरो वा हरिर्वा इति त्रिकोट्यालम्बी द्वितीयः ।

को वा ध्येय इति द्वितीयं प्रश्नं स्वयमेव व्याख्याति— **कृतमिति** । **कृतं** निष्पन्नं यज्ञफलं यस्यार्प्यते यद्देवत्रा क्रियते हिरण्यगर्भत्रा वा हरत्रा वा हरित्रा वेत्यर्थः । यस्य अर्प्यत इति ''सन्ध्यभावो वाक्ये तु सविवक्षामपेक्षित'' इति वचनात् साधुः । आर्षत्वाद्वा । भोग अदनपानादिः अन्नादेः उपभोगः । स्रक्चन्दनवनितादीनां धारणाद्यर्चनालोकनादिः अन्यदीयस्य कालान्तरयो(भो)ग्यस्य

पालनाय आत्माधीनतया स्थापनम् आत्मसात्करणम् । किमर्थमित्याक्षेपे ''द्रव्याणां कर्मसंयोग'' इत्यधिकरणोक्तधात्वर्थस्यैव भाव्यत्वं पदश्रुत्या प्रतीयते ।

''स्वर्गादिः खलु वाक्येन श्रुतेः वाक्यं च दुर्बलम् ।
भूतं च स्वर्गपश्वादि द्रव्यं भव्याय कर्मणे ।
उपदेश्यं न भूताय भव्यकर्मेऽपि देशनम् ॥'' इति न्यायो हेतुः ॥

यद्यस्ति प्रयोजनमित्युन्नेयांशस्य

''पदश्रुतेर्बली यस्या विधिश्रुत्या हि भावना ।
अवरुद्धानयागादिभाव्यमालम्बितुं क्षमा ।
स्वर्गादिः कामनायोगात् फलत्वेनैव गम्यते ।
स्वरसात् पुरुषाणां हि कामनाफलगोचरा ॥''

इत्येतदधिकरणसिद्धान्तन्यायोन्नायकः । षट्कोट्यालम्बिप्रश्ने ''फलार्थित्वात् कर्मणः शास्त्रं सर्वाधिकारं स्यात्'' इत्यधिकरणोक्तेन

''तत्र प्रधानवाक्येन सर्वेषामधिकारधीः ।
जायते तद्वशेनाङ्गवाक्यानामुपवर्णनम् ॥''

इत्यादिनाद्यस्य प्राप्तिः ॥ १ ॥

''नैवाज्यावेक्षणादीनां पुरुषं प्रति चेतना ।
यतोऽसमर्थस्तच्छून्यं कर्मकृत्वाधिकारभाक् ॥''

इत्येतदधिकरणन्यायेन द्वितीयस्य ॥ २ ॥

''पुरुषार्थैकसिद्धत्वात् तस्य तस्याधिकारः स्यात्'' इत्युक्तन्यायेन ''आर्त्विज्यमित्यौडुलोमिः तस्मै हि परिक्रियते'' (ब्र.सू.३-४-४५) इत्युक्तन्यायाच्च आर्त्विजां प्राप्तिः ॥ ३ ॥

मरीचपादिमतात् धर्मः महीपालानाम् ॥ ४ ॥

''स्वामिनः फलश्रुतेरित्यात्रेयः'' (ब्र.सू.३-४-४४) इति न्यायात् देवानामेव इति प्राप्तम् ॥ ५ ॥

''सहकार्यन्तरविधिः पक्षेण तद्वतो विधानात्'' (ब्र.सू.३-४-४६) इत्यनेन षष्ठस्य ॥ ६ ॥

''गुहां प्रविष्टौ'' (ब्र.सू.१-२-११) इत्यादिना ''एको देवः'' (श्वेताश्व.) इत्यस्येति प्रकृतमनुसरामो ज्योग्जीवामः ।

**मूलम्**

**इति नारदवाक्यं तु श्रुत्वा ते मुनिपुङ्गवाः ।**
**संशयार्थं समापन्नाः कथमत्र विचार्यताम् ॥ ९ ॥**

**कल्याणकाण्डदीपः**

**इति नारदवाक्यं प्रश्नरूपं श्रुत्वा ते मुनिपुङ्गवाः संशयार्थं** यद्यपि नारदागमनं अज्ञानाद्यापदपहारि तत्त्वज्ञानादिसम्पत्कारि । नराणां इदं नारं अज्ञानादि । तत् द्यति खण्डयति ज्ञानोपदेशेनेति **नारदः** । तदुक्तं नारदीये—

"गायन् नारायणकथां सदा पापभयापहाम् ।
नारदो नाशयन्नेति नृणामज्ञानजं तमः ।
नरतीति नरः प्रोक्तः परमात्मा सनातनः ॥"

इति वचनात् नरः परमात्मा । तस्येदं नारम् । परतत्त्वविषयकं ज्ञानं तद्ददात्युपदिशति इति नामनिरुक्तेश्च । तथाऽपि संशयायेदं **संशयार्थं** "अर्थेन नित्यसमासो विशेष्यलिङ्गता च" इति वचनात् समासः । 'इदं जातम्' इति शेषः । अनेन वाक्येन विशेषदर्शनाभावसहकृतसाधारणधर्मवद्धर्मिणि विरुद्धनानाकोटिज्ञानजननात् तत्त्वसंशयायेदं जातमिति समापन्नाः नानाविधोपायचिन्ताव्याकुलचित्ततया मनोव्यथालक्षणापत्प्राप्ताः । "आपन्न आपत्प्राप्तः स्यात्" इत्यमरः ।

यद्वा, **संशयार्थं** संशयहेतुम् । अर्थशब्दो हेत्वर्थः । "अर्थः स्याद्विषये मोक्षे वस्तुहेतुनिवृत्तिषु" इति वैजयन्ती । विरुद्धनानाकोटिज्ञानं प्राप्ता इत्यर्थः । **संशयार्थं** इत्यस्यावृत्तिः । **संशयार्थं** संशयस्य अर्थः निवृत्तिः संशयार्थः । सोऽर्थः प्रयोजनं यस्य तत् तथा संशयनिवृत्त्यर्थम् । ननु संशयस्यार्थो निवृत्तिः यस्मादिति विग्रहं कुतो नाद्रियन्ते चिरन्तनटीकाकाराः ? इति चेन्न, अभिप्रायसद्भावात् । तथा हि "अप्रथमाविभक्त्यर्थे समानाधिकरणानां बहुव्रीहिरिष्यते" इति वचनात् समानाधिकरणबहुव्रीहावेवेष्टिः सूत्रकारादीनाम् । कथं तर्हि कण्ठेकालः चक्रपाणिः पद्मनाभः पद्मगन्धिः इत्यादौ व्यधिकरणबहुव्रीहिः इति चेत्, हलदन्तादित्यादिज्ञापकात् । न चैकत्रोक्तन्यायः । ज्ञापकसिद्धं न सर्वत्रेति परिभाषाविरोधात् । अन्यथा पञ्चभुक्त इत्याद्यपि बहुव्रीहिः स्यात् । हेतुः साध्याभाववदवृत्तिः इत्यादौ त्वगतिकागतिर्व्यधिकरणबहुव्रीहिः । न च अत्र तथेत्यतोऽर्थभेदे शब्दभेदं इति पक्षमाश्रित्य न्यायसिद्धया वृत्त्या समानाधिकरणबहुव्रीहिरेव आश्रयणीया इति । उक्तं च इदं श्रीमद्विजयीन्द्रतीर्थ-श्रीमच्चरणैरिति ।

केचिदत्र एतत्संशयनिवृत्तिविषये कथं कर्तव्यमिति वचनमूचुः । एतत्संशयनिवृत्तिः केनोपायेन स्यादिति वचनाभिप्रायः । केचिद्विचार्य तामित्यूचुः । वाद आरभ्यतामित्यभिप्रायः । एवं विचारे प्रचरति सति एष विमर्शो जातः । बहवो हिरण्यगर्भाः हिरण्यगर्भतः सन्ति । तदर्थाः शैवा शिवतः । केचिदेव पाञ्चरात्रिका विष्णुतः । एवं च वादः कालेन पच्यते । यज्ञकालो विलम्बते । भाजक् तत्त्वनिर्णयः कथं स्यात् ?

> "विचक्षणवतीं वाचं वदेच्चक्षुर्वै विचक्षणं विद्धचेते न पश्यतीत्येतद्ध वै मनुष्येषु सत्यं निहितम् । यच्चक्षुस्तस्मादाचक्षाणमाहुरद्रागिति । स यद्य-दर्शमित्याहाथाहास्य श्रद्दधाति यद्यु वै स्वयं पश्यति न बहूनां च नान्येषां श्रद्दधाति । तस्माद्विचक्षणमेव वाचं वदेत् । सत्योत्तरा हैवास्य वागुदिता भवति भवति ।"

इति श्रुतेः । श्रुतामनुमितामपि शीतां प्रत्यक्षतस्तां पुनरेव दृष्ट्वेत्यादिना महदाचाराच्च सिद्ध-प्राबल्यवत् प्रत्यक्षप्रमाणंसिद्धेनैव हेतुना स्यादिति ।

**मूलम्**

**सम्मिलित्वा तदा सर्वे भृगुं ब्रह्मविदां वरम् ।**
**तमूचुर्भक्तिनम्राङ्गाः कृताञ्जलिपुटाः स्थिताः ॥ १० ॥**

**कल्याणकाण्डदीपः**

ततः किमभूत् ? इत्यत आह— **सम्मिलित्वेति** । **तदा** अनवस्थितनानाविधवचनसमये **सर्वे** मिलित्वा, ऐकमत्यं प्राप्य **ब्रह्मविदां वरं भृगुम्** उपसङ्गम्य तं प्रति **भक्तिनम्राङ्गाः**, भक्ति-भरेणानतशरीराः, **कृताञ्जलिपुटाः** भूत्वा स्थिताः सन्तः वक्ष्यमाणवचनमूचुः ।

**मूलम्**

**गच्छ शीघ्रं महाबुद्धे परं वेत्तुं सुरोत्तमम् ।**
**इति तेषां वचः श्रुत्वा भृगुः कञ्जजमन्दिरम् ॥ ११ ॥**

**कल्याणकाण्डदीपः**

वचनप्रकारमाह— **गच्छेत्यादिना** । हे **महाबुद्धे** ! अत्यन्तनिश्चितमते मुने, **परं** परम-पराध्यरसतमम्, **सुरोत्तमं** देवश्रेष्ठं, **वेत्तुं** निश्चेतुं विघ्नब्रध्नादि बालशङ्कितान् विहाय हरिहरहिरण्यगर्भेषु

क उत्तम इति निश्चेतुं यथोचितं लोकान् शीघ्रं गच्छ इति योजना । अत्र विप्रतिपन्नजनबाहुल्या-बाहुल्याभ्यां मुनेर्लोकगमनपौर्वापर्यं बोध्यम् । तथा च सत्यं जगामेत्याह— **इति तेषामित्यादिना** । 'जगाम' इति शेषः ।

### गूढकर्तृकव्याख्यानम्

सत्यवादिनः त्रैकालिकज्ञानिनः कश्यपादिमुनीश्वराः गङ्गातीरे सात्त्विकमुक्तिसाधकज्ञानभक्ति-वैराग्यहेतुना सत्रयागं चक्रिरे । यदुद्देशेन यागं चिकीर्षवः तदर्थं हरिप्रेरितो नारदमुनिः मुनिमण्डले प्राप्तः । ततः जैमिनि-औडुलोमि-आत्रेयप्रभृतिमुनीनां आशयं अधिकृत्य प्रश्नयति— मुनिवराः ! भवन्तः यज्ञानुष्ठातारो दृश्यन्ते । यज्ञः किमुद्देश्यकः ? यज्ञः उत्तमो मध्यमो वा ? सात्त्विको राजसो वा ? सात्त्विकश्चेत् केन अनुसन्धानेन यागः कार्यः ? यज्ञफलं कः भुङ्क्ते ? यज्ञफलं कस्मै समर्प्यते ? अत्र यज्ञे सर्वोत्तमत्वेन यज्ञभोक्तृत्वेन कं भावितवन्तः ? इत्यादिकं पप्रच्छ । अत्र नारदागमनं किं हेतुः ?

"नरतीति नरः प्रोक्तः परमात्मा सनातनः ।" नरस्य इदं नारं - परतत्त्वज्ञानम्, तत् ददातीति नारदः । नरस्य इदं नारम्, अज्ञानं द्यति खण्डयति इति नारदः । भ्रान्तिसंशयाख्य-अज्ञानं निवार्य यथार्थज्ञानदायकः भगवत्कार्यसाधकः नारदः ॥

प्रकृते मुनीनां अज्ञाननिवारकत्वात् विष्णुसर्वोत्तमत्वज्ञानदानजनकत्वात् नारदागमनं सार्थकम् । नारदप्रश्नमाकर्ण्य सर्वेषां विधिर्वा हरो वा हरिर्वा कः सर्वोत्तमः ? यज्ञफलं कस्मै अर्पणीयम् ? इति स्वेषु स्वेषु मिथः सम्भाषमाणाः मिलितसभायां केचित् हिरण्यगर्भमतीयाः केचित् शिवतः वदन्ति शैवाः । केचित् पाञ्चरात्रिकाः वैष्णवाः विष्णुतो वदन्ति । एवं च वादे, वादे सति किं साध्यते ? एवं वादः पञ्च... कालेन । यज्ञकालो विलम्ब्यते । एवं कृते तत्त्वनिर्णयः कथम् ? इति पृच्छन्ति । किमपि निर्णेतुं अनिर्णेतुं वा अशक्ताः अन्ते ऐक्यमतेन सर्वे ब्रह्मज्ञानिषु श्रेष्ठः भृगुमुनिः एव एतत्संशयवारक इति मत्वा सर्वे तं भयभक्त्या आनम्य अञ्जलिबन्धं कृत्वा, "भो निश्चितमते ! महामुने ! यज्ञफलस्वीकारे परात्परं वस्तु निर्णेतुं त्वमेव शक्तः, नान्यः । अतः द्रुतं एतत् दयया निर्णीयताम्" इति विज्ञापयामासुः ।

**मूलम्**

**तत्र [1]दृष्ट्वाऽष्टबाहुं तं साक्षाद्ब्रह्माणमग्रजम् ।**
**चतुर्मुखमुदाराङ्गं सरस्वत्याऽनुसेवितम् ॥ १२ ॥**

१. दृष्ट्वा महाबाहुं ।

**कल्याणकाण्डदीपः**

**अग्रजम्** अग्रजन्मानम्, अनेन मदहेत्वभिजन उक्तः ।

**मूलम्**

**चतुरास्यसमुद्भूतवेदघोषविराजितम् ।**
**दिशां पालगणैः सार्धं किरीटमकुटोज्ज्वलम् ॥ १३ ॥**

**स्तुवन्तं जगदीशानं नारायणमनामयम् ।**
**तं नत्वा भक्तिभावेन मददीप्त्या विराजितम् ॥ १४ ॥**

**कल्याणकाण्डदीपः**

**चतुरास्यसमुद्भूतवेदघोषविराजितम्** अनेन मदनिदानभूता विद्या उक्ता । "अपां पतिः" इतीव "दिशां पाला" इति दिक्पालानां वाक्यं नाम । दिशां पालगणैः सार्धम् इत्यनेन मदबीजं धनमुक्तम् । तथा चेत्थं योजना । तत्र कञ्जजमन्दिरे दिशां पालगणैः सार्धम् अनामयं जगदीशानं नारायणं स्तुवन्तं चतुरास्यसमुद्भूतवेदघोषविराजितं, **किरीटमकुटोज्ज्वलं** किरीटान्येव मुकुटानि तैरुज्ज्वलं, मकिमण्डने "मकेरुटन्नलोपश्च" इत्यनेनोटन् । यौगिकोऽयं भूषणसामान्यार्थः । तथा च किरीटभूषणोद्भासित-मित्यर्थः ॥ १ ॥

यद्वा, उत्तरपदे मुकुटशब्दः श्रेष्ठवाची । किरीटेषु मुकुटाः श्रेष्ठाः । तैरुज्ज्वलं श्रैष्ठ्यं च नाराय-णाङ्क्योः । अन्यत्र अनग्रत्वं स्युः । उत्तरपदे " ...... व्याघ्रपुङ्गवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थवाचकाः" इति अमरोक्तेः । 'विद्वन्मुकुटः' इत्यादिप्रयोगाच्च ॥ २ ॥

अथवा किरीटपदेन चैनोर्णकार्पासादि मृदुशिरोवेष्टान्युच्यन्ते । "किरीटं शिरोवेष्टनम्" इति कौमुद्युक्तेः । मुकुटशब्देन अनर्घ्यनिकररत्नखचितानि कमलकुड्मलाद्याकाराणि मण्डनभूतानि कमल-कलशान्युच्यन्ते । तथा च किरीटानामुपरितनानि किरीटोपरितनानि, तानि च तानि मुकुटानि च किरीटमुकुटानि इत्युत्तरलोपी । तैरुज्ज्वलम् ॥ ३ ॥

अथ च चत्वारि किरीटानि तेषां यन्मुकुटं मण्डनीभूतं पञ्चमशिरोऽध्यधिक्षिप्तं किरीटं तेनो-ज्ज्वलम् ॥ ४ ॥

किञ्च, किरीटानां उपर्यपि यानि मुकुटानि वैशिष्ट्यनिमित्तानि तैः उज्ज्वलम् ।

*अयं भावः*— देवानां मूर्धानः किरीटिनः मुक्तियोग्यजीवोत्तमत्वात्, ब्रह्मणस्तु किरीटा अपि सर्वजीवोत्तमत्वात्, हरेस्तु किरीटकिरीटोऽपि किरीटी सर्वोत्तमत्वात्। ब्रह्मणो द्विबन्धुर (हरेस्तु त्रिबन्धुर) इति यावत् ॥ ५ ॥

**सरस्वत्याऽनुसेवितम्, उदाराङ्गं, चतुर्मुखम्, अष्टबाहुम्,** साक्षाद्धरेः अग्रजम्, अग्रजन्मानं च तं प्रसिद्धं ब्रह्माणं दृष्ट्वा । **मददीस्या विराजितम्** । हर्षमोहसङ्करो मदः, श्रुतधनकुलकर्मजः तस्य दीप्तिरुत्कर्षः, तया विराजितमपि विगतौचित्यमपि । यद्यपि मदोन्मत्तं नाभिवादयेत् तथापि भक्तिभावेन तं नत्वा स्तुत्वा प्रणनाम इति शेषः । विपर्ययेण वेति ।

### मूलम्

**पातयामास कायं स्वं पुरतः कञ्जजन्मनः ।**
**पतितं स भृगुं दृष्ट्वा नोवाच वचनं विधिः ।**
**तं मत्वा किञ्चिदज्ञानमाश्रितं स ऋषिर्ययौ ॥ १५ ॥**

### कल्याणकाण्डदीपः

**पतितमिति । विधिः** हरिचित्तविधानज्ञः । स ब्रह्मा प्रणतमपि भृगुं दृष्ट्वा **न** किञ्चिदपि वचन- मुवाच । **तमिति** । **तं** तूष्णीभूतं ब्रह्माणं मत्वा **किञ्चित्** ईषत् **अज्ञानं** कर्तृत्वमाश्रितं मत्वा । यद्वा, "कर्म द्वितीयाश्रिते"ति द्वितीया । अज्ञानमाश्रित्य अङ्गीकृत्येव वर्तमानम् अयम् ईषदज्ञानवान् कर्तव्याकरणादिति अनुमया मत्वा "नायं सर्वोत्तमः अज्ञानात्" इत्यनुमाय **स ऋषिः ययौ** निर्ययौ । 'तल्लोकात्' इति शेषः ।

### मूलम्

**अलब्ध्वा स्वात्मनः कार्यं कैलासं स ऋषिः ययौ ॥ १६ ॥**

### गूढकर्तृकव्याख्यानम्

एवं आत्मनि मुनिषु विज्ञापितवत्सु मुनिषु सुप्रसन्नः भृगुः तद्वचनं अङ्गीकृत्य पूर्वं पूर्वं अज्ञाना- धिकलोकान् उत्तरं उत्तरं अज्ञानन्यूनलोकान् उद्देशनिर्णयाय गच्छेदिति मनसि कृत्वा आदौ विधि- गृहसत्यलोकं ययौ । तत्र अग्रजन्मानं विधिं ददर्श । कीदृशम् ? उन्नतकायविशिष्टम्, चतुर्मुख- अष्टबाहुविशिष्टं, चतुर्मुखैः वेदान् घण्टाघोषं पठन्तम्, इन्द्रादि-अष्टदिक्पालकसेव्यमानम् । किरीटोपरि किरीट इत्येवं किरीटद्वयविशिष्टलाञ्छनविराजितम्, भार्यासरस्वतीसेव्यम्, सकललोकैकनाथज्ञाना-

नन्दादिकल्याणगुणपूर्णचिन्तासन्तापादिदोषवर्जितश्रीनारायणं कीर्तयन्तं रुद्रेन्द्राद्यधिकगुणज्ञानतेजो-दीप्यमानं ददर्श। तं च प्रणनाम। तथाऽपि भृगुं दृष्ट्वाऽपि विधिः नैवावदत्। मत्त इव दृष्टः। अयं विधिः अग्रजन्मेति कुलमदः सत्यलोकाधिपतिः दिक्पालकसेवित इति ऐश्वर्यमदः, सरस्वतीसेवित इति स्त्रीमदः, चतुरास्यसमुद्भूतवेदघोषविराजित इति विद्यामदः, विश्वस्रष्टेति अधिकारमदः, उदाराङ्गचतुर्मुखः अष्टबाहुः किरीटमुकुटोज्ज्वल इति रूपमद इत्येवं मदमोहरूप-अज्ञानवान्। अत एव उत्तमो नेति मत्वा सत्यात् निर्ययौ।

**मूलम्**

**कैलासगिरिमासाद्य तत्र दृष्ट्वा त्रिलोचनम्।**
**कामुकं पार्वतीसार्धं क्रीडन्तं निजमन्दिरे ॥ १७॥**

**तस्मिन् काले तमायान्तं नाजानात् कामुको हरः।**
**आगतं सा मुनिं दृष्ट्वा पार्वती लज्जयाऽवदत् ॥ १८॥**

**कल्याणकाण्डदीपः**

**कैलासेति**। स ऋषिः कैलासगिरिम् आसाद्य **निजमन्दिरे** काममन्दिरे **पार्वतीसार्धं** पार्वत्या सार्धं पार्वतीसार्धम्। निपातोत्तरपदः। 'सुप् सुपा' इत्यनेन समासः। तदुपरि यत्कृते सर्वं पश्चात् इत्यादिवत्। यद्वा, पार्वतीति भिन्नं, टाप्रत्ययस्य सुर्वा लुग्वा पूर्वसवर्णो वा पार्वत्येत्यर्थः। यद्वा, पार्वत्या अर्धेन सह वर्तत इति पार्वतीसार्धः, तं सहस्य मध्यनिपातः। अर्धनारीश्वरं क्रीडन्तं कामुकमुत्कटेच्छा-युक्तं **दृष्ट्वा** स्तुत्वा। 'ननाम' इति शेषः।

**मूलम्**

**त्यज शीघ्रं महाबाहो आगतो मुनिपुङ्गवः।**
**इति तस्या वचः श्रुत्वा क्रोधात्ताम्रविलोचनः ॥ १९॥**

**[1]तं हन्तुमाद्रवच्छीघ्रम् ऋषिशापनिराकृतः।**
**शशाप स ऋषिः शम्भुं लोके त्वं नैव पूज्यसे ॥ २०॥**

१. हन्तुमभ्यद्रवत् शीघ्रं ऋषिः शापान्निराकरोत्।

**कल्याणकाण्डदीपः**

**क्रोधात्ताम्रविलोचनः** । वधादिपर्यन्तं क्रूरजनाश्रयाग्नःप्रज्वलनेन अरुणीकृतविषमलोचनः काममिव तं हन्तुं शीघ्रं आद्रवत् । **ऋषिशापनिराकृतः** । ऋषेः शापेन आक्रोशेन महादेव इति भक्तिभावेन आगताय मह्यं कथं द्रुह्यसीति विरुद्धानुरुद्धचेन न **निराकृतः** निवृत्तोऽभूदित्यस्ति । **शशापेत्यादि** । सः ऋषिः शम्भुं ब्रह्माणं "लोके त्वं नैव पूज्यसे" इति । **शम्भुम्** ईशानम् ।

**मूलम्**

**त्वच्छिश्नपूजनेनैव लोके ख्यातिं गमिष्यसि।**
**इत्युक्त्वा स ऋषिश्चागाद्वैकुण्ठं हरिमन्दिरम् ॥ २१ ॥**

**कल्याणकाण्डदीपः**

**त्वच्छिश्नपूजनेनैव** त्वच्छिश्नाकारलिङ्गार्चनेनैव । **लोके** मानुषे ख्यातिं गमिष्यसीति । "शम्भू ब्रह्मत्रिलोचनौ" इत्यमरः । शापप्रसङ्गादुभावपि शप्तवानिति भावः । ब्रह्मकृतौदासीन्येनाङ्कुरितो ऋषे रोषात् रुद्रद्रोह मेदुरीकृत इदानीं फलित इति भावः । इत्थमपि काचन रीतिः पुराणादौ दृष्टः । 'शम्भुम्' इति पाठे लोकैः त्वं स्फुटं स्फटिकेत्याद्युक्तवपुषा नैव पूज्यसे । परन्तु लिङ्गपूजनेनैव **ख्यातिं** प्रसिद्धिं इत्यर्थः ।

ततो मुनेरेष विमर्शो जातः । "ननु विमृश्य कृती कुरुते" इत्युक्तेः । न च भृगोर्विमृश्यकरण-विरोधः । तस्य रोषदशाविषयत्वात् । तत् किं वा भवत् स च कीदृशो विमर्शः । तथा हि । ब्रह्मा मां भक्त्या प्रणतं न किञ्चिद् उवाच । रुद्रो मह्यं दुद्रोह । विष्णुः यद्यपि मां दृष्ट्वा मदुचितसत्कारं कुर्यात्, तथाऽपि न तावता सर्वोत्तमत्वसिद्धिः । किन्तु, यदि मया महाद्रोहेन द्रुह्येत् तर्हि सा स्यात् । अतः कथं मम महाद्रोहघटना तत्परीक्षानुकूला स्यादिति । अतः सर्वज्ञो हरिः एतदागमनकाले शेत इवादृश्यत इति भावः ।

**मूलम्**

**[1]तत्र गोपुरसाहस्रतोरणादिविराजितम्।**
**चतुर्दिक्षु चतुर्द्वारपालकैरुपशोभितम् ॥ २२ ॥**

---

१. प्राकारगोपुरद्वारनवतोरणभूषितम् ।

**तत्र शय्यागृहे दिव्ये [1]रमासार्धं रमापतिः ।**
**लक्ष्म्या समेतं देवेशं ददर्श स भृगुस्तदा ॥ २३ ॥**

१. शेषमञ्चकशायिनम् ।

**कल्याणकाण्डदीपः**

**रमासार्धम्** 'अशेते' इति शेषः । आङ् पूर्वसवर्णः ।

**गूढकर्तृकव्याख्यानम्**

तदा स भृगुः सत्ये अकृतकार्यः तं त्यक्त्वा हरावासं कैलासमाययौ । तत्र हरं स्वविलासगृहे कामातुरं सत्या सत्या क्रीडन्तं अपश्यत् । स्तोत्रेण स्तुत्वा प्रणनाम । तथाऽपि कामक्रीडासक्तचित्तः भृगुं नाजानात् हरः । अपि तु सती भृगुं आगतं दृष्ट्वा अतिलज्जिता क्षणात् पतिं हरं "भो नाथ ! महाबाहो ! मुञ्च मुञ्च मां लघु । पश्य ! मुनिवरः प्राप्तः" इति अबोधयत् । सतीवचनं आकर्ण्य हरः असमये दर्शनाय प्राप्तः इति भृगुं अपराधिनं मत्वा अतिक्रोधेन रक्तीकृतनेत्रः तं मन्मथमिव क्षणे हन्मि इति शीघ्रं अभ्यद्रवत् । तदा भृगुः विषमनेत्र ! त्वं असमीक्ष्यकारी । तत्त्वं अजानन् भक्तिभावेन आगतं मां हन्तुं असि खलु । अतः त्वां अद्य शपामि । त्वं शिश्नपरायणः । इतः मर्त्यलोकः तव लिङ्गमेव अर्चयन् अस्तु । तव शिश्नपूजनेनैव लोके ख्यातिरस्तु । स्फुटं स्फटिकसप्रभां तव मूर्तिं नैवार्चतु इति शप्त्वा, एतत् शापावसरे विधिं च शशाप । विधिकृत-औदासीन्यद्रोहेण भृगोः रोषः अङ्कुरितः । रुद्रकृतद्रोहेण मेदुरीकृतः । विधिं "त्वां लोकः भुवि नैवार्चतु" इति शप्त्वा भृगुः कैलासेऽपि अकृतकार्यः श्रीहरिनिलयं वैकुण्ठं तत्र कार्यं सुमुखं स्यादिति धिया ययौ ।

वैकुण्ठः कथं दृष्टः ? वैकुण्ठो नाम "मया संश्लेषिता भूमिरद्भिर्व्योम च वायुना । वायुश्च तेजसा सार्धं वैकुण्ठत्वं ततो मम" इति महाभारतशान्तिपर्वणि । श्रीहरिः विकुण्ठानामकवनितायां अवतीर्य सुन्दरीनामकलक्ष्मीप्रीत्यर्थं श्वेतद्वीपे, पृथिवी आपः तेजः वायुः आकाशं च पञ्चभूतानि संश्लेष्य, वैकुण्ठपुरं निर्ममे । वैकुण्ठनामकहरेः आवासत्वेन वैकुण्ठ इति नाम । अयं वैकुण्ठः नानाप्रकारैः गोपुरैः तोरणैः शोभितः । वैकुण्ठस्य चतुर्द्वारेषु क्रमात् "पूर्वद्वारे जयविजयौ, दक्षिणद्वारे बलप्रबलौ, पश्चिम-द्वारे नन्दसुनन्दौ, उत्तरद्वारे कुमुदकुमुदाक्षौ" इति चतुर्भुजशङ्खचक्रगदादिधरवैष्णवाङ्कितद्वारपालकैः शोभितः । तत्र वैभ्राजकं नाम उद्यानम् । सर्वेष्टदबहुकल्पवृक्षाः । चिन्तितार्थदा चिन्तामणिः । ससन्ताना कामितदा कामधेनुः । अमृतापाः विद्रुमसोपानाः मुक्तासिकता वाप्यः । सदा मधुस्रावक-अश्वत्थाः ।

पारावत-परभृतशुकसारसहंसबर्हितित्तिरिमुखाः वैकुण्ठं गायन्ति, भ्रमन्ति, नवमणिखचितहेमविमाना-रूढमुक्ताः सस्त्रीकाः स्वैरं चरन्ति । वैकुण्ठं परिगता विरजा । श्रीशगृहपरितः अष्टौ वीथ्यः समचतुरस्राः । सप्त-अष्ट-भौमयुतविष्णुभक्तगृहाणि । वैकुण्ठवासि सर्वे विष्णुसरूपाः । सदा विष्णुध्यानैकपराः । तद्वीथीषु मध्ये सप्तकक्ष्यायुतं तदालोडितसहस्रसहस्रांशुसमप्रभं

"उत्तप्तोज्ज्वलकाञ्चनेन रचितं तुङ्गाङ्गरङ्गस्थलं
शुद्धस्फाटिकभित्तिकाविलसितैः स्तम्भैश्च हेमैः शुभैः ।
मुक्ताजालविलम्बिमण्टपयुतं वज्रैश्च सोपानकैः
नानारत्नविभूषितैश्च सकलैः शोभावहैर्मण्डितम् ॥

द्वारैश्चामररत्नराजिखचितैः शोभावहैर्मण्डितं
रत्नाग्रैरपि शङ्खचक्रधवलैः प्रभ्राजितं स्वस्तिकैः ।
माणिक्योज्ज्वलदीपदीप्तिविलसल्लक्ष्मीविलासास्पदं
ध्यायेन्मण्डपमर्चनेषु सकलेष्वेवंविधं साधकः ॥

सम्मार्जनै रङ्गवल्लीध्वजकेतनतोरणैः ।
वितानैरिसुकदलीपूर्णकुम्भाङ्कुरादिभिः ।

इत्याद्युक्तनानालङ्कारैः अलङ्कृतम् ।

गीतवाद्यादिनृत्यैश्च पुराणपठनादिभिः ।
शोभमानं महापुण्यं वर्धनं सुमनोहरम् ॥

श्रीवैकुण्ठमन्दिरं भृगुः प्रविवेश । तत्र श्रीशं ददर्श । श्रीहरिः तत्र कथं दृष्टः । विधि-शेष-गरुड-[१]रुद्रइन्द्रादि सकलदेवगणसेव्यमानः लक्ष्मीधराश्लिष्टः विमिताख्यपर्यङ्के शेषशयने शयितः नीलनीरद-निभदेहकान्तिः उदाराङ्गः चतुर्भुजः शङ्खचक्रगदापद्मपाणिः वनमाली श्रीवत्सलाञ्छनः कौस्तुभधारी पीताम्बरः अभयहस्तः प्रसन्नमुखनेत्रारविन्दः कटिकाञ्चीकर्णकुण्डलभुजकेयूरपादमञ्जीरकरवलयशिर-स्त्रिबन्धुरकिरीटध्वजवज्राङ्कुशपद्मचिह्नितपादद्वात्रिंशल्लक्षणोपेतः योगनिद्रानिमीलितनयनः सन् दृष्टः ।

१. रुद्रस्य चत्वारिंशत्कल्पतया दशकल्पकालपर्यन्तरं तपः कृत्वा शेषो भूत्वा तत एव वैकुण्ठगमनमिति प्रसिद्धिः, अत एव तत्र तस्याभावः ।

मूलम्

तताडोरसि गोविन्दं भृगुः पादतले नतम् ।
ताड्यमानो हरिः साक्षादुत्थाय [1]ऋषिपुङ्गवम् ॥ २४ ॥

पपात [2]पादयो भक्त्या ऋषिपादसरोरुहे ।
[3]आलिलिङ्गेति भक्त्यैव [4]उवाच ऋषिपुङ्गवम् ॥ २५ ॥

१. विनयान्वितः । २. परया ।
३. आलिलिङ्गेऽथ । ४. चोवाच हरिपुङ्गवम् ॥

भृगुं प्रति श्रीवैकुण्ठनाथोक्तविनीतवचनम्

श्रीभगवानुवाच—

किमर्थं त्वं ऋषिश्रेष्ठ मच्छरीरं [1]कठीणकम् ।
अमृतं [2]चाजरायुक्तमच्छेद्यं [3]देवमानुषैः ॥ २६ ॥

१. कठोरकम् । २. त्वजरा- । ३. देवमानवैः ।

[1]वज्रादष्टगुणं विद्धि मच्छरीरं द्विजोत्तम ।
किमर्थं ताडितं विप्र कोमलाङ्घ्रितलेन तत् ॥ २७ ॥

१. वज्राद् दृढतरं ।

पादौ ते कोमलौ दिव्यौ मच्छरीरसमागमात् ।
कियद्दुःखं समापन्नौ न जानामि द्विजोत्तम ॥ २८ ॥

इत्युक्त्वा द्विजपादौ तौ प्रक्षाल्योष्णोदकेन वै ।
दधार शिरसा तोयं [1]विप्रपादोदकं शुभम् ॥ २९ ॥

१. विप्रपादोद्गतं शिवम् ।

सगृहः सकुटुम्बश्च सर्वलोकं विडम्बयन् ।
विबुधा दर्शनेनैव पुनन्ति च जगत्त्रयम् ॥ ३० ॥

## गूढकर्तृकव्याख्यानम्

भृगुर्यदा आगतः हरिः निद्राविहीनोऽपि निद्रां चकार । कुतः ? स्वस्य सर्वोत्तमत्वपरीक्षायै भृगुरागच्छति इति सर्वान्तर्यामी हरिः मत्वैव अविदितवान् इव भृगुद्वारा स्वसर्वोत्तमत्वं भृगुव्याजेन आविष्क्रियतां इति रमासहितं शयनं विडम्बयामास । एवं हरौ शयिते भृगुः दृष्टवान् । तदा विधिहरौ यथा हरिं नैवास्तौत् नापि अनंसीत् अपि तु तं वेदप्रतिपाद्यं गोविन्दं उपागम्य रमालिङ्गिते तदुरसि स्वपादतलेन तताड । ततः हरिः किमकरोत् ? क्षणात् महतां समागम इति प्रत्युत्थाय "नमो ब्रह्मण्य-देवाय गोब्राह्मणहिताय च । जगद्धिताय कृष्णाय गोविन्दाय नमो नमः" इत्युक्तेः गोब्राह्मणहितः ब्रह्मण्यदेवः हरिः "ब्राह्मणो मम देवता" इत्यादिकं अनुसन्दधत् माहात्म्यज्ञानपूर्वकसुदृढस्नेहरूपभक्त्या विशिष्टः विनीतः भृगुपादयोः प्रणनाम ।

तं मुनिं देहेन आलिलिङ्ग । ततः तं प्रति "मुनिवर्य ! मम शरीरं वज्रादपि दृढतरं देवदानवादि-सकलजगतोऽपि अभेद्यम् । जरामृतिरहितम् । ईदृशमद्वपुः कुतः ताडितवान् । तव पादौ तु अति-कोमलौ । अतिकठिणमदुरस्ताडनेन कियती व्यथा तव पादयोः जातेति परितपामि" इति वदन् मुनि-वरपादौ उष्णोदकेन "ॐ अस्मिन् राष्ट्रे श्रियमावेशयाम्यतो देवीः प्रतिपश्याम्यापः । दक्षिणं पादमवने निजेऽस्मिन् राष्ट्र इन्द्रियं दधामि । सव्यं पादमवने निजेऽस्मिन् राष्ट्र इन्द्रियं वर्धयामि । पूर्वमन्यमपरमन्यं पादावनेनिजे देवा राष्ट्रस्य गुप्त्या अभयस्यावरुध्यै । आपः पादावनेजनीर्द्विषन्तं निर्दहन्तु मे" इत्यादि अनुसन्धाय प्रक्षाल्य विप्रपादविनिर्मुक्तं तोयं "यदीच्छसि महाराज सर्वतीर्थावगाहनम् । विप्रपादविनिर्मुक्तं तोयं शिरसि धारय" इति पादप्रक्षालनोदकं स्वशिरसि प्रोक्ष्य, स्वगृहे स्वकुटुम्बे प्रोक्ष्य, "दर्शनादेव साधवः साधुसज्जनज्ञानिनः । स दर्शनदानेन लोकत्रयं पुनन्ति । लोकमनोरथं पूरयन्ति" इति वदन् "ब्राह्मणोऽस्य मुखमासीत् । ब्राह्मणाः सन्तुष्टाश्चेत् अहं तुष्ट एव । अत एव विप्राः महान्तः ते एव सर्वोपचारैः सम्पूज्या" इति लोकं धर्मं ज्ञापयितुं एवं हरिः आचरत् ।

### मूलम्

**इत्युक्तो देवदेवेन ऋषिश्चागात् धरातलम् ।**

**भगवतो भृगुकृतसर्वोत्तमदेवतात्वसमर्थनम्**

**ऋषीणामग्रजातीनां सभायां स ऋषिस्तदा ॥ ३१ ॥**

**बोधयामास तान् सर्वान् स तु सर्वोत्तमः स्वयम् ।**
**इत्येवं चक्रिरे यज्ञमर्पणं जगदीशितुः ॥ ३२ ॥**

**कल्याणकाण्डदीपः**

**इत्येवं चक्रिरे यज्ञमर्पणं जगदीशतुः इति** । एवम् उक्तात् इति सर्ववैलक्षण्यविशिष्टसर्ववैशिष्ट्यात् कारणात् जगदीशितुरर्पणं कुर्वतो यज्ञं चक्रुः इत्यर्थः । ''ग्रामं गच्छन् तृणं स्पृशति'' इत्यत्रेव तथा युक्तं च । 'अनीप्सितम्' इति द्वितीया ।

**मूलम्**

**हरिः सर्वोत्तमः साक्षात् रमादेवी तदन्तरा ।**
**[1]विधिवाण्यौ तदन्ते च (तु) तदन्ते शर्वपूर्वकाः ॥ ३३ ॥**

१. विधिवायू ।

**कल्याणकाण्डदीपः**

**तदन्तरेति** । तस्मात् विष्णोः अन्तरं अभ्यन्तरं ज्ञानानन्दादि गुणगणनाव्यवधानं यस्याः सा **तदन्तरा** । **तदन्ते** तस्याः रमायाः अन्ते अन्तिके अग्रे तदन्तरे ज्ञेये ।

**मूलम्**

**एवं तरतमा ज्ञेया सुरदैत्यनरेषु च ।**
**इत्येवं बोधिता विप्रा भृगुणा तत्त्ववेदिना ।**
**हरिं निश्चित्य सर्वेशं चक्रुस्तस्मै मखार्पणम् । ॥ ३४ ॥**

**कल्याणकाण्डदीपः**

**एवं तरतमा ज्ञेया इति** । प्रकृतातिशयितधर्मविशिष्टादप्यतिशयिततादृशधर्मविशिष्टवाची तरप्-तमप्-अतिरिक्तः तरतमशब्दः । अन्यथा तारतम्यशब्दानिष्पत्तेः । एतदुक्तं सुधायां तृतीयस्य तुरीयचतुर्थे ''तरतमशब्द इव दध्नशब्दोऽप्यप्रत्ययोऽस्ति'' इति । यादुपत्ये च ''तरप्-तमप्-प्रत्यय-भिन्नः तरतमशब्दोऽस्ति'' इति ।

तथा च हरिः श्रीनिवासः सर्वोत्तमः स्वान्यनिष्टोत्कृष्टोत्कर्षानवधिकोत्कर्षवान् । रमादेवी साक्षात् तदन्तरा तन्निष्ठोत्कर्षादतिशयेनापकृष्टा, अन्योत्कर्षानवधिकतन्निष्ठोत्कर्षादप्यतिशयेनापकृष्टोत्कर्षवती । तस्मात् साक्षादतिशयेनावरेति यावत् । तस्मात् सा तरा तस्याप्यतिशयेन साक्षादवरो ब्रह्मा । तस्मात् सः तमः । तथा च अवरतरा रमा, अवरतमो ब्रह्मा । 'साक्षात्' इत्युत्तरत्रापि सम्बध्यते । तथा च रमाया

अवरतरो ब्रह्मा । अवरतमा वाणी । ब्रह्मण अवरतरा वाणी । अवरतमः शिवः । एवमारोहणावरोहण-क्रमेणोत्कर्षापकर्षाभ्यां तारतम्यं ज्ञेयम् । **सुरदैत्यनरेषु च** । सुरशब्दो दृष्टान्तार्थः । सुरेष्विव दैत्य-नरेष्वपीत्यर्थः । तस्यापि पृथक् श्रेयःसाधनत्वादिति भावः ।

यज्ञघटकसुरतारतम्यं प्रसङ्गादुक्तमिति नासङ्गतिः । तदुक्तम्—

तारतम्यं ततो ज्ञेयं सर्वोच्चत्वं हरेस्तथा ।
एतद्विना न कस्यापि विमुक्तिः स्यात् कथञ्चन ॥ (म.भा.ता.नि. १-८०) इति ।

**गूढकर्तृकव्याख्यानम्**

एवं देवदेवोत्तमहरिणा सत्कृतः भृगुः वैकुण्ठं विहाय क्षिप्रं भुवमाययौ । ततः ब्रह्मर्षिसभायां सर्वान् प्रति "मुनिवराः ! श्रूयताम् । श्रीहरिरेव सर्वोत्तमः, जगज्जन्मादिकारणः, सर्वस्वतन्त्रः, ज्ञानानन्दादि-गुणपूर्णः, चिन्तासन्तापादिसकलदोषवर्जितः, श्रीहरिरेव; नान्यः ॥ अयं पञ्चभेदः— जीवेशयोः भेदः, जीवजडयोर्भेदः, जीवजीवयोर्भेदः, ईशजडभेदः, जडजडभेदश्च । किञ्च, "विष्णुः सर्वोत्तमोऽथ प्रकृतिरथ विधिप्राणनाथावथोक्ते...." इत्याद्युक्तेः सुरेषु यथा दैत्यनरादिसकलजगति तरतमभावो ज्ञेयः । इदमेव तत्त्वम् ।" इति अबोधयत् ॥ तदा सर्वमुनयः श्रीहरिं सर्वोत्तमं निश्चित्य, "यज्ञो वै विष्णुः" इति श्रुतिः । "महाक्रतुर्महायज्वा महायज्ञो महाहविः । हुतभुक् भोक्ता" इत्युक्तेः "यज्ञो, यज्ञपतिर्यज्वा यज्ञाङ्गो यज्ञवाहनः । यज्ञभृत् यज्ञकृत् यज्ञी यज्ञभुक् यज्ञसाधनः । यज्ञान्तकृत् यज्ञगुह्यं" इत्यादि-वाक्यानुसन्धानेन यज्ञं उपक्रममाणाः साक्षात् यज्ञभोक्तृश्रीहरेः यज्ञफलं "अनेन सत्रयागेन भारती-रमणमुख्यप्राणान्तर्गतश्रीलक्ष्मीनारायणः प्रीयतां प्रीतो भवतु ॥ श्रीकृष्णार्पणमस्तु" इत्येवं अनु-सन्धानेन हरिसमर्पणं कृत्वा कृतकृत्याः बभूवुः ॥

**मूलम्**

**भृगुपादाहतिकुपितायाः लक्ष्म्याः करवीरपुरगमनम्**

**ततस्तु भगवान् देव एकान्ते निजमन्दिरे ।**
**रमासार्धं यदाऽतिष्ठत् तदोवाच रमा हरिम् ॥ ३५ ॥**

**कल्याणकाण्डदीपः**

ततः प्रकृते किमभूत् इत्यत आह— ततस्त्विति । ततः भृगुपद्धत्यनन्तरम् । **भगवान्** देवः । **निजमन्दिरे** एकान्ते । यदा **अतिष्ठत्** स्थितः ।

मूलम्

**श्रीरमोवाच—**

**गच्छामि देवदेवेश त्यक्त्वा त्वां जगदीश्वर ॥ ३६ ॥**

**ताडितोऽसि जगन्नाथ ऋषिणाऽवरजन्मना ।**
**मदालिङ्गनस्थले देव [1]पादेनैव जगत्पते ॥ ३७ ॥**

१. पादेनापि ।

**कल्याणकाण्डदीपः**

कुत इत्यत आह— **ताडितोऽसि इति** । अत्र पाठद्वयम् । ''ऋषीणामग्रजन्मना'' इत्येकः । ''ऋषिणा मांसजन्मना'' इत्यपरः । जगन्नाथोऽपि ''योऽन्तःप्रविश्य'' इत्यादेः जगन्नियन्ताऽपि । **अग्रजन्मना** अग्रवर्णजन्मना, **ऋषिणा** ब्रह्मर्षिणेति यावत् । भृगुणा । 'ऋष् ज्ञाने' इति धातोः । बुद्धिपूर्वं **ताडितोऽसि** आहतोऽसि । 'यतोऽत' इति शेषः । न च सत्यमहं ताडितः मम कीर्तिरकीर्तिर्वा भवतु, तव मत्यागे किमभूदिति वाच्यम् । एतादृशस्य भार्येति ममाप्यकीर्तिरिति भावः । यतः स्त्रियः चारित्र्यभूषणाः ।

द्वितीये तु सत्यमहं ताडितः । वार्तमिदं सत्यम् । मम किं वा भवतु । तव तथाभूतं किं प्राप्तम् ? अत आह— **मांसजन्मनेति** । मांसं मांसप्रचुरं जन्म जन्मवच्छरीरं यस्य तेन मानुषजन्मना । ननु कथमेतत् । स्वर्गतिरेव मानुषदेहदुर्लभा, किमु वैकुण्ठगतिः इति । सत्यम् । यद्यपि अयं भृगुः सिद्धेशत्वात् यदा तपस्यति तदा मानुषदेहेन यदा स्वर्जिगमिष्यति तदा दिव्येन यदा यावन्मर्यादं वैकुण्ठं ज्ञानप्रचुरसूक्ष्मप्रकृतिगुणदेहेन । तथाऽपि दोषकथनाभिनिवेशात् लक्ष्म्या अभूतपूर्वं भूस्थितिमनुरुद्ध्य तथोक्तमिति ध्येयम् । तथा च अतद्गुणो बहुव्रीहिः ।

यद्वा, मानुषदेहेनेत्यर्थे मांसजन्मनेत्युपलक्षणम् । तथा च, इत्थम्भूतलक्षणे तृतीया । न विशेषणविभक्तिः । तथा च एते व्यधिकरणविभक्ती । तज्ज्ञाप्य हि न तु विशिष्टऋषिणेत्यर्थः । कारकजघन्यतोक्त्या क्रियानैच्यात् आक्षेपोत्तरं बोध्यम् ।

अन्तरार्थस्तु मां सजन्मनेति पदविभागः । तृतीया सहयोगे । सहजन्मना सहजेनाजानजेनेति यावत् । सजन्मना मन्मूर्त्या सहितेन श्रीलाञ्छनेन सह मां लक्ष्मीं मां लक्षीकृत्य त्वं ताडित इति । *अयमभिप्रायः—* सर्वासु नियन्ताऽपि वासुदेवः ताडित इति प्रसिद्धौ । एवं विचक्षणाः कल्पयन्त्येव ।

लक्ष्मीं लक्षीकृत्येति । अस्तु वा त्वां लक्षीकृत्य ताडनम् । तथाऽपि ममैव अवमानो जात इत्याह— **मदालिङ्गचस्थल इति** । मदालिङ्गनार्हवक्षसि । कुतः ? तवैव चेत्, शिरसि पार्श्वे वा किं न स्यात् ।

किं च मदेन आलिङ्गनार्हे इति वा । अयं भावः— स्वतः सर्वोत्तमं श्रुतधनकुलरूपैश्वर्यकर्मकलादिभिः अहमेव ज्यायसीत्येवं दृप्यन्त्या मया निविष्टमपीदं स्थानं हीनं मनसाऽपि कः स्मरेत् । कः पश्येत् । कः स्पृशेत् इति मदकारणेनालिङ्गनार्हम् । एवम्भूतमिदं स्थानं इदानीं एवञ्जातमिति ।

ताडनमपि हीनं जातमित्याह— **पादेनेति** । कामं भवतु यदि करणे वा जातं न जातम् । काका गोप्यता सूच्यते । अपिः गर्हार्थः । गर्हितमेतत् इति भावः । क्रियाकारकपदयोः प्रथमचतुर्थपादसन्निवेशेन काकुसूचितगोप्यताया आत्यन्तिकत्वं गम्यते । **देव** क्रीडादिगुणविशिष्टजगत्पते सर्वपालक । अयमाशयः । मम तव वक्षस्यावासः कुतः ? कथञ्चित् कदाचित् अपराधाभासेऽपि भर्तुस्ताडनेऽस्यान्यश्लेषस्य चावकाशो मा भूत् इति । तदुभयमिदानीं जातम् । स्वयं ताडनासम्भवेऽपि स्वीयेन कारितम् । अन्यासक्तेश्चावकाशः । एतदुभयं तवोचितम् । अहमिव बद्धो भवतो मम तु भवानिव भवानेव । तथा च यस्याङ्घ्रिरेणुं जुषतेऽनभीप्सोरनिच्छतोऽपि यस्य श्रीरङ्गान्न च्यवते क्वचिदित्यादि प्रसिद्धातिपरिचयादनादरो जातः । तव च सर्वपालकत्वादन्यासक्तिः । अतः उक्तम्— **जगत्पत इति** । पूर्णकामस्य का सक्तिरित्यत आह— **देवेति** । "देवस्यैष स्वभावोऽयम्" इत्यादेर्लीलैवेति भावः । एतेन भविष्यत्पद्मावतीविवाहः सूच्यते । एतेन भृगुणेङ्गितज्ञेन लक्ष्म्यपि हरेरवतारेति ज्ञातमिति ज्ञातव्यम् ।

**मूलम्**

**करवीरपुरं दिव्यं गच्छामि गरुडध्वज ।**
**इति सा प्रेमकलहं कृत्वा तु हरिणा सह ॥ ३८ ॥**

**कल्याणकाण्डदीपः**

किं प्रति गच्छसीत्यत आह— **करवीरपुरमिति** । ननूतत्र कोल्लापुरमिति श्रूयते । अत्र करवीरपुरमिति चेन्न । तस्यैव नामान्तरत्वाद् अदोषः । **प्रेमकलहं कृत्वा** प्रेमान्तरङ्गितं विवादम् ।

**मूलम्**

**रमा जगाम तत्क्षेत्रं करवीरपुरं प्रति ।**

**लक्ष्म्यन्वेषणार्थं श्रीवेङ्कटाचलं प्रति भगवदागमनम्**

**यदा गता महालक्ष्मीस्तदा नारायणो हरिः ॥ ३९ ॥**

**कल्याणकाण्डदीपः**

**रमा जगामेति** । 'करवीरपुरम्' इत्यस्यावृत्तिः, 'यतः ततः' इति शेषः । **करवीरपुरं रमा जगाम** । कुतः ? यतः करवीरपुरं तत्क्षेत्रम् । तस्या रमायाः क्षेत्रं पुण्यभूमिः अतः करवीरपुरं जगाम इत्यन्वयः । *तदुक्तं भगवत्पादैः*— "यामः पुरं करवीराख्यमेव महालक्ष्म्याः क्षेत्रसन्दर्शनाय" इति । रमायाः वैकुण्ठात् वसुन्धरागमनं सकारणमुक्त्वा रमेशस्यापि तदाह— **यदेत्यादिना** । "यदा आगता" इति पदविभागः । **करवीरपुरं प्रति** इत्यनुषज्यते ।

**मूलम्**

**अष्टाविंशतिमे प्राप्ते द्वापरान्ते कलौ युगे ।**
**यस्मिन्काले यथादेशे यथाचारं करोमि तत् ॥ ४० ॥**

**(यस्मिन् देशे यदा प्रेमकलहोऽस्याः प्रशाम्यति ।**
**कर्मणा येन च यथा तत्तथा च करोम्यहम् ॥)**

**कल्याणकाण्डदीपः**

'यतः' इति लभ्यते । 'सर्वम्' इति च । यथाचारः प्रचरति तन्नातिचरेत् । अन्यथा चरन् दुष्यतीति वाक्यशेषः । तथाशब्दः समुच्चये । **देश** इत्युपलक्षणम् । कुलादेरपि जनपदधर्माः ग्रामधर्माश्च । तान् विवाहे प्रतीयात् ।

"येनास्य पितरो याता येन याताः पितामहाः ।
तेन यायात् सतां मार्गं तेन गच्छन् न दुष्यति ॥" (मनुस्मृतिः ४-१७८)

इति वचनात् ।

तथा चेत्थं योजना । यतः यस्मिन् काले यस्मिन् देशे च यथाचारः प्रचरति तन्नातिचरेत्, अन्यथा चरन् दुष्यति । **तत्** तस्मात् । **यथाचारं** कालदेशकुलाद्याचारमनतिक्रम्य सर्वं करोमीति । अत एव उत्तरत्र गीर्वाणाः सङ्गिरन्ति—

"प्रजायते हि यत्कुले यथा युगं यथा वयः ।
यथायुगं यथादेशं यथाकालं यथावयः । (म.भा.ता.नि.१३-९)
तथावतारमाकाङ्क्षन् रमते रमया सह ।"
"एवं वदन्तस्सुरपुङ्गवास्ते" इत्यादि ।

*भगवत्पादाश्च,*

तथा प्रवर्तनं भवेद्दिवौकसां समुद्भवे ।
इति स्वधर्ममुत्तमं दिवौकसां प्रदर्शयन् ॥'' (म.भा.ता.नि.१३-...) इति ।

**मूलम्**

**इति सङ्कल्प्य गोविन्दो लीलामानुषविग्रहः ।**
**मायावी [1]परमानन्दः त्यक्त्वा वैकुण्ठमुत्तमम् ॥ ४१ ॥**

१. परमानन्दं ।

**कल्याणकाण्डदीपः**

**इति सङ्कल्प्य इति** । अनेन प्रकारेण **सङ्कल्प्य** मानसं कर्म कृत्वा ***लीलामानुषविग्रहः*** लीलायै स्वावताराय परिगृहीतवासुदेवादिमानुषविग्रहः । **मायावी** परेषां दैत्यानां व्यामोहनकरी माया सा अस्यास्तीति मायावी । 'अस्माय' इत्यादिना विनिः । **परमानन्दः** पूर्णानन्दानुभवात्मकः । **उत्तमं वैकुण्ठं त्यक्त्वा** ।

अस्य श्लोकस्य

''एवं गिरिवरं प्राप्य भगवान् वेङ्कटाचले ।
वैकुण्ठादधिकं मत्त्वा विचचार इतस्ततः ॥''

इत्युत्तराध्याये विद्यमानेनान्वयः । अतः तदन्तमेकं वाक्यम् । अनेन यदा सुवृष्टिः तदा जातः सुभिक्षो देश इतिवत् रमायाः वसुन्धरागमनं कारणं रमेशागमनस्येति प्राप्त्या कारणपृच्छाया ''यस्मिन् काले तथा देशे'' इत्यादिना कथं वा पृच्छायाश्च समाधिरुक्ता भवति । गिरिमहत्ताप्रश्नोत्तरार्थः । ''एवं गिरिवरं प्राप्य'' इत्येतद्वाक्यघटकोक्तपरामर्शः ।

**गूढकर्तृकव्याख्यानम्**

यदा भृगुरागत्य हरिवक्षसि पादेन ताडयित्वा गतः तदा अव्याहतषड्गुणैश्वर्यसम्पन्नः श्रीहरिः शय्यागृहे एकान्ते भार्या रमया उपविष्टः । तदा रमा पत्या हरिणा सह प्रेमकलहं कृत्वा करवीरपुरं ययौ । रमा कथं प्रेमकलहं चरार ? इति चेदुच्यते—

एकदा दम्पत्योः एवं सम्भाषणं प्रवृत्तम् । आदौ रमैव भाषितुं उपचक्रमे ।

**कल्याणकाण्डदीपः**

**रमा जगामेति** । 'करवीरपुरम्' इत्यस्यावृत्तिः, 'यतः ततः' इति शेषः । **करवीरपुरं रमा जगाम** । कुतः ? यतः करवीरपुरं तत्क्षेत्रम् । तस्या रमायाः क्षेत्रं पुण्यभूमिः अतः करवीरपुरं जगाम इत्यन्वयः । *तदुक्तं भगवत्पादैः*— "यामः पुरं करवीराख्यमेव महालक्ष्म्याः क्षेत्रसन्दर्शनाय" इति । रमायाः वैकुण्ठात् वसुन्धरागमनं सकारणमुक्त्वा रमेशस्यापि तदाह— **यदेत्यादिना** । "यदा आगता" इति पदविभागः । **करवीरपुरं प्रति** इत्यनुषज्यते ।

**मूलम्**

**अष्टाविंशतिमे प्राप्ते द्वापरान्ते कलौ युगे ।**
**यस्मिन्काले यथादेशो यथाचारं करोमि तत् ॥ ४० ॥**

**(यस्मिन् देशे यदा प्रेमकलहोऽस्याः प्रशाम्यति ।**
**कर्मणा येन च यथा तत्तथा च करोम्यहम् ॥)**

**कल्याणकाण्डदीपः**

'यतः' इति लभ्यते । 'सर्वम्' इति च । यथाचारः प्रचरति तन्नातिचरेत् । अन्यथा चरन् दुष्यतीति वाक्यशेषः । तथाशब्दः समुच्चये । **देश** इत्युपलक्षणम् । कुलादेरपि जनपदधर्माः ग्रामधर्माश्च । तान् विवाहे प्रतीयात् ।

"येनास्य पितरो याता येन याताः पितामहाः ।
तेन यायात् सतां मार्गं तेन गच्छन् न दुष्यति ॥" (मनुस्मृतिः ४-१७८)

इति वचनात् ।

तथा चेत्थं योजना । यतः यस्मिन् काले यस्मिन् देशे च यथाचारः प्रचरति तन्नातिचरेत्, अन्यथा चरन् दुष्यति । **तत्** तस्मात् । **यथाचारं** कालदेशकुलाद्याचारमनतिक्रम्य सर्वं करोमीति । अत एव उत्तरत्र गीर्वाणाः सङ्गिरन्ति—

"प्रजायते हि यत्कुले यथा युगं यथा वयः ।
यथायुगं यथादेशं यथाकालं यथावयः । (म.भा.ता.नि.१३-९)
तथावतारमाकाङ्क्षन् रमते रमया सह ।"
"एवं वदन्तस्सुरपुङ्गवास्ते" इत्यादि ।

*भगवत्पादाश्च,*

तथा प्रवर्तनं भवेद्दिवौकसां समुद्भवे ।
इति स्वधर्ममुत्तमं दिवौकसां प्रदर्शयन् ॥" (म.भा.ता.नि.१३-...) इति ।

**मूलम्**

**इति सङ्कल्प्य गोविन्दो लीलामानुषविग्रहः ।**
**मायावी [1]परमानन्दः त्यक्त्वा वैकुण्ठमुत्तमम् ॥ ४१ ॥**

१. परमानन्दं ।

**कल्याणकाण्डदीपः**

**इति सङ्कल्प्य इति** । अनेन प्रकारेण **सङ्कल्प्य** मानसं कर्म कृत्वा **लीलामानुषविग्रहः** लीलायै स्वावताराय परिगृहीतवासुदेवादिमानुषविग्रहः । **मायावी** परेषां दैत्यानां व्यामोहनकरी माया सा अस्यास्तीति मायावी । 'अस्माय' इत्यादिना विनिः । **परमानन्दः** पूर्णानन्दानुभवात्मकः । **उत्तमं वैकुण्ठं त्यक्त्वा** ।

अस्य श्लोकस्य

"एवं गिरिवरं प्राप्य भगवान् वेङ्कटाचले ।
वैकुण्ठादधिकं मत्त्वा विचचार इतस्ततः ॥"

इत्युत्तराध्याये विद्यमानेनान्वयः । अतः तदन्तमेकं वाक्यम् । अनेन यदा सुवृष्टिः तदा जातः सुभिक्षो देश इतिवत् रमायाः वसुन्धरागमनं कारणं रमेशागमनस्येति प्राप्त्या कारणपृच्छाया "यस्मिन् काले तथा देशे" इत्यादिना कथं वा पृच्छायाश्च समाधिरुक्ता भवति । गिरिमहत्ताप्रश्नोत्तरार्थः । "एवं गिरिवरं प्राप्य" इत्येतद्वाक्यघटकोक्तपरामर्शः ।

**गूढकर्तृकव्याख्यानम्**

यदा भृगुरागत्य हरिवक्षसि पादेन ताडयित्वा गतः तदा अव्याहतषड्गुणैश्वर्यसम्पन्नः श्रीहरिः शय्यागृहे एकान्ते भार्या रमया उपविष्टः । तदा रमा पत्या हरिणा सह प्रेमकलहं कृत्वा करवीरपुरं ययौ । रमा कथं प्रेमकलहं चरार ? इति चेदुच्यते—

एकदा दम्पत्योः एवं सम्भाषणं प्रवृत्तम् । आदौ रमैव भाषितुं उपचक्रमे ।

रमा— स्वामिन् ! जगदीश ! जगज्जन्मादिकारण ! आश्रितबन्धो !

परः— तिष्ठ तिष्ठ रमे ! किमेतत् ? अद्य एवं अतिशयेन मां स्तोतुं प्रवृत्ता ?

रमा— सर्वसाक्षिन् ! सर्वान्तर्यामिन् ! मन्मनोवल्लभ ! तव अविदितं किमस्ति ? तथापि इदमेकं मे विज्ञापनम् ।

परः— किं तत् विज्ञापनम् ? ब्रूहि ।

रमा— इतः त्वयि न तिष्ठामि । यत्र कुत्र वा गच्छामि ।

परः— किमेतत् अकस्मात् एवं वदसि ? किं कारणं, त्वयि न तिष्ठामि अन्यत्र गच्छामीति वक्तुम् ।

रमा— कुत इति मां पृच्छसि किम् ? ज्ञात्वा ज्ञात्वा एवमेव पृच्छाकरणम् ।

परः— किं विदितं मम ?

रमा— त्वं आश्रितबन्धुर्न किम् ?

परः— सत्यम् । आश्रितबन्धुरेवाहम् । किं अनेन ?

रमा— आश्रितबन्धुर्नाम कः ? ब्रूहि ।

परः— "अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते । तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्" इत्यादिकं अहमेव उपदिष्टवान् । लोके ये ये अन्यदैवं अनुपास्य मामेव नित्यं अविस्मृतिपूर्वकं अभियोगं प्राप्ताः, तेषां आश्रितानां दुःख-चिन्ता-भय-रोग-मोह-अवमानादि सकलकष्टं परिहृत्य तेषां योगक्षेमं सर्वथा वहाम्येवेति प्रतिज्ञातवान् ।

रमा— अस्तु नाम । मह्यं तु त्वं त्वादृश इति न भाति । अपि तु आश्रित-अवमानादि दुःखदाता इति भाति ।

परः— अयि, किमेवं वदसि ? हन्त ! जगत्पालकस्य मम सतः कस्य वा किं वा कष्टं आपतितम् ? ब्रूहि शीघ्रं तत् कष्टम्, क्षिप्रं परिहरामि ।

रमा— अपि इदं सत्यम् ?

परः— किमेवं पृच्छसि ? अहं सत्यसङ्कल्पो न किम् ?

रमा— पुनः कस्यापि न ? ममैव आपतितम् ।

परः— अयि मनोज्ञे ! दुःखास्पृष्टे नित्यावियोगिनि ! तवापि कष्टम् ? अतथ्यं वदसि, उत विनोदं करोषि वा ?

रमा— स्वामिन् ! मम अवमानो दुःखं च जातम् ।

परः— कथं नाम एवं भवेत् ? मम तु अत्र प्रत्यय एव न ।

रमा— भवान् प्रत्येतु, न वा प्रत्येतु । अहं तु अद्यैव प्रस्थिता ।

परः— अयि इन्दिरे ! तव दृष्ट्या अवमानस्तावत् कः ?

रमा— त्वं ताडित इति ।

परः— अहं ताडितश्चेत् किं तेन ?

रमा— "योऽन्तः प्रविश्य मम वाचमिमां प्रसुप्तां सञ्जीवत्यखिलशक्तिधरः स्वधाम्ना । अन्यांश्च हस्तचरणश्रवणत्वगादीन् प्राणान्नमो भगवते पुरुषाय तुभ्यम् ॥" इत्याद्युक्तेः त्वं जगन्नियन्ताऽपि ब्रह्मज्ञानिभृगुणा बुद्धिपूर्वं ताडितोऽसि खलु ।

परः— सत्यम् । अहं ताडितः । तेन कीर्तिर्वा अकीर्तिर्वा भवतु । तन् ममैव । तव मयि अनवस्थाने किं अभूत् ?

रमा— "ताडितस्य भार्या" इति लोके ममापि अकीर्तिः । यतः स्त्रियः चारित्र्यभूषणाः खलु । अतः एतदकीर्तिः कृते इमं लोकमेव त्यक्त्वा गच्छामि ।

परः— अयि देवि ! सत्यम्, अहं ताडितः । वार्तमिदं सत्यम् । मम किंवा भवतु, तव तथाभूतं किं प्राप्तम् ?

रमा— अवरमनुष्यजन्मना त्वं ताडितः, इति ।

परः— सत्यम् । परन्तु स मुनिः सिद्धेशः खलु । "स्वतपःसिद्धिबलात् दिव्यदेहेन स्वर्गं वा, वैकुण्ठज्ञानप्रचुरसूक्ष्मप्रकृतिगुणदेहेन इमं लोकं वा प्राप्य, कार्यं कर्तुं क्षमः । अत एव ईदृशकार्यं साधितवान् । पुनः किम् ?

रमा— तव वक्षस्थश्रीलाञ्छनेन सह मां लक्षीकृत्य त्वं ताडितः। "सर्वासु नियन्ता अपि वासुदेवस्ताडित" इति प्रसिद्धौ विचक्षणाः "लक्ष्मीं लक्षीकृत्य त्वं ताडितः" इत्येवं कल्पयन्त्येव।

परः— अस्तु वा ताडनं त्वां लक्षीकृत्य, तथाऽपि ताडनं ममैव, ततः अकीर्तिश्च ममैव।

रमा— त्वं ताडितोऽपि तव शिरसि पार्श्वे वा न ताडितः। परन्तु तव वक्षसि। किञ्च वक्षसि करेण ताडितो वा ? न। अपि तु पादेनैव। अहमेव श्रुतधनकुलरूप-ऐश्वर्यकर्म-कलादिभिः ज्यायसी, तव भार्या च। एतादृश्या मया आलिङ्गनार्हं स्वतः सर्वोत्तम-स्थानं तव वक्षः मुनिना पादताडनेन हीनं अस्पृश्यं च अद्य जातम्।

परः— मम वक्षः यत्र कुत्रापि यदा कदापि यतः कुतोऽपि हीनं वा अस्पृश्यं वा नैव भवेत्। एवं सति कथं वा तव अनवस्थितिः सम्भवेत् ?

रमा— तर्हि कुतः ताडितवान् मुनिः ?

परः— सः ब्रह्मज्ञानी। बुद्धिपूर्वकं मम वक्षसि पादेन त्वां लक्षीकृत्य ताडितवान् इति। अतः सः प्रयोजनं उद्दिश्यैव एतत्कार्यं चरितवान्॥

रमा— किं तत् प्रयोजनम् ?

परः— सः ब्रह्मज्ञः। मम ज्ञाने इच्छाक्रियाः वेत्ति। मत्कार्यसाधकोऽस्ति। अपराधिदण्डनं एव तस्योद्देशः।

रमा— तर्हि अपराधी कः ? अपराधः कः ?

परः— ताडितस्तावदहम्। अतो मयि कमपि अपराधं दृष्ट्वा मां ताडितवान् स्यात्।

रमा— तर्हि त्वमपि अपराधी, दोषी ? तव ताडनं युज्यते वा शक्यते वा ?

परः— अपराधिनं मां स भावयेत्।

रमा— तद्दृष्ट्या त्वं अपराधी चेत् तव अपराधो वा कः ?

परः— ताडनात् पूर्वमेव मुनिः प्रत्युत्थानवन्दनादिभिः मया अवश्यं उपचरितव्य आसीत्। तथा न कृतं मया। किञ्च पादताडनेन मदपराधः अधिकः द्योत्यते। तथाऽपि मुनिः दयालुत्वात् सत्त्वभूयिष्ठत्वात् मां अधिकतरं अदण्डयित्वा अपराधिनाऽपि मया सुप्रसन्नः पूजितः खलु। न तु रुष्टो ययौ।

रमा— तर्हि पादताडनेन अधिकापराधश्चेत् शिरोभुजपार्श्वादिकं विहाय वक्षस्येव ताडने किं तस्य मतम् ?

परः— तस्यापि केनापि भाव्यम् ।

रमा— तस्यापि मुनेः उद्देशः कः ?

परः— पूर्वं त्वमेव उक्तवती खलु, त्वां लक्षीकृत्य मम वक्षसि ताडितवान् इति ।

रमा— तर्हि ब्रह्मज्ञानिनः त्वदिच्छावेदिनः त्वत्कार्यसाधकस्य ईदृशताडने तस्य फलापेक्षा वा काऽस्ति ? अतो मां लक्षीकृत्य ताडनं तव अभिमतं वा ?

परः— एवं अहं अपि उक्तवान् । नैवैतन्मम मतम् ।

रमा— किं भो स्वामिन् एतत् ! ताडने तव उद्देशो न । न वा तव मतीयस्य । नापि मम । तर्हि कस्य ?

परः— (तूष्णीं आसीत् ।)

रमा— आ ! ज्ञातम् । भो जगदीश ! सर्वप्राणिप्रेरक । सुज्ञातं तव मतम् । त्वं पूर्ण-कामः । नित्यतृप्तः । ईदृशस्य तव अपेक्षा कुतः ? सर्वमिदं तव चेष्टा लीला । भवतु । अद्य पश्य । सदा मे तव वक्षोवासः अभूत् । कुतः ? मत्तः परस्याः कस्याः अपि तव वक्षालिङ्गनं मा भूदिति । अद्य तव ताडनमेव उचितं जातम् । कुतः ? ताडनं स्वयं स्वीयेन कारितम् । इयं त्वदिच्छा । एतेन सदा आसन्नाया मम अतिपरिचयात् अनादरो तव जातः । अन्यभक्तायाः तव आसक्तिः उचितैव खलु । देवदेवेश ! त्वं स्वरमण । त्वदाश्रिताः बह्वयः । ताः सर्वाः त्वय्येव आसक्ताः । अन्यन्यमनस्काः । त्वामेव रक्षकत्वेन भावितवत्यः । अहमिव तव बह्वयः । मम तु भवानेव इत्युक्ते भवानेव रक्षकः । अहं भवदनुग्रहेण दुःखास्पृष्टा, नित्यावियोगिनी च । अद्य मामिव अन्याश्रिताः भवान् रक्षणे सङ्कल्पित-वान् । पश्य । त्वमेव मम मुखात् त्वयि न तिष्ठामि, गच्छामि इति वाचितवान् । इदं असत्यं नैव । जगन्नाथ ! अतः त्वदिच्छया त्वां विहाय गच्छामि । इति ॥

साक्षात् जगन्माता रमा एवं प्रेमान्तरङ्गितं विवादं कृत्वा वैकुण्ठं विहाय कोल्हापुरेत्यपरनामकं करवीरपुरं प्रयाय तत्र अवस्थातुमारेभे । अत्र महालक्ष्मीः हरिसङ्कल्पं मत्वा तत्कार्यसाधिका स्वपुण्यभूमिं कोल्हापुरं गता ॥

उत्तरत्र स्वावतारा पद्मा या तस्याः कल्याणे स्वयं मुख्यसहकारिणी भूत्वा हरिं सेवितुं अयं मे सुयोगः प्राप्तः । एतेन कृतकृत्या भवामि इति रमा मन्यते । यद्यपि जगन्माता रमा, दुःखास्पृष्टा,

नित्यावियोगिनी, तथाऽपि श्रीहरिः भाविपद्माविवाहार्थं लक्ष्मीं प्रेषयितुं भृगुं स्वयं प्रेरितवान् । तेन स्वताडनम् । तज्जन्यं रमामनःकालुष्यं इत्यादिकं उत्पादितवान् । इति ध्येयम् ॥ सर्वमिदं श्रीहरिविडम्बनम् ॥

एवं यदा रमा कोल्लापुरं गता, तदा साक्षात् हरिः एवं चिन्तयति— द्वापरयुगं यायात् । अष्टाविंशतितमे कलौ प्राप्ते इमं वैकुण्ठं त्यजामि । ततः येन प्रकारेण मया आचरितं चेत् रमायाः प्रेमकलहः शाम्यति तुष्टिश्च स्यात् तेन मया चरितव्यम् । यस्मिन् देशे वसामि तद्देशाचारमनुसृत्य वसामि । तदाचारं नातिचरामि । "येनास्य पितरो याताः येन याताः पितामहाः । तेन यायात् सतां मार्गं तेन गच्छन् न दुष्यति ॥" इत्युक्तेः इतः देश-काल-वयोनुगुणं कर्तव्यं सर्वं करोमीति सङ्कल्पयामास । ततः श्रीहरिः स्वावताराय कृष्णादिमानुषं देहं स्वीकृत्य दैत्यव्यामोहनकरमायाशक्तिं प्रदर्शयन् पूर्णानन्दानुभवरूपं वैकुण्ठं तत्याज ।

**मूलम्**

**गङ्गाया दक्षिणे देशे योजनानां शतत्रये ।**
**सुवर्णमुखरी नाम नदीनां प्रवरा नदी ॥ ४२ ॥**

**कल्याणकाण्डदीपः**

एवङ्कारेण परामर्ष्टुमाह— **गङ्गाया दक्षिण** इत्यादिना । **शतत्रये** जाते तदुपरि इत्यर्थः । **नदीनां प्रवरा** जाह्नवीव ।

**मूलम्**

**शुकस्य वरदा पुण्या अगस्त्यमुनिपूजिता ।**
**[1]तस्याश्च उत्तरे तीरे क्रोशार्धद्वयमात्रके ॥ ४३ ॥**

१. तस्या एवोत्तरे ।

**कल्याणकाण्डदीपः**

शुकेन मे महागुरुसमागमद्वारा सद्दर्शनोपदेशाद्योग्य-श्रीनिवासापरोक्षः स्यादिति मनसि कृत्वा स्वर्णनदीमातृकपद्मसरसि लक्ष्मीसन्निधौ तपश्चरणात् तत्तपःप्रसन्नं श्रीनिवासेनोक्तं वरलाभात् तद्वरदा इत्यर्थः ।

*तदुक्तं ब्राह्मे तृतीयेऽध्याये शङ्खराजं प्रति श्रीनिवासः—*

"त्वं चापि गच्छ शैलेन्द्रं पूर्वं स्वर्णमुखीतटे ।
यत्र ब्रह्मशिला नाम सरिन्मध्ये च वर्तते ।
अगस्त्यतपसा पश्चाद्वयासान्निध्यमत्र वै ।
पादा ईशानविष्णवादिदेवानां तत्र सन्ति हि ।
यतिरूपो मातरिश्वा ह्यष्टाविंशतिमे कलौ ।
यजत्रायं वदन्त्यद्धा मध्वनाम्ना परं विभुम् ।
तत्रैव तपसा पुण्ये प्रीत्या चागस्त्ययोगिनः ।
तत्स्थापितालये पुण्ये चातुर्मास्यं करिष्यति ।
शुकः श्रोष्यति तच्छास्त्रं पद्मतीर्थादिकैर्युतः ।
पश्चात्तपगिरेः शृङ्गे दक्षिणे चक्रसंज्ञके ।
तत्र कालान्तरेऽगस्त्यः सशिष्योऽप्यागमिष्यति ।
मुनिनोक्तं च माहात्म्यं शृण्वन् कुरु प्रदक्षिणम् ।
साकं तेन समाधिस्थः साक्षात् पश्यति तं विभुम् ।
त्वयाऽपि संस्तुतो देवः तवाभीष्टं ददाति च (हि) ॥"

इत्यादि प्रयच्छति । एतेन बहुभक्तसमागमे सत्येव श्रीनिवासस्य तन्त्रेण बहूनां योग्यापरोक्ष-दानेऽभिरुचिविशेष इति ज्ञायते । अत एव महोत्सवे बहूनां यात्रेति प्रसिद्धिः । 'पद्मतीर्थादिहागतः' इति पाठे सत्यादागत्य छायाशुकेन ऐक्यमापाद्य पद्मतीर्थादिहागत इत्यर्थः । द्वितीये स्पष्टोऽर्थः । मुनिना च मध्वमुनिना शुकमुनिना अगस्त्यमुनिना च उक्तम् । शास्त्रेण भागवतेन पुराणेन चोक्तं माहात्म्यं परतत्त्वमाहात्म्यं कृष्णमाहात्म्यं तीर्थमाहात्म्यं च त्वयाऽपि न केवलं तैः तवापि न केवलं तेषाम् ।

*अत्र श्रुतिः—*

"मध्वो नाम मारुतं यजत्राः प्रयज्ञेषु शवसा मदन्ति ।
सप्तस्वसूररुषीर्वावसानो विद्वान् मध्व उज्जभारादृशेके ॥" (ऋ.७-५७-१) इति ।

"स्वसा आसास्वेषु सीदती वा प्रतियन्ति गावो गमनात् आरुषी-रारोचनात् मातरो भासो मर्त्यः । वावसानो वृष्टेर्वा विश्यतेर्वा स्वसूर्वाविंसान इत्यपि निगमो भवति ।" *इति निरुक्तम् ।*

एतादृशवरदानसामर्थ्यं स्वर्णनद्याः कथमागतम् ? इत्यत आह— **अगस्त्यमुनिपूजितेति** । अगस्त्यमुनिनेयं स्वर्णनदी "देवानामपि वरदा भूयात्" इति श्रीनिवासं प्रति प्रार्थनया 'तथाऽस्तु' इति श्रीनिवासेन वरदापनात् अगस्त्यमुनिपूजितेत्यर्थः ।

*तदुक्तं स्कान्दे चतुर्थे— अगस्त्यः—*

"अवधारय चैतत् त्वं नदीप्रार्थनया मम ।
नदी सुवर्णमुखरी स्नाता चाघौघनाशनी ॥ (२-१-३८-४३)

साऽभवच्छैलकटकसमापन्ना समागता ।
तां कृतार्थय लोकेश त्वदनुग्रहवर्तिनीम् ॥ (२-१-३८-४४)

सुवर्णमुखरीतोये स्नाता ये वेङ्कटे स्थितम् ।
पश्यन्ति भुक्तिमुक्त्योस्तु भूयासुर्भाजनं जनाः ।" (२-१-३८-४५)

—इत्यादि प्रार्थना ।

श्रीभगवानुवाच—

"यत्प्रार्थितं त्वया विप्र तत् तथैव भविष्यति ।
नूनमप्रतिमा लोके मयि भक्तिः कृता त्वया ॥ (२-१-३८-४८)

जाह्नवीव नदी सेव्या सुवर्णमुखरी मुने ।
प्रदास्यति सुराणां च वाञ्छितां श्रीविधायनी ॥" (२-१-३८-४९) इत्यादि ।

**तस्याश्च उत्तरे तीरे इति** । "वाक्ये सा विवक्षामपेक्षते" इत्यसन्धिः साधुः । **कोशार्धद्वय-मात्रक इति** । अर्धं च द्वयं च अर्धद्वये क्रोशस्य अर्धद्वये क्रोशार्धद्वये । अर्धसहितं अर्धाधिकं द्वयं अर्धद्वयं इति वा । ते तद्वा परिमाणमस्य क्रोशार्धद्वयमात्रकम् । 'प्रमाणे द्वयसजि'त्यादिना मात्रच् । तदेवं तत्कथं तादृशं तीरं तस्मिन् तीरे अतीते सति विद्यमाने तस्यास्तीरे इत्यर्थः । कारकमध्येयं सप्तमी । महानद्याः परितः पञ्चक्रोश्यास्तीरत्वादिति भावः ।

*तदुक्तं वाराहे तृतीयेऽध्याये—*

"तीरे पुण्यतमे पुत्र रुग्मनद्यास्तथोत्तरे ।
क्रोशद्वयार्धमात्रे तु हरिचन्दनमण्डिते ॥" इति ।

**मूलम्**

**श्रीवेङ्कटगिरिर्नाम वर्तते पुण्यकाननः ।**
**सुवर्णगिरिपुत्रस्तु सर्वतीर्थसमन्वितः ॥ ४४ ॥**

**कल्याणकाण्डदीपः**

**श्रीवेङ्कटगिरिर्नाम वर्तत इति** । गिरीति ख्यातशब्दानामध्याहारः । वेङ्कटगिरिरिति नाम्ना ख्यातो गिरिः वर्तत इत्यन्वयः । **सर्वतीर्थसमन्वितः** षट्षष्टिकोटितीर्थसमन्वितः ।

*तथोक्तं ब्राह्मे चतुर्थे—*

"षट्षष्टिकोटितीर्थानि पुण्यान्यत्र नगोत्तमे ।
अष्टोत्तरसहस्राणि तेषु मुख्यानि सुव्रत ॥" इति ।

**गूढकर्तृकव्याख्यानम्**

ततः गङ्गाया दक्षिणदिशि शतत्रययोजनादूर्ध्वं सुवर्णमुखरीनाम नदी । स्कान्दपुराणे वायुवचनम्— "सुवर्णमिव लोकानां भागधेयादियं नदी । नीता भुवमगस्त्येन मुखरीकृतदिङ्मुखा ॥" इत्युक्तेः इयं नदी अगस्त्येन भुवमानीता । गङ्गेव अतिश्रेष्ठा । देवगङ्गांशा । स्वस्यां स्नातानां पापहारिणी । पुनः कीदृशी नदी ? शुकस्य वरं दापितवती । सुवर्णमुखरीमातृके पद्मसरस्तीरे व्यासतनयः शुकमुनिः व्यासोपदिष्टः साक्षात् श्रीनिवासापरोक्षाकाङ्क्षी गुणपूर्णदोषवर्जितश्रीहरिं तपसा आराध्य ते दर्शनं ददामि इति वरं लेभे । ततः कालेन श्रीनिवासः पद्माकल्याणे शुकाय दर्शनं ददाति । स्वतीरदेशे तप्तशुकाय श्रीनिवासात् दर्शनलाभरूपवरं दापितवती । अगस्त्यमुनिपूजिता । स्कान्दचतुर्थाध्याये— अगस्त्यः श्रीनिवासं आराध्य "भगवन् ! इयं सुवर्णमुखरी भवदनुग्राह्या । स्वजलस्नातानां पापपरिहरणे, भवदाश्रितदेवानां वरदाने च समर्था भवतु । एवं तां कृतार्थय" इति प्रार्थ्य "तथाऽस्तु" इति श्रीनिवासेन वरं दापयित्वा तां पूजितवान् । ईदृश-सुवर्णमुखरी-उत्तरतीरे क्रोशार्धाधिकक्रोशद्वयमितदूरे परमपवित्र-काननवरदेशैः विशिष्टः सुविख्यातः श्रीवेङ्कटगिरिः अस्ति ॥*

* श्रीप्रदत्वश्रीवासेन श्रीशैलः ॥ वाराहे— १. चिन्तितसिद्ध्या चिन्तामणिः, २. ज्ञानदानेन ज्ञानाद्रिः, ३. सर्वतीर्थमयः तीर्थाद्रिः, ४. पुष्करातिशयेन पुष्कराद्रिः, ५. धर्मस्य तपसा वृषभाद्रिः, ६. शातकुम्भ-रूपेण कनकाद्रिः, ७. वैकुण्ठादागतः वैकुण्ठाद्रिः, ८. हिरण्यनाशप्रह्लादानुग्रहेण सिंहाद्रिः, ९. नारायण-विप्रतपसा स्वनामप्रार्थनात् नारायणाद्रिः, १०. वराहक्षेत्रलक्षणात् वराहाद्रिः, ११. नीलकपिवासेन नीलाद्रिः, १२. वें - अमृतबीजं, कट - ऐश्वर्य, एतेन वेङ्कटाद्रिः, १३. श्रीनिवासदेवदर्शनेन श्रीनिवासाद्रिः, १४. भगवत्क्रीडया क्रीडाद्रिः । आनन्दाद्रिः ॥

सुवर्णगिरिः मेरुपर्वतः । तस्य सुतः आनन्दाद्रिः, सर्वतीर्थैः विराजितः । ब्राह्मे चतुर्थे— षट्षष्टिकोटितीर्थानि पुण्यान्यत्र नगोत्तमे । अष्टोत्तरसहस्राणि तेषु मुख्यानि सुव्रत ॥ आनन्दाद्रिः षडाधिकषट्कोटितीर्थैः युतः । तेषु अष्टोत्तरसहस्राणि मुख्यानि ।

**मूलम्**

**'साक्षाच्छेषावतारस्तु सर्वधातुविभूषितः ।**
**वैकुण्ठसदृशो दिव्यो नारायणसमाश्रयः ॥ ४५ ॥**

**कल्याणकाण्डदीपः**

'सर्वधातुविराजितः' इति पाठान्तरम् । सर्वेषां सर्वस्य विश्वस्य वायोः वा धातुः । सर्वधाता । दधातेस्तुन् । विष्णुः ।

"सर्वस्य धातारमचिन्त्यरूपमादित्यवर्णं तमसः परस्तात् ।"

"य उ त्रिधातु पृथिवीमुतद्यामेको दाधार भुवनानि विश्वा ॥" (यजुर्वेद ३१-१८)

"आशापतिधातो" इत्यादिवचनात् ।

तेन फणामणिस्थानीयेन विभूषितः । "वेङ्कटाद्रिशिरोमणिः" इति तन्नामसु पाठात् । न च "नारायणसमाश्रयः" इत्यनेन पौनरुक्त्यम् । स्ववचनप्रतीतस्यार्थस्य विना प्रयोजनं पुनस्तेनैव वचनेन तत्तात्पर्यकेण वाऽभिधानस्य पुनरुक्तत्वादिति वाच्यम् । "आर्थिकत्वेन वाऽऽत्मतृप्तः" इत्यादिवद्वा दोषत्वात् । यद्वा "सर्वेषां धातुर्धारिणी पृथिवी विश्वस्य धारिणी" इति श्रुतेः । यद्वा सर्वे गैरिकादि-धातवो यस्यामिति सर्वधातुर्धारिणी, तस्या विभुः पतिः श्रीश्वेतवराहः, तेनोषिते इति वा । तयां-ऽऽलिङ्गितवपुष्ट्वाद्विभूषित इति वा सर्वधातुविभूषितः । अच् । पाठान्तरे तु सर्वधातोः सर्वधात्र्याः गिरेर्वा विराट् स्वतन्त्रः सोऽस्य सञ्जात इति इतच् । अतोऽग्रेण न पुनरुक्तिः ।

**मूलम्**

**शेषमारुतसंवादादागतः पुण्यकाननः ।**
**शतयोजनविस्तीर्णस्त्रिंशद्योजनमायतः ॥ ४६ ॥**

**कल्याणकाण्डदीपः**

**शतयोजनेति** । परितः शतयोजनविस्तारवान् । समसूत्रं त्रिंशद्योजनायामवान् ।

**मूलम्**

**वदनं वेङ्कटगिरिः नारसिंहश्च मध्यमः ।**
**श्रीशैलः पुच्छभागस्तु [1]एवं क्षेत्रमयो गिरिः ॥ ४७ ॥**

१. सर्वक्षेत्रमयो ।

**कल्याणकाण्डदीपः**

**वदनमिति** । सर्पगिरेरिति शेषः । **वदनं** वदनांशः **वेङ्कटगिरिः** तन्नामकः **मध्यमांशः** **नारसिंहा**चलनामकः **पुच्छांशः** **श्रीशैलः** **क्षेत्रमयः** प्राचुर्येण प्रस्तुतानि क्षेत्राण्यस्येति क्षेत्रमयः तत्प्रकृतवचने मयडिति प्राचुर्ये मयट् ।

**मूलम्**

**सर्ववृक्षसमाकीर्णः सर्वधातुविभूषितः ।**
**कुन्दमन्दारपनसप्लक्षोदुम्बरकिंशुकैः ॥ ४८ ॥**

**कल्याणकाण्डदीपः**

**सर्ववृक्षसमाकीर्णः** अश्वत्थौदुम्बरकोविदारादिसर्ववृक्षैर्निबिडः । **सर्वधातुविभूषितः** ।

"सुवर्णरूप्यताम्राणि हरितालं मनश्शिला ।
गैरिकाञ्जनकासीसलोहसीसाः सहिङ्गुलाः ।
विमलं कार्परं ताप्यं त्रपुकांस्यं तथैव च ।
गन्धकोऽभ्रकमित्याद्या धातवो गिरिसम्भवाः ॥" इत्युक्तधातुभिर्विभूषितः ।

*तदुक्तं वराहे अष्टमे*—

अष्टानां खनयः सन्ति लोहानां कनकाचले ।
युगभेदेन दृश्यन्ते नराणां पुण्यकर्मणाम् ।
सुवर्णं रजतं ताम्रं शितिः कांस्यं तथा त्रपु ।
सीसं च तगरं चैव अष्टौ लोहानि चक्षते ॥" इति ।

सरलविरलतया कलिवृक्षघनतयाऽपि सर्ववृक्षसमाकीर्णत्वं साधारणम् । अतः पुण्यकाननत्व-प्रयोजकदेववृक्षादीनाह— **कुन्दमन्दारेत्यादिना** । कुन्दे मुकुन्दः । मन्दारे लक्ष्मीः । पनसे विश्वे-देवाः । प्लक्षोऽश्वत्थः । तस्मिन् विष्टरश्रवाः केशवः । औदुम्बरे अग्निः । किंशुके भगः ब्रह्मा च । मुकुन्दे मुकुन्दः । पारिभद्रेऽहिर्बुध्न्यः । तिन्त्रिण्यां वरुणः । जम्बौ ब्रह्मा । ताले हिंताले च श्री सरस्वती च ।

लक्ष्मीसरस्वतीसन्निधानस्य स्वतपःसन्तुष्टब्रह्मवरलब्धत्वात् । पुन्नागे शेषः । देवदारौ सर्वे देवाः । कुं भूमिं द्यतीति कुन्दः । 'दोऽवखण्डने' पृषोदरादिः । "कुन्दश्चक्रभ्रमे माध्ये निधौ कुन्दे मुरद्विषि" इत्यमरः । कुं दुरुष्केति प्राकृतभाषया गन्दिकापणे प्रसिद्धः । मन्द्यते स्तूयते । "मन्दारः पारिजातकः" इत्यमरः । प्राकृते हालिवाण । पण्यते स्तूयते पणसः । पण स्तुतौ पणपणिभ्योऽसच् । "पनसः कण्टकिफलः पणश्च बृहत्फलः" इत्यमरः । प्रक्षरतीति प्लक्षः । अन्येष्वपीति डः । "श्रीवृक्षः पिप्पलोऽश्वत्थः प्लक्ष-श्चलदलोऽङ्गुलः" इति वैजयन्ती । "श्रीवृक्षः केशवावासो माङ्गल्यो वह्निगर्भकः" इत्यमरः । औदुम्बरः उदुम्बर एव औदुम्बरः । स्वार्थे अण् । "उदुम्बरो जन्तुफलो यज्ञाङ्गो हेमदुग्धकः" इत्यमरः । "पलाशे किंशुकः पर्णो वातपोथो जुहूतरुः । क्षारद्रु ब्रह्मवृक्षश्च त्रिपलाशः समिद्वरः" इत्यमरः । प्राकृते मुत्तग ।

### मूलम्

**मुकुन्दैः पारिभद्रैश्च तिन्त्रिणीजम्बुमण्डलैः ।**
**धवलैश्चन्दनैश्चूतैः कृष्णागरुविराजितैः ॥ ४९ ॥**

### कल्याणकाण्डदीपः

"मुकुन्दः कुन्दकुन्दुरू" इत्यमरः । प्राकृते मल्लेमर । "पारिभद्रे निम्बतरुः" इत्यमरः । बेवु । "प्लक्षश्च तिन्त्रिणी चिञ्चाऽम्लिका, इत्यमरः ।" हुणसी । "जम्बूस्त्रि सारा विरजा महाजम्ब्वां महाफल" इत्यमरः । नीरलु गिडा । नन्वन्दूदम्भू "जम्बूकफेलूकर्कन्धू" इत्यूदन्तनिपातनात् कथमुदन्ततेति चेन्न । "परिणतजम्बुफलोपभोगहृष्टा" इति प्रयोगात् "इको ह्रस्वोऽङ्यो गालवस्य" इति उत्तरपदे ह्रस्वः । "ह्रस्वान्तं जम्बुः" इत्यपि प्रकृत्यन्तरमस्तीति जम्बुमण्डलैरिति साधुः । जम्यते जम्बुः । जमु अदने ।

### मूलम्

**तालहिन्तालपुन्नागदेवदारुविराजितः ।**
**हंसकारण्डवाकीर्णो बककोकशुकैर्वृतः ॥ ५० ॥**

### कल्याणकाण्डदीपः

तलते तालः । तल प्रतिष्ठायां घञ् । "तृणराजाह्वयस्तालो दीर्घस्कन्धो द्रुमेश्वरः" इत्यमरः । हिनोति वर्धते तलति प्रतिष्ठते चेति हिन्तालः । हि वृद्धौ । तल प्रतिष्ठायां नुमागमः, पृषोदरादिः । "हिन्तालस्तृणराजश्च लन्तां कुरक इत्यपि" इत्यमरः । पूजितः पुमान् पुन्नागः । "पुन्नागे पुरुषस्तुङ्ग-

केसरो देववल्लभः" इत्यमरः । सुरगी मर । "देवदारुर्द्रुकिलिमं पीतदारू च दारु च" इत्यमरः । "वटौदुम्बराश्वत्थप्लक्षा गन्धर्वाप्सरसां गृहा" इति श्रुतिप्रसिद्धिः । **हंसकारण्डवाकीर्ण इति** । हंसः कलहंसः । कलहंसः कादम्बपक्षी । हेसरु । "कादम्बः कलहंसः स्यात्" इत्यमरः । कारण्डवः = नीरकोळी । "कारण्डवो प्लवः, स्याद्वारिकुक्कुटः" इत्यमरः । तैराकीर्णः बकः बेळ्ळक्की । "बकः कह्वः" इत्यमरः । कोकः चक्रवाकपक्षी । "कोकश्चक्रश्चक्रवाकः" इत्यमरः । शुकः गिणि । "अथ कीरशुकौ समौ" इत्यमरः ।

**मूलम्**

**[1]कपोतैः क्षीरहंसाद्यैः मृगैश्चान्यैर्विभूषितः ।**
**सिंहशार्दूलशरभक्रोडमातङ्गवानरैः ॥ ५१ ॥**

१. कपोतैः क्षीरहंसैश्च मृगखण्डविभूषितः ।

**कल्याणकाण्डदीपः**

कपोतः पारावतः पारिवालः । "पारावतः कलरवः पाटलाङ्घ्रिश्च रक्तदृक् । मदोत्कटो बालवत्सः कपोतोऽथ शशादनः" इत्यमरः । क्षीरहंसः राजहंसः । "हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकसः । राजहंसास्तु ते" इत्यमरः । **सिंहेति** । हिनस्ति इति सिंहः । हिसि हिंसायाम् । पृषोदरादिः । "सिंहो मृगेन्द्रः पञ्चास्य" इत्यमरः । शृणोति शार्दूलः । शॄ हिंसायां खर्जादिभ्यश्चेति ऊलच् । 'कमेर्दुकि' इत्यनुवर्तमाने 'शृणोते दीर्घश्च' इति दुग्दीर्घौ "शार्दूलद्वीपिनौ व्याघ्रे" इत्यमरः । महानादस्तु शार्दूलो हरितोऽतुल्यविक्रम इत्यमरशेषः । शृणाति शरभः । शॄ हिंसायां कृष्टशालीत्यादिनाऽभच् । "शरभस्तूर्ध्वलोचनः । गजारिरष्टपादः स्यात्" इति शेषः । "अष्टपादोर्ध्वनयनः शरभो वनगोचरः" इति भारते । क्रोशतीति क्रोडः । घञ् । पृशोदरादिः । "क्रोडो भूदार इत्यपि" इत्यमरः । क्रोडतीति वा । क्रुड घनत्वे । मतङ्गस्यायं मातङ्गः । तस्येदमिति सम्बन्धसामान्येऽण् । "मतङ्गजो गजो नागः कुञ्जरो वारणः करी" इत्यमरः । नर इव वानरः । वा शब्द इवार्थे मयूरव्यंसकादित्वात् समासः । "मर्कटो वानरः कीशः" इत्यमरः । तेऽपि नरा इव नरेषु प्रचरन्तीति वानरपदप्रयोगः ।

**मूलम्**

**जम्बूकैश्चैव भल्लूकैः कस्तूरीमृगवासितः ।**
**तुरगैश्च गवां खण्डैर्महिषीगणसेवितः ॥ ५२ ॥**

**कल्याणकाण्डदीपः**

मांसं जमतीति जम्बुकः । "सृगालो वञ्चकः क्रोष्टुफेरुफेरवजम्बुकाः" इत्यमरः । भल्लतीति भल्लूकः । "भल्लपरिभाषणहिंसादानेषु" "उलूकादयश्च" इत्यूकञ् । अनुपदत्वाद्वृध्यभावः । "ऋक्षाच्छ-भल्लभल्लूका" इत्यमरः । करडी । अच्छभल्लेति सङ्घातविगृहीतम् । कस्तूरीमृगवासितः तैर्वासितः निवासितः । तत्सम्बधिमृगमदवासितो भावित इति वा ।

**मूलम्**

**मल्लिकामालतीजातीनन्द्यावर्तविभूषितः ।**
**चम्पकाशोकपुन्नागकेतकैः स्वर्णकेतकैः ॥ ५३ ॥**

**कल्याणकाण्डदीपः**

मल्लयते धार्यते इति मल्लिका । मल मल्लधारणे ण्वल् । तृणशुल्यं तु मल्लिका । "भूपदी शीतभीरुश्च" इत्यमरः । शेषे "मदयन्ती प्रमोदिनी अष्टापदी विचकिलः" इत्यादि । मल्यते धार्यत इति मालती । मलतेरतिप्रत्ययः पृषोदरादिः । "सुमनो मालती जाती सप्तला नवमल्लिका । वनमाली च नेपाली वनो मासे खरिण्यपि" इत्यमरः । सप्तघ्राणादि पञ्च मनोबुद्धिं चाल्यतीति सप्तला । नेपाल, जाजी हूवु । जायत इति जातिः । औणादिकः किः । वाडीषि जाती । दक्षिणजाजी पुष्प । **नन्द्यावर्त-विभूषितः** । "नन्द्यावर्ते तु तगरस्तारावदनभागणौ" इति वैजयन्ती । "भण्डीलोऽप्यथ चाम्पेयश्चम्पको हेमपुष्पकः" इत्यमरः । सम्पिगी गिड । "वञ्जुलोऽशोके रागिकङ्केलिरक्तकाः विशोकः कर्णपूरश्च" इत्यमरः । अशोकद मर । पुन्नाग उक्तः । केतकैः "करिमः केतकी न क्लीदितो व्यञ्जनजम्बुकौ । "स्त्रीभूषण रजःपुण्यो गुप्तरागे वलीनक" इत्यमरः । नक्लीत्युक्ते : । रामायणेऽरण्ये "चूतैरशोकैस्तिलकैः चम्पकैः केतकैरपि" इति "सकेतकोद्दालक नारिकेलः" इति महाकविप्रयोगाच्च केतकैरिति साधुः । "द्वन्द्वान्ते श्रूयमाणः प्रत्येकं सम्बध्यते" इति न्यायेन चम्पककेतकैः अशोककेतकैः पुन्नागकेतकैरिति वार्थः । अत एव तत्र नागा वसन्ति । स्वर्णकेतकैः "तप्ता पीता मदनद्रोणी सुगन्धी कनकच्छदा परुषी चापि" इत्यमरः । स्वर्णकेतकी ।

**मूलम्**

**एवं मनोहरः श्रीमान् पर्वतः पुण्यकाननः ।**

**कल्याणकाण्डदीपः**

**मनोहरः** । मनोरमः श्रीमान् सम्पद्युक्तः । अत एव **पुण्यकाननः** ।

**गूढकर्तृकव्याख्यानम्**

अयं गिरिः साक्षात् शेषावतारः । अत्र शेषः सदा सन्निहितः । सर्वधातुधरणिविभुः श्वेतवराहः अत्र वसति । अयं आनन्दाद्रिः स्वाधिष्ठितदेवैः श्रीनिवासेन च युक्तः साक्षात् वैकुण्ठलोकसमः । शेष-मारुतसंवादनिमित्तेन शेषेण सह स्थापितः । आनन्दगिरिः शतयोजनमितपरिधिः । त्रिंशद्योजनमिता-यामः । आनन्दगिरेः वेङ्कटगिरिः वदनांशः । नृसिंहाचलः मध्यमांशः । श्रीशैलः पुच्छांशः । आनन्दगिरिः श्रेष्ठक्षेत्रभूयिष्ठः । अनेकविधवृक्षैः समन्ततो व्याप्तः । निबिडः । वृक्षसामान्याः देवतावृक्षाश्च सन्ति । अतः पुण्यकाननो गिरिः ॥

कुन्दः मन्दारः पनसः प्लक्षः औदुम्बरः किंशुकः मुकुन्दः पारिभद्रः तिन्त्रिणी जम्बूः तालः हिन्तालः पुन्नागः देवदारुः एते देववृक्षाः । कुन्दे मुकुन्दो वसति । मन्दारे रमा । पनसे विश्वेदेवाः । प्लक्षे केशवः । औदुम्बरे अग्निः । किंशुके भगो ब्रह्मा च । मुकुन्दे मुकुन्दः । पारिभद्रे हरः । तिन्त्रिण्यां वरुणः । जम्ब्वौ विधिः । ताले हिन्ताले रमा वाणी च । पुन्नागे शेषः । देवदारौ सर्वदेवताः । पिचुमन्दः चन्दनः पारिजातः चूतः कृष्णागरुः इत्यादि नानावृक्षाः ववृधिरे । हंसः कारण्डवः बकः कोकः शुकः कपोतः क्षीरहंसः मयूरः क्रौञ्चः इत्यादि नाना पक्षिणः कलं ध्वनन्ति । सिंह-शार्दूल-मातङ्ग-वानर-जम्बुक-शरभ-(अष्टपदी ऊर्ध्वनेत्रः गजान् हन्ति)क्रीडभल्लूक-कस्तूरीमृगादि नानादुष्टमृगाः । तुरग-गो-महिषादिपशवः । शोभन्ते । सुवर्ण-रूप्य-ताम्र-हरिताल-मनःशिला-गैरिका-अञ्जनका-सीस-लोह-सीस-हिङ्गुल-विमल-कार्पर-ताप्य-त्रपु-कांस्य-गन्धक-अभ्रक इत्यादि गिरिजन्यधातवः शोभन्ते । मल्लिका-मालती-जाति-नन्द्यावर्त-चम्पका-अशोक-पुन्नाग-केतक-स्वर्णकेतकेत्यादि परिमलपुष्प-लतादिविराजितः सर्वदेवाश्रयः आनन्दगिरिः अतिमनोहरः आसीत् ॥

**मूलम्**

**तरवो देवतगणाः मृगाख्या मुनिपुङ्गवाः ।**
**पितरः पक्षिणः सर्वे पाषाणा यक्षकिन्नराः ॥ ५४ ॥**

**कल्याणकाण्डदीपः**

**तरव इति** । **देवतगणाः** । देवानां प्रतिमास्थानीयास्तरव इत्यादि योज्यम् ।

**मूलम्**

**एवं [1]प्रभावो हि गिरीन्द्रजन्मनः**
**श्रीवेङ्कटाद्रेस्तु हरेस्तथैव ।**

१. प्रभावोऽस्य ।

**जानन्ति ब्रह्मेशसुरेशपूर्वकाः**
**किं तत्र दीना मनुजाः कथञ्चन ॥ ५५ ॥**

*इति श्रीभविष्योत्तरपुराणे वेङ्कटगिरिमाहात्म्ये*
*शेषगिरिवर्णनं नाम द्वितीयोऽध्यायः ॥*

॥ श्रीकृष्णार्पणमस्तु ॥

**कल्याणकाण्डदीपः**

**एवमिति** । अहिगिरीन्द्रजन्मनः शेषगिरीन्द्रमूर्तेः । तथा वेङ्कटाद्रेः । वेङ्कटाद्रिनामकस्य हरेः । श्रीनिवासस्य च । एवम् उक्तप्रकारेण **प्रभावो हि** प्रसिद्धोऽस्ति । यद्येवं कुतः । सर्वे न जानन्तीत्यत आह—; **जानन्तीति** । तम् इति शेषः । तमेवं प्रभावं ब्रह्मेशसुरेशपूर्वकाः जानन्ति । निजानुभवात् हरेरनुग्रहात् महाप्रयत्नात् मन्वते । तत्र एवम्प्रभावे विषये मनुजाः किं कः पदार्थः ? इत्याक्षेपे किंशब्दः । "किं राजा यो न रक्षति" इतिवत् । ये दीनाः । निजयोग्यतादि एतत्प्रभावज्ञानसामग्री-दरिद्राः । "दीनो दरिद्रो दुर्गतोऽपि सः" इत्यमरः ।

*तदुक्तं भागवते—*

"प्रायेणाल्पायुषो मर्त्याः कलावस्मिन् युगे जनाः ।
मन्दाः सुमन्दमतयो मन्दभागा ह्युपद्रुताः ॥" (१-१-१०) इत्यादि ।

"मूढाल्पपटुनिर्भाग्याः मन्दाः स्युः" इत्यमरः । तर्हि कथमपि किमपि न जानन्ति इत्यत आह— **कथञ्चनेति** । अतिप्रयत्नात् किञ्चिज्जानन्तीत्यर्थः । इयता प्रबन्धेन "किं तस्य चरितं माहात्म्यं पर्वतस्य च" इति एतद् दत्तोत्तरम् ॥

*इति श्रीमद्भविष्योत्तरपुराणव्याख्याने कल्याणकाण्डदीपे*
*जीवितांशश्रीनिवासहैय्यङ्गवीनलाभो नाम द्वितीयोऽध्यायः सम्पूर्णः ॥*

**गूढकर्तृकव्याख्यानम्**

अत्र शेषाचले देवप्रतिमास्थानीयाः तरवः । ऋषिश्रेष्ठस्थानीयाः मृगाः । पितृस्थानीयाः पक्षिणः । यक्षकिन्नरस्थानीयाः सर्वपाषाणाः ॥ एवं गिरिवरशेषाचलस्य श्रीवेङ्कटाचलस्य श्रीनिवासस्य च प्रभावं विधिहरेन्द्रादयः महामहाप्रयत्नात् यत्किञ्चित् जानन्ति । अपि तु साकल्येन नैव । प्रायेण अल्पायुषो मर्त्याः कलौ मन्दाः मन्दमतयः मन्दभाग्याः उपद्रुताः न जानन्त्येवेति किमु वक्तव्यम् ! इत्यंशं शतानन्दमुनिः जनकराजं प्रति निरूपयामास । तदेव सूतः शौनकादिविप्रान् प्रति निरूपयामास ॥

*॥ इति अत्र श्रीमद्भविष्योत्तरपुराणे वेङ्कटगिरिमाहात्म्ये*
*शेषगिरिवर्णनं नाम द्वितीयोऽध्यायः ॥*

॥ श्रीकृष्णार्पणमस्तु ॥



॥ श्रीः ॥

## श्रीमद्भविष्योत्तरपुराणान्तर्गतं

# श्रीवेङ्कटेशमाहात्म्यम्

### ॥ अथ तृतीयाध्यायकथासङ्क्षेपः ॥

**(गूढकर्तृकव्याख्यानानुसारी)**

शतानन्द आह— जनक ! तद्वेङ्कटगिरि-उपरिदेशे स्वामिपुष्करिणी इति दिव्यतीर्थश्रेष्ठः अस्ति । सः गङ्गादिसर्वतीर्थानां जन्मभूमिः सन् विराजते । तस्मिन् ये स्नान्ति ते धन्याः । तत्रापि धनुर्मासे शुक्लपक्षे द्वादशीदिने अरुणोदयवेलायां स्वामिपुष्करिणीतीर्थे इन्द्रादिसकलदेवा अपि स्नानं इच्छन्ति । एवं सति तत्र नराणां स्नानकालोऽयं इति किमु वक्तव्यम् ? नैव । तत्र स्नानादिदानादिकार्यैः सर्वे भाग्यशालिनः ॥

पुरा शङ्खो नाम नृपः, नारायणो नाम विप्रः, स्वामिपुष्करिणीतीर्थस्नानमहिम्ना स्वर्गादि सद्गतिं प्रापतुः । दाशरथी रामः तत्र स्नानेन रावणापहृतां सीतां अवाप । एतादृश स्वामिपुष्करिणीतीर्थपश्चिमतः वराहरूपी परमात्मा धरां आलिङ्ग्य अश्वत्थमूले वल्मीकं आश्रितः । सः वेङ्कटाचलः त्रिकोटितीर्थानां जन्मस्थानम् । तत्र आगत्य श्रीहरिः तत्र गिरिदेशे सञ्चरन् वासाय अनुकूलं स्थलं इतस्ततः अन्विष्यन् अन्ते तत्रैव स्वामिपुष्करिणीतीर्थदक्षिणतः श्रेष्ठं तिन्त्रिणीमूलस्थं वल्मीकं दृष्ट्वा तदेव स्ववासयोग्यस्थानं मत्वा तत्रैव अयुताब्दं उवास ।

द्वापरे गते अष्टाविंशतिमे कलौ एकवत्सरे गते नागकन्योदरे जातः कश्चित् चोलराजो नाम भरतखण्डं धर्मेण पालयति स्म । तस्मिन् काले श्रीहरिं सेवितुं साक्षात् विधिः स्वयं धेनुरूपी रुद्रं वत्सं कृत्वा प्रयातः । साक्षात् रमा स्वयं गोपाली सती चोलगृहं प्राप्य चोलाय धेनुवत्सौ विक्रीय जगाम । इयं धेनुः इतरधेनुभिः गिरिदेशे आयान्ती स्वामिपुष्करिणीतीर्थसमीपे वल्मीके नित्यं क्षीरं सिञ्चन्ती हरिं तर्पयति । एवं सति इयं धेनुः चोलगृहे क्षीरं न ददाति स्म । एवं किञ्चित् काले गते राजपत्नी गोपं आनाय्य "अरे दुष्ट ! अस्याः क्षीरं किं करोषि ?" इति पप्रच्छ । ततः गोपः "क्षीरं नाहं गृह्णामि,

एतद्विचारमेव न वेद्मि" इत्यवदत् । परेऽहनि राज्ञीनिर्देशेन गोपः धेनुं वनं यान्तीं अनुययौ । तत्र वने वल्मीके धेनुं क्षीरं सिञ्चन्तीं दृष्ट्वा महता कोपेन कुठारेण तां हन्तुं यतमाने आत्मार्थं स्वभक्तधेनोः मरणात् रक्षितुकामः वल्मीकगः श्रीनिवासः गोपकृतकुठारप्रहारं स्वयं शिरसि दधार । एतेन श्रीनिवासस्य शिरो भिन्नम् । शिरसः सप्ततालमितरक्तधारा ऊर्ध्वं अस्फुरत् । भयङ्कररक्तस्फूर्तिं दृष्ट्वा गोपः अतिभीतो मृतिं ययौ ।

ततः सा धेनुः गिरेरवरुह्य राजगृहे गत्वा अतिदुःखिता अलुठत् । तदा चोलः धेनुदुर्दशां दृष्ट्वा दुःखितः सन् चारेण वृत्तं विदित्वा क्षणात् गिरिं आरूढः वल्मीकमागत्य दृष्ट्वा "किमिदं बत । अहो ! महत् कष्टं आपतितम् । वल्मीके रक्तस्फूर्तिः, गोपमृतिः, गवा वार्ताकथनम् । किमिदं स्यात् ?" इति वदति चोले क्षणात् वल्मीकगः श्रीनिवासः बहिः आगत्य चोलं प्रति "पापिष्ठ ! नृप ! राज्यमदोन्मत्त ! अनाथं मातापितृहीनं मां वने वल्मीकमाश्रितं गोपः कुठारेण मे शिरसि तताड । शिरो भिन्नम् । वेदना दुःसहा । एतदनर्थस्य त्वमेव मूलम् । मद्दुःखादानात् पिशाचो भव" इति तं शशाप ॥

एवं श्रीनिवासशप्तो राजा मूर्छितो भुवि पपात । मुहूर्तान्ते प्रबुद्धः जगदीशं श्रीनिवासं उवाच । इत्येवं वेङ्कटगिरौ परमात्मनः अवतारप्रशंसनं यत् शतानन्दः जनकं प्रति निरूपयामास तदेव वर्णनं सूतः शौनकादि विप्रान् प्रति निरूपयामास ॥

*इति श्रीमद्भविष्योत्तरपुराणे श्रीवेङ्कटेशमाहात्म्ये तृतीयाध्यायकथासङ्क्षेपः ॥*

॥ श्रीकृष्णार्पणमस्तु ॥



॥ श्रीः ॥

## श्रीमद्भविष्योत्तरपुराणान्तर्गतं

# श्रीवेङ्कटेशमाहात्म्यम्

## अथ तृतीयोऽध्यायः

**मूलम्**

**श्रीस्वामिपुष्करिणीमाहात्म्यम्**

**शतानन्द उवाच—**

**तस्योपरि वरा दिव्या स्वामिपुष्करणी शुभा ।**
**मत्स्यकच्छपसम्बाधा जलकुक्कुटभूषिता ॥ १ ॥**

**कल्याणकाण्डदीपः**

॥ श्री भास्याय नमः ॥ विश्वाय नमः ॥ हरिः ॐ ॥

जनयति विधिसमाख्यो राजसेनात्मनाऽसौ
अवति हरिसमाख्यः सत्त्वनिष्ठः प्रपञ्चम् ।
हरति हरसमाख्यस्तामसीमेत्य वृत्तिं
मधुमथनमहिम्नामस्ति वेत्ता न कोऽपि ॥

तीर्थानां माहात्म्यमाचक्ष्वेत्यस्योत्तरमाह— **तस्येत्यादिना** । **तस्य** अहीन्द्रगिरेः **उपरि** ऊर्ध्व-भागे मूर्ध्निदेशे । **वरा** सर्वतीर्थोत्तमा । वराहे प्रथमाध्याये "एतेषां प्रवरा देवि स्वामिपुष्करिणी शुभा" इत्युक्तेः । "देवाद्वृते वरः श्रेष्ठे त्रिषु" इत्यमरः । **दिव्या** देवसेव्या **स्वामिपुष्करणी** एतन्नाम्नी ।

*तथा च वामने पञ्चविंशेऽध्याये—*

"धनुर्मासे सिते पक्षे द्वादश्यामरुणोदये ।
आयान्ति सर्वतीर्थानि स्वामिपुष्करिणीजले ॥

स्वामिपुष्करिणीत्येवं नामधेयं च तत्कृतम् ।
मार्कण्डेय समस्तानां तीर्थानां स्वामिनी यतः ॥'' इति ।

''स्वामिनी च सा पुष्करिणी च'' इति कर्मधारयः ।

*वराहे प्रथमाध्याये*—

''त्रैलोक्ये यानि तीर्थानि सरांसि सरितस्तथा ।
तेषां स्वामित्वमापन्नं धरे स्वामिसरोवरम् ॥'' इति च ।

स्वरूपं नाम चोक्त्वा, लक्षणान्याह— **मत्स्येत्यादिना** ।

मीनकूर्मसम्पूर्णा, गहना, जलकुक्कुटाः, कारण्डवाः, तैर्मुखाभरणस्थानीयैर्भूषिता ।

**मूलम्**

**शिंशुमारगणाकीर्णा मण्डूकस्वनहुङ्कृता ।**
**तीरजैर्वृक्षसङ्घैश्च [1]चुम्बिता च वरानना ॥ २ ॥**

१. **चुम्बिताम्बरकानना ।**

**कल्याणकाण्डदीपः**

**शिंशुमारगणाकीर्णा** शिशून् मारयतीति शिंशुमारः । स इवाचरति इति तथा । सहस्रदंष्ट्रः पाठीननामकः । करि मीनु । यद्वा शिंशुमारः मोसळि । ''तद्भेदा शिंशुमारोद्र शङ्कवो मकरादयः'' इत्यमरः । तद्गणसङ्कुलेत्यर्थः । **मण्डूकस्वनहुङ्कृता** मण्डूकस्वनात्मक हुङ्कारयुक्ता । हुं किं श्रीनिवास-भक्तोऽयं इति परिपृच्छन्ती हुं नाशयामि सहसा स्नाने पापानि इति कृध्यन्ती । हुं मत्तीरादपसर हरावभक्ताः इति भर्त्सयन्ती श्रीनिवाससान्निध्यात्पापपराभवशक्तिमती इत्याद्येवं हुङ्कारयुक्ता । ''हुं वितर्के परिप्रश्ने स्मृत्या मन्त्रणभर्त्सने । अङ्गीकारे च कथितं'' इत्यमरः । ''वितर्के च परिप्रश्ने क्रोधभर्त्सनयो-रपि । अनिच्छाभययोः स्मृत्यां हुमित्यव्ययमुच्यते'' इति नानार्थे । ''यतो हुं च पराभिभववाचकः'' इति ब्रह्माण्डे इत्यैतरेयभाष्ये ।

**वराननेति** ह्रस्वान्तपाठे जनकस्य शौनकस्य वा सम्बोधनम् । भूषितेत्यध्याहारः चुबि वक्र-संयोगे । न केवलं पूर्वोक्तैः भूषिता । अपि तु वृक्षसङ्घैश्च । न केवलं वृक्षसङ्घैः भूषिता अपि तु अर्थिस्थानीयैस्तीरजैः वृक्षसङ्घैश्चुम्बिता च । स्वाग्रात् काननसंयोजितानना च इत्यन्वयः । यद्वा चशब्द इवार्थे । वराननेव जगन्मोहनसौन्दर्यवन्मन्दस्मितकन्येव चुम्बिता च ।

**मूलम्**

**गङ्गादिसर्वतीर्थानां जन्मभूमिर्विराजिता ।**
**तस्यां ये स्नान्ति मनुजास्ते धन्याः पुण्यवर्धनाः ॥ ३ ॥**

**धनुर्मासे सिते पक्षे द्वादश्यामरुणोदये ।**
**काङ्क्षन्ति त्रिदशास्तत्र मज्जनं तज्जले शुभे ॥ ४ ॥**

१. देवतास्सर्वाः

**किमत्र मनुजानां च स्नानकालोऽवधारितः ।**
**तत्र श्राद्धादि कर्माणि पितॄणां प्रीतये द्विजाः ।**
**तेषां पितृगणास्तुष्टा नृत्यन्ति हरिमन्दिरे ॥ ५ ॥**

**कल्याणकाण्डदीपः**

लक्षणमुक्त्वा माहात्म्यमाह— **गङ्गादीति** । **जन्मभूमिर्विराजिता** । जन्मभूम्या विराजितेति तथा ।

*तथा च ब्राह्मे तृतीयाध्याये—*

"देवस्य पाचिका काचिन्नाम्ना बकुळमालिका ।
प्रसाद्य देवं पाकेऽस्मिन् श्रिया सञ्चोदिता विभुम् ।
तीर्थभूम्याधिपत्यं च लेभे वरमनुत्तमम् ।
तत्रैव वासं देवस्य ययाचे सा पुनर्हरिम् ॥" इत्यादेः ।

स्वामिपुष्करिण्याः परितो भूम्यास्तीर्थभूमित्वम् । पाठान्तरं "जन्मभूमिविराजिता" इति । "गङ्गादि सर्वतीर्थानां जन्मभूमिः शुभोदका" इति पुराणान्तरात् साधु । पुण्यानि वर्धयन्तीति **पुण्यवर्धनाः** । नन्द्यादित्वाल्ल्युः ।

"**किमत्र मनुजानां च स्नानकालोऽवधारितः** ।" अयं काल इति एतेनेति च शेषः । एतेन देवाना-मपि वाञ्छितत्वेन मनुजानां च मानुषाणामपि अयं कालः । धनुश्शुक्लद्वादश्यरुणोदयकालः । अत्र पुष्करिण्यां स्नानकाल इति अवधारितः । अयमेवास्यां स्नाने फलातिशयहेतुः नान्य इति निर्धारितः ।

अत्र स्नानप्रवृत्तावङ्गभूतं फलातिशयादिकं किं वक्तव्यमस्तीति शेषः । अथवा बहूनोक्तेनेति शेषः । अत्र पुष्करिण्यां स्नाने कर्तव्ये किं बहुनोक्तेन मनुजानामपि अयमेव स्नानकालोऽवधारितः इत्यर्थः ।

**मूलम्**

**जन्मना किमनेनैव दैवेन भवतामहो ।**
**स्नानदानेन तत्तीर्थे मनुजा भाग्यशालिनः ॥ ६ ॥**

**कल्याणकाण्डदीपः**

पुराणर्षिः स्नानाधिकारिणः सम्बोध्य श्लोकमेकं गायति—

"जन्मना किमनेनैव देवेन भवतामहो ।
स्नानदानेन तत्तीर्थे मनुजा भाग्यशालिनः ॥" इति ।

अहो स्नानाद्यधिकारिणः । **दैवेन** पूर्वपुण्येनागतेन । अनेन मानुषेण जन्मनैव जन्ममात्रेण जन्मागमनतत्क्षण इति यावत् । किं किं भाग्यं प्राप्तम् । किं किं कृत्यं कृतमासीत् । किन्तु, तत्रापि दैवेन तत्राप्यतिशयितपुण्येन तत्तीर्थकृतेन स्नानदानेन मनुजाः **भाग्यशालिनः** कृतकृत्याश्चेत्यर्थः ।

**गूढकर्तृकव्याख्यानम्**

पूर्वाध्याये शतानन्दः जनकं प्रति श्रीशेषाचलवर्णनं कृत्वा इदानीं तद्गिरिगततीर्थानां माहात्म्यं निरूपयति— जनक ! शृणु । गिरिश्रेष्ठशेषाचल-ऊर्ध्वदेशे परममङ्गला देवैः सेवितुं योग्या स्वामिपुष्करिणी नाम प्रसिद्धतीर्थराजः । अस्य विषये वाराहे वामने च उक्तम् । समस्तानां तीर्थानां स्वामिनी । धनुर्मासे सिते पक्षे (मुक्कोटि)द्वादश्यां अरुणोदये अस्मिन् स्वामिपुष्परिणीतीर्थे गङ्गादि सर्वतीर्थानि सन्निहितानि भवन्ति । इदं स्वामिपुष्करिणीतीर्थं कीदृशम् ? मत्स्यकूर्मसर्पैः पूर्णा । अस्मिन् जलकुक्कुटाः अस्य मुखाभरणवत् अधिष्ठिताः । शिंशुमाराख्यमीनैः युता । पुनः मण्डूकैः अलङ्कृता । मण्डयति जलाशयं इति मण्डूकाः । ते स्वामिपुष्परिणीजले "कोऽयं कोऽयम् ? - श्रीनिवासभक्तश्चेत् अत्र स्नातु, तस्य पापं परिहरामि । अभक्तश्चेत् तीर्थात् अपसरत" इति हुङ्कारं कुर्वन्ति । तीरे नानावृक्षैः शोभितम् । गगनं चुम्बन्तीव ते वृक्षाः उन्नताः । किञ्च एतत्तीर्थं परितः स्थिता भूमिः तीर्थभूमिः इत्युच्यते ॥

अत्र ब्राह्मे द्वितीयाध्याये— साक्षात् श्रीनिवासमुद्दिश्य पाकं कर्तुं साक्षात् रमा बकुलमालिकां चोदितवती । बकुला पाकचतुरा पाकेन श्रीनिवासं प्रसाद्य तस्मात् एतत्तीर्थभूमेः स्वस्याः आधिपत्यं

भगवतः सदासंन्निधिं च वरं लेभे । अतः बकुलाधिष्ठितपर्यन्तभुवा स्वामिपुष्करिणीतीर्थे विराजते । एतादृश स्वामिपुष्करिणीतीर्थे ये स्नान्ति ते एव सुकृतिनः । ते स्वपुण्यं वर्धयन्ति । धनुर्मासशुक्लद्वादशी-अरुणोदये त्रयस्त्रिंशत्कोटिदेवाः इच्छया स्वामिपुष्करिणीतीर्थजले स्नान्ति । एवं सति मनुजाः अत्र तीर्थे अस्मिन् काले स्नानं आचरेयुरिति स्नानकालः नैव अवधारयितव्यः । ये नराः अत्र स्नात्वा स्वपितॄणां श्राद्धादिकं कुर्वन्ति तेषां पितरः सगणा एव सन्तुष्टाः स्वर्गे सुखं अनुभवन्ति ।*

अत्र पुराणर्षिः स्नानाधिकारिणः सम्बोधयति— भो भो स्नानाधिकारिणः पुराकृतपुण्यशेषेण युष्माकं मानुषं जन्म प्राप्तम् । एतावत् किं किं सुकृतं कृतवन्तः ? तत्रापि महामहिमोपेत-स्वामिपुष्करिणीतीर्थे स्नानेन नराः सुकृतिनः कृतकृत्याश्च भवेयुः । किञ्च अत्र स्नानकरणेन के के किं किं फलं लेभिरे ?

**मूलम्**

**शङ्खो नाम नृपः कश्चित् स्नानमात्रेण [1]नाकगः ॥ ७॥**

१. मुक्तिगः ।

**कल्याणकाण्डदीपः**

अयमंशो वामनपुराणे एकादशाध्यायादासप्तदशाध्यायं विस्तरेण व्याख्यातः । तदीषत् प्रदर्श्यते—

"शङ्खो नाम महाराजा हैहयानां कुलोद्भवः ।"

हैहयो यदुकुलोद्भवः । अतः सोमवंशजः ।

"सोमवद्भगवद्भक्तः प्रह्लादेन समो भुवि ।
सोऽयजत् सर्वभूतेशमश्वमेधादिभिर्मखैः ॥

नारायणं जगन्नाथं प्रणतार्तिहरं हरिम् ।
भक्तिभावेन महता त्विष्ट्वा सर्वमखैरपि ।
सोऽभवत् दुःखसन्तप्तो यतोऽपश्यन् जनार्दनम् ॥

* पुनर्वाराहे— वैकुण्ठे भगवत्क्रीडा वापी ऐरंमदतटाकः एव स्वामिपुष्करिणीतीर्थम् । वैकुण्ठात् गरुडानीतम् । राज्यभ्रष्टशङ्खनृपस्य स्वामिपुष्करिणीतीर्थस्नानेन स्वामित्वप्राप्तिः अभवत् । षट्षष्टिकोटितीर्थानि वसन्ति । एषु चक्रतीर्थ-देवतीर्थ-आकाशगङ्गा-कुमारधारा-पापनाशिनी-पाण्डवतीर्थ-स्वामिपुष्करिणीतीर्थादि सप्ततीर्थानि ।

तमन्तर्हितो भगवान् उवाच—

"नारायणगिरौ स्वामिपुष्करिण्यां स्नात्वा तपश्चर । त्वयि तत्र तपस्यति वत्सराणां सहस्रेऽतीते ब्रह्मादिष्टोऽगस्त्यो मुनीन्द्रैः सह मां द्रष्टुमागमिष्यति । ततो बहुतिथे काले साधने पक्वे सति मां द्रक्षसि" इत्यादिष्टे शङ्खे राजनि तपस्यति, अगस्त्योऽपि उक्तकाल आगतः । पुष्करिण्यां स्नात्वा बहुकालं तपश्चचार । अथाऽपि सोऽपि तमपश्यन् दुःस्थः, पुनर्ब्रह्मवाक्यात् सुस्थः । तदा शुक्रबृहस्पति-वसुराजाश्चागताः । तेऽप्येतेऽपि मिलित्वा पुष्करिण्यां स्नात्वा द्रष्टुकामा अतिशये आनर्चुः । तदा चतुर्थेऽह्नि सुमुहूर्ते भगवानाविर्बभूव । तं दृष्ट्वा सर्वे मुक्तिमर्थयामासुः । तेषां उचितकालभाविनीम् ।

"य एनां सेवते नित्यं स्वामिपुष्करिणीं शुभाम् ।
सोऽपि मुक्तिमवाप्नोति भुक्तिं चापि न संशयः ॥"

इत्युक्त्वा मुक्तिं ददाविति ।

तथा च **शङ्खो नाम** शङ्ख इति प्रसिद्धः कश्चिन्नृपः स्नानमात्रेण धनुश्शुक्लद्वादश्यरुणोदये काला-नुकूल्याभावेऽपि नित्यस्नानेन **नाकगः** मुक्तः । फलातिशयहेतुकालविशेषकृतेन स्नानेन मुक्तो भवतीति किमु वक्तव्यमित्यर्थः । **स्नानमात्रेण** इत्यस्यार्थो नित्यमिति ।

अस्य पुराणस्य आद्यचतुर्लक्षणी वेङ्कटाद्रेः तदीशस्य असाधारणालौकिकदेवगम्यचारित्र्यानु-वादिनी सूत्रकल्पा । अतः प्रकृतेतरपुराणानि विस्तरेणैतद्व्याख्यानरूपाणि । अतः तदनुसारेण अस्या-श्चतुर्लक्षण्या अर्थो बोध्यः । उत्तरा सप्तलक्षणी विस्तरेण लौकिकचतुरचारित्र्यानुवादिनी । अस्याः सप्तलक्षण्याः सङ्ग्रहेण व्याख्यानं वराहपुराणम् । अतः तदनुसारेण अस्यार्थो ज्ञातव्यः ।

अत्रेदं बोध्यम् । सोमसूर्यजाविति द्वौ शङ्खराजौ । अत्राद्यो रैवताख्यपञ्चममन्वन्तरकालिकः । स च

"वेदास्त्वधीता मम लोकनाथ तप्तं तपो नानृतमुक्तपूर्वम् ।
पूजां गुरूणां सततं करोमि परस्य गुह्यं न च भिन्नपूर्वम् ।
गुप्तानि चत्वारि यथागमं मे शत्रौ च मित्रे च समोऽस्मि नित्यम् ।
तथापि देवं शरणं प्रपन्न एकान्तभावेन भजाम्यजस्रम् ।
एतैर्विशेषैः परिशुद्धसत्त्वः कस्मान्न पश्येयमनन्तमेनम् ॥" (भारते शान्ति. ३३५.३-५)

इति नवमान्तगीताभाष्योदाहृतमोक्षधर्मवचनोक्तगुणयुक्तः । अयं च धर्मेण राज्यपालनं कृत्वा पुत्रं राज्येऽभिषिच्य नारायणगिरौ बहुतपस्तप्त्वा हरिं दृष्ट्वा मुक्तः ।

द्वितीयस्तु षष्ठचाक्षुषमन्वन्तरकालिकः । तस्मिन्नेव मन्वन्तरे "अष्टाविंशतिमे कलौ । यावच्चन्द्रार्कमेदिनी तावत् तिष्ठतु मे सेवा" इति श्रीनिवासं प्रति तपस्यतो हर्यनुग्रहात् जगद्गुरोः मध्वनाम्नः सकाशात् शुकमुखस्य तत्त्वोपदेशः । ततः स्वयोग्याप्राकृतविमानाधिष्ठितश्रीनिवासदर्शनम् । ततः तदाज्ञप्तकरिष्यमाणविमानस्य यावच्चन्द्रार्कमेदिनीस्थितिसमस्थेम्ने बहुकालं तपः तप्त्वा तस्मिन्नेव मन्वन्तरे, अनन्तरभावि एकोनविंशतितमकृतयुगपश्चाद्भागे यथादृष्टं विमानादि सेवां कृत्वा कृतकृत्योऽभूत् ।

अत्रापरो विशेषः । विमानसेवाकर्तारः त्रयः । तत्राद्य उक्तः । सूर्यवंशराजः शङ्खः । द्वावपरौ तोण्डिमानौ । अत्राद्यो वैवस्वतमनुकालिकः । तस्मिन्नेव मन्वन्तरे पञ्चविंशतितमे कलौ गोपीनाथेन ब्राह्मणेन सह रङ्गदासाख्यः शूद्रः श्रीनिवासाराधनपर आसीत् । स दैवापराधात् देहं परित्यज्य नारायणपुरे तोण्डिमानिति विश्रुतो द्राविडेश्वरचक्रवर्ती भूत्वा सप्तविंशतितमे कलौ मनुकल्पप्रलयाच्चिरविनष्टं पुरा शङ्खकृतं विमानमुद्धार । अयं च तोण्डिमानः पद्मावतीपितृव्यभिन्नः । अष्टाविंशे कलौ तु पद्मापितृव्यस्तोण्डिमानः पुनरुद्धार । तदिदानीमपि दृश्यत इति अयमर्थो ब्रह्मपुराणे भासते ।

**मूलम्**

**पुरा नारायणो नाम ब्राह्मणोऽङ्गिरसः सुतः ।**
**स्वामिपुष्करिणीतीर्थमहिम्ना स्नानजेन हि ।**
**वरं लब्ध्वा हरिं दृष्ट्वा जगाम हरिमन्दिरम् ॥ ८ ॥**

**कल्याणकाण्डदीपः**

**पुरा नारायण इति** । अयं च श्लोको विस्तरेण ब्रह्माण्डपुराणे व्याख्यातः । तत् मनाक् प्रदर्श्यते—

"ब्रह्मणाऽतिसमादिष्टो नारायणदिदृक्षया ।
नारायणाख्यविप्रोऽस्ति तदा गिरिवरे शुभे ।
स्वामिपुष्करिणीतीरे सुरसिद्धनिषेविते ।
विशुद्धात्मनि विप्रेन्द्रे तपस्यति चिरं तदा ।
अथास्मिन्नन्तरे तस्य तपसा परितोषितः ।
वासुदेवः प्रादुरभूत् वरदः सर्वदेहिनाम् ।
अद्यप्रभृति चायं वै गिरिस्त्वन्नामतः सदा ।

नारायणाचल इति प्रसिद्धो भवतु द्विज ।
इति तस्य वरं दत्वा स्वसायुज्यं ददौ हरिः ॥"

अत्र स्नानमात्रेणेत्यनुवर्तते ।

मूलम्

**रामोऽपि तत्र स्नानेन नीतां सीतामवाप च ॥ ९ ॥**

कल्याणकाण्डदीपः

**रामोऽपीति ।**

"स्वामिपुष्करिणीतीर्थे स्नात्वा पश्चाद्रणे रिपुम् ।
रामोऽथ रावणं हत्वा जयमाप्त इति श्रुतम् ॥" इति ।

मूलम्

**एवं तीर्थवरा तत्र स्वामिपुष्करिणी शुभा ॥ १० ॥**

कल्याणकाण्डदीपः

**एवं तीर्थवरेति ।**

"ब्राह्मणो यदि वा वैश्यः क्षत्रियः शूद्रजोऽपि वा ।
सपापो यदि वाऽपापः स्वामिपुष्करिणीजले ।
स्नात्वा चात्र वसन्तं मां ये नमस्यन्ति मानवाः ।
ददाम्याकल्पमेवाहं तेषां वासं त्रिविष्टपे ।
यः करोत्याप्लवं स्वामिसरसो जलमध्यतः ।
सोऽतीत्य निरयं सर्वं ब्रह्मभूयाय कल्पते ॥" इत्यादि ।

गूढकर्तृकव्याख्यानम्

पुरा यदुवंशे शङ्खो नाम नृपः । विष्णुभक्ताग्रेसरः । बहुयज्ञैः हरिं आराध्यापि तं अपश्यन् व्याकुलः स्वप्ने भगवदुपदिकः अत्र स्वामिपुष्करिणीतीर्थे स्नानं कुर्वन् हरिं प्रति तपः तप्त्वा हरिं दृष्ट्वा अन्ते नाकं प्राप । पुनः अङ्गिरोनाम्नः विप्रपुत्रः नारायणो नाम विप्रः नारायणगिरौ स्वामिपुष्करिणीतीरे, स्वामिपुष्करिणीतीर्थे नित्यं स्नानं चरन् । हरिं तपसा परितोष्य तदनुग्रहेण अन्ते मुक्तिं ययौ । नारायणविप्रनिमित्तेन सगिरिः नारायणगिरिरिति ख्यातः । पुनश्च दाशरथी रामः रावणापहृतसीतान्वेषणार्थं चरन्

स्वामिपुष्करिणीतीर्थे स्नात्वा तन्महिम्ना सुग्रीवादिसाहाय्येन उदधिं सेतुना बध्वा रावणादिकं हत्वा सीतां आप इति वदन्ति । लोके ब्राह्मणो वा वैश्यो वा किं जातीयो वा अस्मिन् स्वामीपुष्करिणीतीर्थस्नान-करणेन तत्रत्यभगवद्दर्शनेन च हर्यनुग्रहेण कल्पान्तं स्वर्गे सुखं वसति । एतादृशमहिमोपेतं स्वामि-पुष्करिणीतीर्थम् ॥

**मूलम्**

**तस्यास्तु वायुदिग्भागे वराहवदनो हरिः ॥ ११ ॥**

**कल्याणकाण्डदीपः**

एवं तीर्थमाहात्म्यमुक्त्वा वराहमाहात्म्यं वद इत्यस्य उत्तरमाह— **तस्यास्त्विति** ।

**मूलम्**

**धरामालिङ्ग्य तत्रैव सुपिप्पलविराजितः ।**
**त्रिकोटितीर्थजातीनां जन्मस्थानं सुबुद्धयः ॥ १२ ॥**

**कल्याणकाण्डदीपः**

**पिप्पलविराजितः** । "बोधिद्रुमश्चलदलः पिप्पलः कुञ्जराशनः" इति अमरः । पुनः पर्वत-माहात्म्यमुक्त्वोपसंहरति **त्रिकोटितीर्थजातीनामिति** । पर्वतमेनं जन्मस्थानं सुबुद्धयः ज्ञानिनो वदन्तीति शेषः । त्रिकोटीति मुख्यापेक्षया "षट्षष्टिकोटितीर्थानि पुण्यान्यत्र नगोत्तम" इत्युक्तेः । यद्वा, जातीना-मिति स्वप्रधानमेवास्तु, न भवितृप्रधानः । तथात्वे तिस्रश्च ताः कोट्यश्च त्रिकोट्यः ताश्च ताः तीर्थजातयश्च तथा । तथा च एकैककोटितीर्थजातीनां व्यक्तयः द्वाविंशति द्वाविंशति कोटयः इति षट्षष्टिकोटयः तथा चैकवाक्यतेति ।

**मूलम्**

**एवं गिरिवरं प्राप्य भगवान् वेङ्कटाचलम् ।**
**वैकुण्ठादधिकं मत्वा विचचार इतस्ततः ॥ १३ ॥**

**श्रीनिवासस्य स्वामितीर्थपश्चिमतीरस्थवल्मीकप्रवेशप्रकारः**

**न प्राप किञ्चिदास्थानं गूहनार्थं रमापतिः ।**
**इत्थं विचार्यमाणे तु स्वामिपुष्करिणीतटे ॥ १४ ॥**

**कल्याणकाण्डदीपः**

एवं गिरिवरं प्राप्येत्ययं श्लोक उक्तान्वयः। **विचचार इतस्ततः इति**। इतीति शेषः। प्रथममिति च। इत अस्मत्स्थानात्स्थानं ततः तस्मात्स्थानादिदं स्थानं इत्येवं विचचार प्रथमं सञ्चचारेत्यर्थः। किं किमत्रास्तीति परमाश्चर्यादिति भावः। 'इतस्ततः' इत्यनुषज्यते। 'आ स्थानम्' इति पदच्छेदः। आङ् ईषदर्थे कालक्षेपे आकाङ्क्षायां च। अत्र अमरोऽस्ति। तत इत्यावर्तते। 'यत्' इत्यध्याहारः। ततः प्रथमतः सञ्चारानन्तरं **रमापतिः** आ अवतारकृत्यं बह्वागामिकालान्तरभावि तावत्कालम्। अत्र यत्रकुत्रचित् यथाकथञ्चित् अनाविष्कारेण कालक्षेपं कर्तुं यद्गूहनं आ आकाङ्क्षितं तद्गूहनार्थं संवरणाय आ आकाङ्क्षितं यत् आ ईषत् स्थानं तत् किञ्चित् किमपि सद्यो न प्राप। तत् इतस्ततो यद्भवेदिति **विचचार** विचारयामासेत्यर्थः। यावद्वाक्यतात्पर्यार्थपौष्कल्यं तावदावर्तनस्य न्याय्यत्वात्।

**मूलम्**

**दक्षिणे विमलं दिव्यं वल्मीकं दृष्टवान् मुदा।**
**तिन्त्रिणीवृक्षमूलस्थं भगवान् जगदीश्वरः ॥ १५ ॥**

**कल्याणकाण्डदीपः**

दक्षिणे तु वातातपहिमशीतवर्षादि पीडारहितत्वादि विशेषेण विमलम्। निर्मातृ ब्रह्म वम्रिकीट-समूहेन निर्माय निसृष्टं दिव्यं द्युभ्यो द्युस्थेभ्यो देवेभ्य आवासार्हम्। अदितिकौसल्यादेवक्यादिदेवता-धिष्ठितम्। "द्युप्रागपागुदक्प्रतीचो यत्" इति शैषिको यत्।

**तिन्त्रिणीवृक्षमूलस्थं वल्मीकं** अन्तर्विशालविवरयुक्तं मत्वर्थे अच्। वल्मीकं नाकुम्। "नद्यां कूपतटे तरौ च विवरे शैले चितौ वल्मिके" इति प्राणेश्वरः। दृष्टवान् अभूदिति शेषः। इदमेवेदानी-मज्ञातवासाय परं स्थानमिति मत्वा ततः मुदा इष्टदर्शनजहर्षेण तत्र वल्मीकौ भगवान् जगदीश्वरो हरिः लीनः अन्तर्हितः अभूदित्यन्वयः। बिलद्वारेणान्तःप्रविश्य विलसदनन्तभोगपर्यङ्के अपरिमिताप्राकृत-शरीरभोग्यमानन्दमनुभवन्नास्ते शेते च इति भावः। वृक्षमूलस्थवल्मीकत्वात् स्थानस्य वातादि-पीडाभावः।

भगवानित्यनेन अणिमादि समग्रैश्वर्योक्त्या बृहच्छरीरस्य बिलद्वारेण अन्तःप्रवेशः समाहितः। **जगदीश्वरः** इत्यनेन किं जगन्नियन्तुरसंवृतायां भूमावासीनता अपि तु, मुक्तशेषपर्यङ्के इति लभ्यते। एवं भावयितुमघहारी हरिरिति।

स्वामिपुष्करिणीतीर्थे स्नात्वा तन्महिम्ना सुग्रीवादिसाहाय्येन उदधिं सेतुना बध्वा रावणादिकं हत्वा सीतां आप इति वदन्ति । लोके ब्राह्मणो वा वैश्यो वा किं जातीयो वा अस्मिन् स्वामीपुष्करिणीतीर्थस्नान-करणेन तत्रत्यभगवद्दर्शनेन च हर्यनुग्रहेण कल्पान्तं स्वर्गे सुखं वसति । एतादृशमहिमोपेतं स्वामि-पुष्करिणीतीर्थम् ॥

**मूलम्**

**तस्यास्तु वायुदिग्भागे वराहवदनो हरिः ॥ ११ ॥**

**कल्याणकाण्डदीपः**

एवं तीर्थमाहात्म्यमुक्त्वा वराहमाहात्म्यं वद इत्यस्य उत्तरमाह— **तस्यास्त्विति** ।

**मूलम्**

**धरामालिङ्ग्य तत्रैव सुपिप्पलविराजितः ।**
**त्रिकोटितीर्थजातीनां जन्मस्थानं सुबुद्धयः ॥ १२ ॥**

**कल्याणकाण्डदीपः**

**पिप्पलविराजितः** । "बोधिद्रुमश्चलदलः पिप्पलः कुञ्जराशनः" इति अमरः । पुनः पर्वत-माहात्म्यमुक्त्वोपसंहरति **त्रिकोटितीर्थजातीनामिति** । पर्वतमेनं जन्मस्थानं सुबुद्धयः ज्ञानिनो वदन्तीति शेषः । त्रिकोटीति मुख्यापेक्षया "षट्षष्टिकोटितीर्थानि पुण्यान्यत्र नगोत्तम" इत्युक्तेः । यद्वा, जातीना-मिति स्वप्रधानमेवास्तु, न भवितृप्रधानः । तथात्वे तिस्रश्च ताः कोट्यश्च त्रिकोट्यः ताश्च ताः तीर्थजातयश्च तथा । तथा च एकैककोटितीर्थजातीनां व्यक्तयः द्वाविंशति द्वाविंशति कोटयः इति षट्षष्टिकोटयः तथा चैकवाक्यतेति ।

**मूलम्**

**एवं गिरिवरं प्राप्य भगवान् वेङ्कटाचलम् ।**
**वैकुण्ठादधिकं मत्वा विचचार इतस्ततः ॥ १३ ॥**

**श्रीनिवासस्य स्वामितीर्थपश्चिमतीरस्थवल्मीकप्रवेशप्रकारः**

**न प्राप किञ्चिदास्थानं गूहनार्थं रमापतिः ।**
**इत्थं विचार्यमाणे तु स्वामिपुष्करिणीतटे ॥ १४ ॥**

**कल्याणकाण्डदीपः**

एवं गिरिवरं प्राप्येत्ययं श्लोक उक्तान्वयः। विचचार इतस्ततः इति। इतीति शेषः। प्रथममिति च। इत अस्मत्स्थानात्स्थानं ततः तस्मात्स्थानादिदं स्थानं इत्येवं विचचार प्रथमं सञ्चचारेत्यर्थः। किं किमत्रास्तीति परमाश्चर्यादिति भावः। 'इतस्ततः' इत्यनुषज्यते। 'आ स्थानम्' इति पदच्छेदः। आङ् ईषदर्थे कालक्षेपे आकाङ्क्षायां च। अत्र अमरोऽस्ति। तत इत्यावर्तते। 'यत्' इत्यध्याहारः। ततः प्रथमतः सञ्चारानन्तरं **रमापतिः** आ अवतारकृत्यं बह्वागामिकालान्तरभावि तावत्कालम्। अत्र यत्रकुत्रचित् यथाकथञ्चित् अनाविष्कारेण कालक्षेपं कर्तुं यद्गूहनं आ आकाङ्क्षितं तद्गूहनार्थं संवरणाय आ आकाङ्क्षितं यत् आ ईषत् स्थानं तत् किञ्चित् किमपि सद्यो न प्राप। तत् इतस्ततो यद्भवेदिति **विचचार** विचारयामासेत्यर्थः। यावद्वाक्यतात्पर्यार्थपौष्कल्यं तावदावर्तनस्य न्याय्यत्वात्।

**मूलम्**

**दक्षिणे विमलं दिव्यं वल्मीकं दृष्टवान् मुदा।**
**तिन्त्रिणीवृक्षमूलस्थं भगवान् जगदीश्वरः ॥ १५ ॥**

**कल्याणकाण्डदीपः**

दक्षिणे तु वातातपहिमशीतवर्षादि पीडारहितत्वादि विशेषेण विमलम्। निर्मातृ ब्रह्म वम्रिकीट-समूहेन निर्माय निसृष्टं दिव्यं द्युभ्यो द्युस्थेभ्यो देवेभ्य आवासार्हम्। अदितिकौसल्यादेवक्यादिदेवता-धिष्ठितम्। "द्युप्रागपागुदक्प्रतीचो यत्" इति शैषिको यत्।

**तिन्त्रिणीवृक्षमूलस्थं वल्मीकं** अन्तर्विशालविवरयुक्तं मत्वर्थे अच्। वल्मीकं नाकुम्। "नद्यां कूपतटे तरौ च विवरे शैले चितौ वल्मिके" इति प्राणेश्वरः। दृष्टवान् अभूदिति शेषः। इदमेवेदानी-मज्ञातवासाय परं स्थानमिति मत्वा ततः मुदा इष्टदर्शनजहर्षेण तत्र वल्मीकौ भगवान् जगदीश्वरो हरिः लीनः अन्तर्हितः अभूदित्यन्वयः। बिलद्वारेणान्तःप्रविश्य विलसदनन्तभोगपर्यङ्के अपरिमिताप्राकृत-शरीरभोग्यमानन्दमनुभवन्नास्ते शेते च इति भावः। वृक्षमूलस्थवल्मीकत्वात् स्थानस्य वातादि-पीडाभावः।

भगवानित्यनेन अणिमादि समग्रैश्वर्योक्त्या बृहच्छरीरस्य बिलद्वारेण अन्तःप्रवेशः समाहितः। **जगदीश्वरः** इत्यनेन किं जगन्नियन्तुरसंवृतायां भूमावासीनता अपि तु, मुक्तशेषपर्यङ्के इति लभ्यते। एवं भावयितुमघहारी हरिरिति।

**मूलम्**

**इदमेव वरं स्थानं तत्र लीनोऽभवद् हरिः ॥ १६ ॥**

**मूलकर्तृकव्याख्यानम्**

एतादृशमहिमोपेतस्वामिपुष्करिणीतीर्थस्य पश्चिमे श्रीवराहरूपी देवः धरां आलिङ्ग्य पिप्पलवृक्षेण राजिते वल्मीक आस्ते। किञ्च वेङ्कटगिरिः षट्षष्टिकोटितीर्थानां जन्मभूमिः राजते। साक्षात् हरिः वैकुण्ठं त्यक्त्वा एतत् गिरिं आगत्य वैकुण्ठात् अधिकत्वभावनेन अधितिष्ठति। हरिः, "अत्र गिरौ एकैकमपि स्थानं वरिष्ठम्। तथाऽपि मम अवतारः चिरात् भवितव्यः। तावत् अत्र मम वासः लोकस्य ज्ञातो माऽभूत्। अतः गुप्ततया अत्र वसन् कालं नयेत्। इति कृत्वा उद्दिष्टगुप्तस्थानं इतस्ततः अन्विष्यन् स्वामिपुष्करिणीतीर्थस्य दक्षिणदिशि हरिः वल्मीकं ददर्श। वल्मीकं तिन्त्रिणीतरोः अधस्तात् अतिष्ठत्। वात-आतप-हिम-शीत-वृष्ट्यादिभ्यः सुरक्षितं आसीत्। अतो हृष्टः अभूत्। निर्मात्रा ब्रह्मणा वम्रिकीटसमूहरूपेण निर्मितम्। अन्तः विशालविवरयुतम्। अदिति-कौसल्या-देवकीनां स्वजननीनां आवासयोग्यं आसीत्। एतादृशवल्मीकदर्शनात् हृष्टः। स्व-अज्ञातवासोचितस्थानं मत्वा जगदीशो हरिः बिम्बद्वारा अन्तः प्रविश्य तत्र विलसत् अनन्तभोगरूपपर्यङ्के शयानः अप्राकृतशरीरभोगार्हं आनन्दं अनुबभूव॥

भगवान् तत्र बिले लीनः कथम् ? "अणिमा महिमा चैव .... " तथा "प्राप्तिः प्राकाम्यमीशाता भूतयः", "अणोरणीयान् महतो महीयान्" इति अव्याकृतषडैश्वर्यसम्पन्नस्य हरेः किं दुष्करम् ! इति मन्तव्यम्। वल्मीकान्तर्भूमौ आसीनता नासीत्। अपि तु मुक्तशेषपर्यङ्के आसीनता आसीत् इति च मन्तव्यम्।

**मूलम्**

**एवं काले गते तत्र वत्सरायुतमागतम् ॥ १७॥**

**कल्याणकाण्डदीपः**

**एवं काल इति**। विनोदकलहान्तरितमहालक्ष्मीकटाक्षेण एवं अज्ञातवासप्रकारेण श्रीनिवासस्य **काले गते** गतवति सति **वत्सरायुतमागतं** प्राप्तं अभूत्।

**मूलम्**

**अतीते द्वापरे तत्र (चैव) अष्टाविंशतिमे कलौ।**

**अतीते वत्सरे किञ्चिच्चोलराजो नृपोत्तमः ।**
**अवतारं समापन्नो नागकन्यातनूदरे ॥ १८ ॥**

**कल्याणकाण्डदीपः**

द्वापरेऽतीतः द्वापरेऽतीताष्टाविंशतितमः कलिरागतः । तत्र **अष्टाविंशतिमे** अष्टाविंशतितमे मडार्षः । कलौ किञ्चित्संवत्सरेऽतीते श्रीनिवासस्याविष्कारकाले प्रत्यासन्ने, "चोलराजो नृपोत्तमः अवतारं समापन्नो नागकन्यातनूदरे" अयमर्धश्लोको ब्रह्माण्डे सप्तमे विस्तरेण व्याख्यातः ।

तथाहि किञ्चित्—

"कलौ चोलनृपः कश्चित् भविष्यति सुविश्रुतः ।
स कदाचिद्वने रन्तुमाखेटेन महीपतिः ॥

शेषाचलवनोद्देशे विचचार मृगान्तकः ।
मृगयाऽऽकृष्टचित्तोऽयं विचरन् कानने मुहुः ॥

न लेभे विश्रमं राजा यथेन्द्रियवशंगतः ।
ततस्तेन नरेन्द्रेण कन्यका नवरूपिणी ॥

नलिनोत्फुल्लनयना चन्द्रबिम्बनिभानना ।
विश्वविस्मयलावण्या श्यामा पीनपयोधरा ॥

राजहंसी चरन्तीव दृष्टा यौवनशालिनी ।
जहार चेतस्तस्येयं नदीव पुलिनं जलैः ॥

न शशाक ततो देशात् पदात् पदमपि स्वयम् ।
चलितुं नृपतिस्तत्र व्याधबद्धो मृगो यथा ॥

निर्जितः स्मर बाणेन सोऽयं मर्मसु ताडितः ।
विसृज्य सर्वसैन्यानि तत्समीपं ययौ नृपः ॥

ततः सा च वरारोहा विलोक्य नृपतिं तदा ।
विद्धा मदनबाणेन बभूवायतलोचना ॥

ततो राजा समागत्य पृष्टवान् मञ्जुभाषिणीम् ।
कुलं शीलं च वृत्तं च तस्याः स्वयमनिन्दितः ॥

का त्वं चरसि कल्याणि वने विगतभीः कथम् ।
न चेत् परिग्रहोऽन्यस्य वराङ्गे वद तत्त्वतः ॥
स्वयं तु कर्तुमात्मानं जीवितुं च त्वमिच्छसि ।

कन्यका—

धनञ्जयाभिधानस्य सर्पराजस्य धीमतः ॥
पुत्री वसामि पाताले लालिता पितुरन्तिके ।
पाणिग्रहणकाले वै सम्प्राप्ते च पिता मम ॥

चिन्तयामास को वाऽस्य भविता सदृशो वरः ।
पित्रा चानुमते चाहमभिलाषं तव प्रभो ॥

बन्धुभिश्च तवाभीष्टैरनुमन्तुमिहोत्सवे ।
पितरं तव पृच्छस्व गत्वा पातालमञ्जसा ॥

दास्यत्यनुमतिं नूनं गुणदर्शी तव स्वयम् ।
विनयं रक्ष कल्याण कथञ्चिदपि चानघ ॥

चन्द्रोदयविवृद्धोऽब्धिः किं वेलामतिलङ्घते ।

राजा—

नायं व्यतिक्रमः सुभ्रु नाधर्मश्चात्र वर्तते ।
गान्धर्वोऽयं विवाहोऽपि मुनिभिः परिकीर्तितः ।
अतस्त्वय्यनुरक्तं मां कृतार्थयितुमर्हसि ॥

जीवितं वा सुखं वाहं त्वां विना न च रोचये ।
इति ब्रुवति भूपाले कन्या कामवशं गता ॥

लज्जानतमुखी भूमिं लिखन्ती नखरेण सा ।
अथानया समागत्य लताविटपसंश्रितः ॥

अन्वभूत् सुरतं तस्या भूयो रागविवर्धनम् ।
यामावशेषेऽथ दिने गन्तुकामा कृतत्वरा ॥

नृपेणानुगता साथ निर्गता वरवर्णिनी ।

ततः पातालमाविश्य गत्वा च पितुरन्तिकम् ॥

चोलराजस्य चरितं कथयामास सर्वशः ।
नागराजोऽपि तच्छ्रुत्वा कथितं कन्यया शुभम् ॥

प्रहर्षमतुलं लेभे सदृशोऽयमिति ब्रुवन् ।
निर्गत्य नृपतिश्चापि लताविटपसंश्रयात् ॥

ससैन्यमावृतस्तावत् प्रययौ निजमास्पदम् ।
आपन्नसत्वा ददृशे नागराजस्य कन्यका ॥
अथ सा दशमे मासि पुत्रं प्रासूत सुन्दरी ।
दिने दिने च ववृधे चन्द्रमा इव सुन्दरः ॥

कस्यचित्त्वथ कालस्य लालितो मातुरन्तिके ।
प्रप्रच्छ मातरं बालः पितरं दर्शयेति च ॥

तच्छ्रुत्वा पूर्ववृत्तान्तं सा माताऽस्मै न्यवेदयत् ॥

तदाकर्ण्य बालो मातृदत्तबलेन भुवं प्राप्य राजानमाप्तवान् । कस्त्वं इत्यब्रवीद्राजा । अथ वृत्तं सर्वं न्यवेदयत् । ततः परिग्रहे राजा सन्दिग्धे ।

*ततः आकाशे सुरवाणी—*

मा विचारय राजेन्द्र पुत्रोऽयं ते न संशयः ।
चक्रवर्ती महाराजो भविष्यत्यसमो भुवि ॥

अतीव विष्णुभक्तश्च भविष्यति महामतिः ।
शेषाद्रौ च स्वयं व्यक्तं विष्णुमभ्यर्चयिष्यति ॥

तस्मै प्रीतः भगवान् अर्चाभावमतिक्रमन् ।
सल्लापं तेन सुचिरम् ........................ ।
अभिषेचय राजेन्द्र पुरं राज्येऽविचारतः ॥

तदाकर्ण्य राजा नागकन्यासमागमदेशे पुरं निर्माय पुत्रं राज्येऽभिषेचयत् ।

शशास पृथिवीं कृत्स्नां सशैलवनकाननाम् ।

ततः कदाचिद्गोपाला व्रजात् राजार्थं क्षीरमानयन्त आहुः । शेषाचले वल्मीकमार्गेण क्षीरानयने वल्मीकसमीपे क्षीरभाण्डानि भज्यन्ते न पश्यामोऽत्र कारणं इति ।

अथ राजा देवकृतमेतदिति निश्चित्य श्रीनिवासं ध्यायन् शुचिः सुष्वाप । ततः स्वप्नं ददर्श । प्रातरुत्थाय मन्त्रिणं आहूय दृष्टं स्वप्नमाह— स्वप्ने अद्भुतपुरुषो दृष्टः तमपृच्छन् को भवानिति । श्रीनिवासेन प्रेषितोऽस्मीत्याह— अथ "तं द्रष्टुं देवदेवेशं तद्विमानं च सुन्दरम् । याहि शेषाचलं शीघ्रं इत्थमाहूतवान् स माम् ॥" अथ तेनैव सह तमगमम् । तत्र गत्वा विमानमद्भुतं दर्शयामास । ततः सोऽन्तर्दधे । तद्विमानं चेति स्वप्नो दृष्ट इत्याह ।

अथ मन्त्रिणः सम्मन्त्र्याहुः । वल्मीकान्तरास्ते श्रीनिवासः । स च त्वयि कारुण्यं प्रातर्गोपालैः सूचितवान् । पुनः रात्रौ स्वप्नो दृष्टः । त्वयि महान् अनुग्रहः । श्रीनिवासस्येत्याहुः । अस्मिन्नवसरे कश्चित् शबरः प्रियङ्गुजीवन आजगाम । सोऽप्याह राजानम् । किमिति । नूतनधान्यं देवाय निवेदयित्वा भोक्ष्ये इति मम व्रतम् । तद्रक्षणे पुत्रं नियोज्य मध्वर्थं वनमगमम् । तद्भक्षितं पुत्रेण । तदा तं हन्तुं अहमुद्यतः । तदाकाशवाण्युवाच— "मा वधीः पुत्रं" इति । तदेवेश्वरपूजनमिति । अथान्यदप्युवाच— राजानं प्रति गत्वा दृष्टं स्वप्नमभिज्ञानतयोक्त्वा शेषाचलमागच्छेति वदेति । अथ राजा गोपालवचनस्वप्नशबरोक्ताकाशवाणीभिस्त्रिभिश्चोदकैस्तेनैव सह बहुक्षीरकलशान्यानाय्य शेषाचलमाययौ ।

ततः शबरेण सार्धं गत्वा तेन दर्शितं वल्मीकं दृष्ट्वा भगवद्दर्शनं कथं भवेत् ? इत्युवाच । ततः शबरः तं भेदय निशितैः खनित्रैरित्याह— स तत्र बिभेद भीतः । अथाभ्यसिञ्चद्वल्मीकमेव क्षीरघटैः । अथ दिव्यं रत्नोज्ज्वलं विमानं ददर्श । अथ प्रीतः श्रीनिवासः आह— वरं वृणीष्वेति । अथ राजपुत्रः रूपमिदं नान्तर्धानमियादिति । ॐ इत्युक्त्वा पुनराह स्वयं प्रीतः । शबरसखोऽहं तव सखित्वं प्रदास्य इति । पुनराहान्वहं त्रिसन्ध्यं मत्सेवां कुर्विति । सोऽपि सेवातत्परः तत्रैवास्ते । श्रीनिवासोऽपि तस्य सेवाकाले अर्चाभावमतिक्रम्य तस्मै हितमुपदिशति । कन्या यदा याति दिवाकरः तदा ध्वजारोहादि अवभृतान्तं महोत्सवं करोति ॥ इति ब्रह्माण्डे नवमः ॥

**मूलम्**

**[1]राज्ञि शासति भूखण्डं बहुपुष्पफलप्रदम् ॥ १९ ॥**

**बहुक्षीर[2]दुघा गावः पुत्रा वै पितृवत्सलाः ।**
**काले वर्षति पर्जन्यः क्षेत्राश्च (वै) बहुधान्यदाः ॥ २० ॥**

१. नृपे । २. प्रदा

**कल्याणकाण्डदीपः**

**भूखण्डमिति**। "भित्तं शकलखण्डेव पुंसि" इत्यमरः। **क्षेत्रा वै बहुधान्यदाः**। ननु लिङ्गानुशासने 'पुमान्' इत्यधिकारे 'सोपध' इत्यनेन प्राप्तस्य पुंस्त्वस्यापवादतया द्वारादिसूत्रेण त्रान्तं सलोपधं इत्यमरेण च क्षत्रक्षेत्रमित्रकलत्रादीनां नपुंसकत्वविधानात् कथं क्षेत्रा इति प्रयोगः ? इति चेत्, न। सत्त्वादिगुणोपचयविवक्षया साधुत्वोपपत्तेः। अर्धर्चादित्वं वा आर्षत्वं वा कल्प्यम्। लीलया कृषावपि बहुधान्यदाः।

**मूलम्**

**नार्यः पतिव्रताः सर्वाः [१]स्वपत्न्यां पुरुषा रताः।**
**[२]इतराङ्गीकृते राज्ये यजनानन्दतत्पराः ॥ २१ ॥**

१. पुरुषा नियतस्त्रियः। २. विप्रास्तेन कृते।

**कल्याणकाण्डदीपः**

**इतराङ्गीकृते**। इतराङ्गमपरगात्रं अनितराङ्गमितराङ्गत्वेन सम्पद्यमानं कृतं इतराङ्गीकृतम्। तस्मिन् राज्ञेति शेषः। तथा च राज्ञा राज्ये अपरगात्रीकृत इत्यन्वयः। ममेदमेकं गात्रं अपरमिदं गात्रम् इत्यभिमानेन पाल्यमान इत्यन्वयः।

अङ्गगात्रान्तिकोपायप्रतीकेष्वप्रधानके।
दशभेदे तु पुंसि स्यादङ्गेत्यामन्त्रणेऽव्ययम् ॥ *इति नानार्थरत्नमाला।*

**यजनानन्दतत्पराः** यजनं यागः परमेश्वराराधनं च। तन्निष्पत्त्या जायमान आनन्दो यजनानन्दः। तस्मिन् तत्परा आसक्ताः। साङ्गोपाङ्गसाधननिष्पत्तौ सत्यां साधकानां एवमानन्दो जायते। साङ्गोपाङ्गसाङ्गोपाङ्गसाधनसम्पत्तिनान्तरीयका वित्तव्ययायास चिन्तादय उत्तीर्णाः। किमवशिष्टमस्माकं फलीभूतमानन्दानुभवमात्रमिति। यद्वा, यजनमिति सकलं विहितकर्मोपलक्ष्यते। आनन्द इति ब्रह्म। तयोः तत्पराः तन्निष्ठाः। "आनन्दो ब्रह्मेति व्यजानात्", "आनन्दो नन्दनो नन्दः" इति तच्छ्रुतिनामसु जना अभूवन्निति शेषः। तत्कालिकजना उभयपथनिष्ठाः नान्ये तद्वर्जिता इति भावः। अथवा परमपुरुषार्थोत्तमस्य प्रथमब्रह्मज्ञानमङ्गं तदङ्गविहितं कर्म उभयम्। तदङ्गे सदाचारप्रवृद्धहविषी।

अत्र बहुपुष्पफलगोक्षीरधान्यानि समृद्धहवींषि पितृपतिपत्नीव्रतं सदाचारः। आभ्यामुक्ताङ्गाभ्यां यानीतराण्यङ्गानि स्वाम्यादि सप्ताङ्गानि यस्य तत् इतराङ्गम्। तादृशीकृते राज्ये राज्ञः कर्मणि भावे वा

इत्यर्थः । मोक्षाद्याहारपक्षानङ्गीकारे राजा राज्याङ्गं स्वामिपदेन गृहीतः । स च श्रीनिवासकृतः । तदितराणि स्वेतराण्यमात्याद्यङ्गानि षट् तत् यस्य तत् । तादृशीकृते राज्ये इत्येवं वा । यदा स्वामी धनी न राजा तदा प्रथमत एव उक्तार्थः ।

प्रथमार्थे,

"यथा दृष्टिः शरीरस्य नित्यमेव प्रवर्तते ।
तथा नरेन्द्रो राष्ट्रस्य प्रभवः सत्यधर्मयोः ॥" *इति वसिष्ठनीतिः ।*

प्रमाणं इतराङ्गीकृत इत्यादि मोक्षाध्याहारसूचकम् ।

"स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च ।
राज्याङ्गानि प्रकृतयः पौराणां श्रेणयोऽपि च ॥" *इत्यमरः ।*

स्वामी राजेति वन्द्यघट्टः धनीत्यन्यः । "इति राज्ञा कृते राज्ये" इति पाठः सुगमः । परन्तु इतिशब्दमहिम्ना वल्मीकगेन स्वसखिनार्चाभावमतिक्रम्योपदिष्टहितेन राज्ञा तदाराधनमहिम्ना भूखण्डं बहुपुष्पफलं कृतम् ।

गावः बहुक्षीरदुघाः कृताः, पुत्राः पितृवत्सलाः कृताः, पर्जन्यः कालवर्षणकर्ता कृतः इत्याद्येवं योजना द्रष्टव्याः ।

इतराङ्गीकरणयजनानन्दतत्परत्वयोः भावलक्षणसप्तमीबोधितलक्ष्यलक्षणभावस्तु वसिष्ठोक्त-राजनीतिसिद्धः ।

**गूढकर्तृकव्याख्यानम्**

एवं हरिणा वैकुण्ठं विहाय वेङ्कटगिरिं आगत्य गिरिगत-स्वामिपुष्करिणीतीर्थदक्षिणदिशि वल्मीकं उत्तमस्थानत्वेन अधिष्ठितवता अयुताब्दानि गतानि । द्वापरयुगं प्राप्तम् । तदपि गतम् । कलौ अष्टा-विंशतितमे प्राप्ते ततः तस्मिन् संवत्सरः किञ्चित् जातः । तदा हरि-अवतारः समासन्नः ।

(ब्रह्माण्डे सप्तमाध्याये) तत्काले कस्याञ्चित् नागकन्यायां उदरे चोलराजः जातः ॥ अत्र कथा— एकः चोलदेशाधिपः एकदा मृगयार्थं शेषाचलवनदेशे आगत्य तत्र अतिमनोहररूपलावण्य-वतीं काञ्चित् नागयुवतीं दृष्ट्वा तत्सौन्दर्यपरिमोहितः तां विवोढुकामः "मङ्गलकरि ! त्वं का ? तव कुलशीलादिकं वद । त्वं अन्यस्य अपरिगृहीता चेत् मां विवोढुं मनो विधेहि" इति ययाचे । सा वनिता

पुरुषश्रेष्ठ ! अहं नागकन्या । धनञ्जयाभिधसर्पराजपुत्री । अहं आर्यगुरुजनविधेया । यदि मत्पितृ-बन्धुमुखाः अनुमन्येरन् तवेष्टं पूरयेयम् । अद्य त्वं पातालं गत्वा मम पितरं पृच्छ । पिताऽपि गुणज्ञः । गुणानुरागी पिता आवयोः विवाहं अनुमन्यते । महाप्रभो ! विवेकिन् ! विनयं रक्षस्वेति उवाच । राजा "सुस्मिते ! गान्धर्वविधिना आवयोः सम्बन्धः प्रशस्यः । शास्त्रसम्मतः । धर्महानिर्न । नापि गुरुजनादेशातिक्रमः इत्याह । ततः नागकन्यका राजोक्तिं अङ्गीचकार । उभौ वने रम्यलता-वृक्षछन्नदेशे सुरतसौख्यं अन्वभवताम् ।

तद्दिनान्ते नृपानुमता नागकन्यका पाताले गत्वा पितरं तावद्वृत्तमाह । पिताऽपि धनञ्जयः अनु-मुमोदे । एवं सति कालेन नागकन्या गर्भिणी जाता । दशमासान्ते उत्तमसुतमसूत । जातः दिने दिने वर्धमानः मात्रा लालितः । एकदा पुत्रः "मत्पितरं दर्शय" इति मातरं पप्रच्छ । तावद्वृत्तमखिलं माता सुतं न्यवेदयत् । ततः मात्रनुमतः पुत्रः पितरं द्रष्टुं गच्छन् चोलं ददर्श । चोलः "कस्त्वम् ?" इति पप्रच्छ । बालः वृत्तमखिलं आह । तदा चोलः संशयितः । क्षणात् गगनवाणी "राजन् ! सत्यम् । अयं तव सुतः । अयं विष्णुभक्तः, चक्रवर्ती स्यात्, परिगृहीष्व" इत्याह । तेन तुष्टः चोलः पुत्रमानीय चोलराज्ये अभ्यषिञ्चत् । एवं सः चोलपुत्रः शैलवनयुतं सकलपृथिवीं शासन् आसीत् । एवं सति तद्राज्यं सर्वविधफलसम्पादकं आसीत् । तत्र गावः बहुक्षीरदाः । गृहे गृहे पुत्राः "जीवतोः वाक्यकरणात् प्रत्यब्दं भूरिभोजनात् । गयायां पिण्डदानाच्च त्रिभिः पुत्रस्य पुत्रता", "यः प्रीणयेत् सुचरितैः पितरं स पुत्रः ।" इत्युक्तेः । "मातृदेवो भव, पितृदेवो भव, आचार्यदेवो भव" इत्युक्तेः । "तेषां त्रयाणां शुश्रूषा परमं तप उच्यते" इति पुत्राः मातापितृभक्ताः । चोलदेशे काले काले वृष्टिरभूत् । सर्वक्षेत्रेषु अल्पकृष्यैव बहुसङ्कचसम्पत्, धान्यवृद्धिः आसीत् । नार्यः पतिव्रताः । साध्वी पतिं दुश्चरितं अपि देवमिव पूजयन्ती । कदाऽपि अहितं नाचरेत् । पश्चात् शयनम् । पूर्वं उत्थानम् । सर्वक्रियासु तदनुमत्यैव वर्तेत । पतिसेवां विना नान्यत् व्रतम् । पत्यादायमनतिक्रम्य व्ययं कुर्यात् । पतिकृतव्रतोपवासादि स्वयमपि आचरेत् । कठिणोक्त्या अव्यथयन्ती । निर्निमित्तं हासं अश्रुमोचनं न कुर्यात् । निर्जने अनवस्थानम् । गृहं अलङ्कुर्यात् । पाकचतुरा । शिशुरक्षणदक्षा । परपुरुषं मनसाऽपि न चिन्तयेत् इत्येवमादिकं विदितवत्यः आचरणशीलाः । पुरुषाः परसतीषु अननुरक्ताः । विप्राः यजनानन्द-तत्पराः । यजन-याजनादिषट्कर्मनिरताः । यजनादिकर्मानुष्ठानेन चित्तशुद्धिं गत्वा "आनन्दो ब्रह्मेति व्यजानात्" इति श्रुतेः "आनन्दो नन्दनो नन्दः" इति आनन्दस्वरूपभगवद्ज्ञानेन आनन्दिताः । ब्रह्मनिष्ठाः । साकल्येन श्रीनिवासपूजामहिम्ना तद्राज्ये सर्वे सर्वथा सुखिनः । एवं चोलप्रभुत्वे श्रीनिवासाविर्भावकालः प्राप्तः ।

**मूलम्**

**चोलनृपगृहे ब्रह्मादीनां धेन्वादिरूपेण स्थितिः**

**तस्मिन् काले विधिः साक्षाद् [1]धेनुरूपं समाश्रितः ।**
**चोलराजगृहं प्राप्य [2]द्रव्यमौल्येन वत्सका ॥ २२ ॥**

१. धेनुरूपी समागतः । २. द्रव्यमूल्यात् सवत्सका ।

**कल्याणकाण्डदीपः**

"तस्मिन् काले विधिः साक्षाद् धेनुरूपं समाश्रितः । चोलराजगृहं प्राप्य द्रव्यमौल्येन वत्सका" इत्यन्तम् एकं वाक्यम् ।

"एषा हि प्रकृतिः स्त्रीणामाचष्टे रघुनन्दन ।
समस्थमनुरञ्जन्ति विषमस्थं त्यजन्ति च ॥

शतह्रदानां लोलत्वं शस्त्राणां तीक्ष्णता तथा ।
गरुडानिलयोः शैघ्र्यमनुगच्छन्ति योषितः ॥"

इत्यगस्त्योक्तनीत्या स्त्रीणां विषमस्थपत्यनादरः स्वभावः । कासाञ्चित्साध्वीनां सत्स्वभावस्तु सद्धर्मशिक्षादिसहकारिसामर्थ्येन सहजशक्तिप्रतिकूलनात् । ता अपि पुत्रपौत्रादिषु जातेषु तेषु च स्वमनोऽभीष्टदाननिपुणेषु भर्तारं नाद्रियन्ते । तेनाप्यव्याप्तेर्वार्धक्यादन्यथासिद्धेश्च । तदा धर्मज्ञाः पुत्रादयः तं परिचरेयुः । अन्यथा सर्ववाच्यविवक्षतां भवति । अतो मात्रानादरेऽपि अस्माभिः सेवा कर्तव्येत्यत इति कथासन्दर्भवाक्यशेषः ।

**वत्सका** । अल्पो वत्सो वत्सकः, सोऽस्यास्तीति वत्सका । अल्पे इति कः । तत अर्श आद्यच् । तर्णकवतीत्यर्थः । उपचयापचयलक्षणे द्वे एव वयसीति पक्षे तारुण्यस्य प्राथम्यात् तरुणवाचिवत्सशब्दात् वयसि प्रथम इति ङीषि प्राप्ते तदपवादतया अजादित्वात् टाप् । वत्सा तरुणी । सैव वत्सका । स्वार्थे कः । तरुणीत्यर्थः । त्रीणीति पक्षे बाल्यवयोवाचिवत्साशब्दात् इवार्थे कः । दर्शन आकारतो बालेव, फलतो वञ्जुला । तथा च तन्त्रन्यायेनात्रार्थत्रयम् । राजगृहमित्यविलम्बाय । अन्यथा पुरं प्रति प्राप्तौ पर्यायेण धनिकामात्यप्रधानादिगृहप्राप्त्या "रत्नं हि भगवन्नेतद्रत्नहारी च पार्थिवः" इति न्यायेन राजभीत्या तृणचरणा[illegible]पि अन्तर्धाय चारयेयुः ।

तथा च श्रीनिवाससेवा कथं घटेत ? ननु मा घटिष्टे । इदानीं कालक्रमेण यदा चारचक्षुषा राजदृष्टिः तदा राजगृहप्राप्तिः । तदा सङ्घटिष्यते सेवा इति चेत् । यद्यपि सङ्घटिष्यते तथापि काल-विलम्ब इति भावः । भूत्वेत्यध्याहारः । श्रीनिवाससेवां कुर्वे इति च ।

तथा चेत्थं योजना । अतः तस्मिन् काले श्रीनिवासस्य स्वात्माविष्करणकाल इत्यर्थः । साक्षात् विधिः नाभिजन्मा । न तु नियतिः । वत्सका तर्णकवती तरुणी च । वत्ससमानाकारा च या धेनुः तादृशी भूत्वा द्रव्यमौल्येन चोलराजगृहं प्राप्य श्रीनिवाससेवां कुर्व इत्यालोच्य धेनुरूपं समाश्रित इति ।

**मूलम्**

**ब्रह्मा धेनुः शिवो वत्सो गोपाली कमलालया ।**
**पश्यन्ती पतिमार्गं तु चोलराजानमभ्यगात् ॥ २३ ॥**

**कल्याणकाण्डदीपः**

ब्रह्मा धेनुर्जातः । को वत्सः ? को विक्रेता ? इति श्रोतुर्विशेषजिज्ञासामधिकविधानायोक्तमनूद्य पूरयन्नाह— **ब्रह्मा धेनुरित्यादिना** । जेष्ठत्वात् ब्रह्मा धेनुः । औचित्यात् तत्पुत्रः शिवो वत्सः । पुत्रादीनां दानविक्रययोः पितरौ प्रभू इति । असूर्यं पश्यानां राजदाराणां दर्शनार्थं च कमलालया गोपाली जाता । पुंयोगे ङीष् । पश्यन्ती पतिमार्गं तु चोलराजानमभ्यगात् । पत्युः श्रीनिवासस्य वल्मीके क्षीरसेचनरूपसेवानुकूलो यो मार्गः धेनूनां तृणस्वीकाराय गमनागमनमार्गः तं पश्यन्ती सती कमला-लया । चोलराजानमभि अभिमुखं अविलम्बाय शकुनाय च अगात् । अत्र अभ्यगात् इत्यनेन प्रतिपादिताभिगमनरूपार्थशक्त्या अयमर्थो लभ्यते । गच्छन्तमभ्यगादिति । किमेतावता प्राप्तं प्रापम् । तथाहि । राजा श्रीनिवाससेवायै गिरिं गन्तुं सौधात् निर्ययौ । तदैव धेनुरभ्यगात् । तां दृष्ट्वा

"कन्या गौर्भेरिशङ्खदधिफलकुसुमं पावकं दीप्यमानं
यानं वा विप्रयुग्मं हयगजवृषभं पूर्णकुम्भद्वयं च ।
उद्धृत्यापेयकुम्भं जलचरयुगलं सिद्धमन्त्रं शवं वा
वेश्यास्त्रीमद्यमांसं शुभशकुनमिदं मङ्गलं मङ्गलानाम् ॥"

इति शाकुनोक्तमार्गेण परार्थं नीयमाना अपि मम शुभशकुनमिदं सति सम्भवेन परित्यजेत् । राजा किमियं क्रय्या ? इति आलोचयामास । तथैवेत्याह गोपाली । तत्रापि मम विवक्षाविशेषोऽस्तीति

पुनराह गोपाली । धेनुरियं न साधारणी । किन्तु, तर्णकवती तरुणी आकारे वत्ससमाना वञ्जुला नैचिकी कामधेनुरिव । अस्याः क्षीरममृतमिव । एतत् पीत्वा नरा अजरा अमरा अपारवीर्या अलिकेशा अतिकान्ता दृढरदना भवन्ति । अतः त्वया त्वदीयसाधारणधेनुगणनिविष्टतया दशानामेकादश इति नावेक्षणीया । अपि तु, पृथगुपचरणीया । यद्यपि एतद्धेनुरत्नं अनर्घ्यगुणं न मूल्यमाप्यते । ममाप्येतत् परिक्रयणे तादृश आपत् नास्ति तथापि मम यजमानस्य योगक्षेमाय विक्रीणीये तथा विदधासि चेत् अस्तु । तथा अन्यथा "अन्यां गतिं गमिष्यामि" इति । अथ राजा काममस्तु । तथा मम महान् लाभः । त्वमन्तःपुरं प्रविश्य सम्राज्ञ्यै वृत्तं वृत्तान्तं निवेद्य मूल्यं गृहीत्वा धेनुं दत्वा तया सम्मानिता स्वधाम प्रविशेत्याह ।

## मूलम्

**विक्रीत्वा गां महालक्ष्मीर्जगाम निजधाम च ।**
**बहुक्षीरधरां साध्वीं पुत्रार्थं तां पृथक्कृताम् ॥ २४ ॥**

### कल्याणकाण्डदीपः

ततः किमभूत् ? इत्यत आह— **विक्रीत्वेति** । संरोहयित्वेतिवत् साधु । विक्रीय मूल्यं गृहीत्वा स्वस्वत्वं परित्यज्य राज्ञो स्वत्वं सम्पाद्य वृत्तं वृत्तान्तं निवेद्य । तया प्रतिग्राहितताम्बूलकुङ्कुमगन्धमाल्या सती **निजधाम** करवीरपुरं जगामेत्यन्वयः । अथ तां विक्रीतां धेनुं बहुक्षीरधारां वञ्जुलां **साध्वीं** सुव्रतां दामसन्धानं विनाऽपि सुदोह्यां अत एव पुत्रायेदं **पुत्रार्थं** धेनुवत्सक्षीरादि इति कृत्वा पुत्रोद्देशेनेति वा । **पृथक्कृताम्** । कौशेयं धाम पृथग्गोष्ठं पृथक्प्रथममध्यमोत्तमभेदेन त्रयोऽन्तर्वंशिका अधिकारिणः पृथग्दोग्ध्रीत्येवं पृथक्कृततृणाचारप्रचारविचारोपचारविहाराहारां चकारेति शेषः । एवं वर्तमानवेलायां धेनुर्गेहे बहुक्षीरं दोग्धि । एतदप्यमृतमिव पीत्वा राजादयः अमरा इवाभूवन् ।

### गूढकर्तृकव्याख्यानम्

तदा नाभिजन्मा वत्सका तर्णकवती तरुणी च या धेनुः तादृशधेनुरूपं आश्रित्य शिवं वत्सं कारयित्वा राजगृहं त्यक्त्वा अन्य-अमात्यधनिकगृहं प्राप्तं चेत् ते कदाचित् राजभीत्या बहिः स्वेच्छया तृणचरणजलपानाय अदत्वा अन्तर्धाय चारयेयुः । एतेन श्रीनिवाससेवा आत्मनः न घटते । घटिताऽपि कालविलम्बो भवेत् इति मत्वा राजगृहमेव प्राप्तव्यं इति न्यश्चिनोत् । पुत्रादीनां दानविक्रययोः पितरौ प्रभू इति राजदाराणां दर्शनार्थं कमलालया गोपाली जाता । एवं रमा गोपाली भूत्वा धेनुवत्सरूपाभ्यां

विधिरुद्राभ्यां सह आगच्छन्ती । सामान्यतः धेनवः तृणानि चरितुं यैः यैः मार्गैर्गच्छन्ति निर्गच्छन्ति तेषु मार्गेषु येन मार्गेण आगतं चेत् श्रीनिवासावासवल्मीकं आसाद्य तत्र पतिप्रीत्यर्थं क्षीरसेचनं कृत्वा कृतकृत्या भवेयम् । तादृशवल्मीकप्राप्त्यै अनुकूलमार्गः कोऽस्ति इति पश्यन्ती । एतत् क्रिया-निष्पत्तौ विलम्बो मा भूत्, अन्यथा पतिसेवाभङ्गः । राजगृहप्राप्तौ अपि शुभदर्शनपूर्वकं गच्छेत् इति सङ्कल्प्य गन्छन्ती मार्गे चोलराजं श्रीनिवाससेवायै शेषाचलं गन्तुं सौधात् निर्गत्य अभिमुखमायान्तं अपश्यत् ।

सवत्सां धेनुं अभिमुखमायान्तीं दृष्ट्वा एवं चिन्तितवान्— "कन्यागौर्भेरिशङ्खौ दधिफलकुसुमं पावकं दीप्यमानं यानं वा विप्रयुग्मं हयगजवृषभं पूर्णकुम्भद्वयं च । उद्धृत्यापेयकुम्भं जलचरयुगलं सिद्धमन्नं शवं वा वेश्यास्त्रीमद्यमांसं शुभशकुनमिदं मङ्गलं मङ्गलानाम् ॥" इति शाकुनोक्तमार्गेण कार्यार्थं प्रयातो मम शुभशकुनमभूत् । यद्यपि इयं गोपाली इमां सवत्सां धेनुं परार्थं नयन्ती, तथाऽपि लोके ग्राह्यं किमपि वस्तु शुभशकुनपूर्वकं दृष्टं चेत् अवश्यं ग्राह्या, न तु त्याज्या इत्यालोच्य, "गोपालि ! इमां धेनुं क्रेतुमिच्छामि, धेनुः क्रय्या वा" इति पप्रच्छ । गोपाली आह— "राजन् धेनुरियं क्रय्या क्रेया च । तत्रापि मम विशेषविवक्षा । मदानीतेयं धेनुर्न साधारणी । किन्तु तर्णकवती तरुणी, आकारे वत्ससमाना, वञ्जुला नैचिकी कामधेनुरिव । अस्याः क्षीरममृतमिव । एतत् क्षीरं पीत्वा नरा अमरा अजरा अपारवीर्या अलिकेशा अतिकान्ता दृढरदना भवन्ति । अतः इयं धेनुः क्रीता चेत् त्वदीयेतरसाधारणधेनुगणे निवेश्य दशानां एकादशेति नावेक्षणीया । पृथक् उपचरणीया । धेनुरत्नं इदं अनर्घ्यगुणं न मौल्यमाप्यते । ममापि एतत् परिक्रयणे तादृशी आपन्ना अस्ति । तथाऽपि मम यजमानस्य योगक्षेमाय विक्रीणामि । राजन् ! मदुक्तिनियमेन प्रवर्तते चेत् इत्थं क्रय्यम् । नो चेत् अन्यां गतिं गमिष्यामि" इत्याह ।

गोपालीवचनं श्रुत्वा चोलः— "कामं अस्तु । तथा ममाद्य महान् लाभः । त्वं अद्य अस्मदन्तः-पुरं प्रविश्य सम्राज्ञै वृत्तं वृत्तान्तं बोधय । मूल्यं गृहीत्वा धेनुं दत्वा तया सम्मानिता स्वधामप्रविश" इत्याह । तथैव गोपाली राज्ञै धेनुं दत्त्वा तया कुङ्कुमहरिद्रागन्धमाल्यादि गृहीत्वा करवीरं जगाम ॥ ततः किमभूत् ? विक्रयदिनमारभ्य धेनुः राजगृहे बहुक्षीरं ददाति । किञ्च वञ्जुला साध्वी सुव्रता । दामसन्धानं विनाऽपि सुदोह्या । अनितरसाधारणधेनुः । अतिश्रेष्ठा । अतः एतद्दीयमानक्षीरं मम पुत्रार्थं भवतु इति कृत्वा तद्धेनुकृते तद्बन्धनाय पृथक् कौशेय दाम । तद्वासाय पृथक् गोष्ठं प्रथम-मध्यम-उत्तमभेदिनः त्रयः अन्तर्वंशिकाः अधिकारिणः पृथक् दोग्ध्री इत्येवं पृथक् तृणाचारं तदर्थमेव विजराहारः इत्येवमादि चकार । एतावत् धेनुः नृपगेहे नित्यं बहुक्षीरं ददाति । एतत् क्षीरं पीत्वा अमृतमिव राजादयः अमरा इव जाताः । ततः किमभूत् ?

**मूलम्**

**धेनुद्वयसहस्रेण साकं श्रीवेङ्कटाचले।**
**सा गौर्गच्छति नित्यम् ................ ॥**

**कल्याणकाण्डदीपः**

अथ कालान्तरे राज्यभोगविरक्तो राजा श्रीनिवाससमीप एव कृतेन कुशलेन प्रारब्धमनिष्टं क्षपयिष्यामीति मनो बभूव। यदा तदा धेनुरपि वेङ्कटाचलं गन्तुमुपक्रान्तेत्याह **धेनुद्वयसहस्रेणेति**। श्रीवेङ्कटाचले धेनुद्वयसहस्रेण **साकं** सह तृणस्वीकाराय **सा गौः नित्यं गच्छति**। पृथक्कृतामपि तां गोपालोऽपि पशूनां स्वस्वयूथनिविष्टतया यथा मनःसञ्चारे सन्तोषातिशयः, अतः साकं चरित्विति तत्याज।

"स्त्रियो जारेण तुष्यन्ति गावः स्वच्छन्दचारतः।
कुञ्जराः पांसुवर्षेण ब्राह्मणाः परनिन्दया॥" इति स्वभावोक्तेः।

**मूलम्**

**............................ [1]तै राजधेनुगणैस्तथा ॥ २५ ॥**

**तत्र तत्र समाजिघ्रन् भूधरेन्द्रे वृषाकपिम्।**
**विचिनोति स्म सर्वत्र धेनुरूपी विधिस्तदा ॥ २६ ॥**

**ततः कालेन महता स्वामिपुष्करिणीतटे।**
**वल्मीकस्थं हरिं ज्ञात्वा तुतोष मनसा विधिः ॥ २७ ॥**

**समासिञ्चच्च वल्मीकं समन्तात् क्षीरधारया।**
**तदाप्रभृति नित्यं तु राजधेनुगणैः सह ॥ २८ ॥**

**तत्र गत्वाऽतिभक्त्यैव वल्मीके क्षीरसेचनम्।**
**[2]जगन्नाथप्रसत्त्यर्थं धेनुरूपी पितामहः ॥ २९ ॥**

**करोति सततं गेहे [3]न क्षीरं च ददाति सा ॥ ३० ॥**

१. ..................वै रमानाथं विचिन्वती।
२. जगन्नाथस्य प्रीत्यर्थं। ३. नैव क्षीरं।

**कल्याणकाण्डदीपः**

'तैः राजधेनुगणैः' इत्यादि 'सा' इत्यन्तं एकं वाक्यम् । तथेति तन्त्रम् । तथा चेत्थं योजना । तैः राजधेनुगणैः ।

तया साकं **गत्वा** तत्र वल्मीकदेशे गत्वा **अतिभक्त्यैव जगन्नाथस्य** प्रीत्यर्थं **धेनुरूपी पितामहः तत्र वल्मीके क्षीरसेचनं सततं** प्रतिदिनं मध्याह्ने सायाह्ने च यदा **करोति** तदा **सा** चापि त्रिकालदोग्ध्री तादृश्यपि धेनुः **सततं** प्रतिदिनं **गेहे** सायाह्ने **क्षीरं न ददाति** इति ।

**गूढकर्तृकव्याख्यानम्**

ततः कालेन चोलः राज्यभोगेषु विरक्तः श्रीश्रीनिवाससमीपे सदा स्थित्वा सेवया मम प्रारब्धं अनिष्टं क्षपयिष्यामि इति निश्चिकाय । तत्काले इयं धेनुः नित्यं राजगृहमुक्तधेनुसहस्रेण सह वेङ्कटाचले तृणं चरितुं गच्छति स्म । किञ्च राजाज्ञया गोपालोऽपि तां धेनुं पृथक् कृतवान् । तथाऽपि सा धेनुः पुनः पुनः स्वयूथे प्रविशति स्म । तद् दृष्ट्वा स्वेच्छासञ्चारे इयं तुष्टा इति मत्वा यथेष्टं चरतु इति तां गोपालः तत्याज । कुतः ? "स्त्रियो जारेण तुष्यन्ति गावः स्वच्छन्दचारतः । कुञ्जराः पांसुवर्षेण ब्राह्मणाः परनिन्दया ।" इति उक्तेः । ततः इयं धेनुः इतरधेनुगणैः सह चरन्ती, तद्व्याजेन तत्र वेङ्कटाचले वल्मीकदेशे गत्वा वल्मीकान्तस्य श्रीनिवासप्रीत्यर्थं अत्यन्तभक्त्या धेनुरियं वल्मीके क्षीरं सततं सिञ्चन्ती । प्रतिदिनं मध्याह्ने सायाह्ने च राजगृहे, त्रिकालं दोग्ध्री अपि, क्षीरं न ददाति स्म ।

**मूलम्**

**एवं काले गते [१]तस्मात् चोलराजसती स्वयम् ॥ ३१ ॥**

१. तस्मिन् ।

**कल्याणकाण्डदीपः**

एवं क्षीरं न ददातीत्येवं **काले** दिनषट्कात्मके **काले गते सति** अतीते । तदित्थं प्रथमदिने प्रथमाधिकारिणं प्रति दोग्ध्री धेनुर्न ददातीत्याह । किं कारणमित्युक्ते पुनः दोग्ध्राह । क्षीरस्यापि स्यादित्यहं दुहे । वत्सपीतस्तनेवास्ते । अपि न ईषदपि क्षीरं नास्ति । धेनुः किं कुर्यात् ? अहमपि किं कुर्वे इत्येकं दिनं गतम् ॥ १ ॥

ततः परदिने प्रथमाधिकारी स्वयं परीक्षां चकार । सोऽप्याह दोग्ध्रीव मध्यमं धेनुः न ददातीत्यादि इति द्वितीयम् ॥ २ ॥

ततः परदिने मध्यमः सोऽप्याहोत्तमं पूर्ववत् इति तृतीयं दिनम् ॥ ३ ॥

ततः श्वः उत्तमः सोऽप्याह संराज्ञीं पूर्ववत् इति चतुर्थः ॥ ४ ॥

ततः परदिने साम्राज्ञी स्वयं इति पञ्चमम् ॥ ५ ॥

ततःपरं नक्तं दिवा साम्राज्ञी स्वयमेव स्वसमक्षं धेनुमाबध्य परीक्षां चकार। तदा त्रिकालं दुदोहेति अन्तर्विचारो निवृत्तः।

ततः किमभूदित्यत आह— **तस्मादिति**। तस्मात् बहिर्विचारस्य अवसरप्राप्तत्वात्।

**मूलम्**

**धेनुपालं समाहूय इदं वचनमब्रवीत् ॥ ३२ ॥**

**गवां पालक दुर्बुद्धे [1]किं करिष्यति तत्पयः।**

**त्वं [2]भुञ्जसेऽथवा वत्सो [3]भुञ्जते वद मे ऋतम् ॥ ३३ ॥**

**१. पयोऽस्याः किं करोषि रे। २. किं भुङ्क्षे। ३. भुङ्क्ते वा।**

**कल्याणकाण्डदीपः**

**गवां पालकेति**। षष्ठ्या आक्रोश इति षष्ठ्या अलुक्।

"आः किं रे गोपाल धिग्दुर्बुद्धे, किं करिष्यसि तत्पयः पिबसि विक्रीणीषे वा ?" "नाहं चक्षुषा सह पश्यामि किं कुर्यां स्वामिनी" इति गोपेनोक्ते तदा राज्ञाह— सत्यमेतत्। यतो निःशेषपीतस्तने-वास्ते धेनुः, अतो ब्रवीमि शृणु, त्वं भुञ्जस इति। त्वं भुञ्जसे अथवा वत्सो भुञ्जते, वद मे ऋतम्। राज्ञीकोपस्याकस्मिकत्वस्य वचनस्य कोपपरवशत्वस्य च सूचनाय भुञ्जेः शप्यप्रसिद्धस्य प्रयोगः। 'स्तनम्' इति शेषः।

**मूलम्**

**इति राज्ञीवचः श्रुत्वा गोपालो भयविह्वलः।**

**उवाच वचनं मन्दं राजभार्यां सगद्गदम् ॥ ३४ ॥**

**कल्याणकाण्डदीपः**

साक्रोशवचनस्य फलमाह— **भयविह्वल** इत्यादि **सगद्गदम्** इत्यन्तेन। **भयविह्वलः** भयेन प्रवाते कदलीवत् कम्पमानः। **उवाचेत्यादि** श्लोकद्वयमेकं वाक्यम्। मन्दमपटु सगद्गदं गद्गदेन स्खलनेन सहितम्। "गद्ग वाक् स्खलने" इति धातुः। विशिष्टस्य विशेष्यसमवधाने विशेषणमात्रपरत्वम्।

**मूलम्**

**गोक्षीरपायिनं श्रीनिवासं प्रति गोपालकृतताडनम्**

**गोपाल उवाच—**

**न जानेऽहं च तत्कर्म न मया पीयते पयः ॥ ३५॥**

**कल्याणकाण्डदीपः**

किं करिष्यसीत्यस्योत्तरमाह— **न जान इत्यादि पय इत्यन्तेन । तत्कर्म** क्रयविक्रयरूपं कर्म । यद्यपि पयःपानलक्षणं कर्म जाने गोपालत्वात्, तथाऽपि राजार्हं नैतत्पयः पीयते । दर्शनमेव नास्ति, किमुत पयःपानमिति भावः ।

**मूलम्**

**स्वयं पिबति वा [1]वत्सः पिबतीति न विद्महे ।**
**सत्यं वचनमेतद्धि विचारं कुरुतामिति ॥ ३६॥**

१. धेनुः वत्सो वेति ।

**कल्याणकाण्डदीपः**

त्वं भुङ्क्ष्व इत्यादि ऋतमित्यन्तस्योत्तरमाह— **स्वयम्** इत्यादि **कुरुताम्** इत्यन्तेन । 'इति' इत्यस्य 'वचनम्' इति पूर्वेणान्वयः ।

**मूलम्**

**इति [1]गोपालवचनं श्रुत्वा सा विह्वलेक्षणा ।**
**ताडयामास तं गोपं रज्जुभिश्चर्म[2]तोरणैः ॥ ३७॥**

१. इति गोपवचः श्रुत्वा सा सती विह्वलेक्षणा ।

२. निर्मितैः ।

**कल्याणकाण्डदीपः**

**विह्वलेक्षणा** विभ्रान्तेक्षणा **रज्जुभिः** दामभिः बाहू बन्धयित्वेति शेषः । **चर्मतोरणैः** चर्मणः कृतैः तोरणैः माङ्गल्यतोरणसाधनभूतपुष्पचूतपल्लवाद्याकारशकलैः । अनेन राजाज्ञया राजभटकृतताडनोत्थां कमपि पुष्पपलाशाद्याकारेण माङ्गल्यमिति सूचयति ।

मूलम्

ततः परदिने प्राप्ते ताडितो राजभार्यया।
[1]धेनुकण्ठस्थरज्जुं तु त्यक्त्वा तत्पृष्ठतो ययौ ॥ ३८ ॥

१. कण्ठाङ्घ्रिबद्धरज्जुं।

कल्याणकाण्डदीपः

अरे गोपाल, यद्यस्मिन्नेव दिने क्षीरापहर्तारमानयसि तर्हि मोक्षसे नान्यथा इत्येतत्सत्यमिति राज्ञी शास्तिमकरोत्। **रज्जुं त्यक्त्वा** त्याजयित्वा।

मूलम्

[1]धेनुरप्यचलं दिव्यं वल्मीके हरिमन्दिरे।
अभिषेकं चकाराशु स्वपयोधर[2]चारणैः ॥ ३९ ॥

१. धेनुरापाचलं। २. धारकैः, चाकणैः।

कल्याणकाण्डदीपः

**धेनुरप्यचलं दिव्यं वल्मीके हरिमन्दिरे इति**। "गत्वा तत्रत्यचारणैः" इति च शेषः। **धेनुरपि दिव्यं** देवावासयोग्यं **अचलं** शेषाचलं गत्वा। तत्रत्ये **हरिमन्दिरे वल्मीके**। **आशु** एकदिन-व्यवधानात् तृणभक्षणादिना विलम्बमकृत्वा **स्वपयोधरचारणैः** स्वीयानि स्वाऽसाधारणानि यानि पयोधरचारणानि क्षीरत्याजनानुकूलसञ्चलनोपयोगिव्यापारविशेषाः तैः। 'चाकणैः' इति पाठे, चक्यन्ते तर्प्यन्ते क्षीरसमर्पणद्वारा वत्सा एभिरिति चकणानि तान्येव चाकणानि स्तनानि तैः इत्यर्थः। 'चक तृप्तौ' इत्यस्य णिजन्तात् करणे ल्युट्। पृषोदरादित्वादङ्गणवण्णः।

मूलम्

तां दृष्ट्वा धेनुपः कोपात् कुठारं हस्तमात्रकम्।
उद्धृत्य तरसा गां च वधोद्योगं समाचरत् ॥ ४० ॥

कल्याणकाण्डदीपः

**तां** क्षीराभिषेकं कुर्वाणाम्। **हस्तमात्रकं** हस्तः प्रमाणमस्य हस्तमात्रम्। तदेव तत् कं प्रमाणे द्वयसच् इत्यादिना मात्रच्। स्वार्थे कन्।

अत्रेदं बोध्यम्— धेनुपः तां धेनुं दृष्ट्वा आलोचयामास किमिति । अस्मिन्वल्मीके महद्भूतमस्तीति किंवदन्ती । अतस्तस्यैवेदं कृत्यं महद्भूतं तावदव्याहतनिजपरवशीकरणसामर्थ्येन धेनुम् आत्मसात्कृत्य धेनुं दुग्धं दोग्धिम् । तदनीशा धेनुः किं कुर्यात् । अतः तदेव कार्यमिति । अतो हे अन्तर्निलीन बहिरायाहि । क्षीरापहर्तारं त्वां साम्राज्ञ्यै निवेद्य, अहं जीवामि । नान्यथा मज्जीवनम् । यदि इतोऽपि बहिर्नायास्यसि तर्हि तव मातृसमां धेनुं हनिष्यामि । तथा सति तव मातृहनन-धेनुहनन-धेनुपहननानि बहुनरकफलानि पातकानि भवन्ति इत्युवाचेति । इतोऽप्यनागते कोपात् कुठारं वृक्षवृश्चनं तरसोद्धृत्य ऊर्ध्वं धृत्वा गां चागृह्य ।

### गूढकर्तृकव्याख्यानम्

क्षीरं न ददाति धेनुः क्षीरं न ददाति इति दोग्ध्री प्रथमाधिकारिणं प्रत्याह । प्रथमाधिकारी परीक्ष्य न ददातीति मध्याधिकारिणं, ततः मध्याधिकारी परीक्ष्य उत्तमाधिकारिणं प्रति मया स्वयं ईक्षितम् । धेनुः पीतस्तनेव भाति । आपीनेऽपि ऊधसि क्षीरं नेत्याह । ततः उत्तराधिकारी अपि स्वयं परीक्ष्य सम्राज्ञीं धेनुः क्षीरं न ददाति इत्याह । एवं पञ्चदिनानि गतानि । ततः राज्ञी स्वयं धेनुं आबध्य नक्तं दिवा परीक्षां चकार । धेनुः क्षीरं नादात् । गोपाले केवलं सांशयिकी तं आनाय्य "आः किमरे गोपाल ! धिक् दुर्बुद्धे ! धेनुः क्षीरं न ददाति । तत्पयं किं करोषि ? रे मूर्ख ! पिबसि वा अन्यत्र, पयः विक्रीणीषे वा ? लघु वद सत्यम्" इति भर्त्सयामास । गोपालः "अम्बा ! किं ब्रवीमि ? नाहं तु चक्षुषा पश्यम् । किं कुर्याम् ? राज्ञी "भवतु, निश्शेषं पीतस्तनेन दृश्यते धेनुः । अतः वत्सः पिबति, उत त्वं पिबसि ? सत्यं वद" इति भर्त्सयामास ।

तत् श्रुत्वा गोपस्य भयं जातम् । प्रवाते कदलीव कम्पमानः राज्ञीं प्रति गद्गदेन "जननि ! किं वच्मि ? क्रयो वा विक्रयो वास्तु । तादृशं किमपि न जाने । यथावस्थितं वच्मि । महाजननि ! पयः पानं नाम मे विदितम् । परन्तु, एतत्पयः राजार्हं नैव पेयम् । अस्याः पयोऽपि नापश्यं, किमुत पीतवान् ? धेनुः पिबेत् उत वत्सः पिबेत् किमपि न जाने । कारणमत्र विचार्यतामित्याह । तेन वचनेन अविश्वसन्ती राज्ञी महता कोपेन घूर्णिताक्षी क्षणात् दामभिः गोपालस्य बाहू बन्धयित्वा चर्मनिर्मितरज्जुभिः ताडयामास । एवं दिनं गतम् । परेद्युः पुनः राज्ञी, "अरे गोपाल ! एतत्पयोपहारकचोरं आनयसि चेत् त्वां मोचयामः, अन्यथा न" इति गोपालस्य शास्तिमकरोत् । तं मुमोच । परदिने प्रातः गोपः धेनुकण्ठाङ्घ्री रज्जुना बद्ध्वा तां चारयन् जागरूकः तत्पृष्ठतो ययौ । सा धेनुः शेषाद्रिं गत्वा श्रीनिवासाधिष्ठितवल्मीके देवस्य यथातृप्ति स्वपयोधरचाकणैः अविलम्बेन क्षीरं सिञ्चन्ती । एवं सिञ्चन्तीं गोपः दृष्ट्वा "अहो किमेतत् ? वल्मीके क्षीरं सिञ्चति । एवं कुत्रापि न सम्भवेत् । इदं तावदतिकौतुकम् । भवतु,

पश्यामि" इति कृत्वा "अत्र वल्मीके अन्तः महद्भूतमस्ति इति वदन्ति । अतस्तस्यैव कृत्यमिदम् । महद्भूतस्य अव्याहतपरवशीकरणसामर्थ्यं अस्ति । एतद्भूताधीना धेनुः किं वा कुर्यात् ? अतः भूतकृतं अकार्यम्" इति कृत्वा असहमानः अन्तर्गतं भूतं - "अरे अन्तर्निलीन ! बहिरायाहि । आयासि वा न वा ? एतावत् धेनुक्षीरं अपहरन् असि वा ? चोर ! अद्य विलम्बे मम जीव एव न स्यात् । त्वं पयश्चोर इति राज्यै निवेद्य अहं जीवेयम् । इतोऽपि बहिर्नागच्छसि चेत् तव मातृसमां धेनुमेव हन्मि" इति गर्जितवान् । भूतं नागच्छत् । भवितव्यं भवत्विति महता कोपेन स्वगतहस्तमात्रकुठारं उद्धृत्य गां आगृह्य वधाय अयतत ॥

**मूलम्**

**तदा वल्मीकगः स्वामी वात्सल्यं दर्शयन् हरिः ॥ ४१ ॥**

**कल्याणकाण्डदीपः**

**वात्सल्यं** भक्ताभिलाषम् । **दर्शयन्** अभिव्यक्तीकुर्वन् । **हरिः** श्रीनिवासः ।

**स्वभक्तहननं लोके आत्मार्थं यः पुमांश्चरेत् ।**
**स एव नरकं भुङ्क्ते यावदाचन्द्रतारकम् ॥ ४२ ॥**

**कल्याणकाण्डदीपः**

अर्थान्तरन्यासेन स्वकर्तव्यं निरूप्य तत्प्रहारं धेनोर्विमोच्य स्वयं दधारेत्याह— **स्वभक्तहनन-मित्यादि जगत्पतिरित्यन्तेन** । यः **पुमान् आत्मार्थं** स्वजीवनाय **स्वभक्तहननं** पातनं वा यदि **चरेत्** तर्हि **स एव** हन्तैव वा घातक एव वा । **यावदाचन्द्रतारकं** लोके इहामुत्र च **नरकं** दुःखं **भुङ्क्ते** ।

**मूलम्**

**मदर्थं च कुठारेण हनिष्यति च गां खलः ॥ ४३ ॥**

**कल्याणकाण्डदीपः**

...यन अमुत्र गुग्र लभते स्वामिकार्यहतप्राणत्वात् इति सामान्यांशं निरूप्य विशेषांशं निरूपयति मदर्थ चेति ।

**मूलम्**

**इति मत्त्वा रमाकान्तः श्रीनिवासो निरामयः ।**
**एकेन तुलसीमात्रदलेनापि नरोत्तमः ॥ ४४ ॥**

**कल्याणकाण्डदीपः**

एतन्मम महद्दुःखं **इति मत्वा** इति निरूप्य **तुळसीमात्रदलेन** केवला तुलसी तुलसीमात्रं तस्याः यदेकं दलं तेनापि । अपिरन्ववसर्गार्थे ।

**मूलम्**

**पूज्यते भक्तिभावेन तं रक्षामीति मत्पणम्(णः) ।**
**इत्थं विचार्य गोविन्दस्तत्प्रहारं विगृह्य च ॥ ४५ ॥**

**कल्याणकाण्डदीपः**

पत्रं पुष्पं फलं तोयमित्यादेः **पूज्यते** । पूजां कुरुते करवाणि चो लोप आर्षः । अत एव नरोत्तमः तम् । **मत्पणं** मन्मूलधनम् । मम शपथोत्सृष्टधनादि वा । "पणो द्यूतादिषूत्सृष्टे भृतौ मूलधनेऽपि च" इत्यमरः ।

"सकृदेव प्रपन्नाय तवास्मीति च याचते ।
अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम ॥" इति श्रीरामवचनम् । (वा.रा.६-८-३३)

क्षीराभिषेचनेन पूजयन्त्या धेनो रक्षणं कर्तव्यमित्यत्र किं निरूपणीयम् ? **विचार्य** निरूप्य । **विगृह्य** विश्लिष्य । विमोच्येति यावत् ।

**मूलम्**

**स्वयं दधार तद्घातं मौलौ [1]खड्गं जगत्पतिः ।**
**कुठारेणासिधारेण ताडितो वेङ्कटेश्वरः ॥ ४६ ॥**

---
१. स्वे च ।

**कल्याणकाण्डदीपः**

**खड्गं** भेदने समर्थम् । खड् भेदने । बाहुलकात् कखेणे गन् । **तद्घातं** कुठारप्रहारम् । कुठं वृक्षं आराति इति कुठारः । वृक्ष वृश्च नः । तेन असेः धारेव धारा असिधारा । सा अस्यास्तीति असिधारी । तेन **कुठारेण** तदाख्यायुधेन ।

**मूलम्**

**शिरस्फोटं समापन्नः कुठारेण द्रुमारिणा ।**
**सप्ततालप्रमाणेन रक्तस्फूर्तिरभूत्तदा ॥ ४७ ॥**

**कल्याणकाण्डदीपः**

**शिरस्फोटं** शिरोविदलनम् । **सप्ततालप्रमाणेन** सप्तानां तालानां समाहारः सप्ततालं, तच्च तत् प्रमाणं च तत् । तेन विस्तृतमध्यमाङ्गुलीयुत-तताङ्गुष्ठः तालः । "प्रादेशतालगोकर्णास्तर्जन्यादियुते ततः" इत्यमरः । **रक्तस्फूर्तिः** रक्तोद्गमः ।

**मूलम्**

**एवं कोलाहलं दृष्ट्वा गोपालो मरणं ययौ ।**
**हते गोपालके सा गौरवरुह्य गिरेस्तदा ॥ ४८ ॥**

**कल्याणकाण्डदीपः**

**कोलाहलः** भीजातगोपक्षिमृगादि कलकलध्वनिः । "जातमात्रा मृगाः" इत्यादेः ।

**मूलम्**

**राजानं समनुप्राप्य [1]वत्सहीनाऽतिदुःखिता ।**
**लुण्ठनं परिचक्रेऽथ [2]राजाग्रे राजमन्दिरे ॥ ४९ ॥**

**मृतगोपविलोकनार्थं श्रीवेङ्कटाचलं प्रति चोलनृपागमनम्**

**तां दृष्ट्वा [3]विह्वलाङ्गीं च [4]लुण्ठतीं मृतवत्सकाम् ।**
**किमर्थं [5]लुण्ठती चार त्यक्त्वा गोसन्ततिं [6]कुतः ॥ ५० ॥**

---
१. वाक्यहीना- । २. राज्ञो वै ।
३. विह्वलाङ्गां । ४. लुठन्तीं । ५. लुठतीत्येव । ६. मुहुः ।

**कल्याणकाण्डदीपः**

**लुण्ठनं** परिवर्तनम् । लुठि परिवर्तनमिति धातुः । **मृतवत्सकां** मृता वत्सा यस्याः सा तया, मृतवत्सेव मृतवत्सका, ताम् । इवार्थे कन् । **किमर्थं लुण्ठती चार त्यक्त्वा गोसन्ततिं कुतः इति** । गोसन्ततित्यागे किं निमित्तम् । अथापि लुण्ठनं किमर्थमिति भावः ।

**मूलम्**

**गवा सार्धं गच्छ चार सम्मेलय गवां गणम् ।**
**इति राज्ञा समादिष्टः चारस्तत्पृष्ठतो ययौ ॥ ५१ ॥**

**कल्याणकाण्डदीपः**

**सम्मेलय** मिलितां कुरु ।

**गूढकर्तृकव्याख्यानम्**

एवं गोपाले यदा धेनुं हन्तुं कुठारं उद्धधार तदा वल्मीके वसन् स्वामि श्रीनिवासः स्वभक्तधेनौ वात्सल्यं व्यक्तीकर्तुकामः, लोके यः स्वजीवनरक्षणे स्वभक्तं हन्ति इतरेण घातयति वा सः चन्द्रसूर्य-नक्षत्राणि यावत् तिष्ठन्ति तावत् अत्र परत्रापि दुःखं भुङ्क्ते एव । हतभक्तस्तु अमुत्र सुखमेव लभते । यतः स्वामिकार्याय भक्तः प्राणान् त्यजन् परत्र सुखमेव लभते । एवं सति मत्कृते मद्भक्ता गौः खलात् कुठारेण हता स्वप्राणान् त्यजति । मत्समक्षं मद्भक्तहननं क्रियमाणं दृष्ट्वा दृष्ट्वा तूर्ष्णीं मया नैव भवितव्यम् । येन केन धेनू रक्षितव्या । मदर्थं धेनुः जीवितं त्यजति । इदं तावत् मम महत् दुःखम् । किञ्च "पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति । तदहं भक्त्युपहृतं अश्नामि प्रयतात्मनः" इति अर्जुनं प्रति श्रीकृष्णोक्तेः । "या दृष्टा निखिलाघसङ्घशमनी स्पृष्टा वपुः पावनी रोगाणामभिवन्दिता निरसनी सिक्तान्तकत्रासिनी । प्रत्यासत्तिविधायिनी भगवतः कृष्णस्य संरोपिता न्यस्ता तच्चरणे विमुक्तिफलदा तस्यै तुलस्यै नमः ॥" इत्युक्तेः एतादृशमहिमोपेततुलसीदलमेकमेव यः भक्त्या मां पूजयेत् तादृशं भक्तं रक्षामि इति मम प्रतिज्ञा ।

श्रीरामावतारेऽपि "सकृदेव प्रपन्नाय तवास्मीति च याचते । अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम" इति श्रीरामः "त्वमेव शरणं मम" इति "सकृदेव मां याचते यः तस्य अभयदानमेव मम व्रतम्" इत्याह । प्रकृते मदर्थं अतिभक्त्या वल्मीकं नित्यं आगत्य क्षीरसेचनेन मां तर्पयन्ती अस्ति धेनुः । "भक्तिपूर्वकतुलसीपत्रैकसमर्पणमात्रेण भक्तं सर्वथा रक्षामि" इति मत्प्रतिज्ञा । अद्य नित्यं क्षीरसेचनेन मत्तृप्तिकरणरूपमहासेवां कुर्वन्तीं भक्तगां रक्षामि इति किं निरूपणीयम् । इत्येवमादि विचार्य धेनुं रक्षितुं गोपालोद्धृत-अतिनिशित-कुठारघातं स्वयं मौलौ दधार । ततः तत्कुठारघातेन श्रीनिवासशिरःस्फोटनं अभूत् । तस्य शिरसः रक्तं सप्ततालमितं धाराकारेण उत्पपात । तद्रक्तोद्गमं दृष्ट्वा तत्रत्यगोपक्षिमृगादयः अतिभीताः महान्तं कलकलं चक्रुः । घोररक्तस्फूर्तिं पक्षिमृगादिभीतिकलकलं च दृष्ट्वा गोपालो मृति-माप । गोपे हते धेनुः शेषगिरेरवरुह्य राजगृहं प्राप्य राज्ञः पुरतः वाक्यहीना अतिदुःखिता उपरि उपरि लुण्ठनं चक्रे । अङ्गानि कम्पन्ते । मृतवत्सा धेनुरिव लुठन्ती । राजेदं ददर्श । तदा राजा वक्ति— "किमिदम् ? कुत इयं धेनुरित्थं लुठ्यति । गोसन्ततिं किमिति त्यक्तवती ?" इति वदन् चारमेकमाहूय "अरे चार ! पश्य, इयं धेनुः कुत एवं लुठन्ती ? न जाने । अद्यैव शीघ्रं इमां नीत्वा गोगणं मेलय" इत्यादिशत् । क्षणे राजाज्ञया धेनुपृष्ठतो ययौ ॥

मूलम्

आरुह्य वेङ्कटगिरिं [१]वल्मीकाग्रमुपागतः ।
पतितं धेनुपं दृष्ट्वा [२]वल्मीकाग्रसमाश्रयम् ॥ ५२ ॥
रक्तवृष्टिं घोरतरां समताल[३]परीमिताम् ।
[४]स विह्वलो नृपचरो जगाम नृपमन्दिरम् ॥ ५३ ॥

१. वल्मीकाग्रमुपाश्रितः । २. वल्मीकाग्रात्समुत्थिताम् ।
३. प्रमाणकाम् । ४. संवीक्ष्य नृपचारोऽथ ।

कल्याणकाण्डदीपः

**परीमिताम्** इति दीर्घ आर्षः ।

मूलम्

उवाच तत्प्रभावं च वल्मीकाग्रात्समुत्थिताम् ।
रक्तवृष्टिं ततः श्रुत्वा राजा विस्मितमानसः ॥ ५४ ॥
आरुह्य नरयानं च शीघ्रेणागात् वृषाचलम् ।
किमिदं भो [१]महत्पापं केन पापेन वै कृतम् ॥ ५५ ॥

१. महत्कष्टं ।

कल्याणकाण्डदीपः

**किमिदं भो महत्पापं केन पापेन वै कृतम्** । किं वितर्के । "वितर्के किं किमुत च" इत्यमरः । **महत् पापं** इति च्छेदः । भो स्वामिन् श्रीनिवास । महत् बहु **पापं** पापसाधनं इदं रक्तादि अनिष्टं किं स्यात् ? कस्य स्यात् ? तव वाऽन्यस्य वा ? **केन पापेन** ?

मूलम्

धेनुपालस्य मरणं वल्मीकं रक्तपूरितम् ।
(गवां वार्तां च कथनं किमिदं वेङ्कटाचले ॥
इति [१]राजवचः श्रुत्वा वल्मीकस्थो जगत्पतिः ॥ ५६ ॥

१. प्राज्ञवचः ।

**कल्याणकाण्डदीपः**

पापिना अन्यस्येति निर्दिष्टं स्पष्टयति धेनुपालस्येत्यादिना। जातमित्यध्याहृतस्योभयत्रान्वयः।

**मूलम्**

उद्भिद्य वल्मीकमनन्तवीर्यः
ह्यनन्तशैलेन्द्रतलं समाश्रितः।
श्रीस्वामितीर्थस्य च दक्षिणे शुभे
वल्मीकसंस्थो भगवानुवाच ॥ ५७॥

सगद्गदोत्कण्ठसमाकुलाननः
[1]संरक्तनेत्रोद्भववारिपूरितः।
चोलं नृपेन्द्रं बहुकष्टया गिरा
सशङ्खचक्रप्रतिमां समाश्रितः ॥ ५८॥

१. सन्दिग्ध-।

**कल्याणकाण्डदीपः**

**सगद्गदोत्कण्ठसमाकुलाननः** गद्गदेन वाक्स्खलनेन सह वर्तत इति सगद्गदः। तादृशः उत्कण्ठः उज्जृम्भितकण्ठो यस्य स तथा। तादृशश्चासौ समाकुलाननश्च सम्भ्रान्ताननः। **बहुकष्टया** बहुदुःखसाधनया।

**मूलम्**

**चोलनृपं प्रति वल्मीकनिर्गतश्रीनिवासशापः**

श्रीभगवानुवाच—

पापिष्ठोऽसि दुराचार [1]राज्यगर्वमहोन्नत।
अनाथं [2]भक्तपालं मां दरिद्रं वनचारिणम् ॥ ५९॥

१. राज्यैश्वर्यमदोद्धत। २. भुक्तिहीनं।

**कल्याणकाण्डदीपः**

**महोन्नतः** सर्वथा नम्रशिरः।

मूलम्

[१]पितृमातृविहीनं च भार्याबन्धुविवर्जितम् ।
सौभ्रात्रहीनं कुटिलं कुठारेणासिधारिणा ॥ ६० ॥

१. मातृपितृ- ।

कल्याणकाण्डदीपः

**सौभ्रात्रहीनं** सुभ्रातैव सौभ्रात्रं, प्रज्ञाद्यण्, सुभ्रातृरहितम् । **कुटिलं** अऋजुं एतादृशं मां जानासि इति शेषः ।

मूलम्

[१]ताडितोऽहं नृपश्रेष्ठ तद्दुःखमतुलं ह्यभूत् ।
शिरो भिन्नं धेनुपेन दयाहीनेन दुर्मते ॥ ६१ ॥

१. अताडयत् ।

कल्याणकाण्डदीपः

**हे नृपश्रेष्ठ** । तादृशोऽहं दयाहीनेन धेनुपेन कुठारेणासिधारिणा ताडितः । तेन शिरो भिन्नम् । तत् तस्मात् दुःखं अतुलं ह्यभूत् । अतो दुर्मते दुर्बुद्धे ।

मूलम्

इत्युक्त्वा भगवान् देवः शशाप नृपपुङ्गवम् ।
पिशाचो भव दुर्बुद्धे मद्दुःखादानकर्मणा ॥ ६२ ॥

कल्याणकाण्डदीपः

**इत्युक्त्वा देवः भगवान्** श्रीनिवासः ।

मूलम्

इत्थं शप्तो नृपश्रेष्ठः सोऽपतच्छापमूर्च्छितः ।
मुहूर्तान्ते समुत्थाय प्रोवाच जगदीश्वरम् ॥ ६३ ॥

*इति श्रीमद्भविष्योत्तरपुराणे श्रीवेङ्कटेशमाहात्म्ये*
*अवतारप्रशंसनं नाम तृतीयोऽध्यायः ॥*

*इति श्रीभविष्योत्तरपुराणस्य व्याख्याने कल्याणकाण्डदीपे श्रीनिवासहैय्यङ्गवीनस्नेहगुणप्रकाशो नाम तृतीयोऽध्यायः सम्पूर्णः ॥*

॥ श्रीश्रीनिवासार्पणमस्तु ॥

**गूढकर्तृकव्याख्यानम्**

धेनुपृष्ठतो गच्छन् चारः वेङ्कटाद्रिमारुह्य वल्मीकपुरतो गत्वा अपश्यत् । तत्र वल्मीकाग्रे गोपः मृतो दृष्टः । वल्मीकाग्रात् सप्ततालमित-घोरतर-रक्तधारां उत्पतन्तीं अपश्यत् । क्षणात् राजगृहं ययौ । नृपं वीक्ष्य "महाप्रभो ! किं वच्मि ? आश्चर्यं भयानकम् । कदाऽपि न दृष्टं नापि श्रुतम् । वेङ्कटगिर्युपरि एकवल्मीकम् । तदग्रात् घोररक्तप्रवाहः उत्पतति । सप्ततालमितः । तत्रैव गोपः प्राणान् त्यक्त्वा पतितः । इदं सर्वं कुत इति न जाने" इति विज्ञापयामास ।

राजापि वृत्तं श्रुत्वा, "अहो ! किमिदम् ? वल्मीकाग्रात् रक्तवृष्टिः ? सप्ततालमिता ? गोप-मृतिः ? इति जातभ्रमकौतुकभयः । तदा नैवातिष्ठत् । क्षणात् नरयानमारुह्य शीघ्रं वेङ्कटगिरि-मगात् । वल्मीकान्तिके पश्यति । तदा हा हन्त ! हन्त ! किमिदं महत्कष्टम् ? अन्याय्यम् । महत् पापं कृतम् । को वा पापी इदं कृतवान् ? वल्मीकं रक्तपूरितम्, गोपमरणम्, गवा वार्ताकथनम् । वेङ्कटाचले किमिदं चरितम् ? कदापि एवं अभवितव्यमेवं । तादृशमद्य प्रवृत्तम् । अनेन किमपि अनिष्टं शङ्के । मुख्यतो दैविकम् । अन्यथा नेति वदत्येव नृपे अचिन्त्याद्भुतशक्तिः जगदीशश्रीनिवासः नृपवचनं श्रुत्वा वल्मीकं उद्भिद्य बहिरागत्य स्वामिपुष्करिणीतीर्थदक्षिणदेशे स्थित्वा नृपं वक्तुं उपक्रमते । शक्यं नाभूत् । मुखं सम्भ्रान्तम् । शिरोवेदनं अतिदुःसहम् । नेत्रे अश्रुपूरिते । वक्तुं स्फुटं अशक्तः कष्टेन स्खलितस्खलितवाचा वक्ति । उज्जृम्भितकण्ठः । महोन्नतः । तथाऽपि शिरः अवनम्य शङ्खचक्र-गदापद्मधारी देवः वदति— "नृपश्रेष्ठ ! त्वं पापिष्ठः । दुराचारः । तव राज्यैश्वर्यमदः । दृष्ट्या दृश्यते वा । अहं तावत् अनाथः । मम काऽपि दिक् नास्ति । मम पिता न माता न पत्नी न सुतो न बन्धुर्न आप्तो न मित्रं न । भोक्तुं नान्नम् । धर्तुं वस्त्रं न । अतिदरिद्रः । वासाय वेश्म न । कुत्र वसेत् । काऽपि गतिर्न । स्थातुं स्थलं अलब्ध्वा वनमागत्य इतस्ततः कष्टेन चरन् अन्यथा शरणं न । इदमेव गतिरिति कृत्वा इदं वल्मीकं श्रितः ।

किं वच्मि ? "प्रायो गच्छति यत्र दैवहतकः तत्रापतन्त्यापदः"[१] । निर्भाग्यस्य सर्वत्रापि विपदः घटन्ते । नैव हीयते । मम एका भार्या । सा तु नित्यावियोगिनी । तादृशी अपि मां जहौ । मम एकः

१. नीतिशतकम् ।

सुभ्राता । सोऽपि अद्य मम भागे न । किं वच्मि ? किं कुर्वे ? क्व गच्छामि ? अनाथः । त्वं क इति को वा भृणोति ? मम दैवं इति कृत्वा अनन्यगतिकः अत्र गिरौ मद्भागे यदापतितं तदेव वरं इति यत्किञ्चित् समाहितः वल्मीकं श्रितः । एवं सति मयि अत्रापि अनिर्वर्णनीयं दुःखं घटितम् । अस्य गोपस्य किं वा अपचरितं चरितवान् । स गोपः दयाहीनः कुटिलहृदयः अतिनिशितकुठारेण मम शिरो बिभेद । महत् सतं जातम् । दुःसहा वेदना । शिरसो विपरीतं रक्तं स्रुतम् । ईदृशदुःखं कस्यापि मा भूत् । अहं अति दुर्दैवी । दैवस्यापि ममोपरि कियान् द्वेषः ? अयि नृपश्रेष्ठ ! मतिहीन ! किं भो न वदसि ? त्वं राजा वा प्रकृतिरञ्जको वा । त्वं राजा चेत् एवं अभविष्यत् ? कस्यापि कष्टं अदत्वा निरपराधी अत्र वने अवसम् । अत्रापि मम कष्टं वा ? मम कष्टस्य त्वमेव बीजम् । भवदनवेक्षणेन एवं घटितम् । अतो वदन्ति "राजा कालस्य कारणम्" इति । एवं मम दुःखदाननिमित्तेन "दुर्मते ! त्वं पिशाचो भव" इति अव्याकृतैश्वर्यसम्पन्नः श्रीनिवासः अदुःखोऽपि दुःखं विडम्बयन् नृपं शशाप । क्षणात् नृपो मूर्च्छितः भुवि निपत्य मुहूर्तान्ते विसंज्ञां लब्ध्वा समुत्थाय भयभक्त्या देवं प्रार्थयते । इत्यंशं शतानन्दमुनिः जनकराजं प्रति निरूपयामास । तदेव सूतः शौनकादिविप्रान् प्रति निरूपयामास ॥

*॥ इति अत्र श्रीमद्भविष्योत्तरपुराणे वेङ्कटगिरिमाहात्म्ये*
*वेङ्कटगिरौ श्रीनिवासावतारप्रशंसनं नाम तृतीयोऽध्यायः ॥*

॥ श्रीकृष्णार्पणमस्तु ॥



॥ श्रीः ॥

# श्रीमद्भविष्योत्तरपुराणान्तर्गतं

# श्रीवेङ्कटेशमाहात्म्यम्

## ॥ अथ चतुर्थाध्यायकथासङ्क्षेपः ॥

### (गूढकर्तृकव्याख्यानानुसारी)

चोलराजो वदति— "स्वामिन् ! जगदीश ! तव दुःखकरं कमपि अपराधं न कृतवान् । विचारं अकृत्वा कुतो मां शप्तवान् ? पुरतो मम का गतिः ?" इति । श्रीनिवासः वदति— राजन् ! शिरोघात-तज्जन्ययातनादिदुःखातिशयात् मूढोऽहं त्वां अशपम् । मत् शापो मृषा न भवति । अतः यावत् कलियुगं तावत् दुःखी भव । अद्य मम तव च दुःखमापतितम् । कुतः ? मम सत्यसङ्कल्प एव कारणम् । भाविकाले आकाशो नाम राजा भविष्यति । सः स्वदुहितरं पद्मावतीं नाम कन्यां मे प्रदास्यति । कन्यादानकाले रत्नखचित-शतभारमित-सुवर्णसममूल्य-किरीटं मे दास्यति । तत् शुक्रवारे सायं धरामि । तद्धारणकाले मम नेत्रे अश्रुपूरिते । तदा षड्घटिकान्तं तव सुखं भविष्यति । इति चोलस्य कालावधिं स्वस्य अवतारोद्देशं च सूचयामास ।

ततः तद्वल्मीके वसन् स्वशिरःकृतक्षतशान्तये वैद्यशास्त्रविशारदं सुरगुरुं गुरुं (बृहस्पत्याचार्यं) आनाय्य आपृच्छ्य तेन "अर्ककार्पासं औदुम्बरक्षीरेण सम्मिश्र्य क्षतोपरि क्षिप" इति गुरुणोक्ते यथातथं चकार ॥ ततः श्रीनिवासः एवं तत्र स्वस्य रामकृष्णावतारकृत्यं अनुसन्दधे ॥ स्वयं रामः । वल्मीकं कौसल्या । तिन्त्रिणी दशरथः । गिरिः लक्ष्मणः । गिरि-अधित्यका अयोध्या । इति त्रेतायां रामावतार-कृत्यं, स्वयं कृष्णः । वल्मीकं देवकी । तिन्त्रिणी वसुदेवः । गिरिः बलरामः । अधित्यका मधुरा । स्वामिपुष्करिणी यमुना । मृगाः यादवाः । खगाः गोप्यः । इति द्वापर-अवतारकृत्यं अनुसन्दधत् क्रीडति स्म ।

"हे अरायि ! हे दरिद्र ! हे काणे ! हे अन्ध ! हे विकटे ! हे अवयवन्यून । सकुटुम्बं वेङ्कटगिरियात्रां कुरु । युष्मद् युष्मद् मनोरथान् अयं वेङ्कटगिरिः पूरयति" इति वेदप्रतिपाद्यः स शेषाचलः, तत् वल्मीकं

च, श्रीनिवासस्य वैकुण्ठात् अधिकतरं आसीत् । सुवर्णमुखरी साक्षात् विरजा, वेङ्कटो वैकुण्ठः, खगाः मुक्तब्रह्माणः, मृगाः मुक्तरुद्राः, वानराद्याः सनत्कुमारादयः आसन् ।

तत्र मानुषदेहमासाद्य यो नरः "अहं वेङ्कटगिरिं गच्छेयम्" इति वदेत् स धर्मिष्ठः । तेन समस्तं पुण्यं अनुष्ठितमेव । तस्मै सर्वदेवनमस्कृतः श्रीनिवासः प्रसीदति । एतादृशमहामहिमोपेत-वेङ्कटाचल-माहात्म्यं विधिरुद्रेन्द्रादिदेवा न जानन्ति, अल्पवीर्याः पुनः पुनः भवबद्धाः नराः न विदन्ति इति किमु वक्तव्यम् । इत्येवं यत् वेङ्कटाचलमहिमावर्णनं शतानन्दः जनकं प्रति निरूपयामास तदेव वर्णनं सूतः शौनकादिविप्रान् प्रति निरूपितवान् ॥

*इति श्रीमद्भविष्योत्तरपुराणे श्रीवेङ्कटेशमाहात्म्ये चतुर्थाध्यायकथासङ्क्षेपः ॥*

॥ श्रीकृष्णार्पणमस्तु ॥



॥ श्रीः ॥

## श्रीमद्भविष्योत्तरपुराणान्तर्गतं

# श्रीवेङ्कटेशमाहात्म्यम्

## अथ चतुर्थोऽध्यायः

**मूलम्**

**चोलराजं प्रति श्रीनिवासकृतशापहेतूपन्यासः**

**राजोवाच—**

**किमर्थं शप्तवान् देव अपराधविवर्जितम् ।**
**अविचार्य जगन्नाथ किं मया चरितं पुरा ॥ १ ॥**

**न जानेऽहं किञ्चिदपि तव दुःखकरं हरे ।**
**हा दुःखमतुलं प्राप्तं कथमत्र जगत्पते ॥ २ ॥**

**कल्याणकाण्डदीपः**

॥ श्रीनिवासाय नमः ॥

श्रियः पतिं श्रीनिवासं श्रीवत्सकृतलक्षणम् ।
श्रीकण्ठकृतकैङ्कर्यं श्रीमहीमहितं भजे ॥

चतुर्थे व्याख्येयानि व्याक्रियन्ते । **देव** ! क्रीडादिगुणविशिष्ट श्रीनिवास ! **अपराधविवर्जितम्** । शापमूलापराधरहितं माम् । **अविचार्य** । अपराधमविमृश्य । **किमर्थं** । अर्थशब्दो हेतौ । किं निमित्तं **शप्तवान्** अभूः ? यदि त्वं न भृगुवदविमृश्यकारी । तदा **मया** । **किं पुरा** दुरितमाचरितम् । तत् **अहं न जाने** । **जगन्नाथ** अतीत-अनागत-वर्तमान-जगन्नियामक । त्वमेव तज्जानासि ।

च, श्रीनिवासस्य वैकुण्ठात् अधिकतरं आसीत् । सुवर्णमुखरी साक्षात् विरजा, वेङ्कटो वैकुण्ठः, खगाः मुक्तब्रह्माणः, मृगाः मुक्तरुद्राः, वानराद्याः सनत्कुमारादयः आसन् ।

तत्र मानुषदेहमासाद्य यो नरः "अहं वेङ्कटगिरिं गच्छेयम्" इति वदेत् स धर्मिष्ठः । तेन समस्तं पुण्यं अनुष्ठितमेव । तस्मै सर्वदेवनमस्कृतः श्रीनिवासः प्रसीदति । एतादृशमहामहिमोपेत-वेङ्कटाचल-माहात्म्यं विधिरुद्रेन्द्रादिदेवा न जानन्ति, अल्पवीर्याः पुनः पुनः भवबद्धाः नराः न विदन्ति इति किमु वक्तव्यम् । इत्येवं यत् वेङ्कटाचलमहिमावर्णनं शतानन्दः जनकं प्रति निरूपयामास तदेव वर्णनं सूतः शौनकादिविप्रान् प्रति निरूपितवान् ॥

*इति श्रीमद्भविष्योत्तरपुराणे श्रीवेङ्कटेशमाहात्म्ये चतुर्थाध्यायकथासङ्क्षेपः ॥*

॥ श्रीकृष्णार्पणमस्तु ॥



॥ श्रीः ॥

## श्रीमद्भविष्योत्तरपुराणान्तर्गतं

# श्रीवेङ्कटेशमाहात्म्यम्

## अथ चतुर्थोऽध्यायः

**मूलम्**

**चोलराजं प्रति श्रीनिवासकृतशापहेतूपन्यासः**

राजोवाच—

किमर्थं शप्तवान् देव अपराधविवर्जितम् ।
अविचार्य जगन्नाथ किं मया चरितं पुरा ॥ १ ॥

न जानेऽहं किञ्चिदपि तव दुःखकरं हरे ।
हा दुःखमतुलं प्राप्तं कथमत्र जगत्पते ॥ २ ॥

**कल्याणकाण्डदीपः**

॥ श्रीनिवासाय नमः ॥

श्रियः पतिं श्रीनिवासं श्रीवत्सकृतलक्षणम् ।
श्रीकण्ठकृतकैङ्कर्यं श्रीमहीमहितं भजे ॥

चतुर्थे व्याख्येयानि व्याक्रियन्ते । **देव** ! क्रीडादिगुणविशिष्ट श्रीनिवास ! **अपराधविवर्जितम्** । शापमूलापराधरहितं माम् । **अविचार्य** । अपराधमविमृश्य । **किमर्थं** । अर्थशब्दो हेतौ । किं निमित्तं **शप्तवान्** अभूः ? यदि त्वं न भृगुवदविमृश्यकारी । तदा **मया** । **किं पुरा** दुरितमाचरितम् । तत् **अहं न जाने** । **जगन्नाथ** अतीत-अनागत-वर्तमान-जगन्नियामक । त्वमेव तज्जानासि ।

**मूलम्**

**इति तेन समाश्वस्तः श्रीनिवासोऽतिदुःखितः ।**
**उवाच मन्दवचनं राजानं शापमूर्च्छितम् ॥ ३ ॥**

**कल्याणकाण्डदीपः**

**इति तेन** राज्ञा **समाश्वस्तः** समाश्वसितः । **श्रीनिवासोऽतिदुःखितः** । भक्त एवमज्ञानी जात इति सञ्जातदुःखः । **मन्दवचनं** दीनवचनम् । अन्तरार्थे हर्षकारिवचनम् । **शापमूर्छितः** शापमोहितः तम् ।

**मूलम्**

**श्रीनिवास उवाच—**

**[1]पापिष्ठोऽहं दुराचार अविचारी नृपोत्तम ।**
**अज्ञानेनातिदुःखेन वृथा शापो मयाऽर्पितः ॥ ४ ॥**

**मच्छापो नानृतो भूयादिति वेदविदो विदुः ।**
**भक्तवात्सल्यदोषेण दुःखितोऽस्मि भृशं नृप ॥ ५ ॥**

१. पापिष्ठोऽसि ।

**कल्याणकाण्डदीपः**

तद्वचनप्रकारमाह— **पापिष्ठ इत्यादिना** ।

*बाह्यार्थे*— **पापिष्ठः** अतिपापी । **दुराचारः** दुष्टः आचारो यस्य सः तथा । **अविचारी** अविमृश्यकारी । **अतिदुःखेन** क्षतजवेदनाजातेन । **अज्ञानेन** अज्ञात्वा । **वृथा** अनिमित्तं यः **शापो** मया दत्तः । तं मयार्पितं शापं अनुगृहाण । यथा मया भृगुशापः । अपरथा ममानृतं स्यादिति दैन्यम् । अस्त्वनृतं किं भयम् ? इत्यत आह— **मच्छाप इति** । वेदविरोधो भयमिति भावः । "नानृतात् पातकं परम्" इति दर्शनात् च । "न विष्णोर्वचनं क्वापि मृषा भवति कुत्रचित्" इत्यादि-वचनात् ।

*अन्तरङ्गार्थस्तु*— विपरीतलक्षणया पापिष्ठ इत्यादीनां क्रमात् । अहं पुण्यवान् सदाचारः विमृश्यकारी । भक्त एवं जात इत्यतिदुःखेन । ज्ञात्वैव । अनुग्रहात् । वृथा अवश्यमनुभोक्तव्यप्रारब्धं

निमित्तीकृत्य । मयाऽर्पितं (प्रापितं) त्वं गृहाण इत्याज्ञा इति । "शक्येन सह सम्बन्धात् सादृश्यात् समवायतः । वैपरीत्यात् क्रियायोगाल्लक्षणा पञ्चधा स्मृता" इत्युक्तेः । पापजने पुण्यजन इति विपरीत-लक्षणा यथेति । मच्छाप इत्यादि अस्मिन्नर्थे स्पष्टम् । अथवा वचनवृत्त्या पानि पापानि अनिष्टानि येन स तथा । "पं क्लीबे हेम्नि पापाप्रधानयोः" इति वैजयन्ती । अन्यैर्दुष्कराचारः । सर्वसाक्षात्कारि-त्वादविचारी । शिष्टमुक्तं भक्तेषु मामकः कोपः प्रसादः । किं च नाहं पापिष्ठादिः । किन्तु त्वमेव पापिष्ठो दुराचारोऽविमृश्यकारी च । तत्कथम् । धेनुः पयः न ददातीति दिनषट्कं गतम् । कुतो न विचा-रितम् ? गोपाल्युक्तमपि विस्मृतम् । तत्कुत इत्युक्ते प्रारब्धात् अज्ञानादिति वक्तव्यम् । अतः प्रारब्धवशात् अज्ञानात् अविचारेण गोपालस्य ताडनाद्यनिष्टपरम्परा जाता । अतस्त्वया समाधातव्य-मिति चेत् तर्ह्येवं त्वमपि समाहितो भव कुतोऽतिदुःखम् । इति उक्ते कुतो मम दुःखं मया वृथा मिथ्यातिदुःखेन शापो दत्त इति भावः ।

### मूलम्

**यावत्कलियुगं तिष्ठेत् तावत् दुःखी [1]भवेन्नृप ।**
**उभौ दुःखसमापन्नौ सत्यसङ्कल्प[2]शेषतः ॥ ६ ॥**

१. भव प्रभो । २. दोषतः ।

### कल्याणकाण्डदीपः

इदं दुःखं कियत्कालं भवेदित्याशङ्कायामाह— **यावदिति** । हे नृप, **यावत्कलियुगं तिष्ठेत्** प्रवर्तेत **तावत्** त्वं **दुःखी भवेत्** इति मम भाति । एवमतीतानागतज्ञानी त्वं कुतो भाव्यनिष्टमावयोः न परिहृतवान् । त्वमर्चाभावमतिक्रम्य देवरहस्यमपि माम् उपदिशसि । कुत एतादृशेन त्वया नाहं बोधितः ? त्वं च कुठारप्रहारात् कुतो न रक्षित इत्यत आह— **उभौ इत्यादिना** । यद्यपि सत्य-सङ्कल्पो महान् गुण इति मया आत्मसात्कृतः । तथाऽप्यावयोर्दुःखसाधनत्वात् दोषीभूतः इति दोषत इत्युक्तिः । 'शेषतः' इति पाठे सत्यसङ्कल्पे सङ्कल्पितेषु बहुशो रामावतारे उपभुक्तादन्यः शेषः तस्मादित्यर्थः । "शेषोऽनन्तो हली शेषं त्रिष्वन्यदुपयुक्ततः" *इति रत्नमाला* । राजपक्षे शेषतः । पित्रदर्शनानादराद्युपभुक्तशेषः । **दुःखसमापन्नौ** आवां बभूविव । स च सत्यसङ्कल्पः कीदृशः । तथा हि । पुरा इन्द्रलोकमिच्छन्ती काव्यमाता धर्मपरदेवपक्षपातेन उपेन्द्रावतारेण मया निषूदिता । अथ भृगुणाऽतिदुःखेनाविमृश्य तव सदुःखं मानुषं जन्म भार्यया कलहादिकं स्यादिति शप्तः । अथ

स एवाविमृश्य दत्त इति स्वयं सन्तप्तः । अथ नानृती स्यामहमिति तपसा तोषितेन मया शापोऽनुगृहीतः । स च मया रामावतारे बहुशोऽनुभूय इदानीं तच्छेषमनुभवामीति ।

तव दुःखे सङ्कल्पस्तु

"अतीतानागतज्ञानी त्रैलोक्योद्धरणक्षमः ।
एतादृशोऽपि नाचारं श्रौतं स्मार्तं परित्यजेत् ॥" (कृष्णामृतमहार्णवे)

इति स्मरणात् तव मातापितृभ्यां स्वोत्तमसोमादिदेवपतित्वादिसम्पादकविवाहादिना माता च अनादरेण परस्परप्रोत्साहनमात्रेण तव जन्माभूत् । अत एतादृशी विपद् अनुभोक्तव्येति ।

*अत एवोदाहृतं भगवत्पादैः—*

"सुरस्त्रियोऽतिकारणैर्यदन्यथास्थिताः सदा ।
दुरन्वया सुदुःसहा विपत्ततो भविष्यति ॥" इति ।

उभौ दुःखसमापन्नौ इत्यनेन शापप्रयुक्तं शिरोवेदनमात्रं प्रारब्धानुभवाय भवति । न तु पिशाचत्वप्रयुक्तरुधिरमदिरादिपानादि नरकसाधनमिति बोध्यम् ।

**गूढकर्तृकव्याख्यानम्**

चोलः देवं प्रति "क्रीडादिगुणविशिष्ट ! जगदीश ! भवान् शापं ददौ । शापनिमित्तं अपराधं कं कृतवानहम् ? निरपराधिनं मां किमर्थं अशपः ? कारणं विना शापो न दत्त इति मन्ये । तर्हि पुरा मया किं पापं कृतं भवेत् ? किमपि न जाने । अतीत-वर्तमान-अनागत-जगत्कर्ता कारणं त्वमेव वेत्सि । स्वामिन् ! हन्त हन्त ! तव असदृशदुःखं प्राप्तम् । अपि तु, कथमिदं प्राप्तं इति न जाने । इति आक्षिपत् । तदा श्रीनिवासः अतिदुःखी जातः । कुतः ? स्वभक्तः एवं अज्ञानी जातः इति । तथाऽपि दुःखित इव स्थितः । मन्दं मन्दं वदति "नृपश्रेष्ठ ! त्वं अतिपापी । दुष्टाचारः । असमीक्ष्यकारी जाल्मः । अद्य मे शिरो भेदनेन महत् क्षतं जातम् । महती वेदना । अतिदुःखितोऽहं अज्ञात्वा शापं दत्तवान् । मद्दत्तशापं गृहीष्व । शापस्तावद्दत्तः । सः अनृतो मा भूत् । मच्छापो नानृतो भवेदिति ब्रह्मज्ञानिनो वदन्ति । अतः वेदविरोधो माभूत् । "न विष्णोर्वचनं क्वापि मृषा भवति कुत्रचित्" इति ज्ञानिनः । नृपश्रेष्ठ ! दुःखभरेण अज्ञात्वा त्वां शप्तवान् । अपि तु, हन्त ! भक्तं वृथा शप्तवान् । शान्तं पापम् । अयं कियन्मितं परितपति इति भृशं अनुतपामि । किं करोमि ? भक्तेषु मे अतिशयितवात्सल्यम् । अतो मे अतिदुःखम् ।

(अत्र अन्तरार्थः— अहं पुण्यवान् सदाचारः विमृश्यकारी भक्त एवं जात इति दुःखितः । ज्ञात्वैव । त्वया अवश्यानुभोक्तव्यप्रारब्धकर्मशेषं निमित्तीकृत्य मया दत्तं शापं गृहाणेति मत्सङ्कल्पः । पानि पापानि आपिष्टानि येन सः पापिष्टः । अन्यैः दुष्करः आचारः यस्य सः दुराचारः । न विद्यते विचारः विचारविषयः अस्येति अविचारी । अतः नाहं पापिष्ठः दुराचारः अविचारी । परन्तु, त्वमेव । कथम् ?)

"धेनुः राजगृहे क्षीरं न ददातीति दिनषट्कं गतम् । कुतो न विचारितम् ? गोपाली यदुक्तवती विस्मृतं त्वया । कुतः ? प्रारब्धात् अज्ञानात् विचारं अकृत्वा गोपेन ताडनस्य अवकाशं दत्तवान् । गोपः कुठारेण मे शिरः प्राहरत् । शिरो भिन्नम् । रक्तस्फूर्तिः । गोपमरणम् । एवमादि अनिष्टं जातम् । त्वया समाधातव्यम् । किञ्च ममापि दुःखम् । नैव । मिथ्यादुःखेन मया शापो दत्तः । त्वं एतत् कलियुगं तिष्ठेत् तावत् पिशाचजन्म अनुभव ।" इति आदिशत् हरिः । पुनः प्राह— "त्वं अतीत-अनागत-ज्ञानी । आवयोः अनिष्टप्राप्तेः कुतोऽवकाशं दत्तवान् ? कुतः अनिष्टं न परिहृतवान् ? त्वमेव अर्चाभावं अतिक्रम्य देवरहस्यमपि मां उपदिशसि । एतादृशः त्वं कुतो मां न प्रेरितवान् । कुतः त्वां गोपालकुठारघातात् न रक्षितवान् ?" इति पृच्छायां "यद्यपि अहं सत्यसङ्कल्पः । तथाऽपि आवां दुःखभागिनौ जातौ । अतोऽयं सत्यसङ्कल्पतागुणः दोषत्वेन सम्पन्नः । अहं भक्तवत्सलः । मम भक्तवात्सल्यं न व्यर्थम् । भक्तेच्छानुवर्ती । भक्तमनोरथपूरको यदि न स्यां तर्हि मम भक्तवात्सल्यस्य हानिः । अतोऽवश्यं अनुभोक्तव्यं कृतं कर्म शुभाशुभम् । आवाभ्याम् । आवयोः दुःखस्य मम सत्यसङ्कल्प एव कारणम् ।" कथम् ?

वच्मि— "पुरा काव्यमाता इन्द्रलोकं इच्छन्ती स्थिता । धर्मपरदेवान् रक्षितुं तां अहं उपेन्द्रावतारः व्यापादितवान् । भार्यानाशेन अतिदुःखितो भृगुः अविमृश्य तव सदुःखं मानुषजन्म भार्यया कलहादिकं च स्यादिति मां शशाप । अथ स एव अहं अविमृश्य शापं दत्तवान् इति स्वयं तप्तः । अथ तस्यैव तपसा तुष्टोऽहं अनृती अहं न स्यां इति तत् शापं परिगृहीतवान् । तथोक्ते रामावतारे मातापितृवियोगः राज्यभ्रंशः रावणेन मद्भार्यापहारः दीर्घवनवासक्लेश इत्यादिकं बहुशोऽनुभूय अद्यापि भार्यावियोगः स्वस्थानभ्रंशः वने वल्मीकाश्रयः शिरोवेदना इत्यादिक्लेशान् अनुभवन् अस्मि ।" किञ्च तव दुःखे मम सत्यसङ्कल्पः कारणं कथम् ? यद्यपि अहं अतीतानागतज्ञानी त्रैलोक्योद्धरणक्षमः । तथाऽपि "नाचारं श्रौतं स्मार्तं वा परित्यजेत्" इति स्मृतेः । "श्रुतिस्मृती हरेराज्ञा" इत्युक्तेः श्रुतिस्मृतिवचनानि मम आज्ञारूपाणि । तद्वचनात् त्रिविक्रमः मदाज्ञातिक्रम एव । प्रकृते मदाज्ञारूपस्मृतिवचनं त्वं अति-क्रान्तवान् । कथम् ? तव पितरौ विकर्म कृतवन्तौ । सोत्तमसोमादि देवपतित्वादिसम्पादकविवाहादयः

स्मृत्युक्ताः । संस्कारक्रियारूपाः सदाचाराः । तान् समुल्लङ्घ्य स्वेच्छया परस्परप्रोत्साहनमात्रेण कामितवन्तौ तव पितरौ । तादृशाधर्माचारान् तिरस्कृत्य शास्त्रसंस्कारहीनाभ्यां त्वं जातोऽसि । अत एव अद्य तत्फलत्वेन त्वया पिशाचत्वं अनुभोक्तव्यम् । पिशाचत्वं तव भवति । अपि तु पिशाचत्व-प्रयुक्तरुधिरमदिरादिपानं इत्यादि नरकसाधनं न भवति । पिशाचत्वमात्रम् । एवं नृपश्रेष्ठ ! एतत्कल्यन्तं त्वया पिशाचत्वं अनुभवितव्यम् । यावत्कलि अखण्डं दुःखं अनुभवितव्यं कथमिति मा शोच ।

**मूलम्**

**भविष्यति नृपश्रेष्ठ आकाशनृपनामकः ।**
**स तु दास्यति मे कन्यां नाम्ना पद्मावतीं शुभाम् ॥ ७॥**

**कल्याणकाण्डदीपः**

ननु यावत्कलिः किमखण्डं दुःखम् ? नेत्याह— **भविष्यतीति** ।

**मूलम्**

**कन्यादानस्य काले तु [1]वरदक्षिणमर्पति ।**
**किरीटं शतभारं च रत्नवज्रसमाकुलम् ॥ ८॥**

१. ददाति वरदक्षिणाम् ।

**कल्याणकाण्डदीपः**

वरा दक्षिणा यस्य तत् **वरदक्षिणम्** । तं **रत्नवज्रसमाकुलं** शतभारं किरीटं मह्यं अर्पति समर्पयति इति योजना । यद्दीयते तस्य न्यायार्जितस्य सङ्कल्पदेवताकर्तृपात्रानुसन्धानफलाक्षतताम्बूलवरमूल्यसम-दक्षिणा मन्त्रश्रीतुलस्युदकधारापूर्वकत्वे दानं साङ्गं भवतीत्येतत्सर्वसाधारणम् । परन्तु अत्र विशेषः । ऋणपीडापरिहारकत्वात्, दीयमानवस्तुमूल्यादुत्तमा दक्षिणा । अन्यथा ऋणापनयनायोत्तमर्णं वैश्रवणं प्रत्याभरणमपि गच्छेदिति भावः ।

*रत्नानि नव विष्णुधर्मोत्तरे उक्तानि—*

"मुक्ताफलं हिरण्यं च वैडूर्यं पद्मरागकम् ।
पुष्यरागं च गोमेदं नीलं गारुत्मतं तथा ।
प्रवाळयुक्तानि महारत्नानि तु नवैव हि ॥" इति ।

वज्रो हीरकः तैरामुक्तं शतभारं शतभारपरिमाणपरिमितशुद्धसुवर्णमूल्यकम् । *(नानूरु मण चोक्क चिन्नवे मूल्य-द्रव्यवागि उळ्ळद्दु)* । शतभारसुवर्णसमतोलितमिति भ्रान्तिं निराह— **रत्नवज्रेत्यादिना** । रत्नखचिताभरणानां उन्मानकथनस्य प्रयोजनाभावादनुभवविरोधाच्च । "तुलास्त्रियां पलशतं भारः स्याद्विंशतिस्तुला" इत्यमरः । भारः *नाल्कु मण सुवर्णादि* इति लक्ष्मणभट्टः । **अर्पति** । ऋगतिप्रापणयोः णिजन्तः । 'अर्त्तिह्रि' इति पुक् । णिज्लोप आर्षः । यद्वा अर्पयतीत्यर्पः । पचाद्यच् । समर्पणकर्ता । स इवाचरति अर्पति प्रातिपदिकादाचारे क्विप् । आभरणसमर्पणमलङ्कारकरणान्तम् । अलङ्करिष्णवोऽन्ये तोण्डिमानादय इति भावः ।

**मूलम्**

**शुक्रवारे तु [1]सम्प्राप्ते तत्किरीटं धराम्यहम् ॥ ९ ॥**
**किरीटधारणे काले नेत्रे मे जलपूरिते ।**
**घटिकाषट्क[2]मारभ्य सुखं तत्र भविष्यति ॥ १० ॥**
**इति कालावधिं कृत्वा राज्ञः स्वस्य च माधवः ।**
**सुखस्य कालं संसूच्य स्वावताप्रयोजनम् ॥ ११ ॥**

१. सायाह्ने । २. मात्रं ते ।

**कल्याणकाण्डदीपः**

**जलपूरिते** भवत इति शेषः । तव शिरोवेदनं त्वां परित्यज्य मां सङ्क्रमत इति भावः । आरभ्य जलपूरणमुपक्रम्य घटिकाषट्कं तत्र कलावपि प्रति शुक्रवारं सुखं भविष्यति । "स्वावताप्रयोजनमाह" इति शेषः ।

**गूढकर्तृकव्याख्यानम्**

पुरतः आकाशो नाम नृपः अवतरिष्यति । सः पुण्यात्मा । स्वदुहितरं पद्मां कन्यां मे प्रदास्यति । लोकमङ्गलकरिकन्यादानकाले राजा मे वरदक्षिणां ददाति । किञ्च नवरत्नखचितशतभारमितशुद्धसुवर्णमूल्यकं किरीटं मे अर्पयति । (भारः स्यात् विंशतिस्तुलाः । कर्णाटके व्यवह्रियमाण-*नाल्कुमण-समो भारः* । शतभारसमः *नानूरुमण* इत्ययम् । शतभारमितसुवर्णमूल्यसदृशमूल्यकं किरीटं ददाति ।) न्यायार्जितं यद्वस्तु दीयते तस्य इष्टकुलदेवताध्यानपूर्वकं देशकालादिस्मरणपूर्वकं दानकर्तृ-दानार्हपात्रानुसन्धानपूर्वकं फल-अक्षत-ताम्बूल-वरयोग्यतानुसारदक्षिणा-वेदमन्त्र-श्रीतुलसीदल-सहितोदकधारापूर्वकत्वे एव दानं साङ्गं सफलं भवति ।

अत्र तु दाने विशेषः— दीयमानकिरीटमूल्यात् उत्तमां दक्षिणां आकाशो ददाति । अत्यधिकतर-दक्षिणा दत्ता चेत् तद्दक्षिणाधनं कुबेरात्कृत-ऋण-तद्वृद्धि-अपनयनाय भवति । तेन ऋणं न शिष्यते । वरस्य किरीटादि आभरणानि शिष्यन्ते । ईदृशमदनुकूलदानं दीयते आकाशेन । तद्दत्तकिरीटं प्रतिशुक्रवारं सायं शिरसि धरामि । किरीटधारणकाले मम नेत्रे अश्रुपूरिते । अश्रुपूरणमारभ्य घटिकाषट्कान्तं, नृप ! तव सुखं भवेत् । राजन्! मा शोच । समाधेहि । उभौ सखायौ । उभावपि दुःखितौ । अद्य तव दुःखं मम दुःखम् । मम दुःखं त्वद्दुःखम् । प्रकृते मम तव च सुखं दुःखं च समम् । त्वं च पुरा राज्यभोगं त्यक्त्वा विरक्तः मत्समीपे तपः कर्तुं इच्छसि । अद्य मत्समीपे अनिषिद्धकायक्लेशं अनुभवसि । इदमपि तपोरूपमेव । मम भार्या कलहं कृत्वा मां त्यक्त्वा अन्यत्र गता । तदारभ्य मम विरक्तिः जाता । इत्येवं श्रीनिवासः चोलपुत्रस्य स्वस्य सुखदुःखानुभवकालावधिं स्वावताप्रयोजनं च सूचयामास ॥ ततः किं अभूत् ?

**मूलम्**

**इति सम्भाष्य राजानं तत्रास्ते भगवान् हरिः ॥ १२ ॥**

**कल्याणकाण्डदीपः**

ततः किमभूदित्यत आह— **इति सम्भाष्येति** । अत्रेदं बोध्यम् । आवयोस्तावत्सख्ये विद्यमाने मच्छापप्रयुक्तदुःखसहनं तव न चित्रम् ।

"आढ्यो वाऽथ दरिद्रो वा दुःखितः सुखितोऽपि वा ।
निर्दोषो वा सदोषो वा वयस्यः परमा गतिः ।
धनत्यागो सुखत्यागो देहत्यागोऽपि वा पुनः ।
वयस्यार्थे प्रवर्तन्ते स्नेहं दृष्ट्वा तथाविधम् ॥" इति वचनात् ।

किं च, राज्यभोगविरक्तस्य मत्समीपे तपसीच्छा पुरासीत् । मत्समीपे अनिषिद्धकायक्लेशस्य तपोरूपत्वात् इत्येवं **सम्भाष्य** समाधाय ।

**मूलम्**

**क्षतशान्तिं समाकाङ्क्षन् वैद्यशास्त्रविशारदम् ।**
**गुरुं सुरपतीनां च सस्मार जगदीश्वरः ॥ १३ ॥**

**भगवत्क्षतापनोदनाय गुरुकृतचिकित्साप्रकारः**

आगतं स्वगुरुं दृष्ट्वा औषधं वद मे द्रुतम्।
इति तेन समाज्ञप्तो जीवो जीववतां वरः ॥ १४ ॥

**श्रीवेङ्कटाचलस्य अयोध्यामथुरादितौल्यवर्णनम्**

गुरुरुवाच—

क्षीरमौदुम्बरं देव तथा कटुककार्पसम् ॥ १५ ॥

**कल्याणकाण्डदीपः**

**कटुककार्पसं** कटुशब्दः क्षारवाची। अपि माषं मषमितिवत्। कार्पसमिति साधु। तेन शिला चूर्णकाचश्च द्वौ क्षारौ गृह्येते। कटुकौ च कार्पसं च तेषां समाहारः, तत्। औदुम्बरक्षीरेण क्षतसंरोहणं कटुककार्पासैः रक्तोद्गमनिरोधः। यथातथं तथाऽनतिक्रम्य यथातथम्। अव्ययभावः। "यथार्थं तु यथातथम्" इत्यमरः।

**मूलम्**

सम्मिलित्वा रमाकान्त तत्क्षतोपरि धार्यताम्।
इत्येवं गुरुणाऽऽज्ञप्तः तच्चकार यथातथम् ॥ १६ ॥
एवं कुर्वन् रमानाथः [1]तत्र लीनोऽभवद्धरिः।
कौसल्या कीटकगृहं तिन्त्रिणीदशादिग्रथः ॥ १७ ॥
गिरिरूपोऽनुजः [2]साक्षाद्भूधरेन्द्रोऽप्ययोध्यकः।
इत्थं रामावतारेण ह्यवतारमचीक्लृपत् ॥ १८ ॥

१. तत्रास्ते भगवान् हरिः। २. साक्षादयोध्याऽभूदधित्यका।

**कल्याणकाण्डदीपः**

एतावता प्रबन्धेन श्रीनिवासः एकाकी वल्मीकान्तः क्लेशमनुभवन्नास्ते इति मन्दानां प्राप्तं निराह— **कौसल्येत्यादिना**। नायमेकाकी। किन्तु, वल्मीकान्तरा अप्राकृतविमाने मुक्तब्रह्मादिसेवितो नानावताररूपैः तत्तदवतारोपयुक्तबन्धुभिः सह परमानन्दमनुभवन्नास्त इति भावः। **अचीक्लृपत्**। "इत्थं रामरूपेण क्रीडते वेङ्कटाचले" इति शेषाकर्षः। एवं वैकुण्ठरूपेण इत्युत्तरत्रापि।

**मूलम्**

**वल्मीको देवकी साक्षात् वसुदेवोऽथ तिन्त्रिणी ।**
**बलभद्रः शेषशैलो [1]मथुरा वेङ्कटाचलः ॥ १९ ॥**

१. मथुराऽभूदधित्यका ।

**स्वामिपुष्करणी नाम यमुना च विराजते ।**
**यादवाश्च मृगाः सर्वे खगा वै गोपिकादयः ॥ २० ॥**

**एवं श्रीकृष्णरूपेण क्रीडते वेङ्कटाचले ।**
**अरायिकाणे विकटे गिरिं [1]गच्छेति सद्विदः ॥ २१ ॥**

१. गच्छ सदान्वये ।

**कल्याणकाण्डदीपः**

पुनः पर्वतमाहात्म्यं प्रकाशयन्नुपसंहरति— **अरायिकाणे** इति ।

*ऋग्वेदसंहितायां अष्टमाष्टके अष्टमाध्याये इयं ऋक् श्रूयते—*

"अरा॑यि का॒णे विक॑टे गि॒रिं ग॑च्छ सदान्वे ।
शि॒रिम्बि॑ठस्य॒ सत्त्व॑भि॒स्तेभि॑ष्ट्वा चातयामसि ॥" इति । (ऋ.१०-१५५-१)

अस्य मन्त्रस्य भरद्वाजः शिरिम्बिठ ऋषिः । अलक्ष्मीघ्ना देवता । अनुष्टुप् च्छन्दः । "अरायीति पञ्चर्चस्य सूक्तस्य भरद्वाजः शिरिम्बिठऋषिः । अरायिकाण इत्यनयोरलक्ष्मीघ्ना देवता । अनुष्टुप्च्छन्दः" इति च्छन्दोनुक्रमणिकोक्तेः ॥ अरायि । काणे । विकटे । गिरिं । गच्छ । सदान्वे । शिरिम्बिठस्य । सत्त्वभिः । तेभिः । त्वा । चातयामसि । इति पदानि ॥ "सदान्वे शिरिम्बिठस्य" इति निघण्टौ पद-परिगणनात् । सत्वभिः । तेभिः इत्यत्र "बहुलं छन्दसि" इत्येसोऽभावः । तेभिष्ट्वेत्यत्र युष्मत् तक्षुष्वन्तः पादमिति पादमध्यस्थस्य सस्य मूर्धन्यः । चातयामसि इत्यत्र इदन्तो मसीति मस इमागमः ॥

अत्र वेदभाष्यम्— अरायिकाणे कात्यायनः । अदायिनि । शिरिम्बिठो भरद्वाजः । ब्रह्मण-स्पती । अन्त्या वैश्वदेवी । जगती देवत्या वेति । दुरदानशीले । अक्ष्णा काणे । पिठान्तगतिके पर्वतं गच्छ । सदा शब्दकारिणी । शिरिम्बिठस्य मम कर्मभिः त्वां नाशयामः । निरुक्तं द्रष्टव्यमिति । निरुक्तं च । अदायिनि । काणे विकटे । काणो विक्रान्तदर्शन इत्यौपमन्यवः । कणतेर्वार्वास्यादनुभाव-कर्मणः । कणतिः । शब्दानुभावे भाष्यतेऽनु॒तातिमात्राणुभावात्काणो दर्शनानुभावात्काणो विकटो

विक्रान्तगतिरित्यौपमन्यवः । कुटतेर्वा स्याद्विपरीतस्य विकुटितो भवति । गिरिम् । गच्छ । सदानोनुवे शब्दकारिते । शिरिम्बिठस्य सत्त्वभिः । शिरिम्बिठो मेघः । शीर्यते बिठम् । बिठं अन्तरिक्षम् । बिठं बिरीठेन व्याख्यातम् । तस्य सत्वैरुदकैरिति स्यात् तैष्वा चातयामोऽपि वा । शिरिम्बिठो भरद्वाजः । कालकर्णोपेतोऽलक्ष्मीः । निर्नाशयाञ्चकार । तस्य सत्त्वैः कर्मभिरिति स्यात् । तैष्वा चातयामः । चातयतिर्नाशने इति । एतत्पौराणिकनिरुक्तं च ।

**विकटे** इत्यस्य "वें प्राहुः सर्वपापानि कटस्तद्दाह उच्यते" इति । सदान्वे इत्यस्य **सद्विद** इति । शिरिम्बिठस्य अप्येकाक्षरसाम्यान्निर्ब्रूयादिति यास्कवचनात् । शिरिम्बिठस्य शेषस्येति वा । श्रीवेङ्कटस्येति वा इत्यादि ।

एवमादिपरिशीलनवशात् श्रीनिवासप्रेरणात् विद्वज्जनानुग्रहाच्च मम भासमानः प्रकृतोपयोग्यर्थो लिख्यते—

अरायि । अदायिनि । अदात्रि । दरिद्रे । पापे । अलक्ष्मी । अमङ्गले । मङ्गलं पुण्यम्, तद्विरुद्धं अमङ्गलम् । हे सर्वपाप । अदत्तदोषेणेत्यादेः । काणे अक्ष्णा काणे । अन्धे । आन्ध्यहेतुपाप । विकटे । कुण्ठे कौण्ठ्यहेतुपापसदान्वे । गृहं गृहं यात्वा "अम्बा भिक्षां देहि" इति नित्यं पुनः पुनः शब्दकारिणि । एतदुपलक्षितसर्वपाप । त्वम् । विकटे । सर्वपापदाहार्थम् । शिरिम्बिठस्य श्रीबिठस्य वेङ्कटस्य आवासभूतो शिरिम्बिठस्य शिरस्थानस्थिताशीविषस्य शेषस्य यः तम् । गिरिं गच्छ । गिरिं प्रति यात्रां कुरु । अथ शिरिम्बिठस्य शेषस्य । मेघस्य । भरद्वाजस्य । वेङ्कटस्य । तेभिः । सत्त्वभिः तत्र । सामर्थ्यैः । शेषस्य सत्त्वं स्वान्तर्यामि सङ्कर्षणमुखानलेन सर्वपापशोषणदाहानुकूलं सामर्थ्यम् । वेङ्कटगिरेः शेषवदनत्वात् । मेघस्य स्वान्तरङ्गीकृतगगनतरङ्गिणीजलेन पुण्यपुरुषाप्यायनरूपाप्लवनानुकूलम् । भरद्वाजस्य तपः । वेङ्कटस्यात्यन्तिकानिष्टनिवर्तनद्वारा स्वानन्दकैवल्यसाम्राज्यदानानुकूलम् इत्येतैः सत्त्वभिः । तत्तद्योग्यतातारतम्यवशात् त्वा त्वां चातयामसि नाशयामः । इति सदान्वे । सद्ब्रह्म । आ सम्यक् सद्गुणत्वेन निर्दोषित्वेन । अनु । तत्तद्योग्यतातारतम्यवशात् । त्वा । त्वाम् । चातयामसि । नाशयामः । इति । स्वयोग्यमोक्षानुगुणतया विन्दतीति सदान्वे ब्रह्मज्ञानिनो देवा वदन्तीति शेषः । अयत्नलब्ध सर्वपापिन् । दरिद्र । काणे । कुत्सितसंसारकीलककीलित । काण । कुण्ठ । दीनवचन । पापिजीव । सर्वपापदाहार्थं वेङ्कटगिरिं गच्छ । यात्रां कुरु । अथ वेङ्कटेशस्य सत्त्वभिः प्रपन्नाभयदानादिगुणैः । त्वं पापिनम् । नाशयामः । त्वत्पापानि नाशयाम इति ज्ञानिनो वदन्तीति भावः । अत्रोपष्टम्भकलेखनस्य विस्तरभीतेरुपरमः । अतः साधवो मयि दयां कुर्वन्तु ।

मूलम्

**एवं वेदमयः साक्षाद्गिरीन्द्रः पन्नगाचलः ।**
**स्वदेहाच्छन्नवल्मीको वैकुण्ठादधिको ह्यभूत् ॥ २२ ॥**

**कल्याणकाण्डदीपः**

**एवं** इत्थम् । **वेदमयः** वेदाः प्राचुर्येण परमतात्पर्येण प्रस्तुता अस्मिन्निति वेदमयः । तत्प्रकृतवचने मयट् । **वल्मीक इति** । "वल्मीकं पुन्नपुंसकं" इत्यमरः ।

मूलम्

**सुवर्णमुखरी नाम नदी सा विरजा नदी ।**
**वैकुण्ठो वेङ्कटगिरिर्वासुदेवो रमापतिः ॥ २३ ॥**

**मुक्तब्रह्मा पक्षिगणा मुक्तरुद्रा मृगोत्तमाः ।**
**सनत्कुमारप्रमुखा वानराद्या द्विजोत्तमाः ॥ २४ ॥**

**कल्याणकाण्डदीपः**

मुक्तरुद्राः मुक्तशेषाः ।

मूलम्

**मानुषं जन्ममासाद्य यः पुमान् वेङ्कटाचलम् ।**
**गन्तुमिच्छति धर्मिष्ठः सर्वं तेन स्वनुष्ठितम् ।**
**प्रीतो भवेद्रमानाथः सर्वदेवनमस्कृतः ॥ २५ ॥**

**कल्याणकाण्डदीपः**

**सर्वं तेन स्वनुष्ठितमिति ।** श्रीशं वन्दे ॥

मूलम्

**[1]श्रीवेङ्कटाद्रेस्तु महामहात्मतां**
**जानन्ति [illegible]न) ब्रह्मशिवेन्द्रपूर्वकाः ।**

किमल्पवीर्या [2]मनुजास्ततमोनुगा
जानन्ति विष्णोः स्थलमद्भुतं च ॥ २६ ॥

१. श्रीवेङ्कटाद्रेर्महिमानमुत्तमं । २. मनुजाः सृतिस्थाः ।

*इति श्रीमद्भविष्योत्तरपुराणे श्रीवेङ्कटाचलमाहात्म्ये*
*पर्वतवर्णनं नाम चतुर्थोऽध्यायः ॥*

॥ श्रीकृष्णार्पणमस्तु ॥

*इति श्रीमद्भविष्योत्तरपुराणव्याख्याने श्रीमत्कल्याणकाण्डदीपे*
*गिरीन्द्रात्मकप्रदीपप्रभाकरणं नाम चतुर्थोध्यायः ॥*

॥ श्रीकृष्णार्पणमस्तु ॥

**गूढकर्तृकव्याख्यानम्**

इत्येवं चोलं समाधाप्य अव्याकृतषडैश्वर्यसम्पन्नः श्रीनिवासः तत्रैव वल्मीके वसन् अस्ति । अपि तु, स्वशिरोभेदनजन्यक्षतचिकित्सार्थं सुरगुरुं वैद्यशास्त्रविशारदं बृहस्पतिं सस्मार । क्षणात् गुरुः श्रीनिवासं प्राप्तः । श्रीनिवासः "बृहस्पते ! पश्य मम शिरस्फोटनम् । क्षतं च । अतिदुःसहा जाता व्यथा । एतत् शमनाय द्रुतं औषधं वद" इत्याह । तदा गुरुः वैद्यशास्त्रविशारदः । जीववतां वरः । कथम् ? अयं जीवयति किल विगतासून् देहिनः । मृतसञ्जीविनीमन्त्रं विदितवान् । "अनात्तान् नष्ट-संज्ञांश्च आहतासून् बृहस्पतिः । दिव्याभिः मन्त्रयुक्ताभिः औषधीभिरजीवयत् ॥" इति रामायणोक्तेः । "हे श्रीनिवास ! एवं औषधं क्षतस्य कुरु । औदुम्बरक्षीरं अर्कक्षीरं एतद्वयं आनीय द्वयं संयोज्य क्षतस्य संरोपयेत् । उपरि कार्पासेन एकं .... कृत्वा क्षतोपरि क्षिपेत् । एवं कृतं चेत् क्षतं क्रमेण शाम्येत्" इत्याह । गुरूक्तिप्रकारेण श्रीनिवासः क्षतस्य चिकित्सां अकरोत् । क्षतात् रक्तस्रावः उपरराम । क्षतं च अशाम्यत् ।

एवं परिहृतक्षतः श्रीनिवासः कथं एकाकी वल्मीके अवसत् ? तस्य क्लेशो नाभूत् । नापि सः एकाकी । जगत्कुटुम्बी । स्ववल्मीकं स्वकृततत्तदवतारोचितस्थानसदृशं मत्वा तद्वल्मीकान्तर्गत-प्राकृतविमाने मुक्तब्रह्मादिदेवैः सेव्यमानः नानावताररूपैः तत्तदवतारकालिकबन्धुभिः परमानन्दित आस्ते ॥ स्वाधिष्ठितवल्मीकं स्वमाता कौसल्या । स्वः रामचन्द्रः । वल्मीकदक्षिणदिशि स्थितः

**मूलम्**

**एवं वेदमयः साक्षाद्गिरीन्द्रः पन्नगाचलः ।**
**स्वदेहाच्छन्नवल्मीको वैकुण्ठादधिको ह्यभूत् ॥ २२ ॥**

**कल्याणकाण्डदीपः**

**एवं** इत्थम् । **वेदमयः** वेदाः प्राचुर्येण परमतात्पर्येण प्रस्तुता अस्मिन्निति वेदमयः । तत्प्रकृत-वचने मयट् । **वल्मीक इति** । "वल्मीकं पुन्नपुंसकं" इत्यमरः ।

**मूलम्**

**सुवर्णमुखरी नाम नदी सा विरजा नदी ।**
**वैकुण्ठो वेङ्कटगिरिर्वासुदेवो रमापतिः ॥ २३ ॥**

**मुक्तब्रह्मा पक्षिगणा मुक्तरुद्रा मृगोत्तमाः ।**
**सनत्कुमारप्रमुखा वानराद्या द्विजोत्तमाः ॥ २४ ॥**

**कल्याणकाण्डदीपः**

**मुक्तरुद्राः** मुक्तशेषाः ।

**मूलम्**

**मानुषं जन्ममासाद्य यः पुमान् वेङ्कटाचलम् ।**
**गन्तुमिच्छति धर्मिष्ठः सर्वं तेन स्वनुष्ठितम् ।**
**प्रीतो भवेद्रमानाथः सर्वदेवनमस्कृतः ॥ २५ ॥**

**कल्याणकाण्डदीपः**

**सर्वं तेन स्वनुष्ठितमिति** । श्रीशं वन्दे ॥

**मूलम्**

**[1]श्रीवेङ्कटाद्रेस्तु महामहात्मतां**
**जानन्ति [illegible] ,न) ब्रह्मशिवेन्द्रपूर्वकाः ।**

किमल्पवीर्या [२]मनुजास्ततमोनुगा
जानन्ति विष्णोः स्थलमद्भुतं च ॥ २६ ॥

१. श्रीवेङ्कटाद्रेर्महिमानमुत्तमं । २. मनुजाः सृतिस्थाः ।

*इति श्रीमद्भविष्योत्तरपुराणे श्रीवेङ्कटाचलमाहात्म्ये*
*पर्वतवर्णनं नाम चतुर्थोऽध्यायः ॥*

॥ श्रीकृष्णार्पणमस्तु ॥

*इति श्रीमद्भविष्योत्तरपुराणव्याख्याने श्रीमत्कल्याणकाण्डदीपे*
*गिरीन्द्रात्मकप्रदीपप्रभाकरणं नाम चतुर्थोध्यायः ॥*

॥ श्रीकृष्णार्पणमस्तु ॥

**गूढकर्तृकव्याख्यानम्**

इत्येवं चोलं समाधाप्य अव्याकृतषडैश्वर्यसम्पन्नः श्रीनिवासः तत्रैव वल्मीके वसन् अस्ति । अपि तु, स्वशिरोभेदनजन्यक्षतचिकित्सार्थं सुरगुरुं वैद्यशास्त्रविशारदं बृहस्पतिं सस्मार । क्षणात् गुरुः श्रीनिवासं प्राप्तः । श्रीनिवासः "बृहस्पते ! पश्य मम शिरस्फोटनम् । क्षतं च । अतिदुःसहा जाता व्यथा । एतत् शमनाय द्रुतं औषधं वद" इत्याह । तदा गुरुः वैद्यशास्त्रविशारदः । जीववतां वरः । कथम् ? अयं जीवयति किल विगतासून् देहिनः । मृतसञ्जीविनीमन्त्रं विदितवान् । "अनात्तान् नष्ट-संज्ञांश्च आहतासून् बृहस्पतिः । दिव्याभिः मन्त्रयुक्ताभिः औषधीभिरजीवयत् ॥" इति रामायणोक्तेः । "हे श्रीनिवास ! एवं औषधं क्षतस्य कुरु । औदुम्बरक्षीरं अर्कक्षीरं एतद्वयं आनीय द्वयं संयोज्य क्षतस्य संरोपयेत् । उपरि कार्पासेन एकं .... कृत्वा क्षतोपरि क्षिपेत् । एवं कृतं चेत् क्षतं क्रमेण शाम्येत्" इत्याह । गुरूक्तिप्रकारेण श्रीनिवासः क्षतस्य चिकित्सां अकरोत् । क्षतात् रक्तस्रावः उपरराम । क्षतं च अशाम्यत् ।

एवं परिहृतक्षतः श्रीनिवासः कथं एकाकी वल्मीके अवसत् ? तस्य क्लेशो नाभूत् । नापि सः एकाकी । जगत्कुटुम्बी । स्ववल्मीकं स्वकृततत्तदवतारोचितस्थानसदृशं मत्वा तद्वल्मीकान्तर्गत-प्राकृतविमाने मुक्तब्रह्मादिदेवैः सेव्यमानः नानावताररूपैः तत्तदवतारकालिकबन्धुभिः परमानन्दित आस्ते ॥ स्वाधिष्ठितवल्मीकं स्वमाता कौसल्या । स्वः रामचन्द्रः । वल्मीकदक्षिणदिशि स्थितः

तिन्त्रिणीवृक्षः पिता दशरथः । शेषाद्रिः अनुजलक्ष्मणः । वेङ्कटगिरि-ऊर्ध्वभूमिः राजधानी अयोध्या । इत्येवं रामावतारकृत्यैः अक्रीडत् ॥ पुनः— स्वः कृष्णः । वल्मीकं माता देवकी । तिन्त्रिणी पिता वसुदेवः । शेषाचलः बलभद्रः । गिरि-अधित्यका मधुरापुरी । स्वामिपुष्करिणीतीर्थं यमुना । गिरि-अधिष्ठितसर्वमृगाः यादवबन्धवः । सर्वखगाः गोपिकादयः । इत्येवं कृष्णावतारकृत्यैः अक्रीडत् ।

एवं श्रीहरिः वल्मीकं वैकुण्ठात् अधिकं मन्वानो विराजते । किञ्च अयं शेषाचलः वेदप्रतिपाद्यः अस्य माहात्म्यं वेदेऽपि श्रूयते । वेदे प्रतिपादितं अस्य गिरेः माहात्म्यं इदम् । "अरायि काणे विकटे गिरिं गच्छ सदान्वे । शिरिम्बिठस्य सत्त्वभिस्तेभिष्ट्वा चातयामसि" इति वेदवचनम् । ऋग्वेदसंहितायां अष्टमाष्टके अष्टमाध्याये इयं ऋक् श्रूयते ॥ अरायि इति पञ्चर्चस्य सूक्तस्य भरद्वाजः । शिरिम्बिठ-ऋषिः । अरायिकाण इत्यनयोः अलक्ष्मीघ्नं देवता । अनुष्टुप् छन्दः । पापसर्वस्वपरिहरणे विनियोगः । हे अरायि, काणे, विकटे, सदान्वे, शिरिम्बिठस्य गिरिं गच्छ । शिरिम्बिठस्य तेभिः सत्त्वभिः त्वा चातयामसि । इत्यन्वयः ।

अरायि अदायिनि अदात्रि । दरिद्रे पापे अलक्ष्मि दुर्लक्षणवति अमङ्गले हे सर्वपाप । अदानदोष-जन्यसमस्तपाप । काणे अक्ष्णा काणे अन्धे आन्ध्यहेतुभूतपाप । विकटे कुण्ठे गतिबुद्धिमनोवचः । कौण्ठ्यहेतुभूत पाप । सदान्वे गृहे गृहे गत्वा अम्ब भिक्षां देहीति कुत्सितशब्दकारिणि एतदुपलक्षित-सर्वपाप ॥ विकटे । वि सर्वपापानां कटे दाहार्थं शिरिम्बिठस्य शेषस्य मेघस्य भरद्वाजस्य श्रीनिवा-सस्य । गिरिं वृषभाचलं अञ्जनाचलं शेषाचलं वेङ्कटाचलम् । गच्छ यात्रां कुरु । शिरिं शिरस्थानीय-मुखात् । बिठस्य विषफूत्कारपूर्वकं कुत्सितशब्दं कुर्वतः शेषस्य गिरिं गच्छ ॥ १ ॥ बिठस्य आकाशे । शिरिं शीर्यमाणमेघान्तर्गत-आकाशगङ्गायाः । गिरिं गच्छ ॥ २ ॥ बिठस्य भरद्वाजस्य पुत्रः भरद्वाजमुनिः यत्र स्थित्वा एतत् अरायि एतन्मन्त्रजपं कृत्वा शिरिं अलक्ष्मीं पापं परिहृतवान् तादृशभारद्वाजमुनेः आश्रयस्थानभूतगिरिं गच्छ ॥ ३ ॥ शिरिं श्रीदेवीं, बिठस्य आलिङ्गितवतः प्रियवल्लभस्य वेङ्कटनामकश्रीनिवासस्य गिरिं गच्छ ॥ ४ ॥ शिरिम्बिठस्य शेषस्य, तेभिः प्रसिद्धैः अधिकैः, सत्त्वभिः शेषान्तर्गतश्रीसङ्कर्षणनामकदेवमुखात् उद्गत-अनलेन समस्तपापशोषणानुकूल-सामर्थ्यैः त्वा त्वदीयपापसर्वस्वं चातयामसि नाशयामः ॥ १ ॥ शिरिम्बिठस्य मेघस्य, तेभिः प्रसिद्धैः सत्त्वभिः अन्तर्गत-आकाशगङ्गाजलेन पुरुषाणां मज्जनद्वारा पुण्यानुकूलसामर्थ्यैः ॥ २ ॥ शिरिम्बिठस्य भरद्वाजमुनेः, तेभिः प्रसिद्धैः सत्त्वभिः अरायि इत्येतन्मन्त्रजपरूपतपोज्वालेन ॥ ३ ॥ शिरिम्बिठस्य लक्ष्मीप्रियवल्लभस्य श्रीनिवासस्य, तेभिः प्रसिद्धैः पूर्णैः, सत्त्वभिः आत्यन्तिक-अनिष्टनिवृत्तिद्वारा स्वानन्दकैवल्यसाम्राज्यदानानुकूलसामर्थ्यैः ॥ ४ ॥ इति इत्येवम् । सदान्वे (सत् आ अनु ए) सत्

ब्रह्म । आ सम्यक् ज्ञानानन्दगुणपरिपूर्णत्वेन । चिन्तासन्तापादिसकलदोषवर्जितत्वेन । अनु स्वस्व-योग्यमोक्षस्य अनुगुणतया । ए विदन्ति । ब्रह्मज्ञानिनः वदन्ति इत्यर्थः ।

अस्याः ऋचः तात्पर्यम्— भो ! भो ! अयजेन लब्धपापसर्वस्वं कृतवन्तः दरिद्राः ज्ञानभक्ति-विरक्तिसदाचारादिदरिद्राः कुत्सितसंसारबन्धनबद्धाः गतिबुद्धिमनोवाक्कुण्ठिताः दीनवचनाः पापिष्ठजीवाः युष्मत्समस्तविधपापपरिहारार्थं वेङ्कटाचलं प्रति यात्रां कुरुत । गिरिं आरोहत । तत्तत्तीर्थेषु स्नात्वा । श्रीनिवासं पश्यत । एतद्युष्मदाचरणेन श्रीवेङ्कटेशः प्रसन्नता-अभयदानादिगुणमहिम्ना युष्मत्पापसर्वस्वं नाशयामः इति ज्ञानिनो वदन्ति । एवं वेदैः प्रकीर्तितः अयं गिरिवरः दिव्यमहिमोपेतः शेषाचलः श्रीश्रीनिवासाधिष्ठितवल्मीकस्थानेन युतः वैकुण्ठात् अधिकतरो राजते ।

स्व एव विष्णुः अद्य वसुदेवात्मजत्वेन अवतीर्णः कृष्णात्मकः श्रीनिवासः । वल्मीक एव साक्षात् वैकुण्ठं सम्पन्नम् । सुवर्णमुखरी साक्षात् वैकुण्ठस्था विरजानदी । वेङ्कटगिरिस्थसर्वपक्षिणः मुक्त-ब्रह्माणः । मृगवराः मुक्तशेषाः । पक्करुद्रः शेष इत्युक्तेः । सनकसनन्दनादयः वानराः सम्पन्नाः । एवं सति हे नराः श्रूयताम् । मनुष्यत्वं तावत् सुदुर्लभम् । बहुजन्मार्जितपुण्यात् लब्धं नरत्वम् । एतत् नरत्वं सार्थकं कुरुत । यो नरः वेङ्कटाचलं गच्छामि इत्यपेक्षते स एव धर्मिष्ठः मनुष्यो ज्ञानी । ज्ञानी चेत् इच्छां करोति । इच्छा कृता चेत् तेन क्रिया अनुष्ठितैव । वेङ्कटाचलं गच्छामि इति वेङ्कटेशप्रेरितः सन् इच्छति । तेन धर्मिष्ठेन सर्वधर्मा अनुष्ठिता एव । इच्छामात्रेण सर्वधर्मानुष्ठितत्वं न स्यात् । जीवः परतन्त्रः । तस्य इच्छाकरणकर्तृत्वं न । इच्छामात्रेण इच्छा न । इच्छाकरणं इच्छा । इच्छाकरणं नाम ईशप्रेरणम् । ईशप्रेरणं न कदापि विफलम् । जीवस्य इच्छा इच्छामात्रम् । स्वगतसङ्कल्पविकल्परूपवासना एव जीवेच्छा । ईशप्रेरितो जीवः इच्छां करोति । तदनुगुणं कर्म करोति । फलं आप्नोति । अतः यो नरः श्रीशप्रेरितः वेङ्कटगिरिं गच्छामि इति इच्छति सः गिरिं गच्छति । श्रीशं पश्यति । पुण्यम् आप्नोति । अतस्तेन सर्वधर्मा अनुष्ठितैव । न संशयः । एवं वेङ्कटगिरेः महामहिमानं इयन्तमिति विधिभवेन्द्रादिदेवा न जानन्ति । वर्णयितुं न शक्नुवन्ति । एवं सति, अत्यल्पवीर्याः अल्पायुषो नराः भवसागरमग्नाः जरा-मृत्युवशाः वर्णयितुं न शक्ता इति किमु वक्तव्यम् । अत एव, एतद् वेङ्कटगिरिमाहात्म्यं अचिन्त्या-द्भुतम् । इत्येवं अंशं शतानन्दमुनिः जनकराजं प्रति निरूपयामास । तदेव सूतः शौनकादिविप्रान् प्रति निरूपयामास ॥

*॥ इति अत्र श्रीमद्भविष्योत्तरपुराणे वेङ्कटगिरिमाहात्म्ये*
*पर्वतवर्णनं नाम चतुर्थोऽध्यायः ॥*

॥ श्रीकृष्णार्पणमस्तु ॥

॥ श्रीः ॥

## श्रीमद्भविष्योत्तरपुराणान्तर्गतं

# श्रीवेङ्कटेशमाहात्म्यम्

### ॥ अथ पञ्चमाध्यायकथासङ्क्षेपः ॥

**(गूढकर्तृकव्याख्यानानुसारी)**

शौनकादयः पप्रच्छुः— "प्राज्ञ ! सूतमुने ! श्रीवेङ्कटेशमाहात्म्यं, अवतारनिमित्तं, चोलराज-निबन्धनं इत्यादिकं श्रुतवन्तः ॥ अद्य आकाशराजः को वा ? तस्य साक्षात् रमा कथं पुत्रीत्वं, साक्षात् श्रीहरिः जामातृतां कथं च गतौ। रमाहर्योः कल्याणकथां च ब्रूहि" इति। तदा सूतः सानन्दं वदति— कदाचित् श्रीनिवासः औषधाय वल्मीकात् निर्जगाम। वनं विवेश। तदा तत्र वराहरूपी हरिः ससूकरं मृगयायै आगतः। श्यामाकहारिणं वृषभनामकं दैत्यं अनुधाव्य तं जिगाय। ततः श्रीनिवासं ददर्श। श्रीनिवासस्तु तदा एकप्रच्छन्नदेशे लीनः। इदं दृष्ट्वा वराहः श्रीनिवासं वैकुण्ठात् आगतं मत्वा तमुपागम्य आबभाषे। अन्योन्यं ददृशतुः। आबभाषाते। दुःखितौ अश्रुविमुञ्चन्तौ। एवं हरिः वराह-श्रीनिवासरूपेण क्रीडन् प्राकृतनर इव विडम्बयति। तदा विधिमुखदेवाः देशकालावस्थानुगुणं हरिः अवतारं कुर्वन् रमते। "हरिव्यापारः अचिन्त्याद्भुतः" इति प्रशशंसुः।

वराहः श्रीनिवासं प्रति "कुतः अत्र तव आगमनम् ?" इति पप्रच्छ। श्रीनिवासो वदति— "भृगुः मे वक्षसि पादेन प्राहरत्। तेन रमा कुपिता कोल्लापुरं गता। तद्वियोगेन वैकुण्ठं विहाय इहागत्य तव दक्षिणे वल्मीके तिष्ठामि। अत्रापि गोपः कुठारेण मम शिरसि तताड। शिरो भिन्नं, क्षतं जातम्। वेदना दुःसहा। औषधाय अत्र चरन् मम सुदैवात् त्वां अद्य दृष्टवान्। अवनीश ! यावत् कलि मे वासाय स्थलं देहि" इति। "श्रीनिवास ! मौल्येन स्थलं गृहीष्व।" कुतः ? "अद्य कलियुगः" इति कोल आह। "करुणालो कोल ! प्रथमं तव दर्शनम्, प्रथमं तव तीर्थसेवनम्, प्रथमं तव नैवेद्यम्, प्रथमं तव क्षीराभिषेकः इदमेव मौल्यत्वेन ददामि। यद्दीयते तत् दयया स्वीकुरु। इदमेव उत्तममौल्यं मत्वा मयि दयस्व" इति। कोलः तदा श्रीनि[illegible]साय शतपादमितां भुवं ददौ। एवं कोलश्रीनिवासौ अभक्तमोहनाय भक्तभक्तिसिद्धये क्रीडन्तौ जातौ।

ततः कोलः श्रीनिवासस्य भोजनादि-उपचारार्थं बकुलमालया नित्यं श्यामाकान्नं समधु प्रेषयति । साऽपि बकुला श्रीनिवासं भक्त्या आद्रियते । तदा "इयं बकुला पूर्वं का ?"इति ऋषयः पप्रच्छुः । सूत वदति— "पुरा द्वापरे यशोदा कृष्णस्य पालकमाता । सा "कृष्ण कृष्ण ! जगदानन्दवर्धन ! तव कल्याणं पावनं चरित्रं मे दर्शय" इति ययाचे । कृष्णः तत्प्रीत्यै "भाविनि अवतारे श्रीशैले तव मनोरथं पूरयिष्यामि" इत्यवदत् । कृष्णकल्याणदर्शनकारणात् यशोदा बकुला जाता । तत्प्रीत्यै वासुदेवः अष्टाविंशतिमे कलौ अवतीर्णः । भक्तोद्धाराय अभक्तमोहनाय हरिः जगत्पालक-बालकः क्रीडति । सा यशोदैव अद्य बकुला भूत्वा श्रीनिवासस्य कल्याणं करिष्यति । हरेः लीला परमाद्भुता अतिविचित्रा । स्वयं एकं पूजयति । स्वयं एकेन पूज्यते ।

बहुजन्मसु अर्जितपुण्यराशिसत्त्वे नरस्य क्षेत्रदर्शनलाभः । तत्रापि वेङ्कटगिरेः दर्शनं मुक्तिदम् । इदं देवानां अपि दुर्लभम् । मनुष्याणां तु किं वक्तव्यम् ? इत्येवमंशं यं शतानन्दः जनकं प्रति निरूपयामास तदेव वर्णनं सूतः शौनकादिविप्रान् प्रति निरूपयामास ॥

*इति श्रीमद्भविष्योत्तरपुराणे श्रीवेङ्कटेशमाहात्म्ये पञ्चमाध्यायकथासङ्क्षेपः ॥*

॥ श्रीकृष्णार्पणमस्तु ॥



॥ श्रीः ॥

## श्रीमद्भविष्योत्तरपुराणान्तर्गतं

# श्रीवेङ्कटेशमाहात्म्यम्

## अथ पञ्चमोऽध्यायः

**मूलम्**

**पद्मावतीपरिणयोपोद्घातः**

ऋषय ऊचुः—

सूत सूत महाभाग सर्वशास्त्रविशारद।
श्रुतं श्रीवेङ्कटेशस्य माहात्म्यं पापनाशनम् ॥ १ ॥

अवतारप्रभावं च चोलराजनिबन्धनम्।
[1]मुकुटागमनं देव चरितं लौकिकं परम् ॥ २ ॥

कृपालोऽसि दयासार शिष्यप्रीतिपरायण।
तत्कल्याणविधिं ब्रूहि को वाऽऽकाशो नृपोत्तमः ॥ ३ ॥

१. वैकुण्ठाद्गमनं।

**कल्याणकाण्डदीपः**

॥ श्रीनिवासाय मङ्गलम् ॥

गतिश्चन्द्रचकोराणां चातकानां बलाहकः।
वासुदेवो भवार्तानामस्माकं वेङ्कटो गतिः ॥

पञ्चमे व्याख्येयानि व्याक्रियन्ते—

"श्रुतं श्रीवेङ्कटेशस्य माहात्म्यं पापनाशनम् । अवतारप्रभावश्च चोलराजनिबन्धनम् । मुकुटागमनं देवचरितं लौकिकं परम्" इत्यादि अवतारप्रभावो अवतारमाहात्म्यं चोळराजनिबन्धनं स्थितिगति-नियमः मुकुटागमनमित्यादि देवचरितं देवस्य देवदुर्लभं चारित्र्यं भवद्भिरुक्तम्, अस्माभिश्च श्रुतम् । इदानीं तु सकल्याणविधिं पद्मविवाहविधानसहितम् । केवलं लौकिकं "यस्मिन्काले तथा देशे" इत्यादि स्वसङ्कल्पितं प्राकृतं मानुषं च । "स्वाध्यायप्रवचने च" इत्युपनिषत् (तै. उ.) । मानुषसम्भवाच्चारित्र्य-प्रचुरं चरित्रं ब्रूहि इत्यन्तेन योजना ।

*अयं भावः*— लौकिका अलौकिकव्यापारे अकुशलाः, अलौकिकाश्च लौकिके । अयं चात्य-लौकिकः । ईदृशस्य श्रीनिवासस्य केवलं मानुषं प्राकृतप्रचुरं चरित्रं तव मुखाच्छ्रुत्वा स्मारं स्मारं नन्दयामः । अलौकिकं देवचरितं बहुशः श्रुतम् । अलौकिकस्य लौकिकत्वपूर्वमिति अवश्यं श्रोत-व्यम् । इतःपूर्वावताररामकृष्णादिरूपेऽपि मानुषव्यापारो दर्शितः । ततोऽपि नूतनोऽयमवतारः । किमत्र लौकिकव्यापारे नूतनमिति ।

**मूलम्**

**कथं [1]पुत्रीभवत्पूर्वं कथं जामातृतां गतः ।**
**योगिनां मनसा चिन्त्यः श्रीनिवासः सतां गतिः ।**
**[2]तत् तथा ब्रूहि भगवन् साङ्गं वैवाहिकं शुभम् ॥ ४ ॥**

१. पुत्र्यभवत् । २. तत्त्वेन ।

**कल्याणकाण्डदीपः**

**कथं पुत्री भवदिति** । अडभावः आर्षः । **कथं जामातृतां गतः** 'श्रीनिवासः' इति शेषः ।

**मूलम्**

**यः पुमान् वेङ्कटेशस्य महिमाक्षीरसागरे ।**
**स्नानाचारपरो नित्यं स धन्यः पुण्यवर्धनः ।**
**एवं निशम्य ऋषिभिर्भाषितं वचनं शुभम् ॥ ५ ॥**

[1]सभासदैः साधुगुणान् वदद्भिः
स्तुतो नितान्तं निजशिष्यसङ्घात्।
उवाच भक्त्याऽन्वितनम्रदेहः
साध्वी सुसाध्वीति सहाश्रुहर्षः ॥ ६ ॥

१. एवं मुनीनां वचनं निशम्य सूतो नितान्तं निजशिष्यसङ्घान्।
उवाच भक्त्याऽन्वितनम्रदेहः साधूचितं वाक्यमुदीरयन् सन् ॥

**गूढकर्तृकव्याख्यानम्**

पूर्वाध्याये सूतेन गिरिमहिमादिके निरूपिते शौनकादयः तं एवं पृच्छन्ति । सूत सूत इति द्विः सम्बोधयन्ति । सर्वोत्कृष्ट-श्रीवेङ्कटेशकथां उपदिश्य महोपकारं कृतवानिति सुप्रीताः कृतज्ञतया आदरसम्भ्रमाभ्यां एवं सूत सूत इति द्विः वदन्ति । भो ! वेदादिसर्वशास्त्रतत्त्ववेत्तः ! ज्ञानाख्यमहातेजो विशिष्ट ! सूत सूत ! भवान् ज्ञानदरिद्रेभ्योऽस्माकं ज्ञानोपदेशं कृतवान् । कुतः । भवान् परमदयालुः । महाशयः । शिष्येषु प्रीतिकरणमेव तव अपेक्षितम् । एतावत् श्रीवेङ्कटेशमाहात्म्यम् । श्रीनिवासकृत-अवतारमहिमा । चोलस्य प्राप्तकल्पवधिकं पिशाचत्वावस्थानम् । तस्य घटिकाषट्कान्तं सुखानुभव-प्राप्तिः । श्रीनिवासस्य विवाहे दिव्यमुकुटप्राप्तिः । इत्यादि देवदुर्लभं श्रीनिवासचारित्र्यं भवता सादरं उक्तम् । श्रुतं चास्माभिः ॥

अद्य इदं वक्तव्यम्— आकाशस्य राज्ञः रमावतारा पद्मा कथं पुत्रीत्वेन जाता ? योगिनां मनसाऽपि अचिन्त्यः । "महेष्वासो महीभर्ता श्रीनिवासः सतां गतिः", "ब्रह्मैव तद्धि गम्यते पाप-विमुक्तैः" इत्युक्तेः मुक्तियोग्यजनानां मोक्षादिपुरुषार्थप्रदः साक्षात् श्रीहरिः आकाशस्य जामाता कथं जातः ? परममङ्गलकर-पद्माश्रीनिवासविवाहविधिं नो वद । अप्राकृतो श्रीहरिः देशकालवयोवस्थानुगुणं प्राकृतवत् कान् कान् व्यापारान् चकार ? प्राकृतचेष्टापेक्षया उत्कृष्टतर-अप्राकृत-अलौकिक-दैविक-व्यापारान् कान् दर्शयामास ? प्रकृते एतत् श्रीनिवासचरितं नाम त्रेताद्वापरयुगयोः रामकृष्णकृतमानुष-व्यापारेभ्यः नूतनं स्यात् । अत एवेदं अलौकिकं अपूर्वम् । यो नरः श्रीवेङ्कटेशमहिमाख्यक्षीरसागरे नित्यं स्नाति स एव धन्यः कृतकृत्यः । अत एव वक्तव्यमिति प्रार्थयामासुः । तेषां मुनीनां प्रार्थनां श्रुत्वा श्रीहरिकथा-सङ्कीर्तनसुयोगः प्राप्तः आत्मनः इति सूतः आनन्दपरवशः । जातरोमहर्षः नेत्रयोः आनन्दबाष्पं मुञ्चन् वदति— "भो मुनयः ! [illegible]काशः क इति पृच्छा तावत् साध्वी अस्ति । रमावतारा पद्मा कथं पुत्रीत्वेन जाता ? श्रीहरिः तस्य कथं जामातृतां गतः ? इति पृच्छा तु ततोऽप्यतिशयिततरा"

इत्युक्त्वा हरिकथाकथने अतिभक्त्या नम्रीकृतदेहः आह— "मुनयः ! श्रीपद्माश्रीनिवासपरमकल्याणकरविवाहकथां कथयामि । भवन्तः सर्वे भक्तियुक्तमनसः कथां शृण्वन्तु" इत्युक्त्वा विवाहकथां आरभते ।

**सूत उवाच—**

**शृण्वन्तु मुनयः सर्वे भक्तिभावेन संयुताः ।**
**पन्नगाचलनाथस्य कन्यासङ्ग्रहणं शुभम् ॥ ७ ॥**

**कल्याणकाण्डदीपः**

**सहाश्रुहर्षः** । अश्रु आनन्दजं नेत्राम्बु हर्षो रोमाञ्चः ताभ्यां सह वर्तत इति तथा । **साध्वी सुसाध्वीति** पृच्छेति शेषः । को वा आकाशनृपोत्तमः । **इति साध्वी** । तदुत्तरा सुसाध्वीति विवेकः ।

**मूलम्**

**कदाचिद्वेङ्कटेशस्तु औषधार्थं स्वयं हरिः ।**
**गमनाभिमुखो भूत्वा [१]प्रवव्राजारुणोदये ॥ ८ ॥**

१. निर्जगामारुणोदये ।

**कल्याणकाण्डदीपः**

**गमनाभिमुखो भूत्वा प्रवव्राजारुणोदये** । वल्मीकाद्बहिर्गमनाभिमुखो भूत्वेत्यर्थः । एतावन्तं कालं बहिर्गमने वैमुख्यं प्रयोजनाभावात् । इदानीं त्वभिमुख्यमभूत् पुरतः कार्यगौरवादिति भावः ।

**मूलम्**

**तस्मिन् काले वराहस्तु मृगयार्थं ससूकरः ।**
**श्यामाकहारिणं जित्वा दैत्यं वृषभनामकम् ।**
**यदाऽऽगतस्तदा देवो ददर्श वेङ्कटेश्वरम् ॥ ९ ॥**

**कल्याणकाण्डदीपः**

**मृगयार्थम्** । श्यामाकहारिवृषभासुरमृगयार्थम् ।

मूलम्

**गर्जन्तः कोऽसि कोऽसीति सूकरास्तत्र चाययुः ।**
**तान् दृष्ट्वा जगदीशस्तु तत्र लीनोऽभवद्धरिः ॥ १० ॥**

कल्याणकाण्डदीपः

**गर्जन्तः कोऽसि कोऽसीतीति** । त्वं कोऽसि कोऽसीति गर्जनं कुर्वन्तः । तत्र वृक्षगहने मृगदर्शने लुब्धकानां अन्तर्धानं स्वभाव इति भावः । न तु भयात् । प्रत्युत ते एव सूकराः प्रदुद्रुवुः ।

मूलम्

**लीनं तं वेङ्कटं दृष्ट्वा वराहवदनो हरिः ।**
**वैकुण्ठादागतं मत्वा वेङ्कटेशं श्रियः पतिम् ।**
**उवाच वचनं देवं धैर्यमालम्ब्य बुद्धिमान् ॥ ११ ॥**

कल्याणकाण्डदीपः

'लीनं तं' इत्यादि 'बुद्धिमान्' इत्यन्तमेकं वाक्यम् । **लीनं तं वेङ्कटं दृष्ट्वा** । यद्यप्ययं महाटवीकटु किरात इव आभाति, तथाऽप्ययं निरायुध इति बुद्धिमान् वराहवदनो हरिः मृगोऽपि धैर्यमालम्ब्य वचनमुवाचेत्यन्वयः । श्रीनिवासोऽप्युवाचेत्यध्याहार्यम् ।

मूलम्

**सोऽपि श्वेतवराहं तं जानन् वल्मीकतस्तदा ।**
**निरीक्ष्यमाणः सोत्कण्ठं निर्गत्याऽन्तरमभ्यधात् ॥ १२ ॥**

**[1]अन्योन्यदुःखसन्दिग्धलोचनावश्रुपूरितौ ।**
**[2]कलौ नारायणौ साक्षाद्रूपद्वन्द्वविराजितौ ।**
**ऊचतुर्भाषणं चोभौ दर्शयन्तौ विडम्बनम् ॥ १३ ॥**

१. ततोऽन्योन्यविलोकोत्थ अश्रुसन्दिग्धलोचनौ । २. क्रोड- ।

**कल्याणकाण्डदीपः**

सम्भाषणसमय उभाभ्यां जगद्विडम्बनाय प्रदर्शितं सात्त्विकं भावमाह— **अन्योन्येत्यादिना** । श्रीनिवासेन स्वदुःखनिवेदने कृते तस्यापि दुःखं सञ्जातम् । अत अन्योन्यदुःखसन्दिग्धलोचनौ **अश्रुपूरितौ** अश्रुपूर्णमुखौ । अथवा तयोर्दुःखसन्दिग्धलोचनौ अश्रुपूर्णौ भवत इत्यर्थः । ल्युटः टित्करणात् लोचनशब्दः पुमान् । साक्षान्नारायणांशौ **रूपद्वन्द्वविराजितौ** अवतारद्वयशोभितौ **उभौ** कोलवेङ्कटौ कलौ विडम्बनं दर्शयन्तौ । **भाषणं** सल्लापं ऊचतुः ।

**गूढकर्तृकव्याख्यानम्**

कस्मिंश्चित् समये श्रीनिवासः, ''चतस्रो घटिकाः प्रातः अरुणोदय उच्यते'' इत्युक्तेः अरुणोदये उद्बुध्य स्वशिरःक्षतचिकित्सार्थं औषधानयनाय वल्मीकात् निर्जगाम । पुरतःकर्तव्यकार्यगौरवात् वहिर्गमने श्रीनिवासस्य तात्पर्यम् । यदा श्रीनिवासः प्रस्थितः तदा वराहरूपी देवः बहुसूकरयुतः मृगयायै तत्र देशे समागतः । तदा तत्तत्क्षेत्रगतश्यामाकधान्यं कश्चित् वृषभाख्यदैत्यः अपहरन् आसीत् । वराहः दैत्यं अभिद्रवन् तं जित्वा यदा अगच्छत् तदा वेङ्कटेशः वराहदृष्टिपथं गतः । तदा सूकराः मिलित्वा श्रीनिवासं त्वं कोऽसि कोऽसीति गर्जयन्तः श्रीनिवासमुपजग्मुः । श्रीनिवासः तदा स्वं दृष्ट्वा भीत्या द्रवेयुरिति तत्र वृक्षछन्नदेशे लीनोऽभवत् । लीनं तं दृष्ट्वा वराहः अयं पुरुषः महाटवीवास्तव्यकटुकिरात इति भाति । तथाऽपि करे आयुधं न । अतः प्राणिहिंसोद्देशस्तस्य न भवेदिति मत्वा वराहः स्वयं धैर्येण श्रीनिवासमुपागम्य तं दृष्ट्वा वैकुण्ठादागतं मेने । श्रीनिवासोऽपि वराहं वल्मीकपर्यन्तभूदेशे वसन्तं श्वेतवराहं मेने । ततः उभौ अन्योन्यं सन्निहितौ अन्योन्यं ईक्षमाणौ अभिलपन्तौ अन्योन्यं ज्ञातवन्तौ । उभयोः चिरसमागमयोगेन नेत्रयोः बाष्पं असिञ्चत् । एवं हरिरेकोऽपि श्रीनिवासरूप-वराहरूप इत्येवं रूपद्वन्द्वविराजितः लोकविडम्बनं करोति ।

**मूलम्**

**तयोस्तदद्भुतं कर्म दृष्ट्वा ब्रह्मपुरोगमाः**
**ववृषुः पुष्पवर्षाणि क्रोडनारायणोपरि ॥ १४ ॥**

**यथायुगं यथादेशं यथाकालं यथावयः ।**
**तथाऽवतारमाकाङ्क्षन् रमते 'रमया सह ॥ १५ ॥**

**कल्याणकाण्डदीपः**

तदा विजयाङ्कुरपूजकाः ब्रह्मादयः श्रीनिवासविजयकाले पुष्पाणि ववृषुः इत्याह– **तयोरित्यादि** ।

**मूलम्**

एवं वदन्तः सुरपुङ्गवास्ते
विचित्रमायां जगदीश[2]चेष्टिताम्।
हसन्त ऊचुः परमस्य विष्णो-
रनन्तशैलस्य रमापतेश्च ॥ १६ ॥

१. प्राकृतो यथा। २. चेष्टाम्।

**कल्याणकाण्डदीपः**

**अनन्तशैलस्य** श्रीनिवासस्य रमापतेः वराहस्य च। **जगदीशचेष्टितां** जगदीशस्वभावाचारयुक्ताम्। **विचित्रमायां** अद्भुतदुर्जनव्यामोहनकार्यानुकृतिं प्रति। हसन्तः सन्तः। 'यथायुगम्' इत्यादि 'सह' इत्यन्तं एवं वदन्तो यथायथं जग्मुरिति शेषः।

**मूलम्**

**श्रीवराहानुज्ञया श्रीनिवासस्य शेषाचलप्राप्तिः**

इत्यन्योन्यं भाषमाणौ साक्षान्नारायणावुभौ।
सकौतुकं च संवीक्ष्य स्तुत्वा स्वं स्वं पदं गतौ।
गते देवगणे तत्र वराहो हरिमब्रवीत् ॥ १७ ॥

वराह उवाच—

त्यक्त्वा वैकुण्ठलोकं तु किमर्थं त्वमिहागतः।
तद्वदस्व महाभाग श्रीनिवास वरानन ॥ १८ ॥

**कल्याणकाण्डदीपः**

सम्भाषणमभिलप्य दर्शयति— **त्यक्त्वेत्यादिना**।

**मूलम्**

इति तेन समाज्ञप्तः[1] अवदत् कालरूपिणम् ॥ १९ ॥

१. उवाच क्रोडरूपिणम्।

**गूढकर्तृकव्याख्यानम्**

एवं लोकव्यापारं अनुकुर्वतोः वराहश्रीनिवासयोः अचिन्त्याद्भुतकर्म स्वस्वसङ्कल्पपरिपूरणं विलोक्य विधिभवेन्द्रादिसकलदेवाः सानन्दं तदुपरि पुष्पाणि ववृषुः । श्रीनिवासस्य वराहस्य च दैनिकचेष्टाः दुर्जनव्यामोहनकरीं विचित्रमायाशक्तिं प्रति हसन्तः अन्योन्यं वदन्तः । जगदीशः कथं चेष्टते, पश्यत । स्वयं पूर्णकामः नित्यतृप्तः स्वरमणः इच्छामात्रेण जगत्सृष्टिकर्तृत्वादिसकलशक्तिः कल्याणगुणपूर्णः दोषवर्जितः ईदृशः प्राकृतवत् चेष्टते । देशकालवयोनुगुणं नानावतारान् कुरुते । किमनेन तस्य ? न किमपि । सज्जनोद्धारः दुर्जनव्यामोहनमेव खलु अस्य चेष्टितम् । इत्येवं भाषमाणाः जगदीशचेष्टितं साकल्येन ज्ञातुं अशक्नुवन्तः देवाः विस्मिताः श्रीनिवासवराहौ स्तुवन्तः स्वं स्वं स्थानं ययुः । देवेषु गतेषु वराहः श्रीनिवासं "हे श्रीनिवास ! त्वं वैकुण्ठात् कुतः अत्रागतः ? वैकुण्ठत्यागे किं बीजम् ? इह गिरिकानने वल्मीके आगत्य कुतो वससि ? पूर्णेन्दुवदन ! महातेजोमय ! इदं वद" इति पप्रच्छ । श्रीनिवासो प्रतिवक्ति ।

**मूलम्**

**श्रीनिवास उवाच—**

**भृगोरङ्घ्रिप्रपाताच्च रमा कोल्लापुरं [1]ययौ ॥ २० ॥**

१. गता ।

**कल्याणकाण्डदीपः**

अत्रेदं बोध्यम् । *तथा हि स्कान्दे—*

देवासुरमभूद्युद्धं पूर्णमब्दशतं पुरा ।
वृत्रेऽसुराणामधिपो देवानां च पुरन्दरे ॥

अत्र देवैर्महावीर्यैर्नारायणबलाश्रयात् ।
असुरा निर्जिताः सर्वे पातालतलमाययुः ॥

केचिल्लङ्कां गताः केचिद्वरुणालयम् ।
केचिद्गिरिव्रजं .......................... ॥

तत्र कोल्लासुरो नाम असुराणां महाबलः ।
गोमन्तं दुर्गमं दुर्गं गिरिमाश्रित्य निर्भयः ॥

या राजकन्यका लोके रूपवत्यो महागुणाः ।
आनीय गिरिदुर्गस्थो रमयामास सर्वशः ॥
एतस्मिन्नेव काले तु आगतौ मुनिसत्तमौ ।
अगस्त्यो गौतमश्च .......................... ॥

तदा राजानः कोल्लासुरकृतां आर्तिं निवेदयामासुः । तदा अगस्त्यः कोल्लासुरकृतार्तिनिवृत्यै महालक्ष्मीं प्रपन्नास्ते इत्याह । ते तथा चक्रुः । तदा महालक्ष्मीं मां ययाचे । तदा विष्णुना मया हे महालक्ष्मीः त्वं गत्वा तं हत्वा ता राजकन्या मोचयेत्यनुज्ञाता ।

एतस्मिन्नेव काले भृगुणा स्वभार्या मया निषूदितेत्यतिशोकेन तपसोऽतिरेकात् अविमृश्य च अङ्घ्रिप्रहारो जात इति च । न केवलं कोल्लासुरसंहारान्निमित्तात्, अपि तु भृगोः पादताडनव्याजाच्च रमा कोल्लापुरं ययौ । आकारान्तः कोल्लाशब्दः कोल्लः पूः पुरवासी त्यप्रत्ययः । यद्वा कोल्लो अस्या-मस्तीति कोल्ला । सा च सा पूश्च तत् तथा । अर्श आद्यच् । टाप् अप्रत्ययः ।

**मूलम्**

**तेन दुःखेन सन्तप्तस्त्यक्त्वा वैकुण्ठमुत्तमम् ।**
**इहागतो रमाकान्त वल्मीके तव दक्षिणे ।**
**निवसन्तं च मां देव धेनुपालो ह्यताडयत् ॥ २१ ॥**
**कुठारेणासिधारेण तत् क्षतं मां तु बाधते ।**
**औषधार्थं [1]वराहात्मन् गच्छामि च निरन्तरम् ॥ २२ ॥**

१. वराहास्मिन् ।

**कल्याणकाण्डदीपः**

**गच्छामि च निरन्तरम्** । अस्मिन्नेव दिन इति न किन्तु उत्तरत्रापि निरन्तरम् ।

**मूलम्**

**[1]दैवेन दृष्टमार्गेण त्वां दृष्टोऽस्मि धराधर ।**
**अत्रैव निवसामीति सङ्कल्पो मम वर्तते ।**
**स्थलं देह्यवनीकान्त यावत्कलियुगं भवेत् ॥ २३ ॥**

१. दैवेन दृष्टवानस्मि त्वामद्येह धराधरम् ।

**कल्याणकाण्डदीपः**

दैवेन दृष्टमार्गेण अदृष्टप्रदर्शितमार्गेणेत्यर्थः । तव दर्शनेनानेन मम कष्टं पृष्ठतः इत उत्तरं सर्वं सुखोदर्कं भविष्यति । विजयगमनवेलायां तव दर्शनेन शुभसूचनात् । अतः अत्रैव निवसामीति सङ्कल्पो मम वर्तते । सत्यम् । यद्यप्यस्ति सङ्कल्पः तथापि अहं पुराणो मृगरूपी । त्वं च अर्वाचीनो महाटवीं कटु किरातः । अहं स्तब्धः । त्वं च चतुरः । कपटमानुषः । "अङ्गुलीप्रदर्शने हस्तं गिलति' इति गिरा कथ्यमानः । कथमावयोः समावेशः सम्भवति ? इति चेत् शृणु । जीवता यावज्जीवं न्याय्यं वर्तनीयम् । अहं च न्यायं वर्ते इति मम सङ्कल्पः । एवं सति तव का चिन्ता ? इति चेत् । माऽस्तु मम चिन्ता । तर्हि अन्यदीयस्थानस्वाम्यमन्यस्य तव कथं प्राप्नोति ? दानेन वा विक्रयेण वा ? नोभयथा । अहं ब्राह्मणः । त्वं बाहुजः प्रतिग्रहो न दानपात्रम् । परिक्रयणे च द्रव्यं नास्ति । कथं न्यायेन स्थलप्राप्तिः ? इत्यत आह "स्थलं देह्यवनीकान्त यावत्कलियुगं भवेत्" इति । माऽस्तु दानं विक्रयो वा । किन्तु भोग्यादिना यावत्कलियुगं देहि इति भावः । इदं तु न्याय्यं भवति ।

**मूलम्**

**इति तेन समाज्ञप्तो वराहवदनो हरिः ।**
**उवाच वचनं [१]देवं द्रव्यं मे दीयतां प्रभो ॥ २४ ॥**

१. देव स्थलं मौल्येन गृह्यताम् ।

**कल्याणकाण्डदीपः**

**इति तेनेति । समाज्ञप्तः** सम्यगावेद्यमानः । **द्रव्यं मे दीयतामिति** । आधिमूल्यं द्रव्यं दत्वा गृह्यतामिति भावः । द्रव्यं तावद् द्विविधं, सिद्धं साध्यं चेति । सिद्धं धनिनां, मम तु साध्यम् । तथा हि । तव समीपे जगद्रक्षणार्थं वसतो मम सेवार्थं जना यदैष्यन्ति तदा करद्रव्यमेष्यति । तदा तद्दीयते इत्येतावन्मात्रोक्तौ तत्सर्वं दीयत इत्यन्यथा गृह्णीयादित्यतः परिगणनं कृत्वा इदमेव वरं द्रव्यम् । इति उत्तरं किञ्चिन्नास्तीत्याह ।

**मूलम्**

**इति वाक्यं ततः श्रुत्वा [१]उवाच मधुरं वचः ।**
**प्रथमं दर्शनं तीर्थं नैवेद्यं क्षीरसेचनम् ॥ २५ ॥**

१. प्रोवाच ।

इदमेव वरं द्रव्यं ददामि करुणानिधे।
दास्यामि यत्ते भूकान्त तदङ्गीकुरु माधव ॥ २६ ॥
वरं द्रव्यमिदं तात कृपां कुरु दयानिधे।
इत्युक्तो हरिणा [1]क्रोडो हरये स्थानकाङ्क्षिणे।
तदा ददौ [2]हरिः पादशतमात्रं रमापतेः ॥ २७ ॥

१. प्रोक्तो। २. हरेः

**कल्याणकाण्डदीपः**

**इति वाक्यमिति**। आधिमूल्यं द्रव्यं न पर्याप्तम् इत्यतो विनयेन सान्त्वयति **करुणानिधे इति**। **पादशतमात्रमिति**। पादशतं परिमाणमस्य तत् तथा। तादृशं चतुरस्रं स्थलमिति शेषः।

**मूलम्**

परस्परं विनोदन्तौ कुर्वाणावेकरूपिणौ।
मोहनार्थं ह्यभक्तानां भक्तानां भक्तिसिद्धये।
एवं हि क्रीडते तत्र वेङ्कटे वेङ्कटेश्वरः ॥ २८ ॥

**कल्याणकाण्डदीपः**

एतस्मिन्नवसरे श्रोतॄणां आशङ्का जाता। तथा हि। यद्यपि भवन्तः सत्यवचसः तथापि निरवधिकानन्तानवद्यज्ञानानन्दबलैश्वर्यस्वातन्त्र्याद्यात्मककल्याणगुणस्य हरेः अज्ञानदुःखदारिद्र्या-स्वातन्त्र्यापादकमेतच्चरित्रं मृषेति भाति। तत्कथमुच्यते भवद्भिरेवम्? इत्यत आह— **मोहनार्थ-मिति**। मोहनार्थमिति अविवेकोत्पत्तये।

**मूलम्**

तदारभ्य धराकान्तो बकुलां पाककारिणीम्।
अर्पयामास देवाय सेवार्थं तां धरापतिः ॥ २९ ॥

**कल्याणकाण्डदीपः**

**तदारभ्येति**। अत्रेदं ज्ञातव्यम्। वराहस्वामिना तीर्थभूमौ स्थाने दत्ते तत्स्थानाभिमानिनी बकुला श्रीनिवासदेशं गत्वा दर्शनं कृत्वा स्ववृत्तिं विज्ञापयामास— "अहं तीर्थभूम्यभिमानिनी। अस्यां

तीर्थभूमौ पादशतमात्रं स्थानं तुभ्यं वराहस्वामिना दत्तम् । अतः त्वमपि धर्मतो मम स्वामी अभूः । अतः तव दर्शनार्थं अहमागता तव किङ्करी अस्मि" इति । अथ श्रीनिवास उवाच— "त्वं कया वृत्त्या वराहसमीपे वर्तसे ?" इति । "अहं च पाके सेवायां च कुशला । अतः सेवावृत्त्या वर्ते" इति । तत् श्रुत्वा श्रीनिवासः "अहो मयि महान् दैवानुग्रहः । पङ्कूपरि गङ्गाप्रवाह इव ।

"कल्याणी बत गाथेयं लौकिकी प्रतिभाति मे ।
एति जीवन्तमानन्दो नरं वर्षशतादपि ॥" (वा.रा.५-३४-६; ६-१२६-६)

इति स्वयं संहृष्योवाच— बकुला ! त्वदभिमन्यमाने स्थाने दत्ते त्वमपि दत्तैव । अतः इतःपरं न्याय्यत्वात् मत्सेवया वर्तस्व । अन्यथा स्थलाभिमानं गच्छेत् । किञ्च आपन्नानां सम्पन्नो गतिः । वराहः सम्पन्नः । अतः मदुक्ते न्याये त्वया विज्ञापिते सोऽपि त्वां दास्यत्येव । अथैतद्वृत्तान्तमावेद्य, अनुज्ञामादाय, इतःपरं मत्सेवां कुर्वित्याह । अथ तद्वृत्तान्तनिवेदने वराहः कपटमानुषोऽयम् । हस्तग्रासन्यासविषय इति पूर्वमेव ज्ञातम् । तथैव जातं इति मत्वा तां ददाविति ।

**मूलम्**

**भोजनार्थं रमेशस्य श्यामाकान्नं निरन्तरम् ।**
**समधु प्रेषयन्नित्यं तया बकुलमालया ।**
**सा बाला सेवनरता श्रीनिवासस्य सन्निधौ ॥ ३० ॥**

**अन्नपानौषधाद्यैश्च पादसंहननादिभिः ।**
**पूजयामास गोविन्दं श्रीनिवासं निरामयम् ॥ ३१ ॥**

**गूढकर्तृकव्याख्यानम्**

हे क्रोडरूपिन् ! शृणु । अत्र स्कान्दे— पुरा एकदा देवानां असुराणां च घोरयुद्धमभूत् । वर्षशतं प्रचचार । असुरतः वृत्रासुरः, देवतः इन्द्रः अधिपतिः । महावीर्या देवा नारायणं शरणं गत्वा तदनुग्रहात् असुरान् अजैषुः । पराजितासुराः केचित् पातालं केचित् लङ्कां अपरे वरुणालयं च । केचित् गिरिव्रजं जग्मुः । तेषु मध्ये कोलासुरो नाम महाबलिष्ठः गोमन्तं नाम अतिदुर्गमगिरिदुर्गं अध्यतिष्ठत् । सः अकुतोभयः । लोके या या महामानिन्यः महारूपवत्यः राजकन्याः तादृशीः बलात् अपहृत्य गिरिदुर्गे स्थापयामास । स्वेच्छया ताः रमयामास । एतेन बहवो नृपाः स्वस्वपुत्रीवियोगात् दुःखिताः जाताः । एकदा ते सम्प्राप्तौ अगस्त्यगौतमौ कोलव्याधात् अस्मान् रक्षतमिति प्रार्थयामासुः ।

तदागस्त्यः कोलव्याधनिवृत्तये यूयं महालक्ष्मीं शरणं गच्छेत्याह । नृपाः तथैव चक्रुः । तदा राजलोकहिताय लक्ष्मीः मां प्रति "जगदीश ! नृपबाधां परिहृत्य तान् रक्ष" इति ययाचे । तदा अहं "रमे ! त्वमेव गत्वा कोलं हत्वा गिरिदुर्गनिर्बद्धसर्वराजकन्याः विमोचय" इति रमामादिशम् । एतत्काले एव भृगुरागत्य तद्भार्यां अहं हतवानिति महाशोककतायातिरेकात् अविमृश्य वैकुण्ठे मयि शयिते मद्वक्षसि रमावासे पादेन ताडितः । कोलवधाय स्वालिङ्गितमद्वक्षसि मुनिपादताडनहेतोः अवमानात् रमा कोल्हापुरं गता । रमा तत्र गत्वा कोलं हत्वा लोकस्य क्षेमं विदधे । यत्र स्थले कोलवधो रमया कृतः तत् कोल्हापुरं इति ख्यातम् । भो कोल ! मम प्रियतमा मां त्यक्त्वा जगाम । वियोगो अतिदुःसहोऽभूत् । अतः प्रियतममपि वैकुण्ठं विहाय पुनः कुत्रापि वासार्हं स्थानमलब्ध्वा अत्र गिरिवनदेशे तव आवासदक्षिणतः वल्मीके इदमेव मम भागधेयं परात्परं इति धिया वासं कर्तुं प्रवृत्तः । अत्रापि वसन्तं निरपराधिनमपि, धराकान्त ! धेनुप आगत्य अतितीक्ष्णकुठारेण शिरसि तताड । मम दैवं किं स्यात् । शिरोभिन्नं महारक्तस्रावोऽभूत् । क्षतात् दुःसहयातनाऽस्ति । क्षतशमनाय वैद्यराजगुरुं आनाय्य तस्मात् चिकित्सां मत्वा औषधानयनाय अद्य निर्गतः । कार्यार्थं मयि याते सुदैवात् तव दर्शनमभूत् । तव दर्शनेन ममातुलानन्दः अद्यावधि अनुभूतकष्टं यावत् विस्मृतम् । इतः उत्तरत्र सुखोदर्कं भवेत् । धराधर ! अद्य तव निकटे अत्रैव वल्मीके वसामीति इच्छाऽस्ति । अस्य तव किं आक्षेपः ?

वराहः— "श्रीनिवास ! सत्यं तव इच्छा । अपि तु, अहं पुराणः मृगरूपी । त्वं तु अर्वाचीनः । महाटवी कटु किरातः । अहं स्तब्धः । त्वं च चतुरः । कपटमानुषः । अङ्गुलीदर्शने हस्तं गिलन् । "विवाहश्च विवादश्च समयोरेव शोभते" इति विदः विदन्ति । अहं त्वं च असमौ । असमयोः आवयोः कथं स व्यवहारः युज्यते ?" इति । श्रीनिवासः— "धराधर ! एवं मा मा क्षिप । आक्षेपस्य अवकाशोऽपि न । शृणु । जीवता यावज्जीवं न्याय्यं वर्तितव्यम् । अहं च न्याय्यं वर्ते इति कृतम् । एवं सति इतस्तव का चिन्ता ? इति । कोल आह— "माऽस्तु मम चिन्ता । तर्हि अन्यदीयं स्थानं यत् तस्य स्वाम्यं तव कथं प्राप्नोति ? दानेन स्थानं प्राप्यते वा ? उत विक्रयेण ।" उभयथापि न । कथम् ? "अहं विप्रः षट्कर्माधिकारी । दातुं आदातुं वा योग्यः । यद्यपि स्थलं दद्याम्, परन्तु त्वं दानीयो न । कुतः ? त्वं बाहुजः । प्रतिग्रहे अनर्हः । एवं सति स्थलं कथं ते दीयेत ? किञ्च परिक्रयणेन स्थलं आदातुं शक्यते । अपि तु क्रयणेन स्थलं आदातुं तव द्रव्यमेव न । अतः स्थलं ते न लभ्यते ।" इति । कोलमतं मत्वा श्रीनिवासः आह— "भूदार ! सत्यम् । भवतु । अपि तु, एवं कृतं चेत् युक्तमिति भाति । पश्य माऽस्तु दानं विक्रयो न । किन्तु भोग्यादिना यावत्कलि स्थलं मे देहि । एतेन सर्वं समं न्याय्यं भवेत् ।" इति । कोल आह— "तर्हि आधिमूल्यं द्रव्यं दत्वा स्थलं गृह्यताम् ।" इति ।

श्रीनिवास आह— "कोलरूपिन् ! भवतु । इयं मदुक्तिः श्रूयताम् । लोके द्रव्यं तावत् द्विविधम् । सिद्धं साद्धयं चेति । सिद्धं द्रव्यं धनिनाम् । मम तु साध्यमेव । अतस्तव निकटे जगद्रक्षणार्थं वसन् अस्मि । मत्सेवार्थं भक्तजना एष्यन्ति । तेभ्यः प्राप्तव्यं करद्रव्यं एष्यति । तदेव ते दास्यामि" इत्युक्त्वा पुनः मनसि लब्धद्रव्यसर्वस्वं देयं पृच्छेदित्याशङ्क्य श्रीनिवास पुनः वदति— "कोल, मत्तः पूर्वं भक्तानां तव प्रथमं दर्शनं तव प्रथमं क्षीराभिषेकः । प्रथमं तव तीर्थग्रहणम् । प्रथमं तव नैवेद्य-निवेदनम् । इदं ते सर्वं दास्यामि । इदमेव वरं द्रव्यमिति भावय ।" एतेन तृप्तः "कृपानिधे ! मयि यया मद्दत्तं अल्पमनन्तं भावय । वराहदेव ! किं तात ! औदासीन्यं मा कुरुष्व" इति प्रार्थितवान् । ततः कोलः श्रीनिवासार्थनां श्रुत्वा तस्यै पादशतभूमिं ददौ ।

तथोक्ते पादशतमित-आयतां पादशतमितपरिणाहां चतुरस्रां भुवं ददौ । निरवधिक-अनन्त-अनवद्य-ज्ञान-आनन्द-बल-ऐश्वर्य-स्वातन्त्र्यादिगुणवानपि श्रीनिवासः प्राकृतवत् अज्ञानदुःखदारिद्र्य-दैन्य-अस्वातन्त्र्यापादकचरितं चरितवान् ॥ इदं सर्वं मृषैव । तथापि अभक्तदुर्जनान् मोहयितुं भक्तसज्जनेषु भक्तिसिद्ध्यर्थं श्रीहरिः एवं वेङ्कटगिरौ क्रीडितवान् श्रीनिवासवराहरूपैः ॥ ततः कोलः श्रीनिवासाय स्वामितीर्थसन्निहिततीर्थभूमिं पादशतमितं ददौ । यद्दिने ददौ तद्दिनमारभ्य श्रीनिवास-सेवार्थं बकुलमालिकां नाम पाककारिणीं प्रेषितवान् । तत्तीर्थभूम्यभिमानिनी बकुलमालिका कोलाज्ञया श्रीनिवासमुपागम्य तं दृष्ट्वा स्ववृत्तिं विज्ञापयामास— स्वामिन् देवोत्तम ! अहं एतत्तीर्थाभिमानिनी । पादशतमितभूमिस्ते कोलदत्तेति श्रुतम् । कोलो मम स्वामी । अतोऽद्य धर्मतः त्वमपि मम स्वामी अभूः । त्वां द्रष्टुमागता । अहं तव किङ्करी ।" इत्याह । श्रीनिवास आह— "त्वं कोले कया वृत्त्या असि ?" बकुला— "पाके कुशला । सेवावृत्त्या वर्ते ।" श्रीनिवास आह— "अहो ! दैवं मयि अनुजग्राह । पङ्कूपरि गङ्गाप्रवाह आपतित इव । लोके मनुष्ये जीवति कदाऽपि सुखं अनुभवेत् इति भवितव्ये अद्य वा पुनरन्यदा वा नरस्य सुखं स्यादेव" इति सन्तुष्यन् बकुलां प्रति, अयि बकुले ! "त्वदभिमन्यमानस्थाने मे दत्ते त्वमपि मे दत्तैव । अतः इतःपरं न्याय्यत्वात् मत्सेवां कुर्वन्ती वर्तस्व । नो चेत् तव स्थलाभिमान एव गच्छेत् । यो विपदि भवेत् स एव बन्धुः । अद्य मम सङ्कटे कोलः प्राप्तः सन् मे वासाय स्थलं दत्वा उपकृतवान् । अतः मदुक्तं कोलाग्रे निवेदय । सोऽपि कोलः न्यायपरः मदुक्तं अनुमन्यते । मत्सेवायै प्रेषयति त्वाम् । अतो बकुले ! मदुक्तं कोलपुरतो निवेद्य तदनुज्ञया अत्र स्थित्वा मां सेवमाना आस्व" इत्याह ।

तेन प्रकारेण बकुला श्रीनिवाससन्देशं यथावत् आह । तदा कोलः श्रीनिवासमुद्दिश्य "किमेतत् ? कपटनरोऽयं भाति । हस्तग्रासन्यासविषयः अयं इति पूर्वमेव मे ज्ञातम् । अद्य तथैव

जातम्'' इति मत्वा बकुलां अनुमतिपूर्वं श्रीनिवासे प्रेषयामास । किञ्च श्रीनिवासभोजनार्थे नित्यं समधुश्यामाकान्नं बकुलया प्रेषयति । बकुला तु नित्यं भक्त्या अन्नपान-औषध-पादसंवाहनादिभिः उपचारैः वेदप्रतिपाद्यसकलदोषवर्जितश्रीनिवासं उपचरन्ती । एतावत् श्रुत्वा शौनकादयः सूतं पृच्छन्ति ।

### मूलम्

ऋषय ऊचुः—

श्रुतं सूत महाभाग देवागमनमुत्तमम् ।
वराहदर्शनं तस्य वासो वैकुण्ठभूधरे ।
बकुला सेवका चोक्ता सा का पूर्वं वदस्व नः ॥ ३२ ॥

**बकुलमालिकाख्यभगवत्परिचारिकापूर्वजन्मवृत्तान्तः**

सूत उवाच—

पुरा यशोदा बकुला कृष्णस्य जननी [1]मुने ।
अदृष्ट्वाऽनन्तरूपस्य कृष्णस्य तनयस्य च ।
कल्याणादि महापुण्यं साऽत्यजत् तेन हेतुना ॥ ३३ ॥

१. ह्यभूत् ।

यशोदोवाच—

मनः सीदति मे कृष्ण तव कल्याणवीक्षणे ।
दर्शयस्व रमानाथ जगदानन्दवर्धन ॥ ३४ ॥

कल्याणादि महापुण्यं पावनं चरितं तव ।
तथेत्युक्तो रमानाथः सोऽवदन्मधुरं वचः ॥ ३५ ॥

श्रीभगवानुवाच—

जन्मन्यनन्तरे देवि तावकीनं मनोरथम् ।
श्रीशैले पूरयिष्यामि किञ्चित्कालादनन्तरम् ॥ ३६ ॥

देवेनेत्थं दत्तवरा साऽत्यजत्तेन हेतुना।
कलेवरं तु कल्याणि यशोदाऽनन्तवल्लभा ॥ ३७॥
तस्याः प्रीत्यै वासुदेवः अष्टाविंशतिमे कलौ।
[1]स्वावतारगुणैश्चापि यशोदापरितोषकैः।
क्रीडन्नास्ते जगद्योनिर्निर्दोषोऽपीश्वरोऽपि सन् ॥ ३८॥

१. आविर्भूय यशोदायाः तोषकैः गुणकर्मभिः।

कलौ कल्मषचित्तानां पापाचारपरात्मनाम्।
रक्षणार्थं रमाकान्तो रमते प्राकृतो यथा ॥ ३९॥
दैत्यानां [1]मोहनार्थाय सुराणां मुक्तिकारणात्।
स्वभक्तानां हितायैव विरक्तानां विशेषतः ॥ ४०॥

१. वञ्चनायैव।

मुक्तिमापादयन् देवो धरते प्राकृताकृतिम्।
क्रीडते चात्मकैवल्ये जगत्पालकबालकः ॥ ४१॥
जगन्मोहनसौन्दर्यलीलामानुषमूर्तिमान्।
न कृतं देवसङ्घैश्च न कृतं विश्वकर्मणा ॥ ४२॥
स्वेच्छया क्रीडते तत्र इच्छारूपविराजितः।
इत्येवं कारणादेव यशोदा बकुलाऽभवत् ॥ ४३॥

**कल्याणकाण्डदीपः**

**"बकुला सेवका च"** इत्यादेः **"अभवत्"** इत्यन्तस्य भावार्थः—

कल्याणादि महापुण्यसाध्यमदृष्ट्वा तेन हेतुना तच्चिन्तया कलेवरम् अत्यजत् इति। ननु तद्विरुद्धं व्यवहारेण बकुलासम्पादनम्। एकस्मिन् व्यवहाराभावात्। किञ्च किङ्करीत्वं मातृत्वम्। अपि च एतादृशाज्ञानास्वातन्त्र्यापादकचारित्र्यकथनमपि भवतामतिसाहसमित्याह— **जगद्योनिः** इत्यादिना **जडैः** इत्यन्तेन। दैत्यानां वञ्चनायैव तमःप्राप्तये। अविरक्तानां स्वभक्तानां हिताय नीतिमार्गाय। **कलावेवमिति**। "अनिषिद्धसुखत्यागी पशुरेव" इत्यादि न्यायात्। न्यायप्राप्तं न परित्यजेत्। अन्यथा

न वर्तेतेति भावः । किं च यश्चैवं मातृमात्रपरिरक्षिण्यः स मातृदत्तान्नपानौषधाभ्यङ्गादिभिः पालितो जीवन् बलिष्ठः पश्चान्मातरं परिचरेत् इति नीतिसूचनाय कारणादिदं सेवकत्वं न मातृत्वविरुद्ध-मित्यर्थः ।

विरक्तानां ज्ञानिनां विशेषतो मुक्तिमापादयन् मुक्तावानन्दवृद्धिं कुर्वन् प्राकृताकृतिं धरते । दोषप्रमुष्टदृष्टीनां प्राकृतरूपवद्रूपं प्रकाशयतीत्यर्थः । इत्येवं कारणात् स्वयोग्यन्यूनसाधनपूर्ति-स्वकृत-पूर्वमहासुकृत-फलभोग-स्वयोग्यतातिरिक्तपुण्यसमीकरणात् द्रोणनामकवसोः पत्नी धरानाम्नी तीर्थभूरूपा पाचकी । तस्या रूपद्वयं यशोदा बकुला चेति न पुराणान्तरविरोधः ।

**मूलम्**

**सा करिष्यति कल्याणं हरेर्वैकुण्ठवासिनः ।**
**किमलभ्यं हरौ तुष्टे ज्ञानविज्ञानसम्पदाम् ॥ ४४ ॥**

**कल्याणकाण्डदीपः**

कुतः तस्याः तादृशं सामर्थ्यम् ? इत्यत आह— **किमलभ्यमित्यादिना ।**

**गूढकर्तृकव्याख्यानम्**

बकुला श्रीनिवाससेवायै कोलेन प्रेषितेत्युक्ते सूतेन शौनकादयः जिज्ञासया पृच्छन्ति । "ज्ञानतेजोभासमान सूतमुने ! भवतः श्रीनिवासवल्मीकवासः कोलश्रीनिवासयोः अन्योन्यदर्शनभाषणं श्रीनिवासाय कोलेन पादशतभूदानं इत्यादयः श्रुताः । बकुला नाम श्रीनिवाससेवायै प्रेषितेति अवदः खलु । बकुला का ? पूर्वं का ? तद्विषयं श्रोतुं कुतूहलं नः । अतो ब्रूहि" इति पप्रच्छुः । ततः सूत आह— श्रूयताम् । पुरा द्रोणो नाम अष्टवसूनां एकतमः । तस्य धरा नाम पत्नी । तस्याः धरायाः रूपे द्वे, यशोदा बकुलेति च । सा धरा द्वापरे नन्दगोपस्य पत्नीत्वेन यशोदानाम्ना जाता । एषा यशोदा नन्दगोकुले वसुदेवानीतं शिशुकृष्णं प्रीत्या पोषयन्ती कृष्णं पोषकमाता आसीत् । इयं अनन्ता-नन्तरूपश्रीकृष्णबाललीला दृष्ट्वा अत्यानन्दिता । परन्तु महापुण्यलभ्यं अत्यन्तसुखदं तस्य कल्याण-महोत्सवादिकं नापश्यत् । तदर्थं श्रीकृष्णं— "हे कृष्ण ! भगवन् ! तात ! तव कल्याणं अदृष्ट्वा मे मनः सीदति । अस्मन्मनःसौख्यकारण ! तव कल्याणादिलोकपावनचरितं दर्शयस्व" इति ययाचे । श्रीकृष्णः मृदुमधुरवचसा "देवि यशोदे ! माता ! त्वदीप्सितं भवतु । तव मनोरथं पूरयामि । परन्तु भाविजन्मनि श्रीनिवासत्वेन अवतीर्णः श्रीशैले त्वदिष्टार्थं पूरयिष्यामि । तावत् सहस्व" इत्युक्त्वा तस्यै वरमदात् । तेन निमित्तेन श्रीकृष्णकल्याणं ्रुदृव्यं द्रष्टव्यमिति चिन्तयन्ती यशोदा कलेवरं तत्याज ॥

यशोदाप्रीत्यै श्रीहरिः अष्टाविंशतिमे कलौ श्रीनिवासत्वेन अवतीर्य वेङ्कटगिरौ वसन् स्वगुणक्रियाभिः यशोदां नन्दयति ।

एवं श्रीहरिः तदा तदा तास्ताः लीलाः दर्शयति । तत्रापि पापभूयिष्ठकलौ कल्मषचित्तपापकार्य-रतदेहिनां रक्षायै दैत्यवञ्चनाय तान् तमः प्रापयितुं स्वस्य विरक्तभक्तानां हिताय नीतिमार्गप्रवर्तनाय, आत्मप्रियसुराणां मुक्तिप्राप्त्यै मुक्तौ मोदं वर्धयितुं एवं प्राकृतनराकृतिं धरन् क्रीडति ॥ भो शौनका-दयः ! एतन्निमित्तेन यशोदा बकुला भूत्वा तीर्थभूमि-अभिमानिनी जाता । अद्य श्रीनिवासं सेवितुं आगता । सैव श्रीनिवासकल्याणाय स्वयं प्रयतमाना भवेत् ॥ तर्हि "बकुला वनिता अबला । कल्याणप्रयत्नसामर्थ्यं कथं तस्याः अभूत् ?" इति पृच्छायां सूत आह— "किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने" इत्युक्तेः परमपुरुषार्थसाधक ज्ञानविज्ञानसम्पदां अनुग्रहीतारे श्रीहरौ सति भक्त-लोकस्य किं अलभ्यम् ? न किमपि । अत एव श्रीनिवासानुग्रहादेव बकुलायाः तादृशप्रयत्नः साध्य एवाभूत् । इति ।

**मूलम्**

**केचिद्देवं पूजयन्ति कश्चिद्देवेन पूज्यते ।**
**हनूमता पूजितोऽपि स्वयमर्जुनमर्चति ॥ ४५ ॥**

**कल्याणकाण्डदीपः**

परमपुरुषार्थसाधनज्ञानविज्ञानसम्पदां दातरि प्रभौ हरौ तुष्टे किमलभ्यमिति भावः । किं सर्वेषां देवस्वभावानां स्वयोग्यतातिरिक्तसुकृतसमीकरणं समानं किम् ? नेत्याह— **केचिदित्यादिना** ।

स्वयोग्यतानतिरेकेण साधनमनुतिष्ठन्तो देवपूजका महान्त इति सूचनाय बहुवचनम् । स्वयोग्यतातिरेकेण साधनमनुतिष्ठन्तः तदवरा इति सूचनायैकवचनम् । तत्पूजकपूज्यौ दर्शयति— **हनूमतेति** । "आञ्जनेयस्तु हनुमान् हनूमान् मारुतात्मजः" इत्यमरकोशः । **अर्चति** अर्चयति ।

**मूलम्**

**को नु वर्णयेद्धरेः क्रीडां विचित्रां जनपावनीम् ॥ ४६ ॥**

**कल्याणकाण्डदीपः**

हरेः क्रीडा दुर्निरूप्येत्याह— **को नु इति** । नु वितर्के "नु पृच्छायां वितर्के च" इत्यमरः । सन्देहविमर्शादिजन्यो अनेकधा सम्भावनात्मा भ्रूविक्षेपशिरःकम्पाद्यनुभावो वितर्कः । "सन्देहात् कल्पनानन्त्यं वितर्कस्तर्कितो बुधैः" इति तल्लक्षणात् ।

तस्य कल्याणगुणैः व्यामोहात् मम मनः तत्र लग्नम् । अन्यत् आनन्त्यादिकं न गणितम् । मम मास्तु । किं वा भवतु । ब्रह्मा शेषो वा **वर्णेत्** वर्णयेत् । णिजभाव आर्षः । तदभिधानमपि न सम्भवति । तेषामपि इदमियत्ततयेदृक्तया वा दुरवगमत्वेन व्यामोहान्तासम्भवात् इति ।

**मूलम्**

**नित्यशुद्धस्य वै विष्णोः किमन्यस्य निवेदने ।**
**कृते पुण्यं ऋषीणां तु अकृते दोषसङ्ग्रहः ॥ ४७ ॥**
**तस्मात्पूज्यः सुरैर्यज्ञैः ऋषिभिस्तत्त्वकोविदैः ।**
**पितृभिर्भूमिपैर्विप्रैर्मागधैः[1] राक्षसैर्जडैः ॥ ४८ ॥**

१. मानुषे ।

**कल्याणकाण्डदीपः**

अपि चेत्यादि तृतीयं चोद्यं परिहरति— **नित्यशुद्धस्य** इत्यादिना **जडैः** इत्यन्तेन । **वै** निश्चयेन । **नित्यशुद्धस्य** निरञ्जनस्य **विष्णोः अन्यस्य** अपि । अज्ञानपारतन्त्र्याद्याभासकस्यापि चारित्र्यस्य वेदने किं किं भयम् ? अस्माकं किमपि भयं नास्तीत्यर्थः । प्रत्युत दैत्यमोहनाय स्वेच्छयाकृत चारित्र्यवेदने हरेस्तोष एवेत्याह— **कृत इति** । अन्यस्यापि वेदने कृते ऋषीणां पुण्यम् । तत्समीहितकरणात् । **अकृते** दोषसङ्ग्रहः । दैत्यानां मोहजननात् । जडैः अज्ञैः ।

**मूलम्**

**कलौ कलुषचित्तानां पापाचारपरात्मनाम् ।**
**रक्षणार्थं रमाकान्तो रमते प्राकृतो यथा ॥ ४९ ॥**

**कल्याणकाण्डदीपः**

नन्वाप्तकामस्य हरेः प्रजापीडनं करादानां तीर्थनैवेद्यादिविक्रयणमित्यादि प्राकृताचरणं कथं सङ्गच्छते ? इत्यत आह— **कलाविति** । कलिकालकृतकालुष्यदोषेण मोहितचित्तानाम् । अत एव पापाचरणासक्तमनसां स्वभावशुद्धानां स्वभक्तानां रक्षणार्थं राजवत् करादानपूर्वकं प्रजापालनं भवान् भगवान् करोत्विति प्रार्थितः सन् लक्ष्म्या वरदानात् कलिदोषप्रयुक्तरोगदारिद्र्याद्युपद्रवेभ्यो नित्यं पालनार्थं रमाकान्तः प्राकृतः पुरुषो यथा उपकृत उपकरोति । तथा रमते द्रव्यदानादिकं करोति, यथा भिषक् द्रव्यमादाय औषधं दत्वा रोगं परिहरति तथा द्रव्यमाकृष्य स्वार्जनं उपयुज्य पापं प्रशाम्य रक्षतीत्यर्थः । पीडाहेतुः कलिकालुष्यरक्षकः श्रीनिवास इति बोध्यम् ।

**मूलम्**

**दैत्यानां मोहनार्थाय सुराणां [1]च विनोदतः ।**
**क्रीडते बालकैर्बालो [2]जगद्बालकबालकः ।**
**जगन्मोहनसौन्दर्यलीलामानुषमूर्तिमान् । ॥ ५० ॥**

१. मोदनाय च । २. जगत्पालकपालकः ।

**कल्याणकाण्डदीपः**

तन्निमित्तरौप्यपीठपुरस्थित श्रीकृष्णवत् किं न स्यात् इत्यत आह— **दैत्यानामित्यादिना बालक इत्यन्तेन** । जगद्रक्षणार्थमवतीर्णत्वात् तस्य अवर्जनीयसन्निधितया मुख्यतः प्राप्तत्वादिति भावः । श्रीकृष्णस्य चानन्दतीर्थीयजनानां सिद्धयुचितान्नादि दत्वा सिद्धिविघ्नमुखदोषभैषज्यदानैक-दीक्षत्वेन तस्याप्रसक्तेः रूपान्तरेण सिद्धत्वाच्च । बालः स्वेच्छाविडम्बिताज्ञानिधर्मः बालकैः प्राकृतैः क्रीडते क्रीडया मोहयतीत्यर्थः । दैत्यानां वराहश्रीनिवासौ महाभूत इति मोहः । देवानामादिनारायणांशा-विति सम्यग्ज्ञानम् ।

यद्वा, बकुलाया पूजकत्वं पूज्यत्वं चावस्थाभेदेन सम्भवतीत्याह— **क्रीडते** इत्यादिना **मूर्तिमान्** इत्यन्तेन । **बालः** बालरूपी **बालकैः** प्राकृतैः बकुलादिभिः निमित्तैः क्रीडते । बाललीलां करोति । कथं तस्य बालरूपत्वं सङ्घटते ? इत्यत आह— **जगदिति** । जगति ये बालकाः तेषां सर्वेषां बालकः बालचेष्टाप्रदर्शकः किं तस्य तच्चित्रमिति भावः । तादृशं सामर्थ्यं तस्यास्तीत्यनेनैवाह— **जगदित्यादिना** । यतः जगत् बालको यस्य विरिञ्चस्य स तथा स बालको यस्य जगद्बालकबालकः श्रीनिवासः तस्मान्न तच्चित्रमिति भावः । तथाच बाल्येन सेव्यत इति भावः । पुनः कालविशेषतां बहुमानेन तोषयतीत्याह— **जगन्मोहनेत्यादिना** ।

**मूलम्**

**न कृतं देवसङ्घैश्च न कृतं विश्वकर्मणा ।**
**स्वेच्छया क्रीडते तत्र इच्छारूपविराजितः ॥ ५१ ॥**

**कल्याणकाण्डदीपः**

तर्हि तस्य रूपं कीदृशम् ? कतीत्यतः चिदानन्दाद्यात्मकमनन्तमित्याह— **न कृतमित्यादिना विराजित इत्यन्तेन** । **दैवसङ्घैः** देवसङ्घश्च देवसङ्घाश्च देवसङ्घाः तैः देवसङ्घैः । तत्त्वदेवसङ्घः तेन

कृतं मानुषं न इत्यर्थः । देवसङ्घैः ब्रह्मपुरोगशम्भुपुरोगेन्द्रपुरोगदेवसङ्घैः क्रियमाणध्यानेन न कृतं तैः क्रियमाणध्यानकाले चित्ते यत् प्रतिबिम्बितं वासनामयापरनामक मनोमयं सनकादीनां रूपवन्नेत्यर्थः । **विश्वकर्मणा** देववर्धकिना कृतं शैलं लोहं दार्व्यं लेख्यं लेह्यं सैकतं मणिमयं च नेत्यर्थः । तर्हि कीदृक् इत्याह— **इच्छारूपेति** । यदा बाल्ये इच्छा तदा बालरूपं गृहीत्वा इच्छया अनन्याधीनतया क्रीडते बाललीलाम् । यदा तारुण्ये तदा तद्रूपं प्रदर्श्य पद्मापरिणयनादिना बकुलादीन् तोषयतीति । यदा अर्चाविग्रहेच्छा तदा तद्रूपं गृहीत्वा अर्चां स्वीकरोति इति इच्छारूपं चिदानन्दाद्यात्मकमनन्तमिति भावः ।

**मूलम्**

**क्षेत्रस्य महिमा दिव्या तथा तीर्थस्य वैभवः ॥ ५२ ॥**

**तत्र साक्षाद्रमाकान्तः किं तत्र सुकृतं फलम् ।**
**बहुजन्मार्जितैः पुण्यैर्लभ्यते क्षेत्रदर्शनम् ॥ ५३ ॥**

**तत्रापि वेङ्कटगिरेर्दर्शनं मुक्तिदं परम् ।**
**दुर्लभं देवसङ्घानां मनुष्याणां तु का कथा ॥ ५४ ॥**

*इति श्रीमद्भविष्योत्तरपुराणे वेङ्कटेशमाहात्म्ये*
*पञ्चमोऽध्यायः ॥ ५ ॥*

**कल्याणकाण्डदीपः**

कथं तर्हि शिलामयं रूपम् इदानीं सर्वैर्दृश्यत इत्यत्र बहूनि पुराणवचनानि सन्ति । तानि कानिचिल्लिख्यन्ते—

*स्वयंव्यक्तप्रदेशेषु श्वेतवराहादिषोडशस्थानेषु—*

"तत्रस्थाः प्रतिमाः सर्वा नराणामकृतात्मनाम् ।
भक्तेरुत्पादने चैव शिलारूपेण दर्शिताः ।
चिदानन्दशरीरं तत्र च तैर्दृश्यते क्वचित् ।
कलौ युगे विशेषेण न योग्यं द्रष्टुमात्मनः ।
चिदानन्दशरीरोऽह तत्र सन्निहितोऽस्म्यहम् ।

अपरेण शरीरेण चिदानन्देन पद्मज ।
तत्रैव प्रतिमादेशे स्थितोऽहं नित्यमञ्जसा ।
कलौ जनाः प्रपश्यन्ति प्रतिमां मदधिष्ठिताम् ।
तस्मिन्नेव युगे ब्रह्मन् योगी मामेव पश्यति ।
युगान्तरे तथा मूढः प्रति मामेव पश्यति ।
शुद्धतेजाः पुमांस्तत्र ज्ञानी मामेव पश्यति ।
पूजका देवताः सर्वे दर्वीभूता जना इमे ।
प्राप्ते कलियुगे घोरे स्वयंव्यक्तस्थलेष्वपि ।
कुर्यां पाखण्डभूयिष्ठं प्रत्ययार्थं सुरद्विषाम् ।
पत्नी देवी महालक्ष्मी भोक्ता देवो जनार्दनः ।
परिचारका वसन्त्येते देवा ब्रह्मादिका अपि ।
तस्मादेतेषु स्थानेषु नैवेद्यं नैव दूष्यते ॥'' इत्यादि ।

वाराहे षड्विंशेऽध्याये—

''सन्धावपि कलौ चैव वेङ्कटेशस्य वर्तनम् ।
ततःपरमियान् भेदो मौनं तत्रैव च स्थितिः ।
अर्चावतारवद्भाति नराणां मांसचक्षुषाम् ।
वैकुण्ठादागतं दिव्यं विमानं तु तिरोहितम् ।
विमानमात्रं तु कलौ कारयिष्यन्ति मानवाः ।
अर्चावतार इत्येवं वदिष्यन्ति विमोहिताः ।
तथैवानुमतिं केचित् करिष्यन्ति कलौ युगे ।
साक्षात् पश्यति तत् सर्वमपश्यन्निव तिष्ठति ।
साक्षाद्भाषणमेकं तु नास्ति तस्य तपोधनाः ।
परन्तु सर्वमस्त्येव निग्रहानुग्रहावपि ।
अधिकं वरदानं तु भविष्यति कलौ युगे ॥'' इति ।

अत्रैवाग्रे—

''अप्राकृतः स्वर्णसानुरपि श्रीवेङ्कटाचलः ।
प्राकृताचलवद्भूमौ भविष्यति कलौ युगे ॥'' इति ।

ब्राह्मे तृतीये—

"पुरा शङ्खो महाराजः सूर्यवंशोद्भवो विभुः ।
साक्षात्कृत्य महाविष्णुं याचेऽहं वरमुत्तमम् ।
यावच्चन्द्रश्च सूर्यश्च यावत्तिष्ठति मेदिनी ।
तावत् तिष्ठतु मे सेवा कृता विष्णो मया विभो ।
इति सञ्चिन्त्य मनसा राज्ये पुत्रं निधाय च ।
गत्वा वसिष्ठं प्रपच्छ यत्र विष्णुः प्रसीदति ॥"

इति पृष्टः वसिष्ठः प्राह वेङ्कटाचलेऽगस्त्यस्तपस्यति । तेन सह तपस्तप्त्वा विभुं पश्यसीत्युपविष्टः तत्र गत्वा मुनिना सह तपस्तप्त्वा ध्याने

"आविर्भूतं हरिं दृष्ट्वा ययाचे वरमुत्तमम् ।
यावच्चन्द्रश्चेत्याद्येवम् ।"

"इत्युक्तो भगवानाह शृणु भूप वचो मम ।
अर्चाविग्रहरूपोऽहं सच्चिदानन्दविग्रहः ।
स्वयंव्यक्तप्रदेशेषु दृश्यो ब्रह्मादियोगिनाम् ।
तामेव प्रतिमां केचिदजानन् ऋषिपुङ्गवाः ।
ततस्तेनापि वाऽयोग्यं दर्शनं मे कलौ युगे ।
युगेष्वपि च सर्वेषु दुर्दशं यत् कुयोगिनाम् ।
तद्रूपसन्निधानाय सादृश्यज्ञानहेतवे ।
विमानं च शिलादारुकाष्टेष्टकमयं कुरु ।
प्रतिमां च शिलादारु तां पश्यन्ति कुयोगिनः ।
रूपद्वयं प्रपश्यन्ति ज्ञानिनो ब्रह्मवित्तमाः ।
भानुमान् भानुभिर्यद्वद्रसग्राही यथा भुवः ।
साक्षात् पूजाश्रयो नित्यं शिलाबिम्बान्तरेण च ।
यथा दृष्टं विमानं ते मद्रूपं पुरुषर्षभ ।
तथा कुरु महाभाग तेन ते भविता गतिः ।
इत्युक्त्वान्तर्दधे [illegible]ः ।

तेनोक्तमार्गेण विधाय पुण्यं विमानवर्यं प्रतिमां च पुण्याम् ।
प्रख्याय भूपो नरलोकसङ्घे जगाम विष्णोः पदमव्ययं शुभम् ॥ इति ।

अत्रैव षष्ठेऽध्याये—

दर्शयन् भक्तवात्सल्यं यो ददौ हस्तगौ शुभौ ।
चक्रशङ्खौ नृपेन्द्राय चक्रवर्तीति तं विदुः ।
अत एवारिशङ्खाभ्यां हीनौ तौ दृश्यते करौ ।
अर्चारूप शिलारूप विग्रहस्य महात्मनः ।

दिलीपः—

कोऽयं नृपश्चक्रवर्त्ती तन्मे ब्रूहि महामुने ।

दुर्वासाः—

पुरा द्विजवरो वैखानसो धृतवर्मा गोपालरूपं द्रष्टुं पञ्चविंशतितमे कलौ वैवस्वतान्तरे तपस्तप्त्वा तं साक्षाच्चक्रे । तत्रैव वैखानसगोत्रो नाम्ना वैखानसः कश्चिद् द्विजः तं साक्षात्कर्तुं अयमपि चोलदेशे भूनदीतीरे तपश्चक्रे । तस्मै प्रसन्नः कृष्णः स्वप्ने वेङ्कटशैलं व्रज, तत्र ते सिद्धिर्भवतीत्याह । पुनः स्वप्नान्तरे जगाद—

पुरा कृतयुगे पश्चात् काले शङ्खनवैकृतम् ।
विमानं कल्पप्रळयान्नष्टप्रायमभूद्विज ।
वल्मीकस्यान्तरे विष्णोः प्रतिमा वर्तते शुभा ।
शङ्खेन निर्मिता पुण्या सदृश्यर्चास्वरूपिणः ।
जानुमात्रे निमग्नास्ति तिन्त्रिणीवृक्षमूलतः ।
दासनाम्ना च शूद्रेण सह तं पूजय प्रभुम् ।
त्वदागमनकाले तु पद्मदेशात् सदा शुचिः ।
रङ्गदासोऽति विख्यातः शूद्रस्त्वां सङ्गमिष्यति ।
उभाभ्यां पूजितो देव इष्टसिद्धिं प्रयच्छति ।
एतावदुक्त्वा स्वप्ने च गोपीनाथेति नाम च ।
ददौ तस्य प्रियो विष्णुः सोऽपि बुद्ध्वाऽतिविस्मितः ।

प्रीत्या जगाम शैलेन्द्रं सोऽपि शूद्रः समागतः ।
तिन्त्रिणीमूलसम्भूतवल्मीकस्थं हरिं परम् ।
उद्धृत्य पश्चिमे भागे स्थापयामासतुः पुनः ।
अशिल्पिकुशलाभिश्च शिलाभिर्भित्तिमञ्जसा ।
कृत्वा तदन्तरे रम्यं तृणैः कृत्वा तु मण्टपम् ॥

भूतीर्थपुष्करिण्योर्मध्ये पुष्पोद्यानं शूद्रश्चकार । एवं काले गते गन्धर्वक्रीडाप्रसङ्गेनानवस्थितमतेः शूद्रस्याशरीरवाण्या देहं त्यक्त्वा नारायणपुरे जातस्य तोण्डिमानिति नामाभूत् । स तोण्डिमानो राजा बिलद्वारेण वेङ्कटाचलं गत्वा प्रत्यहं तमर्चयन्नास । स मण्डलाधिपति हरये ददौ । प्राकारद्वयगोपुरद्वययुतं गर्भगृहसहितं स रङ्गमण्टपं समहानसंयागागारधान्यागारगोशालादि सहितं देवधाम कारयामास । एवं सप्तविंशतितमे कलौ बहुप्रकारेण पूजयतः कर्मवशादीशेच्छया बलवद्भिः दस्युभिः पराजये बिलद्वारेण स गम्य पादौ प्रणम्य रुदन् त्राहीत्युवाच तं प्राहार्चारूपी श्रीनिवासः । मा भैष्ट पुत्र भद्रं ते चक्रशङ्खौ ददामि ते । ततो विजयी देवं वयं ययाचे । ममायुधप्रदानस्य ख्यात्यै देवोत्तम प्रभो । अर्चाबिम्बे शिलाबिम्बे शङ्खचक्रौ न धारय । इत्यादिवचनानि सन्ति । एतेषां वचनानां परिशीलने यथाधिकार-मिष्टसिद्धिर्भवति इति सर्वमनवद्यम् ॥ श्रीश्रीनिवासाय मङ्गळम् ॥ शुभानि वर्धन्ताम् ॥

*श्रीमद्भविष्योत्तरपुराणे श्रीवेङ्कटगिरिमाहात्म्यव्याख्याने कल्याणकाण्डदीपे*
*श्रीनिवासहय्यङ्गवीनस्य वराहकर्तृकवल्मीकपात्रप्रतिष्ठा नाम*
*पञ्चमोऽध्यायः ॥*

## गूढकर्तृकव्याख्यानम्

भगवतो लीलाः कीदृश्यः ? एकः भक्तः भगवन्तं भक्त्या पूजयति । पुनरेकः भगवता भक्त्या सेव्यते । भक्तेन हनूमता श्रीरामः पूजितः । हरिः कृष्णत्वेन अवतीर्य स्वयं अर्जुनं सखित्वेन पूजयामास । एवं हरेः लीलाः अतिविचित्राः । "पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम्" इति सर्वलोकपावन्याः सन्ति । एवं सति हरिक्रीडाः इयत्तया वर्णयितुं विधिमुखैरपि अशक्यम् । नित्यशुद्धनिर्दुष्टविष्णोः अज्ञानपारतन्त्र्यादिरूपचरितं कृतं दृश्यते । ईदृशचरितं वेदनार्हं वा इति चेत् । वेदने किं वा पुण्यम् ? किं वा साधनम् ? उच्यते— विष्णुचरितपठनपाठनश्रवणश्रावणादिना भक्तलोकस्य किमपि भयं न । हरिचरितं वेदनार्हं वेति संशयात्मना श्रुतं चेत् दोषभागी स्यात् । शुद्धात्मना श्रुतं चेत् पुण्यभागी । हरिचरितं सर्वं अज्ञानपारतन्त्र्यादिबोधकं भासते । न तु वस्तुतः तादृशबोधकम् । अभक्तदैत्यमोहनायैव

हरिरेव क्रीडति । हरिचरितं सर्वं स्वेच्छया कृतम् । अवश्यं श्रोतव्यम् । सर्वलोकपूज्यः अचिन्त्याद्भुतचरितः हरिः सुरैः यज्ञैः विप्रैः विष्णुतत्त्वकोविदैः ऋषिभिः पितृभिः नृपैः राक्षसैः जडैः पूज्यः वर्तते । भक्त्या पूजितः तुष्यति । "भक्त्यैव तुष्टिमभ्येति विष्णुः नान्येन कर्हिचित्" इत्युक्तेः ।

पुनरेकः विचारः— हरिः पूर्णकामः । दर्शनतीर्थनैवेद्यादिविक्रयकरणं तस्य युज्यते वा ? इति चेत् । कलिकालनिमित्तमनःकालुष्यरूपदोषेण मोहितचित्तपापाचरणपरस्वभावशुद्धस्वभक्तरक्षणाय भक्तैः आदानपूर्वकं प्रजापालनं भवान् करोतु इति रमया प्रार्थितः सन् तस्यै तथेति वरदानात् । कलिदोषप्रयुक्तरोगदारिद्र्यादि-उपद्रवेभ्यः नित्यं रक्षणार्थं रमेशः श्रीनिवासः प्राकृतवत् आचरति । मानुषः अन्यस्य उपकरोति । अन्येन उपक्रियते इतिवत् ॥

अत्र उदाहरणम्— वैद्यः द्रव्यं स्वीकृत्य रोगिणे औषधं दत्वा रोगं शमयति । तद्वत् श्रीनिवासः कलिकालनिमित्तमोहितचित्तानां आधिव्याधिप्रभृतिविविधसांसारिकतापतप्तानां पापाचाररतानां याः याः पीडाः द्रव्यमाहृत्य स्वार्चने उपयुज्य ताः पीडाः प्रशाम्य रक्षति । हरिः लोके अज्ञानिसामान्यबालवत् स्वेच्छया क्रीडन् जगन्मोहयति । दैत्याः किं जानन्ति ? वराहश्रीनिवासौ महाभूतौ इति मुह्यन्ति । देवास्तु वराहश्रीनिवासौ जगदादिदेवनारायणांशौ । नारायण एव एतद्रूपद्वयेन अवतीर्ण इति । एतदेव सम्यग् ज्ञानम् । ये मुह्यन्ति तान् तथैव मोहयितुं तेन तमःप्रापयितुम् । ये यथार्थं विदन्ति तान् सद्गतिं प्रापयितुं च हरिः स्वयं बालरूपी बकुलादिनिमित्तं प्राकृतचेष्टाभिः क्रीडते । जगति ये ये बालकाः तेषां बालचेष्टाः दर्शयति तथा चेष्टादर्शनं तस्य न चित्रं न महत् । एतत् चेतनाचेतनात्मकं जगत् विधेः बालकः । विधिः हरिबालकः । ईदृशहरेः बालचेष्टाप्रदर्शनं अकिञ्चित्करमेव । 'बहुचित्रजगद्बहुधाकरणात्' तस्य हरेः बकुलापूजकत्वपूज्यत्वं च अवस्थाभेदेन युज्यते । अतः बाल्ये न स्थित्वा बकुलया सेव्यते । तया अद्य सेवां स्वीकृत्य पुनः कालविशेषैः तां बहुमानेन तोषयति ।

एवं हरिरूपं कीदृशम् ? रमाविधिमुखजगन्मोहकसौन्दर्ययुतम् । चिदानन्दात्मकम् । अनन्तम् । अस्य हरिरूपं तत्त्वदेवसङ्कृतं यद्रूपं, तद्रूपं न । विश्वकर्मकृतं शैलं लौहं दार्वं लेख्यं लेप्यं सैकतं मणिमयं रूपं वेति चेत् न । तर्हि तद्रूपं कीदृशम् ? स्वेच्छारूपम् । स्वस्य इच्छा यथा तथा रूपेण क्रीडते । यदा बालरूपी स्यामिति इच्छा, तदा अनन्याधीनतया बालो भवति । बालो भूत्वा बकुलया माता यथा तथा उपचरितः । यदा तरुणरूपेच्छा तदा तरुणरूपं प्रदर्श्य कन्यापरिणयादिना बकुलादीन् तोषयति । यदा प्रतिमारूपेच्छा तदा प्रतिमा भूत्वा भक्तैः अर्चां स्वीकरोति । एवं इच्छारूपै राजते । एतादृशहर्यधिष्ठितक्षेत्रमहिमा क्षेत्रगततीर्थश्रेष्ठमहिमा तत्र साक्षात् श्रीनिवासमहिमा कीदृशः कियान् इति ब्रूमः ।

पुण्यक्षेत्रदर्शनमेव बहुजन्मार्जितपुण्यलभ्यम् । तत्रापि वेङ्कटगिरिदर्शनं दुःखासम्भिन्नशाश्वतानन्दाविर्भावरूपमुक्तिदम् । वेङ्कटगिरिदर्शनादिकं देवानामपि दुर्लभं इत्युक्ते नराणां किं पुनः ? इत्येवं अंशं शतानन्दमुनिः जनकराजं प्रति निरूपयामास । तदेव सूतः शौनकादिविप्रान् प्रति निरूपयामास ॥

*॥ इति अत्र श्रीमद्भविष्योत्तरपुराणे वेङ्कटगिरिमाहात्म्ये जगन्मोहक-वराह-श्रीनिवासलीलावर्णनं बकुलायाः श्रीनिवासकैङ्कर्यवर्णनं नाम पञ्चमोऽध्यायः ॥*

॥ श्रीकृष्णार्पणमस्तु ॥



॥ श्रीः ॥

## श्रीमद्भविष्योत्तरपुराणान्तर्गतं

# श्रीवेङ्कटेशमाहात्म्यम्

### ॥ अथ षष्ठाध्यायकथासङ्क्षेपः ॥

**(गूढकर्तृकव्याख्यानानुसारी)**

श्रीसूत आह— कदाचित् श्रीनिवासः हयं सस्मार । तत्क्षणे वायुः अश्वो भूत्वा श्रीनिवासाग्रे आश्रितः । तदा हार-कंकण-केयूर-नूपुर-अङ्गुलीयकादि-रत्नाभरणैः अलङ्कृतः । अनर्घ्यदुकूलं धृत्वा, ललाटे तिलकं धृत्वा, ताम्बूलचूर्ण-मृत्तिकाकुङ्कुमपात्रसहितः, रक्तवस्त्रं शिरसि संवेष्ट्य, पादयोः पादुके धृत्वा, धनुर्बाणान् गृहीत्वा, अतिमनोहरः वेषः, देवमण्यादि-उत्तम-लक्षणयुक्तं दिव्यहयं आरुह्य, गिरेः अवरुह्य, गिरिकानने मृगयायै सञ्चरन् सिंह-शरभ-शार्दूलादि घातुकमृगान् जघान । ततः मदगजं एकं दृष्ट्वा तं हन्तुं अभ्यद्रवत् । सः गजः सार्धयोजनदूरं भयात् धावन् अन्ते श्रीनिवासाग्रे दण्डवत् पतित्वा शुण्डां उद्यम्य अगर्जयत् । ततो वनान्तरं जगाम ।

तदा कन्यका काचित् श्रीनिवासस्य दृष्टिगोचरा अभूत् । सा कन्या का ? कुतो वने आगता ? इति शौनकः पप्रच्छ । तदा सूतः वदति— अष्टाविंशतिमे कलौ सहस्राब्देषु गतेषु चन्द्रवंशस्य राजपरम्परया सुवीरो नाम नृपः शशास । तस्य पुत्रः सुधर्माख्यः । तस्य द्वौ सुतौ आकाशः तोण्डिमानश्चेति । आकाशः ज्यायान् । तोण्डिमानः कनीयान् । उभौ धर्मिष्ठौ । आकाशः तोण्डदेशं शशास । तस्य राज्ये सर्वप्रजाः सर्वथा धर्मपराः सुखिनः । राज्यैश्वर्यादिसम्पन्नस्यापि आकाशस्य पुत्रसम्पद् नासीत् । तदा दुःखितः राजा स्वगुरोः गुरोः पुरतः दुःखं आवेदयति— गुरो ! समस्तराज्य-ऐश्वर्यं अनुभूतवान् । नाना दानानि, अनेकपुण्यतीर्थक्षेत्रयात्राः च कृतवान् । धर्मं न त्यक्तवान् । एवं सतोऽपि मम अपत्यं नाभूत् । "अपुत्रस्य गतिर्न" इति विदो विदन्ति । पूर्वजन्मनि किं पापं कृतवान् ? लोके पुत्रवन्त एव पुण्यवन्तः, पुत्र-आलिङ्गन-चुम्बन-शिराघ्राणन-मन्दस्मित-मुखदर्शन-अव्यक्तमधुरभाषण-श्रवणैवमादि तत्तत् बाललीलादर्शनादिसुखं अनुभवन्ति पुत्रिणः । अपत्याय कुण्डल-हार-नूपुर-काञ्चीदाम-पादुक-अङ्गुलीयक-शिरोभूषण-कवचादि-करणेन घण्टा-प्रतिमा-कन्दुक-गज-तुरग-गौ-शुक-मयूर-कपोतप्रतिमादि क्रीडनकादि करणेन च । गज-तुरग-रथसञ्चार-

करणेन च सुखं अनुभवन्ति । तादृशसुखं मम न । अपुत्रोऽहं यमेन पाशेन बद्धः । यमस्य किमुत्तरं दद्याम् । हन्त ! धिङ् मां अतिपापिष्ठं इति वदति ॥ पुत्रात् शतगुणं पुत्रीत्याहुः । पुत्राभावेऽपि पुत्रीभावे समीचीनं अभविष्यत् । स्त्रीअपत्यमपि नाभूत् । "काञ्चीवरदराज ! रङ्गनाथ ! जगन्नाथ ! वराह ! श्रीनिवास ! वेंकटेश ! भवद्भ्यो नमो नमः । सन्ततिदरिद्रं मां रक्षत रक्षत" ॥ "हे गुरुवर्य ! किं करवाणि ? सुतास्यै क उपायोऽस्ति ? वद" इति ययाचे । तदा गुरुः— "आकाशराज ! मा चिन्तय, पुत्रकामेष्टिं कुरु, पुत्रः भविष्यति" इत्यवदत् ।

तदर्थं भूमौ शोधितायां सुदैवात् सहस्रदलात्मके कमले रमारूपां स्त्रीशिशुं ददर्श । देवदत्तेति मुमुदे । तदैव "ईदृश-अनुपम-कन्यायाः अनुरूपवरः कथं लभ्यः ?" इति चिन्तितवान् । तदा "भाग्यशालिन् राजन् ! इयं कन्या तव पुत्री । इयं तव पुण्यफलप्रदा । अतः इमां अवश्यं रक्षस्व" इति आकाशवाणी अभूत् । राजा प्रहृष्टः तां गृहमानीय गृह(गृहिणी)माह— "देवदत्तां इमां कन्यां गर्भजातायाः अधिकप्रीत्या संवर्धयस्व" इति । कन्यागमनमहिम्ना राजराज्ञ्योः वसुदानो नाम पुत्र उदितः । चन्द्रांशजन्यः उत्तमः । अयोनिजायाः पुत्र्याः राजा पद्मायाः अवतारत्वात् पद्मावतीति नाम चकार ।

एवं दिने दिने रमाचन्द्रसमौ पद्मावसुदानौ शुक्लचन्द्रवत् वर्धमानौ इमौ पुत्रौ दृष्ट्वा आकाशः आनन्दाब्धिमग्नः । एवं काले गते यौवनाढ्यां पद्मां दृष्ट्वा तस्याः अनुरूपवर-अलाभात् राजा व्याकुलः अभूत् । एवं सति कदाचित् पद्मा सखीभिः वसन्ते वने गता । तत्र पुष्पाणि अपचयन्तीं तदा श्रीहरिप्रेरितो नारदः वृद्धो भूत्वा तत्र प्राप्तः । ततः पद्मातः सखीभिः "कोऽसि ? कुत आयातः ?" इति पृष्टः नारद आह— युष्मद् कुलगुरुः । "बाले ! हस्तं दर्शय । लक्षणानि ब्रवीमि । विद्धि मां पितृतुल्यम् । लज्जां जहि" इति । ततः पद्मा हस्तं दर्शयति । नारदो वक्ति— बाले ! तव साक्षात् जगदीशः श्रीहरिः भर्ता भवति । तव मुख-नेत्र-पाणि-पादादि सकलाङ्गानि दिव्य-शुभलक्षणलक्षितानि । त्वं अनुपमपुण्यवती इति पद्मां आबभाषे ।

ब्रह्ममानसपुत्रो नारदः साक्षात् जगज्जननीं रमारूपां पद्मां मनसा नमन् सर्वासां पश्यन्तीनां अन्तर्दधे । श्रीनिवासकार्यसाधकः श्रीनिवासावासं शेषाचलं प्राप । इत्येवमंशं यं पद्मावतरणं शतानन्दः जनकं प्रति निरूपयामास तदेव वर्णनं सूतः शौनकादिविप्रान् प्रति निरूपितवान् ॥

*इति श्रीमद्भविष्योत्तरपुराणे श्रीवेङ्कटेशमाहात्म्ये षष्ठाध्यायकथासङ्क्षेपः ॥*

॥ श्रीकृष्णार्पणमस्तु ॥



॥ श्रीः ॥

## श्रीमद्भविष्योत्तरपुराणान्तर्गतं

# श्रीवेङ्कटेशमाहात्म्यम्

## अथ षष्ठोऽध्यायः

**मूलम्**

**मृगयाविहारोद्युक्तश्रीनिवासालङ्कारवर्णनम्**

सूत उवाच—

स कदाचिद्रमेशस्तु चिन्तयामास वै हयम् ।
मनसा चिन्त्यमाने च हयः प्रत्यक्षतां गतः ॥ १ ॥

**कल्याणकाण्डदीपः**

श्रीवेङ्कटेशमनिशं श्रीनिवासं महीपतिम् ।
श्रीब्रह्मेशसुरश्रीदं तं वन्दे चन्द्रसन्मुखम् ॥

अस्मिन् षष्ठेऽध्याये व्याख्येयानि व्याक्रियन्ते ।

**सः** श्रीनिवासः, **कदाचित्** एकस्मिन् दिवसे प्रातः शयने शयान एव । **हयं** उच्चैःश्रवसम् । तथा च श्रूयते "हयो भूत्वा देवानवहत् वाजी गन्धर्वान्" इत्यादि । "हत्वा याति यतः शत्रून् हयस्तस्मात्" इति स्मृतिः । **चिन्तयामास** । 'हयम्' इत्युपलक्षणम् । ऐरावतं निषादपरिवाराय देवांश्च सस्मार इत्यर्थः । **मनसा चिन्त्यमाने** स्मर्यमाणे, भावलक्षणा सप्तमी । **हयः प्रत्यक्षतां गतः** । अक्ष्णोः प्रति आभिमुख्यं प्रत्यक्षम् । लक्षणेनाभि प्रतीति समासः । प्रति पारीत्यादिना टच् । चाक्षुषज्ञानं तदस्य अस्तीति प्रत्यक्षः । अर्श आद्यच् । तस्य भावः तत्ता । तां गतः 'अभूत्' इति शेषः । यद्वा, अक्षिणी प्रत्यभिमुखः प्रत्यक्षं तस्य भावः तत्तेति बहुव्रीह्यर्थेऽव्ययीभावः । प्रतिगतोऽक्षं प्रत्यक्षम् इति प्रादि-समासो वा ।

**वायुरश्वत्वमापन्नो रज्जुस्तत्त्वाभिमानिनी।**
**उपासर्पत् [1]स यं लक्ष्मीस्ततोऽश्वं तं स [2]पूजयत् ॥ २ ॥**
**[3]हयोपरि समास्थाय सर्वाभरणभूषितः।**
**शुभ्रवस्त्रं पञ्चदशहस्तं बिभ्रत्तथोपरि।**
**काञ्चीं बद्ध्वा रमाकान्तः काञ्चीदामविराजितः ॥ ३ ॥**

१. महालक्ष्मी-, स्वयं लक्ष्मी-। २. पूजयन्। ३. तस्योपरि।

**कल्याणकाण्डदीपः**

हयस्योपरि हयोपरीति विग्रहः। "अकृदव्ययत्वान्न पूरण" इत्यादिना निषेधः। **हयोपरि** हयपृष्ठे। **समास्थाय** अन्तर्णीतणिजर्थः। आस्थापनीयानि पल्ययनादि सोपधानासनानि आस्थाप्य। अथ स्वयं सर्वाभरणभूषितः। 'अभूत्' इति शेषः। एते एव क्रमेण विशदयति– **काञ्चीं बद्ध्वेति**। अश्वमध्यबन्धनकक्षां बद्ध्वा स्वयं काञ्चीविराजितः अथवा सर्वाभरणभूषितः, हयोपरि समास्थाय मृगयां गत इत्यर्थः। एते एव विशदयति– **काञ्चीत्यादिना**। हयस्य हयप्रत्यक्षस्य उपरि अनन्तरम्। तदुपरीत्यत्र उपरीत्यस्य कालार्थत्वात्। समास्थाय आङुद्गमे। शयनोत्थितः स्थित्वा जगन्मोहन-सौन्दर्यलीलामानुषविग्रहरूपेच्छारूपविराजितः। सर्वाभरणभूषितः। आबध्य आरोप्य विक्षेप्य बन्धनीयैश्चतुर्विधैराभरणैर्भूषितोऽभूदिति शेषः। एतदेव विशदयति— **काञ्चीमिति**। द्वादशहस्ता-नाहवितस्तिपरिणाहावीरकक्षात्रकाञ्चीपटीति यावत्। धट्टीत्यपभ्रष्टभाषायाम्। स्वेच्छानिर्मितस्वर्ण-मयपटीं गुह्यबन्धनात्मककौपीनकटिसूत्रोभयात्मिकां वीरकाञ्चीं कटिबद्धां कटिदेशे बद्ध्वेत्यर्थः। "पीतकक्षासु संवीतकटिदेशं सुमध्यमम्" इति वराहपुराणसमाख्यानात्। "कक्षापटी च कौपीनं शाटी वस्त्रीति लक्ष्यते" इत्यमरः। कञ्च्यते कट्यां बद्ध्यते वीरैरिति योगेन वा काञ्ची वीरकौपीनम्। "कञ्चिकाञ्चिदीप्तिबन्धनयोः" इति धातुः। अथवा काञ्चीति तत्स्थानं कटिर्लक्ष्यते। तथा च कटिं बद्ध्वेत्यर्थः। तदपि वीरकौपीनेनैव। **काञ्चीदामविराजितः**।

"एकयष्टिर्भवेत्काञ्ची मेखला सप्तयष्टिका।
रशना षोडशा ज्ञेया कलापो विंशतिस्तथा॥" इति।

स्वर्णतन्तुनिर्मितैकयष्टिकट्याभरणं काञ्चीत्युच्यते। सैव मुखपट्टयुक्तं शृङ्खलितं कीलितं वा दाम। तथा च काञ्ची च दाम च काञ्चीदाम। तेन विराजितः आबध्य शोभित इत्यर्थः। अथवा काञ्चीं बद्ध्वा तेन विराजित इत्यर्थः। [illegible]बध्यमाभरणम्।

मूलम्

[1]शुभ्रवस्त्रं हस्तपञ्चदशामात्रं नवोपरि ॥ ४ ॥

१. शुभ्रवस्त्रं परीधाय पञ्चहस्तं तथा दधत्।

**कल्याणकाण्डदीपः**

**शुभ्रवस्त्रं हस्तपञ्चदशामात्रं नवोपरि** इति। पञ्च च दश च पञ्चदश, सङ्ख्याया अल्पीयस्याः इति पूर्वत्वं, पञ्चाधिका दश पञ्चदशेति वा हस्तानां पञ्चदश हस्तपञ्चदश हस्तपञ्चदशप्रमाणमस्य हस्तपञ्चदशामात्रम्। पञ्चदश च ते हस्ताश्चेति वा कडारादित्वं कल्पनीयम्। **नवोपरि** नवभ्यो हस्तेभ्य उपरि, तथा च स्वर्णरजतकौशेयकार्पास बर्हणतन्तुमयपालिदशाशालि नवोपरि पञ्चदशसङ्ख्याहति-सम्पन्नचतुर्विंशतिस्वहस्तप्रमाणं पयःफेननिभं शुभ्रवस्त्रयुग्मं स्वेच्छया निर्माय तत्रैकं परिधाय परमाकुञ्चितं वामस्कन्धोपरि संवीय भूषितोऽभूदिति भावः। इदमाबध्यारोप्योभयरूपम्।

ननु "शुभ्रवस्त्रं चतुर्विंशद्धस्तमात्रं नवं शुभम्" इत्यादि सुगमसन्दर्भे सम्भवति। एवं सन्दर्भ-वैचित्र्यस्य प्रयोजनं तु हस्तपञ्चदशामात्रम्। हस्तप्रमाणपरिच्छिन्नपञ्चसङ्ख्याकपालिघटिकाकच्छक-परिधानपर्याप्तं परिधानीयमेकं शुभ्रवस्त्रम्, उपरि उपरितनमाच्छादनम्। शुभ्रवस्त्रं नवसङ्ख्याकाञ्चल-घटिकोपेतमित्यर्थः। **विशेषावगतिः**।

"पूर्वकच्छं सुरावासं पृष्ठकच्छं तदासुरम्।
द्विकच्छं पृष्ठतः प्रोक्तं त्रिकच्छं पुरतस्तथा।
पञ्चकच्छं भवेदेवमन्यथा नग्न उच्यते॥"
"स्नात्वैवं वाससी धौते ह्यच्छिन्ने परिधाय वै॥"

इत्याश्वलायनयाज्ञ्यवल्क्यौ। "परिधानाञ्चले कच्छः पार्श्वे" इत्यमरः।

दशाश्च दशाश्च दशा इति पालिघटिकाकच्छार्थानां त्रयाणां सरूपैकशेषः। पञ्च च ता दशाश्च पञ्चदशाः। हस्ताः पञ्चदशा यस्य परिधानकर्मणः तद्धस्तपञ्चदशं, तस्य मात्रं पर्याप्तमिति। "अर्था-त्प्रकरणाल्लिङ्गादौचित्यादर्थनिर्णयः" नातः पदपदार्थविग्रहवाक्यार्थक्लिशः। परिधानस्य पञ्चकच्छकत्वात् परिधानीयस्य हस्तपञ्चदशामात्रत्वम्। ब्रह्माण्डजातीयशरीरावरणस्यापि नवत्वौचित्यान्नवत्वम्।

"दशा नानाविधाऽवस्थावर्त्योर्वस्त्राञ्चलेऽपि च" इति निघण्टुः।

"सन्दर्भशुद्धावभियोगयुक्तं मनो मदीयं सुकिरातलग्नम्।
अतो मया कल्पितमेतमर्थं नन्दन्तु निन्दन्तु न मे विषादः॥"

**मूलम्**

**आदर्शालोकितं कृत्वा धृत्वा शुभ्रां च मृत्तिकाम्।**
**तन्मध्ये कुङ्कुमस्यापि तिलकं सुमनोहरम्।**
**पूगीफलं सताम्बूलं चूर्णनिक्षिप्तपात्रकम् ॥ ५ ॥**

**आदर्शं मृत्तिकां शुभ्रां तथा [1]वै कुङ्कुमं शुचि।**
**[2]एवं निर्मितवस्त्रेण बद्ध्वा तु कटिमध्यतः ॥ ६ ॥**

१. कुङ्कुमभाजनम्। २. स्वर्ण-।

**कल्याणकाण्डदीपः**

**सताम्बूलं** धवलपर्णीपर्णवत् धवलताम्बूलवल्लीदलपूलपेटीसहितम्। **पूगीफलं** निष्टप्तसुवर्णरजत-कर्दमलिप्तैलातण्डुलदेवकुसुमजातीफलतत्पत्रपूगीफलशकल एतादृशपूगचूर्णगुळिकादिसमृद्धं एकं **चूर्ण-निक्षिप्तपात्रकं** निक्षिप्तं चूर्णं मुक्ताचूर्णं यस्मिन् तत् चूर्णनिक्षिप्तम्। अग्न्याहितवत् समासः। तच्च तत् पात्रं च चूर्णनिक्षिप्तपात्रम्। तदेव तत्कं सुवर्णभृङ्गळितखजाशलाकासहितम्। स्वर्णमयमाम्रफलाकारं सम्पुटकमित्येकम्। **आदर्शं** स्वर्णबिलनिक्षिप्तं दर्पणम्। तथा शुभ्रां मृत्तिकां तत्पात्रीम् एकाम्। तथा शुचि कुङ्कुमं शुचि शुद्धं कुङ्कुमं वस्त्रगाळितघुसृणचूर्णसम्पुटमेकम्। **एवं** एवमादिकस्तूरीसम्पुटम्। घन-सारसम्पुटम्। स्वर्णकूर्चम् एवमाद्येकपट्या निक्षिप्य **निर्मितं वस्त्रेण** स्वेच्छानिर्मितकौशेयवस्त्रेण। पृष्ठे कटिमध्यतः तु दृढं बद्ध्वा तदेतद्बन्धनं द्राविडदेशाचारप्राप्तम्।

**मूलम्**

**स्वर्णयज्ञोपवीताङ्गः कण्ठाभरणभूषितः।**
**कङ्कणाङ्कितदोर्भ्यां वै सम्पूर्णवरगात्रकः।**
**भुजकीर्त्या रत्नमय्या राजमानोऽङ्गुलीयकैः ॥ ७ ॥**

**कल्याणकाण्डदीपः**

**कण्ठाभरणभूषितः** ग्रैवेयकललन्तिकमालम्बिकाद्याभरणभूषितः। इदमारोप्यं भूषणम्। **कङ्कणा-ङ्कितदोर्भ्यां** रत्नखचितस्वर्णमयवलयभृङ्गलके [illegible]ङ्गुलीयकालङ्कृतबाहुभ्यां पर्याप्तोत्तमनिग्रहः। आजानु-बाहुरिति यावत्। विक्षेप्यं भूषणमिदम्।

**मूलम्**

**कुङ्कुमाक्तसुगन्धेन लिप्ताङ्गवरराजितः ।**
**कबरीकृतकेशेषु रक्तवस्त्रं सुवेष्ट्य च ॥ ८ ॥**

**कल्याणकाण्डदीपः**

कुङ्कुमकेसरगन्धेन आरक्तसुगन्धेन आलिप्त मध्यदेहकराभ्यां प्रकाशितः । **रक्तवस्त्रम्** अरुण-कौशेयम् ।

**मूलम्**

**लम्बितैः (वासतैः) पुष्पजालैश्च स्कन्धगैः परिभूषितः ।**
**सुवर्णरत्नसम्बद्धपादुकागूहिताङ्घ्रिकः ॥ ९ ॥**

**धनुर्बाणधरः श्रीमान् साक्षान्मन्मथमन्मथः ।**
**एवं मनोहरं रूपं धृत्वा श्रीवेङ्कटेश्वरः ॥ १० ॥**

**कल्याणकाण्डदीपः**

**लम्बितैः पुष्पजालैः** नागपुन्नागबकुळाशोकचम्पकामल्लिकादिपुष्पमालाभिः । **परिभूषितः** पद्मरागमणिज्योतिः स्फुरत्कुण्डलमण्डितः । **एवं मनोहरं** पद्मवत्या मनोहरम् ।

**गूढकर्तृकव्याख्यानम्**

पूर्वाध्याये सूतः श्रीनिवाससेवार्थं बकुला आगतेत्युक्त्वा अस्मिन् अध्याये श्रीनिवासः पुरतः किं चकारेत्यत आह ।

श्रीनिवासः एकस्मिन् दिने प्रातः शयनादुत्थाय मृगयायै गन्तुं समुचितवाहनोऽत्यावश्यक इति मत्वा उच्चैःश्रवसं नाम हयं मनसा सस्मार । हयो नाम शत्रून् हत्वा यातीति हय. । प्रकृते श्रीनिवासः किरातो भूत्वा मृगयार्थं गच्छति । अत एतत्कार्यसाधको भवेत् इति ज्ञेयम् । स्वपरिवारी भवितुं देवांश्च सस्मार । स्मरणक्षणे देवाः श्रीनिवाससेवासुयोगः प्राप्त इति प्रमोदेन प्राप्ताः । महाबलो वायुः अश्वत्वं आपन्नः । रज्जुः तत्त्वाभिमानिनी । तत्त्वं स्वतन्त्रं तत्त्वं विष्णुः । तस्मिन् अभिमानिनी महालक्ष्मीः । सा रज्जुत्वं आपन्ना स्वयं श्रीनिवासं उपासर्पत् । देवाः तस्य निषादपरिवारत्वं आपन्नाः । ईदृशहये सिद्धे

तं तस्य पृष्ठे आस्थापनीय-पल्ययनादि-सोपधानासनानि आस्थाप्य तं अलङ्कृत्य स्वयं अलङ्कृतः । कथम् ? जगन्मोहकसौन्दर्ययुतं लीलार्थं धृतं मानुषरूपं यत् तादृशेच्छारूपं धृतवान् । "आबद्धचारोप्य विक्षेप्य बन्धनीयैश्चतुर्विधैः" इति चतुर्विधभूषणैः भूषितः । हयस्य मध्यबन्धनकक्षां बद्ध्वा काञ्ची-दामबद्धवान् । द्वादशहस्तमान-एकवितस्तिपरिणाहमितवीरकक्षां अथवा काञ्चीपटीं (दट्टि) बद्धवान् । स्वर्णमयपटीं कौपीनत्वेन कटिसूत्रत्वेन कटिव्याधानार्थं कटिगुह्यदेशे बद्धवान् । ततः पञ्चदशहस्तमित-पयःफेननिभस्वर्णमयवस्त्रं परिदधौ । नवहस्तमितं शुभ्रवस्त्रं वामस्कन्धोपरि दधत् । तदनु आदर्शे आलोक्य ललाटे शुभ्रमृदा नाम दधार । तन्नाममध्ये कुङ्कुमकेसरेण सुमनोहरतिलकं दधार । धवल-वीटिकादलपूलपेटीसहितः । एलालवङ्गकर्पूरजातीफलजातीपत्रपूगीफलशकलगुलिकासमुद्गकसहितः । मुक्ताचूर्णनिक्षिप्तपात्रसहितः । स्वर्णमयं आम्रफलाकारसम्पुटकं स्वर्णबिलदर्पणं, शुभ्रनाम मृत्तिका-निक्षिप्तपात्रं, वस्त्रगालितघुसृणधूलीसम्पुटं, कस्तूरी-घनसारसम्पुटं, स्वर्णकूर्चं इत्येतदादिकं एकपेट्यां कौशेयवस्त्रेण कटिमध्यतः बद्ध्वा (ग्रैवेयक-ललन्तिका-पालम्बिकादि-आभरणभूषितः) स्वर्णमय-यज्ञोपवीतं दधार । बाह्वोः केयूरे, करयोः वलये, पदयोः नूपुरौ, अङ्गुलीषु अङ्गुलीयकानि दधार । कुङ्कुमकेसररक्तसुगन्धेन मध्यदेहकरौ लिप्तः । कबरीकृतकेशेषु अरुणकौशेयं वेष्टितवान् । वासन्त-नाग-पुन्नाग-बकुल-अशोक-चम्पका-मल्लिका-जातिप्रभृतिपुष्पनिर्मितमालां कण्ठे, कर्णयोः पद्मराग-खचितकर्णकुण्डले । स्वर्णरत्नखचितपादुकयोः पादौ गूहितः । धनुर्बाणान् करे । एवं भूषितः साक्षा-न्मन्मथमन्मथः । जगन्मोहकसौन्दर्ययुतः । एतादृशं पद्मामनोहरं रूपं धृत्वा दिव्यं हयमारुरोह ॥ हयः कीदृशरूपः ?

**मूलम्**

**हयं रत्नसमाकीर्णमुपबर्हविभूषितम् ।**
**सुवर्णलतिकायुक्तं वायुवेगं मनोजवम्** ॥ ११ ॥

**नीलवर्णं पाण्डुपादं हस्तपञ्चदशोन्नतम् ।**
**आरुह्य देवमण्यादिसर्वलक्षणसंयुतम् ।**
**अवरुह्य गिरिश्रेष्ठं मृगयार्थं जगाम सः** ॥ १२ ॥

**कल्याणकाण्डदीपः**

**हयं रत्नसमाकीर्णं** मुखदेशे [illegible] च सर्वतः रत्नखचितसर्वाभरणभूषितम् । **उपबर्हविभूषितम्** उपबृह्यते उपवर्ध्यतेऽपृष्ठोऽनेनेत्युपबर्हः । उपधानं उप उपगर्भितं बर्हः मयूरपिच्छं यस्मिन् स उपबर्हः

इति वा । तूलस्थानीय-पिच्छगर्भित-महाधनवस्त्र-प्रियकाजिनादि-निर्मिताश्वपृष्ठासाद्यासनालङ्कृतम् । **सुवर्णलतिकायुक्तं** सुवर्णलतायमान-कविकानामक-मुखबन्धन-रज्जुनियन्त्रितम् । **वायुवेगं मनोजवं** प्रत्यागच्छत्प्रतिघातकस्पर्शवद् द्रव्यप्रवाहो वेगः । अप्रतिघातकस्पर्शरहितद्रव्यातिगमनं जवः ।

यद्वा, वेगोऽतिधावनम् । 'जवरस्त्वतिवेगः' इति वा । वायोर्वेग इव वेगो यस्य स तथा । मनसो जव इव त्वरितमिव त्वरितं यस्य स तथा । एतादृशं हयमास्थाय आरुह्येति लभ्यते । बाणबाणासनधरः निषादरूपैर्देवः परिवृतः सन् । रविवारे क्षेमपुनर्वस्वोर्ध्वजयोगे गिरिश्रेष्ठमवरुह्य मृगयार्थं जगामेत्यर्थः ।

**मूलम्**

**मृगयाविहारसमये श्रीनिवासस्य कन्यादर्शनम्**

**मृगान् बहुविधाकारान् सिंहशार्दूलजम्बुकान्** ॥ १३ ॥
**मातङ्गान् शरभान् घोरान् [1]तथा वै महिषानपि ।**
**जघान विपिने देवः सञ्चरंस्तु इतस्ततः** ॥ १४ ॥

१. एणान् ।

**कल्याणकाण्डदीपः**

मृगयामेवाह— **मृगानित्यादिना** । देवो विपिने इतस्ततः सञ्चरन् धावन् सिंहशार्दूलजम्बुकान् मातङ्गान् घोरान् शरभान् **तथा वै** तथैव महिषानपीत्येवं **बहुविधान्** नानाकारान् दैत्यान् जघान इत्यर्थः ।

**मूलम्**

**तत्रैकं [1]हस्तिराजानं मदमत्तं वनेचरम् ।**
**तं हन्तुमगमत् पृष्ठमनुसृत्य रमापतिः** ॥ १५ ॥

१. हस्तिपं दृष्ट्वा ।

**कल्याणकाण्डदीपः**

हरिरहं गजत्रातेति पद्मावत्याः सूचयितुं तत्कृतव्यापारान्तरमाह— **तत्रैकम्** इत्यादिना गत इत्यन्तेन । **हस्तिराजानम्** । ऐरावतः श्रीनिवासेच्छामात्रेण उच्चैःश्रववदागतः । समासान्तविधेरनित्यत्वात् राजानमिति साधुः । **वनेचरमिति** । हलन्तादित्यलुक् ।

**मूलम्**

**स जगाम वने दूरं भयाद्भीतो वृषाकपेः।**
**योजनं सार्धकं गत्वा तत्र देवं जनार्दनम् ॥ १६ ॥**

**दण्डवत्पतितो भूत्वा शुण्डामुद्यम्य गर्जयन्।**
**यदा गतस्तदा कन्या दृष्टिमार्गमुपागता ॥ १७ ॥**

**कल्याणकाण्डदीपः**

तं हन्तुं हन्तुमिव वृषाकपेर्भयात् भीतः स गजः वने दूरं **जगाम** दुधाव। धावनावधिमाह— **योजनमिति**। सार्धकं योजनं गत्वा तत्र सार्धयोजनान्ते पद्मासमक्षं देवं जनार्दनं प्रति दण्डवत्पतितो भूत्वा शुण्डामुद्यम्य गर्जयन् स्पष्टप्रतिपत्त्यर्थं हरे त्राहि त्राहि इत्यर्थसूचकबृंहितं कुर्वन् पद्मायाः देवं जनार्दनं गत्वा गमयित्वा मुक्तो वनं गतः। तदा श्रीनिवासस्य कन्या दृष्टिमार्गमुपागता।

**गूढकर्तृकव्याख्यानम्**

हयः मुखे पृष्ठे च रत्नखचितसर्वाभरणभूषितः। उपधानेन पृष्ठे भूषितः। सुवर्णतिलकायुतः। सुवर्णलतायमान-कविकानामकमुखबन्धनरज्जुना नियन्त्रितः। वायुवेगः। मनोवेगः। देवमण्यादि-सुलक्षणोपेतः। देवमणिः हयग्रीवास्य रोमावर्तविशेषः। ईदृशहयारूढः निषाददेवयुतः रविवारे क्षेमपुनर्वस्वोः ध्वजयोगे प्रस्थितः वेङ्कटगिरेः अवरुह्य गिरिकाननदेशे मृगयायै उपचक्रमे हरिः। सिंह-शार्दूल-जम्बुक-मातङ्ग-शरभ-एण-महिषादीन् मृगान् जघान। अत्र किरातरूपी श्रीनिवासः नाना-मृगाकारदैत्यान् जघानेति ज्ञेयम्। अनन्तरं मदोन्मत्तं वनेचरं गजराजं हरिः ददर्श। क्षणात् तं हन्तुं तत्पृष्ठतः विपिने बहुदूरं ययौ। तदा स गजः श्रीनिवासात् भीतः सार्धयोजनदूरं धावन् ततः वृषाकपिं जनार्दनं प्रति दण्डवत् भुवि निपतितः शुण्डां उद्यम्य गर्जयन् आसीत्। "श्रीहरे मां त्राहि त्राहि" इत्यर्थसूचकबृंहणं अकरोत्। श्रीहरिः यो गजराजं ररक्ष अत्रागत इति पद्मां सूचयितुं जगर्ज॥ वृषाकपिर्नाम। वृषा धर्मोद्धारकः। कः = भुवः। पिः = पालकः। वराहत्वेन अवतीर्य भूचोरदैत्यं समुद्रलीनं संहृत्य भुवं अर्थात् सकलसज्जनमनोरथं पूरयन् धर्मं उद्दधार। "कपिर्वराहः श्रेष्ठश्च धर्मश्च वृष उच्यते। तस्मात् वृषाकपिं प्राह कश्यपो मां प्रजापतिः॥" इति व्यासोक्तेः। "वृषाकपिरमेयात्मा" इति विष्णुसहस्रनामोक्तेः। एवं गर्जयन् हस्ति[illegible] वनान्तरे ययौ। तदा यद्देशे गजराजो जगर्ज तद्देशे कन्या दृष्टिगोचरा बभूव।

**मूलम्**

ऋषयः उचुः—

सा कन्या कस्य सम्बन्धात् किमर्थं वनमागता।
कस्यैव तनया सर्वं तद्वदस्व महामते ॥ १८ ॥

**कल्याणकाण्डदीपः**

सा श्रीनिवासदृष्टा कन्या, कनति दीप्त्या प्रकाशते पतिमिच्छतीति चेति कन्या। कनि दीप्त्यादिषु। कस्य निक्षेपस्य वा ऋणस्य वा वैरस्य वा सुकृतादेर्वा सम्बन्धात् भूमावुत्पन्ना **किमर्थं** किं निमित्तं **कस्यैव** कस्य वा, अनवक्लृप्तौ वा सन्धिः आर्षः। यस्य कस्य वा तनया अस्तु इत्यर्थः। तज्जिज्ञासा नावश्यकीति भावः।

**मूलम्**

इति तैस्तु समाज्ञप्तः सूतः परमधार्मिकः।
उवाच वचनं भक्त्या सन्तोषोद्रिक्तमानसः ॥ १९ ॥

सूत उवाच—

शृण्वन्तु मुनयः सर्वे कन्याया जन्म पावनम्।
पुरा तु द्वापरस्यान्ते पाण्डवानां महात्मनाम् ॥ २० ॥

युद्धे तु भारतेऽतीते अष्टाविंशतिमे कलौ।
विक्रमार्कादयो भूपाः स्वर्गलोकं यदा ययुः ॥ २१ ॥

तत्कालान्ते वत्सराणि सहस्राणि समागमन्।
चन्द्रवंशे नृपः कश्चित् सुवीर इति नामकः ॥ २२ ॥

**कल्याणकाण्डदीपः**

चन्द्रवंशे नृपः कश्चित् सुवीर इति नामकः जज्ञे।

मूलम्

जज्ञे सुधर्मस्तत्पुत्रस्तत्सुतौ नृपपुङ्गवौ ।
आकाश[1]तोण्डिमानौ तौ जातौ लोकयशस्करौ ॥ २३ ॥

१. तोण्डमानाख्यौ ।

कल्याणकाण्डदीपः

**तत्पुत्रः** सुवीरपुत्रः **सुधर्म** इति नामतः **जज्ञे** । **तत्सुतौ** सुधर्मसुतौ । **आकाशतोण्डिमानौ** नामतः **जातौ** ।

मूलम्

धर्मिष्ठौ दृढभक्तौ तौ नारायणपरायणौ ।
ज्येष्ठो[1]ऽनन्तनृपः साधुः कनिष्ठस्तोण्डमानिति ॥ २४ ॥

१. वियन्नृपः ।

कल्याणकाण्डदीपः

**ज्येष्ठोऽनन्तनृपः** साधुरेव, हरितद्भक्ताराधक एव, न दुष्टशिक्षणादिप्रशासने । तर्हि कः शास्तेत्यत आह— **कनिष्ठ इति** ।

मूलम्

तोण्डिदेशाधिपो भूत्वा शशास पृथिवीमिमाम् ।
तस्मिन् शासति भूखण्डं दधिखण्डमिवाभवत् ॥ २५ ॥

कल्याणकाण्डदीपः

**दधिखण्डमिवाभवत्** सर्वांशेनोपादेयमभूत् ।

मूलम्

रक्षमाणे नृपे तस्मिन् जना धर्मपरायणाः ।
निरातङ्कं भवत्स[र्वं] जगत्स्थावरजङ्गमम् ।
गावो बहुपयोदाश्च नार्यः पतिपरायणाः ॥ २६ ॥

### गूढकर्तृकन्याख्यानम्

"श्रीनिवासस्य कन्या दृष्टिमुपागता" इत्युक्ते सूतेन शौनकादयः कुतूहलेन पृच्छन्ति। सा कन्या कस्य सम्बद्धा ? निक्षेपसम्बन्धात् ऋणसम्बन्धात् वा वैरसम्बन्धाद्वा सुकृतादेः सम्बन्धात् वा कस्य वा सम्बन्धात् सम्बद्धा ? कन्या नाम – कनति दीप्यते। दीप्त्या पतिं इच्छति कन्या। सा कन्या किंनिमित्तं वनमागता ? सा कस्य दुहिता ? एतत् महाज्ञानिन् ! वदस्व" इति पप्रच्छुः। तदा सूतः अतिमुदा "साक्षात् जगज्जननी रमा पद्मात्वेन अवतीर्णा। तादृश्याः कथाकथनसुयोगः स्वस्य प्राप्तः" इति आनन्दितः कन्याकथां कथयितुं उपचक्रमे॥

पुरा इत्युक्ते द्वापरे गते भारतयुद्धे गते कलौ प्राप्ते तस्मिन् अष्टाविंशतिमे कलौ प्राप्ते प्रसिद्धविक्रमार्कादयः स्वर्गं गताः। ततः वर्षसहस्रानन्तरं चन्द्रवंशे सुवीरो नाम नृपो जज्ञे। तस्य सुधर्म इति सुतो जज्ञे। सुधर्मस्य द्वौ सुतौ आकाशः तोण्डिमान् इति। द्वयोः आकाशः ज्येष्ठः तोण्डिमानः कनिष्ठः। अग्रजानुजौ लोके ख्यातकीर्तिमन्तौ विष्णुभक्तौ। राजप्रजाधर्मतत्त्वज्ञौ। तदनुष्ठानपरौ। आकाशः श्रीहरिभक्ताराधकः। प्रजापालनकार्यरूपराज्यं तोण्डिमानेन कारयामास। आकाशस्य राजत्वे सर्वप्रजाः राजभक्ताः धार्मिकाः। आकाशराजत्वमहिम्ना स्थावरजङ्गमात्मकजगतः न कदापि कुतोऽपि भयम्। तद्देशे गावः बहुक्षीरदाः। नार्यः स्वस्वपतिषु नियतव्रताः। पतिव्रताधर्मं अनुतिष्ठन्त्यः। एवं तस्य राजत्वं सर्वथा उपादेयं आसीत्।

मूलम्

**कदाचित्पुत्र[1]दुःखेन एकान्तभवने स्थितः।**
**अपुत्रो नृपति[2]र्दृष्ट्वा गुरुं [3]चोवाच भक्तितः ॥ २७॥**

१. काञ्ची स। २. दुःखात्। ३. प्रोवाच।

**कल्याणकाण्डदीपः**

कदाचित् स्थिते स्वशिष्टापकाले पुत्रदुःखेन पुत्रसम्बन्धिदुःखेन। सम्बन्धश्च तत्प्रतियोगिकविरहप्रयुक्तत्वम्। पुत्रविरहप्रयुक्तदुःखेनेत्यर्थः। तदा तद्दुःखशान्तये यदृच्छया प्राप्तं गुरुं दृष्ट्वा।

मूलम्

**पुत्रालाभेन आकाशराजानुभूतचिन्ताप्रकारः**

**आकाशराज उवाच—**

**अनुभूतमिदं राज्यं हस्त्यश्वरथसङ्कुलम्।**

**मूलम्**

**जज्ञे सुधर्मस्तत्पुत्रस्तत्सुतौ नृपपुङ्गवौ ।**
**आकाश'तोण्डिमानौ तौ जातौ लोकयशस्करौ ॥ २३ ॥**

१. तोण्डमानाख्यौ ।

**कल्याणकाण्डदीपः**

**तत्पुत्रः** सुवीरपुत्रः **सुधर्म** इति नामतः जज्ञे । **तत्सुतौ** सुधर्मसुतौ । **आकाशतोण्डिमानौ** नामतः **जातौ** ।

**मूलम्**

**धर्मिष्ठौ दृढभक्तौ तौ नारायणपरायणौ ।**
**ज्येष्ठो'ऽनन्तनृपः साधुः कनिष्ठस्तोण्डमानिति ॥ २४ ॥**

१. वियन्नृपः ।

**कल्याणकाण्डदीपः**

**ज्येष्ठोऽनन्तनृपः** साधुरेव, हरितद्भक्ताराधक एव, न दुष्टशिक्षणादिप्रशासने । तर्हि कः शास्तेत्यत आह— **कनिष्ठ इति** ।

**मूलम्**

**तोण्डिदेशाधिपो भूत्वा शशास पृथिवीमिमाम् ।**
**तस्मिन् शासति भूखण्डं दधिखण्डमिवाभवत् ॥ २५ ॥**

**कल्याणकाण्डदीपः**

**दधिखण्डमिवाभवत्** सर्वांशेनोपादेयमभूत् ।

**मूलम्**

**रक्षमाणे नृपे तस्मिन् जना धर्मपरायणाः ।**
**निरातङ्कं भवत्सर्वं जगत्स्थावरजङ्गमम् ।**
**गावो बहुपयोदाश्च नार्यः पतिपरायणाः ॥ २६ ॥**

**गूढकर्तृकन्याख्यानम्**

"श्रीनिवासस्य कन्या दृष्टिमुपागता" इत्युक्ते सूतेन शौनकादयः कुतूहलेन पृच्छन्ति । सा कन्या कस्य सम्बद्धा ? निक्षेपसम्बन्धात् ऋणसम्बन्धात् वा वैरसम्बन्धाद्वा सुकृतादेः सम्बन्धात् वा कस्य वा सम्बन्धात् सम्बद्धा ? कन्या नाम – कनति दीप्यते । दीप्त्या पतिं इच्छति कन्या । सा कन्या किंनिमित्तं वनमागता ? सा कस्य दुहिता ? एतत् महाज्ञानिन् ! वदस्व" इति पप्रच्छुः । तदा सूतः अतिमुदा "साक्षात् जगज्जननी रमा पद्मात्वेन अवतीर्णा । तादृश्याः कथाकथनसुयोगः स्वस्य प्राप्तः" इति आनन्दितः कन्याकथां कथयितुं उपचक्रमे ॥

पुरा इत्युक्ते द्वापरे गते भारतयुद्धे गते कलौ प्राप्ते तस्मिन् अष्टाविंशतिमे कलौ प्राप्ते प्रसिद्धविक्रमार्कादयः स्वर्गं गताः । ततः वर्षसहस्रानन्तरं चन्द्रवंशे सुवीरो नाम नृपो जज्ञे । तस्य सुधर्म इति सुतो जज्ञे । सुधर्मस्य द्वौ सुतौ आकाशः तोण्डिमान् इति । द्वयोः आकाशः ज्येष्ठः तोण्डिमानः कनिष्ठः । अग्रजानुजौ लोके ख्यातकीर्तिमन्तौ विष्णुभक्तौ । राजप्रजाधर्मतत्त्वज्ञौ । तदनुष्ठानपरौ । आकाशः श्रीहरिभक्ताराधकः । प्रजापालनकार्यरूपराज्यं तोण्डिमानेन कारयामास । आकाशस्य राजत्वे सर्वप्रजाः राजभक्ताः धार्मिकाः । आकाशराजत्वमहिम्ना स्थावरजङ्गमात्मकजगतः न कदापि कुतोऽपि भयम् । तद्देशे गावः बहुक्षीरदाः । नार्यः स्वस्वपतिषु नियतव्रताः । पतिव्रताधर्मं अनुतिष्ठन्त्यः । एवं तस्य राजत्वं सर्वथा उपादेयं आसीत् ।

**मूलम्**

**कदाचित्पुत्र[1]दुःखेन एकान्तभवने स्थितः ।**
**अपुत्रो नृपति[2]र्दृष्ट्वा गुरुं [3]चोवाच भक्तितः ॥ २७॥**

१. काञ्ची स । २. दुःखात् । ३. प्रोवाच ।

**कल्याणकाण्डदीपः**

कदाचित् स्थिते स्वशिष्टापकाले पुत्रदुःखेन पुत्रसम्बन्धिदुःखेन । सम्बन्धश्च तत्प्रतियोगिक-विरहप्रयुक्तत्वम् । पुत्रविरहप्रयुक्तदुःखेनेत्यर्थः । तदा तद्दुःखशान्तये यदृच्छया प्राप्तं गुरुं दृष्ट्वा ।

**मूलम्**

**पुत्रालाभेन आकाशराजानुभूतचिन्ताप्रकारः**

**आकाशराज उवाच—**

**अनुभूतमिदं राज्यं हस्त्यश्वरथसङ्कुलम् ।**

**नानादानं कृतं [1]चैव तीर्थयात्रा विशेषतः ॥ २८ ॥**

१. तात ।

**कल्याणकाण्डदीपः**

**नानादानं कृतमिति** । पुत्रप्राप्तिहेतुभूत डोलास्थसुवर्णबालकृष्णप्रतिमादानं वृषभदानं विप्रोद्वाहनं सवत्ससुवर्णधेनुदानं घृतकुम्भदानं विधिवत्संयाव पायसदानं कूष्माण्डदानं दीपदानमित्यादि अनेकदानं कृतम् । **तीर्थयात्रा विशेषतः** । भूशुद्धिस्थानीयतत्प्रतिबन्धकनिवृत्त्यर्थमेकवारम्, अतिशयार्थमेकवारमिति विशेषतः गङ्गासेत्वादि यात्रा कृता ।

**मूलम्**

**नानुभूतं पुत्रसुखं पितॄणां मुक्तिदं द्विज ॥ २९ ॥**

**कल्याणकाण्डदीपः**

**पितॄणां मुक्तिदम्** अमृतत्वप्रदम् । पुत्रस्य पितॄणां ऋणान्मुक्तिदं वा । तथा च मन्त्रवर्णः—

"ऋणमस्मिन् सन्नयति अमृतत्वं च गच्छति ।
पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम् ॥" इति ॥

श्रुतिश्च—

"जायमानो ह वै ब्राह्मणस्त्रिभी ऋणवान् जायते ।
ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः ।
य एवानृणो यः पुत्री यज्वा ब्रह्मचारी वाऽऽसीत् ॥ इति ।

**पुत्रसुखं** पुत्रसम्बन्धिसुखानुभवकारणम् । पुत्रजन्म **नानुभूतं** न दृष्टं किं प्रवासात् सर्वथा अभावाद्वा ? इत्यतः अभावात् इत्युक्तः ।

**मूलम्**

**किं मया चरितं पापं कस्य वा मारितः सुतः ।**
**तेन पापेन विप्रेन्द्र न प्राप्तं पुत्रजन्म मे ॥ ३० ॥**

**कल्याणकाण्डदीपः**

सोऽपि कुतः ? इत्यतो बहुकालं पुत्रजन्मानुपलम्भप्रयुक्तदुःखानुभवेऽपि अक्षयबलवत् दुष्कर्मण इति प्राप्ते, तदपि किम् ? इत्युक्ते वितर्कयति— **किं मया चरितं पापमित्यादिना** । किं वितर्के । मया चरितं बलवत्कृतं पापं पुत्रजन्मप्रतिबन्धकं गुरुद्वेषादिवत्सवियोजनान्त-दशपापमध्ये किम् ? इति विशेषेण मया न ज्ञायते । फलदं दैवमेव जानातीति भावः । तथाऽपि सामान्यतो ज्ञायते इत्याह— **कस्येत्यादिना** । हे विप्रेन्द्र, कस्य वा राज्ञः सुतो मारितः । तेन पापेन पुत्रजन्म, च चोऽप्यर्थे, जन्मापि न प्राप्तमित्यर्थः । यद्यपि विशेषतो न ज्ञायते तथापि यतो मया पुत्रजन्मापि न श्रूयते अतो राजपुत्रमारणात्मकं दुष्कर्मानुमीयत इति भावः ।

**मूलम्**

**नेत्राभ्यां नैव दृष्टं च पुत्रस्य मुखपङ्कजम् ।**
**कर्णाभ्यां न श्रुतः शब्दः पुत्रेण रुदितस्तथा ॥ ३१ ॥**

**कल्याणकाण्डदीपः**

इतःपरं राजा पुत्रार्थं नास्ति वै सुखमिति लालप्यते "**नेत्राभ्यां** इत्यादिना क्रूरं **वा नरकं गुरो**" इत्यन्तेन ।

अथ तावदस्मिन् जीवलोके केचन पुत्रसुखानुभवकारणीभूतसुकृतस्य अंशांशभागिनः (१) केचनैकांशभाजः (२), केचिद्भागद्वयभाजनानि (३), केचित् त्रिभागभाजः (४), केचिद्भोगकाल-सङ्कोचकपूर्णसुकृतिनः (५), केचिच्च महान्तो बहुकालं यथा मनः सत्प्रियपुत्रसुखानुभवेऽप्यक्षय्य-सुकृतशाल्निः (६), एवं षड्विधसुकृतिषु अयमेक इति नाहं गणनीयोऽस्मीति परिशेषयितुं तावदाद्येषु अयमेक इति नाहं गणनीय इति निषेधति— **नेत्राभ्यां** इत्यादिना **प्रतराम्यहम्** इत्यन्तेन ।

**न दृष्टमिति** । यद्यपि लक्षणैरनुमितं, तद्वैः श्रुतम्, ज्योतिषा दर्शनेन दृष्टम्, ज्योतिषकैः श्रुतम्, तथापि नेत्राभ्यां न दृष्टं, कर्णाभ्यां न श्रुतम्, इति कर्णपदाभ्यां व्यज्यते । मुखं पङ्कजमिव **मुख-पङ्कजम्** । अनेन जीवतो मुखमिति लभ्यते । "ऋणमस्मिन् सन्नयति" इति मन्त्रवर्णात् । अहं तस्य न ह्यंशांशसुकृती तत्कार्यजीवत्पुत्रमुखदर्शनाद्यभावादित्युक्तं भवति । समनीतयोर्भावाभावयोरविना-भावः । सुस्थ एव । अंशांशभागिनां पुत्रमुखपङ्कजदर्शन-तद्रुदितशब्दश्रवण-जातकर्म-नामा डोला-रोहण-दुग्धपान-जलपूजन-निष्क्रमण-भूम्युपवेशन-अन्नप्राशनादि-वर्धापनान्तम् अंशांशतः सुकृत-कार्यभूतं सुखकारणम् ।

मूलम्

**[1]भवतां पितृबन्धूनां दुर्गतिश्च भवेत् तदा ।**
**अपुत्रस्य गतिर्नास्ति इति वेदविदो विदुः ॥ ३२ ॥**

१. द्विजेन्द्र ।

कल्याणकाण्डदीपः

तवैकस्य पुत्रसुखं नानुभूतमिति एतावता किं महाहानिरभूदिवासीत् ? इत्यत आह— **भवतामित्यादिना** । एवमिति यदेति च शेषः । **पितृबन्धूनां** पितरश्च बन्धवश्च पितृबन्धवः, पितॄणां बन्धवः पितृबन्धवः ते च ते च तथा तथा च यदास्माकं कुण्ठितशक्तिता तदैवं भवतां अपुत्रीभूय, विद्यमानानां अस्माकं पितॄणां बन्धूनां च पितृबन्धूनां भवतां गुरूणां च जन्मविद्योपपदोभयं वंशापादितैः इहलौकिकपारलौकिकपाथेयाभावेनेह **अपुत्रस्य** च **दुर्गतिः** दारिद्यं सुखदारिद्यं भवेदिति योजना ।

एवं के जानन्तीत्यत आह— **अपुत्रस्येत्यादिना** । गतिः ऐहिकामुत्रकी न अपुत्रस्य लोके अस्तीति वेदार्थज्ञा जानन्तीत्यर्थः ।

मूलम्

**पुत्रेण रुक्मपात्रेण न भुक्तं मत्समागमात् ।**
**मदङ्ककृतदोषेण न मया लालितः सुतः ।**
**पापिष्ठोऽहं दुराचारी ह्यपुत्रोऽहं दरिद्रवान् ॥ ३३ ॥**

कल्याणकाण्डदीपः

**मत्समागमात्** अन्नप्राशनाङ्गविष्ण्वादिपूजनार्थं मत्सान्निध्यात् पुत्रेण कर्ता रुग्मपात्रेण करणेन अन्नप्राशनाख्यं सुखं न दृष्टमिति यावत् । प्राशितान्नः पुत्रोऽङ्के कृत्वा लालनीयः । तन्न मया कृत-मित्याह— **मदङ्केत्यादिना** ।

मूलम्

**भूषणानि ततः कृत्वा पुत्रार्थं यत्नतो मया ।**
**तोषं प्राप्तो न मे जातः पुत्रः पितृहिते रतः ॥ ३४ ॥**

**कल्याणकाण्डदीपः**

किं चाहं भ्रान्त इत्याह— **भूषणानीत्यादिना** । ततः प्रागेवेति शेषः यवतः अनर्घ्यरत्न-सम्पादनप्रयासेन कृत्वा कारयित्वा । तथा च ततः पुत्रोत्पत्तेः प्रागेव **पुत्रार्थं** पुत्रालङ्कारार्थम् । यवतः भूषणानि कृत्वा तानि दृष्ट्वा तोषं प्राप्तोऽभूवम् । एतादृशभ्रान्तस्य मे पितृहिते रतः **पुत्रः** प्रियपुत्रः । इदानीमपि न जातः ।

*प्रियपुत्रलक्षणं पद्मपुराणे पाताळकाण्डे—*

"अथातः सम्प्रवक्ष्यामि यस्माल्लभ्यं भवेत्प्रियम् ।
जातमात्रः प्रियं कुर्यात् बाल्ये क्रीडनगायनैः ।
वयः प्राप्य प्रियं कुर्यात् मातापित्रोरनन्तरम् ।
भक्त्या सन्तोषयन् नित्यं तावुभौ परितोषयेत् ।
स्नेहेन वचसा चैव प्रियसम्भाषणेन च ॥" इत्यादि । (भूमिखण्डे ३९.५८)

**गूढकर्तृकव्याख्यानम्**

एवं आकाशः सर्वसम्पत्समृद्धोऽपि तस्य सन्तानसम्पत् नासीत् । वंशाभिवृद्धेः कारणभूत-सत्सन्ततिविरहात् अतिदुःखितः एकदा आकाशः स्वस्य एकान्तभवने स्थितः । तदा तस्य दुःख-शान्त्यर्थं सुरगुरुः बृहस्पतिः यदृच्छया तत्र प्राप्तः । प्राप्तगुरुं दृष्ट्वा अर्घ्यपाद्याद्युपचारं कृत्वा कुशलप्रश्नादिकं कृत्वा तत्पुरतः स्वदुःखकारणं विशदयति— भो महानुभाव गुरुवर्य ! किं ब्रवीमि ? हस्ति-अश्वरथ-पदातिविशिष्टं समस्तसम्पत्सम्पन्नं इदं विशालराज्यं मयाऽनुभूतम् । किञ्च धर्मा-नुष्ठानपरः पुत्रप्राप्तिहेतुभूतनानादानानि दानीयेभ्यो दत्तवान् । नानादानानि नाम – डोलास्थसुवर्ण-बालकृष्णप्रतिमादानं, गोदानं, वृषभदानं, रिक्तविप्रवरकन्ययोः कल्याणं अकारयम् । सवत्ससुवर्ण-धेनुप्रतिमादानं, घृतपूर्णकुम्भदानं, विधिवत् संयावपायसदानं, कूष्माण्ड-दीप-भू-गृहदानं इत्यादि नानादानम् । विशेषतः गङ्गासेत्वादितीर्थयात्राः साकल्येन आसेतुहिमाचलं तीर्थयात्राः कृताः । एतावति कृतेऽपि पुत्रसौख्यं नानुभूतम् । देवऋण-ऋषिऋण-पितृऋणमध्ये पितृऋणमोचकपुत्रेण सौख्यं नान्वभवम् । तथा च अत्र मन्त्रवर्णः "ऋणमस्मिन् सन्नयति अमृतत्त्वं च गच्छति पिता पुत्रस्य जातस्य पश्येच्चेत् जीवतो मुखम्" इति श्रुतिः । "जायमानो वै ब्राह्मणः त्रिभिः ऋणवान् जायते, ब्रह्मचर्येण ऋषिभ्यः, यज्ञेन देवेभ्यः, प्रजया पितृभ्यः"; "य एवानृणो यः पुत्री यज्वा ब्रह्मचारीवासीत्" इति ।

पुत्रसुखकारणं पुत्रजन्म मया न दृष्टम् । जन्मान्तरकृतदुष्कृतवशात् पुत्रप्राप्तिर्नेति वदन्ति । अहं तु पुत्रजन्मप्राप्तिप्रतिबन्धकं बलवद् दुष्कर्म किं कृतवान् ? दैवमेव वेत्ति ।

पुत्रजन्माप्राप्तौ गुरुद्वेषादिवत्सवियोजनान्त-दशपापानि भवेयुः कारणानि इति जानन्ति । दशपापेषु कतमं कृतवान् ? विप्रेन्द्र ! कस्य वा राज्ञः सुतं मारितवान् ? येन मे पुत्रजन्माप्राप्तिः । विप्रेन्द्र ! जीवतः पुत्रस्य मुखपङ्कजं मम नेत्राभ्यां न दृष्टम् । पुत्रमुखदर्शनयोगोऽस्ति इति ज्योतिषिकैः न श्रावितम् । पुत्रमुखदर्शनमेव नास्ति । किमुत तस्य रोदनश्रवणम् । तदपि न । पुत्राभावे न केवलं मम, अपि तु, मत्पितॄणां, बन्धूनां, पितृबन्धूनां, भवतां गुरूणां च ऐहिकपारत्रिकदुर्गतिः स्यात् खलु ।

लोके यस्य पुत्रो न तस्य इह कीर्तिसुखे न, परत्र सद्गतिर्न, इति वेदार्थज्ञाः विदन्ति । किञ्च जातस्य अन्नप्राशनाङ्गविष्णुपूजनार्थं सुतं अङ्के कृत्वा तं रुक्मपात्रेण अन्नप्राशनाख्यसुखं मया नानुभूतम् । प्राशिते पुत्रे तं अङ्के कृत्वा तस्य लालनं न कृतम् । पुत्रो भविष्यति इति तज्जननात् पूर्वं पुत्रस्य अलङ्कारार्थं प्रयत्नतः अनर्घ्यरत्नानि सम्पाद्य तेभ्यः आभरणानि कारयित्वा न सन्तुष्टः । एवं अनर्घ्यरत्नाभरण-धारणोचितः पितृहितेरतः प्रियपुत्रो न मे जातः ।

प्रियपुत्रलक्षणं पद्मपुराणपातालकाण्डे—

अथातः सम्प्रवक्ष्यामि यस्माल्लभ्यं प्रियं भवेत् ।
जातमात्रः प्रियं कुर्यात् बाल्ये क्रीडनगायनैः ।
वयः प्राप्य प्रियं कुर्यात् मातापित्रोरनन्तरम् ।
भक्त्या सन्तोषयेन्नित्यं तावुभौ परितोषयेत् ।
स्नेहेन वचसा चैव प्रियसम्भाषणेन च ॥" इत्यादि । (भूमिखण्डे ३९.५८)

**मूलम्**

**सुतार्थं कवचं कृत्वा इत एहीति नोदितम् ।**
**पुत्रहीनं च मां दृष्ट्वा कर्षन्ति यमकिङ्कराः ॥ ३५ ॥**

**गच्छ राजन् त्वरेणैव यमस्य भवनं प्रति ।**
**पाशाकुण्ठितसर्वाङ्गः किमु वक्षाम्यपुत्रवान् ॥ ३६ ॥**

**कल्याणकाण्डदीपः**

जिह्वाकृतदोषमाह— **सुतार्थमिति** । कृत्वा कारयित्वा । ननु माऽस्तु एकं पुत्रसुखं न सर्वे सर्वसुखिनः इत्यतो महद्दुःखमाह— **पुत्रहीनमिति** । चः त्वर्थे । मृतमात्रं निष्करुणा यमकिङ्करा गले पाशान् क्षिप्त्वा कर्षन्ति च । पुत्रहीनं तु मां दृष्ट्वा । "गच्छ राजन् त्वरेणैव यमस्य भवनं प्रति" इत्युक्त्वा कर्षन्ती किमु वक्तव्यमित्यर्थः । पाशकुण्ठितसर्वाङ्गः कथं शीघ्रं गच्छामि ? अपुत्रवान् किमु समाधानं वक्ष्यामि ?

**मूलम्**

**लिखितं चित्रगुप्ताभ्यामपुत्रत्वं महामते ।**
**मद्गर्भजातपुत्रेण मार्जनं तु कदा भवेत्** ॥ ३७ ॥

**कल्याणकाण्डदीपः**

यमकिङ्कराणां विस्मृतिः किं न स्यादित्यत आह— **लिखितमिति** । कालतो मार्जनं किं न स्यादित्यत आह— **मार्जनं त्विति** । तु कदेति काकुः । चित्रलिखितमार्जनं तु कदा भवेत् ? कस्य कालस्य भवेत् ? न कदापीति भावः । किं तर्हि सर्वथा न भवति ? इत्यत आह— **मद्गर्भेति** । भवेत् चेत् मार्जनं मद्गर्भजातपुत्रेण भवेत् । तादृशं सुकृतं कुत्रास्ति ? इति भावः । "रेतःसिग्योगोऽथ", "ततो रेतःसिचमेवानुप्रविशति । अथ मातरम् । अथ प्रसूयते" इति श्रुतिसूत्राभ्यां पुत्रस्य पुङ्गर्भजातत्व-सम्भवात् ।

**गूढकर्तृकव्याख्यानम्**

पुत्राय अनर्घ्यकवचं कारयित्वा, तात पुत्र ! इत एहि । पश्य, तव कृते इदं कवचं कारितवान् इति पुत्राह्वानसुखं मा भूत् । इदमेकं सुखं न । इतरबहुसुखेषु हरिदत्तेषु तैः यत्किञ्चित्समाहितेन भाव्यं इति चेत् तदपि न शक्यम् । कुतः ? अतिक्रूरयमकिङ्कराः आगत्य अपुत्रं मां दृष्ट्वा निष्करुणं मम गलं पाशैः बद्ध्वा, 'अरे अरे नृप ! अपुत्र ! गच्छ गच्छ वेगेन यमालयं' इति क्रोशन्तः भर्त्सयन्तः कर्षन्ति । तदा सर्वाङ्गबद्धः कथं शीघ्रं गच्छेयम् ? अपुत्रोऽहं तान् कथं समाधापयेयम् । महाप्राज्ञगुरवः ! अनन्ता-नन्तजीवराशिमध्ये एकतमं मां कुतस्ते न विस्मरेयुः ? तथापि न शक्यम् । "आयुः कर्म च वित्तं च विद्यानिधनमेव च । पञ्चैतान्यपि सृज्यन्ते गर्भस्थस्यैव देहिनः" इत्युक्तेः । महत् दुरितं कृतवान्, अतो अपुत्रत्वं मे, अपुत्रत्वप्रयुक्तनरकभागिवर्गीय इति मम नाम अविस्मृत्य लेख्ये लिखितवन्तौ चित्रगुप्तौ । एवं सति चित्रलिखितस्य मार्जनं मद्गर्भजातेन कदा स्यात् ? नैव । तादृशपुण्यमेव न ।

"रेतःसिग्योगोथ ततो रेतः सिचमेवानुप्रविशति अथ मातरं अथ प्रसूयते" इति श्रुतिसूत्रोक्तेः पुत्रस्य पुङ्गर्भजातत्वसम्भवात् ।

**मूलम्**

**दुराचारेति दुर्बद्धे अपुत्रेति यमेन च ।**
**भाषितं वचनं श्रुत्वा कः पुमान् स्थातुमुत्सहेत् ॥ ३८ ॥**

**कल्याणकाण्डदीपः**

किङ्कराः किं वा कुर्वन्तु ? गुणग्राही यमः त्वां पुरस्थितं धार्मिकं दृष्ट्वा सान्त्वयति सम्भावयति चेत्यत आह— **दुराचारेतीति** । दुर्बुद्धेति अपुत्रेति यमेन भाषितं परिभाषितं वचनं श्रुत्वा कः पुमान् तत्पुरतः स्थातुं **उत्सहेत्** समर्थो भवेत् ?

**मूलम्**

**नष्टदीपोऽतिनिष्ठूरः कष्टोद्भूतकलेवरः ।**
**वृथाजातोऽतिपापात्मा आत्मनो नरकावहः ॥ ३९ ॥**

**कल्याणकाण्डदीपः**

**नष्टदीपः** नष्टसन्तानः । **अतिनिष्ठुरः** अतिपरुषितः । **कष्टोद्भूतकलेवरः** कष्टाय दुःखानुभवाय उद्भूतं उत्पन्नं कलेवरं यस्य स तथा । **वृथाजातः** सुधर्मवंशे उदासीनः पुत्र इति यावत् । अति-पापात्मा पापिष्टमनाः । आत्मनः स्वस्य नरकावहः नरकप्रापकः दुष्कृतानुभवाय नरकं प्रत्येवैमि । यमस्य पुरतः स्थातुं का शक्तिः ? इति भावः । उदासीनपुत्रलक्षणं तु तत्रैव पाद्मे—

"उदासीनं प्रवक्ष्यामि तवाग्रे प्रिय साम्प्रतम् ।
उदासीनेन भावेन सदैव परिवर्तते ।
न ददाति न गृह्णाति न च कुप्यति तुष्यति ।
नो प्रयाति च सन्त्यज्य ह्युदासीनो द्विजोत्तम ॥" इति । (भूमिखण्डे १२-२२)

**मूलम्**

**तन्तुहीनं कुलं चापि अनीरं [1]कूपमङ्गनाम् ।**
**भर्तृहीनां यथा लोके निन्दन्ति [2]जनमण्डलाः ॥ ४० ॥**

१. कूपगह्वरम् । २. जनसंसदि ।

**कल्याणकाण्डदीपः**

मास्तु पारलौकिकं सुखं मास्तु चैहलौकिकं पुत्रसुखं त्वत्तावतस्त्वमेधीत्यत आह— **तन्तुहीनमिति** । यथा लोके **जनमण्डलाः** समूहितजनाः । भर्तृहीनां अङ्गनां प्रशस्ताङ्गयोगिनीं श्रुत्वा अविस्मृत्य कार्यान्तरं शतमपि परित्यज्य तामन्विष्य त्यक्तचिन्तामपि गुडजिह्विकान्यायेन चिन्तां शोकं चोद्बुध्य त्वं पुरा गौरीव दृश्यसे । दशकालं तव भर्ता जीवेच्चेत् सुखं यायात् । अदृष्टहीनो राण्डेय इत्यादि पर्यवसाय निन्दति । तथा यथा बहुद्रव्यादिव्यययासेन खनितं कूपम् अनीरं श्रुत्वा खनितारं प्रत्यागत्य अन्धगुणानुक्त्वा अस्यान्धो नीरमात्रं यायाच्चेत्, बहुजनः सुखं यायात् इत्यादि निन्दन्ति । इयं च निन्दा त्वमदृष्टहीनो रण्डापुत्र इत्यादि पर्यवसायिनी । तथा तन्तुहीनं कुलं चापि त्यक्तचिन्तामपि मामन्विष्य कुलगुणानुवादपूर्वकं चिन्तामुद्बुध्योद्बुध्यैव सर्वसम्पत्समृद्धस्यास्य कुलस्य तन्तुमात्रं तन्तुश्चेत् किमु वक्तव्यम् ? इत्यादिना निन्दन्ति । इयं च निन्दा त्वं पुत्रहीनः पापीत्यादि पर्यवसायिनी । तथा च मत्तावतोऽहं भविष्यामीति भावनायामपि जनाः न त्यजन्ति । कथं तूष्णीकामास्ये इति भावः । अस्ति चैवं लोकरीतिः । कथमन्यथा पापिनामन्यत्र पापसङ्क्रान्तिः स्यात् ? इति भावः ।

**गूढकर्तृकव्याख्यानम्**

यमकिङ्कराः किं वा कुर्वन्तु ? गुणग्राही यमः मां दृष्ट्वा, 'रे रे दुराचार दुष्टात्मन् अपुत्र !' इति यदा भाषते तदा को वा वद मे स्थातुं उत्सहते ? नष्टसन्तानः अभवम् । अतिकठिनवचनशीलः । नानाकष्टानुभोगायैव मम कलेवरं जातम् । ईदृशः सुधर्मराजवंशे वृथा जातः । अति पापात्मा । किमितः करोमि ? यमस्य पुरतः स्थित्वा किमपि कर्तुं अक्षमः मौनेन मद्दुष्कृतफलं अनुभवितुं नरकमेव गच्छामि । इदं सिद्धम् । अद्य मम कुलं कीदृशम् ? जलरहितकूपगह्वरं, भर्तृहीनां नारीं, लोका यथा निन्दन्ति तथा पुत्रहीनं मम कुलं निन्दन्ति । सुधर्मनृपकुले उदासीनः पुत्रो जात इति निन्दन्ति ।

उदासीनपुत्रलक्षणं पद्मपुराणे—

> उदासीनं प्रवक्ष्यामि तवाग्रे प्रिय साम्प्रतम् ।
> उदासीनेन भावेन सदैव परिवर्तते ।
> न ददाति न गृह्णाति न कुप्यति न तुष्यति ।
> नोपप्रयाति सन्त्यज्य ह्युदासीनो द्विजोत्तम ॥ इति । (भूमिखण्डे १२.२२-२३)

पारलौकिकं ऐहिकं वा सुखं प्राप्य 'त्वत्तावतः त्वमेधि' इत्युक्ते तथा न भवेत् । यथा लोके समूहितसमूहितजनाः भर्तृहीनां अङ्गनां प्रशस्ताङ्गयोगिनीं श्रुत्वा कार्यान्तरं शतमपि परित्यज्य

अविस्मृत्य तां अन्विष्य तां अङ्गनां त्यक्तचिन्तामपि गुडजिह्विकान्यायेन तस्याः शोकं चिन्तां च उद्बुध्य 'अयि त्वं पुरा गौरीव दृष्टा । इतो दशकालं तव भर्ता अजीविष्यत् चेत् सुखं सः अभविष्यत् । किं कर्तव्यम् । निर्भाग्यः । राण्डेयः । त्वादृशपत्नीसहितं जीवितुं अदृष्टं नाभूत्' इति यथा निन्दन्ति । बहुद्रव्यव्ययेन अत्यन्तश्रमेण खानितं कूपं अनीरं श्रुत्वा तदा खानयितारं आगत्य अन्धुगुणान् उक्त्वा 'आ अन्धुः ! कथमस्ति । बहुद्रव्यव्ययबहुश्रमपूर्वकं निर्मितः । सर्वं समम् । अपि तु, अस्य अन्धोः नीरमात्रं यायात् चेत् बहुजनः सुखं यायात्' इत्यादि निन्दन्ति ।

**मूलम्**

**किं करोमीह भूदेव क्व गच्छामीति का गतिः ।**
**कं देवं शरणं गत्वा भवाब्धिं प्रतराम्यहम् ॥ ४१ ॥**

**कल्याणकाण्डदीपः**

जनाः तावत् निन्दन्तु नन्दन्तु वा । तावता तव किं भविष्यति ? इत्यत आह— **किं करोमि** इति । हे भूदेव इह भूलोके क्व गच्छामि ? किं करोमि ? किं विषं पास्यामि । किं मृद्बन्धनं वाक्षिपामि । पुरतो मम का गतिः ? दुःखशान्त्यै कः पन्थाः ? इत्यादि धीर्जनिष्यते । इहामुत्र फलभोगविरक्तः सन् भवाब्धिं प्रतरेत्यत आह— **कं देवमिति** । कं देवं शिवं वा ब्रह्माणं वा विष्णुं वा शरणं गत्वा भवाब्धिं संसारदुःखसागरं प्रतरामि । प्रतरणोपायभूततादृशभगवदुपासनायाः कालोऽतीत इति भावः ।

**मूलम्**

**रुदन्तं पुत्रमालोक्य वाचा प्रेम्णा शमय्य तम् ।**
**नोदितं मा रुदस्वेति विनिन्द्यात्मसतीं मृषा ।**
**पयः सम्पाययेत्याशु नो चेत् त्वां ताडयाम्यहम् ॥ ४२ ॥**

**कल्याणकाण्डदीपः**

उपक्रान्तमनुसरन् द्वितीयेऽपि तथा निषेधं कुर्वन् एकांशतत्सुकृतफलभूतं सुखकारणं निषेधयति— **"रुदन्तं पुत्रमालोक्य प्रेम्णा वाचा शमय्य तम्"** इत्यादिना **"महीपतिः"** इत्यन्तेन ।

रुदन्तं पुत्रमालोक्य प्रेम्णा स्नेहेनोपलक्षितया वाचा तं रुदन्तं पुत्रमालोक्य शमय्य 'ओहलुलुवायी' इति बालरोदनशामकयन्त्रशास्त्रोक्तबीजमन्त्रेण शान्तरोदनं कृत्वा सान्त्वयित्वेति यावत् । मा रुदस्वेति

नोदितम् । तथा रुदन्तं पुत्रमालोक्य आत्मसतीं वृथा विनिन्द्य "मूढे मण्डितमानिनि काले काले कर्तव्याचतुरे मन्दगमने" इत्यादि मृषा परिभाष्य "आशु पुत्रं पयः पायय आशय नो चेत् त्वां ताडयामि" इति आहन्मीति आत्मसतीं प्रति नोदितम् । रुदन्तं पुत्रमिति उत्तरत्राप्यनुषज्यते ।

### गूढकर्तृकव्याख्यानम्

एतादृश-अभिप्रायेण अहं पुत्रहीनः पापिष्ठ इत्युक्तं भवति । तथा च जनाः तावत् मां भूषयन्तु वा दूषयन्तु । तत्सर्वमपि मे समम् । मत् तावतः अहं भविष्यामि इति भावितवन्तमपि मां जना न त्यजन्ति । एवं सति कथमहं तूष्णीं स्याम् । न शक्यम् । लोकरीतिरेव ईदृशी । अन्यथा पापिनां अन्यत्र पापसङ्क्रान्तिः कथं स्यात् ? 'पापकर्तृपापं वक्तृमुखे सङ्क्रान्तम्' इति लोकोक्तेः । जनास्तावत् नन्दन्तु वा निन्दन्तु, तावता तव किम् ? इति पृच्छायां किं करोमि ? केन वच्मि येन समाधानं स्यात् । अत्र भुवि कुत्र वा गच्छामि ? किं अरण्यं गच्छामि ? किं करोमि ? किं विषं पास्यामि ? किमु उद्बन्धनं क्षिपामि ? विप्रवर ! इतःपरं मे का गतिः । मद्दुःखशामकमार्गः को वा स्यात् ? इदं गच्छतु । ऐहिकसुखं कीर्तिः माऽस्तु । आमुष्मिकसुखं माऽस्तु । विरक्तः सन् एतत् अक्षय्यसंसारसागरं कथं प्रतरेयम् । एतत्तरितुं कं वा देवं शरणं व्रजेयम् ? शरण्यं शरणं गन्तुमपि न शक्यम् । तादृशभगवदुपासनाकालोऽपि मे अतीतः" इति अनुतपन् उपक्रान्तं अनुस्मरति ।

भो गुरुवर्य ! शिशौ रुदति द्रुतं तमुपागत्य तमालोक्य कराभ्यां उद्धृत्य 'तात शिशो ! मा रुदिहि मा रुदिहि' इति प्रीत्या तं वाचयित्वा गृहीत्वा डोलायां शाययित्वा डोलां आन्दोलयन् 'ओ हलुलुवायि' इति बालरोदनशामकं यन्त्रशास्त्रोक्तबीजमन्त्रं उच्चरन् तथा 'शिशुर्वेत्ति पशुर्वेत्ति वेत्ति गानरसं फणिः' इत्युक्तेः शिशुमनस्तोषकगानं गायन् एवमहं शिशुं समाहितं दृष्ट्वा नानन्दितः । पुनः शिशुं बलवत् रुदन्तं कमपि समाधापितवन्तं अदृष्ट्वा, अन्ते सतीमपि आगत्य शिशुं असमाधाप्य औदासीन्येन स्थितां दृष्ट्वा व्यग्रः सन् 'अयि मूढे ! पण्डितमन्ये ! तव बुद्धिरस्ति नास्ति वा ? शिशुः तदाप्रभृति रुदन् अस्ति खलु । तव किं कर्णौ पतितौ ? शिशुं रुदन्तं नाकर्णयसि ? किञ्चित् स्थित्वा । अयि मूढे ! मन्दगमने ! कियन्तं कालं करोषि ? लघु लघु आगत्य शिशुं करे कृत्वा समाधापय । तं स्तन्यं पायय । तस्य बहु क्षुधा जातेव । कुत इतोऽपि विलम्बः ? विलम्बं करोषि चेत् त्वां ताडयिष्यामि' इति पत्नीं नोदितवान् ।

### मूलम्

**घण्टां च प्रतिमां देहि पुत्रस्य फलकन्दुके ।**

**गजमारोप्य तनयं कुरु ग्रामप्रदक्षिणम् ।**
**सभां गच्छाथ राजेन्द्र तथा तालस्वनेन च ॥ ४३ ॥**

**कल्याणकाण्डदीपः**

**घण्टां चेति** । रुदन्तं पुत्रमालोक्य घण्टां प्रतिमां अर्चां फलं च कन्दुकं च ते कदलीफलकन्दुके देहीति क्रीडयितारं प्रति नोदितम् । तथा रुदन्तं पुत्रमालोक्य गजमारोप्येत्यादि मन्त्रिणं प्रति नोक्तम् । रुदन्तं तमालोक्य राजेन्द्र महाराज तालस्वनेन वाद्येन सभां गच्छेति पुत्रं प्रति नोदितम् ।

**मूलम्**

**अजातपुत्रशोकेन मूर्च्छामाप महीपतिः ॥ ४४ ॥**

**कल्याणकाण्डदीपः**

अत एकांशसुकृती नेत्युपपादितमियता प्रबन्धेन सान्त्वनादिसभाप्रवेशनान्तं द्विवर्षपर्यन्तमेकांशसुकृतफलम् । ततः किमभूदित्यत आह— **अजातेति** । अजातः पुत्रो यस्य स अजातपुत्रः । अहं अजातपुत्र इति शोकः अजातपुत्रशोकः, तेन । यद्वा, अजातः पुत्रः इति शोकः अजातपुत्रशोकः इति त्रिपदकर्मधारयो वा ।

ननु इष्टवियोगादिजन्यदुःखातिभूमिः शोकः । वियोगः संयोगपूर्वकः तदभावे कथं वियोगः ? तदभावे च कथं तद्घटितः शोक इति चेन्न । इष्टवियोगादीत्यादिना अनिष्टसंयोगस्यापि गृहीतत्वाच्च । अजातपुत्रत्वस्य अजातपुत्रजननस्य वा अनिष्टत्वेन शोकसम्भवात् । तदुक्तम् "प्रियाप्रियवियोगसुयोगजन्मशोकाग्निना" इति । मूर्च्छा शोकाग्निप्रशिथिलबलानां बाह्येन्द्रियाणां निमीलनान्मनस आभ्यन्तरीयं मध्यमवृत्तिरूपां मूर्च्छामाप इत्यर्थः ।

**मूलम्**

**कवचं कारयित्वा तु शिरोभूषणमद्भुतम् ।**
**केशभूषणमत्यर्थं रत्नवज्रसमाकुलम् ॥ ४५ ॥**

**भूषयित्वा शिशुं चाहमालोक्य प्रीतिमाप्तवान् ।**
**अङ्कमारोप्य तनय न मयाऽलङ्कृतः सुतः ॥ ४६ ॥**

**कल्याणकाण्डदीपः**

तृतीयेष्वपि तथा निषेधयति— **कवचम्** इत्यादिना **अलङ्कृतः सुत** इत्यन्तेन । अद्भुतं कवचं शिरोभूषणं किरीटं तथा रत्नवज्रखचितं केशभूषणं केशपाशभूषणं कारयित्वा तनयं कृतचूडं अङ्क-मारोप्य । यद्वा, तनोति मुदमिति तनयः तं पुत्रानन्दकरं अङ्कमारोप्य सुतः न मया अलङ्कृतः ।

**गूढकर्तृकव्याख्यानम्**

पुनः शिशुं रुदन्तं दृष्ट्वा, 'का अस्ति तत्र ? शिशुः रुदन् । तस्मै घण्टां ईप्सितप्रतिमां कदलीफलं क्रीडितुं कन्दुकं वा दत्त्वा समाधापयत' इति शिशुं लालयन्तीं धात्रीं नोक्तवान् । रुदन्तं आलोक्य मन्त्रिणं आहूय 'भोः ! शिशुः रोदिति । गजमारोप्य ग्रामं परितः सञ्चारय । येन केन शिशुः समादधति तथा अवेक्षस्व' इति मन्त्रिणं नोक्तवान् । शिशुं आलोक्य 'शिशो मा रुदिहि । इतः शृणु । शिशो ! त्वं कः ? त्वं महाराजः । त्वं प्रयाहि पश्य । तालान् ताडयन्तः । वाद्यानि तालसमं वादयन्तः । सभां गच्छ । तत्र त्वां दृष्ट्वा सर्वेऽपि तदागतं शिरो अवनम्य नमन्ति । इदं द्रष्टुं गच्छ' इति शिशुं नोदितवान् ।

द्विवर्षान्तं सुताय अद्भुतं उरस्त्राणं कवचं शिरोभूषणं किरीटं केशपाशभूषणं कारयित्वा तनयं कृतचूडं अङ्कं आरोप्य 'तनोति मुदं' इति व्युत्पत्तेः आनन्दकरं सुतं अङ्कमारोप्य तं नालङ्कृतवान् ।

**मूलम्**

**नोपनीतोऽतिप्रीत्यैव सुतो मे पञ्चवार्षिकः ।**
**अष्टमे वाऽथ दशमे न कृतो दारसङ्ग्रहः ।**
**बाल्ये तु जातकर्माणि तथा पुत्राभिधं द्विज ॥ ४७ ॥**

**कल्याणकाण्डदीपः**

तुरीयेष्वपि तथा निषेधति— **नोपनीतोऽतिप्रीत्यैवेति** । इदमेकं वाक्यं स्पष्टम् । पञ्चमेऽपि एतदादिनैव निषेधति— **नोपनीत** इत्यादिना **द्विज** इत्यन्तेन । **बाल्ये तु** शैशव एव । **जातकर्माणि** बहुवचनमाद्यर्थे । जातस्य कर्माणीति वा । जातकर्मादिकर्माणि ज्योतिर्वित्पूजाशुभादिज्ञानग्रहमन्त्रजप-विनियोगादिकर्माणि । यद्वा, नान्दी-सुवर्णादिद्वादशद्रव्यदान-ज्योतिर्वित्पूजा-स्तनपानाद्यवयवबहु-त्वात् बहुवचनः । तथा पुत्राभिधं पुत्रस्य अभिधा नाम यस्मिन् कर्मणि तत् तथा नाम च कृत्वा यथा क्षत्रजात्युचितकालं द्वादशवार्षिक उपनेयोऽपि कालसङ्कोचेन पञ्चवार्षिकोऽपि सुतः अतिप्रीत्या नोपनीतः । तथा अष्टमे वाऽथ दशमे वा दारसङ्ग्रहो न कृतः ।

**मूलम्**

**तेनार्जितं धनं ब्रह्मन्नोपजीवितमद्य मे ।**
**अभिषिच्य सुतं राज्ये भार्यया कृतभोजनम् ।**
**न गतं च वनं ब्रह्मन् पारम्पर्यागतं मम ॥ ४८ ॥**

**कल्याणकाण्डदीपः**

षष्ठेष्वपि तथा निषेधति— **तेनार्जितम्** इत्यादिना **गतं मम** इत्यन्तेन । यथा जात्युचितकालं असङ्कोचेन कृतजातादिकम् । भार्यया कृतभोजनं सुतं राज्ये अभिषिच्य तेनार्जितं **धनं** धान्यं **अद्य** वार्द्धक्यावस्थायां नोपजीवितं जीवनाय नोपयुक्तम् । ततो विषयविरक्तेन मया **पारम्पर्यागतं** वंशक्रमादागतं वनं न गतम् ।

**गूढकर्तृकव्याख्यानम्**

जाते जातमात्रे तन्मुखदर्शनं न कृतम् । जातस्य जातकर्म न कृतवान् । शिशुजननात् द्वादशे षोडशाहे वा नाम न कृतवान् । पञ्चवार्षिकं पुत्रं प्रीत्या नोपनीतवान् । अष्टमे दशमे वा दारसङ्ग्रहं न कृतवान् । जातकर्मादिसंस्कारसंस्कृतं भार्ययाकृतभोजनं सुतं राज्ये अभिषिच्य, राज्यभारं पुत्रे समर्प्य, तदार्जितधनधान्येन मया नोपजीवितम् । कालक्रमेण विषयविरक्तेन मया वनं प्रति न प्रस्थितम् ।

**मूलम्**

**अहो दरिद्रस्य महानुभाव**
**सत्पुत्रहीनस्य गतिर्भवेत् का ।**
**वृथा शरीरं घटकुड्यसन्निभं**
**जातं सुधर्मस्य कुले सुपुण्ये ॥ ४९ ॥**

**कल्याणकाण्डदीपः**

**अहो दरिद्रस्येत्यादि** । प्राण्यजनकघटकुड्यसन्निभं मम शरीरम् । **सुपुण्ये सुधर्मस्य कुले** वृथा जातम् ।

**मूलम्**

**मनुष्याणामनाथानां दुर्लभं पुत्रजन्म च ।**
**बहुपुण्यवशात् पुत्रः जायते मानवोदरे ॥ ५० ॥**

**कल्याणकाण्डदीपः**

**मनुष्याणामित्यादि । बहुपुण्यवशादिति ।** तदुक्तं पाद्मे—

"पुण्येन प्राप्यते पुत्रः पुण्येन प्राप्यते कुलम् ।
सुगर्भः प्राप्यते पुण्यैः तस्मात्पुण्यं समाचर ॥" इति । (भूमिखण्डे १२-४१)

**मूलम्**

**अस्माकमपि पापानां कन्यका नैव [1]चाभवत् ।**
**सत्पुत्री नैव सञ्जाता धर्मसन्तानसंज्ञिका ॥ ५१ ॥**

१. सम्भवेत् ।

**कल्याणकाण्डदीपः**

**अस्माकमित्यादि । पापानां** राजपुत्रमारकाणाम् । सम्भवेदिति लिङ् सम्प्रश्ने । कुतो न जायेत । **धर्मसन्तानेति ।** सन्तानो द्विविधः धनसन्तानो धर्मसन्तानश्चेति । अत्राद्यो द्विविधः । मानुषधनसन्तानः देवधनसन्तानश्चेति । मानुषधनसन्तानः प्रियपुत्रः । देवधनसन्तानः सत्पुत्र-सच्छिष्य-सत्प्रबन्धादयः । धर्मसन्तानः सद्दुहितृका सारवृक्षादयः ।

**गूढकर्तृकव्याख्यानम्**

महानुभाव ! पुत्रहीनस्य मे पुरतः का गतिः ? सुपुण्य-सुधर्मकुले मम शरीरं घटकुड्यादि जडवस्तुवत् वृथा जातम् । पाद्मे— 'पुण्येन प्राप्यते पुत्रः पुण्येन प्राप्यते कुलम् । सुगर्भः प्राप्यते पुण्यैः तस्मात् पुण्यं समाचर ॥' इति । जन्मान्तरकृतपुण्यसत्त्वे पुंसः पुत्रो जायते । वयं पापिष्ठाः । पुत्रप्राप्तिः ललाटे न लिखितम् । जन्मान्तरे राजपुत्रा मारिताः । पुत्राः न चेत् सत्पुत्री कुतो नाभूत् ? पुत्रात् शतगुणं पुत्री । उभयकुलोद्धारिणी । लोके सन्तानो द्विविधः– धनसन्तानः धर्मसन्तानश्चेति । धनसन्तानः पुनर्द्विविधः – मानुषदेवभेदात् । मानुषधर्मसन्तानः प्रियपुत्रः । देवधर्मसन्तानाः सत्पुत्रसच्छिष्य-सत्प्रबन्धादयः । धर्मसन्तानः सत्पुत्रीकासारवृक्षादयः । यद्यपि राजपुत्रमारणदुष्कर्मप्रसक्तिरस्ति । दुहितृ-मारणस्य प्रश्नमूलं न ।

**मूलम्**

**वरदाच्युत [1]गोविन्द जगन्नाथ जगद्गुरो ।**
**सुब्रह्मण्य सुराधीश रामकृष्ण नमोऽस्तु ते ॥ ५२ ॥**

१. रङ्गेश ।

**कल्याणकाण्डदीपः**

यद्यपि, राज्ञां राजसुतमारणस्य दुष्कर्मणः प्रसक्तिरस्ति न तु दुहितृमारणस्येत्येतत्सम्प्रश्नमूलं शोकं शमयन् हरिं स्मरति— **वरद इत्यादिना ।**

**मूलम्**

**वेङ्कटेश रमाकान्त वराहवदनाच्युत ।**
**नारायण नगाधीश कृपां कुरु कृपानिधे ॥ ५३ ॥**

**कल्याणकाण्डदीपः**

वेङ्कटेशश्चासावीशश्च तथा । **नगाधीश** वेङ्कटाचलनाथ । वृक्षराज अश्वत्थनारायण ।

**मूलम्**

**सुपुत्रवन्तः खलु भाग्यवन्तो**
**ह्यपुत्रवन्तो [1]भुवि दुःखवन्तः ।**
**संसारसागरसमुत्तरणेष्वशक्ताः**
**का नो गतिः कर्मफलानुभोगिनाम् ॥ ५४ ॥**

१. खलु भाग्यहीनाः ।

**कल्याणकाण्डदीपः**

**सत्पुत्रवन्त इति ।** एतल्लक्षणं पाद्मे—

"पुत्रस्य लक्षणं पुण्यं तवाग्रे प्रवदाम्यहम् ।
पुण्यप्रसक्तो यस्यात्मा सत्यधर्मरतः सदा ॥
शुद्धिमान् ज्ञानसम्पन्नः तपस्वी वाग्विदां वरः ।
सर्वकर्मसु सम्प्रीतो वेदाध्ययनतत्परः ॥
सर्वशास्त्रप्रवेदी च देवब्राह्मणपूजकः ।
याजकः सर्वयज्ञानां दानी त्यागी प्रियंवदः ॥
विष्णुध्यानपरो नित्य शान्तो शान्तः सुहृत् सदा ।
पितृमातृपरो नि[illegible] सर्वस्वजनवत्सलः ॥

कुलस्य तारको विद्वान् स्वकुलप्रतिपोषकः ।
एवंगुणैस्तु संयुक्तः सुपुत्रः सुखदायकः ॥
अन्ये सम्बन्धसंयुक्ताः शोकसन्तापकारकाः ।
उदासीनेन किं कार्यं फलहीनात्मजेन च ॥
आयान्ति यन्ति ते सर्वे दुःखं दत्वा सुदारुणम् ।
पुत्ररूपेण ते सर्वे संसारे द्विजसत्तम ॥'' इति । (भूमिखण्डे १७.२०-३१)

भाग्यवन्तः खलु तत्साध्येहामुत्र सुखवन्तः प्रसिद्धाः । अपुत्रवन्तः इति । प्रशस्ताः पुत्राः येषां सन्ति ते पुत्रवन्तः । न पुत्रवन्तः अपुत्रवन्तः । प्रियसत्पुत्रहीनाः । पुत्राः पूर्वोक्ताः । तद्विरुद्धाः अपुत्राः दुष्पुत्राः ते येषां सन्ति ते तथा । दुष्पुत्रास्तु चत्वार उक्ताः पाद्मे—

''भर्तुः पञ्चविधाः पुत्राः जायन्ते तान् वदाम्यहम् ।
न्यासापहारिकं चैकं ऋणसम्बन्धिनं परम् ।
रिपुं प्रियमुदासीनं इति कान्ता भवन्ति ते ॥'' इति । (पातालखण्डे ७.६८-६९)

एतेषां लक्षणानि तत्रैव द्रष्टव्यानि । असत्पुत्राः दुष्पुत्राश्च भुवि दुःखवन्त इति हि अनुभवसिद्धम् । किमु अत्रेति भावः । ऐहिकसुखं नश्वरमिति प्रियस्याप्यत्र गणनम् । एवदप्युक्तम्—

''पुत्रेण लोकान् जयति पुत्रास्तारयते कुलम् ।
सत्पुत्रेण महाभाग पिता माता प्रजीवति ।
एक पुत्रो वरः कान्त बहुभिः निर्गुणैस्तु किम् ।
एकस्तारयते वंशमन्ये सन्तापकारकाः ।
पूर्वमेव मया प्रोक्ता ऋणसम्बन्धभागिनः ॥'' इत्यादि । (पातालखण्डे १२.२९-३०)

**मूलम्**

**एवमुक्त्वा महीदेवं विरराम महीपतिः ।**
**पापिष्ठोऽहं दुराचार असुखोऽहं दरिद्रवान् ॥ ५९ ॥**

**कल्याणकाण्डदीपः**

**दरिद्रवान्** निर्भाग्यः । भावप्रधानो दरिद्र इति ।

**मूलम्**

**[1]कान् लोकान् वा गमिष्यामि क्रूरं वा नरकं गुरो ।**
**किमुपायं महाप्राज्ञ पुत्रलाभे द्विजोत्तम ॥ ५६ ॥**

१. हा लोकान् कान् ।

**कल्याणकाण्डदीपः**

**किमुपायमिति** । समस्तं कथम्भूतम् उपायं कुर्म इति शेषः । अयं भावः । हे द्विजोत्तम, अंशांशसुकृतिनः आरभ्य त्रिभागसुकृतिनां वाचो विमुञ्च । शिवेतरानुभवितृत्वात् । बलवत् सुकृतीनां वार्तायास्तु कालोऽतीतः । परन्तु, सम्भवत्सम्भोगकालसङ्कोचकपूर्णसुकृतं पुरा चीर्णमस्ति चेत् तस्य कार्योन्मुखत्वे निरपायः क उपाय इति ।

**मूलम्**

**इति राजवचः श्रुत्वा गुरुर्वाक्यमुवाच तम् ॥ ५७ ॥**

**गूढकर्तृकव्याख्यानम्**

इत्येवमादिरीत्या दुःखं कुर्वन् पापपरिहाराय भगवन्तं स्मरति— सर्वपापपरिहारक स्वामिन् वेङ्कटेश ! भक्ताभयदायक हे काञ्चीवरदराज ! नाशरहित अच्युत ! "रङ्ग रङ्गेति यो ब्रूयात् रङ्गिन् रङ्गिन्नवेत्यपि । स पूज्यः सर्वलोकानां सर्वकल्मषनाशनः" इत्युक्तेः । हे रङ्गनाथ ! जगन्नाथक्षेत्राधीश-जगन्नाथ ! लोकानां आदिगुरो ! हे सुब्रह्मण्यक्षेत्राधीश सुब्रह्मण्य ! देवदेवोत्तम ! लक्ष्मीपते श्रीनिवास ! धराकान्त वराहदेव ! "रमन्ते योगिनोऽस्मिन्" इति रामः । कर्षणात् कृष्णः । हे राम-कृष्ण ! अराः दुःखानि अज्ञानानि । ते न भवन्तीति नाराः ज्ञानानन्दादयः । तेषां अयनः । नारायणः । निर्दुष्ट-अनन्तज्ञानान्दादिकल्याणगुणवन्नारायण ! कृपानिधे ! मयि कृपां कुरु । वृक्षसम अश्वत्थनारायण ! मां पाहि इति देवान् प्रार्थयामास ।

लोके सुपुत्रवन्तः खलु भाग्यवन्तः । अपुत्रवन्तः दुष्पुत्रवन्तश्च भाग्यहीनाः । पाद्मे—

पुत्रेण लोकान् जयति पुत्रः तारयते कुलम् ।
सत्पुत्रेण महाभाग पिता माता प्रजीवति ।
एकपुत्रो वरः कान्त बहुभिः निर्गुणैस्तु किम् ।
एकस्तारयते वंशं [illegible] सन्तापकारकाः ॥ इति । (पातालखण्डे १२.२९-३०)

गुरुवर्य ! अवश्यमनुभोक्तव्यं कृतं कर्म शुभाशुभम् इति । पापिष्ठस्य मे पुरतः कः क्रूरनरकः सिद्धोऽस्ति । प्राज्ञशिरोमणे ! एतादृशदुःखनिवर्तकोपायः कोऽस्ति । अस्ति चेत् उच्यताम्, कृपया'' इति प्रार्थ्य विरतोऽभूत् । एतादृशराजोक्तिं श्रुत्वा गुरुरेवं उपदिशति—

**मूलम्**

**धरणीतलात् पद्मावत्युत्पत्तिवर्णनम्**

**गुरुरुवाच—**

**यज्ञं कुरु नृपश्रेष्ठ पुत्रस्तेन भविष्यति ॥ ५८ ॥**

**कल्याणकाण्डदीपः**

**गुरुरिति** । कुलाचार्यः । **यज्ञं** पुत्रेष्टिम् ।

**मूलम्**

**गुरोर्वाक्यं समाकर्ण्य यज्ञार्थं शोधयद् धराम् ।**
**स्वर्णलाङ्गूलयन्त्रैश्च द्विजमन्त्रगणैस्तथा ॥ ५९ ॥**

**कल्याणकाण्डदीपः**

**स्वर्णलाङ्गूलयन्त्रैश्च द्विजमन्त्रगणैरिति** । द्विजोक्तमन्त्रगणैः ।

**मूलम्**

**शोध्यमाने धरापृष्ठे तत्र पद्मं ददर्श ह ।**
**सहस्रपत्रं राजेन्द्रः किमिदं विस्मयाकुलः ॥ ६० ॥**

**कल्याणकाण्डदीपः**

**शोध्यमाने धरापृष्ठ इति** । धरायाश्चरमभागे ''पृष्ठश्चरममात्रे च वपुषः पश्चिमेऽपि तु'' इति रत्नमाला । नदीतीरस्य स्वपुरभूचरमत्वात् संवीतवस्त्रस्थानस्य गर्भस्थानत्वात् पृष्ठ इत्युक्तम् । अरणीनदीतीरे यज्ञार्थं शोधयामास । ''भुवमारणितीरतः'' इति वचनात् । **किमिदमिति** विस्मयाविष्टमनाः ।

**मूलम्**

**विस्तीर्य पत्राणि रमाकृतिं शुभां**
**दृष्ट्वा च सन्तोषमना बभूव।**
**दैवेन दत्तां भगवत्प्रचोदितां**
**कन्यां कुमारीं कुसुमाभनेत्राम् ॥ ६१ ॥**

**कल्याणकाण्डदीपः**

**विस्तीर्येत्यादि । दैवेन दत्तां** पुरा चीर्णपुण्येनैव लब्धाम् । न छद्मलब्धा नापि दत्तप्रतिगृहीता नापि विक्रीता इत्येव व्यावर्त्याः । तर्हि किं त्वत्कृतपुण्यपराधीना । न, किन्तु स्वतन्त्रा । तथापि न परमेत्याह— **भगवत्प्रचोदितामिति** । स्वसमर्पितमत्कृतसुकृतनियामकभगवत्प्रेरितां कन्याम् अष्टवर्षां कुमारीव कुमारीत्युपचारात् । द्वादशवर्षेव फुल्लां **कुसुमाभनेत्राम्** अरविन्दनेत्रां दलत्पद्मदलनेत्रां इति यावत् । **शुभां रमाकृतिं** वेदवतीं दृष्ट्वा अतिसन्तोषयुक्तमना बभूव इत्यन्वयः ।

**गूढकर्तृकव्याख्यानम्**

ततः गुरुः वदति— "महाराज ! मा चिन्तय मा चिन्तय । पुत्रकामेष्टिं कुरु । तेन तव दिव्य-सुपुत्रो भविष्यति" इति ।

तत् श्रुत्वा तदाज्ञया पुत्रकामेष्टियागं कर्तुं आकाशः स्वर्णलाङ्गलादियन्त्रसाधनैः विप्रवेदमन्त्रो-च्चारपूर्वकं भुवं शोधयामास । तथोक्ते स्वनगरचरमभागे, अरणीनदीतीरे, भूदेशं अभिलषितं मत्वा भुवं शोधयामास । तदा लाङ्गूलपद्धतौ निम्नदेशे एकं सहस्रदलात्मककमलं ददर्श । किमिदं अद्भुतम् ? इति वदति । अस्य कारणं अज्ञात्वा मनो व्याकुलमभूत् । सहस्रपत्रमध्ये परममङ्गलाकृतिं साक्षाद्रमारूपां वेदवतीरूपां ददर्श । अत्यानन्दितः ।

**मूलम्**

**इत्थं समाभाष्य नृपोत्तमः शिशुं**
**हस्ते प्रगृह्याशु मुमोद दीनः ।**
**मायां महेशस्य दुरत्यया हरेः**
**कस्मै प्रनेग. प्रतिगृह्यते मया ॥ ६२ ॥**

**कल्याणकाण्डदीपः**

**इत्थं समाभाष्येत्यादि** । अनेन प्रकारेण । पूर्वं स्वदृष्टप्रकारेण पूर्वोक्तद्वितीयान्तपदबोध्य-प्रकारेणेति यावत् । हे ऋषि ऋत्विक्प्रजा इति शेषः । हे ऋत्विक्प्रजाः इति समाभाष्य सम्बोध्य इयं कन्या पुरा सीतैव दैवदत्ता भगवत्प्रचोदिता कुमारी अरविन्दनेत्रा शुभा पुरा इन्दिरैवेति **समाभाष्य** सम्यक् सम्बोध्य तैः सविमर्शमभ्यनुज्ञाने दत्ते नृपोत्तम आशु शिशुं उद्धर्तुः हस्तशिशुमिव स्थितां **हस्ते प्रगृह्य** दक्षहस्ते निधाय वामेन प्रगृह्य **दीनो** निःस्वो निधिमागृह्य यथा मोदते तथा दीनोऽयं सन्तानदरिद्रो मुमोद इत्यन्वयः ।

नन्वेवमद्भुतसृष्टौ कारणं न पश्यामः । हरीच्छा चेत्, एतदन्यत्रेच्छायाः तादृशं तेजो न दृश्यत इत्यत आह— 'मायाम्' इति 'हरेः' इत्यन्तम् एकं वाक्यम् । 'को जानाति' इति शेषः । दुरत्ययां इयतीदृशीति प्रतीत्या अत्येतुमशक्याम् । **महेशस्य** हरेर्मायां इच्छां इयती ईदृगबलवतीति को जानातीत्यर्थः । हरीच्छाया सीतायाः सृष्टिः ईदृशी दुष्टचरा । अतो हरीच्छायाः तादृशं तेजोऽस्तीति भावः । अथ वितर्क्यते राजा कस्मै प्रदेया प्रतिगृह्यते मया इति इदमेकं वाक्यम् । इयं कन्या तादृशेशेच्छया इदानीमेव यस्मै कस्मै प्रदेया भवति प्रदातुं योग्या भवति उत कालान्तरे प्रदानं कर्तुं पालनाय मयेदानीं प्रतिगृह्यते हरीच्छा कथमस्ति ? इति भावः ।

यद्वा, 'मायाम्' इत्यादि 'मया' इत्यन्तम् एकं वाक्यम् । महेशस्य हरेः दुरत्ययां हरिं विना अत्येतुम् अतिशेतुम् अशक्यम् । **मायां** श्रीभूदुर्गाख्यां मायां पत्नीम् । इदानीमिह लोके कोऽत्येति । स च त्रियुगहूतिः । अतः कस्मै इयं कन्या मया प्रदेया, केन च प्रतिगृह्यते कन्येयं हरिमनु । अतो न कस्मैचित् न केनचिदिति योजना ।

यदि मा भूतां दानप्रतिग्रहौ तर्हि अधर्मोऽकीर्तिश्च स्यातामिति चिन्तयन् क्षणं तूष्णीमतिष्ठत् ।

**मूलम्**

**उवाचाकाशगा वाणी पुत्रीयं तव पुण्यदा ।**
**सुरक्षस्व महाभागां बहुकीर्तिफलप्रदाम् ॥ ६३ ॥**

**इत्यनन्तगतां वाणीं श्रुत्वा राजाऽतिहर्षितः ।**
**तां कन्यां प्रतिगृह्याशु स्वभार्यां प्रत्युवाच सः ॥ ६४ ॥**

**शृणु भद्रे महाप्राज्ञि देवदत्तामिमां शुभाम्।**
**संवर्धस्व वरां पुत्रीं यथा योनिगतां तव।**
**इत्युक्त्वा तत्करे दत्वा बहुदानमथाकरोत्** ॥ ६५ ॥

**कल्याणकाण्डदीपः**

ततः किमभूदित्यत आह— **उवाच** इत्यादिना **अकरोत्** इत्यन्तेन। **पुत्रीयं तव सुरक्षस्व** इत्यनेन वितर्के द्वितीयपक्षाभ्यनुज्ञा कृता। **बहुकीर्तिफलप्रदां** कीर्तिपदेन तत्साध्यः स्वर्ग उपलक्ष्यते। फलं मोक्षः। तथा च स्वर्गमुक्तिफलदामित्यर्थः। अनेन पुण्यदा इत्यनेन च चिन्तापरिहारः। **देवदत्तामिति**। उक्तोऽर्थः। अतो **यथा योनिगतां** स्वगर्भजातां पुत्रीं यथा स्वजातिनीतिकुलाचारं मातरो वर्धयन्ते तथा तदेव मां शुभां वरां पुत्रीं **वर्धयस्व** न पृथक् कुरु इति भावः। यज्ञं च राजा अवभृथान्तं समाप्तवानिति भावः।

**गूढकर्तृकन्याख्यानम्**

तदा वदति— "इयं कन्या का ? कथं मे लब्धा ? पुराचीर्णपुण्ये ईदृशीकन्या लभ्या, अन्यथा न। छद्मलब्धा न, नापि दत्तपरिगृहीता, नापि विक्रीता। किञ्च इयं अकृतपुण्यानां अनधीना, न परमा भाति। मत्कृतपुण्यफलनिर्णायको हरिः इमां प्रेरयित्वा मयि दत्तवानिति भाति" इति विचारयन्, तत्र मिलितमुनीन् सम्बोध्य, "हे ऋषिऋत्विक्प्रजाः ! शृणुत। बहुपुण्यवशात् जनकस्य सीतेव अद्य मे लब्धा। देवदत्ता अतः नापरिग्राह्या। अत्र अयं कन्या ग्राह्या न वा ? इति। भवदभिमतं किं स्यात् ? इति पृच्छामि" इति प्रार्थयामास।

तदा सर्वे मुनयः "अवश्यं ग्राह्या। शुभमस्तु। इति सानन्दं ऊचुः।" क्षणात् राजा हस्तशिशुमिव स्थितां कन्यां हस्ते प्रगृह्य दक्षहस्ते निधाय वामेन प्रगृह्य दीनो निधिमिव आकाशः सन्ततिदरिद्रः कन्यां प्राप्य मुमोदे। परन्तु एवं चिन्तयति— "ईदृश-अद्भुतसृष्टौ कारणं किम् ? न ज्ञातम्। श्रीहरीच्छा चेत्, अन्यत्र एतादृशतेजो न दृश्यते। जगज्जन्मादिकारणश्रीहरेः इच्छा एव माया, लक्ष्मीः। श्रीहरीच्छा कीदृशीति न जाने। जगदीशश्रीहरिं विना अतिशयितुं अशक्यां श्रीभूदुर्गाख्यां मायां पर्वी इह कः अत्येति ? श्रीहरिं विना इयं न कस्मैचित् देया। न केनचित् प्रतिग्राह्या। स तु हरिः त्रियुगहूतिः। अदत्ता चेत्, अप्रतिगृहीता चेत् अधर्मः अकीर्तिश्च स्याताम्। इत्येवं चिन्तयति स्म॥ तदा गगनवाणी आकाशं प्रति— "राजोत्तम ! महाभाग ! इयं तव पुत्रीति मन्यस्व। इयं ते पुण्यकीर्तिदा, मुक्तिफलदा च। संशयं त्यज। प्रीत्या इमां रक्ष" इत्याह। गगनवाणीं श्रुत्वा आनन्दोद्रिक्तः आकाशः कन्यां प्रगृह्य स्वगृहं

मङ्गलवाद्यपूर्वकं सकलवैभवैः नीत्वा भार्याहस्ते दत्वा तां प्रति, "भद्रे ! महाप्राज्ञे ! शृणु । साक्षात् श्रीहरिरेव परममङ्गलरूपां इमां कन्यां ददौ । भवद्गर्भजातामिव इमां पोषय प्रीत्या" इत्याह ॥

ततो नृपः यज्ञं च अवभृतान्तं साङ्गं चकार ॥

**मूलम्**

**आकाशराजस्य वसुदानाख्यसुतोत्पत्तिः**

**कन्यागमनपुण्येन सा देवी गर्भमादधे ।**
**गर्भिणीं स्वसतीं दृष्ट्वा गर्भचिह्नं चकार ह ॥ ६६ ॥**

**कल्याणकाण्डदीपः**

**कन्यागमनपुण्येन** तदनन्तरकालिकतत्पालनात्मकपूजापुण्येनेत्यर्थः । ततः किमभूदित्यत्य आह— **गर्भिणीम्** इत्यादिना ह इत्यन्तेन । **गर्भिणीं** व्यक्तगर्भां तृतीयमासादौ दृष्ट्वा गर्भस्य चिह्नं लक्षणं यस्मिन् कर्मणि तद्गर्भचिह्नं पुंसवनम् । अण्डदेशीयमाषद्वयलिङ्गजातीयं यवात्मकगर्भलक्षण-कारणात् ।

"तृतीये वा चतुर्थे वा मासि पुंसवनं भवेत् ।
व्यक्ते गर्भे भवेत् कार्यं सीमन्तेन सहाथवा ॥" इति

जातकर्ण्यः गर्भचिह्नपदं एतदनवलोभनाय नस्तोऽजीनदूर्वारससेचनात्मकानवलोभस्याप्युप-लक्षणम् ।

**मूलम्**

**पञ्चमे मासि सम्प्राप्ते सीमन्तं नृपपुङ्गवः ।**
**कारयामास विधिवत् ब्राह्मणैर्यजुषां गणैः ॥ ६७ ॥**

**कल्याणकाण्डदीपः**

**सीमन्तं** रुधिरप्रियालक्ष्मीभूतराक्षसीगणनिरसनद्वारा श्रीलक्ष्मीसमावेशनाय सशलाद्वौदुम्बर-ग्लप्सयुतयात्रेण्याशलल्यासहितकुशपिञ्जूलैः केशपद्धतिकरणात्मकसीमन्तनामकं कर्म । **विधिवत्** । विधि गृह्यसूत्रम्, तदर्हतीति विधिवत् । तदर्हतीति वतिः । ब्राह्मणैः सह यजुर्मन्त्रगणैः समागते गर्भकलाभिवृद्ध्या सम्पूर्णे ।

### मूलम्

**ततः कालान्तरे बाला नवमासे समागते।**
**मासे तु दशमे प्राप्ते सुषुवे पुत्रमुत्तमम्।**
**मासि कन्यागते भानौ दशम्यां रोहिणीयुते ॥ ६८ ॥**

**पक्षे तु प्रथमे वीरः सायङ्काले गुरोर्दिने।**
**पुत्रोत्पत्तिप्रवक्तॄणां सर्वस्वं दानमाचरत् ॥ ६९ ॥**

### कल्याणकाण्डदीपः

**मासीति** । भानौ कन्यागते मासि **प्रथमे पक्षे** प्रथमपञ्चदशके दशमे रोहिणीयुते शुभे दिने सायङ्काले इति योजना । रोहिणीयुते रोहिणीद्वितीयपादे "वो वा वी वू रोहिणी" इति अवकहड-सूत्रात् । **पुत्रोत्पत्तिप्रवक्तॄणां** पुरोधसाम् । सर्वं च तत् स्वं च सर्वस्वं, तदस्यास्तीति मत्वर्थसम्बन्धे अच् । सम्बन्धश्च कर्मता । तथा च सपदि सर्वाङ्गाभिष्वङ्गं दत्वा, अन्यवस्त्राद्यलङ्कृतरत्यक्त्वा तात्कालिकसन्निहितवस्त्राभरणादिविग्रहोपकरणसर्वस्वकर्मकं दानं **आचरत्** अकरोत् ।

### गूढकर्तृकव्याख्यानम्

साक्षात् रमा स्वरूपदिव्याकन्यागमनपुण्येन धरणी गर्भं दधार । ततः तृतीयमासादौ राजा आत्मसती व्यक्तगर्भां दृष्ट्वा अण्डदेशीयमाषद्वयलिङ्गजातीययवात्मकगर्भलक्षणरूप-पुंसवनाख्यं कर्म तृतीयमासे चतुर्थमासे वा कारयामास । पञ्चमे मासि विप्रैः यजुर्वेदमन्त्रपूर्वकं गृह्यसूत्रोक्तविधिना रुधिरप्रिय-अलक्ष्मीभूतराक्षसीगण-निरसनद्वारा, श्रीलक्ष्मीसमावेशनाय, केशपद्धतिकरणात्मक-सीमन्ताख्यं कारयामास । नवमासेषु गतेषु दशमे मासि कलाभिपूर्णे गर्भे भानौ कन्यागते भाद्रपदशुक्लदशम्यां गुरुवारे 'वोवावीवू' रोहिणीति अवकहडसूत्रात् रोहिणीनक्षत्रद्वितीपादे सायं धरणी उत्तमसुतमसूत । तदा पुत्रजननकाले "महाराज ! तव पुत्रोत्सवोऽभूत् । महाराज ! तव पुत्रोत्सवोऽभूत् ।" इति पुरोहितादि-जनानां प्रवदतां राजा सर्वस्वं दानमाचरत् ।

### मूलम्

**गवां कोटिसहस्राणि अश्वानामयुतं तथा।**
**नवधान्यादिकं द[illegible]वना ते छत्रचामरे ॥ ७० ॥**

**स्नानं कृत्वा नृपश्रेष्ठः स्वस्तिवाचनमाचरत्।**
**जातकर्मादिकं कर्म कृतवांस्तत्क्षणे नृपः ॥ ७१ ॥**

**कल्याणकाण्डदीपः**

ततः किमकरोदित्यत आह— **गवामिति** । अत्रेयं योजना । हे राजश्रेष्ठ जनक, नृपः अनन्तराजः । **तत्क्षणे** सद्यः । जातमात्रस्य पुत्रस्य मुखं स्वकुलदेवतावृद्धाभिवादनपूर्वकम् अवलोक्य, अरणीनद्याम् उदङ्मुखं स्नानं कृत्वा, अन्यवस्त्राद्यलङ्कृतस्त्यक्ततादात्विकं सर्वस्वं दत्वा सवैभवं पत्नीगृहमाविश्य स्वस्तिवाचनं नान्दीसमाराधनं चाचरत् । ततः जातकर्मादिकं घृतमधुप्राशन-मूर्ध्नाघ्राणनादि-स्तन्यपानान्तं जातकर्म आदिर्यस्य तत् तदादिकम् । ज्योतिर्वित्पूजाशुभादिचिन्ताग्रहमन्त्रजपशान्तिसूक्तपठनादि विनियोगादि कर्म कृतवान् । ततः

"देवाश्च पितरश्चैव पुत्रे जाते द्विजन्मनाम् ।
आयान्ति तदहस्तस्मात् पुण्यं पूज्यं च सर्वदा ॥

तत्र दद्यात् सुवर्णं तु भूमिं गां तुरगं तथा ।
छत्रं छागं वस्त्रमाल्ये शयनं चासनं गृहम् ॥"

इति व्यासवचनानुसारेण स्वर्णादि दानं करिष्यमाणः

"चन्द्रमण्डलसङ्काशमातपत्रं च पाण्डुरम् ।
सज्जं द्युतिकरं श्रीमदभिषेकपुरस्कृतम् ॥

चन्द्रांशुविकचप्रख्यं काञ्चनं रत्नभूषितम् ।
सज्जं सम्पत्करं श्रीमद्वालव्यजनमुत्तमम् ॥"

इत्युक्तलक्षणे राजलक्षणे अभिषेकपुरस्कृते ये शतशलाकातपत्रहेममञ्जरीगर्भव्यालव्यजने ते विना वर्जयित्वा । अथ दानाय बहिरुपकल्पितानां **कोटिसहस्राणां** कोटिभिः गुणोत्कर्षैः सहस्राणां सहस्रसङ्ख्याकानां गवां दानमाचरत् । "अत्युत्कर्षाश्रयः कोट्यः" इत्यमरः । प्रथमगवीमारभ्य द्विगुणत्रिगुणादिक्रमेण सहस्रतमा सहस्रगुणितेत्यर्थः । तथा तद्वत् **अयुतं** अवशिष्टं गुणोत्कर्षादिविशिष्टं यथा भवति तथा सहस्राणां अश्वानां दानमाचरत् । अथ बहिरुपकल्पितं अन्तःस्थितं च **नवधान्यादिकं** नव च तानि धान्यानि च नवधान्यानि गोधूमादि नवधान्यानि आदयः प्रभृतयः प्रधानानि च यस्य अष्टादश नूतनधान्यसमुदायस्य तत् नवधान्यादि तदेव तत्कं धान्यं अष्टादशनूतनधान्यवृन्दम् ।

यद्वा, नवधान्यानि नूतनाष्टादशधान्यानि गोधूमादीनि आदयः प्रभृतयः प्रधानानि च यस्य अष्टादशपुराणधान्यसमुदायस्य चिरस्थितस्य तत् तदादि तदेव तत्कं धान्यं अष्टादशपुराणधान्य-वृन्दम् । एवमादि पुत्रजन्मभूस्थितगृह-तदुपकरणविक्रहोपकरणाद्युक्त-सर्वस्वकर्मकं दानमाचरदिति । "चामरं तु प्रकीर्णकम् । .... हैमं च्छत्रं त्वातपत्रं राज्ञस्तु नृपलक्ष्म तत्" इत्यमरः ।

**मूलम्**

**दिने तु द्वादशे प्राप्ते कृतं पुत्राभिधं तथा ।**
**तद्दिने बहु विप्राणां भोजनं [1]दापयन् नृपः ॥ ७२ ॥**

१. कृतवान् ।

**कल्याणकाण्डदीपः**

दापयन् आशीर्याय च इति शेषः । ते च विप्राः दानसन्तुष्टाः बहूनां वसूनां दानं यस्मिन् जाते जातमिति वसुदानेति त्वकृतनाम्नी कीर्तिं गमिष्यति इत्याशीः ददुरिति शेषः ।

**मूलम्**

**नाम्ना तु वसुदानेति लोके ख्यातिं गमिष्यति ॥ ७३ ॥**

**कल्याणकाण्डदीपः**

"स वा एष महानज आत्मान्नादो वसुदानो विन्दते वसु य एवं वेद" इति श्रुतिशिरःसिद्धं इदं नाम इति ध्येयम् ।

**गूढकर्तृकव्याख्यानम्**

पूर्णपात्रमथाचरत् । महाराजस्य पुत्रोत्सवोऽभूदिति सन्तोषवार्तां निवेदकपरिजनः तदा नृपदेहगत-उत्तरीयालङ्कारान् आजहुः । क्षणात् नृपः सर्वाङ्गाभिष्वङ्गं दत्वा अन्यं वस्त्रालङ्कृतः दानानि चकार ।

तत्पूर्वं जातमात्रस्य पुत्रस्य मुखं स्वकुलदेवतावृद्धाभिवादनपूर्वकं अवलोक्य ततः अनया उदङ्मुखं स्नात्वा अन्यवस्त्राभरणालङ्कृतः त्यक्तसर्वस्वं दत्त्वा मङ्गलवाद्यवैभवपूर्वकं पत्नीगृहमाविश्य स्वस्तिपाठादिना देवं आचरत् । ततः घृतमधुप्राशनमूर्धाघ्राणनादिस्तन्यपानान्तं जातकर्म ज्योतिर्वित् पूजा-शु[illegible]दिचिन्ताग्रहनक्षत्रादयः नवग्रहशान्तिसूक्तपठनादि कर्म चकार । ततः सुवर्ण-भू-गो-तुरग-छत्र-छाग-वस्त्र-माल्य-शयन-आसन-[illegible] दत्वा राजलक्षण-चन्द्रनिभ-अभिषेकपुरस्कृत-शत-

शलाकायुत-हेममञ्जरीगर्भ-श्वेतच्छत्र-वालव्यजने वर्जयित्वा, अथ बहिः उपकल्पित-गुणोत्कर्ष-विशिष्टः सहस्रसङ्ख्याकगाः ददौ । गवां कोटिसहस्राणि । कोटिः उत्कर्षः गुणोत्कर्षः । प्रथमं गां अदात् । तत् द्विगुणविशिष्टाम् । तत् त्रिगुणविशिष्टाम् । एवं तत् सहस्रगुणगुणविशिष्टां गां अदात् । अश्वानां अयुतम् । न युतं अयुतम् ॥ गुणोत्कर्ष-अविशिष्ट-अश्वसहस्रस्य दानं ददौ । ततः गोधूमादि-अष्टादशपुराणधान्यानि ददौ । अष्टादशनूतनधान्यानि च । सर्वस्वदानं – राजलक्षण-श्वेतच्छत्र-चामरद्वयं विना ददौ । पुत्रजननात् द्वादशे दिने नाम चकार । किमिति ? जातस्य किं नाम विधेयम् ? इति नृपो विप्रान् पप्रच्छ । विप्राः "महाराज ! यस्मिन् जाते बहुवसूनां दानं जातं, तेन तव जातस्य वसुदान इति नाम विधेहि" इति उपदिदिशुः । "एतेन नाम्नाऽयं लोके ख्यातो भवेत्" इति उक्त्वा "स वा एष महानज आत्मान्नादो वसुदानो विन्दते वसु एवं वेद" इति मन्त्रोच्चारणपूर्वकं आशीश्चक्रुः । सर्वविप्राणां षड्रसोपेतदिव्यमृष्टान्नभोजनं कारयित्वा सदक्षिणाकं ताम्बूलं ददौ । ततः शौनकादयः पृच्छन्ति—

मूलम्

**ऋषय ऊचुः—**

**श्रुतं पुत्रप्रभावं च न श्रुतं [1]मुनिपुङ्गव ।**
**अयोनिजायास्तत्पुत्र्याः किं नाम कृतवान् नृपः ॥ ७४ ॥**

---

१. ऋषिपुङ्गव ।

कल्याणकाण्डदीपः

अथर्षयः प्रसक्तयानुप्रसक्तया सूतं पृच्छति— श्रुतमित्यादिना । पुत्रप्रभावं पुत्रस्य प्रभावं उत्पत्तिर्निमित्तं यस्मिन्कर्मणि तत्पुत्रप्रभावं जातकर्मादि । यद्वा, पुत्रस्य प्रभावः कोशजं तेजो यस्मात् तत् तथा नाम च श्रुतम् ।

मूलम्

**सूत उवाच—**

**पद्मोदरां पद्मगर्भां पद्मजातां वराननाम् ।**
**पद्माया अवतारत्वात् राजा पद्मावतीति च ॥ ७५ ॥**

**कल्याणकाण्डदीपः**

**पद्मोदरामिति** । **पद्मस्योदरं** "पद्मे स्थितां पद्मवर्णामि"त्यादि श्रीसूक्ते । **पद्मगर्भा** पद्मः पद्मयोनिः गर्भो अर्भको यस्याः सा तथा ताम् । "मायादेवीसुतश्च सः" इत्यमरः । यद्वा, पद्मः महापद्मः तदुपलक्षिततदादिनवनिधिर्गर्भे कुक्षौ यस्याः सा तथा ताम् । "नवनिधिरस्त्वमेवेन्दिरे", "त्वद्गर्भगत-हेमाद्रीन्", "त्वत्कुक्षिगतसर्वस्वम्" इत्यादि तद्धृदये । **पद्मजातां** पद्माभिव्यक्ताम् । यद्वा, पद्मा पद्मिनी तस्याः जातं जातिः यस्याः । "तथा चम्पकसुप्रभा सा कन्या पद्मिनी भवेत्" इति । **वराननां** अरविन्दनेत्राम् । "पद्माक्षी पद्मसम्भवे" इति च । **पद्माया अवतारत्वादिति** । पद्मांशवेदवत्यवतार-त्वात् । पद्मावती उक्तरीत्या साक्षात्परम्परान्यतरसम्बन्धेन पद्माऽस्यास्तीति सम्बन्धार्थे मतुप् । शरादीनां चेति मतौ संज्ञायां दीर्घः ।

"क्रमात्सङ्ख्या हस्तिबिन्द्वोर्निधिव्यूहान्तरादिषु ।
अब्जे भार्ङि श्रियोः पद्मं क्लीबे पुंसस्त्रियास्त्रियाम् ॥" *इति रत्नमाला ।*
"पद्मा ब्रह्मा समुद्दिष्टः पद्मा श्रीरपि चोच्यते ॥" *इत्यभिधानम् ।*
"गर्भोऽर्भके नाट्यसन्धौ कुक्षौ पतनसङ्कटे ॥" इति च ।

**मूलम्**

**कृत्वा तु नामकरणं निजपुत्र्या नृपोत्तमः ।**
**वर्धमानौ सुतौ दृष्ट्वा राजा सन्तोषमागतः ॥ ७६ ॥**

**कल्याणकाण्डदीपः**

**नामकरणमिति** । नाम्नः करणं कृतिः यस्मिन् कर्मणि तत् तथा ।

**मूलम्**

**अकलङ्केन्दुसदृशौ रमाचन्द्रसमावुभौ ।**
**किं तेन सुकृतं राज्ञा बहुजन्मार्जितं फलम् ॥ ७७ ॥**

**कल्याणकाण्डदीपः**

**रमाचन्द्रमसौ** तदंशौ । **राजा** राज्ञेति वा पाठः । जान्ते तृतीयान्तं राजेति । किं वितर्के । तेन राजा राज्ञा कृतं सुकृतं **किं** कीदृशं कियत् कियदवधीति । अतो न पर्यवसायाम इति भावः । बहुजन्मार्जितं फलं एतत्फलं **बहुजन्मार्जितं** बहुजन्मभिः कृत सुकृतार्जितम् ।

मूलम्

अग्रजां पुत्रिकां दृष्ट्वा तदन्ते पुत्रमुत्तमम्।
दृष्ट्वा सन्तुष्टमनसा सम्पूर्णानन्दसागरः ॥ ७८ ॥

कल्याणकाण्डदीपः

**दृष्ट्वा सन्तुष्टमनसा सम्पूर्णानन्दसागरः** इति। तत्र निमग्नोऽभूदिति भावः।

गूढकर्तृकव्याख्यानम्

सूतमुने ! भवन्मुखात् गगनसुतवसुदानस्य उत्पत्तिं तन्नामप्रवृत्तिनिमित्तं श्रुतवन्तः। आकाशस्य अयोनिजा पुत्री प्राप्ता इति उक्तं खलु। अद्य सा अयोनिजा कुमारिका का ? तस्याः आकाशः किं नाम चकार। एतत् दयया कथ्यतां इति प्रार्थयामासुः। तदा सूत आह— "आकाशस्य लब्धा देवदत्ता कन्या कीदृशी आसीत् ? पद्मस्य उदरं तस्याः वासस्थानं आसीदिति पद्मोदरा। पद्मः पद्मयोनिः विधिः गर्भः बालकः यस्याः सा पद्मगर्भा – विधिमाता। पद्मः महापद्मः तदुपलक्षित-नवनिधिः गर्भे यस्याः सा पद्मगर्भा। पद्मायाः पद्मिन्याः जातं जातिः यस्याः सा पद्मजाता। चम्पकसप्रभा सा कन्या पद्मिनी भवेत्। अतः वरानना। पद्मांशवेदवत्यवतारत्वात्। साक्षात् परम्परा अन्यतरसम्बन्धेन पद्मं अस्याः अस्तीति पद्मावती। एवमादिकारणैः आकाशः पद्मावतीति नाम चकार। एवं रमाचन्द्रांशौ पद्मावसुदानौ दिने दिने वर्धमानौ। पूर्णचन्द्रनिभकान्तिमन्तौ। एतौ उभौ दृष्ट्वा आकाशः अत्यानन्दितः। आकाशः कियत्पुण्यं कृतवान् इति निश्चेतुं न शक्यम्। एतत्फलं बहुजन्मार्जितम्।

मूलम्

[1]इत्थं काले गते तस्मिन् सा बाला यौवनं गता।
यौवनाढ्यां विशालाक्षीं दृष्ट्वा राजा व्यचिन्तयत् ॥ ७९ ॥

१. एवं।

विचारयामास नृपः पुत्र्यर्थं वरमुत्तमम्।
न प्राप दुःखसन्तप्तः कस्मै देया मया सुता ॥ ८० ॥

कल्याणकाण्डदीपः

**बाला** कुमारी। **यौवनं गता** युवतीधर्मं प्राप्ता। **राजा व्यचिन्तयत्** पुत्रीं परिणीय पुत्रमुपनयाम इति आलुलोच इत्यर्थः। **पुत्र्यर्थं** पुत्र्यै अर्थ्यः पुत्र्या वा अर्थ्यः आकाङ्क्षित इत्यर्थः, तम्।

**न प्रापेति** । क्वचिद्दैवघटनाभावात् क्वचिन्मनःकूटाभावादिति भावः । "कस्मै देया सुता मया" इति दुःखसन्तप्तः ।

### मूलम्

**दृष्ट्वा राजा सुतं बालं ब्राह्मणं कृतवान् द्विजैः ।**
**पद्मावती तदा बाला पुष्पार्थं वनमागता ॥ ८१ ॥**

### कल्याणकाण्डदीपः

**ब्राह्मणं कृतवान्** ब्रह्म वेदः तदणतीति ब्राह्मणः, चतुष्पाद्धनुर्वेदाध्यायिनं कृतवान् । अणरण शब्दे । **द्विजैः** गुरुभिः ब्रह्मवादिभिः ।

### मूलम्

**वसन्तमागतं वीक्ष्य पुष्पारामे चरिष्यति ।**
**पुष्पाण्याहारयामास तरुमूलमुपाश्रिता ॥ ८२ ॥**

### कल्याणकाण्डदीपः

**पुष्पारामे चरिष्यति इति** । सीतावत् वनसञ्चारकुशला पद्मा वसन्ते परःशताभिः सखीभिः समवेता तादृशीभिरेव मुक्ता झल्लरी लसद्रत्नखचितबालविलासायाप्ययमानेन उह्यमाना श्वेतातपत्र-बालव्यजनादिभिः सेव्यमाना शङ्खतूर्यादिवाद्यैः घुष्यमाणा प्रतिदिनं वनं गच्छत्यागच्छति च । इदं च प्रतिदिनं राज्ञः पौराणां च महोत्सव इति कथासन्दर्भो बोध्यः । उत्तरानुगुण्यात् औचित्याच्च । **पुष्पाण्याहारयामास इति** । सखीभिरिति शेषः ।

### गूढकर्तृकव्याख्यानम्

एवं कालेन गतेन सा बाला पद्मा यौवनं गता । तदुक्तम्— यावत् षोडशसङ्ख्यमब्दमुदितं बाला । विशालाक्षी यौवनाढ्यां पद्मां दृष्ट्वा आकाशः चिन्तयामास । कुतः ? लोके हि कन्यापितृत्वमेव तावदतिकष्टम् । कुतः ?

"जातेति कन्या महती हि चिन्ता कस्मै प्रदेयेति महान् वितर्कः ।
दत्ता सुखं यास्यति वा [illegible]ति कन्यापितृत्वं खलु नाम कष्टम् ॥" एवं चिन्तितवान् ।

पद्मापरिणयं कृत्वा वसुदानोपनयनं कर्तव्यमिति । पद्मायाः अनुरूपवरं विचारयामास । तादृशवरो न लब्धः । "कस्मै देया कस्मै देया" इति दुःखेन तताप । एतस्मिन् काले वसुदानस्य ब्राह्मणं कृतवान् – ब्रह्म वेदं अणतीति ब्राह्मणः, तम् । चतुष्पात् धनुर्वेदाध्यायिनं द्विजेभ्यः कारयामास ।

एतन्मध्ये सीतावत् वनसञ्चारकुशला पद्मा वसन्ते प्राप्ते परःशतसखीभिः समवेता मुक्तावल्लरी लसद्रत्नखचितबालविलासया आप्य यानेन उह्यमाना श्वेतच्छत्र-वाल-व्यजनादिभिः सेव्यमाना शङ्खतूर्यादिवाद्यैः घुष्यमाणा नित्यं वनं गच्छति आगच्छति च । इदं राज्ञः पौराणां महासम्भ्रम आसीत् । एवं सति एकदा पद्मा सखीभिः पुष्पापचयाय उद्यानं गत्वा तत्र विविधपुष्पाणि आहारयामास । स्वयं पुष्पाणि अपचित्य एकवृक्षमूले स्थिता ।

**मूलम्**

**तदाऽऽगतो नारदस्तु वृद्धो भूत्वा जटाधरः ।**
**धूलिधूसरिताङ्गश्च कर्पूरधुरितद्युतिः ॥ ८३ ॥**

**कल्याणकाण्डदीपः**

स्वकर्तव्य-श्रीनिवाससेवायै नारद आगत इत्याह— **तदेत्यादिना** । **वृद्धो भूत्वेति** । सिद्धत्वात् प्रकृतकार्यानुकूलतयेति भावः । **जटाधरः** व्रताङ्गविशदकेशचूडाधरः । "व्रतिनस्तु सटा जटा" इत्यमरः । **धूलिधूसरिताङ्ग इति** । बहुलोकसञ्चारात् धूल्या धूसरितम् ईषत् पाण्डु अङ्गं यस्य सः तथा । "ईषत्पाण्डुस्तु धूसुरः" इत्यमरः । कृधूमदिभ्यः किदिति सरः । **कर्पूरधुरितद्युतिः** कर्पूरो घनसारः । घुर छेदने । भावे क्तः । घुरितमङ्गलेपनम् । तथा च कर्पूराङ्गलेपनजन्यकान्तिरिव कान्तिः इत्यर्थः ।

**मूलम्**

**आगतं तं मुनिं दृष्ट्वा विस्मयाकुलमानसा ।**
**कोऽसौ भयङ्करश्चासौ कथमत्र विचार्यताम् ॥ ८४ ॥**

**कल्याणकाण्डदीपः**

**विस्मयाकुलयानसा** विस्मयाविष्टं मानसं मनो यस्याः सा तथा । "पद्मावती उवाच" इति शेषः । किमिति **कोऽसाविति** । जानन्त्यपि असौ दूरे आगच्छन् पुरुषः कः यूयं जानीथ किमिति । सख्यः ऊचुः । **भयङ्करश्चायमिति** । "मेपर्तिभयेषु कुञ्" इतिवत् । अयं समीपे आगच्छन् भयङ्करः ।

अत्र स्थिताः सर्वाः वयं कन्यकाः । अतो भीषयन्त इति भावः । पद्मोवाच । किमिति । **कथमत्र इति** । **अत्र** अस्मिन्विषये अस्माभिः **कथं** कर्तव्यमिति । सख्यः ऊचुः । **विचार्यतामिति** । किं वा भवतु सौम्यवद् दृश्यते भयङ्करो वाऽभयङ्करो वेति विचार्यतामिति भावः ।

**मूलम्**

**कन्या ऊचुः—**

**कोऽसि विप्र महाप्राज्ञ किमर्थं त्वमिहागतः ।**
**वाक्यं तासां समाकर्ण्य गुरुः प्रोवाच सद्वचः ॥ ८५ ॥**

**कल्याणकाण्डदीपः**

ततः पद्मा विचारयति— **कोऽसीत्यादिना** । हे विप्र, वि शान्त्यादिविशिष्टेषु । प्र प्रकृष्ट । **किमर्थं** भूषणार्थं वा । यद्वा, अयं श्लोकः सखीजनप्रश्नपूर्वकः पद्मोत्तरोत्तरको व्याख्येयः ।

**मूलम्**

**नारद उवाच—**

**अहं कुलगुरुः साक्षाद्युष्माकं वरयोषितः ॥ ८६ ॥**

**कल्याणकाण्डदीपः**

नारदः उत्तरयति— **अहमित्यादिना** । ताश्च यूयं च यूयम् । त्यदादीनां मिथः सहोक्तौ यत् परं तच्छिष्यते । तासां युष्माकं हे वरयोषितः युष्माकं वरयोषिताम् । सीता-सत्या-रुक्मिण्यादि भवतीनां कुलस्य च सजातीयसमूहस्य । **गुरुः** हस्तलक्षणोपदेष्टा । नित्यसापेक्षत्वात् समासः ।

**मूलम्**

**हस्तं दर्शय [1]मे पुत्रिं लक्षणानि वदामि ते ।**
**उवाच लज्जया देवी किं वदिष्यसि [2]ब्राह्मण ॥ ८७ ॥**

१. बाले त्वं । २. हे द्विज ।

**कल्याणकाण्डदीपः**

अत आह **हस्तमिति** । **लज्जया** कान्ताभिलाषादिजन्यमनःसङ्कोचेनोपलक्षिता । **देवी** हे ब्राह्मण, किं वदिष्यसि ? किं लज्जाकरम् ?

अयं भावः । इङ्गितज्ञोऽयं मुनिः मां कान्तार्थिनीति जानाति । अतो ममान्तरङ्गितमभिलाषबीजं अनेन बहिरूप्यते । अतोऽन्तरङ्गं बहिरापतति । ततो जनाश्चापहसन्तीति चेतःसङ्कोच इति ।

**मूलम्**

**नारद उवाच—**

**विद्धि त्वत्पितृतुल्यं मां मनसा निर्मलेन च ।**
**इत्युक्ता ऋषिणा तेन दत्वा हस्तं वराङ्गना ॥ ८८ ॥**

**कल्याणकाण्डदीपः**

**विद्धि त्वत्पितृतुल्यं मामिति** । निर्मलेन मनसा युक्तं माम् । निर्मलेन मनसा त्वत्पितृसमानं जानीहीत्यर्थः । एतादृशे मयि लज्जा कुत इति भावः ।

**मूलम्**

**सत्यं वद महाप्राज्ञ लक्षणानि वराणि मे ।**
**दृष्ट्वा पाणितलं प्राह हसन् विधितनूद्भवः ॥ ८९ ॥**

**कल्याणकाण्डदीपः**

**हसन्निति** । अत्र तावत् सन्दर्भविशेषः । नारदः कदाचित् वल्मीकगं श्रीनिवासं दृष्ट्वा तेन सह सम्भाषणान्त उवाच । लक्ष्मीसहायोऽपि त्वमेवमेकाक्येव वल्मीके वससीति । ततः श्रीनिवास आह । त्वन्मूलोऽयं अनर्थः आगतः । तवैवं जाते सन्तोषः । तथैवास्तु मम किमपि माऽस्त्विति मृषा विरक्त्या उवाच । ततो नारदः खिन्नः । एवं काले गते इदानीं पद्मावतीलक्षणदर्शनानन्तरं अर्जुनस्येव श्रीनिवासस्य विरक्तिरिति हसन्नित्यर्थः ।

**गूढकर्तृकव्याख्यानम्**

तदा भगवत्कार्यसाधकः लोकज्ञानोपदेशकः नारदः तत्र प्राप्तः । स्वयं सिद्धोऽपि प्रकृत-पद्मादर्शनभाषणादि कार्यानुकूलत्वप्रयुक्तं वृद्धो बभौ । व्रताङ्गविशदकेशचूडां दधार । बहुलोकेषु सञ्चरित-वान् अङ्गसर्वस्वं धूल्यावृतं ईषत्पाण्डु अदृश्यत । कर्पूरचूर्णलिप्तमिव दृष्टम् । एतादृशे नारदे समागते पद्मा तं दृष्ट्वा मनसि विस्मिता । तत्रागत इति व्याकुलिता । ततः "कोऽयं अपरिचित आगतः ? तं सख्यः विचारयत" इत्यादिदेश । दूरदृष्टः सन् भयङ्करः । समुपागतः सन् सौम्यो दृष्टः । ततः सख्यः पद्मया

सह नारदं— "भो प्राज्ञवर्य ! कस्त्वम् ? किमर्थं त्वमिहागतः ? इति पप्रच्छुः । नारदः उत्तमोक्तिं अवदत् । अयि वरयोषितः ! शृणुत । अहं सीतारुक्मिणीसत्यादिभवतीनां कुलगुरुः । हस्तलक्षणं दृष्ट्वा उपदिशामि । हे देवि ! तव हस्तं दर्शय । लक्षणानि सम्यक् वदामि" इत्याह ।

तदा पद्मायाः किञ्चित् लज्जा जाता । कुतः ? "मम विद्याबुद्धिवयोवंशरूपगुणादिसम्पन्नवरः प्राप्तव्यः । एतद् वेत्ति अयं मुनिः । इङ्गितज्ञः । मन्मनोगतं प्रकटं कृत्वा वदति । तेन सख्यः अपहसन्ति । किं कुर्याम् ? हस्तं दर्शयितुं अदर्शयितुं वा न शक्यते" इति लज्जिता । ततः क्षणात् किञ्चित् धीरा नारदं वक्ति— "द्विजवर किं लक्षणं वदसि ?" इति विलम्बं चकार । नारदः— "हे देवि ! शृणु । लज्जां मा कृथाः । मां तव पितृसदृशं मन्यस्व । निर्मलमनसा हस्तं दर्शय" इत्याह । तदा पद्मा हस्तं दत्वा पुनः "त्रिकालज्ञ ! उत्तमलक्षणानि वद । सत्यं वद" इत्याह । नारदः पद्मा पाणितलं दृष्ट्वा हसन् वदति । कुतः ? 'इयं पद्मा । ब्रह्मादिसकलजगज्जननी । दोषरहिता । अस्याः किं लक्षणं वक्तव्यम्" इति । पुनः तत्र श्रीनिवासः अर्जुनविरक्तिवत् विरक्तिं करोति इत्येवम् । रमानारायणलीलाः स्मरन् अहसत् ।

### मूलम्

### नारदोक्तपद्मावतीशरीरसल्लक्षणानि

**नारद उवाच—**

**पतिर्भवति धर्मज्ञे त्रिलोकेशो रमापतिः ।**
**पाणी पद्मदलोपेतौ पादौ ते स्वस्तिकायुतौ ॥ ९० ॥**

**मुखं चन्द्रसमाकारं चक्षुः कमलकुड्मलम् ।**
**तिलपुष्पसमाकारा नासिका ते विराजते ॥ ९१ ॥**

### कल्याणकाण्डदीपः

पद्मामनोगतमाह— **पतिरित्यादिना** । तद्व्याप्यलक्षणन्याह— **पाणीत्यादिना** । **पद्मदलोपेतौ** । पद्मदलसदृशाङ्गुलिशोभितौ । "पद्मतलोपेतौ" इति पाठे पद्मतलं पद्मस्वरूपं तच्चिह्नोपेताविर्त्यर्थः । "अधः स्वरूपयोरस्त्री तलम्" इत्यमरः । **चन्द्रसमाकारं** पूर्णाऽकलङ्कचन्द्रसमाकृतिः । **कमलकुड्मलम्** । साचि कमलकुड्मल[illegible]म् ।

मूलम्

मुकुराभौ कपालौ तौ भ्रुवौ ते धनुषा समे।
आस्यं कर्पूरपात्रं च दन्ता दाडिमबीजवत् ॥ ९२ ॥

कपालौ दर्शसङ्काशौ आस्यं कर्पूरभाजनम्।
अधरं रक्तबिम्बाभं जिह्वा मृदुतरा शुभे ॥ ९३ ॥

कल्याणकाण्डदीपः

दर्शसङ्काशौ। दर्श आदर्शः। ब्रह्मणो लय इत्यत्रोक्तमत्र द्रष्टव्यम्। कनकादर्शसन्निभौ कर्पूरभाजनं तद्वत् स्वभावसुरभि। अधररक्तपद्मदलाभम्।

"अम्भोजमुकुलाकारं स्वाङ्गुष्ठाङ्गुलिसन्नखम्।
हस्तद्वयं मृगाक्षीणां बहुभोगाय जायते ॥
चक्रस्वस्तिकशङ्खाब्जध्वजमीनातपत्रवत्।
यस्याः पादतले रेखा सा भवेत् क्षितिपाङ्गना ॥
केशा अलिकुलच्छायाः सूक्ष्माः स्निग्धाः सुकोमलाः।
किञ्चिदाकुञ्चिताग्राश्च कुटिलाश्चातिशोभनाः ॥" —इति लक्षणशास्त्रम्।

मूलम्

[1]अरालालकसम्बद्धकुञ्चितानन्तमूर्धजम्।
ललाटं रत्नपीठाभं [2]श्रवणेन्द्रियराजितम् ॥ ९४ ॥

१. अरालालकसम्बद्धा असिता भाति वेणिकी।
२. श्रोत्रे शष्कुलिका समे।

कल्याणकाण्डदीपः

अरालाः कुटिलाः ते च ते अलकाश्च अरालालकाः। तैः सम्बद्धाः कलिताः तथा। अन्ताश्च ते मूर्धजाश्च अन्तमूर्धजाः। कुञ्चिताश्च ते अनन्तमूर्धजाश्च, ते तथा अरालालकसम्बद्धाः। कुञ्चितानन्तमूर्धजा यस्य तत् तथा श्रवणेन्द्रियराजितम्। रत्नपीठाभं रत्नफलकाभं ललाटं ते विराजत इति योजना।

**मूलम्**

**समभ्रूर्मन्मथाकारप्रतिमा(ऽ)प्रतिमप्रभम् ।**
**कण्ठः सूर्यांशुसदृशः [1]ताम्बूलरसदर्शितः ॥ ९५ ॥**

१. ताम्बूलरसदर्शकः ।

**कल्याणकाण्डदीपः**

**समभ्रू** समे भ्रुवौ यस्य तत् समभ्रु वरकाला हि समाकृति **समभ्रूर्मन्यथाकारप्रतिमाप्रतिमप्रभं** मन्मथा-कारस्येवाकारो यस्य सा मन्मथाकारा । सा च सा प्रतिमा च मन्मथाकारप्रतिमा । तस्य प्रतिमा प्रभा यस्य तत् मन्मथाकारप्रतिमाप्रतिमप्रभम् । यद्वा, मन्मथस्याकार आकरणम् आह्वानं तस्य प्रतिमा सदृशी अप्रतिमप्रभा यस्य तत् तथेत्यर्थः । **कण्ठः सूर्यांशुसदृशः ताम्बूलरसदर्शितः इति** । कण्ठमिति पाठे नपुंस्त्वमार्षम् ।

"स्थिरा त्रिरेखा सुभगोपपन्ना स्निग्धा सुमांसोपचिता सुवृत्ता ।
न चातिदीर्घा चतुरङ्गुला च ग्रीवा च दीर्घा भवतीह धन्या ॥" इत्युक्तलक्षणः ।

अत्रेदं बोध्यम्— उद्यद्रविरश्मिबिम्बभूतरश्मिगर्भाद्रुत जाम्बूनदपुत्तलिकावभासमानपद्मानाड्यः संसृष्टा वा एते रश्मयश्च नाड्यश्च तेषां वियोगो "यावदिदं शरीरम्" इति श्रुतेः । मन्यापुरस्ता-च्छिरासंहतिर्ग्रीवा सैव कण्ठः । अतस्तद्वत् ते निष्ठित्ववृत्तत्वादिना सादृश्यमिति । यद्वा, सूर्यांशुः कौस्तुभः तस्य सदृशः सहजतच्छिह्नितत्वादिति अर्थः । भूचम्पकवत्परमकोमलाङ्गत्वात् ताम्बूलरसस्य क्षारत्वात् लौहित्यद्वारा स्वच्छत्वाद्वा ताम्बूलरसस्य दर्शितं दर्शनं यस्मिन् स तथा । यद्वा, दर्शो दर्शनं तत्सञ्जातोऽस्येति वा इतच् ।

**मूलम्**

**स्तनौ पीनौ घनौ कुब्जौ ब्रह्मणाऽऽस्वादितावुभौ ।**
**उदरं कदलीपर्णसदृशं नवनाभिकम् ॥ ९६ ॥**

**कल्याणकाण्डदीपः**

**स्तनाविति** । **पीनौ** पीवरौ । **घनौ** सान्द्रौ । **कुब्जौ** वामनौ । पुरा । ब्रह्मणाऽऽस्वादितौ । **नवनाभिकं** गम्भीरदक्षिणावर्तनाभिकम् ।

मूलम्

सूक्ष्मं त्रिवलिमध्यं ते रोमराजिविराजितम् ।
कटिस्तव करिध्वंसि कटिसाम्यमनाकुलम् ।
रम्भास्तम्भसमाकारं [1]वरोरुयुगलं रमे ॥ ९७ ॥

१. तवोरुयुगलं ।

कल्याणकाण्डदीपः

**रम्भास्तम्भः** तत्समूलाङ्कुरकन्दः । तदाकारसम आकारो ययोस्तौ तथा । तौ च तौ वरोरू च तथा तयोर्युगलम् ।

मूलम्

पृष्ठं ते वेदिवद्भाति किं तेन सुकृतं कृतम् ।
गमनं करिराजस्य [1]गमनं च विराजते ।
पूर्वार्जितेन पुण्येन लभ्यते [2]सुकृतं विना ॥ ९८ ॥

१. सदृशं ते वरानने । २. सकलं शुभे ।

कल्याणकाण्डदीपः

**पूर्वार्जितेनेति** । एतदुत्तमस्त्रीलक्षणजातं सुकृतं विना न लभ्यते । पूर्वार्जिते पुण्ये सति न लभ्यत इति । न लभ्यत एव । यदेतत् न लभ्यते तत् सुकृतं विनेति वा । **पूर्वार्जितेन पुण्येन लभ्यते** ।

मूलम्

इति सम्भाष्य तां देवीं देवर्षिः पद्मसम्भवाम् ।
अन्तर्दधे नारदस्तु [1]पश्यन्तीनां मुहुर्मुहुः ॥ ९९ ॥

संस्तुत्य कमलां देवीं मनसा चिन्तयन् [2]पदम् ।
मनसा वन्दनं कृत्वा [3]जगामाथ ऋषिस्तदा ॥ १०० ॥

१. सर्वासां पुरतो मुनिः । २. रमाम् । ३. जगाम च ।

**स्तुतिं रमायाः कमलोद्भवायाः**
**ऋषिश्च कृत्वा कमलोद्भवात्मजः ।**
**जगाम सुस्थानमनन्तशैलं**
**नारायणस्यैव मनोहरं शुभम् ॥ १०१ ॥**

*इति श्रीमद्भविष्योत्तरपुराणे वेङ्कटेशमाहात्म्ये*
*षष्ठोऽध्यायः ॥ ६ ॥*

॥ श्रीकृष्णार्पणमस्तु ॥

**कल्याणकाण्डदीपः**

*श्रीमद्भविष्योत्तरपुराणवेङ्कटगिरिमाहात्म्यव्याख्याने कल्याणकाण्डदीपे*
*किरातवर्तिकासम्पादनं नाम षष्ठोऽध्यायः सम्पूर्णः ॥*

**गूढकर्तृकव्याख्यानम्**

पद्माहस्ततलं पश्यन् नारदः एवं वक्ति— "धर्मज्ञे ! देवि ! ब्रह्मादिसकलजगतः स्वामी साक्षात् श्रीनिवास एव तव पतिः भवति । किञ्च, "अम्भोजमुकुलाकारं स्वाङ्गुष्ठाङ्गुलिसम्मुखम् । हस्तद्वयं मृगाक्षीणां बहुभोगाय जायते । चक्रस्वस्तिकशङ्खाब्जध्वजमीनातपत्रवत् । यस्याः पादतले रेखा सा भवेत् क्षितिपाङ्गना" इत्युक्तेः । हे देवि ! तव पाणी पद्मदलयोः कान्तिसमकान्तिमन्तौ । तव पादौ स्वस्तिकाख्यचिह्नेन युतौ । पादतले चक्रचिह्नं स्वस्तिकाचि-हूं-शङ्खचिह्न-पद्म-ध्वज-मीन-छत्र-चिह्नयुक्तौ राजमानौ । मुखं पूर्णचन्द्रवत् सुवृत्तं कान्तिमत् । नेत्रे साचिकमलकुड्मलवत् विशाले । नासिका तिलपुष्पसमाकारा राजते । कपोलौ कनकादर्शसमौ शोभमानौ । भ्रुवौ धनुराकारौ । आस्यं कर्पूर-भाजनमिव स्वभावसुरभि । ललाटं रत्नफलकवत् वैषम्यहीनं कान्तिमत् । दन्ताः दाडिमबीजवत् अन्योन्यं संलग्नाः समाश्च । अधरं रक्तपद्मवत् रक्तम् । जिह्वा मृदुतरा शोभते । कुटिलकुन्तलयुत-कोशपाशः कालसर्पवत् कृष्णः । कर्णौ शष्कुलिकाकारौ । भ्रुवौ मन्मथाकृतिवत् मोहकौ । कण्ठः सूर्यकिरणवत् उज्ज्वलः । भूचम्पकवत् परमकोमलत्वात् ताम्बूलवत् लोहितरसः अवगत इव अति-स्वच्छः । स्तनौ पीनौ घनौ कुब्जौ किञ्च पुरा विधिनाऽऽस्वादितौ । उदरं कदलीपर्णवत् कोमल-कान्तिमत् । नाभिः गम्भीर-दक्षिणावर्तः । कटिः सिंहकटिवत् सूक्ष्मा । ऊरू रम्भास्तम्भवत् सुवृत्तौ पुष्टौ । पृष्ठभागः वेदिवत् समः । मङ्[illegible]कार ! कियत् सुकृतं कृतवती । सर्वशुभलक्षणे राजसे ।

वरानने ! गमनं करिवरगमनमिव गम्भीरम् । पूर्वार्जितपुण्यराशिश्चेत् एतावत् शुभलक्षणानि भवन्ति ।" इत्येवं सम्भाष्य देवर्षिनारदः तां रमारूपां पद्मां संस्तुत्य जगज्जननीत्वात् मनसा ध्यायन् पद्मादि सर्वासां पुरतो अन्तर्दधे ॥

ततः मुनिः श्रीनिवास-आवासं शेषाचलं आजगाम । इति यदंशं शतानन्दमुनिः जनकराजं प्रति निरूपयामास । तदेवांशं सूतः शौनकादिविप्रान् प्रति निरूपयामास ॥

*॥ इति अत्र श्रीमद्भविष्योत्तरपुराणे वेङ्कटगिरिमाहात्म्ये श्रीनिवासकिरातीकरणं, पद्माविषयनिरूपणं, वने नारदेन पद्मायाः शुभलक्षणनिरूपणं नाम षष्ठोऽध्यायः ॥*

॥ श्रीकृष्णार्पणमस्तु ॥



॥ श्रीः ॥

# श्रीमद्भविष्योत्तरपुराणान्तर्गतं

# श्रीवेङ्कटेशमाहात्म्यम्

## ॥ अथ सप्तमाध्यायकथासङ्क्षेपः ॥

### (गूढकर्तृकव्याख्यानानुसारी)

सूतः वदति— पद्मायाः अवतारविषयः, वसुदानोत्पत्तिश्च कथिता । अद्य पद्मापरिणयकथां वच्मि इति । पूर्वोक्तानुसारेण वने पद्माप्रमुखाः वनिताः हयारूढं गजानुरोधिनं श्रीनिवासं ददृशुः । किरातरूपिणं दृष्ट्वा भीताः पद्मादयः तरुमूलं आश्रित्य व्यूहं कृत्वा अतिष्ठन् । अपि तु, मन्मथवत् मोहकरूपं श्रीनिवासं तस्य दिव्याश्वं च पुनः पुनः पश्यन्त्यः ताः गजवरं श्रीनिवासं नत्वा गर्जनेन वनांतरं गतं च अपश्यन् । "अयं किरातरूपी पुरुषः कः ? ईदृशः न भूतो न भविष्यति" इत्यूचुः । पद्मा तु तं श्रीनिवासं सानुरागं लुलोके । सखीः प्रति— "सख्यः । कः सः ? कुत आयातः ? तदीयाः के ? तस्य कुलगोत्रशीलादिकं किम् ? विचारयत" इत्याह । ततः सख्यः— "कोऽसि ? त्वं कुत आयातः ? पुरुषा नात्र । गच्छ गच्छ शीघ्रम्" इत्यवदन् । श्रीनिवासः— "युष्माकं राजपुत्रीसमीपे मम कार्यं अस्ति ।" कन्याः— "किं तव कार्यं, लघु लघु वद, कोऽसि ? कस्तव विचारः ? वद ।" श्रीनिवासः— "कन्यापेक्षा मम मुख्यकार्यम् । मदीयं चन्द्रकुलम् । वसुदेवः जनकः । देवकी जननी । अग्रजो बलः । भगिनी सुभद्रा । पार्थः श्यालकः । पाण्डवा बन्धवः । श्रावणकृष्णअष्टम्यां जातः । माता कृष्णा । अतो मां कृष्णं वदन्ति । इतः राजपुत्रीनामगोत्रादिकं उच्यताम् । पद्मा वदति— "किरातेन्द्र ! अहं आकाशराजपुत्री । नाम पद्मावती इति । चन्द्रकुलम् । अत्रिगोत्रम् । पुनः किम् ? द्रुतं गच्छ ।" श्रीनिवासः— "कुतो निष्ठुरं वदसि ? गच्छ गच्छ इति । लोकः अन्नार्थिने अन्नं ददाति, जलार्थिने जलम्, अद्य अहं कामार्थी पात्रभूतः मे त्वां देहि । न किमपि अत्र अयुक्तम् । निष्ठुरोक्तिः माऽस्तु ।" पद्मा— अवाच्यं मा वद मूढ ! अन्यथा राज्ञा कारायां बध्यसे ?" श्रीनिवासः— "अहं वरः । त्वं कन्या । धर्मात्मा आकाशः । निरपराधिनं मां कथं हन्यात् ? एतदुपरि "कार्यान्ते मरणं सुखम्" ईति निश्चिनोमि ।" पद्मा— "किरातेन्द्र ! नृपस्य वराहवेङ्कटेशयोः

गौरवं ते । अनाथवत् वृथा म्रियसे ।" श्रीनिवासः— "भवितव्यं भवतु । अत्र किमपि अकार्यं क्रियते वा ? नैव । जयो वा अपजयो वा भवतु । त्वयि भोगं करोम्येव ।" पद्मा हयस्थमेव स्वां उपगतं दृष्ट्वा शिलाभिः उपरि उपरि ताडयामास । तदा शिलावर्षैः ताडितं भूमौ निपत्य मृतं हयं दृष्ट्वा श्रीनिवासः अभ्रमद्विभ्रमन्निव दिशः पश्यन् उत्तरदिङ्मुखो ययौ ॥

ततः श्रीनिवासः सोपानैः शेषाचलं आरुह्य आधि-व्याधि-सन्तापादि सकलदोषवर्जितोऽपि स्वयं नित्यानन्दोऽपि परमात्मा श्रीनिवासः संसारदुःखदुःखितप्राकृतमनुजवत् वल्मीके शयने यथा युगान्ते मुकुन्दः वटपत्रे शेते तथा शिश्ये । इत्येवं पद्मायाः श्रीनिवासापजयं इत्येवमंशं यं शतानन्दः जनकं प्रति निरूपयामास तदेव वर्णनं सूतः शौनकादिविप्रान् प्रति निरूपयामास ॥

*इति श्रीमद्भविष्योत्तरपुराणे श्रीवेङ्कटेशमाहात्म्ये सप्तमाध्यायकथासङ्क्षेपः ॥*

॥ श्रीकृष्णार्पणमस्तु ॥



॥ श्रीः ॥

## श्रीमद्भविष्योत्तरपुराणान्तर्गतं

# श्रीवेङ्कटेशमाहात्म्यम्

## अथ सप्तमोऽध्यायः

**मूलम्**

**पद्मावत्याः पुष्पापचयसमये श्रीनिवासदर्शनम्**

**सूत उवाच—**

**कन्याया जननं प्रोक्तं कुमारस्य विशेषतः ।**
**साङ्गं वदामि चारित्र्यं वैवाहं पुण्यवर्धनम् ॥ १ ॥**

**कल्याणकाण्डदीपः**

श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

देवाय वेङ्कटपते सततं नमस्ते सेवापरेषु सुतरां करुणाकराय ।
दावानलाय महते दनुजाटवीनां श्रीवासवक्षसि धृतोत्तमकौस्तुभाय ॥

सप्तमे व्याख्येयानि व्याक्रियन्ते—

**वैवाहं चारित्र्यं** विवाहात्मकं चरितम् । "आचारश्चरितं वृत्तं चारित्र्यं चरितं च तत्" इति वैजयन्ती ।

**मूलम्**

**करीन्द्रसङ्गेन समागतो हरि-**
**स्तुरङ्गमास्थाय वराङ्गनानाम् ।**
**श्रीगन्धलिप्तोद्यदनेकभानु-**
**समाननं साधुसमीपमाशु ॥ २ ॥**

**कल्याणकाण्डदीपः**

**श्रीगन्धेत्यादि** । श्रीगन्धलिप्तश्चासौ उद्यदनेकभानुसमाननश्च स तथा ।

**मूलम्**

**गर्जन्तं गजराजानं दृष्ट्वा पद्मावतीमुखाः ।**
**वनस्पतिमुपाश्रित्य तत्र लीना बभूविरे ।**
**निमील्य नेत्रवर्त्मानि व्यूहं कृत्वा वराङ्गनाः ॥ ३ ॥**

**कल्याणकाण्डदीपः**

पूर्वेण सङ्गम्येतद्विशदयति— **गर्जन्तम्** इत्यादिना **नदन्** इत्यन्तेन । गर्जन्तं गजराजानं दृष्ट्वा पद्मावतीमुखाः **वराङ्गनाः** प्रशस्ताङ्गयोगादङ्गनाः, अङ्गात् कल्याण इति पामादित्वान्नः । उत्तमस्त्री-विशेषाः । **वनस्पतिम्** अपुष्पात्फलं न्यग्रोधादन्यतमं वृक्षम् । **उपाश्रित्य** अवलम्ब्य । **व्यूहं** पद्मव्यूहं कृत्वा **नेत्रवर्त्मानि** नेत्रच्छदान् । **निमील्य** आकुच्य । तत्र वनस्पतिमूले । लीना बभूविरे इति योजना ।

अयं भावः— आरामस्य परितः परिखावलयप्रसङ्क्रमैर्गजदुर्गमान्तःप्रवेशत्वेऽपि, वनगजराज-दर्शनभीत्या ज्वरो मा भूदिति नेत्रनिमीलनम् । श्रीनिवासतुरङ्गस्य तु सङ्क्रमद्वारेणान्तःप्रवेशः इति ।

**मूलम्**

**पश्येति पुनरागच्छन् पुनर्दृष्ट्वा पुनःश्रयाः ॥ ४ ॥**

**कल्याणकाण्डदीपः**

तथाप्यव्यवस्थितमतयस्त्रिय इत्यत आह— **पश्येति** । "पश्य इति" इति छेदः । 'उक्त्वा' इति शेषः । वनगजोऽयं यथाऽस्ति यत्रागच्छति यत्र गच्छति तं त्वं पश्य त्वं पश्येति पुनः पुनरुक्त्वा । व्यूहं भित्वा पुनः पुनः बहिरागच्छन् । पुनः पुनर्दृष्ट्वा **पुनःश्रयाः** श्रयन्त इति श्रयाः । कर्तरि पचाद्यच् । पुनः पुनः वनस्पतिमूलाश्रया अभूवन्निति शेषः ।

'दृश्येति' इति पाठे 'दृश्य इति' इति छेदः । अविभक्तिकः । ऋदुपधादिनाऽर्हे क्यप् । दर्शनार्ह इत्यर्थः ।

यद्वा, दृश्येति समस्तम् । दृश्यः इति दृश्येति इति विग्रहः । बुध्येति शेषः । दर्शनार्हत्व-प्रकारकबुद्ध्येत्यर्थः । अव्ययोत्तरपदः । योजना तूक्तैव ।

**मूलम्**

**तदन्तरेऽबलाः सर्वा ददृशुर्हयमुत्तमम् ।**
**बालार्कसदृशाकारं सर्वाभरणभूषितम् ।**
**पुरुषेण समायुक्तं मन्मथाकारतेजसा ॥ ५ ॥**

**कल्याणकाण्डदीपः**

ततः किमभूत् ? इत्यत आह— **तदन्तर** इत्यादिना **तेजसा** इत्यन्तेन । **तदन्तरे** तत्पश्चात् । व्यवधानेन सर्वाभरणभूषितं हयम् ।

**मूलम्**

**तं दृष्ट्वा इभराजोऽपि हयस्थं पुरुषोत्तमम् ।**
**नमस्कृत्वा यथान्यायं जगाम विपिनं नदन् ॥ ६ ॥**

**कल्याणकाण्डदीपः**

ततः किमभूदित्यत आह— **तम्** इत्यादिना **नदन्** इत्यन्तेन । **इभराजोऽपि** ऐरावतोऽपि । **हयस्थं पुरुषोत्तमं** पुरुषसारं तं श्रीनिवासं दृष्ट्वा । **यथान्यायं** यथाराजोचितम् । **नमस्कृत्वा** पुरतोन्यग्भूय शुण्डामुद्यम्य विदौ कृत्वा । तदनु । हरे त्राहीत्यर्थसूचकं गर्जनं कुर्वन् । विपिनं यथा मनः जगाम इत्यर्थः ।

**मूलम्**

**तं दृष्ट्वा योषिताः सर्वा विस्मयाकुलमानसाः ।**
**करसम्पुटमापन्ना चकितात्मभयातुराः ॥ ७ ॥**

**कल्याणकाण्डदीपः**

ततः किम् ? इत्यत आह— **तं दृष्ट्वा** इत्यादिना **अब्रुवन्** इत्यन्तेन । तं तादृशं गजत्रातारं दृष्ट्वा सर्वा योषितः **विस्मयाकुलमानसाः** अपूर्वरम्यपुरुषदर्शनेन विकासविशिष्टमनस्काः । **करसम्पुटमापन्नाः** इदानीमागमनमित्येदनुचितमभूदिति करसङ्घर्षणं कुर्वन्त्यः सत्यः । **चकितात्मभयातुराः** । चकितमेवात्मस्वरूपं यस्य तच्चकितात्म तच्च तत् भयं च चकितात्मभयम्, तेनातुराः । अभ्यान्ताः वेपमानाः अभूवन्निति शेषः ।

अत्रेदं ज्ञेयम् । भयलज्जोत्कण्ठाभिरसकृन्निमीलनोन्मीलना वृत्तिः चकितम् । तदुक्तम्— "मीलनोन्मीलना वृत्तिर्यत्र तच्चकितं विदुः" इति । "चकितं भयसम्भ्रमः" इति चान्यत्र । भयं च अपरिचितपुरुषागमनात् पद्मामपहरेदित्यनर्थाशङ्कनात् । लज्जा नाम मदनाभिलाषादिभिः मनःसङ्कोचः । अन्यासङ्गेन अनिमिषेण च तृष्णानुगुणासेचनकमिमं दृष्ट्वा आत्मनो जीवितस्य नयनानां च साफल्यं सम्पादयाम इत्यादयोऽभिलाषाः । तैर्हेतुभिस्तथालोकनोत्कण्ठा । ताभिरसकृदावृत्तानि निमीलनोन्मीलनानि जातानि । यद्वा, चकिताश्च आत्मभयातुराश्च प्राणभयातुराश्चेति वा अर्थः ।

### गूढकर्तृकव्याख्यानम्

सूत एवं वदति शौनकादयः एतावत् रमास्वरूप-पद्मा-अवतारकथां तदागमनमहिम्ना आकाशस्य वसुदानाख्यसुतोत्पत्तिकथां अवदम् ॥ अद्य यस्य श्रवणेन पुण्यकीर्तयो वर्धन्ते तादृशपद्माकल्याण-चरित्रं साङ्गं कथयामि । यदा श्रीनिवासः किरातरूपी अरुणचन्दनगन्धलिप्तहृदयः उद्यद्रविरिव राजमानः वायुतुरगमास्थाय करिराजं विपिनं अनुद्रवन् दूरं दूरं गच्छन् अन्ते यत्र पद्मादि योषितः वने स्थिताः तद्देशं जगाम । तदा करिराजः श्रीनिवासेन अनुरुद्ध्यमानः गर्जन् अस्ति । तद्गर्जनं श्रुत्वा पद्मादयः भीताः कञ्चित् वृक्षमूलप्रदेशं अवलम्ब्य तत्र सर्वा लीनाः । नेत्रच्छदान् आकुच्य पद्मव्यूहं कृतवत्यः । पद्म-कर्णिकावत् व्यूहमध्ये पद्मा स्थिता । पद्मदलवत् इतराः आवरणत्वेन स्थिताः । तरुच्छन्नदेशात् दूरे गर्जन्तं गजराजं किरातरूपिणं श्रीनिवासं पुनः पुनः पश्यन्त्यः व्यूहं भित्त्वा करिराजं द्रष्टुं गच्छन्त्यः पुनः व्यूहदेशं श्रयन्त्यः कञ्च हयं ददृशुः ।

उद्यत्सूर्यसदृशः रत्नाभरणालङ्कृतः अस्ति अश्वः । ईदृशहयं मन्मथवत् दिव्यरूपलावण्ययुक्तः पुरुषश्रेष्ठः हयमारूढवान् । तदा गजराजः हयारूढं श्रीनिवासं दृष्ट्वा राजानमिव श्रीनिवासपुरतः न्यग्भूय शुण्डां उद्यम्य एतद्द्वारा नमनं सूचयन् तदनु "श्रीहरे ! त्राहि त्राहि" इत्यर्थसूचकगर्जनं कुर्वन् विपिनान्तरं ययौ ।

### मूलम्

**वृक्षमूलं गता बाला अन्योन्यं वाक्यमब्रुवन् ॥ ८ ॥**

### कल्याणकाण्डदीपः

ततः किम् अभूत् ? इत्यत आह— वृक्षमूलमिति ।

### मूलम्

**[१]कथमत्र वरारोहे सखे कमललोचने।**
**कोऽसौ किरातरूपी च न दृष्टो भवतां पुनः ॥ ९ ॥**

१. कोऽयमत्र।

### कल्याणकाण्डदीपः

अन्योन्यं वाक्यमब्रुवन्। अस्य नास्मासु दृष्टिः। अपि तु पद्मायामेव। अतस्तामपहरेदिति। अथ पद्मां प्रत्यूचुरित्याह— **कथम्** इत्यादिना **लोचन** इत्यन्तेन। हे **वरारोहे सखे** हे पद्मे त्वं कमललोचने निरातङ्केवासि। **अत्र** किरातागमने। कथं कर्तव्यम् इति वाक्यम् अब्रुवन्नित्यनुषङ्गः।

अथ पद्मोवाच— **कोऽसौ** इत्यादिना **पुनः** इत्यन्तेन। **चो** वार्थे। भूप्राप्तावात्मनेपदी। असौ दूरे मृगयां जिगमिषुः। **किरातरूपी** शबरसखः कश्च। यो वा को वा भवेत्। परन्तु, भवतीभिर्दृष्टः सन्। **पुनः** पुनरावृत्त्या **न भवताम्** नो न प्राप्नुयादित्यर्थः। यद्वा, भवतामिति पुंस्त्वमार्षम्। पुनः विशेषेण **भवतां** भवतीनां दृष्टो नेत्यर्थः। राज्ञां मत इत्यनेन षष्ठ्युपपत्तिः।

अयं भावः— सोऽयं गजवत गमनं गच्छतु। परन्तु भवतीभिश्चकितचकितोदञ्चितदृग्भिः दृष्टः सन् अन्यत्र गच्छन्नप्याहूत इवानेनायातीति। अतो नेत्राणि निमील्य तूर्ष्णीं स्थातव्यमिति परमार्थः।

### मूलम्

**तुरगोपरि संस्थाय आगमिष्यति हे सखे।**
**एवं वदन्त्यस्तत्सख्यः सा च पद्मावती शुभा।**
**उवाच मन्दवचनं सखीनामग्रतो द्विजाः ॥ १० ॥**

### कल्याणकाण्डदीपः

एवमुक्ताऽपि सख्यो वशादन्यथा कुर्वन्त्य आसुः। श्रीनिवासोऽप्याहूत इवाजगाम। अथातः सख्य ऊचुरित्याह— **तुरगोपरि** इत्यादिना। नान्यत्र गच्छति। किं तु, अस्मान् प्रत्यागमिष्यतीति। तत्सख्यः एवं वदन्त्यः सा च शुभा पद्मावती। सखीनामग्रतः। न तु साक्षात्। मन्दवचनम्। आन्तरङ्गिकोऽनुरागो न बहिरङ्गको भवेदिति शनैः वाक्यमुवाच किमिति।

मूलम्

**पद्मावत्युवाच—**

**शृण्वन्तु तस्य वृत्तान्तं पितृमातृसबान्धवान्।**
**देशं वृत्तं कुलं शीलं नामगोत्रादिकं तथा ॥ ११ ॥**

**कल्याणकाण्डदीपः**

अतः कामं गच्छतु मा भैष्टेति धैर्यमापादयन्ती सत्युवाचेत्याह— **शृण्वन्तु** इत्यादिना **तथा** इत्यन्तेन । आदौ **वृत्तान्तं** प्रस्तुतकार्यम् । शृण्वन्तु । "वृत्तान्तः स्यात् प्रकरण" इत्यमरः । अथ **गोत्रादिकम्** । गोत्रमादिप्रथमं श्रोतव्यं यस्य कुलादेस्तद्गोत्रादि तदेव तत्कम् । अथ कुलं **शीलं** स्वभावम् । **वृत्तं** सदाचारं जीवनं वर्तनं वा । देशनाम । अथ **पितृमातृसबान्धवान्** पिता च माता च सबान्धवाश्च तान् । **सबान्धवाः** समानाश्च ते बान्धवाश्च सबान्धवाः । ज्योतिर्जनपदेत्यादिना समानस्य सः । पितृसबान्धवाः भ्रात्रादयः । मातृसबान्धवाः भगिन्यादयः इत्यादि । **शृण्वन्तु** पृच्छत ।

**गूढकर्तृकव्याख्यानम्**

यदा सः दूरं ययौ तदा पुरुषोत्तमं श्रीनिवासं योषितः स्वसमीपमागच्छन्तं ददृशुः । अश्रुतदृष्टपूर्वः अतिमनोहररूपः पुरुषः । तं द्रष्टुं कुतूहलिन्यः । अपि तु, अपरिचितपरपुरुष इति भयम् । भयेन वेपमानाः । नेत्रे निमीलन्ति उन्मीलन्ति । "आगत्य पद्मां अपहरेत् । अनर्थः कः स्यात्" इति शङ्किताः वनिताः भीता अपि तदुज्ज्वलरूपावलोकनकाङ्क्षिण्यः भयाभिलाषमध्ये इतिकर्तव्यतामूढाः करसङ्घर्षणं कुर्वन्त्यः मनश्चाञ्चल्येन इतस्ततः चलन्ति ।

पद्मामेव पश्यन्तं श्रीनिवासं दृष्ट्वा "पद्मां हरेत्" इति मत्वा पद्मां पृच्छन्ति— "सखि पद्मे । आगच्छन् पुरुषः कः ? किरात इव भाति । एतत् सुन्दररूपं न दृष्टं न वा द्रक्ष्यमाणम् । अत्र आगतश्चेत् किं कर्तव्यम्" इति । तदा श्रीनिवास आहूत इव आजगामैव । तदा पद्मा श्रीनिवासदर्शनेन तस्मिन् जातानुरागः । अपि तु, स्वान्तरङ्गं अनाविष्कृत्य सखीः प्रति "सख्यः ! मा भैष्ट । आगतः कः ? आगमनोद्देशः कः ? तस्य किं नाम ? तस्य कुल-शील-वृत्त-गोत्रादिकं किम् ? तस्य जीवनवृत्तिः केन ? मातापितरौ कौ ? पितृमातृबान्धवाः के ? इत्यादि पृच्छत" इति आदिदेश ।

मूलम्

**इति सख्या समाज्ञप्तास्ता ऊचुर्वचनं स्त्रियः ॥ १२ ॥**

**कल्याणकाण्डदीपः**

इति सख्या **समाज्ञप्ताः** धृष्टमाज्ञप्ताः ।

**मूलम्**

**कन्या ऊचुः—**

**आगतं पुरुषं दृष्ट्वा कोऽसि कोऽसीति चाब्रुवन् ।**
**किमर्थमागतोऽसि त्वं किं ते कार्यं वद प्रभो ।**
**न सन्ति पुरुषा ह्यत्र गच्छ गच्छेति चाब्रुवन् ॥ १३ ॥**

**कल्याणकाण्डदीपः**

कोऽसि कोऽसीति सम्भ्रमात् द्विर्वचनम् । वृत्तान्तं पृच्छति— **किमर्थमिति** । कस्मै प्रयोजनाय **किमर्थं आगतोऽसि** इहागतोऽसि तस्मै प्रयोजनाय गच्छ गच्छेति चाब्रुवन् । पीडायां द्विर्वचनम् । हे किरात, **अत्र** अस्मिन्नारामे **पुरुषाः** पुमांसः केऽपि न सन्ति । केवलमङ्गना एव स्मः । एतस्मिन् स्थाने **ते** तव तरुणस्य किं कार्यम्, वद । अथ सस्मितं मुखं दृष्ट्वा आहुः— **प्रभो इति** । त्वं **प्रभुः** बहुसमर्थ इत्यब्रुवन् । अस्माकं कामिनीनां देशकालावस्थावशात् पीडा भवति । अतो गच्छ गच्छ ।

**मूलम्**

**तासां तद्वचनं श्रुत्वा हयस्थोवाच ताः प्रति ।**

**श्रीनिवास उवाच—**

**अस्ति कार्यं वरारोहा राजपुत्र्याः समीपके ॥ १४ ॥**

**कल्याणकाण्डदीपः**

**तासामिति** । युष्माकं पीडा चेत् यूयमेव दूरं गच्छथ । न मे । यूयं दृष्टिपथे स्थिताः । अपि तु, हे वरारोहाः । मत्तकामिन्यः राजपुत्र्याः समीपके एव गोप्यं कार्यमस्ति । बहिर्वाचा न वक्तव्यम् । मनस्यन्तर्वर्तत इति भावः ।

**मूलम्**

**इति तस्य वचः श्रुत्वा सख्यस्ताः पुनरब्रुवन् ।**

**कन्या ऊचुः—**

**किं कार्यं वद शीघ्रेण यत्ते मनसि वर्तते ॥ १५ ॥**

**कल्याणकाण्डदीपः**

यत् ते मनसि वर्तते कार्यं तत् किं, शीघ्रेण वद । किं च यत् ते मनसि वर्तते कार्यं परिणीय इदानीमेव । एतत्तुरगमारोह्य गमनलक्षणं कार्यम् । शीघ्रेण अविलम्बेन कालेन इदानीमेव कार्यं कर्तुमर्हं भवितव्यं किम् ? त्वमेव वद । "क्लीबे शीघ्राद्यसत्वे स्यात् त्रिष्वेषां भेद्यगामि यत्" इत्यमरः ।

**मूलम्**

**क्व ते वासश्च किं नाम का ते माता च कः पिता ।**
**क्व ते भ्राता च भगिनी किं कुलं गोत्रमेव च ॥ १६ ॥**

**कल्याणकाण्डदीपः**

किं च, तथात्वेऽपि यतो लोकशास्त्रावगतमाङ्गलिकाचारसामग्रीसम्पत्त्या मङ्गलसम्पत्तिः । अतः पृच्छाम इत्यतः पृच्छध्वमित्युक्ते आहुः इत्याह— **क्व त** इत्यादिना **गोत्रमेव च** इत्यन्तेन ।

किन्नाम "क्व ते माता च कः पिता । क्व ते भ्राता च भगिनी । किं कुलं गोत्रमेव च" इत्येव पाठः । अर्थान्तरस्यापि विवक्षितत्वात् । अतो यत्रार्थे यत्पदाकाङ्क्षा तत्र तदभावे तदध्याहारः । अतस्तत्तदर्थे क्वचिच्छ्रुतं परित्यज्य अश्रुतमध्याहृत्य योजना बोध्या । **गोत्रमेव च** गोत्रमेव पूर्वं मुख्यतः श्रोतव्यम् । तदेव च । **ते** तव किं कुलम् । किं शीलम् । किं वृत्तम् । का च भगिनी मातृ-सबान्धवाः । कश्च पितृसबान्धवो भ्राता । कः पिता । का च माता । **क्व ते वासः** । "सद्म वासः कुटी द्वयोः शाल" इत्यमरः । किं नाम इति । इत्येतान् प्रश्नार्थान् त्वं शीघ्रेण वद इति पूर्वेण अन्वयः ।

**मूलम्**

**इति तासां वचः श्रुत्वा न्यगदज्जगदीश्वरः ।**

**गूढकर्तृकव्याख्यानम्**

तदाज्ञया सख्यः "अयि किरातरूपिन् ! कस्त्वं कस्त्वम् ? किमुद्देशेन आगतः ? किं तव कार्य-मत्र ? अत्र पुरुषा न सन्ति । अङ्गना एव सन्ति" इत्यूचुः । तदा सस्मितं दृष्ट्वा, "प्रभो ! किं तव कार्यं अत्र ? वद" इति पप्रच्छुः ।

**कल्याणकाण्डदीपः**

इति सख्या **समाज्ञप्ताः** धृष्टमाज्ञप्ताः ।

**मूलम्**

**कन्या ऊचुः—**

**आगतं पुरुषं दृष्ट्वा कोऽसि कोऽसीति चाब्रुवन् ।**
**किमर्थमागतोऽसि त्वं किं ते कार्यं वद प्रभो ।**
**न सन्ति पुरुषा ह्यत्र गच्छ गच्छेति चाब्रुवन् ॥ १३ ॥**

**कल्याणकाण्डदीपः**

कोऽसि कोऽसीति सम्भ्रमात् द्विर्वचनम् । वृत्तान्तं पृच्छति— **किमर्थमिति** । कस्मै प्रयोजनाय किमर्थं **आगतोऽसि** इहागतोऽसि तस्मै प्रयोजनाय गच्छ गच्छेति चाब्रुवन् । पीडायां द्विर्वचनम् । हे किरात, **अत्र** अस्मिन्नारामे **पुरुषाः** पुमांसः केऽपि न सन्ति । केवलमङ्गना एव स्मः । एतस्मिन् स्थाने **ते** तव तरुणस्य किं कार्यम्, वद । अथ सस्मितं मुखं दृष्ट्वा आहुः— **प्रभो इति** । त्वं प्रभुः बहुसमर्थ इत्यब्रुवन् । अस्माकं कामिनीनां देशकालावस्थावशात् पीडा भवति । अतो गच्छ गच्छ ।

**मूलम्**

**तासां तद्वचनं श्रुत्वा हयस्थोवाच ताः प्रति ।**

**श्रीनिवास उवाच—**

**अस्ति कार्यं वरारोहा राजपुत्र्याः समीपके ॥ १४ ॥**

**कल्याणकाण्डदीपः**

**तासामिति** । युष्माकं पीडा चेत् यूयमेव दूरं गच्छथ । न मे । यूयं दृष्टिपथे स्थिताः । अपि तु, हे वरारोहाः । मत्तकामिन्यः राजपुत्र्याः समीपके एव गोप्यं कार्यमस्ति । बहिर्वाचा न वक्तव्यम् । मनस्यन्तर्वर्तत इति भावः ।

**मूलम्**

**इति तस्य वचः श्रुत्वा सख्यस्ताः पुनरब्रुवन् ।**

**कन्या ऊचुः—**

**किं कार्यं वद शीघ्रेण यत्ते मनसि वर्तते ॥ १५ ॥**

**कल्याणकाण्डदीपः**

यत् ते मनसि वर्तते कार्यं तत् किं, शीघ्रेण वद । किं च यत् ते मनसि वर्तते कार्यं परिणीय इदानीमेव । एतत्तुरगमारोह्य गमनलक्षणं कार्यम् । **शीघ्रेण** अविलम्बेन कालेन इदानीमेव कार्यं कर्तुमर्हं भवितव्यं किम् ? त्वमेव वद । "क्लीबे शीघ्राद्यसत्वे स्यात् त्रिष्वेषां भेद्यगामि यत्" इत्यमरः ।

**मूलम्**

**क्व ते वासश्च किं नाम का ते माता च कः पिता ।**
**क्व ते भ्राता च भगिनी किं कुलं गोत्रमेव च ॥ १६ ॥**

**कल्याणकाण्डदीपः**

किं च, तथात्वेऽपि यतो लोकशास्त्रावगतमाङ्गलिकाचारसामग्रीसम्पत्त्या मङ्गलसम्पत्तिः । अतः पृच्छाम इत्यतः पृच्छध्वमित्युक्ते आहुः इत्याह— **क्व त** इत्यादिना **गोत्रमेव च** इत्यन्तेन ।

किन्नाम "क्व ते माता च कः पिता । क्व ते भ्राता च भगिनी । किं कुलं गोत्रमेव च" इत्येव पाठः । अर्थान्तरस्यापि विवक्षितत्वात् । अतो यत्रार्थे यत्पदाकाङ्क्षा तत्र तदभावे तदध्याहारः । अतस्तत्तदर्थे क्वचिच्छ्रुतं परित्यज्य अश्रुतमध्याहृत्य योजना बोध्या । **गोत्रमेव च** गोत्रमेव पूर्वं मुख्यतः श्रोतव्यम् । तदेव च । **ते** तव किं कुलम् । किं शीलम् । किं वृत्तम् । का च भगिनी मातृसबान्धवाः । कश्च पितृसबान्धवो भ्राता । कः पिता । का च माता । क्व ते **वासः** । "सद्म वासः कुटी द्वयोः शाल" इत्यमरः । किं नाम इति । इत्येतान् प्रश्नार्थान् त्वं शीघ्रेण वद इति पूर्वेण अन्वयः ।

**मूलम्**

**इति तासां वचः श्रुत्वा न्यगदज्जगदीश्वरः ।**

**गूढकर्तृकव्याख्यानम्**

तदाज्ञया सख्यः "अयि किरातरूपिन् ! कस्त्वं कस्त्वम् ? किमुद्देशेन आगतः ? किं तव कार्यमत्र ? अत्र पुरुषा न सन्ति । अङ्गना एव सन्ति" इत्यूचुः । तदा सस्मितं दृष्ट्वा, "प्रभो ! किं तव कार्यं अत्र ? वद" इति पप्रच्छुः ।

ततः हयस्थित एव श्रीनिवासः— "मत्तकाशिन्यः ! युष्माकं पीडा चेत् यूयं गच्छत । कुतोऽहं गच्छेयम् ? इष्टं चेत् दूरं गच्छत । युष्मान् नापश्यम् । युष्मद्-राजपुत्रीसमीपे मे एकं कार्यं अस्ति । तत्तु गोप्यम् । वाचा न वक्तव्यम् ।"

सख्यः— "किं तत् कार्यम् ? किं तत्कार्यम् ? प्रथमं वद । (मनसि) राजपुत्रीसमीपे तरुणस्य तव कार्यं ज्ञातमेव । अद्यैव पद्मां तुरगमारोप्य गमनमेव । पुनः किम् । (प्रकटं) पुरुषोत्तम ! किं ते मनसि अस्ति । लघु वद । प्रभो ! प्रष्टव्यं इति पृच्छामः । किमपि त्वां पृच्छामः ।"

श्रीनिवासः— "तथाऽस्तु । पृच्छत ।"

सख्यः— "पुरुषवर, तव वासः कुत्र ? लोकपूज्य ! तव सुगृहीतनाम किम् ? तव माता का ? पिता कः ? भ्रातरः के ? भगिन्यः काः ? तव कुलं, गोत्रं किम् ?

**मूलम्**

**पद्मावतीश्रीनिवासयोः परस्परसंवादः**

**श्रीनिवास उवाच—**

**कन्यावेक्षा मुख्यकार्यं तदन्ते प्रवदामि वः ॥ १७ ॥**

**कल्याणकाण्डदीपः**

**कन्यावेक्षा** । कन्यायाः **अवेक्षा** अवलोकनम् । कन्याया इति षष्ठी कर्मणि कर्तरि च । तथा च । कन्यावलोकनाख्यं कर्म मुख्यकार्यम् । **तदन्ते** तदग्रे यन्मे मनसि वर्तते ते कार्यं तत् प्रवदामीति योजना ।

यद्वा, कन्यावेक्षा कन्यावरयोः परस्परकर्तृकं परस्परकर्मकं रूपसौन्दर्यलक्षणाद्यवलोकनम् । **मुख्यकार्यं** प्रधानकार्यं आदौ कर्तव्यम् । तदिदानीं जातमिवाभूवन् । यत् रतिपात्रताङ्गम् । अन्यत् गोत्रादिकं कुलादि । **तदन्ते** तदग्रे तदुपरीति यावत् । व्यवधानेन परीक्षणीयम् । तदपि । **प्रवदामि** वो युष्मान् प्रति प्राचां प्रवादसिद्धं वदामि । "अन्तोऽस्त्री निश्चये नाशे स्वरूपेऽग्रेऽन्तिकेऽन्तरे" इति रत्नमाला ।

**मूलम्**

**(इति ताः प्रोच्य चोवाच देवीं पद्मावतीमथ ।)**

सिन्धुपुत्रकुलं प्राहुरस्माकं तु पुराविदः।
जनको वसुदेवश्च देवकी जननी मम ॥ १८ ॥

अग्रजः श्वेतकेशश्च सुभद्रा भगिनी मम।
पार्थो मे शालको देव्यः पाण्डवाः मम बान्धवाः ॥ १९ ॥

**कल्याणकाण्डदीपः**

**सिन्धुपुत्रकुलमिति**। अस्माकं **पुराविदः** पुराणवेत्तारः **अस्माकं** सिन्धुपुत्रकुलं प्राहुः। श्वेतकेशः शुक्लकेशांशः। **शालकः** पितृष्वसा, श्वश्रुः। अतस्तत्सुतः शालकः। अतो नामयोरविरोधः।

**मूलम्**

षण्णां तु मृतपुत्राणां कृतनाम्नां महात्मनाम्।
तेषां वियोगसन्तप्तौ सप्तमं राममेव च।
चक्रतुर्नामकरणं पितृलिङ्गमुपागतम् ॥ २० ॥

**कल्याणकाण्डदीपः**

अथ श्रीनिवासः प्रवृत्तिनिमित्तकथनपूर्वकं स्वनाम वक्तुं स्वनामनिमित्ततया अग्रजनामप्रवृत्तिनिमित्तकथनपूर्वकमाह— **षण्णाम् इत्यादिना उपागतम्** इत्यन्तेन।

ये मम पूर्वजाः आसुः, तेषां मुनित्वात् महात्मनां **कृतनाम्नां** कृतं नाम नामकरणं येषां ते तथा तेषाम्। कृतनाम्नां कीर्तिमान् स्मरोऽद्रीथः परिष्वङ्गः पतङ्गः क्षुद्रतृट्घणीत्येवं कृतनामकरणानाम्। तदुक्तं दशमे सप्ततितमेऽध्याये "स्मरोऽद्रीथः परिष्वङ्गः पतङ्गः क्षुद्रतृट्घृणी" इति। अत्रैव द्वितीये "कीर्तिमन्तं प्रथमजम्" इति। षण्णां मृतपुत्राणां वियोगजदुःखसन्तप्तौ सन्तौ सप्तमं रामं रामो विरामः स च अवसानं तद्ध्वभावः। स चात्यन्ताभावः सदाऽस्तीति हेतोः। निमित्तान्तरमाह— **पित्रित्यादिना**। **पिता** वसुदेवः। तस्य **लिङ्गं** चिह्नं गौरो वर्णः तमुपागतमिति हेतुविशेषणम्। सिते रामशब्दोऽस्ति। राम इति नाम अस्मिन् कर्मणि अस्तीति रामनामकरणम्। **चक्रतुः** कारयामासुः।

**मूलम्**

जातोऽहमष्टमोऽष्टम्यां सुभद्रा मदनन्तरम्।
मातृवर्णं च मां देव्यां कृष्णपक्षे जनिर्मम।
तस्मात् कृष्णेति मां देव्यश्चक्रतुर्नाम संस्कृतम् ॥ २१ ॥

**कल्याणकाण्डदीपः**

स्वनामप्रवृत्तिनिमित्तमाह— **मात्रित्यादिना** । हे देव्यः, शृणुत । **देव्यां** देवरूपिण्यां देव-क्याम् । कृष्णपक्षे मम **जनिः** प्रादुर्भावः । तादृशम् । तथा । माता देवकी सा कृष्णवर्णा, तद्वर्णो यस्य स तथा । तादृशं च मां दृष्ट्वा । अथ **तस्मात्** यस्मात् कृष्णपक्षजनिविशिष्टः कृष्णवर्णः तस्मात् । कृष्णं कृष्णनामवत् नामकरणं नामाख्यकर्मप्रेरणं नन्दगोपयशोदे चक्रतुः । कृष्णस्य रामपूर्वत्वात् चेत्यपि द्रष्टव्यम् ।

**मूलम्**

**वर्णतो नामतश्चापि कृष्णं प्राहुर्मनीषिणः ॥ २२ ॥**

**वृत्तान्तमखिलं प्रोक्तं श्रुतं पण्डितनन्दनाः ।**
**युष्माकमुच्यतां वार्ता गोत्रनामकुलादिकम् ॥ २३ ॥**

**कल्याणकाण्डदीपः**

निगमयति— **वर्णत इत्यादिना** । **हे पण्डितनन्दनाः** ! बुद्धिशालिन्योऽङ्गनाः । मे अखिलं वृत्तान्तं युष्माभिः श्रुतम् । युष्माकं वार्ता गोत्रनामकुलपूर्वकं यथा स्यात् तथा मह्यमुच्यतामित्यन्वयः ।

**मूलम्**

**इति तेन समाज्ञप्ता उवाच नृपनन्दिनी ॥ २४ ॥**

**कल्याणकाण्डदीपः**

इति **तेनेति** । समाज्ञप्ता सखीजनद्वारा सन्दिष्टा ।

**गूढकर्तृकव्याख्यानम्**

श्रीनिवासः— कन्या-अवलोकनं एव मदुद्दिष्टकार्यम् । एतत् युष्माकं अग्रे – युष्माकं राजपुत्री-अग्रे वदामि । प्रथमं वरानुरागपात्रं कन्या, कन्यानुरागपात्रं वरः स्याद्वा न वा । कन्यावरसाम्यं सर्वथा भवितव्यम् । इदमेव मुख्यकार्यम् ।

ततः गोत्रादिकं वीक्षणीयं इत्युक्त्वा पद्मां सम्बोध्य "पुराणवेत्तारः अस्मत्कुलं चन्द्रकुलं आहुः । वसुदेवो मम पिता । देवकी माता । शुक्लकेशांशः बलभद्रः अग्रजः । सुभद्रा भगिनी । अर्जुनः

श्यालकः । कुन्ती पितृष्वसा । कुन्तीसुतोऽर्जुनः । धर्मादि पाण्डवा बान्धवाः । मातापित्रोः अहं अष्टमो जातः । मत्पूर्वजाः षट् महात्मानः सर्वेऽपि मृताः । *भागवतदशमस्कन्धसप्ततितमाध्याये* "स्मरोद्गीतः परिष्वङ्गः पतङ्गः क्षुद्रतृट् घृणी" इति । सप्तमपुत्रं ममाग्रजं प्राक् पुत्रषट्कमृतिहेतोः शोकसन्तप्तौ सप्तमपुत्रस्य जीवितसंशयौ रामं इति व्यजहुः । कुतः ? "रामो नाम विरामः – अवसानम् । अयमपि सुतः रामवान् स्यात्" इति । तातः वसुदेवः गौरवर्णः । तेन उपमित इति च रामं आहुः । मां कृष्णं आहुः । (वसुदेवदेवक्योः अष्टमो जातः) देवरूपिण्याः देवक्या जात इति । देवक्या कृष्णवर्णया उपमित इति, कृष्णपक्षे जात इति,भक्तपापकर्षक इति, दुष्टकर्षक इति, कृष्णं वदन्ति । एवं नामतः वर्णतः गुणतः कृतितश्च ज्ञानिनो मां कृष्णमाहुः । बुद्धिशालिन्यः अङ्गनाः ! मम नामकुलादिकं उक्तवान् । युष्माकं नामकुलादिकं उच्यताम्" इति अवदत् ।

**मूलम्**

**पद्मावत्युवाच—**

**आकाशराजतनयां विद्धि मां निषदाधिप ।**
**नाम्ना पद्मावती कृष्ण कुलं निशिकरस्य च ।**
**गोत्रमत्रेः किरातेन्द्र शीघ्रं गच्छेति चाब्रवीत् ॥ २५ ॥**

**कल्याणकाण्डदीपः**

**निषदाधिप इति । निशिकरस्येति** । हलन्तादिति सप्तम्या अलुक् । तदन्ते प्रवदामीत्यस्य अनवकाशायाह— **गच्छ शीघ्रेति** । तथा च रतिपात्रताऽसिद्धिरित्यतो वाऽऽह— **गच्छेत्यादि** । हे किरातेन्द्र ! शीघ्रं, **त्वरितगतौ** गच्छेति अब्रवीत् ।

**गूढकर्तृकव्याख्यानम्**

पद्मा— भो किरातेन्द्र ! अहं आकाशनृपपुत्री । मां पद्मावतीं वदन्ति । वंशः चन्द्रवंशः । गोत्रं अत्रिगोत्रम् । वक्तव्यं उक्तम् । अत्र मा तिष्ठ । द्रुतं गच्छ ॥

**मूलम्**

**श्रीनिवास उवाच—**

**किमर्थं निष्ठुरं वाक्यं किमर्थं मार्दवं वचः ॥ २६ ॥**

**कल्याणकाण्डदीपः**

अथ श्रीनिवासः सुकन्यां च अवनायै च इमां कन्यां मह्यं दत्वैव अपराधं क्षमाप्य राजा जीवतात् नान्यथेति यथा स्यादित्यालोच्य तादृशमपराधं घटयितुं गुप्तकुचोद्यं कलहोपोद्घातं उपक्रमते— **किमर्थमिति**। लोकेषु निष्ठुरं वाक्यं किमर्थं मार्दवं वा किमर्थमिति इति प्रश्ने हे सख्यः किमुत्तरम् ? परपीडनाय पापाय निष्ठुरं वचः। परोपकाराय पुण्याय मार्दवं वच इति। अर्थिनोऽपेक्षितकार्याकरणेऽपि किं शोभनं वचनं नास्तीति भावः।

**मूलम्**

**अन्नं काङ्क्षन्ति यो लोके यो ददाति नरोत्तमः।**
**स पुमान् पुण्यमाप्नोति जलदोऽपि फलं लभेत्।**
**तथाऽहं काममापेक्षे पात्रभूतोऽस्मि साम्प्रतम् ॥ २७॥**

**कल्याणकाण्डदीपः**

सर्वथा कार्याभावे किमनेनाऽशोत्पादकेन मार्दववचनेन प्रत्युत वरं निष्ठुरमिति चेन्न। अर्थि-प्रार्थितदाने अत्यन्ताशक्तविषयमेतदित्यत आह— **अन्नम्** इत्यादिना **लभेत्** इत्यन्तेन। ये केचन मन्दधनाः अशनायापिपासाभ्यां पीडिता अन्नं काङ्क्षन्ति तेभ्यो यो वैकः सम्पन्नो नरोत्तमः अन्नं ददाति स पुमान् पुण्यमाप्नोति। तदशक्तोऽर्थिनः जलदोऽपि फलं अन्नदानफलं यथोचितं लभेदेव मार्दववचनेनेति भावः। अतो अर्थि-अपेक्षितदाने शक्तानां निष्ठुरं वचः कुतः ? इति भावः। सत्यम्। यद्यपेक्षे अन्नं तर्हि राजगृहमागच्छ। यदि जलं तर्हि आरामे सरसि सुगन्धिशीतलं जलमस्ति यथाकामं पिबेति मार्दवेनोक्ते श्रीनिवासः नाहं अन्यापेक्षः। नापि जलम्। तर्हि किमपेक्षसे इत्यत आह— **तथाऽह-मिति**। यथा क्षुधार्तः अन्नमाकाङ्क्षते तथाऽहं कामार्थी। कामं सम्भोगं आ ईषत् अपेक्षे आकाङ्क्षे पात्रापात्रसाधारणामाकाङ्क्षामात्रमकार्यकारीत्यालोचनं मा कार्षीरित्याह— **पात्रभूतोऽस्मीति**। तव यः पुरातनो विष्णुः रामः कृष्णो वा यश्च विटवेशधारी वेङ्कटो वा इदानीमागतश्चेत् स मम शरीराभि-मानदानस्य पात्रं स्यादिति यो विवक्षितः पात्रः साम्प्रतमिदानीमपि तत्पात्रसदृशोऽस्मीत्यर्थः। "युक्ते क्ष्मादावृते भूतं प्राण्यतीते समे त्रिषु" इत्यमरः। पितृभूत इतिवत्। यद्वा, न्याय्यः पात्र इत्यर्थः। भूतशब्दस्य न्यायार्थकत्वात्। न्यायत्वं च समदानाभिलाषम्। चकितापाङ्गदर्शनेन आहूततया आशोत्पादनात् आशापूरणं न्याय्यम्।

मूलम्

**सुखमेष्यसि दानेन तेन स्वर्गं गमिष्यसि ।**
**आत्मानं दिश मह्यं त्वं किं वृथा निष्ठुरोक्तिभिः ।**
**सा तस्य वचनं श्रुत्वा क्रुद्धा ताम्रविलोचना ॥ २८ ॥**

**कल्याणकाण्डदीपः**

किं च साम्प्रतमिदानीं गोत्रकुलादिविचारणाश्च न्याय्यतः पात्रभूतोऽस्मि । अनेन चतुर्भद्रं फलं प्राप्यसीत्याह— **सुखमित्यादिना । दानेन** । अर्थ्यपेक्षितपात्रे सम्भोगदानेन । **सुखं** धर्मम् ऐहिक-मुन्मर्यादं स्मरसमरसम्मर्दोत्थं विगलितवेद्यान्तरमानन्दात्मकं कामं सत्पुत्रात्मकमर्थं **एष्यसि** अनु-भविष्यसि प्राप्स्यसि । अन्ते **स्वर्गं** मोक्षम् । एतच्चतुष्टयं सबलं प्राप्स्यसीति भावः । अतो वाञ्छितत्वात् औचित्यात् देशकालावस्थानुगुण्यात् फलसद्भावाच्च त्वयि सम्भोगं करोमीत्युवाचेति शेषः ।

ततः किमभूदित्यत आह— **सेत्यादिना । तस्य** किरातस्य । **वचनं** असतीनां पुरतो विटेन वक्तव्यं यद्वचनं तत् श्रुत्वा सा सती पद्मा क्रुद्धा सती **ताम्रविलोचना** ताम्रवद्रक्तवर्णोपेते वि विपर्यस्ते लोचने यस्याः सा तादृशी बभूवेति शेषः ।

**गूढकर्तृकव्याख्यानम्**

श्रीनिवास आह— "शीघ्रं गच्छ । मा तिष्ठ" इति पद्मोक्तिं श्रुत्वा तदा श्रीनिवासः (एवं मनसि "सुकन्या वनाय प्रेषिता यथा तथा इमां कन्यां मह्यं दत्वैव अपराधं क्षमाप्य राजा जीवतात्" इति आलोच्य अपराधं घटयितुं गुप्तकुचोद्यं कलहोपोद्घातं उपक्रमेत इति तां पृच्छति) "राजपुत्रि ! किमर्थं मां गच्छ गच्छ" इति निष्ठुरोक्तिं भाषसे ? कुतः मृदु न भाषसे । सख्यः ! शृणुत । निष्ठुरवचनं किमर्थम् ? निष्ठुरवचनं नाम वाचिकहिंसा – परपीडनम्, अतः पापमेव । मृदुवचनं – परहिताचरणं पुण्यमेव । अर्थिना अपेक्षितकार्यं अवश्यं करणीयम् । तदशक्तौ, किं शोभनं वचनमपि नास्ति ? तस्यापि कष्टम् ? तदपि अशक्यम् ? किञ्च अर्थि-अर्थितदानस्य अत्यन्ताशक्यत्वावसरे कदाचित् निष्ठुरं वदेयुः । अपि तु, तादृशनिष्ठुरोक्ति-आवश्यकतायाः प्रसङ्ग एव न । अर्थि-इष्टार्थदान-अशक्तताऽपि न लोके केचन क्षुधातुराः केचन पिपासातुरा भवन्ति । तेभ्यः यः नरोत्तमः अन्नं ददाति तस्य पुण्यम् । अन्नदानाशक्तौ जले दत्तेऽपि अन्नदानफलमेव यथोचितं तस्य भवेत् । जलदानाशक्तौ अन्ते मार्दववचनेनापि यथोचितं फलं स्यात् । एवं सति अर्थिकामितदाने शक्तानां अपि निष्ठुरवचनं

कुतः ? प्रकृते राजपुत्री अर्थिकामितदाने शक्ता । तथाऽपि मां "गच्छ गच्छ शीघ्रं, न तिष्ठ" इति अर्थिमनोवेधकं वचनं न वदेत् । तर्हि "सत्यम् । तव अन्नमिष्टं चेत्, राजगृहं गच्छ । यथेष्टं अन्नं दास्यन्ति । जलमिष्टं चेत् अत्र आरामे सरसि दिव्यशीतलमधुरप्रसन्नोदकं अस्ति । यथेष्टं पिबेत् । मां वदेत् ।"

अपि तु, "नाहं अन्नार्थी नापि जलार्थी । किन्तु तृतीयपुरुषार्थं उद्दिश्य आगतः कामार्थी । रतिसुखापेक्षया आगतः । रतिसुखार्थिनो मे कामितं दातुं राजपुत्री दक्षा । किञ्च दानं असत्पात्रे न दद्यात्, अन्यथा निष्फलम् । अद्य "दानं ध्रुवं फलति पात्रगुणानुकूल्यात्" इति ज्ञानिनो वदन्ति । अद्य मयि पात्रं वा अपात्रं वेति असंशयिताः मां दानस्वीकारे उत्तमपात्रभूतोऽस्मि युष्माकं राजपुत्र्याः यः पुराणपुरुषः विष्णुः रामः कृष्णो वा विटवेषधारी वेङ्कटेशो वा इदानीं अत्र आगतश्चेत् सः मम शरीराभिमानदानस्य उचितपात्रं स्यात् इति यत्पात्रं वृतं तत्पात्रस्य साम्प्रतं अहं सदृशोऽस्मि । अत्र भूतशब्दः सदृशपर्यायः । अतः पात्रे सन्देहो मास्तु ।

पुनः अयं विचारोऽस्ति । शृणुत ! "कन्या वरयते रूपं" वर्णविषाभ्यां उज्ज्वलरूपं पुरुषं कन्या कामयते । सञ्जातरागा भवति । राजपुत्रि ! त्वं कन्या । अहं वरः । 'कनति दीप्यते इति कन्या' । त्वं अतिमनोहररूपलावण्ययौवनवती । 'व्रियते पतित्वेन स्वीक्रियते इति वरः' । यदाऽहं तुरङ्गमास्थाय अत्रागतः तदा मयि दृष्टे एव युष्माकं राजपुत्र्याः मयि सङ्गमेच्छा जाता । स्वमनोभावं, अपाङ्गदर्शनं, मन्दस्मितं, नेत्रोन्मीलननिमीलनं, क्षणं आलोकनं, क्षणं लज्जा, क्षणं दृष्टि-अधोधानं, इत्येवमादि इङ्गिताकारचेष्टाभिः स्पष्टयन्ती मां आहूतवती । एतेन ममाऽपि इच्छा जाता । एवं अन्योन्यकामित्वं सहजम् । एतेन अहं न्याय्यं पात्रभूतः । अद्य स्वस्यां मयि च रिरंसामुत्पाद्य रिरंसापूरणं न्याय्यमेव खलु । लोके पात्रं नाम – 'पाति देयं गृहीत्वा दातारं रक्षति इति पात्रम्' । पात्रं आश्रितरक्षकः । आश्रितरक्षकं पात्रं मां ज्ञानिनो वदन्ति । आश्रितवस्तु एकमेव रक्षामीति न । किन्तु आश्रितकुलकोटिमेव रक्षामीति मत्पणः ।

किञ्च गोत्रकुलादिविचारणाच्च पात्रभूतः । सत्पात्रदानेन चतुर्विधपुरुषार्था लभ्यन्त इति ज्ञानिनः । प्रकृते सत्पात्रे मयि भोगदानेन राजपुत्र्याः धर्मो भवति ।

अयं धर्मः प्रथमपुरुषार्थः । भोगसुखं अनुभवैकवेद्यं आनन्दात्मकं, कामः तृतीयपुरुषार्थः । कन्यावरयोः समागमात् सत्पुत्रात्मकं द्वितीयपुरुषार्थं लभते । अन्ते स्वर्गं लभते । 'सुष्ठु सम्यक् साधनबलेन अर्ज्यते सम्पाद्यते इति स्वर्गः' – मोक्षः । तं लभते । चतुर्थपुरुषार्थं लभते ।

अत एव अनुपमकन्यावरयोः आवयोः सङ्गमः सर्वथा अनुपमसत्पात्रत्वात् अन्योन्यं वाञ्छितत्वात् औचित्यात् देशकालावस्थानुगुण्याच्च उत्तमफलसद्भावाच्च सर्वलोकसम्मतत्त्वाच्च। युष्माकं राजपुत्रीं इच्छाम्येव तस्यां रतिं करोम्येव इत्युक्त्वा पद्मां प्रति, "अयि देवि ! कुतो विलम्बसे ? तव आत्मानं मे देहि। वृथा निष्ठुरं मा वद" इत्याह। ईदृशं श्रीनिवासोक्तिं श्रुत्वा पद्मायाः कोपेन नेत्रे ताम्रे जाते। कुतः ? "असतीः प्रति विटा इव भाषन्ते" इति। तदा वक्ति—

**मूलम्**

पद्मावत्युवाच—

**अवाच्यं वदसे मूढ जीवनेच्छा न विद्यते।**
**आकाशराजस्त्वां दृष्ट्वा हनिष्यति न संशयः।**
**यावन्नायाति तावत्त्वं गच्छ शीघ्रं स्वमालयम्** ॥ २९ ॥

**कल्याणकाण्डदीपः**

ततः किमभूदित्यत आह– **अवाच्यम्** इत्यादिना **स्वमालयम्** इत्यन्तेन। त्वमटवीकटुकिरातः, अहं च रत्नगर्भगृहोचिता राजकन्या। तथा चैतादृश्यां मयि अवाच्यम्। अथवा साध्वीष्वङ्गनास्ववाच्यं वचनं **वदसे** सन्दिशसि। अत एव हे **मूढ** वाच्याऽवाच्यज्ञानशून्य। तेष्वपि त्वं न गणेय इत्याह— **जीवनेच्छा न विद्यत इति**। मूढानामपि जीवनेच्छा वर्तते सापि तव नास्ति। एतदुपरि किं ब्रवीमि ? इति भावः। अत्र सर्वत्र पद्माश्रीनिवासयोः सल्लापः सन्देशरूपः सखीजनव्यवधानेन बोध्यः। अतो वदस इति साधु। "वद सन्देशवचने" इति धातोः। श्रीनिवासः अनेनैव अस्योत्तरमाह। तथा हि। मूढ जीवनेच्छा अमूढजीवनेच्छा इति द्वेधा छेदः। श्रीनिवासः सामान्येन जीवनेच्छा न विद्यत इति यत् त्वयोक्तं वचनं तदेव मां प्रत्यवाच्यं वचनं वदसे। तत्र हेतुमाह— **मूढजीवनेच्छेति**। अयत्नाल्लब्धमनुकूलदेशकालावस्थं अवितर्कितं असम्भवं अनिषिद्धं अङ्गनासम्भोगं परित्यजन् मूढः, तथा जीवनं, तस्मिन्निच्छा न विद्यते। किन्तु, अमूढजीवनेच्छा न विद्यते। पूर्वोक्तमूढविपरीतो अमूढः। तस्य जीवनेच्छा विद्यत इति।

पुनरिदमेवास्योत्तरम्। तथाहि। मूढ जीवनेति पदच्छेदः। ममेति शेषः।

**पद्मोवाच**— यत् त्वयोक्तं मूढजीवनेच्छा न विद्यत इति तदेव अवाच्यं वचनं वदसे। कुत इत्यत आह— **इच्छा न विद्यत इति**। तवेच्छायामपि मम त्वयेदानीं सम्भोगेच्छा न विद्यते। माऽस्तु

तवेच्छा । ममेच्छाऽस्ति । अतः सम्भोक्ष्य इत्यत आह— **मूढजीवनेति** । मूढजीवने अनङ्गजीवन-ज्ञानशून्यवृत्ते । एतादृश्यां सम्भोगे का प्रीतिः स्यादिति भावः । तदुक्तम्—

अकामां कामयानस्य शरीरमुपतप्यते ।
इच्छन्तीं कामयानस्य प्रीतिर्भवति शोभना ॥ इति ।

श्रीनिवासः— मास्त्विदानीं प्रीतिः । अन्यदा स्यादित्यस्येदमेवोत्तरम् ।

पद्मोवाच— हे मूढजीवनं माऽस्त्वित्यादि वचनं अवाच्यं वचनं वदसे । कुत इत्यत आह— **इच्छा न विद्यत इति** । ममेच्छाभावे प्रथममेव कथं सम्भोगघटना ? अन्यकालिकी तु दूरोपास्ता इति भावः ।

बलात्कारेण सम्भोक्ष्यामीत्यस्येदमेवोत्तरम्— **अवाच्यमिति** । मूढ जीव न इच्छा न इति छेदः । हे किरात, बलात् भोक्ष्यामीत्येतदवाच्यं वदसे । ममेच्छा न विद्यत इति न प्रीतिः न सम्भोग-घटना इत्येव न । किन्तु त्वं जीव । असून् धृत्वा स्वगृहे वस । कुतः ? इत्यत आह— **मूढेति** । हे मूढ, रम्भाभिसारीयकौबेरिशापज्ञानशून्य । तदुक्तम्—

यदाप्यकामां कामार्तः धर्षयिष्यति योषितम् ।
मूर्धाऽथ सप्तधा तस्य शकली भविता तदा ॥ इति । (वा.रा.)

श्रीनिवास, ममेच्छा नास्तीति यदुक्तं तन्न । चकितापाङ्गवीक्षणेन इच्छापिशुनेन मदनाभि-लाषस्यापलपितुमशक्यत्वात् । अतः प्रीतिसम्भवात् शापाप्रसक्तेः त्वां सम्भोक्ष्यामीत्यत आह— **आकाशराजेति** ।

अहनिष्यतीति इदानीं वा आवयोः विवादमध्ये वा याति । अतस्त्वं रज्जुभिर्बाहू बन्धयित्वा चर्मतोरणैः ताडयिष्यति । अत्र संशयो नास्ति । यावन्नायाति तावत् त्वं आलयं गच्छेति आह पद्मा । अथ श्रीनिवासः— कामं ताडयतु राजा । यत्पुत्रीसम्भोगानन्तरं यत्ताडनं भविष्यति तदनुमोदं विना तत्पुत्रीसम्भोगात् तत् क्षन्तव्यम् । जीवनस्य किं प्राप्तम् ? इति चेत्, न । पद्मोवाच—

"अधमा धनमिच्छन्ति धनमानौ हि मध्यमाः ।
उत्तमा मानमिच्छन्ति मानो हि महतां धनम् ।
अतः प्राणमेव परित्यज्य मानमेवाभिरक्षयेत् ॥"

**मूलम्**

**श्रीनिवास उवाच—**

**कार्यान्ते मरणं सौख्यमकार्यस्य तृणं जगत् ॥ ३० ॥**

**कल्याणकाण्डदीपः**

इति शास्त्रात् मानहानिर्महतां मरणादतिरिच्यत इत्यतो नीत्यैवोत्तरमाह— **कार्यान्ते इति** । यस्य यज्जातिवर्णाश्रमदेशकालावस्थासु रागतो वा लोकतः शास्त्रतो वा प्राप्तं यत्कार्यं तस्यां ते निष्पत्तौ सत्याम् । **अकार्यस्य** कृतसर्वकार्यस्य इदं जगत् देहगेहादिप्रपञ्चः तृणां तृणमिवाचरति । यथा ऋणत्रयविमुक्तस्य विषयविरक्तस्य वर्षीयसः मरणमपि **सौख्यं** सुखसाधनम् । निश्चितत्वादिति भावः ।

यद्वा विटसमयबन्धनोत्तरमाह— **कार्यान्त इति** । यस्य कस्यचिद्विटस्य कार्यान्ते । अयत्नलब्धेत्यादिविशेषणविशिष्टाङ्गनासम्भोगात्मककार्यनिष्पत्तौ सत्याम् । तस्य कार्यस्य कृतकार्यसर्वस्वस्य । **इदं जगत्** देहगेहादिप्रपञ्चः तृणम् । अतो मरणं निश्चितत्वात् सौख्यम् । अन्यथा अकार्यस्य अकृतोक्ताङ्गनासम्भोगस्य **मरणं** दुःखं पञ्चशरसम्भिन्नहृदयस्य मदनज्वरदाहादिनिमित्तं मरणं दुःखं भवति । आदौ मरणव्यत्यासं, अन्ते मरणमेवेति विटानां समयः । सर्वोऽपि मदनमहोत्सवश्चकितसुखस्य षोडशीमपि कलां नार्हतीति विटः । "चकितं सुखं प्राणैरपि विक्रीणीयात्" इति भावः । एतत्कार्यान्ते जायमानोऽवमानो विटानां मान एवेति भावो वेङ्कटेशितुः ।

**मूलम्**

**कथं हन्येत राजेन्द्र अधर्माभिमुखोऽब्रवीत् ।**

**कल्याणकाण्डदीपः**

किं च, राजा हनिष्यतीति बिभीषिकामात्रं वस्तुतो न ताडयिष्यतीत्याह— **कथम्** इत्यादिना **ब्रवीत्** इत्यन्तेन । राजेन्द्रः कथं मां हन्येत ? अधर्माभिमुखोऽब्रवीत् । किमिति । इतीति शेषः । **अधर्माभिमुखः** अविहितकर्माभिरुचिः । किमित्यब्रवीदित्यर्थः ।

*अयं भावः*— युष्माभिरहं समदनाभिलाषं चकितापाङ्गवीक्षणेनाहूतः । अथ रतिपात्रतासिद्ध्यङ्गकुलशीलादिपरीक्षाऽपि कृता । तया ममापि सम्भोगेच्छोत्पादिता । अथ सम्भोक्ष्ये इति मयोक्तम् । अत्र मम कोऽपराधः । न्यायमार्गे प्रवर्तमानं मां कथं हन्येतेति ।

**मूलम्**

**त्वं कन्याऽहं वरो देवी किमन्याय्यं महीसुते ॥ ३१ ॥**

**कल्याणकाण्डदीपः**

पद्मोवाच— अहं तावत् मातापितृभ्यां बहुभवार्जितसुकृतपरिपाकप्रसन्नहरिप्रसादलब्धा सती परमस्नेहेन पालिता प्राणसमा । किं च व्यपदिष्टकुलोत्पन्ना स्वयञ्च व्यपदिष्टा । एतादृश्यप्यहं केवलं काममोहिता सती तावनादृत्य कुलं शीलं चानवेक्ष्य मातापितृस्वामिकस्य अस्य शरीरस्य परसात्करण-मन्याय्यमित्यत आह— **त्वं कन्येति** ।

हे महीसुते, त्वं कन्या विवाहयोग्या । अवश्यमिदानीमेव परिणेया पत्नी । अहं च अहेयः । इदानीमनादरे अलभ्यो वरः । साम्प्रतं वरणीयः पतिः । अत्र अन्याय्यं अनुचितम् । किं प्रवृत्तमिव भविता ।

*अयं भावः*— आवयोरेव पतिपत्नीभावोऽदृष्टनियामकेन श्रीनिवासेन सङ्कल्पितः । सोऽन्यथ-यितुमशक्यः । परन्तु जनीजन्यजनानुमोदनमात्रमवशिष्टम् । तदावयोः सम्भोगान्ते सुभद्रार्जुनयोरिव पश्चाद्भविष्यतीति ।

**मूलम्**

**पद्मावत्युवाच—**

**श्रृणु मूढ न जानासि बालभावेन किं वृथा ॥ ३२ ॥**

**कल्याणकाण्डदीपः**

ततः किमभूदित्यत आह— **श्रृणु** इत्यादिना **वृथा** इत्यन्तेन । हे मूढ किरात, न जानासि यथाविधानं यथाशिष्टाचारं जनीजन्यजनसभाजन प्रतिसभाजनादिपूर्वकं पतिपत्नीभावः सम्पादनीयः । तत् **न जानासि** । **बालभावेन** बालचेष्टनेन । किं शाश्वतं पतिपत्नीत्वं साध्यम् ? किं न साध्यम् ? किन्तु वृथा कालक्षेपमात्रम् । "भावः स्वभावाभिप्रायचेष्टाजन्मसु" इत्यमरः ।

*अयं भावः*— लोके बालमिथुनं तावच्चेष्टते । त्वं पतिरहं पत्नीति । तावता वाङ्मयेन चेष्टनेन किं शाश्वतः तद्भावः सिद्ध्यतीति । अत्रोक्तानुगुण्यात् मध्ये श्रीनिवासोक्तवाक्याध्याहारः । तथा हि । श्रीनिवासोवाच— **वृथेति** । यदुक्तं तन्न । तथा भवति तत् कथमित्युक्ते, अहमिदानीमेव तव सम्भोगं

कृत्वा । अथ किं भविष्यतीति ज्ञातुं इहैव स्थास्यामि । न च राजभयम् । राज्ञः परमधार्मिकत्वात् । मम च न्यायमार्गगामित्वात् । यद्यपि स्त्रीणां तीक्ष्णहृदयत्वात् तव वचनात् राज्ञः कोपावेशः सङ्कटेत । तथापि तव सम्भोगानन्तरं गुरुर्मे राजा । तथा च कोपाविष्टं राजानं तस्मादपि वध्यं प्रपन्नं न प्रतिप्रयच्छन्ति इति श्रुतिं

"ऋषेः कण्वस्य पुत्रेण कण्डुना परमर्षिणा ।
शृणु गाथां पुरागीतां धर्मिष्ठां सत्यवादिना ॥

बद्धाञ्जलिपुटं दीनं याचन्तं शरणागतम् ।
न हन्यादानृशंस्यार्थमपि शत्रुं परन्तप ॥"

इत्यादि पञ्चश्लोकीगतां वधार्हमपि काकं काकुत्स्थः पर्यपालयदिति महदाचारं स्मारयित्वा भव मे शरणमित्युक्त्वा अनुनीय कोपं शमय्य मानमाप्नुवानि । किं वा भवतु यावत् त्राणं यावत् प्राणं त्वां मत्पाणिगृहीतां करोमीति प्रतिश्रवो मे दृढनिरूढः । यदि तवाप्येतद्विपरीतनिर्बन्ध एतादृशस्य तर्हि मत्सम्भोगेनान्यपूर्वकियं कन्येति ख्यापयन् । यथा त्वामन्यो न वृणुयात् मामेव त्वं याचये तथा करोमीति पुरतो भविष्यम् ।

### मूलम्

**त्वां दृष्ट्वाऽऽकाशराजोऽपि कृत्वा [1]ते गलबन्धनम् ।**
**निगडै[2]र्बध्यते मूर्ख भविष्यं प्रवदाम्यहम् ॥ ३३ ॥**

१. निगडबन्धनम् । २. वध्यसे ।

### कल्याणकाण्डदीपः

त्वया किमिति पश्यामीत्यत आह पद्या— **त्वां दृष्ट्वा** इत्यादिना **अहम्** इत्यन्तेन । हे मूढ, अविवेकिन् । त्वां दृष्ट्वैव दर्शनक्षण एव । वागुच्चारणस्यापि अवसरमदत्त्वैव । **ते** तव । **गलबन्धनं** तव कण्ठगतमाल्यैव गलबन्धनं **कृत्वा** कारयित्वा । कारायां निवेश्य । निगडैः **बध्यते** बध्नाति । व्यत्ययः आर्षः । इत्येतत् भविष्यं **प्रवदामि** स्पष्टं वच्मीत्यर्थः । गलबन्धनं वचनस्यानवकाशाय । निगडबन्धनमन्यपूर्वकत्वप्रसिद्धिकरणानिरासायेति बोध्यम् । वध्यस इति पाठे ते तव गले बन्धनं कृत्वा रज्वा कारयित्वा आगृह्य कारां निवेशितः । त्वं निगण्डैर्बध्यसे । पदयोः पाण्योः पादकण्ठयोः बध्यस इत्यर्थः ।

**मूलम्**

**श्रीनिवास उवाच—**

**निश्चित्य मरणं देवि रन्तुकामो जगद्गुरुः ।**
**जातस्य मरणं नित्यं पूर्वकर्मफलानुगम् ।**
**आकाशराजो धर्मात्मा कथं हन्यादनामयम् ॥ ३४ ॥**

**कल्याणकाण्डदीपः**

भविष्यं तावत्सर्वं भगवदधीनं परन्तु मां किरातमात्रं जानीहीत्याह— **निश्चित्य** इत्यादिना **अनामयम्** इत्यन्तेन ।

**देवि** देवसम्भोगयोग्ये । **जगद्गुरुः** सर्वजगद्गुरुः । विशेषेण विटजगद्गुरुः । मरणं निश्चित्य विरह-हेतुकविप्रलम्भशृङ्गारस्य फलितत्वहेतुभूतमरणाख्यचरमदशां निश्चित्य रन्तुकामो मामधिष्ठाय गतः । देवस्य चरितस्यागतं सर्वं भवत्येव । तत्र का चिन्तेति भावः । तदुक्तम्— अथ शृङ्गारस्याङ्कुरितत्व-मुकुलितत्व-कुसुमितत्व-फलितत्वहेतवो द्वादशावस्था निरूप्यन्ते ।

"चक्षुःप्रीतिः मनस्सङ्गः सङ्कल्पोऽथ प्रलापनम् ।
जागरः कार्श्यमरतिर्लज्जात्यागोऽथ सञ्ज्वरः ॥

उन्मादो मूर्च्छनं चैव मरणं चरमं विदुः ।
अवस्था द्वादश मताः कामशास्त्रानुसारतः ॥" इति ।

यदि देवो देवाश्च त्वयि मम रतिं न सम्पादयेयुः, तर्हि राकाचन्द्र-ज्योत्स्नाग्नौ उज्जृम्भिते सति दक्षिणा मन्दमारुतस्य तनुं समर्पयामीति भावः ।

भवतु अधिष्ठितस्य रतिः, अधिष्ठानस्य तव मतिर्नास्तीत्यत आह— **जातस्येति** । नित्यं अपरिहार्यं तच्च पूर्वकर्मफलानुगम् । पूर्वचितकर्मफलानुसारि । न तु असम्भोगः तत्र हेतुः इति भावः । **आकाशराज इति** । **हन्यात्** ताडयेत् ।

**मूलम्**

**पद्मावत्युवाच—**

**गौरवं ते निषादेन्द्र नृपस्यास्य हरेस्तथा ।**
**वराहस्याथ रङ्गस्य वेङ्कटाचलवासिनः ॥ ३५ ॥**

**कल्याणकाण्डदीपः**

पद्मा किमुत्तरोत्तरभाषणेन दृढबन्धनं बध्नामीत्याह— **गौरवमित्यादिना** । गौरवं नाम मर्यादा । नृपस्य बहिःप्रत्यक्षदेवतात्वेन सन्निहितत्वादादौ तद्गौरवबन्धनं हरेर्हृद्यन्तःसन्निहितत्वात् तदनन्तरम् । अनयोर्मर्यादोल्लङ्घने असूनामेव स्थितिः न स्यादिति भावः । अथ शरीरस्थितिहेतुभूतभूमेः ईश्वरत्वात् वराहस्य । अथ यद्दत्तसौन्दर्यदर्पेण वराङ्गनाः त्वं कामयसे तत्सौन्दर्यैकखनेः श्रीरङ्गनाथस्य । एतत्सर्वं श्रीवेङ्कटेशानुग्रहे सुलभमिति धैर्यं मा कार्षीः इत्याह— **वेङ्कटाचलवासिन इति** ।

**मूलम्**

**संरक्षस्व महाबाहो सुखं गच्छ स्वमालयम् ।**
**इत्युक्तोऽपि तया देव्या निशादेन्द्राकृतिर्हरिः ॥ ३६ ॥**

**न विद्यते कथं देव ब्रूहि त्वं पुरुषर्षभ ।**
**निराकृत्य च तद्वाक्यं भोक्तुकामो बलादपि ॥ ३७ ॥**

**हयमग्रे कृतं वीक्ष्य सा बाला वाक्यमब्रवीत् ।**

**पद्मावत्युवाच—**

**त्यक्त्वा च पितरौ बन्धून् [1]मातृमुख्यान् नगेचर ॥ ३८ ॥**
**[2]अरण्यमरणं व्यर्थं किमर्थं काकभोजनम् ।**
**इति तस्या वचः श्रुत्वा ऊचे तां वारिजेक्षणः ॥ ३९ ॥**

१. भ्रातृमुख्यान् । २. अनाथो म्रियसे ।

**कल्याणकाण्डदीपः**

इदमत्र बोध्यम् । पद्मादेवी पञ्चरेखाः । सा च विलिख्यासु रेखासु राजादि पञ्चानां मर्यादागिरयः पुरतो गमने तिर्यक् प्रतिष्टम्भतया सन्ति । एतदुपरि किं करिष्यसीति भावः ।

**पितरौ** मातापितरौ । **मातृमुख्यान्** मातामहादिबन्धून् । **अरण्यमरणं किमर्थम्** । कस्मै प्रयोजनाय । इति पद्मा ।

**काकभोजनम्** इति श्रीनिवासः । **व्यर्थं** परलोकसाधनमिति पद्मा ।

मूलम्

**श्रीनिवास उवाच—**

**विधिना लिखितं कर्म न तद्व्यर्थं भविष्यति।**
**जयं वाऽपजयं देवि त्वयि भोगं करोम्यहम् ॥ ४० ॥**

कल्याणकाण्डदीपः

**विधिनेत्यादि**। विधिनालिखितं कर्म कर्मफलं **व्यर्थं** मृषा न भवति इत्यर्थः। **जयं वा** उत्कर्ष-साधनं वा। **अपजयं वा** तद्भिन्नं वा किं वा भवतु। त्वयि भोगं करोमीत्युवाच इति भावः।

मूलम्

**इत्युक्ता कोपताम्राक्षी सखीभिः परिवारिता।**
**तर्जयन्ती जगद्योनिं शिलापाणिरुपागमत् ॥ ४१ ॥**

**ताडयामास गोविन्दं [१]शिलाभिः शीघ्रवत्तरम्।**
**ताड्यमानः शिलावर्षैर्न्यपतद्धयराट् स्वयम् ॥ ४२ ॥**

**त्यक्तासुं स्वहयं दृष्ट्वा मुक्तकेशो मुहुर्मुहुः।**
**पश्यन् पश्यन् दिशः सर्वा अभ्रमद्विभ्रमन्निव ॥ ४३ ॥**

**अद्य मे सङ्कटं प्राप्तं [२]मातृकृतसन्नतेः।**
**इत्युच्चरन् रमाकान्तो जगामोत्तरदिङ्मुखः ॥ ४४ ॥**

१. शिलोघैः शीघ्रवत्तरैः २. स्वापराधानुसारतः।

कल्याणकाण्डदीपः

**इत्युक्तेति**। **तर्जयन्ती** भर्त्सयन्ती अपकारगिरं वदन्ती। **शिलापाणिरिति**। **न्यपतद्धयराट् स्वयमिति**। अपराधासञ्जनार्थं शिलावर्षैः स्वयं ताड्यमानः। **स्वयम्** आत्मनैव स्वेच्छयैव। न्यपतत्। स्वयं **त्यक्तासुं** त्यक्तासुरिव भासमानं स्वहयं दृष्ट्वा। स्वयं मुक्तकेशः। **अभ्रमद्विभ्रमन्निव**। कदाचित् भ्रान्तः कदाचिदभ्रान्त इव। सर्वा दिशो मुहुर्मुहुः पश्यन् पश्यन्। ''अद्य मे सङ्कटं

प्राप्तं नमातृकृतसन्नतेः'' इत्युच्चरन् रमाकान्तः उत्तरदिङ्मुखो जगामेत्यर्थः । ''नमातृकृतसन्नतेः'' इति समस्तं नसमासः । मात्रे कृता सन्नतिः सेवा ये स मातृकृतसन्नतिः, एवं न भवतीति तथा । तस्य मे अद्य इदानीं सङ्कटं अनुसङ्कटं प्राप्तमित्यर्थः । मया पूर्वजन्मनि मातृसेवा न कृता । अतः पुत्रार्थं मात्रा कर्तव्यः कन्यावलोकनादि सन्दर्भः कथं सुघटेत । अतः इदानीं सेवका पितृमातृतया भाव्येत्यनुसङ्कटं प्राप्तमिति भावः ।

नमारकृतसन्ततेरित्यपि पाठोऽस्ति । अस्मिन् पाठे न मारकृत सन्ततेः इति छेदः । **मारेण** विरहिमारिणा कामेन कृता प्रयुक्तीकृता सन्ततिः । सम्मोहनोन्मादनसन्तापनशोषणस्तम्भनाख्य पञ्चशरव्याप्तिर्यस्य स तथा । तस्य **मे** मम । **अद्य** इदानीं पद्मासन्दर्शनकाले **सङ्कटं** सम्बाधः पीडा प्राप्तं न । प्राप्तमेवेति भावः । पद्मायां मे पराजयः कामकृत इति भावः ।

**मूलम्**

**आरुह्य सोपानमनामयो विभु-**
**र्विडम्बयन् लौकिकमाशु शय्याम् ।**
**शयान आनन्दयुतोऽपि माधवो**
**यथा युगान्ते वटपत्रशायी ॥ ४५ ॥**

***इति श्रीमद्भविष्योत्तरपुराणे वेङ्कटेशमाहात्म्ये***
***कन्याभिः श्रीनिवासापजयो नाम***
***सप्तमोऽध्यायः ॥***

॥ श्रीकृष्णार्पणमस्तु ॥

**कल्याणकाण्डदीपः**

आरुह्येत्यादिश्लोकमेकं वाक्यम् । **अनामयः** निर्दोषः । **विभुः** देशकालगुणापरिच्छिन्नो-ऽलौकिकोऽपि **लौकिकं** कर्म प्राकृतवत् कर्म । **विडम्बयन्** अनुकुर्वन् । **सदानन्दयुतोऽपि** चिन्ता-ग्रहग्रस्त इव । **युगान्ते** जलतळे । वटपत्रे योगनिद्रया शायी माधवो यथा तथा आशु । विलस-न्मञ्चकशिपु-उपबर्हणादि सुखशय्यां परित्यज्य वल्मीकतले किञ्चल्कमात्रशय्याम्, अत्यन्तसंयोगे द्वितीया । दृढान्तरीयमेकमाच्छाद्य पद्मा योगनिद्राशाय्यभूत् इति ॥

*श्रीमद्भविष्योत्तरपुराणवेङ्कटगिरिमाहात्म्यव्याख्याने कल्याणकाण्डदीपे*
*श्रीनिरासहैय्यङ्गवीनपद्मादीपयोः सङ्घटनद्वारभूतकिरातवर्तिकायाः*
*स्निग्धता नाम सप्तमोऽध्यायः सम्पूर्णः ॥*

॥ श्रीकृष्णार्पणमस्तु ॥

**गूढकर्तृकव्याख्यानम्**

१ पद्मा— हे युक्तायुक्तविचारशून्य ! किरातरूपिन् ! त्वं अवाच्यवचनानि भाषसे । तव जीवितुं इच्छा नास्तीति भाति । आकाशो यदि त्वां पश्येत् त्वां संहरिष्यति । संशय एव न । अतः त्वं यावत् तेन आकाशेन आगत्य न दृष्टोऽसि तावत् त्वं शीघ्रं तव मन्दिरं याहि ।

२ श्रीनिवासः— पद्मोक्तिं श्रुत्वा पद्मे उद्दिष्टकार्यं कृतं चेत् पश्चात् मरणं सुखकरं भवेत् । अकृतकार्यस्य तु इदं जगत् तृणसमानमेव । किञ्च सः राजश्रेष्ठः आकाशः अन्याय्ये कार्ये प्रवृत्तः कथं मां हन्यात् ? हे महीसुते ! देवि ! त्वं अविवाहिता कन्या । अहं अविवाहितो वरः । अत्र अन्यायः कः ?

३ पद्मा— श्रीनिवासोक्तिं श्रुत्वा पद्मा आह । "हे मूढ ! शृणु । त्वं बालभावेन व्यर्थं वदसि । त्वं न जानासि । ईदृशवचनैः किं प्रयोजनम् ? राजा आकाशो यदि पश्येत् तव निगडबन्धनं कृत्वा कारागृहे त्वां स्थापयति । मूर्ख ! निगडैः बध्यसे । आगामि भवितव्यं वदामि ।

४ श्रीनिवासः— श्रीनिवास आह । "मरणेनापि चिन्ता नेति निश्चयं कृत्वैव त्वं रन्तुकाम एव अत्रागतोऽहम् । उत्पन्नमनुष्यस्य जन्मान्तरकृतकर्मफलानुसारं मरणं स्थिरमेव । न हीयते । आकाशराजोऽपि धर्मात्मा । निरपराधिनं मां हन्तुं कथं इच्छेत् ?

५ पद्मा— पद्मा आह । किरातेन्द्र ! एवं करणं ते अयुक्तम् । तव राजश्रेष्ठ-आकाशस्य गौरवं, वराहमूर्ति-श्रीहरेः गौरवं, श्रीरङ्गनाथस्य तथा वेङ्कटेशस्य गौरवं अस्तीति मत्वा तव प्राणान् रक्ष । महाबाहुशालिन् ! क्षेमेण तव गृहं गच्छ ।

६ श्रीनिवासः— पद्मया एवं बोधितोऽपि किरातरूपी श्रीनिवासः पद्मावाक्यं तिरस्कृत्य पुनः हयस्थ एव पद्मापुरत आगच्छत् ।

७ पद्मा— तदा पद्मा, वनचर ! त्वं मातापितृबन्धून् भ्रातॄन् इत्यादीन् त्यक्त्वा अनाथवत् मरणं गत्वा व्यर्थं काकभाजनं भवसि । प्रयोजनं नेति ।

८ श्रीनिवासः— (कमलाक्षः श्रीनिवासो वदति) अयि देवि ! विधिना मम ललाटे यल्लिखितं तत्कर्म व्यर्थं नैव । पद्मे ! कार्ये जयो वा अपजयो वा भवतु । त्वयि भोगं करोम्येव ।

९ पद्मा— श्रीनिवासेन एवं उक्ते कोपेन रक्तनेत्रा पद्मा सखीसमेता जगज्जन्मादिकारण-श्रीनिवासं तर्जयन्ती शिलाशकलानि गृहीत्वा समुपागम्य श्रीनिवासं प्रजहार ।

१० ततः शिलाशिताडितः हयराजः भुवि निपत्य असून् तत्याज । त्यक्तासुं इव स्वहयं दृष्ट्वा श्रीनिवासः दुःखितः मुक्तकेशः इतिकर्तव्यतामूढः कदाचित् भ्रान्तः कदाचित् भ्रान्त इव सर्वदिशः मुहुः पश्यन् एवं वदति— "हन्त ! महत् कष्टं प्राप्तम् । किं करोमि ? पूर्वजन्मनि मातृसेवां न कृतवानिति भाति । अत एव अद्य मे सङ्कटं प्राप्तम् । अतः इदानीं सेवकाऽपि मातृतया भाव्या ।" इत्येवं चिन्तयन् तत्र अभूत्वा उत्तरदिशाभिमुखं जगाम । श्रीनिवासः स्वयं चिन्तासन्तापादिदोषरहितः देशकालगुणादिभिः अपरिच्छिन्नः अलौकिकः अप्राकृतः ईदृशः वेङ्कटगिरिमारुह्य वल्मीकमासाद्य प्राकृतनरवत् अतिचिन्तया शयने शिश्ये । साक्षात् लक्ष्मीपतिः युगान्ते वटपत्रे यथा शेते तथा आशु विलासमञ्चकशिपु-उपबर्हणादि सुखशय्यां त्यक्त्वा वल्मीकतले किञ्चित्कमात्रशय्यां आन्तरीयकमेकं आच्छाद्य पद्मायोगनिद्रया शायी अभूत् । एवं स्वामी श्रीनिवासः लोकविडम्बनं चकार । इत्येवं अंशं शतानन्दमुनिः जनकराजं प्रति निरूपयामास । तदेव सूतः शौनकादिविप्रान् प्रति निरूपयामास ॥

*॥ इति अत्र श्रीमद्भविष्योत्तरपुराणे वेङ्कटगिरिमाहात्म्ये कन्याभिः श्रीनिवासापजयवर्णनं नाम सप्तमोऽध्यायः ॥*

॥ श्रीकृष्णार्पणमस्तु ॥



॥ श्रीः ॥

## श्रीमद्भविष्योत्तरपुराणान्तर्गतं

# श्रीवेङ्कटेशमाहात्म्यम्

### ॥ अथ अष्टमाध्यायकथासङ्क्षेपः ॥

**(गूढकर्तृकव्याख्यानानुसारी)**

श्रीनिवासः यदा शयितः तदा तं सेवितुं बकुला आयाता । तस्य भोजनाय परमान्नादि षड्-विधान्नं समानीतवती पश्यति । श्रीनिवासः दीर्घं श्वसिति, रोदिति, न भाषते । तदा तं एवं आह— "श्रीनिवास ! गोविन्द ! उत्तिष्ठ उत्तिष्ठ । कदापि दिवा स्वापं न कृतवान् । तव दुःखलेशोऽपि न । कुतः शेषे ? कुतः दुःखितवत् दृश्यसे ? किं ते मनोगतम् ? वद, करिष्यामि" इत्याह । श्रीनिवासः नैवावदत् । "हरे ! वने किमपि दृष्टवान् ? कामपि सुन्दरीं अपि दृष्टवान् ? अत एव एष तव मनो विकारो वा ? त्वां मोहितवती सा पुण्यवती अपि का ? उत, भूतप्रेतपिशाचादिभ्यः भीतो वा ? पश्य, यन्त्रमन्त्रादिकं करोमि" इत्याह । तथाऽपि श्रीनिवासः नोवाच । ततः उपागम्य, आपादमौलिक्षुण्णं देहं परिमृज्य, पुनराह— "श्रीनिवास ! मनोगतं सत्यं वद, पूरयामि । लघु लघु वद । लज्जां मा कृथाः" इति ।

तदा श्रीनिवासः अतिदुःखेन मन्दं मन्दं वदति— "न कापि कामिनी कामितवती । कस्मादपि न मे भयम् । अहमेव भयकृत् भयनाशः । मन्नामस्मरणादेव भूतप्रेतपिशाचादयः दिशो दिशो द्रवन्ति । अपि तु, पद्मावतीं नाम कन्यां वने अपश्यम् । मनो मुग्धम् । सा दृष्टा रमा दृष्टेव, पुण्यवति, तां मे आशु घटय । तां विना न हि जीवामि । सत्यम् । मां सा शिलाभिः तताड । अपि तु तत् शिलाघातैः ममाश्वः हतः । पद्मावत्याः कृते अवतीर्णः । तां पद्मावतीं सृष्टवान् विधिः । कुतो मे आशु न घटयेत् ? अन्ध एव सः । प्रकृते मद्भागे त्वमेव विधिः तिष्ठसि । मे साहाय्यं कुरु । नो चेत् मे मरणं ध्रुवम् । अतो मां जीवय । धर्ममार्गं चर । त्वमेव मद्भागे मातापितृसकलबन्धुमित्राणि । प्रह्लाद-अक्रूरादि सकलभक्ताः त्वमेव । मम सर्वं त्वमेव । मद्दुःखनाशायैव त्वं हरिणा सृष्टा । कन्याघटनेन तव बहुपुण्यं भविष्यति" इति ।

बकुला आह— जगदीश ! श्रीनिवास ! त्वं यया दृष्टः मोहितः सा कन्या पूर्वं का ? तद्वृत्तं वद ।

श्रीनिवासः— कल्याणि ! त्रेतायां मयि सीतालक्ष्मणाभ्यां वने स्थिते रावणः सीतां हर्तुं अयतत । मायामृगं रामे अनुधावति सीताप्रेरितलक्ष्मणे अनुयाते तदैव रावणः हरति स्म । तदा सीता "हा राम हा लक्ष्मण" इति रुराव । तत् श्रुत्वा अग्निः पातालादागत्य "रावण ! राक्षसराज ! इयं सीता न । सीताप्रतिकृतिः विप्रपत्नी । रामः तव भयात् सीतां मयि निहितवान्" इति वदन् । इन्द्राविष्टां सीता-कृतिं प्रदर्श्य "इयं निजसीता । इमां नय" इत्याह । रावणः विश्वस्य भ्रान्त्या सीताकृतिं निनाय ।

ततो रामः रावणं हत्वा लोकापवादभयं विडम्बयन् सीतां अग्निं प्रावेशयत् । तदा द्वे सीतारूपे दृष्ट्वा सीतां प्रति "का इयं अपरा ?" इति पप्रच्छ । "इयं पूर्वं वेदवती, मद्दुःखं अनुभूतवती, त्वां पतित्वेन इच्छन्ती, तपः तप्ता, अतः इमां स्वीकुरुष्व" इत्याह । राम आह— "अद्य माऽस्तु । कलौ इमां पत्नीं स्वीकरिष्यामि" इति । सा एव अद्य पद्मावती जाता । तत् श्रुत्वा बकुला हृष्टा । "तर्हि आकाशराजपुरमार्गं वद" इति पप्रच्छ । श्रीनिवासः— "अस्मात् गिरेः अवरुह्य, कपिलतीर्थे कपिलेश्वरं ततः शुकाश्रमे शुकमुनिं पद्मसरः समीपे रामकृष्णौ च दृष्ट्वा नत्वा मदर्थं पूजय । ततः सुवर्णमुखरीं तीर्त्वा पुरतः यथासुखं गच्छ ।"

ततः बकुला "तथा" इति प्रतिपद्य श्रीनिवासोक्तरीत्या गिरेरवरुह्य कपिलेश्वरादिकं नत्वा पुरतो वने गच्छन्ती अगस्त्येश्वरमन्दिरे काश्चन कन्यकाः समागताः ददर्श । "का यूयम्" इति पप्रच्छ । कन्यकाः आहुः— "इतःपूर्वं राजपुत्री पद्मावतीसहिताः वयं वने आगताः । तदा सुन्दरः किरातरूपी पुरुषः एकः आगतः । तं दृष्ट्वा पद्मा भीता ज्वरिता । तत् शान्तये राजादेशेन अगस्त्येश्वर-अभिषेकाय विप्रैः वयं आगताः । बकुला आह— "किरातः कः ? कुतः आयातः ? इत्यादि सर्वं ब्रूत ।" कन्याः— "दिव्यहयारूढं पुरुषं दृष्ट्वा पद्मा भीता । पद्मापुरुषयोः विवादो जातः । पद्मया शिलाभिः पुरुषस्य हयः ताडितो मृतः । ज्वरशान्तिक्रमं गुरुराह— "बाले त्वं का ? कुत आयाता ?" बकुला— "वेङ्कटगिरिवासि श्रीनिवासदासी ।" युष्माकं राजभार्यासमीपे मे कार्यमस्ति । अतः भवत्सङ्गत्या तत्र जिगमिषामि" इत्याह ।

इतः वेङ्कटगिरौ श्रीनिवासः "बकुलया मत्कार्यं क्रियेत वा न वा" इति सन्दिह्य स्वयं वृद्ध-पुलिन्दावेषं धृत्वा, विधिं शिशुं, हरं यष्टिं, त्रिगुणात्मकं ब्रह्माण्डं गुल्मं च कृत्वा, चीरवस्त्रं परिधाय गुञ्जामण्यादिभिः अलङ्कृता प्रयाता । "लोकस्य यत् यत् इष्टं तत् तत् मनोगतं वदामि" इति ब्रुवन्ती

नारायणपुरीवीथीषु वीथीषु घोषयन्ती । एतत् वृत्तं पुरस्त्रीमुखेन विदिता राजभार्या धरणी तां पुलिन्दां धर्मदेवतां अन्तःपुरं आनीतवती । स्वयं तां विषयं पप्रच्छ । धर्मदेवी आह— "नारायणो मे पतिः । बदर्या आगता । भूतभव्यभवितव्यं वदामि ।" धरणी धर्मदेवीं उचितोपचारैः उपचर्य "धर्मदेवि ! मम दुःखं दूरीकुरु । सत्यं वद ।" धर्मदेवी— राज्ञ्याः सकाशात् स्वर्णशूर्पे मुक्तातण्डुलं आनाय्य स्वपुरतो निक्षिप्य राशित्रयं कृत्वा राज्ञीं पुरतः उपवेश्य स्वयं पूर्वाभिमुखी स्वशिशुं अङ्के कृत्वा गुल्मं पुरतो निवेश्य फलं वक्ष्यति ।

एवं परमात्मानं पुलिन्दारूपं धृतवन्तं दृष्ट्वा विधिहरेन्द्रादयः देवाः "हरेः प्राकृतलीला अतिचित्रविचित्रा । तत्रापि अस्मिन् कलौ ईदृश-भगवद्-व्यापाराः पापिष्ठनराणां उद्धारायैव स्युः । श्रीशः एवं श्रिया क्रीडति" इति तं कीर्तयन्ति । इत्येवं श्रीनिवासस्य पुलिन्दिनीरूपवर्णनं यत् शतानन्दः जनकं प्रति निरूपयामास तदेव वर्णनं सूतः शौनकादिविप्रान् प्रति निरूपयामास ॥

*इति श्रीमद्भविष्योत्तरपुराणे श्रीवेङ्कटेशमाहात्म्ये अष्टमाध्यायकथासङ्क्षेपः ॥*

॥ श्रीकृष्णार्पणमस्तु ॥



॥ श्रीः ॥

श्रीमद्भविष्योत्तरपुराणान्तर्गतं

# श्रीवेङ्कटेशमाहात्म्यम्

## अथ अष्टमोऽध्यायः

श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

### श्रीनिवासस्य पुलिन्दिनीरूपवर्णनम्

**मूलम्**

**पद्मावतीपराजितश्रीनिवासं प्रति बकुलमालिकासान्त्ववचनम्**

सूत उवाच—

शयनं प्राप पर्यङ्के श्रीनिवासो वृषाकपिः ।
तदाऽऽगता च सा देवी सेवार्थं बकुळा शुभा ॥ १ ॥

**कल्याणकाण्डदीपः**

श्रीलोलं वरशङ्खचक्रसुगदापद्माङ्कितं स्वामिनं
नीलाङ्गं कलिकल्मषाम्बुदजगत्प्राणं विवाहं विभुम् ।
पौलोमीवरमुख्यदेवनुतसत्पादं दयामेदुरं
सालङ्कारमहासुमङ्गलकरं वन्दे सदा वेङ्कटम् ॥ * ॥

अञ्जनागोत्रपतये वृषभाचलवासिने ।
अञ्जनासुतदात्रे च माधवाय नमो नमः ॥ * ॥

अष्टमे व्याख्येयानि व्याक्रियन्ते ।

अथ तावत् भगवान् श्रीनिवासः साधूनां स्वस्मिन्नादरातिशयजननाय देशकालावस्थानुगुण्यं स्वप्रतिज्ञातप्रकृतकार्यानुकूलकुशललौकिकाचारमनु-कुर्वन् बकुलां व्यामोहयामासेत्याह पुराणर्षिः **शयनं प्राप पर्यङ्क इत्यादिना ।**

श्रीनिवासकृतलौकिकाचारचातुर्यप्रदर्शनपरस्यास्य पुराणस्य नाध्यात्मप्रवणपुराणान्तरविरोधः शङ्कनीयः । परन्तु इदमपि पुराणमाध्यात्मिकार्थे आन्तरङ्गिकभाववत् मुखतो बाह्यार्थभावमिति ज्ञेयम् । **वृषाकपिः** = शिष्टेष्टवर्षणात् श्रेष्ठत्वात् दुष्टहिरण्याश्रयजालात् भूपालनाच्च वृषाकपिः । ''कपिर्वराहः श्रेष्ठश्च सधर्मो वृष उच्यते । तस्माद् वृषाकपिं प्राह कश्यपो मां प्रजापतिः'' इति वचनात् । एतादृशोऽपि श्रीनिवासः स्नात्वा कृतमाध्याह्निकः शुचिः यदा **पर्यङ्के** = पर्यन्तमङ्कं पर्यङ्कं तस्मिन्, वल्मीकपर्यन्त-स्थाने । किलिन्दकेदळितपुष्करपुष्पपात्राण्यास्तीर्य यदा **शयनं प्राप** तदा । या **शुभा** = कल्याणी । **देवीति** । देवकुले जाता देवजातिः स्त्रीति । **बकुळा** = अवगतकुला 'वष्टी'त्यादिनाल्लोपः । वबयोर्लळयोश्चैक्यम् । वकुलेव बकुळा । अनेन हरिनैवेद्यकरणे शुद्धिः सूचिता ।

**मूलम्**

**षड्विधान्नं समादाय सूपापूपरसान्वितम् ।**
**रमापतेस्तु बकुला भक्तिभावेन संयुता ॥ २ ॥**

**कल्याणकाण्डदीपः**

सा बकुलानाम्नी रमापतेः भक्तिभावेन संयुता सती सेवार्थं सूपापूपरसान्वितं षड्विधान्नं (उचितोष्णं सबाष्पं) समादाय अत्र वल्मीकदेशे आगता इति श्लोकद्वयमेकं वाक्यम् ॥ परिः सम-न्ततो भावे । ''अङ्को नाटकविच्छेदे सङ्ख्यायां युधि भूषणे । समीपे रूपके स्थाने मृता उत्सङ्गचिह्नयोः'' इति रत्नमाला ॥

**षड्विधान्नं** = विष्णुतीर्थीये—

परमान्नं हरिद्रान्नं दध्यन्नं कृसरोदनम् ।
गुडोदनं च मुद्गान्नमित्यन्नं षड्विधं स्मृतम् ॥

एतेषां लक्षणानि तत्रैव । परमान्नशब्देन—

तण्डुलं त्रिगुणं दुग्धं दुग्धार्धं जलमुत्क्षिपेत् ।
तदर्धं तु गुडं चूर्णं परमान्नमिति स्मृतम् ॥

**चूर्णं – चन्द्रबालाचूर्णम्** ॥ १ ॥

संस्कृतं मथितं गव्यं तण्डुलानां चतुर्गुणम् ।
ईषत् हरिद्रया युक्तं मरीचीजीरकैर्युतम् ।
एतदुक्तं हरिद्रान्नं सुपक्कं पाचितं तथा ॥

संस्कृतं = लवणघृतभावनाभावितम् ॥ २ ॥

मधुराम्लेन गोदध्ना शुद्धान्नं तु विमिश्रितम् ।
तण्डुलद्विगुणेनैव मरीचीकणसंयुतम् ।
लवणार्द्रकसंयुक्तमेतद्दध्योदनं स्मृतम् ॥ ३ ॥

तण्डुलार्धं मुद्गभिन्नं वारिणा सह सम्पचेत् ।
युक्तं मरीचीचूर्णेन तिलचूर्णं विनिक्षिपेत् ।
इदं कृसरनामान्नं इत्याख्यातं सुरेश्वर ॥ ४ ॥

पूर्वोक्तपायसे पश्चात् दुग्धार्धं गुडखण्डकम् ।
तदर्धमाज्यं मोचायाः फलमेतद् गुडोदनम् ॥ ५ ॥

तण्डुलस्य त्रिभागेन मुद्गखण्डेन मिश्रितम् ।
पक्कं यदेतत् मुद्गान्नं आख्यातं च चतुर्मुख ॥ ६ ॥" —*इति स्कान्दे* ॥

अभिन्ना धवळाः स्निग्धा विशुद्धा नूतनाः शुभाः ।
तण्डुलाः स्युरमी श्रेष्ठा विष्णुनैवेद्यकल्पने ॥

तांश्च निष्पीड्य निष्पीड्य षोढा प्रक्षालयेद् द्विजः ।
सार्धाढकप्रमाणं तु तण्डुलस्य जलं स्मृतम् ॥

शुद्धकाष्ठैः परं पक्कं अनिःसृतरसं तथा ।
केवलान्नमिति प्रोक्तमिदमन्नं मुनीश्वरैः ॥

सूपो मौद्गः । अपूपः पिष्टकः पौल्यादिः । रसः सारादिः ।

### मूलम्

**शयानं श्रीनिवासं च वल्मीकस्थानमाश्रितम् ।**
**श्वसन्तं दीर्घनिःश्वासं रुदन्तं नेत्रबिन्दुभिः ।**
**अभाषभाणं श्रीकान्तं बभाषे बकुला शुभा ॥ ३ ॥**

### कल्याणकाण्डदीपः

ततः किमकरोदित्यत आह– **शयानमित्यादि** । सार्धश्लोकमेकं वाक्यम् ॥ एवमागता बकुळा । नित्यं स्नातानुलिप्तः कृतमाध्याह्निकः सन् वल्मीकद्वारि स्वात्मानं निरीक्षमाणं श्रीनिवासमदृष्ट्वा अन्तःशयानं बुबु(भु)धे । ततः अन्तर्गत्वा । **वल्मीकस्थानं** वल्मीकपर्यन्ततळं, **आश्रितं** दृढं आगृह्य आच्छाद्य, (अ)**शयानं** (ददर्श, ततः समीपं गत्वा) **दीर्घनिःश्वासं** उचितप्राणकालाधिककालं, निष्ठुरं श्वासं, **श्वसन्तं** सृजन्तं, ददर्श । ततो विशेषविमर्शे **नेत्रबिन्दुभिः** नेत्रोदबिन्दुभिः, नेत्रे द्वे अपि विलीने भवत इव, **रुदन्तं** अश्रुविमोचनं कुर्वन्तं ददर्श । ततः श्रीकृष्ण मुकुन्द मुरारे इत्यादि हरिनामोच्चारणेऽपि ज्ञात्वा **अभाषमाणं श्रीकान्तं शुभा बकुळा बभाषे** । अत्रैवं प्रायेषु भागेषु श्रीकान्तमित्याद्युच्च-विशेषणानि स्वविशेष्यस्योच्चमानं चिन्तासन्तापादिविडम्बनमात्रम्, न वास्तवमित्युन्नयन्ति ॥

### गूढकर्तृकव्याख्यानम्

अथ तावत् श्रीनिवासः सतां स्वस्मिन् आदराधिक्यं जनयितुं देशकालावस्थानुगुणं स्वप्रतिज्ञा-नुसारेण प्रकृतकार्यानुकूलं स्वलौकिकाचारं अनुकुर्वन् बकुलां व्यामोहयति इति पुराणर्षिः वदति "शयनं प्राप" इत्यादिभिः । ततः श्रीनिवासः स्नात्वा कृतमाध्याह्निकः शुचिः पर्यङ्के वल्मीकपर्यन्तस्थाने किञ्जल्के दलितपुष्करपुष्पपत्राण्यास्तीर्य शयनं प्राप । तदा कल्याणी देवकुले जाता बकुला आगता । अवगतं कुलं देवकुलं यस्याः सा बकुला बकुलानाम्नी साक्षात् रमापति-श्रीनिवासे अत्यन्तभक्तियुक्ता तत्सेवार्थं सूप, अपूप, रसयुतं उचितोष्णं सबाष्पं षड्विधान्नं समादाय अत्र वल्मीकदेशे आगता । षड्विधान्नं नाम "परमान्नं हरिद्रान्नं दध्यन्नं कृसरोदनम् । गुडोदनं च मुद्गान्नं इत्यन्नं षड्विधं स्मृतम् । तण्डुलत्रिगुणं दुग्धं दुग्धार्धं जलमुत्क्षिपेत् । तदर्धं तु गुडं चूर्णं परमान्नमिति स्मृतम् ।" एवं षड्विधान्नं मौद्गसूपं पौल्यादि अपूपं सारादिरसं च आनीतवती । ततः पश्यति । नित्यं स्नात्वा अनुलिप्तः कृतमाध्याह्निकः वल्मीकद्वारि आत्मानं निरीक्षमाणः आसीत् । अपि तु तद्दिने श्रीनिवासं द्वारि नाप-श्यत् । अन्तः सः शयितो भवेत् इति कृत्वा अन्तर्गत्वा अपश्यत् । वल्मीकपर्यन्ततलं आश्रित्य तत्प्रदेशं दृढं आच्छाद्य शयितोऽस्ति । तत्समीपमगच्छत् । दीर्घं निःश्वसन् नेत्रयोः अश्रु विमुञ्चन् अस्ति । तदा बकुलायाः सन्देहभयादिकमभूत् । सा "नारायण गोविन्द नरहरे केशव कृष्ण मुकुन्द मुरहर" इत्यादि श्रीहरिनाम उच्चरन्ती । तथापि श्रीनिवासः नोवाच ।

**मूलम्**

**बकुलोवाच—**

**उत्तिष्ठोत्तिष्ठ गोविन्द किं शेषे पुरुषोत्तम।**
**न कदाचिद्दिवास्वापो न कृतं रोदनं हरे ॥ ४ ॥**

**कल्याणकाण्डदीपः**

तदाह— **उत्तिष्ठेति** । आदरात् द्विरुक्तिः । **किं** कुत्सने । **गोविन्द** सदागमैकविज्ञेय । उत्थितो भव, उत्थितो भव । एकपादग्रहणेन "मङ्गळं कुरु" इत्यन्तप्रबोधमन्त्रः गृहीतः भवति । तव प्रबोधनाय वेदो बन्दिजनायत इति भावः ॥ **हे पुरुषोत्तम** क्षराक्षरातीत । **किं शेषे** निर्दोषाशेषसद्गुणस्य निद्रा कुत्सितेति भावः । **हे हरे** । अस्तु वा स्वापः, तथापि नेदानीमुचित इति आह— **नेति** । कदापि **दिवा स्वापं** त्वया न कृतम् । किन्तु युगान्त एव । इदं तु दिवाशयनम् । किं कुत्सितम् । कुत्सने लिङ्ग-व्यत्ययः । "व्यत्ययोऽतिशयकुत्सनभेदेषु" इति सूत्रात् । परस्येदमकर्तुर्हि सेतिवत् । **रोदनं** आभाषणं च कदाऽपि त्वया **न कृतं** तदाऽपि कुत इति । यद्वा कदाचिदपि दिवा स्वापं नाकार्षीरिति क्रिया-ध्याहारः । कुर्वन्तं नापश्यमिति वा ॥ **बभाष** इति पूर्वेणान्वयः ॥

**मूलम्**

**किमर्थं दुःखमेणाक्ष आर्तवत् दृश्यसे कुतः ॥ ५ ॥**

**कल्याणकाण्डदीपः**

यदि दुःखाद्रोदनमिति चेत्, तदपि कुतः ? इत्याह— **किमर्थमिति** । **एणाक्ष** एणस्य अक्षिणी इव अक्षिणी यस्य स तथा, तस्य सम्बुद्धिः । बहुव्रीहौ सक्थ्यक्ष्णोरिति षच् । **किमर्थं** कस्मै प्रयो-जनाय । **दुःखं** मिथ्यादुःखं आह्वयसे ? वास्तवं तन्नास्तीति भावः । नाहमाह्वयामि तत्तत्कारणादेव तदिति चेत्, तर्हि तदपि किम् इत्याह— **किमर्थमिति** । किन्निमित्तकमित्यर्थः । तस्य कारणं किमिति यावत् । यद्यार्तिः कारणमिति चेत्, तर्हि आह— **कुत इति** । साऽपि तव कुतः प्रमाणात् ज्ञेया ? इत्यर्थः । यदि तव नेत्रे न पश्यत इति तर्ह्याह— **आर्तवदिति** । वदिति इवार्थेऽव्ययम् । "व वा यथा तथैवैवम्" इत्यमरः । आर्त इव त्वं दृश्यसे वेषधारी त्वम्, वास्तवी सा नास्तीति भावः ।

**मूलम्**

**मनोगतं वा किं देव तद्वदस्व यथातथम् ।**
**परमान्नं कृतं देव भोक्तुमागच्छ माधव ॥ ६ ॥**

**कल्याणकाण्डदीपः**

यदि किमार्तिमात्रं दुःखकारणमिति ब्रूषे तर्हि अन्यत्कारणं आधिः स्यात् इत्येवं वितर्क्य, पर्यवसाय, स कीदृशः ? त्वं वदस्वेत्याह— **मनोगतमिति** । यद्यपि तव सर्वं इच्छामात्रसिद्धं तथापि परैरिदं कारयितव्यमिति यत्तन्मनोगतं वा किम् ? **हे देव, तद् यथातथं वदस्व** । एवं मोहेन वदन्त्यां बकुळायां प्रकृतानुगुण्याय दुरत्यया स्वमायया तां मोहयामास । अथ सा "अहं जननी, अयं मम शिशुः" इति मोहेन बालानिव तव रुचितमानीतमिति तं सान्त्वयति ॥ **परमान्नमिति** । इतःपरं बकुळाया मोहामोहौ । **हे देव माधव** परमान्नं उक्तलक्षणं तव अत्यन्तरुचिरमिति मया कृतं, तद्भोक्तुमागच्छ । "गते चौष्ण्ये शाकरसान्नादिर्निष्टरुचिः" इति बभाष इत्यनुषङ्गः ॥

**गूढकर्तृकव्याख्यानम्**

तदा बकुला तं प्रति वक्तुमुपचक्रमे । मनसि, अस्य चिन्तासन्तापादिविडम्बनमात्रं न वास्तवं इति कृत्वा मङ्गलकरी बकुला— "हे सदागमैकविज्ञेय गोविन्द ! उत्तिष्ठ उत्तिष्ठ । जगज्जन्मादिकारण ! "प्रबोधनाय ते स्वामिन् वेदो बन्दिजनायते ।" पुरुषोत्तम ! क्षराक्षरातीत ! किं शेषे ? निर्दोषस्य निद्रा कुतः ? हरे दुरितारे ! तव निद्रा नामैव न । तथाऽपि अस्तु वा स्वापः इति ब्रूमः । अपि तु अद्य दिवा निद्रा नोचिता । कदाऽपि निद्रां दिवा न कृतवान् । तव निद्रा युगान्त एव इयं दिवा स्वापो नोचितः । रोदनं अभाषणं कदापि न कृतम् । एवमपि रोदनं कुतः ? रोदनस्य कारणेन भाव्यम् । दुःखात् इति चेत् ? निर्दुःखानन्दलीलात्मनः कुतो दुःखम् ? तर्हि दुःखितवत् दृश्यते । अस्यापि किं कारणम् ? त्वं मिथ्यादुःखं आह्वयसे । तदपि वास्तवं न । दुःखितव्यमिति दुःखमिति चेत् तदापि किं निमित्तम् ? (आर्तिः कारणम् इति चेत्, तव आर्तिरिति किं प्रमाणम् ? तव नेत्रे प्रमाणम् ? अपि तु, तव नेत्रे न पश्यतः । मम नेत्रे स्तः । मद्वीक्षणेन तव वास्तवं दुःखं न । दुःखितवत् दृश्यसे इति ज्ञातम् ।) त्वं वेषधारी । दुःखं दर्शयसि । "इच्छामात्रं प्रभोः सृष्टिः" इति इच्छामात्रेण स्वामिन् तव सर्वं सिद्धम् । तथापि परैः साधयितव्यं इति तव मनोगतं चेत्, देवदेवोत्तम ! किं ते मनोगतम् ? यथार्थं वद । इत्येवं अमोहेन वदन्तीं बकुलां दुरत्ययस्ववैष्णवमायया मोहयामास । तदा बकुला चिन्तयति— अहं जननी, श्रीनिवासः शिशुरिति मोहिता । "माधव ! पश्य । तव अतिरुचितं परमान्नं आनीत-

वती । उत्तिष्ठ । भोक्तुमागच्छ । विलम्बे कृते अनुष्णं अरुचितं भवेत्'' इति अवदत् । तथाऽपि श्रीनिवासः नोवाच ।

**मूलम्**

**भाषितं वचनं श्रुत्वा नोवाच वचनं हरिः ।**
**हरिं दृष्ट्वा हिरण्याङ्गी पुनर्वाक्यमुवाच सा ॥ ७ ॥**

**कल्याणकाण्डदीपः**

ततः किमभूत् ? इत्यत आह— **भाषितमिति** । **भाषितं** उक्तं **वचनं** बालसान्त्ववचनं **श्रुत्वा**ऽपि **नोवाच वचनं** हरिः । **हरिमिति** । एवं सम्भाष्यमाणेऽपि अभाषमाणं **हरिं दृष्ट्वा हिरण्याङ्गी सा** बकुळा **पुनः वाक्यं उवाच** ।

**मूलम्**

**किं दृष्टं विपिने कृष्ण किमर्थं दुःखमुल्बणम् ।**
**आर्तिहीनोऽपि देव त्वं आर्तवत् दृश्यसे कुतः ॥ ८ ॥**

**कल्याणकाण्डदीपः**

किं इत्यत आह— **किमिति** । हे **कृष्ण** ! **विपिने किं** भयङ्करं भूतं त्वया **दृष्टम्** ? **उल्बणं दुःखं किमर्थम्** ? किन्निमित्तकमित्यर्थः । इति मोहः । अथामोहः । **आर्तिहीनोऽपीति** । व्याख्यातमेतत् ।

**मूलम्**

**मनोगतं वदादेशं गौरवं [1]मे धरापतेः ।**
**गौरवं बलरामस्य देवकीवसुदेवयोः ॥ ९ ॥**

१. **मयि मा कृथाः ।**

**कल्याणकाण्डदीपः**

**मनोगतमिति** । हे श्रीनिवास ! किं वा भवतु यद्येवं वक्तव्यमिति **मनोगतं** मनसि स्थितं चेत्, तं **आदेशं** आज्ञावाक्यं वद सन्दिशस्व । अतोऽन्यथा चेत्, अस्मदादीनां गौरवं उल्लङ्घितं भवतीत्यर्थः । मर्यादोल्लङ्घनं कृतमिव भवतीति भावः ।

**मूलम्**

**दुःखं भवति त्वां दृष्ट्वा ह्यभुक्तं भूतभावन।**
**सर्वलोकार्तिसंहर्तुः पुण्यमूर्ते नमोऽस्तु ते ॥ १० ॥**

**कल्याणकाण्डदीपः**

अथ मोहः— **दुःखं भवतीति**। हे **भूतभावन**! जगज्जन्मादिकारण! श्रीनिवास! **अभुक्तं** – भुजेः कर्मणि क्तः, भुक्तमन्नादि तदस्यास्तीति भुक्तः, स नेत्यभुक्तः, तं तथा। **त्वां दृष्ट्वा** मे **दुःखं भवति**। अहह! मध्याह्नेऽपि शिशोरन्नं नास्तीति।

अथ अमोहः। अहह वक्तुं किल श्रीनिवासं एवं अहं अनर्हेति स्तुति-नतिभ्यां क्षमापयति— **सर्वेति**। **सर्वलोकार्तिसंहर्तुः** सम्बुद्ध्यन्तोऽप्यस्ति। हे श्रीनिवास! स्वभक्तसर्वजनपीडापरिहरण-शीलस्य तव पीडा कुतः? कुतस्तरां च क्षुत्पीडा। अतो दुःखं भवतीत्याद्युक्तिः मोहादेव। अतः तत्क्षमापनाय हे **पुण्यमूर्ते**! कीर्तनश्रवणध्यानदर्शनैः पुण्यापुण्यदायिनी मूर्तिः यस्य तत्सम्बुद्धिः। **ते नमोऽस्तु**।

**मूलम्**

**का दृष्टा कन्यका कृष्ण गान्धर्वी वाऽप्सरोत्तमा।**
**कस्याः सङ्गं समापेक्ष्य चित्तवैकल्यमद्य ते ॥ ११ ॥**

**कल्याणकाण्डदीपः**

प्रायः काञ्चन कामिनीं दृष्ट्वा कामातुरोऽयमिति सम्भाव्य जानन्तीव पृच्छति— **का दृष्टेति**। हे **कृष्ण**! त्वया **दृष्टा कन्यका** कान्त्या दीप्यमाना विवाहयोग्या तरुणी का? यज्जातीया? **गान्धर्वी वा**? **अप्सरोत्तमा वा**? का वद इत्यर्थः। **कस्याः सङ्गं** सम्भोगं **समापेक्ष्य अद्य** इदानीं **ते** तव **चित्तवैकल्यं** सम्भाषणभोजनादौ मनःप्रवृत्तिराहित्यं अभूत्? तद् वद इत्यर्थः।

**मूलम्**

**का च पुण्यवती बाला बालं भक्तवशं हरिम्।**
**मोहयामास कामार्ता न जानामि जगद्गुरो ॥ १२ ॥**

**वद गोविन्द ते कार्यं ..........................**

**कल्याणकाण्डदीपः**

या कन्या श्रीनिवासं मोहयामास तां उपालम्भते बकुळा— **का चेति । हे जगद्गुरो !** जगतः हिताहितप्राप्तिपरिहारोपायोपदेष्टः श्रीनिवासः । या **बाला** तरुणी, मम शिशोः सौन्दर्यमोहिता सती स्वयं **कामार्ता, भक्तवशं** स्वतः पूर्णकामत्वात् अवशोऽपि भक्तवशः, तं, **हरिं** नारायणांशं **बालं** मम शिशुं **मोहयामास** चित्तवैचित्र्यमुत्पादयामास, सा च तादृशी **पुण्यवती** सुकृतशालिनी का ? श्रीर्वा भूर्वा दुर्गा वा देवमाया वा ? एताः तावन्न । यया मोहितः तां त्वमेव जानासि । **न** अहं **जानामि** । सा च काचन कामुकी दारुणा न पुण्येति । निन्दायां मतुप् ॥

**हे गोविन्द !** यत्किञ्चित्कामिनीकामनं **ते** तव **कार्यं** किं त्वमेव **वद** । ते त्वया कार्यमिति वा । **पुण्यवती** इति विरुद्धलक्षणा वा ।

उपालम्भभावस्तु— मम मन्दिरं नास्ति । वित्तं नास्ति । विवाहो नास्ति । एवमपि यस्मा-त्कस्मादप्यन्नं भिक्षित्वा पुत्रमेकं निधाय कथं जीवेयमिति आलोचयामि । मम शिशुश्च त्वं सदा वनेचरो ऋष्यशृङ्ग इव नारीणां विषयस्य सुखस्य चानभिज्ञः । एतादृशं बालं का बाला मोहयामास ? अनभिज्ञस्य अनङ्गचेष्टामुपदिश्य अविवेकमुत्पादयामास । वेङ्कटो मम वश एव कथं तिष्ठेदिति मम चिन्ता । बालायास्तु मम वेङ्कटो विटो भवेदिति ।

"का च" इत्यादि "ते कार्यं" इत्यन्तमेकं वाक्यम् । यद्वा वद गोविन्द ते कार्यमित्येकं वाक्यम् । तथा हि । हे गोविन्द ! त्वं पुरा वल्मीक एवावतिष्ठः । इदानीं बहिःसञ्चारारम्भो जातः । अतोऽलौकिकोऽपि लौकिकान् दृष्ट्वा इदमेव ते कार्यं कच्चित् किं वद इत्यर्थः ।

**मूलम्**

**...................... [1]भस्ममन्त्रं करोम्यहम् ।**
**मृगं दृष्ट्वा भयं प्राप्तं [2]न जानामि रमापते ॥ १३ ॥**

१. क्षणमात्रात् । २. चोरं वा क्रूररूपिणम् ।

**कल्याणकाण्डदीपः**

अथ मोहः । मया शङ्कितं मच्छिशौ श्रीनिवासे कदा स्यात् । परमसाधुरयं श्रीनिवासः । मया शङ्कितं विषयवैचित्र्यं किमपि न जानाति । अत एवं नेति सान्त्वयति **भस्ममन्त्र**मित्यादिना **रमापते** इत्यन्तेन । **हे रमापते !** ते वने प्रतिभयं **मृगं दृष्ट्वा भयं प्राप्तं** किं ? किं भीतोऽसीति यावत् । उतान्यत्

किं वा । किमपि **न अहं जानामि** । किं वा भवतु । **भस्ममन्त्रं** भस्मना सह मन्त्रम् । गुप्तवादम् । बालरक्षार्थं भस्माभिमन्त्रणे विनियुक्तो वासुदेवो जगन्नाथः पूतनातर्जनो हरिरित्यादि पञ्चश्लोकीमन्त्रः । तं मन्त्रं जपित्वा भस्मना शिरोललाटादिषु रक्षां **करोमि** इत्यर्थः । अत उत्थाय उपविश इत्युवाच इति शेषः ।

**मूलम्**

**पिशाचभूतप्रेतान् वा न जानामि रमापते ।**
**मन्त्रं वा यन्त्रपूगान् वा मूलिकानौषधान्यपि ॥ १४ ॥**

**कारयित्वा यथाशास्त्रं तत्सर्वं मोचयाम्यहम् ।**
**इत्युक्तेऽपि हरौ तूष्णीं स्थिते बकुलमालिका ॥ १५ ॥**

**आनीतं तत्र निक्षिप्य तत्समीपमुपागता ।**
**पादसंहननं कृत्वा नोवाच वचनं हरिः ॥ १६ ॥**

**कल्याणकाण्डदीपः**

ततः किमभूदित्यत आह— **आनीतमिति** । अमोहेन भोज्यभाजनमित्यर्थः । **तत्र** साङ्गारान्तिकायाम् । **पादसंहननमिति** । पादसंहननं कृत्वापि सान्त्वयन्तीं बकुळां **नोवाच** इत्यर्थः । अतः समानकर्तृकत्वोपपत्तिः ।

**गूढकर्तृकव्याख्यानम्**

बकुला वक्ति— "कृष्ण ! भक्तपापापकर्षक ! किं वने भयङ्करभूतं दृष्टवान्, येनेदं तव दुःखम् ? (मोहः) । त्वं आर्तिहीनः । कुतो भयं तव ? (अमोहः) । श्रीनिवास ! किंवा भवतु । मनोगतमिदमिति मां सन्दिशस्व । कर्तुं सिद्धाऽस्मि । मनोगतं व्यक्तमुक्तं न चेत् अस्मदादीनां गौरवं उल्लङ्घितम् भवति । अथवा अल्पविषयः कथं निवेदनीय इति मयि गौरवं माऽस्तु । मनोगतमनुक्तं चेत् तव ज्येष्ठभ्रातृबलराम-मातापितृदेवकीवसुदेवानां गौरवं उल्लङ्घितं भवति । भूतभावन ! त्वं इतोऽपि न भुक्तः । बालः क्षुधितः । अभुक्तं त्वां दृष्ट्वा मम दुःखम् । मध्याह्नेनापि शिशोरन्नं न । (इति मोहः) । एवं श्रीनिवासं वक्तुमनर्हा तथाऽपि हितं उक्तवती । मया अपराद्धम् । इति अनुतपन्ती, "श्रीनिवास ! भक्तजनपीडापहारक ! तव पीडा कुतः ? पुण्यमूर्ते ! कीर्तनश्रवणध्यानदर्शनैः पुण्य-

दायकदेहयुत ! ते वन्दनम् । मया अपराद्धम् । अनिमित्तबन्धो ! देवदेवोत्तम ! वनं गतेन या काऽपि सुन्दरी कन्या दृष्टा ? दृष्टा चेत् सा किंजातीया ? गान्धर्वी अप्सरो वा ? यां दृष्ट्वा मनो मोहितं तव । एतेन भोजनादिविषयेषु अनासक्तः । जगद्गुरो ! जगतः हिताहितप्राप्तिपरिहारोपायोपदेशक ! का त्वां मोहयामास ? भवान् सकलजगन्मोहनः । प्राकृतरूपे तव मोहः कुतः ? पूर्णकामः आप्तकामः कस्यापि लोकस्य अवशः । अवशोऽपि भक्तवशोऽसि । अमुग्धं मोहितवती सुन्दरी का सा ? त्वामपि वशीकृतवत्या तया पुण्यवत्या भाव्यम् । सा पुण्यवती तु का ? पुण्यवती नाम श्रीः भूः दुर्गा वा देवमाया वा, का स्यात् ? श्रीनिवास ! त्वं मम शिशुः । सदा वनेचरः । ऋष्यशृङ्ग इव स्त्रीसुखमेव न वेत्सि । ईदृशं मम बालं कामचेष्टा-अनभिज्ञं कामचेष्टामुपदिश्य तव का अविवेकं उत्पादयामास ? अद्य मम एका चिन्ता जाता । य अयं वेङ्कटः विटः विटवेषधारी मम वशे इतः कथं तिष्ठेत् ? पुनः "श्रीनिवास ! पुरा त्वं वल्मीके एव आसीः । इदानीं बहिः सञ्चारो जातः । त्वं परमसाधुः । त्वयि मया शङ्कितं विषयवैचित्र्यम् । त्वं अलौकिकः । तथाऽपि लौकिकजनं दृष्ट्वा कुतः कामविकारो जातः ?" पुनः "श्रीनिवास ! वने भयङ्करं मृगं वा चोरं वा दृष्ट्वा किं भीतः ? अथवा भूतं प्रेतं पिशाचं वा दृष्ट्वा किं भीतः ? भयं वा दुःखं वा कामविकारो वा, न जाने । श्रीनिवास ! तव कृते मन्त्रं जपित्वा यन्त्रं बध्नामि । अस्वास्थ्यं चेत् मूलिकादिभिः औषधं ददामि । बारलक्षार्थं 'वासुदेवो जगन्नाथो पूतना-तर्जनो हरिः' इत्यादि पञ्चश्लोकीमन्त्रं जपित्वा भस्मना शिरोललाटादिषु रक्षां करोमि ।" अतः उत्थाय उपविश । तथाऽपि श्रीनिवासः तूष्णीमेव अभवत् ।

**मूलम्**

**पृथक् कृत्वा छन्नवस्त्रं हस्तेन परिमृज्य च ।**<br>
**देवदेव जगन्नाथ पुराणपुरुषोत्तम ।**<br>
**मनोगतं करिष्यामि नात्र कार्या विचारणा ॥ १७ ॥**

**सत्यं वद मनस्थं ते अविचारेण वेङ्कट ।**<br>
**पूरयाम्यविलम्बेन यावन्मे वर्तते बलम् ॥ १८ ॥**

**कल्याणकाण्डदीपः**

ततः किमकरोदित्यत आह— **पृथक् कृत्वेति** । पृथग्विनार्थः । आच्छन्नवस्त्रं वस्त्रेणाच्छन्नं आच्छन्नवस्त्रम् । राजदन्तादिवत् समासः । वस्त्राच्छन्नमाननं पृथक् कृत्वा आच्छादनवस्त्रेण विना कृत्वेत्यर्थः । सहसोत्पाट्येति यावत् । किं च वस्त्रपृथक्करणानन्तरं श्रीनिवासेन बाललीलाप्रदर्शनाय

इङ्गितज्ञा बकुळा बहिर्मृषाश्रुरयं अन्तरानन्दमसृण इति जानातीति च पुनः जान्वसंहस्तैरेकीकृतमाननं पृथक् कृत्वा विरळीकृत्य हस्तेन सोदकेन पाणिना नेत्रे परिमृज्य च । देवदेव ! सर्वलोकप्रभो ! पुराणपुरातन ! पुरुषश्रेष्ठ ! हे श्रीनिवास ! **ते मनोगतं करिष्यामि** । अत्र विचारणा करोति वा न वेति परीक्षा न कार्येत्यर्थः । **अविचारेण** दुष्करमेतत् । **अविलम्बेन** महाप्रयत्नं कृत्वा कार्यपारयितारः मे के सन्ति किमुत्तवा ? इति विचारविरहेण । हे वेङ्कटपते ! **मनस्थं सत्यं** यथा भवति तथा वद । **मे बलं** बुद्धिबलम् । यावदस्ति तावत् **अविलम्बेन** महाप्रयत्नं कृत्वा दुष्करमपि **ते मनस्थं पूरयामि** । विलम्बेन प्राणानवशेषश्चेदविलम्बेनेति । कार्यस्य दुष्करत्वे ।

**यावत् बलमिति** । अपहास इति चेत्, तत्परिहाराय **पूरयामि** इति चोक्तं बकुळया । हे श्रीनिवास ! सावधानेन शृणु । सञ्जाते प्राचीनाचीर्णपुण्योदये सति च लौकिकव्यवहारसन्दर्भे सति ऋणानुबन्धे सत्यां च निजयोग्यतायां च सति हर्यनुग्रहे कृते च महाप्रयत्ने दुस्साध्यमपि कार्यं सिद्ध्यति । त्वं च भवनं इन्द्रभवनम् । भोजनं राजभोजनम् । अङ्गना राजनन्दना । वारं वारं सुगन्ध-तैलाभ्यञ्जनम् । पर्यङ्कः शेषः । नित्यधनागमः इत्यादि दुष्करं कार्यं मे भूयात् इत्याशास्ते । एतत्सर्वं उक्तसामग्रीसम्पत्तौ सत्यां सिध्यतीत्यविप्रतिपन्नम् । किं तूष्णीं अभाषणेन अभोजनेन इत्युवाचेति भावः ।

### मूलम्

**इति तद्वचनं श्रुत्वा [१]किञ्चिद्वाक्यमुवाच ह ।**
**[२]तदा वाचाऽतिदुःखेन मन्दमाह मनोगतम् ।**
**मया दृष्टा वरा कन्या नाम्ना पद्मावती शुभा** ॥ १९ ॥

१. हरिरुष्णं समुच्छ्वसन् । २. उवाच चाति- ।

### कल्याणकाण्डदीपः

**इति तद्वचनमिति** । पूर्वोक्तपुष्कळवचनं श्रुत्वा किञ्चिद्वाक्यं, हे पद्मजाते, क्वासीत्युत्थीयमान एव ईषद्वाक्यं उवाच । किमिदं चित्तमोहो वा इति यदा बकुळा प्रप्रच्छ तदा वक्तीत्याह— **तदा वाचेति** । **अतिदुःखेन** अतिखेदेन उपलक्षितया **वाचा** गिरा जिह्वया वा मनोरथं मन्दमपटु यथा भवति तथा मन्दमीषदाह— **किमिति** । **मयेति** । **शुभा** कल्याणी **नाम्ना पद्मावती** इति ख्याता । **वरा कन्या** वरणीया तरुणी **मया** मय्यनुरागिणीव **दृष्टा** । इति मनोगतमाहेति पूर्वेणान्वयः ॥

**गूढकर्तृकव्याख्यानम्**

ततः बकुला किं चकार ? भोज्यपात्राणि आनीतानि एकत्र निधाय श्रीनिवाससमीपे गत्वा देवपादसंहननं कर्तुमुपचक्रमे । श्रीनिवासस्य वने दूरसञ्चरणेन अङ्गं क्षुण्णम् । किञ्च मनसः व्यथा जाता इति मत्वा आपादमौलिदेहं परिमृज्य साम्रा अपृच्छत् । तथाऽपि साक्षात् रमाया अपि मोहोत्पादकः श्रीनिवासः किमपि नोवाच । तदा बकुला खिन्ना भूत्वा क्षणे श्रीनिवास-आननोपरि आच्छन्नवस्त्रं विना कृत्वा श्रीनिवासं ददर्श । तदा श्रीनिवासः "इयं बकुला इङ्गितज्ञा । बहिरयं मृषाश्रुः ? अन्तः आनन्दमसृणः" इति जानाति इति कृत्वा पुनः जानु-अंस-हस्तैः आननं एकीकृतवान् । तदा तदाननं विरलीकृत्वा हस्ते उदकं गृहीत्वा श्रीनिवासनेत्रे परिमृज्य वदति— देवदेवोत्तम ! सर्वलोकप्रभो ! पुरातनपुरुषोत्तम ! श्रीनिवास ! वद । वद किं ते मनसि वर्तते ? तत् करिष्यामि । करिष्यामि न वेति संशयं मा कुरु । तव मनसि कृतं कार्यं दुष्करम् । अविलम्बेन महायत्नतः कार्यस्य पारयितारः मे के सन्ति ? अतः किं उक्तेन ? इति मा जानीहि । वेङ्कटपते ! तव मनसि यत् तत् यथार्थं वद । अत्र ते लज्जा वा भयं माऽस्तु । तव कार्यकृते मम यावद् देहबुद्धिबलं उपयुज्य अविलम्बेन दुष्करमपि मनोगतं पूरयाम्येव । दुष्करं नाम – इन्द्रभवनं, राजभोजनं, राजनन्दना, अङ्गना, वारं वारं सुगन्धतैलाभ्यञ्जनं, पर्यङ्कशयनं, नित्यं धनागमः – इत्येतदादि । प्राचीनाचीर्णपुण्योदये लौकिकव्यवहारसन्दर्भे ऋणानुबन्धे निजयोग्यतायां महाप्रयत्ने श्रीहर्यनुग्रहे सति दुःसाध्यमपि सिद्ध्यत्येव । एतत् दुष्करकार्यं सुकरं भूयादिति त्वं आशास्ये.। अतः अद्य एवं तूष्णीभावेन किम् ? इत्येवमादि नानाप्रकारैः प्रार्थितवती । एतत् श्रुत्वा श्रीनिवासः उष्णं दीर्घं च श्वसन् किञ्चित् उत्तिष्ठमान इव, "हे पद्मजाते ! क्वासि" इति अवदत् । तदा बहुकष्टेन शनैः शनैः स्वमनोगतं ईषत् वक्तुमुपचक्रमे ॥

**मूलम्**

**बकुलां प्रति श्रीनिवासोक्तस्वमनोनिर्वेदहेतुवर्णनम्**

**श्रीनिवास उवाच—**

**नामोहयन् मे गान्धर्वी नर्षिपुत्री न राक्षसी ।**
**न पिशाचा भूतगणा प्रेता वा मे भयावहाः ॥ २० ॥**

**मृगाश्चारण्यकाश्चोरा न क्रूरा मे कदाचन ।**
**मन्नामस्मरणादेते विद्रवन्ति दिशो दश ॥ २१ ॥**

**ततस्तेभ्यो भयं नेह मृत्युमृत्योर्ममानघे।**
**दृष्टा वरा मया कन्या नाम्ना पद्मावती शुभा ॥ २२ ॥**

**तां दृष्ट्वा मे मनो भ्रान्तं काममोहवशं गतम् ॥ २३ ॥**

**सुरूपां सुन्दरीं सुभ्रूं नीलालकविराजिताम्।**
**पूर्णेन्दुसदृशास्यां वै नीलमाणिक्यविग्रहाम् ॥ २४ ॥**

**कल्याणकाण्डदीपः**

तावता तव किमभूदित्यत आह— **तामिति**। तां पद्मां **दृष्ट्वा मे मनः काममोहवशं गतं** कामः स्त्रीपुंसम्भोगः, **मोहः** मिथ्याभिमानः, तयोः **वशं** अधीनतां प्राप्तं सत् **भ्रान्तं** विरक्तमार्गात् परावृत्तं भूत्वा विटमार्गे प्रचरन्, न तव स्थितमभूत्। हे श्रीनिवास! महन्मनस्ते सुव्यवस्थितं, तत् कथं भ्रान्तम्? अत आह— **तां दृष्ट्वेति**। तामित्यारभ्य विग्रहामित्यन्तमेकं वाक्यम्। यां **सुरूपां** चतुर्विधाभरणैरभूषिताऽपि भूषितेव भासमानां **सुदरीं** रुचिराङ्गीं **सुभ्रूं** वरकाळाहिसमाकृतिपरमभ्रूयुगाम्। **नीलालकविराजितां** अळिनील-चूर्णकुन्तल-भूषिताननां **पूर्णेन्दुसदृशास्यां** राकाचन्द्रमुखीं **नीलमाणिक्यविग्रहां** इन्द्रनीलामणिमालाभूषितदेहां द्रुतजाम्बूनदमयपुत्तलिकेव भासमानां अनुरागवतीं तरुणीं एकान्ते दृष्ट्वा प्रकृतिस्थितस्य यूनो मनो व्यवस्थितमपि भ्रान्तं भवति इति। **वै** लोकप्रसिद्धम्। **तां** तादृशीं पद्मां **दृष्ट्वा** सुव्यवस्थितमपि महतो मे मनः भ्रान्तमभूदिति पूर्वानुषङ्गेण अन्वयः। अतो भाषणाय भोजनाय च मनो नायातीति भावः॥

पुरुषप्रवृत्तिमात्रस्य बुद्ध्यधीनत्वात् बुद्धेश्च चित्तस्वास्थ्यमन्तराऽसम्भवात्। "स्वस्थचित्तेषु बुद्धयः सम्भवन्ति" इति न्यायात् "दुःखिते च मनसि सर्वमसह्यम्" इति लोकप्रवादात्। अतोऽनवस्थितं मनो न कुत्राप्यायातीति परमाभिप्रायः॥

**गूढकर्तृकव्याख्यानम्**

श्रीनिवास आह— "पापरहिते बकुले! शृणु। मयि वने गते गान्धर्वी वा ऋषिपुत्री वा यक्षसी न काऽपि मां मोहयामास। भूतानि वा पिशाचा वा प्रेता वा एभ्यः केभ्योऽपि मे भयं न। अथवा वने कमपि दुष्टमृगं दृष्ट्वा न भीत इति विद्धि। अखिलचराचरात्मकजगतः भयकृद्भयनाशनोऽहम्। भयङ्कराः सर्वे मन्नामस्मरणमात्रेण विद्रवन्ति दश दिशः। मन्नामस्मरणकर्तुः भूतसर्पपिशाचप्रेतराजचोरसिंह-व्याघ्रादिभयं किमपि न। मृत्योः मृत्युरहम्। ईदृशस्य कुतो भयम्? (अपि तु, "चिन्तायाश्च चितायाश्च

बिन्दुमात्रं विशेषतः । चिता दहति निर्जीवं चिन्ता दहति जीवनम्" इत्युक्तेः, "चिन्तासमो नास्ति शरीरशोषणम्" इति मम अतीव चिन्तासन्तापः) चिन्ताहेतुं शृणु। "वनं गते मयि तत्र मङ्गलकरीं कन्यां अपश्यम् । तस्या नाम पद्मेति वदति । सा जगन्मोहकरूपलावण्ययौवनवती विवाहार्हा वरणीया । किञ्च सा मां दृष्ट्वा हाव-भाव-विलास-विभ्रम-मन्दस्मित-चकितापाङ्गवीक्षण-क्षणलज्जा-प्रणय-कोपादि-शृङ्गारचेष्टाः अचेष्टत । मयि जातानुरागा भावपूर्वकं इङ्गिताकारैः चेष्टते स्म । ईदृशस्वानुरागदर्शक-सुन्दरतरुणवनिता दृष्टा चेत् कस्य वा मनः न चलेत् ? पुरुषः नवनीतमनाः । वनिताः अग्निसदृशाः तद्दर्शनादारभ्य तस्यां मन्मनो मोहवशम् । मम विरक्तं मनः तस्यां अनुरक्तम् । सा कन्या चतुर्विध-भूषणाभावेऽपि भूषिता भाति । सर्वाङ्गसुन्दरी । तस्याः सुदत्याः भ्रूयुगं धनुराकृतिः । अलिकुन्तला । राकाचन्द्रसमकान्तिमुखम् । इन्द्रनीलमणिमालां धृतवती । उत्तमजाम्बूनदपुत्रिकेव भाति । एतादृशी मयि अनुरागं सूचितवती । ईदृशीं दृष्ट्वा कस्य वा मनो न भ्रमेत् ? तस्याः चिन्तया मम भोजनादौ अना-सक्तिः । चित्तस्वास्थ्यं न ।"

### मूलम्

**[1]रमासमां इमां कन्यां घटयाशु वरानने ॥ २५ ॥**

१. साक्षाद्रमासमां ।

### कल्याणकाण्डदीपः

परमस्वतन्त्रे त्वय्येव स्वयं पराधीने सति मया किं कर्तव्यमित्यत आह— **रमासमामिति** । गुणतो लक्षणतश्च **रमासमां इमां** पद्मां **कन्यां** विवाहयोग्यां तरुणीं **आशु घटय** । यत्र यत्र गताऽसि तत्र न तव गतिरन्यथेति सूचनाय **वरानने** इति । तव मुखदशा तादृशीति भावः । विरहात् तवाननं कदा पश्येयमिति पद्मासम्बोधनं च । एवमुत्तरत्रापि तत्र तत्र बोध्यम् ।

### गूढकर्तृकव्याख्यानम्

"त्वं सर्वस्वतन्त्रः आप्तकामः । तवापि प्राकृतमोहः कुतः ?" इति पृच्छायाम्, "सा कन्या साक्षात् नित्यावियोगिनी दुःखास्पृष्टा रमादृष्टेव । रूपगुणादिभिः रमासमा । अत एव मन्मनो मुग्धम् । अतः त्वं अद्य तां पद्मां मे आशु घटय । मे मनोगतं तस्यामेव । बकुले वरानने ! कुतः ? त्वं यत्र यत्र गता तत्र तत्र त्वत्प्रवृत्तकार्यं सफलमेव । अद्य त्वया कन्याघटनं सिध्यत्येव । तव मुखदशा तादृशी । अत्र भाषणमध्ये पद्माविरहेण तां स्मृत्वा, तदा तदा तां वरानने, सखे, बाले, कन्यके, सुलोचने, अङ्गने इति सम्बोधयति ।

**मूलम्**

**जन्मान्तरार्जितेनैव मत्पुण्येनापि लभ्यते।**
**मत्पुण्यं पक्वतां जातं दर्शनेन सुलोचने ॥ २६ ॥**

**कल्याणकाण्डदीपः**

परमेष्ठिना पुरा चीर्णपुण्यफलेषु इदमपि फलं लिखितमस्ति चेत् भवितव्यं भवत्येव नो चेत् प्रयत्नस्तूष्णीकामेवेत्यत आह— **जन्मान्तरार्जितेनैवेति**। किं विना यत्नं **जन्मान्तरार्जितेन पुण्येनैव** लभ्यं **लभ्यते**। किन्तु **पुण्येनापि**। न केवलं यत्नेन किन्तु पुण्येनापि इति। **हि** साधुसाधक-सम्मतम्। तस्माद्यत्नः कर्तव्य इति भावः। एवं तर्हि दैवपौरुषयोर्विना नान्यतरेण लभ्यलाभ इति प्राप्तम्। दैवं चातीन्द्रियम्। यत्ने कृते फललाभालाभाभ्यां तत्तदभावनिश्चयः। तन्निश्चये च यत्न इती-तरेतराश्रयं परिहरति **मत्पुण्यमिति**। हे सुलोचने! बकुळे! **दर्शनेन** पद्मायाश्चकितचकिताङ्गवीक्षणेन **मत्पुण्यं** पुरा चीर्णं **पक्वतां** कार्योन्मुखतां **जातं** प्राप्तं इति उन्नयामीति शेषः।

एकान्ते राजकन्यादर्शनं, इतोऽपि तस्याः मय्यनुरागातिशयश्च इत्येतौ दुर्लभौ। सहसा तावप्यभूताम्। अतस्तद्घटनोपयोगिदैवमुन्नयामीति भावः। अतो न परस्पराश्रयः। अत एव साधकानां शकुननिरीक्षा। **हे सुलोचने** पद्मे तव कटाक्षवीक्षणं पुनर्मयि कदा स्यादिति विरहमोहः।

**मूलम्**

**मानवं देहमासाद्य तां कन्यां [1]यः पुमांस्त्यजेत्।**
**विना जडमतिं लोके अन्नपानविवर्जितम् ॥ २७ ॥**

---
१. कः।

**कल्याणकाण्डदीपः**

अथ बकुळा— हे श्रीनिवास! परमात्मनः तव किं तया राजकन्यया? विरक्तमार्गमवलम्ब्य तच्चिन्तां त्यजेत्यत आह— **मानवमिति**। हे सुलोचने! इह **लोके** तव सुन्दरं तरुणं **मानवं देहमासाद्य** जीवत्सु जनेषु **जडमतिं** – "इष्टं वा अनिष्टं वा सुखदुःखे वा न वेत्ति यो मोहात् तूष्णीकः परवशगः स भवति जडसंज्ञितः पुरुषः" इति उक्तजडस्येव मतिः यस्य स तथा, तम्। **अन्न-पानविवर्जितं** – पीयत इति पानं जलम्, अन्नं च पानं च, ताभ्यां वर्जितः। तं निराहारिणं च विना रसज्ञः। अन्नमाददानो जलं पिबन् यः पुमान् तां कन्यां त्यजेत्? कोऽपि मा त्यजेदित्यर्थः।

*आन्तरस्तु*— **जडमतिं** जडं अतिं अतिक्रान्तं जडामिश्रं अजडमतिं वृत्तिज्ञानशून्यं इति वा । **अन्नपानविवर्जितं** निरन्नं **मानवं** मया लक्ष्म्या नवं स्तुतम्, जगन्मोहनसौन्दर्यलीलाविग्रहत्वात् नवं **नूतनं देहं** पूर्णषाड्गुण्यविग्रहं मा मां विना यः पुमान् वर्तते स तां कन्यां त्यजेत् इत्यर्थः । अहं चानन्यादृशः । तत् कथं तां त्यजेयम् ? इति भावः । 'साक्षी चेता केवलो निर्गुणश्च' । अन्यो निरन्नोऽपि बलेन भूयात् । इह उपचये ।

*अयं भावः*— विरक्तमार्गो गतगोष्ठीं प्रविष्टः तद्वार्तां परित्यज्य भाषस्व इति ॥

**मूलम्**

**किमल्पेनेह जीवेन कार्यं जीवेन मे सखे ।**
**घटयाशु वराङ्गीं तामाकाशनृपनन्दिनीम् ॥ २८ ॥**

**कल्याणकाण्डदीपः**

अथ बकुळा— हे वेङ्कट ! वैकुण्ठाद्वल्मीके निवसतस्तव स्वानन्दतृप्तस्य अभोगेनैव अब्द-सहस्राणि बहूनि गतानि । वराहदर्शनादारभ्य इति जीवन्तमानन्दो नरं वर्षशतादपीति गाथानुसारेण एकं स्वतन्त्रस्थानं लब्धम् । विष्णुसदने पाचकी चाहं तव सेवकाऽस्मि । तथा च वराहालयसिद्धान्नभोजनं वल्मीके निश्चितं शयनं मम चैकः पुत्र इत्याद्येवं सुखजीवने किमलम्बुद्धिः नास्ति ? अल्पसन्तोषिणोऽपि लोके सुजीवन्तीत्यत आह— **किमल्पेनेति** । किं, अल्पे, न, अल्पेन, इह, जीवेन, जीवे, न, मे, नमे, सखि कार्यं इति छेदः ॥

**हे सखि** ! धरिणी सखि, **अल्पे** भाविभोग्यादिना लब्धे पादशतमात्रे । **इह** केवलनिवेशने **मे** मया **किं कार्यं** कार्यं न । नास्तीत्यर्थः । दातुस्तोषोऽपि नेति भावः ॥ **हे सखि, स्निग्धे, अल्पेन** प्राणधारणमात्रोपायभूतेन, **जीवेन** जीवनं जीवः । हलश्चेति घञ् । जीवनेन भिक्षान्नवृत्त्या नित्ययाञ्चया मृतजीवनेन **मे** अञ्जनाचले पद्मसरस्तीरे अनेकसहस्राब्दं योगः तपः कुर्वतः कार्यं न । एतावन्मात्रेण जन्मनः साफल्यं नास्तीति भावः ॥ १ ॥

**हे सखि !** मन्मातृसमानतया जनैराख्यायमाने बकुळे ! **अल्पेन** मातृमात्ररक्षिण्येन तत्क्लेशदायिना मात्रा नानन्दिना । **जीवेन** जीवन्मात्रेण पुत्रेण ते इह लोके किं कार्यम् । सति वा किं ? असति वा किं ? तस्मादेतावन्तं कालं कथञ्चित्प्राणा धृताः । एतदुपरि यथापूर्वं नाहमिह जीवे वर्तयामि । अतस्त्वां नमे । यत्र वा गमिष्य इति भावः ॥ २ ॥

**हे सखि !** अस्य कान्तस्य इयं कन्या समानेति ख्यायमाने पद्मे मयि किं न स्नेहः । इति मोहः ॥ अतो मज्जन्मसाफल्याय तव वीरसून्वायेत्यादि सर्वकार्यसिद्धये **वराङ्गां** चूडामण्याद्यलङ्कृत-नीलनागाभवेणीभूषितमस्तकां अद्रिबर्हां योगिविचिन्त्यनितम्बिनीं सुभगां **आकाशनृपनन्दिनीं** अम्बरराजसुतां **आशु घटय**। **"तां विना न हि जीवामि सत्यमित्यवधारय"** इति मनोगतं पटुतर-माहेत्यर्थः । अदृष्टमस्ति । प्रयत्नस्त्वदायत्त इति भावः ॥

## गूढकर्तृकव्याख्यानम्

ततः बकुले ! बहुजन्मार्जितपुण्यं चेत् ईदृशकन्यारत्नं लभ्यते । ईदृशकन्याप्राप्तिरूपं अदृष्टं विधिना मल्ललाटे लिखितं चेत्, भवितव्यं चेत्, भवत्येव । पुण्यं चेत् लभ्यते । तथाऽपि प्रयत्नेनापि भाव्यम् । "प्रयत्नमेकमग्रतो विधाय भूतिमाप्नुयात्" पुण्यं चेत् प्राप्तिरिति अनुकूलां विमलाङ्गीं कुलजां कुशलां सुशीलसम्पन्नां पञ्चलकारां भार्यां पुरुषः पुण्योदयाल्लभते इति ज्ञानिनः । प्रकृते "मम पुण्यं चेत् पद्माप्राप्तिः । अतः त्वया अद्य प्रयत्नः कार्यः ।" "उद्यमेन हि सिद्ध्यन्ति कार्याणि न मनोरथैः" इत्युक्तेः । अतः बकुले ! वने पद्मा मां अनुरागेण यदा अपश्यत् तदैव मत्पुण्यं पक्वतां प्राप्तम् । राजकन्यादर्शनं तस्याः मयि अनुरागश्च दुर्लभौ । एतत् मे अवितर्कितसम्भवं अभूत् । मध्ये सुलोचने पद्मे त्वन्नयने स्मरामि । कदा मे तव दर्शनं पुनः स्यात् इति वदति । बकुला— "श्रीनिवास ! कः त्वम् ? का पद्मा ? तया राजकन्यया किं भवेत् ? विरक्तिं अवलम्बस्व ।" श्रीनिवासः— "इह नरलोके अवतीर्य मनुष्यदेहमासाद्य नवयुवकः सुन्दररूपः को न पुमान् एतादृश-अयत्नलभ्य-अप्रार्थित-अप्रतिम-रूपलावण्यतरुणीं त्यजेत् ? नैव । "इदमिष्टं इदमनिष्टम् । इदं सुखं इदं दुःखं" इति विवेचनहीनजडमतिः एकः त्यजेत् । आन्तरार्थः— मानवं देहमासाद्य तां कन्यां कः पुमान् त्यजेत् ? "विना जडमतिं लोके अन्नपानविवर्जितम्" मायया नूयमानं जगन्मोहन-सौन्दर्यलीलाविग्रहं अजडमतिं अन्नपानादिरूपदोषवर्जितं मां विना यः पुमान् अस्ति सः तां कन्यां त्यजेत् इत्यर्थः । अहं च अनन्यादृशः । तत् कथं तां त्यजेयम् ? बकुला— वेङ्कटात् आगत्य वल्मीकनिवासतः तव स्वानन्दतृप्तस्य आभोगेनैव अब्दसहस्राणि बहूनि गतानि । वराहदर्शनादारभ्य "एति जीवन्तमानन्दो नरं वर्षशतादपि" इति गाथानुसारेण तव स्वतन्त्रस्थानमेकं लब्धम् । विष्णुसदने पाचकी अहं तव सेवकाऽस्मि । तथा च वराहाख्यसिद्धान्नभोजनं वल्मीके निश्चिन्तशयनं इत्यादि-सुखजीवने किं तव अलम्बुद्धिर्न । श्रीनिवासः— "बकुले ! भाविभोग्यादिना लब्धपादशतमात्रे निवेशने मया कार्यं किम् ? प्राणधारणं कृत्वा भिक्षान्नवृत्त्या अमृतजीवनेन मे अञ्जनाचले पद्मसरस्तीरे अनेकसहस्राब्दं तपः कुर्वतः कार्यं न । एतावन्मात्रेण जन्मनः साफल्यं न । अत एतावत् कथञ्चित् प्राणा

धृताः ? इतोऽहं न जीवामि । इदं शरीरं अनित्यम् । अतः त्वां नमे । यत्र वा गमिष्ये । मानुषं शरीरमासाद्य उद्दिष्टं पूरितं न चेत् किं फलं तादृशदेहेन ? एवं अस्ति । अतः अद्य त्वं मज्जन्मसाफल्याय तव वीरसूत्वाय सर्वकार्यार्थसिद्धये सर्वाङ्गसुन्दरीं सर्वाभरणालङ्कृतां सुभगां आकाशनन्दिनीं पद्मां आशु घटय । पश्य । तां विना न हि जीवामि । इदं सत्यम् । पुनः वच्मि । अदृष्टमसि । प्रयत्नस्तावत् त्वदायत्तः इति विद्धि" इत्याह ।

**मूलम्**

**तां विना न हि जीवामि सत्यमित्यवधारय ।**
**ताडितोऽहं शिलावर्षैर्हताश्वोऽपि वरानने ॥ २९ ॥**

**कल्याणकाण्डदीपः**

अथ अभिमानादवरुह्य आरुह्य समस्थित्या च इति एवं त्रिविधां लोकवृत्तरीतिमनुसृत्य चिकीर्षितं साधयन् तावदाद्यां रीतिमनृसृत्य मोहात् प्रबुद्ध इव परिदेवयति "तां विना" इत्यादिना "कृतो विधिः" इत्यन्तेन ।

तथा हि— अथ श्रीनिवासः— हे सखे ! अहो मे महीयसी विषयसुखे दुराशा मम दुर्दैवं ईषदपि सुखं न सहते । तथा हि । पूर्वं भार्यया कलहः । अथ वैकुण्ठाख्यस्वदेशत्यागः । गिरौ वल्मीकवासः । तत्र कामधेनुप्रसादेनेषज्जीवेयमिति समये शिरसि कुठारप्रहार एव । अथेदानीं त्वदीयादरेणेषज्जीवेयमिति समये देवमायादर्शनम् । इदं च न सुखायायातमिति जानामि । तत्कथं सा मच्चित्तमात्रमपजहार । न सम्भोगानुकूला । मद्दुर्दैवात् । ततः किम् ? इत्यत आह— **तां विनेति** । तस्मान्न तद्दर्शनेन मत्सुखायागतमिति भावः ॥ किं चाहं तया शिलावर्षैः ताडितः । अश्वोऽपि हतः गतः ।

**मूलम्**

**मज्जीवनं तदर्थाय जनितं वेङ्कटाचले ॥ ३० ॥**

**कल्याणकाण्डदीपः**

**तदर्थाय** = ये शिलाप्रहारोऽश्वगतिः प्राणधारणधैर्यभ्रंशश्चेति ते एव अर्थः प्रयोजनं तस्मै । तदर्थायोक्तानर्थानुभवार्थमेवेति यावत् । **वेङ्कटाचले मज्जीवनं** जनितं निर्मितं विधिनेति सम्भावयामि ।

**गूढकर्तृकन्याख्यानम्**

''सखे ! अहो मे विषयसुखे महीयसी आशा। मम दुर्दैवं ईषदपि न सहते। प्रायो गच्छति यत्र दैवहतकः तत्रापतन्त्यापदः। किं ब्रवीमि ? मम ग्रहचारं पश्य। आदौ वैकुण्ठे सुखमासम्। मम ग्रहचारेण मम भार्यायाः कलह उत्पन्नः। रमा मां त्यक्त्वा कोल्लापुरं गता। गृहिणी गृहमुच्यते। गृहिण्यां असत्यां गृहं शून्यम्। तद्वियोगदुःखेन वैकुण्ठं त्यक्त्वा भूलोकमागतः। एवं सति वियोगः स्वदेशत्यागः जातः। अत्र आगतस्य सुखावासो न लब्धः। अन्ते वल्मीकमेव मम गतिरभूत्। कथञ्चित् वासक्लेशं सोढ्वा स्थिते। कामधेन्वा नित्यं दत्तक्षीरपानेन तृप्तः आसम्। इदमपि विधेः मनसि नायातम्। किं भवेत् ? क्रूरः गोपः तीक्ष्णकुठारेण मम शिरसि तताड। शिरो भिन्नम्। क्षतवेदना जाता। कथमस्ति मम दैवम् ? किमपश्यम् ? यत्नेन क्षतस्य औषधादिचिकित्सा कृता। अत्र स्थितो वराहानुमत्या भोग्यादिनियमैः मौल्यं दत्वा स्थलं कल्पितवान्। वराहोऽपि दयया त्वां मम भोजनार्थं प्रेषितवान्। त्वं तु नित्यं मां भोजनेन उपचरन्ती असि। अपि तु त्वदीय-आदरेण ईषत् जीवेयम् इति स्थिते देवमायादर्शनं पृथक् जातम्। इदं च मम सुखाय नाभूत्। कथम् ? वने गते मयि सा मम दृष्टिपथं गता। साऽपि तूष्णीं नासीत्। नानाशृङ्गारचेष्टाः चकार। तेन यूनो मम मनोऽतीव चपलमभूत्। मां ऐच्छत्। इच्छन्त्यपि परावृत्ता। आशां दर्शयामास। निराशां अकरिष्यच्चेत् समीचीनमभविष्यत्। तथा न चकार। मम मनः पूर्णमपजहार। मम रतिसुखानुकूला नाभूत्। मम दुर्दैवम्। ततः तावतैव सा तूष्णीं नाभूत्। शिलाभिः मां ताडयामास। तच्छिलाघातेन मम हयः मृतः। मम जीवनं पद्मावतीकृते इति वेङ्कटाचले भवतु इति विधिः विहितवान् इति भाति।

**मूलम्**

**यतोऽभूदवतारोऽत्र पद्मावत्यर्थमेव मे।**
**पुत्रो मे वैरमापन्नः किं कृतं पूर्वजन्मनि।**
**दृष्टिहीनेन विधिना निर्मिता कन्यका वरा।**
**अनायासेन मे भूयादिति मे निश्चिता मतिः। ॥ ३१ ॥**

**कल्याणकाण्डदीपः**

किं च पुत्रोऽपीदानीं मम प्रतिकूल इत्याह— **पुत्र इति**। कुत इत्यत आह— **किमिति**। पूर्वजन्मनि मया कृतं कर्म किं वा नाहं जाने वैरकृत् स एव जानीयादिति भावः ॥ तथाभूतेन विधिना तुभ्यं किमपराद्धम् ? इत्यतः तमुपालम्भ्याह **दृष्टीति**। दृष्टिभ्यां हीनः दृष्टिहीनः, तेन विधिना। वरादेव माया कन्यका मदावासभूतवेङ्कटाचलसमीपे नारायणपुरे निर्मिता इत्यर्थः।

अयं भावः— यदि विधेः दृष्टिः स्यातां तर्हि स्वसृष्टकन्यासौन्दर्यं पश्येत् । अथानया मोहितोऽयं श्रीनिवासः स्मरपीडां प्राप्नुयादिति जानीयादेव । ज्ञाते च न निर्मायात् । निर्मितवांश्चायम् । अतो न ज्ञातवान् तदभावः । कुतः ? दर्शनाभावात् । सोऽपि कुतः ? दृष्ट्यभावादिति समाधेयम् । न हि तस्य दृष्ट्यभावः सम्भवति । सृष्ट्यभावप्रसङ्गात् । अतोऽस्ति च दृष्टिः, अतोऽस्ति दर्शनम्, अतोऽस्ति ज्ञानम् । जानन्नपि मत्पीडाकरं निर्मितवानिति इत्थमपराद्धमिति ॥ पर्यवसितमनर्थमाह— **अनाया-सेनेति** । यावदायुष्यं वल्मीके कथञ्चिज्जीवतोऽन्ते अनायासेन मरणं भूयादिति मे मतिः बुद्धिः । एतावन्निश्चिताऽभूत् । इदानीं तत्र स्थैर्यं नष्टमिति भावः ॥

### गूढकर्तृकव्याख्यानम्

इदं सर्वं तावत् गच्छतु । पुत्रो वा अनुकूलोऽस्ति ? अस्मिन् समये अस्माकं काऽपि चिन्ता नेति किं वदेम ? तथा न । "यः प्रीणयेत् सुचरितैः पितरं स पुत्रः" इत्युक्तेः । पुत्रो न तादृशः । "यदि रामा यदि च रमा यदि तनयोर्विनयगुणोपेतः । तनये तनयोत्पत्तिः सुरवरनगरे किमाधिक्यम्" इति नीतिज्ञाः । ईदृशं सुखं मे कुतः ? पत्नी मां तत्याज । पुत्रो वा मम अनुकूलो भवेत् इति चिन्तितम् । तदपि न । पुत्रः प्रतिकूल एव जातः । मा निष्कारणं द्वेष्टि । पूर्वजन्मनि किं पापं कृतवान्, न वेद्मि ।

कुतः एवमनुचितं करोति विधिः ? अपि इदं तस्य न्याय्यम् ? स अन्ध एवेति मे भाति । तस्य दृष्टिर्न । पश्य । देवमायाकन्यकां मदावासस्थानवेङ्कटाचलसमीपे नारायणपुरे एव सृष्टवान् खलु । किञ्च अतिमोहकरूपलावण्यं तस्यां सृष्ट्वा अयं श्रीनिवासः मोहितो भवतु । अतिस्मरपीडितो भवतु । तदूर्ध्वं उन्मादमरणं च गच्छतु इति पर्यालोचितवान् खलु । तस्य दृष्टिः ज्ञानं चेत् ईदृश-अतिरूपं न निर्मायात् । अतो दृष्टिहीन इति मन्ये । अथवा दृष्टिहीन इत्यपि वक्तुं न युज्यते । कुतः ? दृष्टिहीनश्चेत् कथं लोकान् सृजेत् ? अतः तस्य दृष्टिरस्ति, अपि तु, जानन्नपि मम पीडाकरं सृष्टवान् । इदं तस्य ज्ञातदोषः । एतावदेव न । यावदायुष्यं वल्मीके कथञ्चित् जीवतः मे अनायासेन मरणं भूयात् इति मे निश्चितम् ।

### मूलम्

**किं दृष्टं ब्रह्मणा पूर्वं मत्पापं घोरदर्शनम् ।**
**तत्पापमनुसृत्यैव घटनं [1]न कृतो विधिः ॥ ३२ ॥**

१. नाकरोत् ।

**कल्याणकाण्डदीपः**

अथ बकुळा— विधिना तावत् वरा कन्या निर्मिता । तन्निर्माणसमय एव चोलनागकन्ययोः सम्मेलनमार्ग इव कुतोऽनया तव न कृत इत्यत आह— **किं दृष्टं इति । घोरदर्शनं** घोरं भयानकं दर्शनं यस्य इत्यादि व्युत्पत्त्या घोरदर्शनं भयङ्करत्वात् द्रष्टुमशक्यम् । **पूर्वं** पूर्वार्जितम् । **किं** यादृशं दृष्टमासीत् । **तत्पाप-मनुसृत्यैव घटनम्** । तया मम मेलनमुद्दिश्य । **विधिः** विधानं मार्गः न कृतः इत्यर्थः ॥

**गूढकर्तृकव्याख्यानम्**

बकुला— विधिना तु वरा कन्या सृष्टा । अपि तु सृष्टिकाले चोलनागकन्ययोः समागम इव तव पद्मया समागमश्च विधिना कुतो न कृतः ? श्रीनिवासः— मम पद्मया सङ्घटनस्य अकरणे मयि पूर्वजन्मार्जितपापं किं दृष्टवान् ? भवतु । मम सतीसुतऋणानुबन्ध एव नेति भाति । "ऋणानुबन्धरूपेण पशुपत्नीसुतालयाः" इति आहुः । मम भागे सतीसुतादयः केऽपि न । मुख्यतः "अवश्यमनुभोक्तव्यं कृतं कर्म शुभाशुभम्" ॥ तथाऽपि साधवः "विपदि धैर्यमथाभ्युदये क्षमा सदसि वाक्पटुता युधि विक्रमः । यशसि चाभिरुचिर्व्यसनं श्रुतौ प्रकृतिसिद्धमिदं हि महात्मनाम् ॥" इति वदन्ति । अद्याहं विपन्नः । अतो धैर्यमवलम्बनीयम् । पूर्वं कर्म, रूपवती तरुणी, मन्मथः, विधिश्च मे प्रतिकूलः । भवतु । असहायकार्यवीर्यो हर्यनुग्रह एकोऽस्ति ।

ईदृशविपद्यपि त्वमेका हरिप्रसादादेव मत्कार्यसाधिकाऽसि । प्रकृते मद्भागस्थो हरिः त्वमेव । हरिः त्वां प्रेरितवान् मत्कार्यं कारयति । अतः बकुले ! त्वं मङ्गलकारी । त्वं मम पद्मायाः कल्याणे सहाया भव । सर्वं तवैव । त्वमेव एतत् कार्यं निर्वर्तय इति ॥

(एवं अवरुह्य) (समस्थित्या यथा )

बकुला— "श्रीनिवास ! निर्धनस्य सधनकन्यालाभो न दृष्टिचरः । कथं प्रयत्नः ?

श्रीनिवासः— "स च दृष्टचरः । च्यवनस्य शर्यातिकन्या सुकन्या लब्धा ।"

बकुला— "तत्र तपसि स्थितस्य च्यवनस्य नेत्रोद्भेदनलक्षण-दैवकृत-सुकन्या-कन्यापराधः कन्याघटनहेतुः, लौकिकव्यवहारसन्दर्भः ।"

श्रीनिवासः— "तर्हि अत्रापि तादृशं द्वयं अस्ति । मे शिलाप्रहारः अश्वहननं च इत्युभयं तादृशम् ।"

बकुला— "तया अबलया ताडितस्य बलवतस्तव पुंसः प्रतिहर्तुं रोषः कुतो नायातः ? किञ्च च्यवनमुनिरपि सापराधां राजकन्यामपि अत्यक्तवान् । अतः तां पद्मां जीवग्राहं गृहीत्वा कुतो नायातः ?

श्रीनिवासः— "अस्मिन् वेङ्कटाचले मज्जीवनं पद्मायै एव । तस्याः हितार्थमेव । हिते अकृते वेङ्कटाचले मम जीवनं व्यर्थम् ।"

अनुरागपूर्वकतत्कटाक्षानन्तरं एव मम तस्यां मोहो जातः । ताडितस्यापि मम रोषो न जातः । कुतः ? तत्सङ्गसुखेच्छायाः अधिकत्वात् रोषो गतः । किञ्च पद्मायाः कन्यात्वात् तत्पितुः आकाशस्य साधुत्वात् मदाशासितकार्यानुकूल-अपराधसञ्जननात् हेतोः मया क्षान्तम् । किञ्च जीवग्राहं गृहीत्वा आनयनं तु सरससन्दर्भो न । तथा कृते युद्धाद्यनिष्टं प्रसज्येत । तत्खेदाच्च । अस्य अनिषिद्धकामस्य मम स्नेहस्य ईषदपि तत्क्लेश-असहिष्णुत्वाच्च जीवग्राहं न गृहीता ।

बकुला— "तर्हि तव यया अनुकम्पा स्नेहश्च, तथा त्वयि तस्याः अनुकम्पा स्नेहश्च कुतो न स्तः ?"

श्रीनिवासः— "बकुले ! शृणु । मया तावत् नीतिपथः ईषत् अतिक्रान्तः । कुतः ? काम-चोदनात् । कामातुराणां न भयं न लज्जा" ॥

बकुला— "तव पुत्रोऽपि वैरमापन्नः । कुतः ?"

श्रीनिवासः— "मया कृष्णावतारे अपराधं स्वयं कृतम् । किं ब्रवीमि ? मन्मथः हरं प्रति द्वादशाब्दं तपस्तप्त्वा अङ्गीकृतः । स भारो मामेव पीडयति इति वक्तुं न शक्यम् । हरो हसति । लज्जानिमित्तेन किं ब्रूयाम् ? किमियं भ्रान्तिः ? मैवम् । लोके कनीयसा पुत्रेण अपराधे मोहात् येन-केनापि सम्बन्धेन पितरः ज्येष्ठे पर्यवसाययन्ति । इति लोकस्वभावरीतिमनुसृत्य ज्येष्ठपुत्रं उपालम्भते । कामः किं कुर्यात् ? यत्र एकान्ते तरुणीतरुणमेलनं स तस्य विहारदेशः । सः स्वभावादेव सर्वजनवैरी एव । परन्तु विधेः दृष्टी न स्तः ।"

बकुला— "श्रीनिवास ! लोके अकुशलस्य अयं यत्नः प्रहारपर्यन्त एव ।"

श्रीनिवासः— "आयासं विना चोलनागकन्ययोरिव विधिकृतघटनमार्गेणैव भूयादिति मे निश्चिता मतिः । अतः तत्पर्यन्तः प्रयत्नः कृतः । विधिना प्रयत्नः न कृतः । कुतः ? मत्कृतकर्मणः विधिना घटनं न कृतम् । तथाऽपि अदृष्टसद्भावात् अपराधलक्षणान्यायसन्दर्भाच्च त्वया यत्नः कर्तव्यः । वस्तुतस्तु

बकुले ! मां मैव मंस्थाः । स्वानन्दतृप्तस्य इन्दिरारमणस्य स्वरतस्य परमात्मनः कुटिलमनीषया पद्मया किं प्रयोजनम् ? तथापि तां विना अनानीय तां कृतापराधां परित्यज्य न हि जीवामि । एतत् सत्य-मित्यवधारय । कुतः ? अहं तया ताडितः । मम अश्वोऽपि गतः । स्त्रिया ताडितस्य मे अकीर्तिर्जाता । स्त्रियस्तावत् अङ्गुलिझाटनेन तुच्छीकुर्वन्ति । दारा हि अपहसिष्यन्ति । स वै घातस्तु जीवताम् । अतः तच्छान्त्यै येनकेनाप्युपायेन सा आनेया । कुतः ? शिलाप्रहार-अश्वमृतिदुःख-अकीर्त्योः निवृत्तये वेङ्कटाचले मद्वर्तनं पुनर्जीवितं विद्धि । सकृत् दैवात् अपायेन गतो मानः उपायेन सम्पादनीयः ।''

बकुला— ''तादृशोपायः कुतो न कृतः ?''

श्रीनिवासः— ''स्वगृहे पूजितां वेदवतीं भुवि अवतारयामास विधिः । दैवात्प्राप्तं अनयं अन्ते पराक्रमात् समीकरिष्यामि । परन्तु प्रथमं साधुषु सामोपायः ।

**मूलम्**

**मद्भागस्थो विधिस्त्वं हि साहाय्यं कुरु मङ्गले ।**
**न च कार्षीर्यदा बाले तदा मे मरणं ध्रुवम् ॥ ३३ ॥**

**मरणे जीवनोपायं ये कुर्वन्ति नरोत्तमाः ।**
**ते दिवं यान्ति यानेन पुण्यमार्गेण कन्यके ॥ ३४ ॥**

**इत्थं धर्मार्थमासाद्य धर्ममार्गमुपाश्रय ।**
**किमुक्तेन विशेषेण [1]वियत्पुत्र्याश्च सङ्गमे ॥ ३५ ॥**

१. साधयास्याश्च सङ्गमम् ।

**कल्याणकाण्डदीपः**

अथैवमापन्नः श्रीनिवासः आपदि धैर्यमवलम्बतामिति नीतिमनुसृत्य आह— **मद्भागस्थ इति** । पूर्वकर्म, रूपवती, तरुणी, कामः, पुत्रो, विधिश्च एतत्सर्वं अस्तु प्रतिकूलम् । असहायकार्यवीर्यो हर्यनुग्रह एकोऽस्ति । तत् कथं एतादृश्यामापद्यपि त्वमेका मत्कार्यसाधिका हर्यनुग्रहादसि । यतो मत्कार्यभागस्थो हरिः **त्वं** त्वयि सन्निहितः । अतो **हे मङ्गले** ! मच्चिकीर्षितकार्यविघटकदुरितध्वंसके **हे मङ्गले** ! पद्माकल्याणे सहायं कुरु । इत्थं अवरुह्य ॥ १ ॥

**अथ समस्थित्या यथा ॥** तथा हि— 'अवधारये'त्यन्तेन अदृष्टमस्ति यत्नः कर्तव्यः इत्येतत्प्राप्तम् ॥ अथ बकुळा— हे श्रीनिवास ! निर्धनस्य सधनकन्यालाभो न दृष्टचरः । कथं तत्र यत्नः ? इत्येवं बकुळयोक्ते, श्रीनिवासः— स च दृष्टचरः । च्यवनस्य शर्यातिकन्यालाभ इत्याह । अथ बकुळा— तत्रासीद्दैवकृतो नेत्रोद्भेदनलक्षणः कन्यापराधः कन्याघटनहेतुर्लौकिकव्यवहारसन्दर्भ इति चेत् तर्ह्यत्रापि तादृशं द्वयमस्तीत्याह— **ताडित इति** । शिलाप्रहारेऽश्वहननं चेत्युभयं तादृशम् । अथ बकुळा— तया बालया ताडितस्य बलवतस्तव पुंसः प्रतिहर्तुं रोषः कुतो नायातः ? किं च च्यवनऋषिरपि सापराधां राजकन्यामप्यत्यक्तवान् । अतः तां जीवग्राहं गृहीत्वा कुतो नायात इत्यत आह— **मज्जीवनमिति । तदर्थाय** । तस्याः पद्मायाः अर्थः अर्थ्यत इत्यर्थः । यो ह्ययः तस्मै तदर्थमेव वेङ्कटाचले मज्जीवनं मद्वर्तनं जनितं जातमिति जानामि । तद्धिताकरणे वेङ्कटाचले मज्जीवनं व्यर्थमेवेत्येवं सानुरागतत्कटाक्षानन्तरमेव मम तस्यां दृढमोहो जात इत्यर्थः ।

*अयं भावः*— तादृश्या तया ताडितस्यापि मम प्रतिहर्तुं रोषो नायातः । कुतः तस्यां समुत्थितेन सम्भोगजानन्दाभिलाषात्मकेन कामेन सन्निरुद्धत्वात् । तदुक्तं— "सन्नियच्छति मे क्रोधं त्वयि कामः समुत्थितः" इति । किं च तस्याः कन्यात्वात् तत्पितू राज्ञः साधुत्वादाशासितकार्यानुकूलापराधासञ्जनाद्धेतोश्च क्षान्तम् । जीवग्राहं गृहीत्वा नयनं तु न सरसः सन्दर्भः । युद्धप्रसक्तेः तत्खेदाच्च । तस्यां निबद्धकामस्य ममानुक्रोशात् स्नेहाच्च ईषदपि तत्क्लेशासहिष्णुत्वान्न जीवग्राहं गृहीता । तदुक्तम्— "वामः कामो मनुष्याणां यस्मिन् किल निबध्यते । जने तस्मिंस्त्वनुक्रोशः स्नेहश्च किल जायते" इति ।

यद्वा हे जनि शूरस्नुषे ! **तदर्थाय** = सैवार्थः तदर्थः । तस्मै पद्मालाभायेति यावत् । यः परिणयः तं वेङ्कटाचले मज्जीवनं मद्वर्तनसाधनम् । तव जनि तं च सञ्जातस्नुषं च विद्धि । जायते पौत्रोऽस्यामिति जनीः । अच् गौरादिः । "समाः स्नुषाजनीवध्व" इत्यमरः । अनेन श्वश्रूर्भूयासमिति प्रलोभनं कृतं भवति । हे जनि ! इति मोहः इति । तर्हि तव यथा तस्यां अनुकम्पास्नेहौ तथा त्वयि तस्याः तौ कुतो न स्तः ? इति चेत् । शृणु । मया तावदीषन्नीतिपथो ह्यतिक्रान्तः । सोऽपि कुतः ? कामचोदनात् । "कामातुराणां न भयं न लज्जा" इति भावः ॥ स किं न तव पुत्र इत्यत आह— **पुत्र इति** । पुत्रोऽपि पितुः ममैव वैरमापन्नः । तत्कुत इति चेत् तत्राह— **किमिति** । मया पूर्वजन्मनि कृष्णावतारे कृतं स्वयं कृतं अपराधं किं किमिति ब्रूयाम् इत्यर्थः । इदमत्र हृदयम् । हरेणाङ्गीकृतः कन्दर्पो मारः हरं प्रति द्वादशाब्दं तपस्तस्वा अङ्गीकृतः । स मारः मामेव पीडयतीति मया वक्तुं न शक्यं हरो हसति लज्जाहेतुत्वात् किमिति ब्रूयामिति ।

अथ श्रीनिवासः— अहो किमियं भ्रान्तिः ? मैवम् । लोके कनीयसा पुत्रेण अपराधे मोहात् येन केनापि सम्बन्धेन पितरो ज्येष्ठे पर्यवसाययन्तीति लोकस्वभावरीतिमनुसृत्य ज्येष्ठपुत्रमुपालम्भते । **दृष्टिहीनेनेति** । कामः किं कुर्यात् ? यत्रैकान्ते तरुणीतरुणमेलनं स तस्य विहारदेशः । स स्वभावादेव सर्वजनवैरी । "विद्ध्येनमिह वैरिणम्" इत्युक्तेः । परन्तु विधेर्दृष्टी न स्त इति ।

नन्वकुशलस्यायं यत्नः प्रहारपर्यन्त इत्यत आह— **अनायासेनेति** । आयासं विना चोल-नागकन्ययोरिव विधिकृतघटनमार्गेणैव भूयादिति मे निश्चिता मतिः । अतः तत्पर्यन्तं प्रयत्नः कृतः । विधिना तन्मार्गः कुतो न कृतः इत्यत आह **किं दृष्टमिति** । मत्कर्मणा ब्रह्मणा घटनामार्गो न कृत इति भावः ॥ एतदुपरि पूर्ववत् । अतोऽदृष्टसद्भावादपराधलक्षणान्यायसन्दर्भाच्च त्वया यत्नः कर्तव्य इति समस्थित्या ॥ २ ॥

आरुह्य यथा ॥ पराक्रमे ॥ तथा हि— तां विना न हि जीवामि सत्यमित्यवधारयेति । वस्तु-तस्तु । हे बकुळे ! मां मैवं जानीथ । स्वानन्दतृप्तस्य इन्दिरारमणस्य स्वरतस्य परमात्मना किं तया कुटिलमनीषया पद्मया । तथाऽपि तां विना अनानीय तां कृतापराधां परित्यज्य न हि जीवामि । सत्यमित्यवधारय । कुतः ? इत्यत आह— **ताडित इति** । अहं तया ताडितः । अश्वोऽपि गतः । स्त्रिया ताडितस्य मेऽकीर्तिर्जाता । स्त्रियः तावदङ्गुलिझाटनेन तुच्छीकुर्वन्ति । दारा ह्युपहसिष्यन्ति । "स वै घातस्तु जीविताम्" इत्युक्तेः । अतः तच्छान्त्यै येन केनाप्युपायेन सा आनेया । तदिच्छाभावे किं तदानयनेन ? इत्यत आह— **मज्जीवनमिति** ।

**तदर्थाय** तयोः शिलाप्रहाराश्वगमनदुःखाकीर्त्योरर्थाय निवृत्तये । वेङ्कटाचले मज्जीवनं मद्वर्तनं पुनः जनितं विद्धि । सकृद्दैवादपायेन गतो मान उपायेन सम्पादनीयः । तादृशोऽपायः कुतः कृत इत्यत आह— **पुत्र इति** । यतः स्वगृहे पूजितां वेदवतीं भुव्यवतारयामासेति भावः । दैवात्प्राप्तमनयं अन्ते पराक्रमात् समीकरिष्यामि परन्तु प्रथमं साधुषु सामोपायः । अतस्त्वं प्रयत इति विधिरीतिरित्यन्ता-खण्डार्थः । शेषं पूर्ववत् ॥ ३ ॥

### मूलम्

**त्वं मे माता पिता देवो भ्राता मातुल एव च ॥ ३६ ॥**

#### कल्याणकाण्डदीपः

मात्रादिबन्धुजनकृत्यं न परजनसाध्यमित्यतः त्वमेव सर्वं मम देवि सत्यं इत्याह— **त्वमि-त्यादिना** ।

**मूलम्**

**त्वं प्रल्हादस्त्वमक्रूरस्त्वं ध्रुवस्त्वं गजेश्वरः ।**
**त्वमुद्धवोऽसि मे भक्तस्त्वं किरीटी [1]द्युमांस्तथा ॥ ३७॥**

१. बलिस्तथा ।

**अजामिलो द्रौपदी च भक्तो मे त्वं विभीषणः ।**
**एते प्राणसमा भक्ता अन्ये भक्ताश्च ये च ते ॥ ३८॥**

**सर्वे त्वमेव बकुले एतत्कार्यं समाचर ।**
**त्वां दृष्ट्वा मे मनो हर्षं गच्छति स्म निरन्तरम् ॥ ३९॥**

**मद्दुःखव्यपनाशाय निर्मिता हरिणाऽङ्गना ।**
**गवां कोटिसहस्राणां हयानामयुतं तथा ॥ ४०॥**

**कल्याणकाण्डदीपः**

**गवानां कोटिसहस्राणामिति** । व्याकृतं पूर्वार्धम् । तथेत्यावर्तते । तस्य सुवर्णेत्यादिना अन्वयः । सहस्राणामिति तस्यार्थः ।

**मूलम्**

**सुवर्णतिलदानानां समं माङ्गल्यबन्धनम् ।**
**कन्यां दृष्ट्वाऽतिसन्तोषं लभसे नात्र संशयः ॥ ४१॥**

**कल्याणकाण्डदीपः**

**सुवर्णतिलदानानां** सुवर्णसमतोलितसुवर्णमिश्रतिलदानानामित्यर्थः । **माङ्गल्यबन्धनं** मङ्गलमेव माङ्गल्यम् । स्वार्थे ष्यञ् । कल्याणमित्यर्थः । तस्य निबन्धनं निश्चयानुकूलं कर्म । तथा चेत्थं योजना । **कोटिसहस्राणां गवां** यद्दानं तस्य । तथा अश्वानां सहस्राणां यद्दानं तस्य च । तथा सुवर्णतिलदानानां च माङ्गल्यबन्धनं सममिति समवत् । तदुक्तम्— "मातापितृविहीनं तु संस्कारोद्वाहनादिभिः । यः स्थापयति तस्येह पुण्यसङ्ख्या न विद्यते" इति । सा कन्या किं बाह्याभ्यन्तरलक्षणसम्पन्ना कच्चिदित्यत आह— **कन्यामिति** । कन्यां दृष्ट्वा त्वं लक्षणज्ञा । परीक्षायां बाह्याभ्यन्तरलक्षणशुद्धा मनःसन्तोषं लभसे ।

मूलम्

**इति तेन समाज्ञप्ता बकुला वाक्यमब्रवीत् ॥ ४२ ॥**

गूढकर्तृकव्याख्यानम्

अतः अद्य मद्भागे भवितव्यः विधिः त्वमेवासि । अङ्गने बकुले ! मे साहाय्यं कुरु । न कृतं चेत् अहं तावत् नैव जीवेयम् । सत्यमिदम् । लोके एकस्य मरणसमये येन केन तं जीवयितुं उपायं कुर्वन्ति, जीवयन्ति च ते एव पुरुषश्रेष्ठाः । तेषां इह कीर्तिः पुण्यम् । किञ्च, दिव्ययानेन पुण्यमार्गेण दिवं यान्ति । एवं त्वं मदर्थे यत् करोषि तदेव तव धर्मः, पुरुषार्थः इति अनुसन्धाय धर्ममार्गमवलम्बस्व । येनकेन पद्मां आशु मे घटय । एतत् अन्यस्य अशक्यम् । बन्धुजनैरेव शक्यम् । बन्धुर्नाम कः ? "उत्सवे व्यसने चैव दुर्भिक्षे शत्रुसङ्कटे । राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः ॥" बन्धुर्नाम स्नेहेन मनः बध्नाति इति । एवं वदन्ति । अद्य मम व्यसनं तव ज्ञातमेव । अद्य त्वं मे माता, त्वं पिता, त्वं भ्रातः, त्वं मातुलः, त्वं भक्तप्रह्लादः, अक्रूरः, ध्रुवः गजेन्द्रः, उद्धवः, किरीटी, बलिः, अजामिलः, द्रौपदी, विभीषणः । एते भक्ताः मे प्राणसमाः । किञ्च अन्ये भक्ता ये सन्ति ते सर्वे भक्ताः त्वमेव मे । कन्याघटनं आशु कुरु । बकुले तव दर्शनेन मे मनोहर्षः । मद्दुःखव्यपनोदायैव श्रीहरिणा त्वं सृष्टा । गवां सहस्राणां दानेन तादृशसङ्ख्याक-अश्वदानेन सुवर्णमिश्रतिलदानेन यत्पुण्यं तत्पुण्यं विवाहे कन्यावरसमागमे कन्यामाङ्गल्यबन्धनेन भवति । माङ्गल्यबन्धनं माङ्गल्यनिश्चयानुकूलं कर्म । तदुक्तम्— "मातापितृविहीनं तु संस्कारोद्वाहनादिभिः । संस्कारयति बालेह पुण्यसङ्ख्या न विद्यते ।" इति ।

सा कन्या कीदृशी भाति ? सर्वलक्षणसम्पन्ना त्वं लक्षणज्ञा । तत्र गत्वा पश्य । परीक्षस्व । तवैव ज्ञातं भवति । तस्याः बाह्याभ्यन्तरसुलक्षणानि दृष्ट्वा तवैवं सन्तोषः भवेत् ।

मूलम्

**बकुलोवाच—**

**कुत्रास्ते जगदाधार तव मायाप्रदर्शिनी ।**
**तन्मार्गं वद गोविन्द गच्छामि करुणानिधे ॥ ४३ ॥**

**कल्याणकाण्डदीपः**

**तव मायाप्रदर्शिनीति** । तव देवस्यापि मायाप्रदर्शिनी व्यामोहनकरी देवमाया पद्मावती नाम्नी **कुत्रास्ते** इत्यन्वयः । **तं मार्गं** तद्देशप्राप्तिहेतुं पन्थानं **वद** । हे **करुणानिधे** ! तं देशं **गच्छामि** । यद्वा **जगदाधार तव** चित्तापहारिणी लक्ष्म्यन्या **कुत्रास्ते** न कुत्रापि । तं तव चित्तापहरणोपायभूतं **मार्गं वद गच्छामि** अवगच्छामि इति । तन्मार्गे भवन् भवेत् ।

**मूलम्**

**सा का पूर्वं किमर्थं च कन्यका जनिता भुवि ।**
**तद्वृत्तमखिलं ब्रूहि सत्येन मम केशव ॥ ४४ ॥**

**कल्याणकाण्डदीपः**

लक्ष्मीसमगुणां तदाशयेन प्रकृतकार्योपयोगिदैवरूपपूर्वानुबन्धाशया च पृच्छति **सा केति** । **सा** तवापि मनोहरा **कन्यका** पद्मा **पूर्वं** पूर्वजन्मनि **का** किंस्वरूपा किंनाम्नी किमाचारा **किमर्थं** कस्मै प्रयोजनाय **भुवि जनिता** अस्तीति शेषः ।

**मूलम्**

**तयाऽऽज्ञप्तो विरिञ्चेशविनताङ्घ्रिसरोरुहः ।**
**उवाच मन्दवचनं बकुलां धरणीं सखीम् ॥ ४५ ॥**

**कल्याणकाण्डदीपः**

**विरञ्चेशविनताङ्घ्रिसरोरुहः** । ब्रह्मरुद्रवन्दितपादकमलः । अत एव **धरणीं सखीं बकुळां** प्रति **मन्दवचनं** हर्षकारिवाक्यं उवाच इत्याह **उवाच इत्यादिना** ।

**गूढकर्तृकव्याख्यानम्**

तदा बकुला श्रीनिवासं पृच्छति— "गोविन्द ! वेदप्रतिपाद्य ! देवस्यापि तव व्यामोहनकरी देवमाया पद्मावती नाम्नी कुत्र आस्ते ? सर्वजगदाधार ! त्वं तां यत्र दृष्टवान् तत्र गन्तुं मार्गं वद । करुणा-पूर्णहृदय ! तत्र गच्छामि । जगदीश ! तव चित्तापहारिणी लक्षणवती कन्या कुत्रास्ते ? न कुत्रापि ? तव चित्तापहरण-उपायं ज्ञातुं इच्छामि । उपदिश । श्रीनिवास ! तवापि मनोहरा साक्षात् रमासमा भवितव्या । सा पद्मा कन्या का पूर्वजन्मनि ? किंस्वरूपा ? किमाचारा ? किमर्थं भुवि अवतीर्णा ?

केशव ! तव सम्बन्धि सकलवृत्तान्तं यथार्थं वद" इति पप्रच्छ । तदा विधिशिवादिवन्दितपदकमलः श्रीनिवासः मुदा शनैः शनैः बकुलां तत्तोषकवाक्यमाह ॥

**मूलम्**

**बकुलां प्रति श्रीनिवासवर्णितपद्मावतीपूर्वजन्मोदन्तः**

**श्रीनिवास उवाच—**

**शृणु बाले पुरा वृत्तं पद्मावत्या जनिं शुभाम् ।**
**त्रेतायां रामरूपेण अवतारमुपागतः ॥ ४६ ॥**

**कल्याणकाण्डदीपः**

**शुभां** शृण्वतां शुभकारिणीं **जनिं** उत्पत्तिं प्रादुर्भावमिति यावत् । **अवतारमुपागतः** । अहमिति शेषः ।

**मूलम्**

**स [1]पितुर्वचनं श्रुत्वा दण्डकारण्यमागतः ।**
**लक्ष्मणेन सह भ्रात्रा सीतया भार्यया शुभे ॥ ४७ ॥**

१. मातृवचः ।

**कल्याणकाण्डदीपः**

वामनानुगुण्यात् **स पितुर्वचनमिति** । सः अहं **पितुर्वचनं श्रुत्वा भार्यया सीतया भ्रात्रा लक्ष्मणेन** च **सह दण्डकारण्यं** अयोध्यायां आगतः ।

**मूलम्**

**पुरा तु रावणो नाम राक्षसो लोककण्टकः ।**
**लोकभर्तुः सतीं हृत्वा लङ्कां गन्तुमवर्तत ॥**
**लक्ष्मणोऽप्यग्रजं प्राप्तः सीतया प्रेरितो वने ॥ ४८ ॥**

**कल्याणकाण्डदीपः**

**पुरा त्विति । पूर्वमेव** विवाहात् पूर्वमेवेति यावत् । कृत इति वा । **लोककण्टकः रावणो राक्षसः लोकभर्तुः** मम **सतीं हृत्वा लङ्कां गन्तुं अवर्तत** आसीत् । अरण्यागमनं पुनरनुकूलं जात-मिति भावः । तत्रापि **वने सीतया प्रेरितो लक्ष्मणः** अनुजः अपि सीताचोदनेन **पूर्वमेव** वनं गतं अग्रजं मां **अनुप्रासः** । सीताप्रेरणं तादृशमिति भावः ।

**गूढकर्तृकव्याख्यानम्**

श्रीनिवासः पद्मावृत्तान्तं कथयति— श्रोतॄणां शुभकारि पद्माप्रादुर्भाववृत्तान्तं शृणु । त्रेतायां अहं रामत्वेन अवतीर्णः । दशरथात् कौसल्यायां जातः रामः पितृवाक्यपरिपालनाय भार्या सीतया, अनुजलक्ष्मणेन, अयोध्यायाः दण्डकारण्यं प्रविष्टः । एतत्पूर्वं रामसीतापरिणयात्पूर्वं लोककण्टकरावणः नाम राक्षसः लोकभर्तृरामभार्यां सीतां अपजिहीर्षुः समयं निरीक्षति स्म । एतदर्थं रावणप्रेरितो मारीचो नाम मायया सुवर्णमृगरूपेण रामसीतापर्णशालापुरतः इतस्ततः चचार । तन्मृगमपेक्षे, तमानयेति पतिं रामं अयाचत सीता । रामः तं मृगं अनुरुध्य दूरं ययौ । चिरेणापि रामे प्रतिनिवृत्ते सीता पत्यौ किमपि अनिष्टं शङ्किता लक्ष्मणं रामावेक्षणाय चोदयामास । सीताज्ञया लक्ष्मणो ययौ । सीताप्रेरणं तादृशमासीत् ।

**मूलम्**

**तत्कालमाकाङ्क्ष्य स राक्षसेन्द्रो**
**विमानमारोप्य विदेहपुत्रीम् ।**
**तदार्तरावं विदिता वनौकसो**
**विचुक्रुशुस्तत्र वनान्तरस्थाः** ॥ ४९ ॥

**कल्याणकाण्डदीपः**

**तत्कालं** तं च अमुं कालं च तत्कालम् । निरर्गलं कालं **आकाङ्क्ष्य राक्षसेन्द्रः स** रावणो **विदेहपुत्रीं** च्छायासीतां **विमानमारोप्य** विहाय सा गन्तुं उत्पपात । तदा जटायुयुद्धे रथे भग्ने सीतामाचकर्ष तदा आर्तरावमकरोत् । इति मध्ये वाक्यशेषः । तदार्तरावं आर्तेः पीडाया अयं आर्तः, स चासौ रावश्च, तं ध्वनिं श्रुत्वा सुस्वरं रोदनम् । **वनान्तरस्थाः** तद्वनसमीपान्यवने विद्यमानाः । तद्वनस्थरावणभयान्न पस्पन्दिरे । तथैव रामायणोक्तेः— "तमुग्रतेजः कर्माणं जनस्थानरुहा द्रुमाः ।

समीक्ष्य न प्रकम्पन्ते न प्रवाति च मारुतः" इत्यादिना । **विदिताः** सञ्जातसंविदः । **वनौकसः** वनदेवतागिरिनदीवृक्षपक्षिमृगादयः । **विचुक्रुशुः** । "क्षिप्रं रामाय शंसध्वं सीतां हरति रावणः" इत्याद्येवमाह्वयामासुः ।

**मूलम्**

**तद्वाक्यमाकर्ण्य हविर्भुजोऽपि**
**पातालल्लोकादपगाद्धरातलम् ॥ ५० ॥**

**कल्याणकाण्डदीपः**

तत्त्वाभिमानितया सन्निहितत्वात् । **तद्वाक्यमाकर्ण्य** तेषां वनदेवतादीनां वाक्यं श्रुत्वा । **हविर्भुजः** मूलविभुजादित्वात् कः, अग्निः पाताळलोकात् अपगात् । अडभाव आर्षः । अप सर्वं परिवृज्य आपेत्यर्थः । यद्यपि अग्निहोत्रशालायामेवाग्निरस्ति तथापि पाताळाग्निरूपोऽग्निः रावणस्येन्द्रजितश्च मारणहोमाधिष्ठानतया परममित्रम् । किं च तस्मिन् दिने पाताळाग्निवासः । अपि च वेदवत्या रावणमारणाय पाताळाग्नावेव स्वदेहहविः होमः । उत च पाताळे लङ्कागमनायै एकांशेन वेदवत्या स्थितिः । अतः एतैः कारणैः पाताळादागमनं इति बोध्यम् ।

शालास्थोऽग्निर्मध्यदृष्टिरुदासीनः, पाताळाग्निस्तु शुक्रवन्मित्रमिति ।

**गूढकर्तृकव्याख्यानम्**

तत्कालमालभ्य रावणः विदेहपुत्रीं छायासीतां विमानमारोप्य विहायसा गन्तुं उत्पपात । जटायुषा स्वस्य युद्धे स्वरथो भग्नः । तदा रावणः सीतां आचकर्ष । छाया सीता "हा राम, हा लक्ष्मण, हा राघवेति आर्तरावं रुराव । तत् श्रुत्वा तद्वनसमीपस्थितवनान्तरे स्थिताः प्रतिरोदनं चक्रुः । तदा तद्वनदेवतां दीनध्वनिं श्रुत्वा तत्त्वाभिमानितया सन्निहितत्वात् अग्निः पातालात् आययौ । पातालाग्निरूप अग्निः रावणेन्द्रजितोः । मारणहोमाधिष्ठानतया परममित्रम् । किञ्च तस्मिन्नेव दिने अग्निः पाताले आसीत् । वेदवत्या रावणमारणाय पातालाग्नौ एव स्वदेहहविर्होमः । पाताले लङ्कागमनाय एकांशेन वेदवत्याः स्थितिः । एतत्कारणं पातालागमनम् । यज्ञशालास्थः अग्निः उदासीनः । पातालाग्निस्तु शुक्रवत् मित्रः ।

**मूलम्**

**समायातं दुराधर्षमाकर्षन्तं च जानकीम् ।**
**सम्भाष्य रावणं क्रूरं पातालमुपगम्य च ॥ ५१ ॥**

**रावणेन सुपापेन सहितः सीतया तया।**
**रावणं बोधयामास नानावाक्यगणैः सह ॥ ५२ ॥**

**कल्याणकाण्डदीपः**

आगतः किमकरोत् ? इत्यत आह— **समायातमित्यादिना** । **सं** रथादिसन्नाहयुक्ततया **आयातं** लङ्कया आगतं **जानकीं** च्छायासीतां **आकर्षन्तं दुराधर्षं च** दुर्ग्राह्यमपि **सम्भाष्य** "हे रावण ! इदानीं परममित्रेण मया तवावश्यमुपदेष्टव्यानि वचनानि सन्ति । अत्र क्षणं स्थातुं अनुचितम् । अतो ममावासं पाताळमागच्छ" इत्येवं क्रूरमपि सम्बोध्य । **तया** या **सुपापेन** अतिपापेन रावणेन रथारोपिता, तया, वनगमनोपक्रमे निजसीतया प्रादुर्भूतदेवमायासीतया इदानीं निर्मिताच्छायासीतात्मिका **तया सीतया** रावणेन च सह पाताळमुपगम्यैव, **रावणं बोधयामास नानावाक्यगणैः सह** इति ।

नानावाक्यगणैः—

"रामनाथाय रामाय श्रीरामायात्ममूर्तये ।
जानकीदेहभूषाय रक्षोघ्नाय शुभाङ्गिने ॥" इत्यादि वेदवाक्यैः

"सुलभाः पुरुषा राजन् सततं प्रियवादिनः ।
अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ (वा.रा.३-३७-२)
जीवितं च सुखं चैव राज्यं चैव सुदुर्लभम् ।
यदीच्छसि चिरं भोक्तुं मा कृथा रामविप्रियम् ॥" (वा.रा.३-३७-२) इत्यादि

मारीच-माल्यवत्-कुम्भकर्ण-विभूषणादि-वाक्य-मूलभूतवाक्यसमूहैः सह । नाना-सुहृद्बन्धु-सुभ्रातृ-गुरु-मित्रत्वाद्यनेकप्रकारेण अनेकक्लेशस्थानं प्रदर्श्य हितमुपदिदेश । तथाऽपि रावणस्यायं सहजो दोषः । स्वस्याज्ञानं ज्ञानिभिः परैरुक्तस्यापरिग्रहः ।

"द्विधा भज्ये यमप्येवं न नमेयं तु कस्यचित् । एष मे सहजो दोषः स्वभावो दुरतिक्रमः" इत्युक्तेः । अतः न तत्परिजग्राह । अथाग्निराह । तर्हि तथाऽस्तु यदर्थं मया त्वं पाताळमुपनीतः तदर्थमन्तरागच्छेति तया सीतया सह रावणोपवरकं प्रवेशितः । अथान्तर्गृहेऽपरसीतेव भासमानां पूर्वं कृतयुगे तं शस्वा अग्नौ विसृष्टदेहां वेदवतीं तामपि च्छायारूपां दृष्ट्वा केयमिति प्रप्रच्छ इति वाक्यशेषः ।

अथाग्निराह—

### गूढकर्तृकव्याख्यानम्

आगत एव अग्निः लङ्कायाः आगतं छायासीतां आकर्षन्तं दुर्गाह्यं अपि रावणं आह— रावण ! पश्य । अहं तव मित्रः न किम् ? अतः अवश्यं तव उपदेष्टव्यवचनं अस्ति । अत्र क्षणमपि स्थातुमनुचितम् । मदावासं पातालमागच्छ । इति क्रूरमपि तं सम्बोध्य छायासीतया रावणेन सह पातालमुपगम्य तत्र तं एवं नानाहितवाक्यैः उपदिशति— "रामनाथाय रामाय श्रीरामायात्ममूर्तये । जानकीदेहभूषाय रक्षोघ्नाय शुभाङ्गिने" इत्यादि वेदवाक्यैः । "सुलभाः पुरुषा राजन् सततं प्रियवादिनः । अप्रियस्य च पथ्यस्य वक्ता श्रोता च दुर्लभः । जीवितं च सुखं चैव राज्यं चैव सुदुर्लभम् ।" "यदीच्छसि चिरं भोक्तुं मा कृथा रामविप्रियम्" इत्यादि मारीचमाल्यवत् कुम्भकर्णविभीषणादिवाक्यमूलभूतवाक्यैः सुहृत्व-बन्धुत्व-सुभ्रातृत्व-गुरुत्वाद्यनेकप्रकारेण हितमुपदिदेश । तथाऽपि रावणः स्वयं अज्ञानी । ज्ञानिभिः परैः उक्तस्य अस्वीकर्ता च । अतः अग्न्युपदेशं न परिजग्राह ।

### मूलम्

**इयं जनकपुत्री च विष्णुपत्नी जनेश्वर ।**<br>
**राघवस्त्वद्भयाद्रक्षन् जानकीं मम सन्निधौ ॥ ५३ ॥**

**संस्थाप्य विपिने रामः सञ्चरन् सहलक्ष्मणः ।**<br>
**शिष्योऽसि परमोदार मम कल्याण रावण ॥ ५४ ॥**

### कल्याणकाण्डदीपः

"इयं जनकपुत्री च विप्रपन्नो नरेश्वरः" इति पाठान्तरम् । "विप्रपत्नी जनेश्वर" इति च । हे जनेश्वर । रक्षो जनेश्वर । जनकपुत्री । विष्णुपत्नी च । इयं च । इयमेव । तर्हि कैषा ? इत्यत आह— **जनकपुत्री चेति** । पुत्री वा । पुत्तळिकेति यावत् । सूर्यपत्न्या संज्ञया निर्मितच्छायेव मनोमयी कान्तिसीतेति यावत् । चशब्द इवार्थे । कथं सैषा तव सद्मागता ? इत्यत आह— **राघव इति** । यद्वा यदा **रामः सहलक्ष्मणः विपिने सञ्चरन्** आस्ते तदा जानकीं **त्वद्भयात् रक्षन् मम सन्निधौ संस्थाप्य** स्वाहायां सन्निवेश्य सञ्चरन्नास्ते इति योजना । अतः सा मद्गृहे पूजिताऽस्तीति भावः ।

रक्षन्निति हेतौ रता । तर्हि ममापि अङ्कमारोपयामीत्याह रावणः । अथाग्निः— न्यासभूता वैदेही मयि विन्यस्ता । न्यासस्य प्रत्यर्पणं न्याय्यम् । अन्यथा कृतघ्नता स्यात् । अस्तु तव तथा, मम का हानिरित्यत आह— **शिष्योऽसि परमोदार मम कल्याण रावणेति** । हे **रावण !** अन्येषां देवानां

अकल्याणोऽपि **मम कल्याण** अभ्युदयहेतो ! अन्येषां सर्वस्वापहार्यपि **मम परमोदार** । अदेय-प्राणानामपि दातः अन्येषां शास्ताऽपि **मम शिष्योऽसि** । हिताहितप्राप्तिपरिहारोपायं उपदेष्टु-मर्होऽसि । एतावन्तं कालं अतो मयि नैतत् तवोचितमिति ।शिरसि हस्तं निधाय कपोलौ स्पृष्ट्वा ययाच इति भावः । तर्हि तामेव देहीत्याहेति वाक्यशेषः ।

**मूलम्**

**स्वाहायां सन्निवेश्याथ नाम्ना वेदवतीं शुभाम् ।**
**सीताकृतिं ततः कृत्वा मायया मेषवाहनः ।**
**ददावग्नौ विशेषेण भक्तिर्वै रावणस्य च ॥ ५५ ॥**

**कल्याणकाण्डदीपः**

अथ किमभूदित्यत आह— **स्वाहायामिति** । अत्र पाठान्तरं "स्वहया सन्निवेश्याथ" इति । "हरावग्नौ विशेषेण" इति च । अथ मेषवाहनः— हिरण्यरेताः **च्छायासीतां स्वाहायां सन्निवेश्य** तदन्तर्हितनिजसीता प्रभयैकभावं प्रापय्य ततो मायया रक्षोव्यामोहनकार्या दैव्या निजशक्त्या वेदाया अपि रावणः साक्षात् दर्शनसम्भाषणानर्ह इति सीताकृतिं हिरण्यज्वालामयीं सीतापुत्तळिकां कृत्वा **नाम्ना वेदवतीं शुभां** निजवेदवतीं स्वाहायां सन्निवेश्य तदन्तःसन्निहितनिजसीतयैकीभावं प्रापय्य ईष-दस्ति ईषदपि नास्ति इत्येवं यथाकार्यकालं ईषत्कालं सन्निधाप्य व्यवहारसिद्ध्यै इन्द्रमावेश्य रावणाय ददावित्यर्थः । 'हरौ' इति पाठे 'ददौ' इति शेषः ॥ परमदुर्विनीतस्यैवं नीतिमार्गे कथं प्रवृत्तिरभूदित्यत आह— **अग्नाविति** । रावणस्य च सकललोकविरावणस्य क्रूरस्यापि अग्नौ **विशेषेण भक्ति** : विशिष्टा भक्तिः इति **वै** प्रसिद्धम् । रावणस्य वाल्यर्जुनादिमैत्र्यादौ अग्नेः साक्षित्वात् ।

*अयं भावः*— रावणस्य दिक्पाला इन्द्रादयः शत्रवः । कोणपाः मित्राणि । वायव्यस्य एकोन-पञ्चाशन्मरुदन्तर्गतस्य प्रधानवायुभिन्नस्य दितिपुत्रत्वात् वैश्यत्वाच्चेति भावः ।

**गूढकर्तृकव्याख्यानम्**

अग्निः पुनराह— "तर्हि रावण ! यदर्थं त्वां इह उपानीतवान् तदर्थं अन्तः आगच्छ पश्य" (इत्युक्त्वा छायासीतया रावणेन च अपवरकं प्रविश्य) पश्येत्यवोचत् । तत्र अन्तर्गृहे अपरा सीतेव भासमानां पुरा कृतयुगे आत्मानं इष्ट्वा अग्निमुक्तदेहां वेदवतीं तामपि छायारूपां दृष्ट्वा, "अग्ने ! केयम् ?" इति पप्रच्छ ।

अग्निः— "राक्षसेश्वर ! इयमेव जनकपुत्री । विष्णोः पत्नी च । इयं च ....... ।"

राणवः— "तर्हि का एषा ?"

अग्निः— "इयं जनकपुत्री न । परन्तु जनकपुत्रीव भासमाना पुत्तलिका सूर्यपत्नीसंज्ञया निर्मिता छायेव मनोमयीकान्तिसीता ।"

रावणः— "तर्हि एषा अत्र कथं तव सद्म आगता ?"

अग्निः— "यदा यदा रामः सलक्ष्मणः वने चचार, तदा तदा तव भयात् मम सन्निधौ संस्थाप्य स्वाहायां सन्निवेश्य चरन् आस्ते । अतः सा मम गृहे पूजिताऽस्ति ।"

रावणः— "तर्हि इमां अपि अङ्कमारोप्य नयामि ।"

अग्निः— "रावण ! न्यासभूता वैदेही मयि विन्यस्ता । न्यासस्य प्रत्यर्पणं न्याय्यम् । नो चेत् कृतघ्नता स्यात् ।"

रावणः— "अस्तु । तव मम च का हानिः ?"

अग्निः— "रावण ! शृणु । अन्यदेवानां अकल्याणोऽपि त्वं मम तु कल्याणः । मम श्रेयोहेतु-भूत ! परं सर्वस्वहारी अपि त्वं मम तु परम-उदारः ॥ अदेयानामपि प्राणानां दातः, अन्येषां शास्ताऽपि मम शिष्योऽसि । हिताहितप्राप्तिपरिहारोपायं उपदेष्टुं अर्हसि । अतः मयि एतत् तवोचितं न । इत्युक्त्वा शिरसि हस्तं निधाय कपोलौ स्पृष्ट्वा रावणं ययाचे ।

रावणः— "तर्हि तामेव देहि ।"

अग्निः ततः छायासीतां स्वाहायां सन्निवेश्य तदन्तर्हिता सीताप्रभया एकभावं प्रापय्य तव मायया रक्षोव्यामोहनकर्या दैव्या निजशक्त्या वेदाया अपि रावणः साक्षात् दर्शनस्पर्शनसम्भाषणानर्ह इति हिरण्यज्वालामयीं सीतापुत्तलिकां निर्माय वेदवतीं स्वाहायां सन्निवेश्य तदन्तःसन्निहितनिजसीतया एकीभावं प्रापय्य ईषदस्ति ईषदपि नास्ति इत्येवं यथाकार्यकालं ईषत् कलां सन्निधाप्य व्यवहार-सिद्ध्यै इन्द्रमावेश्य रावणाय ददौ ॥

**मूलम्**

**तस्मादग्निवचः श्रुत्वा जानकीं मनसा स्मरन् ।**
**[1]अज्ञस्तां मन्यमानोऽसौ रावणो मोहदर्पितः ॥ ५६ ॥**

---
१. अज्ञानात् ।

**लङ्कां गत्वाऽशोकवने शिंशुपावृक्षमूलतः ।**
**स्थाप्य सीताकृतिं क्रूर इन्द्राविष्टं स राक्षसः ॥ ५७ ॥**

**कल्याणकाण्डदीपः**

तत्राप्यग्नेरुपाध्याय इति । **तस्मादग्निवचः श्रुत्वेति** । किं वा भवतु गुरुवचः श्रोतव्यं तत् हितो-दर्कं भविष्यति इति **अग्निवचः श्रुत्वा जानकीं मनसा स्मरन्** निजा तादृशी इयं च कीदृशीति परीक्षां चकारेति शेषः । तदा तदाकृतिसन्निहितयथाकार्यकालया कलया प्रापितमोहेन दर्पितः हृष्टोऽभूत् । अत एव **अज्ञः** अजानन् **तां** आकृतिमेव तां सीतां सातितां **मन्यमानः असौ रावणः** तामादाय अङ्कमारोप्य **लङ्कां गत्वा अशोकवने शिंशुपावृक्षमूलतः** अगरुवृक्षमूले इन्द्राविष्टां **सीताकृतिं** सीताप्रतिमां **स्थाप्य** संस्थाप्य । ल्यबार्षः । **स क्रूरो राक्षसः** अन्तःपुरं प्रविवेशेति शेषः ।

**मूलम्**

**रामो गत्वा तु तं हत्वा रावणं सगणं [1]स्वकम् ।**
**सीतां प्राप्य जगन्नाथो अयोध्यां प्रत्यपद्यत ॥ ५८ ॥**

१. खलम् ।

**कल्याणकाण्डदीपः**

अथ **जगन्नाथो रामस्तु** सेतुना लङ्कां **गत्वा** । खलमुक्तोऽपि हते दुर्जनं **सगणं रावणं हत्वा सीतां प्राप्य अयोध्यां प्रत्यपद्यत** इति प्रसिद्धं त्वया श्रुतमिति शेषः ।

**गूढकर्तृकव्याख्यानम्**

परमक्रूरः परमदुर्विनीतोऽपि रावणः अग्नौ कथं विश्वासं विदधे ? रावणस्य वाली कार्तवीर्या-र्जुनाभ्यां मैत्र्यादौ अग्निः साक्षी आसीत् । रावणस्य दिक्पालाः वैरिणः । कोणपाः मित्राणि । तत्रापि अग्निः उपाध्यायः । अग्नौ रावणस्य विशेषेण भक्तिः । अतः "गुरुवचनं हितं" इति मत्वा रावणः तत्सीताकृतिमोहितः निजसीतां मत्वा तां आदाय अङ्कमारोप्य लङ्कां गत्वा अशोकवने शिंशपामूलतः इन्द्राविष्टसीताकृतिं संस्थाप्य आत्मानं कृतकृत्यं मेने । ततः जगदीशः रामः सेतुना समुद्रं बद्ध्वा, लङ्कां गत्वा, रावणं सगणं हत्वा, सीतां प्राप्य, तया अयोध्यां प्रत्यपद्यत । इति प्रसिद्धं त्वया श्रुतम् ॥

**मूलम्**

**तत्र लोकापवादेन सीतामग्नौ प्रवेश्य च ॥ ५९ ॥**

**कल्याणकाण्डदीपः**

एतन्मध्ये किञ्चिद्रहस्यमभूदित्यत आह— **तत्रेति** । **लोकापवादेन** = लोकः अज्ञजनः, तस्य अपवादो निन्दा, तेन ।

दीर्घकालोषिता चेयं रावणान्तःपुरे शुभा ।
बालिशः खलु कामात्मा रामो दशरथात्मजः ।
इति वक्ष्यन्ति मां सन्तो जानकीमविशोध्य हि ॥

अस्यार्थः— रावणान्तःपुरे इयं च शुभा सुन्दरी दीर्घकालोषिता च । यदि इयं दशरथात्मजो रामः स्वीकरोति तर्हि कामात्मा बालिशः इत्यज्ञाः वक्ष्यन्ति । सन्तस्तु इयं रावणान्तःपुरे दीर्घकालोषिताऽपि शुभा ततः परिशुद्धा । तथाऽपि यद्यविशोध्य स्वीकरोति तर्हि कामात्मा बालिश इति वक्ष्यन्ति इति सद्भिः वाच्यो भविष्यामीति यावत् । यद्वा, लोकापवादेन । लोकालोकसर्वमायानिर्भेदिदर्शनं तेन अपवादो बाधः अनेन । नेयं सीता किन्तु तदाकृतिराग्नेयीति बाधेन । सीतां आग्नेयीं तदाकृतिं अग्नौ प्रवेश्य स्वीकरणसमये हिरण्यरेताः स्वकृतहिरण्मयज्वालामयीमाकृतिं स्वीकृत्य तत्सन्निहितैषत्कलां निज-वेदवत्यां सम्मेळ्य स्वाहान्तर्हितनिजदेवमायासीतां निजवेदवतीं च रामाय स्तुवन् दर्शयामासेति सन्दर्भशेषः ।

**मूलम्**

**सीताद्वन्द्वं तदा दृष्ट्वा उवाच निजभामिनीम् ।**
**का सा देवी तव समा तव रूपसमन्विता ॥ ६० ॥**

**कल्याणकाण्डदीपः**

ततः किमभूत् ? इत्यत आह— **सीताद्वन्द्वमिति** । सीताया रूपद्वन्द्वम् । तयोः स्वरूपै-क्यात् । **दृष्ट्वा तदा निजभामनीम्** । "मय्यदोषे कुतो रोषः" इति इतीर्ष्याकृतकोपात्मकमनाब्धानवर्तीं निजां **उवाच** दर्शयन् लोकसङ्ग्रहमुवाचेत्यर्थः । किमिति ? **का सेति** । **सा** अपूर्वा **तव समा** देश-कालगुणवयोऽवस्थाशीलतः समा **तव रूपसमन्विता** त्वत्समाकार देवी । का ? किमाख्या कुत्र स्थितेत्यर्थः ।

**मूलम्**

**न जानेऽहं वराङ्गे तां चन्द्रबिम्बाननां शुभाम्।**
**राघवेणैवमुक्ता सा जानकी वाक्यमब्रवीत् ॥ ६१ ॥**

**कल्याणकाण्डदीपः**

सर्वं ज्ञातं विडम्बनमात्रमिदमित्यादि ईर्ष्यया सीतयोक्ते आह— **न जान इति**। हे **वराङ्गे** ! अङ्गने ! **चन्द्रबिम्बाननां** राकाचन्द्रवन्निखिलमनोह्लादिनीं **शुभां** कल्याणीं **तां नाहं जाने** इति कुपितसीताकोपशान्तये उवाचेत्यर्थः। ततः किमित्यत आह— **राघवेणेति**। स्पष्टोऽर्थः।

**गूढकर्तृकव्याख्यानम्**

किञ्च रावणान्तःपुरे इयं च शुभाङ्गी दीर्घकालमुषिताऽपि शुद्धा। तथाऽपि "अविशोध्य यदि स्वीकरोति रामः तर्हि कामात्मा बालिशः इति वक्ष्यन्ति सन्तः" इति हेतोः अपवादनिवृत्त्यर्थं तां आग्नेयीं सीताकृतिं अग्नौ प्रवेश्य, स्वीकारकाले अग्निः स्वकृतहिरण्मयज्वालामयीं आकृतिं स्वीकृत्य, तत्सन्निहित-ईषत्कलां निजवेदवत्या सम्मेल्य स्वाहान्तर्हितनिजदेवमायां सीतां निजवेदवतीं च रामाय स्तुवन् दर्शयामास॥ तदा रामः सीतायाः रूपद्वयं दृष्ट्वा, लोकविडम्बनाय "जानकि, केयम् ? किमाख्या ? अपूर्वा तव रूपसमन्विता दृश्यते" इति। सीता— सर्वं ज्ञातं तव। तथाऽपि विडम्बयसि। रामः— वराङ्गने ! राकेन्दुवत् लोकमनोहारिणी कल्याणि केति न जाने।

**मूलम्**

**जानक्युवाच—**

**मद्दुःखं हि तया भुक्तं यन्निमित्तं दयापर।**
**नाम्ना वेदवती नाम स्वाहायाः सन्निधौ स्थिता ॥ ६२ ॥**

**तामङ्गीकुरु गोविन्द विवाहविधिपूर्वकम्।**
**इति सीतावचः श्रुत्वा रामो वचनमब्रवीत् ॥ ६३ ॥**

**कल्याणकाण्डदीपः**

**मद्दुःखमिति**। या पुरा कृतयुगे बार्हस्पत्यकुशध्वजसुता नाम्ना वेदवती नाम तथा प्रसिद्धा सती रावणस्पर्शानन्तरं अग्नौ देहं विशोध्य स्वाहायाः सन्निधौ स्थिता **तया** वेदया **यन्निमित्तं** 'निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शनमि'ति वार्तिकात् यस्मै प्रयोजनाय **मद्दुःखं** मयैवानुभूयमानं

कष्टं यद्यस्मात् **भुक्तं** अनुभूतम् । तत् तस्मात् मयैवानुभूयमानं सुखमनुभविष्यसीति मया वरदानात् **हे दयापर** ! तामङ्गीकुर्वित्याद्याहेत्यर्थः । "इति दत्तवरा पूर्वं मया लक्ष्म्या च सुन्दरि" इत्याद्युक्तेः ।

### गूढकर्तृकव्याख्यानम्

जानकी— "या पुरा कृतयुगे बार्हस्पत्यकुशध्वजसुता वेदवती नाम । रावणस्पर्शात् अग्नौ देहं त्यक्त्वा पुनः स्वाहायां सन्निवेशिता । अनया वेदया मया अनुभूयमानं दुःखं अनुभूतम् । ततः मया अनुभूयमानं सुखं अनुभविष्यसि इति अहं वरं तस्यै दत्तवती । अतः दयापर ! इमां विवाहविधिपूर्वकं अङ्गीकुरु ।"

### मूलम्

**श्रीराम उवाच—**

**एकपत्नीव्रतं मेऽद्य कृतं जानासि भामिनि ।**
**द्वापरेऽङ्गीकरोमीति बहूनां वरदो यतः ।**
**तव वाक्यं करिष्यामि अष्टाविंशतिमे कलौ ॥ ६४ ॥**

### कल्याणकाण्डदीपः

**एकपत्नीव्रतमिति** । **एकपत्नीव्रतं** एकैव पत्नी धर्माय सत्यपि विभवे अन्यराजवत् भोगाया-द्वितीयादिः इति पुंसः । राजपुत्र्यपि राजपत्न्यपि पत्युः यावत् सेवाधुरमेकैव पत्नी भूत्वा ध्रियत इति स्त्रियोऽपि एकपत्नीव्रतम् । एकैव पत्नी एकपत्नी, तत्साध्यत्वात् तत् व्रतमपि तथोपचर्यते । एकपत्नी च तत् व्रतं च एकपत्नीव्रतम् । सर्वभाग्यं ममैव स्यात् "स्वयमिन्दिरैव पतिमानकरी" इत्याद्युक्तेः ।

तथा चेत्थं योजना । **हे भामिनि !** अद्य । अष्टाविंशतितमे त्रेतायुगे **मे** मया एकपत्नीव्रतं यावदवतारं करोमीत्येवं कृतं सङ्कल्पं त्वं जानासि । अहमपि त्वमिव त्वत्साहचर्यात् वेदयाऽपि एक-पत्नीव्रतं कृतं जानामि । द्वापरे अष्टाविंशे यतोऽहं बहूनां स्त्रीजनानां **वरदः** पतित्ववरदः । अतो द्वापरे एकपत्नीव्रतं न करोमीति कृतं च जानासि । अतः तव वाक्यं अष्टाविंशतितमे कलौ करिष्यामीति ।

### मूलम्

**तावदेषा ब्रह्मलोके ब्रह्मणा पूजिता वसेत् ।**
**श्रुत्वा दाशरथेर्वाक्यं जगाम भवनं विधेः ॥ ६५ ॥**

**कारणं पद्मवत्यास्तु भणितं तव सुव्रते ।**
**न मे वाक्यमसद्भूयादिति वेदविदो विदुः ॥ ६६ ॥**

**कल्याणकाण्डदीपः**

**कारणमिति ।** पद्मावत्याः कारणं जनिकारणम् । हे **सुव्रते !** **तव** तुभ्यं मया भाषितम् । एतत्सत्यं भवत्येवेत्याह— **न मे इति ।** **मे वाक्यं** कदाऽपि केनाऽपि **असद्** अनृतं **न भूयात्** इति **वेदविदः** इत्युवाचेति पूर्वेणान्वयः ॥

अत्रेदं बोध्यम् । वनगमनात्पूर्वं राममनोहररूपा सीतारक्षःसंहारोपयोगिरक्षोव्यामोहनाय वनगमनोपक्रमे देवमायेव तिलोत्तमेव नारायणीव प्रादुर्भूतरूपविशेषा सती राममनुगता सा पुनर्जनस्थाने रामे लक्ष्मणे च वनङ्गते रहिते देवमाया जानकी रावणमालोक्य अग्निहोत्रस्थाग्निमुवाच । मनोमय्या च्छायासीताया रावणमहं मोहयामि । अहं च तव सन्निधौ स्वाहान्तर्हिता पाताळे वसामि । त्वं च मनोमय्या तया सह रावणं पाताळमानीय स्वज्वालामयीं मत्पुत्तळिकां कृत्वा रावणमोहनाय वेदवत्या एकां कळां यथा कार्यकालं सन्निधाप्येन्द्रमाविश्य मन्मायाशक्त्युपोद्बलिततया त्वन्मायया तं मोहयित्वा दत्वा अथ रावणवधान्ते रामो मत्पुत्तळिकां च दृष्ट्वा, अहो किमिदं स्त्रीणां महीयसी मोहनशक्तिः । एवं बहुविधचिन्ताशोकवालिवधवानरसम्मेळनसीतान्वेषणसेतुबन्धनानेकरक्षोहननादिपरिश्रमेऽपि सा न लब्धा । मामपि मोहयन्त्या निर्घृणाया ।

एवं कुटिलया सीतया किं प्रयोजनमिति । यदा मह्यं कुप्यति तदा तं स्तुत्वा मां वेदवतीं च देहीत्युक्त्वा मनोमयीं च्छायासीतां निर्माय शालायां विसृज्य शालाग्निभार्यास्वाहाप्रभायां आत्मानमन्तर्धाय पाताळे स्वात्मकवेदवत्या सह स्थिता । अथ रामो रावणं हत्वा कृतिमग्नौ निवेश्य अग्निदत्तं सीताद्वन्द्वं ददर्शेति उवाच मन्दवचनं इत्यादि सीताद्वन्द्वं तदा दृष्ट्वेत्यन्ताखण्डार्थः । उक्तार्थांशे कानिचित्पुराणवाक्यानि लिख्यन्ते ।

तथा हि— रामायणे —

"रामस्य दयिता भार्या नित्यं प्राणसमाहिता ।
जनकस्य कुले जाता देवमायेव निर्मिता ॥

सर्वलक्षणसम्पन्ना नारीणामुत्तमा वधूः ।
सीताऽप्यनुगता रामं शशिनं रोहिणी यथा ॥" इति । (१.१.२६)

तथा ह्याग्नेये—

"अग्निहोत्रस्थितं वह्निं जगत्साक्षिणमीश्वरम् ।
विदित्वा प्राञ्जलिर्वाक्यं लोकसङ्गहमब्रवीत् ॥"

"अग्ने गृहपते कर्मसाक्षी मध्यस्थदृग्भवात् ।
हितकारी च लोकानां अहं गृहपतिस्त्वया ॥

रक्षणीया प्रयत्नेन यन्मया त्वं च रक्षितः ।
त्वत्तेजसि विलीना स्यां यावद्रामजयाद्रणे ॥

कौटिल्यं दर्शयं स्त्रीणां यदा कुप्यति मां हरिः ।
रामायार्पय मां भद्र स्तुत्वा तं लोकसन्निधौ ॥

इत्युक्त्वा सा प्रभावेन प्रतिबिम्बं मनोमयम् ।
यथा रूपं तथा वेषं कल्पयित्वा त्रिसुन्दरम् ॥

वह्नावाच्छादयन्ती स्वमात्मानं समुपस्थिता ।
यथैव मातरं पुत्रः पितरं पालयेच्छुचिः ॥

तथा रक्ष वैदेहीं विनीतोऽग्निः स्वतेजसा ।
अथ मायामयी सीता परमार्थे च संस्थिता ।
ददर्श सञ्चरन्तं तं मारीचं निर्गता बहिः ॥" इत्यादि ।

वाराहे—

"पुरा त्रेतायुगे पुण्ये रावणं हतवानहम् ।
तदा वेदवती कन्या साहाय्यमकरोच्छ्रियः ॥

सीतारूपाऽभवल्लक्ष्मी जनकस्य महीतळात् ।
गते मयि तु मारीचं हन्तुं पञ्चवटीवने ॥

ममानुजोऽपि मामेव सीतया चोदितो ययौ ।
तदन्तरे राक्षसेन्द्रो हर्तुं सीतामुपाययौ ॥

अग्निहोत्रगतो वह्निः तं ज्ञात्वा रावणोद्यमम् ।
आदाय सीतां पाताळे स्वाहायां सन्निवेश्य च ॥

तेनैव रक्षसा स्पृष्टां पुरा वेदवतीं शुभाम् ।
अग्नौ विसृष्टदेहां तां शस्त्वा तं रावणं पुनः ।
सीताया रूपसदृशं कृत्वा चैवोत्ससर्ज ह ॥

सा रावणहृता भूता लङ्कायां सन्निवेशिता ।
हते तु रावणे पश्चात् पुनरग्निं विवेश सा ॥

अग्निस्तु रक्षितां लक्ष्मीं स्वाहया मम जानकीम् ।
दत्वा स्तुत्वा च मामाह सीतया सहितं शिखी ॥

इयं वेदवती देवी सीतायाः प्रियकारिणी ।
सीतार्थं राक्षसगृहे तेन बन्दीकृता स्थिता ॥

तस्मादेनां वरेणैव प्रीणय त्वं श्रियासह ।
इति वह्निवचः श्रुत्वा सीता मामवदत् शुभा ॥

मम प्रीतिकरा नित्यमियं वेदवती विभो ।
परं भागवतीं देवैर्वदतां वरय प्रभो ॥" इत्यादि ।

सूत्रपाठभेदवत् पाठभेदः । श्रोतृभेदात् साधुः । अत्र पाठभेदेऽर्थसङ्गमनप्रकारो निरूप्यते । "स्वाहाया सन्निवेश्य" इति पाठे हविर्भुजः तया सीतया सुपापेन रावणेन च सह पाताळमुपगम्य स्वाहया "हे स्वाहे ! अहं रावणं बहिरेव बोधयामि । त्वं च सान्त्वयन्ती मातेवागत्य सीतां शिशुमिवोद्धृत्य अन्तर्निवेशनं निवेश्य स्वप्रभया आच्छादय" इत्युक्तया स्वाहया सन्निवेश्य अन्तर्निवेशनं निवेश्य नानावाक्यगणैः सह "हे जनेश्वर ! इयं जनकपुत्री विष्णुपत्नी । किं च, त्वद्भयाद् जानकीं रक्षन् राघवः मम सन्निधौ जानकीं न्यासरूपेण संस्थाप्य सलक्ष्मणो विपिने सञ्चरन् वर्तते । किं च, हे रावण ! मम त्वं परमोदारकल्याणशिष्योऽसि" इत्येवं नानास्ववाक्यगणैश्च रावणं बोधयामासेति । "तद्वाक्यमाकर्ण्य" इत्यारभ्य "स्वाहया सन्निवेश्य" इत्यन्तं एकवाक्यतया योजनेति ।

अयं भावः— विष्णुपत्नीत्वात् जगन्माता न प्रधर्षणीया । मयि न्यासतया न्यस्तत्वात् मया न त्याज्या । त्वं च मद्विनयग्राही । तस्मादयं उद्योगो निवर्तनीय इति नैतज्जग्राह रावणः ॥ अथ मेषवाहनः । ततः दौर्जन्यात् मायया मोहनशक्त्या नाम्ना वेदवतीं शुभां सीताकृतिं कृत्वा । तत्पुत्तलिकायां सूक्ष्मकलया सन्निधाप्य ददावित्यर्थः ॥ शेषं पूर्वरीत्या सङ्गमनीयम् ॥ १ ॥

एतन्मध्ये विप्रपत्नौ नरेश्वर इति पाठभेदोऽस्ति । तस्मिन् सङ्गमनप्रकारः— इयं जनकपुत्री नरेश्वरः रामश्चेतौ विप्रपत्नौ । मृगया कर्तव्येति जानकी रामो न कर्तव्येति विरुद्धभाषिणौ बभूवतुरिति शेषः । अथ राघवः त्वद्भयाद्रक्षन्नित्यादि शेषं सुगमम् । अस्मिन्नप्यर्थे ग्रन्थान्तरसंवादोऽस्तीति ध्येयम् ॥ २ ॥

'विप्रपत्नी' इत्यस्मिन्पाठे प्राथमिकीं भिन्नभिन्नवाक्ययोजनारीतिमनुसृत्य सङ्गतिः कार्या । तथा हि— रावणः सीताद्वन्द्वं तदा दृष्ट्वा कैषेति पप्रच्छ । तदा तमग्निराह गुह्यभाषया मोहयितुम् "उभे अपि च्छायारूपी सीतावेदे व्यत्यस्य इयं जानकीति वेदां जानकीं च विप्रपत्नी" इति । रावणस्तु मूढोक्त्या भ्रान्तः । किमिति ? "सीता मां मोहयितुं काञ्चन स्वसखीं विप्रपत्नीं परव्यामोहनदक्षां वरेण च्छन्दयित्वा तत्र शालायां नियोज्य अन्तर्हिता आसीत् । तदजानन् अहं विप्रपत्नीमेवानीतवान्" इति । भ्रान्तार्थस्यालीकत्वात् न ग्रन्थान्तरसंवादापेक्षा । न चाग्नेरनृतभाषित्वम् । वि विशिष्टः, प्र प्रकृष्टः, विश्वासौ प्रश्च तथा । विशिष्टेषु प्रकृष्ट इति वा विप्रो विष्णुः, तस्य पत्नी इत्यभिप्रेत्य प्रयुक्तत्वात् । "अकयप्रविसम्भूम" इत्यादेः । शेषं प्राथमिकयोजनावत् ॥ ३ ॥

"हरावग्नौ' इति पाठस्य तु वास्तवार्थेऽर्थसङ्गतिः । तथा हि— रावणोऽकम्पनवचः श्रुत्वा सीताहरणोद्युक्तः मारीचेन निवारितो निवृत्तः । पुनः सनत्कुमारोक्तवृत्तान्तमनुस्मरन् पुनरागतो मारीचेन पुनः निवार्यमाणोऽपि परमार्थे गूढाभिसन्ध्या अनिवृत्तः सीतामाचकर्ष । तदा अग्निः "मध्यमलोक-भाग्यविभवाच्छिष्यो न रिक्तो भवेत्" इति घृणया नानाभक्त्या बोधयामास । तथापि रावणः सर्वमिदं तृणीकृत्य काममुखया भक्त्या सीतामादाय द्वेषमुखभक्त्या "रामशराहतः पार्षदतां प्राप्नुयामिति इयं न त्याज्या" इति । तदाहाग्निः— "इयं जनकपुत्री विष्णुपत्नी च त्वां वरवच्छस्वा मत्सन्निधौ स्थिता । सैषा चैकं तेजः । नाणुमात्रमन्तरमेतयोः । परन्तु राघवः त्वद्भयात् – त्वच्च तत् भयं च त्वद्भयं, तस्मात् तव – सीता मशकस्य भूरिव दुरुद्धरा । अत एव तद्भयं नास्ति । किन्तु कपिलात् सागराणामिव तवानभीष्टनाशाख्यान्यभयात् । त्वां रक्षन् जानकीं मम सन्निधौ संस्थाप्य विपिने सञ्चरन् वर्तते । त्वं च मम परमशिष्योऽसि । तवानिष्टं मा भूत् । अत इयं नानेया ।

अथ स्वाहायां तां निवेश्य ततो मेषवाहनः स्वसामर्थ्येन सीताकृतिं कृत्वा नाम्ना वेदवतीं तत्रैक-कलया सन्निधाप्य ददौ इति शेषः । कथं तदाकृतिमात्रेण शान्तः इत्यत आह— **हरावग्ना-वित्यादि** । हरौ देवे विष्णौ अग्नौ गुरौ विशिष्टा भक्तिः । हरौ द्वेषमुखी मुखतो राक्षसत्वात् । गुरौ उप-सन्नमुखी । तस्मात् तद्वचः श्रुत्वा राक्षसभावेन मोहदर्पितो पार्षदभावेन अमोहदर्पितः । अत एवाज्ञः ।

विष्णुमाहात्म्यज्ञानी असौ रावणः । जानकीं मनसा स्मरन् मनसि निधाय तामेव आकृतिं मन्यमानः स्वाभीष्टसाधनमिति जानन् लङ्कां गत्वेत्यादि ॥ शिष्टं सुगमम् । त्वदन्यपर्यायः । अस्मिन्नर्थे उत्तर-काण्डकथैव मानम् ॥

यद्वा हरतेरौणादिकः डप्रत्ययः । हरत्यज्ञानमिति हरुः । तरुवत् । हरुः हरः । अस्मिन्नर्थे प्रसिद्धिः प्रमाणम् । न चाप्रयुक्तत्वं दोषः । तस्य काव्यविषयत्वात् । अथवा हरतेरच् । रूढेर्बाधाद्योगेनैव हरिर्हरः । न च "ऋते नारायणादीन्" इत्यादिना विरोधः । एतदन्यविष्ण्वादीनामेवादिना ग्रहणात् । हरिशब्दस्यान्यत्र प्रयोगदर्शनाच्चेति दिक् ॥

किंस्वरूपेत्यस्य विष्णुपत्नीत्युत्तरम् । किंनामिकेत्यस्य वेदवतीति । कीदृशीत्यस्य तव समेति । किमर्थं जनिरित्यस्य मत्पत्नीत्वं सम्पादनार्थमित्युक्तं भवति ॥

**मूलम्**

**श्रुत्वा तज्जननं कर्म बकुलाऽऽनन्दनिर्भरा ।**
**कौतूहलसमाविष्टा श्रीनिवासमभाषत ॥ ६७ ॥**

**कल्याणकाण्डदीपः**

ततः किम् ? इत्यत आह— **श्रुत्वेति** । **तज्जननं** तस्याः पद्मायाः जननं जनिहेतुभूतं कर्म सिसाधयिषितपरिणयसाधनमेवेति श्रुत्वा सुकरमेतदिति आनन्दपूर्णा अभवत् । सा लक्ष्मीः भवान् विष्णुः अतः तस्याः त्वच्चित्तापहार उचितः ॥ **कौतूहलेति** । अदृष्टाश्रुतमाहात्म्यश्रवणादाश्चर्याविष्ट-मनस्का बकुळा श्रीनिवासमभाषत ।

**गूढकर्तृकव्याख्यानम्**

रामः— "भामिनि ! मम अद्ययुगे एकपत्नीव्रतत्वं वेत्सि । तथा च द्वापरे बहुस्त्रीजनपतित्व-वरदोऽहम् । अतः तव वाक्यं अष्टाविंशतिमे कलौ करिष्यामि । तावत् इयं वेदा सत्ये विधिना पूजिता भवतु" इति ।

ततः वेदा रामाज्ञया सत्यं ययौ । हे सुव्रते, बकुले ! एवं पद्माजनिकारणं उक्तवान् । तत् श्रुत्वा बकुला अत्यानन्दिता कन्याघटनं सुकरं मेने । तदा वक्ति "श्रीनिवास ! पद्मा लक्ष्मीः । भवान् विष्णुः । अतः त्वच्चित्तापहार उचितः" इत्युक्त्वा वदति—

## मूलम्

## श्रीनिवासानुज्ञया नारायणपुरं प्रति बकुलागमनम्

बकुलोवाच—

गच्छामि राजेन्द्रसभां सभासदैः
सम्पूर्णसर्वार्थकलत्रपूर्णाम् ।
इत्येवमुक्तो भगवान् जगद्गुरुः
सम्प्रेषयत् तां बकुलां स्वकारणात् ॥ ६८ ॥

दिव्यां तुरङ्गीमास्थाय निर्मितां देवमायया ॥ ६९ ॥

### कल्याणकाण्डदीपः

किमभाषत ? इत्यत आह— **गच्छामीति** । **सभासदैः** सभास्तारैः **सम्पूर्णाः** सम्पूरिता ये **सर्वार्थाः** सर्वधनानि येषु तानि, तथा, तानि च तानि **कळत्राणि** च राज्ञां दुर्गस्थानानि, तथा तैः पूर्णाम् । यद्वा सभासदैः संरक्ष्यचतुर्विधपुरुषार्थपूर्णाम्, कलत्राणि च ते सम्पूर्णसर्वार्थाश्च सम्पूर्णसर्वार्थ-कलत्राणि । कडारादिः । नित्यसापेक्षत्वात् समासः । "योग्यभाजनयोः पात्रं त्वथ संरक्ष्य वस्तुनि । नृपाणां दुर्गमस्थाने कळत्रं श्रीविभार्ययोः" इति नानार्थः । मोक्षसंरक्षणं च ज्ञानद्वारेति । सम्पूर्णसर्वार्थो विष्णुः तस्य कलत्रं भार्या । तेनैव पूर्णा सर्वसम्पदाऽन्यूनां इति वार्थः ॥ राजेन्द्रस्य सभा यस्यां सा तां नारायणपुरीं गच्छामीति आभाषतेति पूर्वेणान्वयः ॥

द्वितीयपादेन्द्रवज्रेतरपादेन्द्रवंशोपजातिः । भिन्नच्छंदोभवानां वृत्तानां मेलनेऽपि उपजातित्व-सम्भवात् "स्यादिन्द्रवज्रा यदि तौ जगौ गः", "स्यादिन्द्रवज्रा ततजैरसंयुतैः इति तल्लक्षणम् ॥ स्वांशप्रतिपाद्य राजवंशपुरयोर्मन्याभेद्यत्वसूचनाय पान्तु पद्यस्येव वृत्तरचनावैशद्यं बोध्यम् ।

अत्र मध्ये सन्दर्भ शेषः । अथ स्वस्थचित्तः श्रीनिवासः स्वयं भुक्त्वा तदैव भुक्तया तया स्वस्थ-चित्ताश्वः पुष्येण प्राजापत्ययोगे गच्छामीति **इत्येवमुक्तो भगवान् जगद्गुरुः देवमायया** देवव्यामो-हिन्या स्वेच्छया **निर्मितां दिव्यां** देवानामप्यर्हां गुञ्जामणिसमाकारां **तुरङ्गीं** - "तुरङ्गी बडवां जातेः" इति ङीष् - आरोप्य **स्वकारणात्** स्वकार्यनिमित्तात् । **तां सम्प्रेषयत्** ।

**मूलम्**

**स्वपुच्छरक्षकामश्वानारुह्य बकुलाऽवदत्** ॥ ७० ॥

**कल्याणकाण्डदीपः**

ततः किम् ? इत्यत आह— **स्वपुच्छेति** । पुरोगमाभावात् स्वपुच्छ एव रक्षको यस्याः सा तां अश्वां जातिलक्षणदोषबाधितत्वात् - अजादित्वात् टाप् - आरुह्य बकुला अवदत् ।

**मूलम्**

**बकुलोवाच—**

**मार्गं वद रमानाथ गच्छामि नृपपत्तनम्** ॥ ७१ ॥

**कल्याणकाण्डदीपः**

**मार्गमिति** । **नृपपत्तनं** पुरम् ।

**गूढकर्तृकव्याख्यानम्**

बकुला— "श्रीनिवास ! तवानुज्ञया यत्र सम्पूर्णं समस्तविषयार्थं जानन्ति । चतुर्विधपुरुषार्थ-कोविदाः सन्ति । सम्पूर्णसर्वार्थः विष्णुः तस्मिन् विषये विशारदाः ब्रह्मज्ञानिनः सन्ति । तादृश आकाशराजेन्द्रसभया युतां देवदेवोत्तमसुसंस्तूयमानां यत्र साक्षात् रमारूपा पद्मा वसति तादृशनारायण-पुरीं कन्याघटनकार्यार्थं गच्छामि" इति अवदत् । ततः श्रीनिवासः स्वस्थचित्तः भुक्तवान् । ततः बकुला स्वस्थचित्ता "श्वः पुण्येन प्राजापत्ययोगे गच्छामि" इत्याह । तदा अव्याकृतषड्गुणैश्वर्यसम्पन्नः समस्तजगदादिगुरुः श्रीनिवासः देवमोहिनीस्वेच्छया गुञ्जामणिसमाकारां तुरङ्गीमारोप्य, स्वकार्यार्थं बकुलां प्रेषयामास । ततः बकुला— "रमापते, श्रीनिवास ! नारायणपुरीगमनमार्गं कम् ?" दर्शय । इति ।

**मूलम्**

**श्रीनिवास उवाच—**

**इममेव वरं मार्गं अवरुह्य गिरेस्तटात्** ॥ ७२ ॥

**पर्वताधःप्रदेशे च कपिलापूजितः शिवः ।**
**तत्रास्ते तीर्थराजोऽसौ कपिलेश्वरसन्निधौ** ॥ ७३ ॥

### कल्याणकाण्डदीपः

**इममेव** प्रत्यक्षमेव । **वरं मार्गं अवरुह्य** गत्वा गिरेः तटादवरुह्य पर्वताधःप्रवेशः कर्तव्यः । "उद्योगः साहसं धैर्यं बुद्धिः शक्तिः पराक्रमः । षड्भिर्मनुष्यचिन्ता स्यात् सप्तमं दैवचिन्तनम्" इत्युक्तेः दैवं चिन्तयति— **पर्वताधःप्रदेश इति** । पर्वताधःप्रदेशे च कपिलापूजितः शिवोऽस्ति । तत्र कपिलेश्वरसन्निधौ असौ पूर्वदृष्टः तीर्थराजः आस्ते ।

### मूलम्

**तत्र स्नात्वा यथायोग्यं मदर्थं तीर्थपुङ्गवे ।**
**कपिलेश्वरमासाद्य याच्यतां वरमव्ययः ॥ ७४ ॥**
**श्रीनिवासो दयासारो वदते नमनं तव ।**
**कल्याणं कुरु मे देव शिव शङ्कर ते नमः ॥ ७५ ॥**

### कल्याणकाण्डदीपः

तत्र तीर्थपुङ्गवे **मदर्थं** मत्कार्यार्थं यथायोग्यं कल्याणसिद्ध्यर्थमिति सङ्कल्पपूर्वकं यद्वा **यथायोगं** प्रकृतकार्ययोगमनतिक्रम्य, अविलम्बेनेति यावत् । स्नात्वा कपिलेश्वरमासाद्य नत्वा प्रसाद्य "हे शङ्कर !, दयासारः श्रीनिवासः, हे देवव्यवहारचतुर ! हे शिव ! चिकीर्षितकार्यदुरितनिवारण ! शङ्कर ! ते तुभ्यं नमोऽस्तु । **मे कल्याणं** पद्माकल्याणं **कुरु** कारयस्व" इति **अव्ययो** वरः **त्वया याच्यताम्** । इति **तव नमनं वदते** उक्त्वा प्रेषितवान् अस्ति इति वद इति शेषः ।

वास्तवार्थस्तु— हे देवि ! त्वं शिवशङ्करदेवते नमः इति नमः कुरु । मे यत् कल्याणं तदनुकूलाचरणं तदेव तव नमनम् । मह्यं नतिस्तुतिलक्षणं प्रावण्यमिति वरो याच्यतां इति वदेति । "याचतां वरमव्ययम्" इति पाठे यतः यत्र स्नातः कार्यार्थी जनः कपिलेश्वरमासाद्य प्रसाद्य तं कपिलेश्वरं अव्ययं वरं याचताम् । स वरोदारो हरो वरं दत्वा दुःसाध्यमपि कामं पूरयति इति तन्माहात्म्यप्रसिद्धिः अतरस्त्वया श्रीनिवासो दयासार इत्याद्युक्तप्रकारेण वरो याच्यतां इति विपरिणामेनार्थो ज्ञेयः । अकथितं कर्म । 'बलिं याचते वसुधामि'तिवत् तत्सम्बन्धिवरयाचनमिति बोधः । लिङ्गव्यत्ययाश्रयणं अगतिका गतिः 'याच्यताम्' इति पाठे इति "देवाद्वृते वरः श्रेष्ठे त्रिषु" इत्यमरः ।

### गूढकर्तृकव्याख्यानम्

श्रीनिवासः— "बकुले ! पश्य, अयमेव खलु मार्गः दृश्यते । अनेन मार्गेण गच्छ । ततः पर्वततटात् अवरुह्य, अधःप्रदेशे गच्छ । ("उद्योगः साहसं धैर्यं बुद्धिः शक्तिः पराक्रमः । षड्भिः

मनुष्यचिन्ता स्यात् सप्तमं दैवचिन्तनम्" इति ज्ञानिनः ।) गिरि-अधस्तात् कपिलमुनिपूजित-ईश्वरः तिष्ठति । तत्र कपिलेश्वरसन्निधौ कपिलतीर्थं इति तीर्थश्रेष्ठः अस्ति । तत्र त्वं गत्वा कपिलतीर्थे स्नात्वा कपिलेश्वरमासाद्य तं नत्वा प्रसादं स्वीकृत्य, तं प्रार्थयस्व । "हे शङ्कर ! लोकसुखङ्कर ! दयानिधे ! देवव्यवहारचतुर ! ते नमः अस्तु । पद्माकल्याणं शीघ्रं परमानुग्रहेण कारयस्व ।" इति वरं याचस्व । सः वरोदारः । वरं दत्वा दुःसाध्यमपि ईप्सितं पूरयति ॥

**मूलम्**

**ततः शुकं समासाद्य दण्डवत् पतनं कुरु ।**
**श्रीनिवासेन बालेन सदा कल्याणकाङ्क्षिणा ॥ ७६ ॥**

**कल्याणकाण्डदीपः**

**ततः शुकमिति** । दण्डवत् पतनं कुरु । ततः शुकेन कस्मात् त्वमिति प्रश्ने सदाकल्याणकाङ्क्षिणा श्रीनिवासेन प्रेषिताऽस्मि इति वद इति शेषः ।

**मूलम्**

**एवमुक्त्वा शुकं देवि ततः पद्मतटं व्रज ।**
**तत्रासाते कृष्णरामौ नत्वा तौ भक्तिभावतः ॥ ७७ ॥**

**पद्मतीर्थसमुद्भूतैः कमलैः कमलानने ।**
**पूजां कुरु मदर्थं तौ [1]भ्रातृवर्गेण वै कृतौ । ॥ ७८ ॥**

१. भ्रातृभूतौ हि मे मतौ ।

**कल्याणकाण्डदीपः**

"एवमुक्त्वा शुकं देवि" इत्यादि पद्यद्वयं स्पष्टार्थम् । तस्य पद्मैः पूजिता पद्मादातारौ भवत इति भावः ।

**मूलम्**

**सुवर्णमुखरीं तीर्त्वा तत्र गच्छ यथासुखम् ।**
**उचितं कुरु कल्याणि कन्यार्थं कमलानने ॥ ७९ ॥**

### कल्याणकाण्डदीपः

**उचितं कुर्विति ।** **कन्यार्थं** कन्यानिमित्तं कन्याघटनार्थम् । **उचितं** ऋतमनृतं वा यद्यद्देश-कालजनावस्थासु उचितं तत्कुर्विति योजना । उक्त्वा क्षपर्यन्तनिर्वाह इति भावः । अथवा यत् कन्यार्थं कर्म तदुचितं कर्म । श्रेयःसम्पादनायावश्यमनुष्ठेयकं कर्म । तस्मात् **कुर्विति** । यद्वा कन्यार्थं उचितं यन्मितं यद्योग्यं यच्च ज्ञातं यत् समञ्जसं तत् कुर्वित्यर्थः । "उचितं स्यान्मिते योग्ये ज्ञानेऽभ्यस्ते समञ्जस" इति रत्नमाला ।

### गूढकर्तृकन्याख्यानम्

ततः पुरतो गच्छ । शुकाश्रम आयाति । तमासाद्य दण्डप्रणामं कुरु । स मुनिः — "त्वं का ? त्वां कः प्राहिणोत् ? कुत आयाता ? " इति पृच्छति । "कल्याणकाङ्क्षिणा श्रीनिवासेन प्रेषिता । श्रीनिवासकृते आयाता । मुनिवर ! श्रीनिवासानुकूलकार्यकरणे मे समुचितं साहाय्यं कृत्वा श्रीनिवासहितं कुरु" इति प्रार्थयस्व । एवमुक्त्वा, "बकुले ! पद्मसरौ गच्छ । तत्तटे कृष्णदेवः रामदेवः आसाते । तौ भक्त्या वन्दस्व । पद्मसरसि शोभनकमलानि समुद्भूतानि । तैः पुष्पैः तौ पूजयस्व । तौ मम भ्रातृभूतौ । कल्याणि ! मदर्थं इदं कार्यं कुरु । ततः सुवर्णमुखरीं तीर्त्वा पुरतः यथासुखं गच्छ । कन्याघटने ऋतं वा अनृतं वा, देशकालावस्थानुगुणं कर्तव्यं कुरु" इति आदिदेश ॥

### मूलम्

**आज्ञप्ता देवदेवेन बकुला [1]लोककर्तृणा ।**
**जगाम शनकैः शेषाचलादुत्तीर्य चाङ्गना ।**
**यथोक्तं श्रीनिवासेन तच्चकार तथाऽबला ॥ ८० ॥**

---
१. लोकभर्तृणा ।

### कल्याणकाण्डदीपः

**आज्ञप्तेति ।** देवदेवेन लोककर्तृणा परब्रह्मणा श्रीनिवासेन आज्ञप्ता । **यथोक्तं** श्रीनिवासेन यथोक्तं तत्तथैवाबला चकारेत्यर्थः । कपिलवरयाचनशुकनमनकृष्णरामपूजान्तं यथावच्चकारेति भावः ।

### मूलम्

**हयमारुह्य बकुला सुवर्णमुखरीं तदा ।**
**तीर्त्वाऽगस्त्याश्रमं प्राप्ता सखी दृष्टवती भवत् ॥ ८१ ॥**

कल्याणकाण्डदीपः

**हयमिति** । सखीः पद्माळीः ।

मूलम्

**शिवालये शिवं [1]दृष्ट्वा [2]गता सा शिवमन्दिरम् ॥ ८२ ॥**

१. **द्रष्टुमागता राजमन्दिरम्** । २. गतास्ताः ।

कल्याणकाण्डदीपः

एतदेव विशदयति— **शिवालये** आलीयते संश्लिष्यते अत्र इति आलयः गर्भगृहम् । तस्मिन् शिवं दृष्ट्वा शिवमन्दिरं मदन्ति जना अत्र इति **मन्दिरं** मुखमण्डपम् । मन्देः किरच् । तदा गताऽभूत् ।

गूढकर्तृकव्याख्यानम्

देवदेवोत्तम-जगज्जन्मादिकारण-श्रीनिवासोक्तकार्यं बकुला सर्वमाचरत् । शेषाचलादवतीर्य तुरङ्गीं आरुह्य पर्वताधःप्रदेशं गत्वा श्रीनिवासोक्त्या कपिलतीर्थे स्नात्वा, कपिलेश्वरवरयाचन, शुकनमन, कृष्णरामपूजादिसर्वं यथावत् कृतवती । ततः तुरङ्गीं आरुह्य, सुवर्णमुखरीं तीर्त्वा गच्छन्ती अगस्त्याश्रमं प्राप्य, तत्र पद्मासखीजनं ददर्श । ते सखीजनाः अगस्त्येशालये शिवदर्शनाय आगताः सन्तः शिवदर्शनं कृत्वा शिवालयसन्निहितमुखमण्डले स्थिताः ।

मूलम्

**तत्र दृष्ट्वा वराः कन्याः का यूयमिति चाब्रवीत् ।**
**तया सम्भाषिता बाला ऊचुरेवं परस्परम् ॥ ८३ ॥**

कल्याणकाण्डदीपः

सा **वराः कन्याः** तत्र मण्डपे दृष्ट्वा का यूयं ? कृत्याः ? किमर्थं आगता ? **इति चाब्रवीत्** पप्रच्छ । तया बकुळया **सम्भाषिताः** पृष्टाः बालाः मुग्धाद्या पद्मया सङ्केतिताः तद्वृत्तान्तं पृष्ट्वा अपि न वदिष्यन्तीति ध्येयम् । ताः कन्यकाः तामुपनीयेत्यादि उत्तरवचनलभ्योऽर्थो विस्तरभीतेर्न लिख्यते । स्त्री **बाला** अपि । एवं **यूयं काः** । कृत्याः ? किमर्थमागताः ? इत्यब्रुवन् । **एवं परस्परं** सा **ताश्च ऊचुः** इत्यर्थः । यद्यपि एका वक्ति तथापि प्रयोजिकानां कर्तृत्वानपायाद् ऊचुः इत्युक्तिः ॥

### गूढकर्तृकव्याख्यानम्

तत्र ता दृष्ट्वा, उपागम्य, पप्रच्छ । "भो कन्यकाः ! का यूयम् ? कुतोऽत्र आगताः ? इति । तदा ताः सर्वाः बालाः "उदययौवना मुग्धा लज्जाविजितमन्मथा । आषोडशाब्दं भवेद्बाला" इत्युक्तेः षोडशवर्षदेशीयाः मुग्धकन्यकाः बकुलाप्रश्नस्य उत्तरं दातुं प्रवृत्ताः ।

### मूलम्

### बकुलां प्रति पद्मावतीसखीज्ञापितपद्मावत्युदन्तः

**कन्या ऊचुः—**

**वयमाकाशराजस्य सन्निधानगताः सदा ।**
**इतोत्तरदिने कश्चित् पुरुषस्तुरगारुहः ।**
**पद्मावत्याः समीपं च सम्प्राप्तो मन्मथाकृतिः ॥ ८४ ॥**

### कल्याणकाण्डदीपः

एतदेव विशदयति **वयमिति** । क्रत्या इत्यस्योत्तरं— 'वयं' आदि 'सदा' इत्यन्तम् । द्वितीयस्योत्तरं 'इतोत्तरदिन' इत्यादि 'कैलासपतिमन्दिरं' इत्यन्तम् । **इतोत्तरदिन इति** । वर्तमानदिनात् पृष्टतः पुरतश्च गणने ह्यः श्वश्चोत्तरदिनं भवति । श्वो भावि गतं ह्य एव । अत एव "होदमुन्ना दिना" इति लौकिकाः । तथा च इतं गतं च तत् उत्तरदिनं चेति विग्रहः । पूर्वदिन इति यावत् । अथवा, अद्य सोमवारः पुष्यनक्षत्रं प्राजापत्ययोगः । ह्यश्च रविः पुनर्वसू ध्वजयोगः । अतो गतोत्कृष्टदिन इत्यर्थः । वस्तुतस्तु । 'उदोरुत्कृष्टयोः' इति वर्तमानयोरतिशयेनोत् उत्तरम् । पूर्वदिनं सर्वोत्तमपरममङ्गलमूर्तिश्रीनिवासदर्शनात् वर्तमानमुत्कृष्टम् । तव दिव्याङ्गनाया दर्शनात् । **तुरगारुहः** । मूलविभुजादित्वात् कः । **पद्मावत्याः समीपं च** समीपमेव ।

### मूलम्

**तं दृष्ट्वा ज्वरतापेन शयाना निजमन्दिरे ।**
**तच्छान्त्यर्थं वयं प्राप्ता अभिषेकार्थमागताः ॥ ८५ ॥**

### कल्याणकाण्डदीपः

'पद्मावती' इति शेषः । **प्राप्ताः** राज्ञः प्रकर्षेण प्रत्यायिताः । 'आप्तप्रत्यायितौ समौ' इत्यमरः । **अभिषेकार्थं वयमागताः** । ज्वरतापेन "अद्य मे सङ्कटं प्राप्तम्" इत्यत्रोक्तप्रकारेण बलवच्छ्रीनि-

वासचोदितसम्मोहनादिपञ्चबाणपञ्चबाणातिविद्धहृदयतया सन्तप्तसूर्मिसन्तापसमज्वरसन्तापेनेत्यान्तरङ्गिकार्थः ।

**इति तद्वचनं श्रुत्वा बकुला वाक्यमब्रवीत् ॥ ८६ ॥**

**गूढकर्तृकन्याख्यानम्**

तदा पद्मया स्ववृत्तान्तो न वक्तव्य इति सूचिताः बकुलासमीपे यथार्थं वदन्ति । "शुभाङ्गने ! श्रूयताम् ! वयं आकाशसन्निधौ स्थिताः । तदाज्ञया अत्रागताः । कुतः ? "इतःपूर्वं शुभदिने किमभूदिति चेत् ? एकपुरुषोत्तम आयातः । मन्मथवत् अद्भुतरूपलावण्यवान् । वेषेण किरातः । परममङ्गलरूपः । तादृशं वयं दृष्टवत्यः । ततः सः पुरुषोत्तमः पद्मां समुपागतः । तस्मात् अतिभीता अस्मत्स्वामिनी राजपुत्री पद्मा तेन ज्वरिता तापमूर्च्छिता च । तस्याः भीतिज्वरतापपरिहाराय अगत्येश्वर-अभिषेक-अर्चन-जप-पारायणादिव्यवस्थां कृत्वा तदर्थं आकाशः आप्तविप्रान् अत्र प्रेषितवान् । वयमपि राजाज्ञया अद्य सोमवार-पुष्यनक्षत्र-प्राजापत्ययोगः । अत्र आगताः । त्वां दृष्टवत्यः, तव दर्शनं अस्माकं शुभदिनं जातम् ।" इत्यूचुः ।

**मूलम्**

**बकुलोवाच—**

**कोऽसौ किरातरूपी च भवद्भिः सङ्गतः कुतः ।**
**वदध्वं कन्यकाः सर्वास्तद्वृत्तमखिलं मम ॥ ८७ ॥**

**कल्याणकाण्डदीपः**

**भवद्भिः** भवतीभिः । **सङ्गतः असौ किरातरूपी कः** । पूर्वोऽपूर्वो वा । द्वितीये, यूयमन्तःपुरगता नार्यः । पुरं चाभेद्यम् । किमन्तः किरातश्च बाह्यः । तेन भवत्सङ्गमो बहिर्भवेत् । अतो वः बहिर्गमनं कुतः कस्मान्निमित्तात् । कुतश्च तद्दर्शनेऽपि तस्याः ज्वरतापः । कुतश्च ज्वरतापेऽपि भवतीनामत्र आगमनम् ? इत्यर्थः ।

**गूढकर्तृकन्याख्यानम्**

तासामुक्तिं श्रुत्वा बकुला उवाच— "कन्यकाः ! किरातरूपी आगत इति उक्तम् ? सः कः ? पूर्वो वा अपूर्वः ? तादृशस्य भवतीनां कथं समागमः अभूत् ? स तु किरातरूपी । यूयं तु अन्तःपुरनार्यः । पुरं च अभेद्यम् । किमुत अन्तः ? किरातश्च बाह्यः । तेन भवत्सङ्गमः कथम् ? यूयं कुतः

### गूढकर्तृकव्याख्यानम्

तत्र ता दृष्ट्वा, उपागम्य, पप्रच्छ। "भो कन्यकाः ! का यूयम् ? कुतोऽत्र आगताः ? इति। तदा ताः सर्वाः बालाः "उदयद्यौवना मुग्धा लज्जाविजितमन्मथा। आषोडशाब्दं भवेद्बाला" इत्युक्तेः षोडशवर्षदेशीयाः मुग्धकन्यकाः बकुलाप्रश्नस्य उत्तरं दातुं प्रवृत्ताः।

### मूलम्

## बकुलां प्रति पद्मावतीसखीज्ञापितपद्मावत्युदन्तः

**कन्या ऊचुः—**

**वयमाकाशराजस्य सन्निधानगताः सदा।**
**इतोत्तरदिने कश्चित् पुरुषस्तुरगारुहः।**
**पद्मावत्याः समीपं च सम्प्राप्तो मन्मथाकृतिः ॥ ८४ ॥**

### कल्याणकाण्डदीपः

एतदेव विशदयति **वयमिति**। कन्या इत्यस्योत्तरं— 'वयं' आदि 'सदा' इत्यन्तम्। द्वितीयस्योत्तरं 'इतोत्तरदिन' इत्यादि 'कैलासपतिमन्दिरं' इत्यन्तम्। **इतोत्तरदिन इति**। वर्तमानदिनात् पृष्टतः पुरतश्च गणने ह्यः श्वश्चोत्तरदिनं भवति। श्वो भावि गतं ह्य एव। अत एव "होदमुन्ना दिना" इति लौकिकाः। तथा च इतं गतं च तत् उत्तरदिनं चेति विग्रहः। पूर्वदिन इति यावत्। अथवा, अद्य सोमवारः पुष्यनक्षत्रं प्राजापत्ययोगः। ह्यश्च रविः पुनर्वसू ध्वजयोगः। अतो गतोत्कृष्टदिन इत्यर्थः। वस्तुतस्तु। 'उदोरुत्कृष्टयोः' इति वर्तमानयोरतिशयेनोत् उत्तरम्। पूर्वदिनं सर्वोत्तमपरममङ्गलमूर्तिश्रीनिवासदर्शनात् वर्तमानमुत्कृष्टम्। तव दिव्याङ्गनाया दर्शनात्। **तुरगारुहः**। मूलविभुजादित्वात् कः। **पद्मावत्याः समीपं च** समीपमेव।

### मूलम्

**तं दृष्ट्वा ज्वरतापेन शयाना निजमन्दिरे।**
**तच्छान्त्यर्थं वयं प्राप्ता अभिषेकार्थमागताः ॥ ८५ ॥**

### कल्याणकाण्डदीपः

'पद्मावती' इति शेषः। **प्राप्ताः** राज्ञः प्रकर्षेण प्रत्यायिताः। 'आप्तप्रत्यायितौ समौ' इत्यमरः। **अभिषेकार्थं वयमागताः**। ज्वरतापेन "अद्य मे सङ्कटं प्राप्तम्" इत्यत्रोक्तप्रकारेण बलवच्छ्रीनि-

वासचोदितसम्मोहनादिपञ्चबाणपञ्चबाणातिविद्धहृदयतया सन्तप्तसूर्मिसन्तापसमज्वरसन्तापेनेत्यान्त-रङ्गिकार्थः ।

**इति तद्वचनं श्रुत्वा बकुला वाक्यमब्रवीत् ॥ ८६ ॥**

**गूढकर्तृकव्याख्यानम्**

तदा पद्मया स्ववृत्तान्तो न वक्तव्य इति सूचिताः बकुलासमीपे यथार्थं वदन्ति । "शुभाङ्गने ! श्रूयताम् ! वयं आकाशसन्निधौ स्थिताः । तदाज्ञया अत्रागताः । कुतः ? "इतःपूर्वं शुभदिने किमभूदिति चेत् ? एकपुरुषोत्तम आयातः । मन्मथवत् अद्भुतरूपलावण्यवान् । वेषेण किरातः । परममङ्गलरूपः । तादृशं वयं दृष्टवत्यः । ततः सः पुरुषोत्तमः पद्मां समुपागतः । तस्मात् अतिभीता अस्मत्स्वामिनी राजपुत्री पद्मा तेन ज्वरिता तापमूर्च्छिता च । तस्याः भीतिज्वरतापपरिहाराय अगत्येश्वर-अभिषेक-अर्चन-जप-पारायणादिव्यवस्थां कृत्वा तदर्थं आकाशः आप्तविप्रान् अत्र प्रेषितवान् । वयमपि राजाज्ञया अद्य सोमवार-पुष्यनक्षत्र-प्राजापत्ययोगः । अत्र आगताः । त्वां दृष्टवत्यः, तव दर्शनं अस्माकं शुभदिनं जातम् ।" इत्यूचुः ।

**मूलम्**

**बकुलोवाच—**

**कोऽसौ किरातरूपी च भवद्भिः सङ्गतः कुतः ।**
**वदध्वं कन्यकाः सर्वास्तद्वृत्तमखिलं मम ॥ ८७ ॥**

**कल्याणकाण्डदीपः**

**भवद्भिः** भवतीभिः । **सङ्गतः असौ किरातरूपी कः** । पूर्वोऽपूर्वो वा । द्वितीये, यूयमन्तःपुरगता नार्यः । पुरं चाभेद्यम् । किमन्तः किरातश्च बाह्यः । तेन भवत्सङ्गमो बहिर्भवेत् । अतो वः बहिर्गमनं कुतः कस्मान्निमित्तात् । कुतश्च तद्दर्शनेऽपि तस्याः ज्वरतापः । कुतश्च ज्वरतापेऽपि भवतीनामत्र आगमनम् ? इत्यर्थः ।

**गूढकर्तृकव्याख्यानम्**

तासामुक्तिं श्रुत्वा बकुला उवाच— "कन्यकाः ! किरातरूपी आगत इति उक्तम् ? सः कः ? पूर्वो वा अपूर्वः ? तादृशस्य भवतीनां कथं समागमः अभूत् ? स तु किरातरूपी । यूयं तु अन्तःपुर-नार्यः । पुरं च अभेद्यम् । किमुत अन्तः ? किरातश्च बाह्यः । तेन भवत्सङ्गमः कथम् ? यूयं कुतः

बहिरायाताः ? मन्मथवत् स्थितः किरातदर्शने युष्मद्राजपुत्रीज्वरतापः कुतः ? एवमादि सर्वं सविस्तरं वदत" इत्याह ।

**मूलम्**

**कन्या ऊचुः—**

**सहिताः पद्मवत्या च कदाचिद्वनमागताः ।**
**पुष्पापचयनं कर्तुमारब्धास्तद्वनान्तरे ॥ ८८ ॥**

**तत्र कश्चित् पुमान् यातो विचित्रतुरगारुहः ।**
**अस्माभिः कथितं तेन अवाच्यवचनं रुषा ॥ ८९ ॥**

**कल्याणकाण्डदीपः**

क इत्यस्य उत्तरं **कश्चिदिति** । अज्ञानप्रकारविशेषः । अपूर्व इति यावत् । कुत इत्याद्यस्योत्तरं **सहिताः** इत्यादि । **पुष्पापचयनं कर्तुमिति** । द्वितीयस्योत्तरं अस्माभिरिति आदि उत्तरदिङ्मुख इत्यन्तम् । अपूर्वपुरुषेण कलहात् निमित्तादिति । तृतीयस्योत्तरं 'गत' इत्यादि 'अङ्गना' इत्यन्तम् ॥ इति प्रश्नोत्तरविवेकः ॥ तद्वृत्तमखिलं विस्तरेण सम्पूर्णम् ॥ **अस्माभिः विचित्रः पुमान्** आगत इति कथितम् । अथ तया प्रेषिताभिरस्माभिः नेत्रसंज्ञया आहूय क्व ते वासः ? किं कुलं किं गोत्रम् ? का ते माता ? कस्ते पिता ? किं ते कायम् ? इत्यादि श्रीपद्मोक्तं तस्मै सन्दिष्टम् । अथ तेनोक्तं सर्वं श्रुत्वा तेनापि तस्याः किं कुलादिकमिति पृष्टाभिरस्माभिः पद्मयोक्तं कुलादिकं सर्वं सन्दिश्य पद्मोक्तरीत्या शीघ्रं गच्छ गच्छेति निष्ठुरं कथितम् । अथ तेन आः किमेतत् सानुरागनेत्रसंज्ञया आह्वानम् ? किं एतत् कुलादिविचारः ? किं एतन्निष्ठुरवचनम् ? इति रुषा तेन अवाच्यवचनं वक्तुः लज्जावहं वचनं कथितम् ।

**मूलम्**

**तच्छ्रुत्वा तनया राज्ञो रुष्टा वचनमब्रवीत् ।**
**तयोः कलह आपन्नः कदने ताडितो हयः ॥ ९० ॥**

**निपपात तदाऽश्वस्तु शिलाभिर्हतचेतनः ।**
**स घोटकं परित्यज्य जगामोत्तरदिङ्मुखः ॥ ९१ ॥**

**कल्याणकाण्डदीपः**

तच्छ्रुत्वा इत्यादि वचनं स्पष्टम् । **हतचेतनः** मूर्च्छित इव ।

**गूढकर्तृकव्याख्यानम्**

कन्यकाः— मङ्गलाङ्गि ! पद्मया सह वयं एकदा पुष्पेभ्यो उद्यानमागताः । उद्याने अपचेतुमारब्धाः । तदा पुरुषोत्तम आगतः । तद्रूपं वक्तुमशक्यम् । विचित्रतुरगमारूढः, तदागमनं अस्माभिः पद्मायै निवेदितम् । ततः "तस्य वृत्तं विचारयत" इति पद्मा नः आदिदेश । ततः वयं नेत्रसंज्ञया किरातरूपिणं आहूय "कस्त्वम् ? तव देश-कुल-वृत्तं किम् ? क्व ते वासः ? गोत्रं किम् ? मातृ-पितृ-भ्रातृबान्धवः के ? केन उद्देशेन अत्रागतोऽसि ?' ततः स्वकुलगोत्रादिकं उक्तवान् । तथा च सोऽपि राजपुत्री कुलगोत्रादिकं पप्रच्छ । ततः पद्मा स्वकुलादिकं सर्वं तस्मै आह । क्षणात् "माऽत्र तिष्ठ गच्छ गच्छ" इत्याह । निष्ठुरोक्त्या तस्य महारोषो जातः । अथ सः "आः किमेतत् नेत्रसंज्ञया अनुरागपूर्वकाह्वानम् ? किमेतत् कुलादिविचारः ? किमेतत् शीघ्रं गच्छ गच्छ ? अत्र क्षणमपि न तिष्ठ इति वदत" इति सकोपं अवाच्यवचनं लज्जावहं आह । तस्य कोपवचनेन पद्माऽपि कुपिता । निष्ठुरमाह । एवं तयोः अन्योन्यं कलह उत्पन्नः प्रवृद्धश्च । अन्ते पद्मा शिलाभिः उपर्युपरि तताड । शिलाघातैः तस्य हयो निपत्य मृतः । हये गते तं परित्यज्य पुरुषः उत्तरदिशि ययौ ।

**मूलम्**

**गते किराते कमलोद्भवाऽबला**
**मूर्च्छामुपागम्य पपात भूमौ ।**
**ताः कन्यकास्तामुपनीय याने**
**जग्मुः स्वकं राजपुरं वयं तदा ॥ ९२ ॥**

**कल्याणकाण्डदीपः**

ततः किम् ? इत्यत आह— गत इति । **मूर्च्छामिति** । स्मरशराहततया सति शकाहतेव मूर्च्छामुपागमस्य इत्यर्थः । **ताः कन्यकाः** मुग्धाद्याः । तां मूर्च्छितां पद्मां याने उपवेश्योदूह्य राजपुरं **जग्मुः** । तदा वयं बालाः स्वकं स्वकं वेश्म जग्मिम ।

### मूलम्

**तामागतां यानगतां सुतां नृपः**
**चिन्तामुपागम्य रुरोद दीनः ।**
**अङ्के निधायात्मसुतां प्रपश्यन्**
**मुखं मुदाहीनमभाषणं च ॥ ९३ ॥**

### कल्याणकाण्डदीपः

**तामागतामिति** । आगतां सुतां पद्मां यानगतामेवोद्धृत्य अन्तगृहं प्रविश्य अङ्के निधाय । **आत्मसुतां** परमात्मप्रेरणयैव भुवि प्रसूताम् । यद्वा, स्वयमेव स्वेच्छयैव दुहितरं सुतां प्रति चिन्ता-मुपागम्य । मददृष्टप्रेरकश्रीहरिप्रेरणया आत्मसन्तोषेण च मदीययज्ञभूमौ प्रसूता । "तवेयं सुता बहु-कीर्तिसुखदा" इत्यम्बरवाणीबलेन च मया लालिता । अतः हरिरेव शरणमिति आलोच्य बालरक्षा-रामरक्षा-नारायणवर्मादिमन्त्रैः गवाश्वधूळिश्रीपादरेण्वादिभिः रक्षाम् अकरोत् । कृतेऽप्येवं न शान्तिः । यथा यथा विष्णुः रक्षां करोति तथा तथा अधिकोऽभूज्ज्वरसन्तापः । अथ दुर्निवार्योऽयं किं वा भविष्य-तीति भीतः । **मुदाहीनं** अप्रसन्नम् । **अभाषणं** अवचनं च **मुखं** प्रपश्यन् **दीन** इव सुकृतदरिद्र इव **रुरोद** अश्रु मुमोच ।

अयं भावः— एतादृक् दुहितृलालनेऽदृष्टबलहीनः । यतो नाहं क्षीराब्धिः नापि जनकः इति । अत्र मध्ये "अविश्वासस्तु विप्राणाम्" इत्याद्युत्तरवचनानुसारेण लेख्यः सन्दर्भशेषोऽस्ति । विस्तरभया-दुपरम्यते । तथाऽपि किञ्चिल्लिख्यते । अथ एतस्मिन् समये तोण्डिमान् पद्मां ज्वरतापमूर्च्छितां रुदन्तं राजानं च दृष्ट्वा खिन्नमना दैवज्ञकुलाचार्यप्रधानान् अमात्यवैद्यसामुद्रिकशान्तिपाठकग्रहाराधक-नित्यदानिन आहूय "यूयं अस्माकं प्रत्यापिता अपि कुत आगामिपद्मायोगक्षेमपर्यालोचना न कृता" इति विचारितवान् । अथाह दैवज्ञ कुलगुरुः परभादरेण सूक्ष्मेक्षिकया कृतचरैवास्माभिः इति । सत्यम्, उक्तोऽभ्युदयः लोकभर्त्रा पाणिग्रहणमिति । सेदानीं प्राणसंशयमापन्ना किमेतदिति कथं ब्राह्मणानां वचसि अस्माकं विश्वास ? इति । मास्तु विश्वासः । यथाशास्त्रमुक्तम् । कालबलात् स्वदुर्दैवादन्यथा जाते किं कर्तव्यम् । इदानीमेव राजकुले दैवपर्यालोचनाधिकारः प्रत्यर्पित इति राजकृतानादरात् कुपित आह वैद्यः । कुपिताया इवान्तर्नाडीसञ्चारो दृश्यते । बहिर्दर्शने अशनिप्रभा हता इवेति । कोपशान्तिराकाङ्क्षा-पूर्तौ । सा च काङ्क्षितज्ञाने । तच्च वचने तच्च कोपशान्तौ इति चक्रका । तस्मान्न मय्यौषधं तूष्णीम् । अशक्ये प्रयत्नो न कार्यः । इति ।

अथ सामुद्रिकाः— ममाप्यभ्युदयमेव सूचयति । लक्षणशास्त्रे— "शकुनः शपथः सत्यः सामुद्रिकमुपश्रुतिः । उपयाचनमादेशः सम्भवन्ति कलौ क्वचित्" इत्युक्तकलिधर्मवशादन्यथा जाते किं कर्तव्यमिति । ब्राह्मणसम्पत् राज्ञां विभवार्था न तदर्थफलप्रदेति सर्वाननादृतवान् । अस्मिन् समये अम्बरराजो "अहो किमेतत् । महाननर्थः । अहमेकपादेन स्थित्वा अञ्जलिं कृत्वा शिरसा आनम्य सर्वान् ययाचे । भवद्भिः सर्वैः पद्मादृष्ट्या राजकृतानादरमगणय्य तद्योगक्षेमाय देवताप्रसादनं पूर्व-स्माद्विगुणं कल्पताम्" इति क्षमापयामास । अथ ते च स्वतः प्रवृत्ताः पुनः प्रावर्तन्त । अथ आकाश-राजा आलोचितवान्—

दशद्वीपसमो वह्निः दशवह्निसमो यमः ।
दशसूर्यसमो वैद्यः दशवैद्यसमो द्विजः ॥

दशद्विजसमो विप्रः दशविप्रसमो गुरुः ।
एते अभ्यान्तबलदा दैवाल्लाभो हि भेषजम् ॥ इति ।

अथास्माकं दैवज्ञो गुरुराजकृतानादरात् दैवपर्यालोचने भग्नमनाः भूमौ चिरावासाच्च सूक्ष्मं न भासते च । अतो ज्योतिर्मण्डलस्थो गुरुः आकारयितव्य इति ।

**गूढकर्तृकव्याख्यानम्**

किराते गते सति पद्मा स्मरतापतप्ता मूर्च्छिता भुवि पपात । तां यानेन राजधानीं नीतवत्यः । यानेन आगतां मूर्च्छितां पुत्रीं दृष्ट्वा आकाशः तामुद्धृत्य अङ्के निधाय अतिदुःखेन एवं चिन्तयति "मम अदृष्टप्रेरक-श्रीहरिप्रेरणया आत्मसन्तोषेण मदीययज्ञभुवि-आविर्भूता "इयं तव सुता बहुकीर्तिसुखदा" इति आकाशवाणीबलेन इमां लालितवान् । अतः श्रीहरिरेव शरणं इत्यालोच्य बालरक्षा, रामरक्षा, नारायणवर्मादिमन्त्रैः गवाश्वधूलि, श्रीपादरेणुप्रभृतिभिः रक्षां चकार । तथाऽपि नोपशमनम् । यथा यथा विष्णुरक्षां करोति तथा तथा ज्वरतापो ववृधे । अयं दुर्निवार्यः । किं करोमि ? इत्याह । पद्मामुखं पश्यति । मुखं म्लानम् । मुखेन वचनमेव न । तदा ईदृशदुहितृलालने अहं अदृष्टहीनः । यतो नाहं क्षीराब्धिः । नापि जनकः । मम पुत्र्याः जगन्नाशकं किमेतत् भयङ्करं आपतितम् ? इति दुःखितः ।

**मूलम्**

**किं वा भवेन्मे दुहितुर्दुरासदा**
**बिभीषिका विश्वविनाशकाश्च ।**

तेषां विनाशं स हि जानते गुरुः
तमाह्वयत् यत्र सुतेन शीघ्रम् ॥ ९४ ॥

तद्वाक्यमाकर्ण्य गुरुर्धरातलं
शीघ्रं प्रपन्नो नृपमन्दिरं च ।
प्राप्तं गुरुं प्राणमिवागतं नृपः
प्रायेण पुण्यं परिपक्वमागतम् ॥ ९५ ॥

**कल्याणकाण्डदीपः**

ततः किमित्यत आह— **किं वा भवेदिति** । **भवेदिति** आमन्त्रणे लिङ् । **दुरासदा** दुर्निवारा **विश्वविनाशका** भूतवेताळाद्या **भवेत्** कामं भवेदित्यर्थः । अर्थवशात् विपरिणामः । **दुरासदा** विभीषिकाभयङ्करभैरव्यादिभयानुकूलव्यापृतिर्वा भवेत् । किं वाऽन्यत् । अविज्ञातविशेषं पीडाकरं किञ्चिद्भूतं वा भवेत् भवतु । **तेषां** सर्वेषाम् । विनाशं तत्कृतपीडापरिहारं **स हि** ज्योतिर्मण्डलस्थो हि गुरुः जानते । अतो यत्र ज्योतिर्मण्डले बृहस्पतिः तत्र सुतं प्रेषयित्वा **सुतेन शीघ्रं गुरुमाह्वयत्** । आह्वयत् । वह्वेञ् शब्दे । **प्राप्तमिति** । पूर्वं गत्वा पुनरागतं प्राणमिवागतं गुरुं दृष्ट्वा प्राणस्थैर्यमालम्ब्य मे पुण्यं प्रायेण परिपक्वं सत् आगतं दृश्यत इति । राजाऽनुसन्दध इति शेषः । पीडापरिहारोपायचिन्ता-समये तत्परिहारौषधिदैवज्ञवैद्यगुर्वादीनां शीघ्रेण लाभो हि शुभशकुनमिति भावः ।

**मूलम्**

दत्वाऽऽसनं रत्नमयं समर्च्य
सुसाधनैः सार्घ्यसुपुष्पभोजनैः ।
कृत्वाऽऽतिथ्यं विप्रवरं बभाषे
सुतानिमित्तं गगनाभिधो नृपः ॥ ९६ ॥

**कल्याणकाण्डदीपः**

**सार्घ्यसुपुष्पभोजनैः** सुपुष्पभोजनैरिति वा । अर्घ्यपाद्याचमनवस्त्रगन्धमाल्यमनोहारिवैद्यभोजनैः । **सुपुष्पभोजनैः** अनुरागप्रकाशनविशिष्टवचनरूपपुष्पसहितभोजनैः । सादरभोजनैरिति यावत् । पुष्पं प्रति मुखसन्धेरङ्गम् ।

**मूलम्**

**तद्वाक्यमाकर्ण्य गुरुः सुराणां**
**प्रशान्तयन् वाक्यमुवाच भूमिपम् ॥ ९७ ॥**

**कल्याणकाण्डदीपः**

**प्रशान्तयन्निति** । हेतौ शता चिन्तां शमयन् ।

**गूढकर्तृकव्याख्यानम्**

एतन्मध्ये तोण्डिमान् ज्वरितां पद्मां रुदन्तं आकाशं दृष्ट्वा खिन्नमनाः दैवज्ञ-कुलाचार्य-अमात्य-वैद्य-सामुद्रिक-शान्तिपाठक-ग्रहाराधक-यन्त्रमन्त्रज्ञान् आहूय "यूयं अस्माकं प्रत्यायिता अपि कुतः भावि पद्मायोगक्षेमविचारो न कृतः ?" इति विचारितवान् ।

अथ दैवज्ञः कुलगुरुः परमादरेण "सूक्ष्मेक्षिकया कृतचरेव ।"

"सत्यम् । उक्तः अभ्युदयः । लोकभर्त्रा पाणिग्रहणम्" इति ।

"सा इदानीं प्राणसंशयं आपन्ना । किमेतत् ? युष्मद्वचनं किं जातम् ? एवं सति कथं विप्रवचसि विश्वासः ?"

दैवज्ञः कुलगुरुः— "माऽस्तु विश्वासः । यथाशास्त्रं उक्तम् । कालबलात् युष्मद्दुर्दैवात् अन्यथा जाते किं कर्तव्यम् ? अद्यैव राजकुले दैवपर्यालोचनाधिकारः प्रत्यर्पितः" इति कोपेनाह ।

अथ वैद्यः— "कुपिताया इव अन्तः नाडीसञ्चारो दृश्यते । बहिर्दर्शनि अशनिप्रभाहतेव कोप-शान्तिः आकाङ्क्षापूर्तौ । तस्मात् मयि न औषधम् । तूष्णीं अशक्ये प्रयत्नो न कार्यः ।"

सामुद्रिकः— ममापि अभ्युदयमेव सूचयति । लक्षणशास्त्रशकुनः शपथः सत्यः । "सामुद्रिक-मुपश्रुतिः । उपयाचनमादेशः सम्भवन्ति कलौ क्वचित्" इत्युक्तकलिधर्मवशात् अन्यथा जाते किं कर्तव्यम् ?

तोण्डिमान्— "ब्राह्मणसम्पत् राज्ञां विभवार्था । न तदर्थफलप्रदा" इति सर्वान् अनादृतवान् ।

अस्मिन् समये आकाशः— "अहो किमेतत् ! महाननर्थः । एकपादेन स्थित्वा अञ्जलिं कृत्वा शिरसा आनम्य याचे । भवद्भिः पद्मा द्रष्टव्या । राजकृतानादरं अविगणय्य तद्योगक्षेमाय देवताप्रसादनं द्विगुणं कल्पन्ताम्" इति क्षमापयामास ॥

**तेषां विनाशं स हि जानते गुरुः**
**तमाह्वयत् यत्र सुतेन शीघ्रम् ॥ ९४ ॥**

**तद्वाक्यमाकर्ण्य गुरुर्धरातलं**
**शीघ्रं प्रपन्नो नृपमन्दिरं च ।**
**प्राप्तं गुरुं प्राणमिवागतं नृपः**
**प्रायेण पुण्यं परिपक्वमागतम् ॥ ९५ ॥**

**कल्याणकाण्डदीपः**

ततः किमित्यत आह— **किं वा भवेदिति** । **भवेदिति** आमन्त्रणे लिङ् । **दुरासदा** दुर्निवारा **विश्वविनाशका** भूतवेताळाद्या **भवेत्** कामं भवेदित्यर्थः । अर्थवशात् विपरिणामः । **दुरासदा** विभीषिकाभयङ्करभैरव्यादिभयानुकूलव्यापृतिर्वा भवेत् । किं वाऽन्यत् । अविज्ञातविशेषं पीडाकरं किञ्चिद्भूतं वा भवेत् भवतु । **तेषां** सर्वेषाम् । विनाशं तत्कृतपीडापरिहारं **स हि** ज्योतिर्मण्डलस्थो हि गुरुः जानते । अतो यत्र ज्योतिर्मण्डले बृहस्पतिः तत्र सुतं प्रेषयित्वा **सुतेन शीघ्रं गुरुमाह्वयत्** । आह्वयत् । वह्वेञ् शब्दे । **प्राप्तमिति** । पूर्वं गत्वा पुनरागतं प्राणमिवागतं गुरुं दृष्ट्वा प्राणस्थैर्यमालम्ब्य मे पुण्यं प्रायेण परिपक्वं सत् आगतं दृश्यत इति । राजाऽनुसन्दध इति शेषः । पीडापरिहारोपायचिन्ता-समये तत्परिहारौषधिदैवज्ञवैद्यगुर्वादीनां शीघ्रेण लाभो हि शुभशकुनमिति भावः ।

**मूलम्**

**दत्वाऽऽसनं रत्नमयं समर्च्य**
**सुसाधनैः सार्घ्यसुपुष्पभोजनैः ।**
**कृत्वाऽऽतिथ्यं विप्रवरं बभाषे**
**सुतानिमित्तं गगनाभिधो नृपः ॥ ९६ ॥**

**कल्याणकाण्डदीपः**

**सार्घ्यसुपुष्पभोजनैः** सुपुष्पभोजनैरिति वा । अर्घ्यपाद्याचमनवस्त्रगन्धमाल्यमनोहारिवैद्यभोजनैः । **सुपुष्पभोजनैः** अनुरागप्रकाशनविशिष्टवचनरूपपुष्पसहितभोजनैः । सादरभोजनैरिति यावत् । पुष्पं प्रति मुखसन्धेरङ्गम् ।

**मूलम्**

**तद्वाक्यमाकर्ण्य गुरुः सुराणां**
**प्रशान्तयन् वाक्यमुवाच भूमिपम् ॥ ९७॥**

**कल्याणकाण्डदीपः**

**प्रशान्तयन्निति** । हेतौ शता चिन्तां शमयन् ।

**गूढकर्तृकव्याख्यानम्**

एतन्मध्ये तोण्डिमान् ज्वरितां पद्मां रुदन्तं आकाशं दृष्ट्वा खिन्नमनाः दैवज्ञ-कुलाचार्य-अमात्य-वैद्य-सामुद्रिक-शान्तिपाठक-ग्रहाराधक-यन्त्रमन्त्रज्ञान् आहूय "यूयं अस्माकं प्रत्यायिता अपि कुतः भावि पद्मायोगक्षेमविचारो न कृतः ?" इति विचारितवान् ।

अथ दैवज्ञः कुलगुरुः परमादरेण "सूक्ष्मेक्षिकया कृतचरेव ।"

"सत्यम् । उक्तः अभ्युदयः । लोकभर्त्रा पाणिग्रहणम्" इति ।

"सा इदानीं प्राणसंशयं आपन्ना । किमेतत् ? युष्मद्वचनं किं जातम् ? एवं सति कथं विप्रवचसि विश्वासः ?"

दैवज्ञः कुलगुरुः— "माऽस्तु विश्वासः । यथाशास्त्रं उक्तम् । कालबलात् युष्मद्दुर्दैवात् अन्यथा जाते किं कर्तव्यम् ? अद्यैव राजकुले दैवपर्यालोचनाधिकारः प्रत्यर्पितः" इति कोपेनाह ।

अथ वैद्यः— "कुपिताया इव अन्तः नाडीसञ्चारो दृश्यते । बहिर्दर्शनि अशनिप्रभाहतेव कोप-शान्तिः आकाङ्क्षापूर्तौ । तस्मात् मयि न औषधम् । तूष्णीं अशक्ये प्रयत्नो न कार्यः ।"

सामुद्रिकः— ममापि अभ्युदयमेव सूचयति । लक्षणशास्त्रशकुनः शपथः सत्यः । "सामुद्रिक-मुपश्रुतिः । उपयाचनमादेशः सम्भवन्ति कलौ क्वचित्" इत्युक्तकलिधर्मवशात् अन्यथा जाते किं कर्तव्यम् ?

तोण्डिमान्— "ब्राह्मणसम्पत् राज्ञां विभवार्था । न तदर्थफलप्रदा" इति सर्वान् अनादृतवान् ।

अस्मिन् समये आकाशः— "अहो किमेतत् ! महाननर्थः । एकपादेन स्थित्वा अञ्जलिं कृत्वा शिरसा आनम्य याचे । भवद्भिः पद्मा द्रष्टव्या । राजकृतानादरं अविगणय्य तद्योगक्षेमाय देवताप्रसादनं द्विगुणं कल्पन्ताम्" इति क्षमापयामास ॥

ततः आकाशः एवं आलोचितवान् । "दशादीपसमो वह्निः दशवह्निसमोऽर्यमा । दशसूर्यसमो वैद्यः दशवैद्यसमो द्विजः । दशद्विजसमो विप्रः दशविप्रसमो गुरुः" इति विद्यमानत्वात् अस्माकं दैवज्ञो गुरुः । राजकृतानादरात् दैवपर्यालोचने भग्नमनाः । भुवि चिरावासाच्च सूक्ष्मं न भासते । अतो ज्योतिर्मण्डलस्थो गुरुः आकारयितव्यः । दुर्निवाराः विश्वविनाशकाः भूतबेतालाद्याः कामं भवेयुः । भयङ्कर-भैरव्यादिचेष्टा वा स्यात् । या का वा पीडा भवतु, सर्वपीडापरिहारं स हि ज्योतिर्मण्डलगतो गुरुः जानते । अतः बृहस्पतये सुतं प्राहिणोत् ।

पूर्वं गत्वा पुनरागतं प्राणमिव आगतं गुरुं दृष्ट्वा, प्राणस्थैर्यमालम्ब्य मे पुण्यं प्रायेण परिपक्वमिवेत्याह । कुतः ? पीडापरिहारोपायचिन्तनकाले एव तत्परिहारकदैवज्ञ-वैद्य-गुर्वादीनां शीघ्रलाभो हि शुभशकुनम् । प्राप्तं गुरुं दृष्ट्वा अभ्युत्थानादिभिः सत्कृत्य रत्नमयासनं दत्वा अर्घ्य-पाद्य-आचमन-वस्त्र-गन्ध-माल्य-भोजनादिभिः उपचर्य, राजा तदा सुतानिमित्तं गुरुं प्रतिवक्ति ।

**मूलम्**

**बृहस्पतिरुवाच—**

**दुहितुस्तेऽद्य सम्प्राप्तं निमित्तं शृणु भूमिप ।**
**अनुकूला ग्रहाः सर्वे तव पुत्र्या नृपोत्तम ॥ ९८ ॥**

**कल्याणकाण्डदीपः**

**निमित्तमिति** । सर्वे ग्रहाः यावन्तो जन्मनि ग्रहाः अनुकूलाः महोन्नत्यनुकूलाः ।

**मूलम्**

**किन्तु नित्यग्रहफलं किञ्चिद्भ्रान्तिकरं नृप ।**
**तस्माच्छान्तिं प्रवक्ष्यामि अभिषेकं शिवस्य च ॥ ९९ ॥**

**कल्याणकाण्डदीपः**

तर्ह्येतत् किम् ? इत्यत आह— **किं त्विति** । **नित्यग्रहफलं** दिनाचारफलम् । **किञ्चिद्भ्रान्तिकरं** विचित्रवस्तुदर्शननिमित्तेषच्चिन्तानवस्थितिबीजम् । तदुक्तं वाराहे—

"च्छायां गुणित्वा लग्नं च तत्फलानि विचार्य च ।
लग्ने लग्नाधिपश्चन्द्रः केन्द्रे दैवबृहस्पतिः ।
निन्दितो दिनपक्षी तु प्रश्नपक्षी तु राज्यगः ॥" इति ।

**तस्मात्** मनोदोषस्य परिहार्यत्वात् **शिवस्य** च मनोमानिनः शिवस्यैव मनोदोषशामकत्वात् तस्यैव **अभिषेकं शान्तिं** प्रकृतदोषशामकं कर्म **प्रवक्ष्यामि** ।

**गूढकर्तृकव्याख्यानम्**

आकाशस्य चिन्तां मत्वा गुरुराह— "राजन् ! शृणु । यावन्तो ग्रहाः सर्वे अनुकूलाः । परन्तु नित्यग्रहफलं ग्रहचारफलं किञ्चित् भ्रान्तिकरम् । विचित्रवस्तुदर्शनेन ईषच्चित्तानवस्थितिः । मनोदोषस्य परिहार्यत्वात् । शिवस्य मनोभिमानित्वात् । तस्यैव मनोदोषशामकत्वात् । तस्यैव अभिषेकं शान्तिं कुर्यात् ।"

**मूलम्**

**अगस्त्येशस्य वै राजन् रुद्रैरेकादशैस्तथा ॥ १०० ॥**

**कल्याणकाण्डदीपः**

कुत्रास्ते सन्निहितः शिवः ? यत्र कारयिष्यामि । कालोऽप्यतीत इति व्याकुलं राजानं पुनराह— **अगस्त्येशस्य वा इति** । तथा पुनः प्रवक्ष्यामि शृणु । यौ वै सन्निहितः शिवः तस्यागस्त्येशस्य एकादशैः रुद्रैश्च प्रातः चन्द्रवारः तेन वारेण चन्द्रललामसहोमस्य साङ्गैः ब्राह्मणैरभिषेचय इति उक्त्वा ज्योतिर्मण्डलं प्रविष्टो गुरुः ।

**मूलम्**

**एवमुक्तोऽथ गुरुणा राजा विप्रान् समादिशत् ।**
**सम्पाद्य सर्वसम्भारान् वयं विप्रसमन्विताः ॥ १०१ ॥**

**कल्याणकाण्डदीपः**

**अथ वयं सर्वसम्भारान्** यत्र फलपुष्पगन्धाक्षतहरिद्राकुङ्कुमसिन्दूरधूपदीपनीराजनलड्डुकादि-पूजासाधनान् **विप्रसमन्विताः** सत्यः एषस्येव सम्पाद्य सन्नद्धा अभूम ।

**मूलम्**

**धिषणेन समाज्ञप्ता द्विजवर्याः समागताः ।**
**तेषां सङ्घात्समाज्ञप्ताः कैलासपतिमन्दिरम् ॥ १०२ ॥**

ततः आकाशः एवं आलोचितवान् । "दशादीपसमो वह्निः दशवह्निसमोऽर्यमा । दशसूर्यसमो वैद्यः दशवैद्यसमो द्विजः । दशद्विजसमो विप्रः दशविप्रसमो गुरुः" इति विद्यमानत्वात् अस्माकं दैवज्ञो गुरुः । राजकृतानादरात् दैवपर्यालोचने भग्नमनाः । भुवि चिरावासाच्च सूक्ष्मं न भासते । अतो ज्योतिर्मण्डलस्थो गुरुः आकारयितव्यः । दुर्निवाराः विश्वविनाशकाः भूतबेतालाद्याः कामं भवेयुः । भयङ्करभैरव्यादिचेष्टा वा स्यात् । या का वा पीडा भवतु, सर्वपीडापरिहारं स हि ज्योतिर्मण्डलगतो गुरुः जानते । अतः बृहस्पतये सुतं प्राहिणोत् ।

पूर्वं गत्वा पुनरागतं प्राणमिव आगतं गुरुं दृष्ट्वा, प्राणस्थैर्यमालम्ब्य मे पुण्यं प्रायेण परिपक्वमिवेत्याह । कुतः ? पीडापरिहारोपायचिन्तनकाले एव तत्परिहारकदैवज्ञ-वैद्य-गुर्वादीनां शीघ्रलाभो हि शुभशकुनम् । प्राप्तं गुरुं दृष्ट्वा अभ्युत्थानादिभिः सत्कृत्य रत्नमयासनं दत्वा अर्घ्य-पाद्य-आचमन-वस्त्र-गन्ध-माल्य-भोजनादिभिः उपचर्य, राजा तदा सुतानिमित्तं गुरुं प्रतिवक्ति ।

**मूलम्**

**बृहस्पतिरुवाच—**

**दुहितुस्तेऽद्य सम्प्राप्तं निमित्तं शृणु भूमिप ।**
**अनुकूला ग्रहाः सर्वे तव पुत्र्या नृपोत्तम ॥ ९८ ॥**

**कल्याणकाण्डदीपः**

**निमित्तमिति** । सर्वे ग्रहाः यावन्तो जन्मनि ग्रहाः अनुकूलाः महोन्नत्यनुकूलाः ।

**मूलम्**

**किन्तु नित्यग्रहफलं किञ्चिद्भ्रान्तिकरं नृप ।**
**तस्माच्छान्तिं प्रवक्ष्यामि अभिषेकं शिवस्य च ॥ ९९ ॥**

**कल्याणकाण्डदीपः**

तर्ह्येतत् किम् ? इत्यत आह— **किं त्विति** । **नित्यग्रहफलं** दिनाचारफलम् । **किञ्चिद्भ्रान्तिकरं** विचित्रवस्तुदर्शननिमित्तेषच्चिन्तानवस्थितिबीजम् । तदुक्तं वाराहे—

"च्छायां गुणित्वा लग्नं च तत्फलानि विचार्य च ।
लग्ने लग्नाधिपश्चन्द्रः केन्द्रे दैवबृहस्पतिः ।
निन्दितो दिनपक्षी तु प्रश्नपक्षी तु राज्यगः ॥" इति ।

**तस्मात्** मनोदोषस्य परिहार्यत्वात् **शिवस्य च** मनोमानिनः शिवस्यैव मनोदोषशामकत्वात् तस्यैव **अभिषेकं शान्तिं** प्रकृतदोषशामकं कर्म **प्रवक्ष्यामि** ।

**गूढकर्तृकव्याख्यानम्**

आकाशस्य चिन्तां मत्वा गुरुराह— "राजन् ! शृणु । यावन्तो ग्रहाः सर्वे अनुकूलाः । परन्तु नित्यग्रहफलं ग्रहचारफलं किञ्चित् भ्रान्तिकरम् । विचित्रवस्तुदर्शनेन ईषच्चित्तानवस्थितिः । मनोदोषस्य परिहार्यत्वात् । शिवस्य मनोभिमानित्वात् । तस्यैव मनोदोषशामकत्वात् । तस्यैव अभिषेकं शान्तिं कुर्यात् ।"

**मूलम्**

**अगस्त्येशस्य वै राजन् रुद्रैरेकादशैस्तथा ॥ १०० ॥**

**कल्याणकाण्डदीपः**

कुत्रास्ते सन्निहितः शिवः ? यत्र कारयिष्यामि । कालोऽप्यतीत इति व्याकुलं राजानं पुनराह— **अगस्त्येशस्य वा इति** । तथा पुनः प्रवक्ष्यामि शृणु । यौ वै सन्निहितः शिवः तस्यागस्त्येशस्य एकादशैः रुद्रैश्च प्रातः चन्द्रवारः तेन वारेण चन्द्रललामसहोमस्य साङ्गैः ब्राह्मणैरभिषेचय इति उक्त्वा ज्योतिर्मण्डलं प्रविष्टो गुरुः ।

**मूलम्**

**एवमुक्तोऽथ गुरुणा राजा विप्रान् समादिशत् ।**
**सम्पाद्य सर्वसम्भारान् वयं विप्रसमन्विताः ॥ १०१ ॥**

**कल्याणकाण्डदीपः**

**अथ वयं सर्वसम्भारान्** यत्र फलपुष्पगन्धाक्षतहरिद्राकुङ्कुमसिन्दूरधूपदीपनीराजनलड्डुकादि-पूजासाधनान् **विप्रसमन्विताः** सत्यः एषस्येव सम्पाद्य सन्नद्धा अभूम ।

**मूलम्**

**धिषणेन समाज्ञप्ता द्विजवर्याः समागताः ।**
**तेषां सङ्घात्समाज्ञप्ताः कैलासपतिमन्दिरम् ॥ १०२ ॥**

**कल्याणकाण्डदीपः**

अथ **धिषणेन** राजकुलाचार्यतया भुव्यवतीर्णगुरुणा **समाज्ञप्ता द्विजवर्याः कैलासपतिमन्दिरं समागताः**। वयं च **तेषां सङ्गात्** तेषां सङ्गतिं कृत्वा अङ्गना अपि गच्छध्वं **इत्याज्ञप्ताः** शिवपूजार्थमागताः।

**गूढकर्तृकव्याख्यानम्**

आकाशः— "कुत्रास्ति सन्निहितः शिवः ? कालोऽपि अतीतः।"

गुरुः— "राजन् ! तव पुत्रीप्राप्तसङ्कटपरिहारोपायं वक्ष्यामि, शृणु। सन्निहित-अगस्त्येश्वरस्य एकादशैः रुद्रैः, श्वः प्रातः चन्द्रवारः, तेन चन्द्रललामसहोमस्य साङ्गनैः विप्रैः अभिषेचय" इत्युक्त्वा ज्योतिर्मण्डलं प्रविष्टो गुरुः। गुरौ गते आकाशः नः सर्वानादिशत्। "यूयं सर्वाः सर्वसम्भारान् विप्रसहिताः अगस्त्येशालयं शीघ्रं गच्छथ। मत्पुत्री पद्मा ज्वरतापतप्ता। निजमन्दिरे शयिता। लघु गच्छत" इति आदिदेश।

ततः वयं सर्वाः पुष्प-फल-गन्ध-अक्षत-हरिद्रा-कुङ्कुम-सिन्धूर-धूप-दीप-नीराजन-लड्डुकादि-पूजासाधनान् सर्वसम्भारान् विप्रैः सह उषस्यैव सन्नद्धा अभूम। ततः राजकुलाचार्यतया भुवि अवतीर्णगुरुणा द्विजवर्याः समाज्ञप्ताः कैलासपतिमन्दिरं समागताः। वयमपि विप्रैः आगताः।

**मूलम्**

**तत्पुत्री ज्वरतापेन शयाना निजमन्दिरे।**
**तच्छान्त्यर्थं वयं प्राप्ता अभिषेकार्थमङ्गने**
**श्रुत्वा तद्वचनं देवी बकुलाऽऽनन्दनिर्भरा ॥ १०३ ॥**

**कल्याणकाण्डदीपः**

**तत्पुत्रीति**। किमतो विस्तार्य वक्तव्यमस्ति। फलितार्थस्तु— हे अङ्गने ! **तत्पुत्रीज्वरतापेन शयाना निजमन्दिरे तच्छान्त्यर्थं** शान्त्यै अभिषेकार्थं **वयं प्राप्ता** इति। **तद्वचनं** अखिलवृत्तान्तवचनम्। **आनन्दनिर्भरा** बभूवेति शेषः। स्वदृष्टश्रीनिवासेन मे योगो भवतु इति तस्याः चिन्ताज्वरः। अतः कन्यामनोरथोऽनुकूलः। अतः प्रकृतकार्यसाधने मम अनायास इति भावः।

**मूलम्**

**अहो धिगात्मानुभवस्य विष्णोः**
**प्रभां न जानेऽद्य पुराणपुंसः ।**
**कृष्णं मुकुन्दं तनयेति मत्वा**
**वृथा शरीरं पुनरागतं मम ॥ १०४ ॥**

**कल्याणकाण्डदीपः**

अथ बकुळा दैवान्मोहात् प्रबुद्धा निर्वेदमापन्नेत्याह **अहो** इत्यादिना । कथं कार्यसिद्धिः स्यादिति चिन्ता मम दुरभिमानादेव । स्वकार्यस्य स्वयमेव साधकः । कुलं च शीलं चेत्याद्युक्तकुलशीलादिपरीक्षा "कन्या वरयते रूपम्" इत्याद्युक्तलक्षणादिपरीक्षा च पूर्वमेव सञ्जातेति मया कर्तव्यः सन्दर्भांशः कोऽस्ति ? मम तु दुरभिमानमात्रम् । **आत्मानुभवस्य** मदीयज्ञानचक्षुषः दोषं दिवान्धत्वं दोषं **धिक्** दहेत्यर्थः । कुतः **अद्य** अद्यापि प्रव्यक्तमाहात्म्यदशायामपि पुराणपुंसः अनादिपुरुषस्य विष्णोः देश-कालगुणैर्व्याप्तस्य **प्रभामपि न जाने** । साक्षाद्भाषे समीप एवास्मि । अहो कियद् बुद्धिदोषमाहात्म्यम् । पुरा यशोदात्वे । मुकुन्दमपि कृष्णं तनयेति मत्वा तनयत्वेन बुद्ध्वा तत्कल्याणं मया न दृष्टमिति चिन्तया कलेवरत्यागात् पुनः शरीरमागतम् । इदमपि वृथा मुक्तिविलम्बापादकत्वादिति भावः । तदानीमेव मुक्तिः न याचितेति ।

**मूलम्**

**कन्या ऊचुः—**

**त्वं कुत्र गच्छसे बाले किमर्थं त्वमिहागता ।**
**वदादेशं वराङ्गी त्वमिति ताभिः सुभाषिता ॥ १०५ ॥**

**कल्याणकाण्डदीपः**

**त्वं कुत्रेति** । **गच्छसे** वर्तस इत्यर्थः । **आदेशं** आज्ञां वद । देहीति यावत् । **सुभाषिता** सगौरवमुक्त्वा उवाचेति शेषः ।

**गूढकर्तृकव्याख्यानम्**

एवं कन्यकोक्तिं श्रुत्वा बकुला आनन्दमग्ना । कुतः ? "श्रीनिवासे अनुरक्ता पद्मा । तच्चिन्तया ज्वरिता । अतः कन्यामनोरथो नाम अनुकूल एव । अतो ममानायासः प्रकृतकार्यसाधने" इति । किञ्च

बकुला एवं वदति— "श्रीनिवासः स्व एव स्वकार्यसाधकोऽस्ति । कन्यावरयोः कुलशीलरूपादिकं पूर्वमेव विचार्य निर्णीतम् । एवं सति मत्प्रयत्नसाध्यं किमपि न । तथाऽपि 'अहमेव एतत् कार्यं प्रयते' इति मम वृथा अभिमानमात्रम् । प्रव्यक्तमाहात्म्यदशायामपि अनादिपुरुषविष्णोः देशकालगुणैः व्याप्तस्य प्रभावं न जाने । साक्षात् भाषे । समीपे स्थिता कियन्मे बुद्धिमान्द्यम् ? पुरा मम यशोदात्वे भक्तपाप-कर्षक-मुक्तिदायक-कृष्णं 'मम तनय' इति मोहेन तत्कल्याणेक्षणचिन्तया देहं त्यक्त्वा, पुनः शरीरं प्राप्तम् । तदानीमेव न मुक्तिर्याचिता । धिक् धिक् आत्मबुद्धिम् ।"

एवं चिन्तयतीं बकुलां प्रति कन्यकाः पृच्छन्ति— "वराङ्गि ! त्वं का ? कुत्रासि ? कुत आयासि ? इति ।"

### मूलम्

### पद्मावतीसखीः प्रति बकुलाऽऽवेदितस्वागमनवृत्तान्तः

**बकुलोवाच—**

**शृण्वन्तु कन्यकाः सर्वाः मद्वाक्यमविचारतः ।**
**अहं श्रीवेङ्कटाधीशदासीभूताऽस्मि साम्प्रतम् ॥ १०६ ॥**

### कल्याणकाण्डदीपः

**शृण्वन्त्विति** । अपुनरुक्तये **सर्वाः** इति सम्बोधनम् । **अविचारतः** उत्तरोत्तरं पृच्छां विना इत्यर्थः । **अहमिति** । साम्प्रतमिदानीं श्रीवेङ्कटाधीशदासीभूताऽस्मि । नैवं पूर्वमासम् । उत्तरत्र ईदृशीति न जाने इति भावः । वस्तुतस्तु निर्वेदावस्थायामिदानीं ईदृशीति । किमर्थमित्यस्य उत्तरमाह— **साम्प्रतमिति** ।

### मूलम्

**धरण्यर्याः समीपे च किञ्चित् कार्यमवर्तत ।**
**धरण्या राजभार्यायाः समीपे कार्यमस्ति मे ॥ १०७ ॥**

### कल्याणकाण्डदीपः

**धरण्यर्याः इति** । 'अर्यः स्वामिवैश्ययोः' इति ऋगतावित्यस्माद्यत् । स्वामिन्यर्थे । अर्यः स्वामी । ततः पुंयोगे ङीष् । **अर्या** स्वामिनी । धरणी च सा अर्या च धरण्यर्या, तस्याः । तथा

"अर्या स्यात् क्षत्रिया" इत्यमरः । तथा च धरणिस्वामिन्याः **समीपे च** समीप एव साक्षात् समीपं गत्वेति यावत् । किञ्चित् अल्पं **कार्यं** कर्तुमहं **अवर्तत** मम मनसि आसीत् । तत् साम्प्रतं कच्चि-द्भवेत् । किं वदत इत्युवाचेति शेषः ।

अयं भावः— हे कन्याः ! इदानीं चन्द्रवारः । ईशदर्शनार्थमहमागता । परन्तु, भवत्समागमे सति मम मानसं किञ्चित् कार्यं स्मृतम् । तदपि भवेदितीत्येवापेक्षा इति ।

**मूलम्**

**नारायणपुरं दिव्यमभेद्यं परदेशिभिः ।**
**भवतां सङ्गमात्रेण पुरस्यान्तःप्रवेशनम् ।**
**इत्थमुक्त्वा च सा बाला कन्याभिश्च परस्परम्  ॥ १०८ ॥**

**कल्याणकाण्डदीपः**

ततः कन्याः ऊचुः— इदानीमस्माभिर्भाव्यमनुकूलनं किमित्यत आह— **नारायणपुरमिति** । **घोरं** पद्मा कन्यारत्नं अनर्हराजानो नापहरेयुरिति पुरान्तस्थमारक्षम् । **घोरं** भयानकम् । तद्धि प्रवेश्या-प्रवेशत्वज्ञानार्थं प्रथमं भीषयतीति भावः । परदेशिभिः अभेद्यैः शरवदृजुगामितया न प्रवेष्टव्यमिति भावः । पुरान्तःप्रवेशनं भवतीभिर्भाव्यमनुकूलमिति भावः । **इत्थमिति** । अस्त्विति शेषः । **कन्याभिः** अपि **सा बाला** च स्त्री दुहिता च इत्यस्त्वित्युक्ताऽभूत् । इत्थं परस्परं सा ताश्च ऊचुरिति पूर्वेण अन्वयः ।

**गूढकर्तृकव्याख्यानम्**

बकुला— "अहं, कन्यकाः ! शृणुत । असंशयिताः शृणुत । अहं श्रीवेङ्कटाचलस्वामि-श्रीनिवासदासी । नैवासं पूर्वं ईदृशी । उत्तरत्र किं भवेयम् ? इति न जाने । मम आकाशभार्या राज्ञी धरणीदेव्याः समीपे भवितव्यकार्यमस्ति । तत्कार्यमपि भवेत् । वदत । कन्याः ! अद्य चन्द्रवारः । ईश-दर्शनायागताः । भवत्समागमे सति मम मनसि कार्यं स्मृतम् । तत्कार्यं भवतीभ्यः भवेदिति मन्ये ।"

कन्यकाः— "अस्मत् भाव्यं कार्यानुकूलं किम् ? पद्मा कन्यारत्नं अनर्हा नृपा अपहरेयुः" इति पुरे अन्तःपुरे आरक्षितम् ।

बकुला— प्रथमं नारायणपुरं परदेशि शत्रुभिः शरवत् ऋजु न प्रवेष्टव्यम् । अतः पुरान्तःप्रवेशनं भवतीसाहाय्येन भाव्यं अनुकूलनम् । एवमुक्त्वा बकुला कन्याभिः नारायणपुरं ययौ ।

यदा बकुला गता, तदा श्रीनिवासः आलोचयति— सहायाः साधनोपायाः विभागो देश-कालयोः । व्यतीपातप्रतीकारः सिद्धेः पञ्चाङ्ग इष्यते । न ह्येकः साधको हेतुः स्वल्पस्यापि हि कर्मणः । यो ह्यर्थं बहुधा वेद स समर्थोऽर्थसाधने" इत्युक्तेः । प्राकृतवत् उपायं रचयति । "बकुला मत्कार्यार्थं गता । एतदुपरि मया यत्नं कर्तुं न शक्यते । कार्यं भवितव्यं चेत् भवति । नो चेन्न । विश्वासः फलदायकः ।" इति विश्वासे भारं निक्षिप्य "निरुद्योगो माभूत् । लोके अगुणवान् एकः पुत्रः सन्नपि पुत्रत्वं नार्हति । तादृशपुत्रवान् अपुत्र एव । दृष्टिशक्तिरहितं एकनेत्रं सदपि न सत् । तादृशनेत्रवान् अनेत्र एव । प्रकृते स्त्रीभिः कार्यं कृतमपि कृतं न । अपर्याप्तं सम्पूर्णफलप्रदं न, काङ्क्षितार्थः न पूर्यते । मम काङ्क्षितार्थः अस्मिन्नेव दिने माङ्गल्यपत्रिकालाभो अवश्यं भवेत् । एतत् बकुलया क्रियत इत्यत्र विश्वासो न ।" एवं विचार्य मायावी इच्छारूपी श्रीनिवासः तदा किं चकार ? स्वयं पुलिन्दावेशं (कोरवंजी) दधार ।

**मूलम्**

**श्रीनिवासस्य पुलिन्दारूपेण नारायणपुरगमनम्**

**एवं गतायां तस्यां तु न विश्वासपरो भवेत् ।**
**एकपुत्रो ह्यपुत्रस्तु एकनेत्रो ह्यनेत्रवान् ॥ १०९ ॥**

**स्त्रीणां च यत्कृतं कार्यं अतदर्थफलप्रदम् ।**
**इति सञ्चिन्त्य गोविन्दो मायावी कामरूपवान् ।**
**स्वयं श्रीवेङ्कटाधीशो वनितारूपमास्थितः ॥ ११० ॥**

**कल्याणकाण्डदीपः**

अथ श्रीनिवासः— प्राकृतानामुपायं शिक्षयन्निव उपायान्तरं रचयतीत्याह– **एवमित्यादिना** ।

"सहायाः साधनोपायाः विभागो देशकालयोः ।
विनिपातः प्रतीकारः सिद्धः पञ्चाङ्गमिष्यते ॥

न ह्येकः साधको हेतुः स्वल्पस्यापि हि कर्मणः ।
यो ह्यर्थं बहुधा वेद स समर्थोऽर्थसाधने ॥"

**इत्युक्तेरुपायान्तरम्** । **विश्वासपरः** विश्वास एव परः परायणं नान्य इति यस्य स तथा । एतदुपरि **मया यत्नः कर्तुं न शक्यते । कार्यं भवतु वा मा वा** इत्यशक्त इव "विश्वासः फलदायकः" इति विश्वासे

भारं निक्षिप्य निरुद्योगो मा भूदिति भावः । **एकपुत्र इति** । एकशब्दः सङ्ख्यार्थः केवलार्थश्च । एक एकाकी केवलो निर्गुणश्च पुत्रो यस्य स तथा निर्गुणैकपुत्रः इत्यर्थः । **अपुत्रवान्** मतुप् प्रशंसो भूमार्थो नञल्पा प्राशस्त्यार्थः । प्रशस्तानेकपुत्रो नेत्यर्थः । तेनाकाङ्क्षितं मुख्यफलं नेति भावः । एवमेकनेत्र इत्यस्यार्थो ज्ञेयः । **स्त्रीणामिति** । स्वातन्त्र्यविवक्षाभावात् सम्बन्धसामान्ये **षष्ठी** । स्त्रीणां च यत् कार्यं तत् कृतमपि पर्याप्तमपि अतदर्थफलप्रदम् । तेनार्थ्यत इति तदर्थः । स चेदं फलं च तदाकाङ्क्षितं फलं तत्प्रदं नेत्यर्थः । स्वस्याकाङ्क्षितं फलं चैतद्धि त एव माङ्गल्यपत्रिकालाभः । अयमर्थान्तरन्यासः ॥

**मूलम्**

**पुलिन्दावेषधारी स चक्रे तद्वेषभूषणम् ।**
**चीरवस्त्रं ततो [1]वस्त्वा छिद्रकश्रुकरञ्जितः ॥ १११ ॥**

**ब्रह्माणं च शिशुं कृत्वा यष्टिं कृत्वा महेश्वरम् ।**
**ब्रह्माण्डं जगदाधारं त्रैगुण्यं गुल्ममेव च ।**
**आकीर्य केशपुञ्जानि तथा पञ्चशतायुषा ॥ ११२ ॥**

**गुञ्जामणिविभूषाङ्गी शङ्खबद्धसुहारिका ।**
**वेणुगुल्मं स्वशिरसि नवधान्यप्रपूरितम् ॥ ११३ ॥**

१. बद्ध्वा ।

**कल्याणकाण्डदीपः**

**चीरवस्त्रं** वल्कलं चेलम् । **वस्त्वा** प्रावृत्य । अनुदात्तत्वान्नेट् । **पञ्चशतायुषा** । पञ्चाधिक-शतायुषा, पञ्चानां शतानां समाहारः, तत् । तेन वा कालेन परिणतदेहेति शेषः । **शङ्खबद्धसुहारिका** शङ्खमणिसुहारिका । यद्वा धृतशङ्खहस्ता च सा सुहारिका च योगिमणिहारिका च तथा । अथवा बद्धाः शङ्खाः काचवलया यस्मिन् सः तथा । अभ्याहितवत् समासः । स चासौ हारो यस्याः सा तथा । शेषाद्विभाषेति कः । टापि प्रत्ययस्थादितीकारः । "शङ्खोऽस्त्रियां ललाटास्थि सङ्ख्यावलयकम्बुषु" इति नानार्थे । नवधान्यान्युक्तानि ।

**मूलम्**

**लम्बोदरी लम्बकर्णा लम्बितात्मपयोधरा ।**
**अदन्ता शुष्कवदना सा बाला धर्मदेवता ॥ ११४ ॥**

यदा बकुला गता, तदा श्रीनिवासः आलोचयति— सहायाः साधनोपायाः विभागो देश-कालयोः । व्यतीपातप्रतीकारः सिद्धेः पञ्चाङ्ग इष्यते । न ह्येकः साधको हेतुः स्वल्पस्यापि हि कर्मणः । यो ह्यर्थं बहुधा वेद स समर्थोऽर्थसाधने" इत्युक्तेः । प्राकृतवत् उपायं रचयति । "बकुला मत्कार्यार्थं गता । एतदुपरि मया यत्नं कर्तुं न शक्यते । कार्यं भवितव्यं चेत् भवति । नो चेन्न । विश्वासः फलदायकः ।" इति विश्वासे भारं निक्षिप्य "निरुद्योगो माभूत् । लोके अगुणवान् एकः पुत्रः सन्नपि पुत्रत्वं नार्हति । तादृशपुत्रवान् अपुत्र एव । दृष्टिशक्तिरहितं एकनेत्रं सदपि न सत् । तादृशनेत्रवान् अनेत्र एव । प्रकृते स्त्रीभिः कार्यं कृतमपि कृतं न । अपर्याप्तं सम्पूर्णफलप्रदं न, काङ्क्षितार्थः न पूर्यते । मम काङ्क्षितार्थः अस्मिन्नेव दिने माङ्गल्यपत्रिकालाभो अवश्यं भवेत् । एतत् बकुलया क्रियत इत्यत्र विश्वासो न ।" एवं विचार्य मायावी इच्छारूपी श्रीनिवासः तदा किं चकार ? स्वयं पुलिन्दावेशं (कोरवंजी) दधार ।

**मूलम्**

**श्रीनिवासस्य पुलिन्दारूपेण नारायणपुरगमनम्**

**एवं गतायां तस्यां तु न विश्वासपरो भवेत् ।**
**एकपुत्रो ह्यपुत्रस्तु एकनेत्रो ह्यनेत्रवान् ॥ १०९ ॥**

**स्त्रीणां च यत्कृतं कार्यं अतदर्थफलप्रदम् ।**
**इति सञ्चिन्त्य गोविन्दो मायावी कामरूपवान् ।**
**स्वयं श्रीवेङ्कटाधीशो वनितारूपमास्थितः ॥ ११० ॥**

**कल्याणकाण्डदीपः**

अथ श्रीनिवासः— प्राकृतानामुपायं शिक्षयन्निव उपायान्तरं रचयतीत्याह– **एवमित्यादिना** ।

"सहायाः साधनोपायाः विभागो देशकालयोः ।
विनिपातः प्रतीकारः सिद्धः पञ्चाङ्गमिष्यते ॥

न ह्येकः साधको हेतुः स्वल्पस्यापि हि कर्मणः ।
यो ह्यर्थं बहुधा वेद स समर्थोऽर्थसाधने ॥"

इत्युक्तेरुपायान्तरम् । **विश्वास**.. विश्वास एव परः परायणं नान्य इति यस्य स तथा । एतदुपरि मया यत्नः कर्तुं न शक्यते । कार्यं भवतु वा मा वा इत्यशक्त इव "विश्वासः फलदायकः" इति विश्वासे

भारं निक्षिप्य निरुद्योगो मा भूदिति भावः । **एकपुत्र इति** । एकशब्दः सङ्ख्यार्थः केवलार्थश्च । एक एकाकी केवलो निर्गुणश्च पुत्रो यस्य स तथा निर्गुणैकपुत्रः इत्यर्थः । **अपुत्रवान्** मतुप् प्रशंसो भूमार्थो नञल्पा प्राशस्त्यार्थः । प्रशस्तानेकपुत्रो नेत्यर्थः । तेनाकाङ्क्षितं मुख्यफलं नेति भावः । एवमेकनेत्र इत्यस्यार्थो ज्ञेयः । **स्त्रीणामिति** । स्वातन्त्र्यविवक्षाभावात् सम्बन्धसामान्ये षष्ठी । स्त्रीणां च यत् कार्यं तत् कृतमपि पर्याप्तमपि अतदर्थफलप्रदम् । तेनार्थ्यत इति तदर्थः । स चेदं फलं च तदाकाङ्क्षितं फलं तत्प्रदं नेत्यर्थः । स्वस्याकाङ्क्षितं फलं चैतद्धि त एव माङ्गल्यपत्रिकालाभः । अयमर्थान्तरन्यासः ॥

**मूलम्**

**पुलिन्दावेषधारी स चक्रे तद्वेषभूषणम् ।**
**चीरवस्त्रं ततो [१]वस्त्वा छिद्रकञ्चुकरञ्जितः ॥ १११ ॥**

**ब्रह्माणं च शिशुं कृत्वा यष्टिं कृत्वा महेश्वरम् ।**
**ब्रह्माण्डं जगदाधारं त्रैगुण्यं गुल्ममेव च ।**
**आकीर्य केशपुञ्जानि तथा पञ्चशतायुषा ॥ ११२ ॥**

**गुञ्जामणिविभूषाङ्गी शङ्खबद्धसुहारिका ।**
**वेणुगुल्मं स्वशिरसि नवधान्यप्रपूरितम् ॥ ११३ ॥**

१. बद्ध्वा ।

**कल्याणकाण्डदीपः**

**चीरवस्त्रं** वल्कलं चेलम् । **वस्त्वा** प्रावृत्य । अनुदात्तत्वान्नेट् । **पञ्चशतायुषा** । पञ्चाधिकशतायुषा, पञ्चानां शतानां समाहारः, तत् । तेन वा कालेन परिणतदेहेति शेषः । **शङ्खबद्धसुहारिका** शङ्खमणिसुहारिका । यद्वा धृतशङ्खहस्ता च सा सुहारिका च योगिमणिहारिका च तथा । अथवा बद्धाः शङ्खाः काचवलया यस्मिन् सः तथा । अग्न्याहितवत् समासः । स चासौ हारो यस्याः सा तथा । शेषाद्विभाषेति कः । टापि प्रत्ययस्थादितीकारः । ''शङ्खोऽस्त्रियां ललाटास्थ्नि सङ्ख्यावलयकम्बुषु'' इति नानार्थे । नवधान्यान्युक्तानि ।

**मूलम्**

**लम्बोदरी लम्बकर्णा लम्बितात्मपयोधरा ।**
**अदन्ता शुष्कवदना सा बाला धर्मदिवता ॥ ११४ ॥**

यदा बकुला गता, तदा श्रीनिवासः आलोचयति— सहायाः साधनोपायाः विभागो देश-कालयोः । व्यतीपातप्रतीकारः सिद्धेः पञ्चाङ्ग इष्यते । न ह्येकः साधको हेतुः स्वल्पस्यापि हि कर्मणः । यो ह्यर्थं बहुधा वेद स समर्थोऽर्थसाधने" इत्युक्तेः । प्राकृतवत् उपायं रचयति । "बकुला मत्कार्यार्थं गता । एतदुपरि मया यत्नं कर्तुं न शक्यते । कार्यं भवितव्यं चेत् भवति । नो चेन्न । विश्वासः फलदायकः ।" इति विश्वासे भारं निक्षिप्य "निरुद्योगो माभूत् । लोके अगुणवान् एकः पुत्रः सन्नपि पुत्रत्वं नार्हति । तादृशपुत्रवान् अपुत्र एव । दृष्टिशक्तिरहितं एकनेत्रं सदपि न सत् । तादृशनेत्रवान् अनेत्र एव । प्रकृते स्त्रीभिः कार्यं कृतमपि कृतं न । अपर्याप्तं सम्पूर्णफलप्रदं न, काङ्क्षितार्थः न पूर्यते । मम काङ्क्षितार्थः अस्मिन्नेव दिने माङ्गल्यपत्रिकालाभो अवश्यं भवेत् । एतत् बकुलया क्रियत इत्यत्र विश्वासो न ।" एवं विचार्य मायावी इच्छारूपी श्रीनिवासः तदा किं चकार ? स्वयं पुलिन्दावेशं (कोरवंजी) दधार ।

**मूलम्**

**श्रीनिवासस्य पुलिन्दारूपेण नारायणपुरगमनम्**

**एवं गतायां तस्यां तु न विश्वासपरो भवेत् ।**
**एकपुत्रो ह्यपुत्रस्तु एकनेत्रो ह्यनेत्रवान् ॥ १०९ ॥**

**स्त्रीणां च यत्कृतं कार्यं अतदर्थफलप्रदम् ।**
**इति सञ्चिन्त्य गोविन्दो मायावी कामरूपवान् ।**
**स्वयं श्रीवेङ्कटाधीशो वनितारूपमास्थितः ॥ ११० ॥**

**कल्याणकाण्डदीपः**

अथ श्रीनिवासः— प्राकृतानामुपायं शिक्षयन्निव उपायान्तरं रचयतीत्याह– **एवमित्यादिना** ।

"सहायाः साधनोपायाः विभागो देशकालयोः ।
विनिपातः प्रतीकारः सिद्धः पञ्चाङ्गमिष्यते ॥

न ह्येकः साधको हेतुः स्वल्पस्यापि हि कर्मणः ।
यो ह्यर्थं बहुधा वेद स समर्थोऽर्थसाधने ॥"

इत्युक्तेरुपायान्तरम् । **विश्वासपरः** विश्वास एव परः परायणं नान्य इति यस्य स तथा । एतदुपरि मया यत्नः कर्तुं न शक्यते । कार्यं भवतु वा मा वा इत्यशक्त इव "विश्वासः फलदायकः" इति विश्वासे

भारं निक्षिप्य निरुद्योगो मा भूदिति भावः । **एकपुत्र इति** । एकशब्दः सङ्ख्यार्थः केवलार्थश्च । एक एकाकी केवलो निर्गुणश्च पुत्रो यस्य स तथा निर्गुणैकपुत्रः इत्यर्थः । **अपुत्रवान्** मतुप् प्रशंसो भूमार्थो नञल्पा प्राशस्त्यार्थः । प्रशस्तानेकपुत्रो नेत्यर्थः । तेनाकाङ्क्षितं मुख्यफलं नेति भावः । एवमेकनेत्र इत्यस्यार्थो ज्ञेयः । **स्त्रीणामिति** । स्वातन्त्र्यविवक्षाभावात् सम्बन्धसामान्ये षष्ठी । स्त्रीणां च यत् कार्यं तत् कृतमपि पर्याप्तमपि अतदर्थफलप्रदम् । तेनार्थ्यत इति तदर्थः । स चेदं फलं च तदाकाङ्क्षितं फलं तत्प्रदं नेत्यर्थः । स्वस्याकाङ्क्षितं फलं चैतद्धि त एव माङ्गल्यपत्रिकालाभः । अयमर्थान्तरन्यासः ॥

**मूलम्**

**पुलिन्दावेषधारी स चक्रे तद्वेषभूषणम् ।**
**चीरवस्त्रं ततो [1]वस्त्वा छिद्रकश्रुकरञ्जितः ॥ १११ ॥**

**ब्रह्माणं च शिशुं कृत्वा यष्टिं कृत्वा महेश्वरम् ।**
**ब्रह्माण्डं जगदाधारं त्रैगुण्यं गुल्ममेव च ।**
**आकीर्य केशपुञ्जानि तथा पञ्चशतायुषा ॥ ११२ ॥**

**गुञ्जामणिविभूषाङ्गी शङ्खबद्धसुहारिका ।**
**वेणुगुल्मं स्वशिरसि नवधान्यप्रपूरितम् ॥ ११३ ॥**

---
१. बद्ध्वा ।

**कल्याणकाण्डदीपः**

**चीरवस्त्रं** वल्कलं चेलम् । **वस्त्वा** प्रावृत्य । अनुदात्तत्वान्नेट् । **पञ्चशतायुषा** । पञ्चाधिकशतायुषा, पञ्चानां शतानां समाहारः, तत् । तेन वा कालेन परिणतदेहेति शेषः । **शङ्खबद्धसुहारिका** शङ्खमणिसुहारिका । यद्वा धृतशङ्खहस्ता च सा सुहारिका च योगिमणिहारिका च तथा । अथवा बद्धाः शङ्खाः काचवलया यस्मिन् सः तथा । अग्न्याहितवत् समासः । स चासौ हारो यस्याः सा तथा । शेषाद्विभाषेति कः । टापि प्रत्ययस्थादितीकारः । "शङ्खोऽस्त्रियां ललाटास्थ्नि सङ्ख्यावलयकम्बुषु" इति नानार्थे । नवधान्यान्युक्तानि ।

**मूलम्**

**लम्बोदरी लम्बकर्णा लम्बितात्मपयोधरा ।**
**अदन्ता शुष्कवदना सा बाला धर्मदेवता ॥ ११४ ॥**

**ब्रह्माणं नाभिसम्भूतं सप्तमासात्मकं शिशुम् ।**
**रुदन्तं शुष्कवदनं कृशाङ्गं दीर्घबाहुकम् ॥ ११५ ॥**

**[1]वस्त्राञ्चले शिशुं बद्ध्वा नृत्यन्ती जगदीश्वरी ।**
**यष्टिं धृत्वा करे चागात् सा बाला धर्मदेवता ।**
**नारायणपुरं प्राप्ता नारदाब्जजवन्दिता ॥ ११६ ॥**

१. शिशुं बद्ध्वा चीरवस्त्रे ।

**कल्याणकाण्डदीपः**

**लम्बोदरी** नासिकोदरेतिङीष् वा । **बाला** हेण्मगळु । **धर्मदेवता** धर्मप्रधाना देवता । परोपकारेण धर्मार्जनपरा । न चेलं याचते । नापि चोलम् । अमृतभीता । तीर्थयात्रापरा । अनपेक्षा । अपरोक्षज्ञानवती शुद्धचित्ता इत्यादयः तत्कुलधर्माः । **सप्तमासात्मकं** सप्तमासा यस्य शिशोः तस्य आत्मेवात्मा यस्य स तथा, तम् । वस्त्राञ्चले शिशुं बद्ध्वा ।

**गूढकर्तृकव्याख्यानम्**

वल्कलवस्त्रं परिदधती, वक्षसि छिद्रभूतकञ्चुकं दधती, ब्रह्मदेवं शिशुं चकार, शिवं यष्टिम्, चतुर्दशलोकाधारं सत्त्वरजस्तमोगुणात्मकं ब्रह्माण्डं गुल्मम्, शिरोरुहान् विकीर्णवती, पञ्चाधिकशत-वार्षिकी शिथिलशरीरा गुञ्जामणिभूषिता देहा, शङ्खयोगिमणिहारं धृतवती, नवधान्यपूरितवेणुगुल्मं शिरसि धृतवती, लम्बमानोदरी, लम्बमानकर्णा, लम्बमानस्तनी, अदन्ता, वदनं म्लानं गलितं च, एता-दृशबाला (हेण्णुमगळु) धर्मप्रधाना देवता धर्मार्जनपरा भूत्वा येषु केष्वपि चेलं न याचते । अनृतात् भीता, पुण्यक्षेत्रतीर्थक्षेत्रापरा, अपरोक्षज्ञानवती, शुद्धचित्ता इत्यादयः तस्याः कुलधर्माः । स्वनाभि-कमलजविधिं सप्तमासशिशुं चकार । स शिशुः सदा रुदन्, शुष्कमुखः, बाहवः दीर्घाः, शिशुं वस्त्रमूले धृतवती । एवं गृहीतवेषा पुलिंदा करे यष्टिं धृत्वा लीलया नर्तनं कुर्वन्ती, नारदादिदेव-मुनि-ब्रह्मादि-देववन्दिता पुलिन्दा आकाशराजधानीं प्राप्ता ।

**मूलम्**

**पुरीं समागत्य च गर्जयन्ती**
**पतीन् सुतान् बन्धुगणान् ददामि ।**

श्रुत्वा वचस्तद्वदितं पुरस्त्रियो
ऊचुस्तदा तां नृपवल्लभां प्रति ॥ ११७॥

**कल्याणकाण्डदीपः**

**पतीनिति** । पतिचिन्तायुक्तानां पतीन् । सुतचिन्तायुक्तानां सुतान् इत्यादि ददामि । निमित्तं दृष्ट्वा चिन्तापरिहारोपायमुक्त्वा ददामीति भावः । इति **गर्जयन्ती** पद्मासद्मतोरणसमीपमाजगाम इति शेषः ।

**गूढकर्तृकव्याख्यानम्**

पुरान्तः आगत्य, पतिचिन्तानां पतीन्, सुतचिन्तानां सुतान्, बन्धुचिन्तानां बन्धून्, इतर-बहु-ईप्सितान् ददामीति घोषयन्ती आगता । घोषवचनं श्रुत्वा पौरनार्यः एतद्वृत्तं राजभार्या-धरणीं गत्वा अवदन् ।

**मूलम्**

**पुलिन्दारूपधारिभगवतः पद्मावतीजनन्याश्चान्योन्यसंवादः**

**ग्रामस्था उचुः—**

**धर्मदेवी समायाता नरनारायणाश्रमात् ।**
**वृद्धा सा वर्तते ह्यम्ब मितभाषीव दृश्यते ॥ ११८॥**

**कल्याणकाण्डदीपः**

**अम्ब** इति सम्बोधनम् । अबार्थेत्यादिना ह्रस्वः । **मितभाषि इव** इति च्छेदः । सामान्ये नपुं-सकम् ।

**मूलम्**

**मनोगतं वदामीति वदति स्म पुनः पुनः ।**
**तामानय महाभागे सा बाला धर्मदेवता ॥ ११९॥**

**ताभिः समाभाषितचित्तवृत्ति-**
**रुवाच वाक्यं स्वसखीगणेभ्यः ।**
**तामाह्वयत्तत्र सखीभिरादरात्**
**सम्प्राप्तभाग्याऽहमिति स्मरन्ती ॥ १२०॥**

**ब्रह्माणं नाभिसम्भूतं सप्तमासात्मकं शिशुम् ।**
**रुदन्तं शुष्कवदनं कृशाङ्गं दीर्घबाहुकम् ॥ ११५ ॥**

**[1]वस्त्राञ्चले शिशुं बद्ध्वा नृत्यन्ती जगदीश्वरी ।**
**यष्टिं धृत्वा करे चागात् सा बाला धर्मदेवता ।**
**नारायणपुरं प्राप्ता नारदाब्जजवन्दिता ॥ ११६ ॥**

१. शिशुं बद्ध्वा चीरवस्त्रे ।

**कल्याणकाण्डदीपः**

**लम्बोदरी** नासिकोदरेतिङीष् वा । **बाला** हेण्मगळु । **धर्मदेवता** धर्मप्रधाना देवता । परोपकारेण धर्मार्जनपरा । न चेलं याचते । नापि चोलम् । अमृतभीता । तीर्थयात्रापरा । अनपेक्षा । अपरोक्षज्ञानवती शुद्धचित्ता इत्यादयः तत्कुलधर्माः । **सप्तमासात्मकं** सप्तमासा यस्य शिशोः तस्य आत्मेवात्मा यस्य स तथा, तम् । वस्त्राञ्चले शिशुं बद्ध्वा ।

**गूढकर्तृकव्याख्यानम्**

वल्कलवस्त्रं परिदधती, वक्षसि छिद्रभूतकञ्चुकं दधती, ब्रह्मदेवं शिशुं चकार, शिवं यष्टिम्, चतुर्दशलोकाधारं सत्त्वरजस्तमोगुणात्मकं ब्रह्माण्डं गुल्मम्, शिरोरुहान् विकीर्णवती, पञ्चाधिकशत-वार्षिकी शिथिलशरीरा गुञ्जामणिभूषिता देहा, शङ्खयोगिमणिहारं धृतवती, नवधान्यपूरितवेणुगुल्मं शिरसि धृतवती, लम्बमानोदरी, लम्बमानकर्णा, लम्बमानस्तनी, अदन्ता, वदनं म्लानं गलितं च, एता-दृशबाला (हेण्णुमगळु) धर्मप्रधाना देवता धर्मार्जनपरा भूत्वा येषु केष्वपि चेलं न याचते । अनृतात् भीता, पुण्यक्षेत्रतीर्थक्षेत्रापरा, अपरोक्षज्ञानवती, शुद्धचित्ता इत्यादयः तस्याः कुलधर्माः । स्वनाभि-कमलजविधिं सप्तमासशिशुं चकार । स शिशुः सदा रुदन्, शुष्कमुखः, बाहवः दीर्घाः, शिशुं वस्त्रमूले धृतवती । एवं गृहीतवेषा पुलिंदा करे यष्टिं धृत्वा लीलया नर्तनं कुर्वन्ती, नारदादिदेव-मुनि-ब्रह्मादि-देववन्दिता पुलिन्दा आकाशराजधानीं प्राप्ता ।

**मूलम्**

**पुरीं समागत्य च गर्जयन्ती**
**पतीन् सुतान् बन्धुगणान् ददामि ।**

**श्रुत्वा वचस्तद्गदितं पुरस्त्रियो**
**ऊचुस्तदा तां नृपवल्लभां प्रति ॥ ११७ ॥**

**कल्याणकाण्डदीपः**

**पतीनिति** । पतिचिन्तायुक्तानां पतीन् । सुतचिन्तायुक्तानां सुतान् इत्यादि ददामि । निमित्तं दृष्ट्वा चिन्तापरिहारोपायमुक्त्वा ददामीति भावः । इति **गर्जयन्ती** पद्मासद्मतोरणसमीपमाजगाम इति शेषः ।

**गूढकर्तृकव्याख्यानम्**

पुरान्तः आगत्य, पतिचिन्तानां पतीन्, सुतचिन्तानां सुतान्, बन्धुचिन्तानां बन्धून्, इतर-बहु-ईप्सितान् ददामीति घोषयन्ती आगता । घोषवचनं श्रुत्वा पौरनार्यः एतद्वृत्तं राजभार्या-धरणीं गत्वा अवदन् ।

**मूलम्**

**पुलिन्दारूपधारिभगवतः पद्मावतीजनन्याश्चान्योन्यसंवादः**

**ग्रामस्था उचुः—**

**धर्मदेवी समायाता नरनारायणाश्रमात् ।**
**वृद्धा सा वर्तते ह्यम्ब मितभाषीव दृश्यते ॥ ११८ ॥**

**कल्याणकाण्डदीपः**

**अम्ब** इति सम्बोधनम् । अबार्थेत्यादिना ह्रस्वः । **मितभाषि इव** इति च्छेदः । सामान्ये नपुं-सकम् ।

**मूलम्**

**मनोगतं वदामीति वदति स्म पुनः पुनः ।**
**तामानय महाभागे सा बाला धर्मदेवता ॥ ११९ ॥**

**ताभिः समाभाषितचित्तवृत्ति-**
**रुवाच वाक्यं स्वसखीगणेभ्यः ।**
**तामाह्वयत्तत्र सखीभिरादरात्**
**सम्प्राप्तभाग्याऽहमिति स्मरन्ती ॥ १२० ॥**

### कल्याणकाण्डदीपः

**समाभाषितचित्तवृत्ता ।** **सम्** सम्यक् **अभाषितं चित्तवृत्तं** धर्मदेवीचित्तवृत्तं यां सा तथा । "समाधापितचित्तवृत्ता" इति पाठः सुगमः । तथा सतीति शेषः । **सम्प्राप्तभाग्याऽहमिति** । मदपेक्षा-समं यदृच्छया समागता तस्मादहं भाग्यवतीति सस्मारेति भावः ।

### गूढकर्तृकव्याख्यानम्

सा धर्मदेवता गर्जयन्ती क्रमात् पद्मासद्मतोरणसमीपे आगच्छन्ती आसीत् । एतत्पूर्वमेव पौरनार्यः धरामाहुः— "अम्ब ! महाराज्ञि ! अयं विशेषवृत्तान्तः । शृणुत । बदरिकाश्रमात् नरनारायणाश्रमात् अकस्मात् धर्मदेवता आगता दृष्टा । सा केवलं वयोज्ञानवृद्धाऽस्ति । मितभाषिणी भाति । पतिसुत-बन्धुनिमित्तचिन्तापरिहारोपायमुक्त्वा ईप्सितानि ददामीति वदति । मनोगतं ईदृशमेवेति मुहुर्वदति । अतः महाभाग्यवति राज्ञि ! अत्र धर्मदेवतानयनं समीचीनम्" इत्याहुः । तद्वचनं श्रुत्वा धरा किञ्चित् समा-हिता । कुतः ? "मच्चिन्तनसमकालिकं धर्मदेवागमनम्" इति । अहो अहं भाग्यवतीति वक्तव्यम् । क्षणात् "सख्यः ! वनिताः ! यूयं लघु गत्वा तां धर्मदेवीमत्रानयत" इत्यादिदेश ।

### मूलम्

**आज्ञप्ता धरणीदेव्या समाजग्मुर्वराङ्गनाः ।**
**याहीत्यूचुर्धर्मदेवीं राजभार्यान्तिकं त्वरात् ॥ १२१ ॥**

### कल्याणकाण्डदीपः

**याहीति** । साम्राज्ञीवाक्यमिति गर्वेण, अरे धर्मदेवि ! **राजभार्यान्तिकं** धरण्यर्यासमीपं **त्वरात्** द्रुतं **याहि** याहीति निरस्तमूचुः ।

### मूलम्

**सा श्रुत्वा वचनं तासां मन्दमाह मनस्विनी ॥ १२२ ॥**

### कल्याणकाण्डदीपः

**सा** धर्मदेवी **तासां वचनं** बलवदुक्तं श्रुत्वाऽपि **मनस्विनी** गूढाभिसन्धिः कार्यगौरवात् **मन्दं** मृद्वाह ।

मूलम्

धर्मदेव्युवाच—

अहं दरिद्रा कुटिला सा बाला भाग्यसंयुता ॥ १२३ ॥
आह्वानं च विनोदार्थं हास्यार्थं हसिताननाः ।
मद्वस्त्रं [1]मलिनं पश्य मदाभरणमण्डलम् ॥ १२४ ॥
नवधान्यसमाकीर्णं गुञ्जामणिविभूषितम् ।
अन्नहीनं शिशुं मां च दृष्ट्वा हास्यार्थमेव च ।
नागमिष्ये विशालाक्ष्यः किं कार्यं राजमन्दिरे ॥ १२५ ॥

१. मत्सुतं ।

कल्याणकाण्डदीपः

किमित्यत आह— 'अहं' इत्यादिना 'राजमन्दिर' इत्यन्तेन । हे विशालाक्ष्यः ! स्मिताननाः ! नृपमन्दिरे मया तस्याः धरिण्यर्याः प्रकृतोपयुक्तमावश्यकं कार्यं किमस्ति ? न च निमित्तश्रवणं कार्यमस्तीति वाच्यम् । नृपमन्दिरे बृहस्पतिसमानां बहूनां दैवज्ञादीनां विद्यमानत्वात् । एवमपि मदाह्वानं यतो यूयं विशालाक्ष्यः स्मिताननाः बाला अतो **विनोदार्थं** क्रीडया अनायासेन कालयापनार्थं हास्यार्थं विकृताकारालङ्कारादिदर्शनजन्यमनोविकासेन हास्यरसास्वादनार्थं वा प्रायः स्यात् । तत् कुतः ? तादृशं किमस्ति त्वयि हास्यरसालम्बनादि ? इत्यतोऽहमालम्बनविभावः । दारिद्र्यकौटिल्यादिविकृतालङ्कारा-द्युद्दीपनविभावश्चास्तीति स्वयमेवाशङ्क्योत्तरमाह— **अहं दरिद्रेत्यादिना** ।

सा बाला भाग्यसंयुता सुन्दरी । अहं च दरिद्रकुटिला लम्बोदरी इत्यादिनोक्तकुटिलाङ्गयुक्ता । तस्या चेलं दुकूलं, मच्चेलं चीरं चोळं च, जालं मलिनम् । बहुमार्गगमनादरुणरेणुरुषितः । तदाभरण-मण्डलं मुक्ताहारवज्राहारादयः, मदाभरणमण्डलं गुञ्जाहारशङ्खहारादयः । तद्धान्यागारं नवरत्नसमाकीर्णं, मदीयं नवधान्यसमाकीर्णम् । तदीयं विद्रुमादिभूषितं, मदीयं गुञ्जामणिविभूषितम् । तद्भोजनभाजनं स्वादु बह्वन्नोपेतम्, मदीयं अन्नहीनम् । एवं आलम्बनोद्दीपनविभावैर्हासो हास्यतां प्रतिपाद्यत इति भावः ।

अस्तु वा राजमन्दिरे यथेष्टवसनपानाशनस्रग्गन्धालङ्कारताम्बूलादिभोगाभोगेन मोदं प्राप्य इतस्ततः सञ्चलतां जनानां भवत्यादीनां हास्यार्थं भवतीनां सन्तोषः । तथाऽपि मद्वस्त्रं मलिनं, मदाभरणमण्डलं च मलिनम्, गुञ्जामणिविभूषितं नवधान्यसमन्वितं गुल्मं च मलिनं च पश्य ।

अथवा मलिनमित्यस्योद्देश्यविशेषणतयाऽन्वयो वा। आर्यदर्शनं च देवतादर्शनवत् कार्यम्। अतो निर्णिक्तचैलचोलादिः स्नाता सती धृततिलका पूर्वफलपाणिः यथाकालं पश्येयम्। किञ्च गुल्ममन्नहीनं तस्य कालोऽतिक्रमत इति भावः। किं वितर्के ? लक्ष्मीकटाक्षवशादपगतापद्गन्धे समृद्धसर्वसम्पदि राजभवने कार्यं चिन्ताहेतुकार्यं किं स्यात् ? अन्नहीनं स्यात्। अन्नमद्यं कान्तवस्तुहीनं यस्य ज्वर-सन्तापकार्यस्य तत् तथा। नान्यदिति।

अयं भावः— इन्द्रसमोऽनुजो राजा। चन्द्रः पुत्रः। तत्सहोदरी दुहिता। एतादृशराजमन्दिरे किं चिन्ताकार्यं स्यात्। तन्नोतै तद्वेति वितर्क्य कान्तो न मिलित इति। एतत्कार्यं स्यात्। अन्नपदस्य कान्तार्थत्वं श्रुतिप्रसिद्धम्।

## गूढकर्तृकव्याख्यानम्

ता वराङ्गनाः धर्मदेवीमुपागम्य धर्मदेवि ! शृणु। वयं महाराज्ञिसन्निधानात् आगताः। तदाज्ञया त्वं लघु धराराज्ञीं आगच्छेत्याहुः। तद्वचनं बलवदुक्तमपि धर्मदेवी मनस्विनी गूढाभिसन्धिः कार्यगौरवात् मन्दं मृदु आह। धर्मदेवि— "अङ्गनाः ! विशालाक्ष्यः ! स्मिताननाः ! राजगृहे राज्ञिसमीपे मादृश-पुलिन्दायाः आवश्यककार्यं किं अस्ति ? निमित्तश्रवणकथनावश्यकता न। कुतः ? राजगृहे बृहस्पति-समदैवज्ञाः बहवः सन्ति। एवं सति मदाह्वानं अयुक्तम्। तथाऽपि आह्वानं चेत्, यूयं सर्वाः नव-युवत्यः। अहं अतिवृद्धा। आह्वानं युष्माकं विनोदायते। वृथा हास्यविनोदायैव। पश्यत माम्। अतिवृद्धा। पलिता, वलिता, पतितदन्ता। मम विकृतवेषेण वः अतिमानसोल्लासः। किञ्च सा युष्माकं धरणी युवती, सुन्दरी, महाराज्ञि, भाग्यवती। अहं तु दरिद्रा, अशनवसनरहिता, अतिवृद्धा, कुटिल-मनाः। राज्ञीचेलं दुकूलम्। मम तु चीरम्। तदपि छिन्नभिन्नम्। चोलं च जालं, मलिनम्। बहुदेश-सञ्चारेण धूलिधूषितम्। धरणी-आभरणं सुवर्णखचितम्। मदीयं गुञ्जा-काच-शङ्ख(कवडी)निर्मितम्। एवमस्ति। मयि तत्र गते यथेष्टभोगानुभवैः मुदं प्राप्य सञ्चरतां जनानां भवतीनां च उपहास्या भवेयम्। किञ्च, मम वस्त्रं आभरणं गुल्मं च मलिनम्। पश्यत। किञ्च राज्ञीदर्शनं देवदर्शनवत्। अतः निर्णिक्तचेलचोलादिः स्नाता धृततिलका अपूर्वफलपाणिः यथाकालं पश्येयम्। "रिक्तपाणिर्न पश्येत राजानं दैवतं गुरुम्" इति वदन्ति। इमं शिशुं पश्यत। अन्नहीनम्। ईदृशीं मां शिशुं च दृष्ट्वा सर्वे तत्र हसन्ति। अतो नायामि" इत्याह।

## मूलम्

**धर्मदेवीं समाभाष्य ता जग्मुर्धरणीं प्रति।**
**तयोक्तं वाऽवदन् बाला धरणी तां समाययौ ॥ १२६ ॥**

धरण्युवाच—

याहि भद्रे महाभागे साक्षात् त्वं धर्मदेवता।
दैवयोगादागताऽसि मम कल्याणवर्धिनी ॥ १२७॥

मनोरथो मनःसंस्थस्तथ्यं मे कथ्यतामिति।
भाषिता राजपत्न्या सा सत्यमाह धरां प्रति ॥ १२८॥

**कल्याणकाण्डदीपः**

**याहीति**। **त्वं साक्षाद्धर्मदेवता**। निरपेक्षाऽपि निमित्तं दृष्ट्वा परचिन्तापरिहारेण धर्मप्रधान-देवता। अतो निमित्तेन चिन्तापरिहारमुक्त्वा धर्मार्थमन्तर्गच्छेत्यर्थः। **भाषितेति**। हे राज्ञि। किं राजभवने दैवज्ञा न सन्ति। इत्युक्ताह यद्यपि सन्ति, तथापि ते दैवात् कालबलेन प्रमुष्टचित्ताः सन्तः असन्तोषं ऊचुः। अतो राजकृतानादरात् व्यग्रचित्ताः। यतोऽनृतं जातम्, अतः तद्वचने अस्माक-माश्वासोऽपि नास्ति। अतः त्वमेव शरणमित्येवं समाभाषितेत्यर्थः।

**मूलम्**

धर्मदेव्युवाच—

मया निगदितं वाक्यमसत्यं चेन्मनस्विनि।
पुरान्निष्कास्य मां देवि छेदनं करयोः कुरु ॥ १२९॥

कठिणं मम वाक्यं तु ह्यसत्ये हस्तछेदनम्।
नरनारायणः श्रीमान् भर्ता मे राजवल्लभे ॥ १३०॥

**कल्याणकाण्डदीपः**

**कठिणमिति**। मद्वाक्यं क्वापि कदाऽपि न मृषा। यथोक्तवर्तने द्राक्षा मृदुमधुरम्। अन्यथावर्तने कालकूटकटु। रिक्तवचनवाचाटनेति भावः। अथ धरणी "हे धर्मदेवि! तवाङ्गमापादमौळिशङ्खचक्रादि-महापुरुषलक्षणोपेतम्। तत् कस्मान्निमित्तात्" इत्यत आह— **नरनारायण इति**।

**मूलम्**

तद्वीर्यजातपुत्रं(त्रः) तु प्रजापतिमिमं विदुः।
तेनाज्ञप्ता त्वदर्थे च सम्प्राप्ता तव मन्दिरम् ॥ १३१॥

भूतं भव्यं भविष्यच्च वदामि जगदीश्वरि ।
इत्युक्ता धर्मदेव्या सा राजपत्नी पतिव्रता ॥ १३२ ॥

सान्त्वयित्वा महाराजा धरणी धर्मदेवताम् ।
सम्प्राप्य भवनं राज्ञो धर्मदेव्या धरा सती ॥ १३३ ॥

रत्नासने समारोप्य तां बालां धर्मदेवताम् ।
सुस्थिरं वचनं प्राह 'राजपत्नी प्रजेश्वर ॥ १३४ ॥

१. मन्दं मन्दं मुदाऽन्विता ।

**कल्याणकाण्डदीपः**

**सान्त्वयित्वेति** । हे देवते ! हसितानना हास्यपरास्ता बाला निःसरिताः । नायं कालो हास्यस्थानम् । इति सान्त्वयित्वेत्यर्थः ।

**गूढकर्तृकव्याख्यानम्**

धर्मदेव्या ईदृशवचनं श्रुत्वा अङ्गनाः धरापुरतो यथावत् अवदन् । ततः धरणी स्वयं आगत्य धर्मदेवीं प्रार्थयते— "भद्रे ! भाग्यवति ! त्वं साक्षात् धर्मदेवता । मम सुदैवात् आगता । मयि दयया राजगृहं आगच्छ । त्वं निरपेक्षा । निमित्तं दृष्ट्वा परचिन्तापरिहारैकधर्मवती धर्मदेवता । अतो धर्मदृष्ट्या अन्तःपुरमागच्छ । त्वदागमनं अस्मत्कल्याणवर्धनाय" इत्याह ।

धर्मदेवी— "राजवल्लभे ! युष्मद् राजगृहे दैवज्ञा न किम् ?"

धरणी— "सन्ति । तथापि ते कालबलात् प्रमुष्टचित्ताः । सन्तापं सन्तोषं ऊचुः । राजकृतानादरात् व्यग्राः । अनृतवादात् तद्वचने न प्रत्ययो न । अतः त्वमेव शरणम् । अन्यथा शरणं नास्ति । कारुण्यभावेन नः रक्ष रक्ष ।"

धर्मदेवी— "देवि ! शृणु । मदुक्तं कदापि क्वापि असत्यं न । मदुक्तं प्रवृत्तं चेत् द्राक्षा मृदुमधुरं, निवृत्तं कालकूटकटु । अहं रिक्तवचनवाचाटा न । मदुक्तं असत्यं चेत् मनस्विनि मम हस्तद्वयच्छेदनं कारय । पत्तनात् निष्कासय ।"

धरणी— "धर्मदेवि ! तव अङ्गं आपादमौलि शङ्खचक्रादिमहापुरुषलक्षणोपेतम् । कथमिदम् ?"

धर्मदेवि— "देवि ! मध्ये कोऽयं प्रश्नः ? मम अत्र आगमनात् प्राक् मां दृष्ट्वा सर्वा अङ्गना हास्यं चक्रुः । अद्य त्वमपि हास्यं कर्तुमुपक्रान्ता । हास्यस्य देशकालौ न किम् ? इदमस्तु । श्री नरनारायणः मम भर्ता । मत्तेजोजातोऽयं शिशुः । इमं शिशुं विधिं वदन्ति । मद्भर्त्राज्ञया त्वयि आगता । वृत्तं वर्तमानं वर्तिष्यमाणं यथार्थं वच्मि ।"

एवमुक्ते धरणी— "धर्मदेवि ! तव हास्यं कृतवती बालाः अहं निस्सारितवती । अतः तव चिन्ता न । इत्युक्त्वा तां समाधाप्य राजगृहमानीय रत्नासने उपवेश्य, तदग्रे साञ्जलिपुटं स्थिता इतः कर्तव्यं किम् ? इति मन्दं पप्रच्छ ।

**मूलम्**

**धर्मदेव्युवाच—**

**मज्जनं कुरु कल्याणि शुभ्रवस्त्रा सकञ्चुका ।**
**गुरुदेवनमस्कारं कुरु देवि हरिप्रिये ॥ १३५ ॥**

**एवमुक्ताऽथ कल्याणि तथा चक्रे यथोदितम् ।**
**पश्चिमाभिमुखी भूत्वा पश्चाद्वाक्यमुवाच सा ॥ १३६ ॥**

**धरण्युवाच—**

**किं कार्यं वद भद्रे ते करोमि तव शासनात् ॥ १३७ ॥**

**कल्याणकाण्डदीपः**

**किं कार्यमिति** । एतदुपरि मया किं कार्यम् ? भद्राणि वचनानि वद । तव शासनात् सर्वं करोमि इति उवाचेति शेषः ।

**मूलम्**

**पुलिन्दोवाच—**

**कल्याण्युपायनं देहि देवानां मम पूर्विणाम् ॥ १३८ ॥**

**कल्याणकाण्डदीपः**

**कल्याणीति** । मया स्मृता देवा बहवः आयान्ति । तेषां मम निमित्तवक्त्र्याः पूर्विणां पूर्वमवश्यं स्मर्तव्यानां उपायनं देहि इत्युवाच ॥

अथ धरणी मुक्तातण्डुलपूर्वकैः प्रस्थमात्रत्रिराशिमुक्तातण्डुलौ पूर्वौ येषां फलपुष्पताम्बूलसुवर्ण-हरिद्राकुङ्कुमादीनां तैः स्वर्णशूर्पं समापूर्य बहुभक्त्यैव पुरतो निक्षिप्य, हे वरानने ! शुभवदने ! मध्यमराशौ मनोगतं वर्तमानमाधिं वद । दक्षिणराशौ तन्निमित्तभूतं वद । उत्तरराशौ तत्परिहारम् । एष्यदभ्युदयं शीघ्रं वदेत्युवाच ।

**मूलम्**

**इत्थं पुलिन्दावचनं श्रुत्वा सा धरणी तदा ।**
**स्वर्णशूर्पं समापूर्य मुक्तातण्डुलपूर्वकैः ।**
**निक्षिप्य बहुभक्त्यैव [1]वद शीघ्रं वरानने ॥ १३९ ॥**

१. धर्मदेवीं वचोऽब्रवीत् ।

**धरण्युवाच—**

**सत्यं वद महाप्राज्ञे मम दुःखं प्रणोदय ।**
**धरणीवाक्यमाकर्ण्य धर्मदेवी वचोऽब्रवीत् ॥ १४० ॥**

**धर्मदेव्युवाच—**

**सत्यं वदामि धर्मज्ञे शिशोरन्नं प्रयच्छ मे ।**
**अहःकृतं रात्रिकृतं सुपक्कं रससंयुतम् ॥ १४१ ॥**
**श्रुत्वा तद्वचनं रम्यं त्वरयाऽऽनीय भामिनी ।**
**क्षीरान्नं स्वर्णपात्रस्थमर्भकाय ददौ नृप ॥ १४२ ॥**

**कल्याणकाण्डदीपः**

अथ धर्मदेवी 'वरानने' इति सम्बोधनेन शुभानेव वद इति सूचनात् वदनस्य शुभता शुभान्नभोजने नान्यथेत्याशयेनाह— **सत्यमिति** । हे धर्मज्ञे ! निमित्तश्रवणधर्मज्ञे ! शुभानेव वदेति यत्सूचितं तत् सत्यम् । अतो वदामि शृणु । अहःकृतं वा रात्रिकृतं वा रससंयुतं क्षीरादिरससंयुतं सुपक्कं बालहितं पथ्यं शिशोरन्नं प्रयच्छेति उवाचेत्यर्थः । क्षीरान्नं भुक्त्वा शुभवदनेन सत्यं वदामीति भावः ।

**गूढकर्तृकव्याख्यानम्**

धर्मदेवि— ''कल्याणि ! मङ्गलमज्जनं कुरु । शुभ्रवस्त्रं परिधेहि । शुभ्रकञ्चुकं धर । श्रीहरिं श्रीहरिप्रियगुरुं च नम ।'' धरणी तथैव सर्वमाचरत् ।

ततः धरणी— "अभिमुखमुपविश्य धर्मदेवि ! इतः किं कार्यम् ? भद्रवचनं वद । तवाज्ञया चरामि ।"

धर्मदेवी— "मङ्गले ! प्रथमं ध्यातव्यदेवानामुपायनं देहि । अहं निमित्तवक्त्री । स्वर्णशूर्पे प्रस्थ-मितत्रिराशिमुक्तातण्डुलाः ममाग्रे स्थापनीयाः । फलपुष्पताम्बूलदक्षिणाहरिद्राकुङ्कुमादयः आनेतव्याः । वरानने ! भक्त्या अभिमुखं उपविश । पश्य । अत्र त्रयः मुक्ताराशयः । अयं मध्यराशिः । अयं दक्षिणः । अयं उत्तरः । प्रथमं तव मनोगतं स्मर । इमं मध्यं स्पृष्ट्वा तव मनोगत-आधिं स्मर । दक्षिणराशिं स्पृष्ट्वा तन्निमित्तं स्मर । उत्तरराशिस्पर्शनेन आधि-परिहारं एष्यदभ्युदयं स्मर ।"

धरणी— "महाप्राज्ञे ! त्रैकालिकज्ञानवति ! धर्मज्ञे ! शुभानने ! सत्यं वद । येन केन मम दुःखं परिहर ।"

धर्मदेवी— "राजभार्ये ! धर्मज्ञो मां धर्मज्ञे ! शुभानने ! इति सम्बोधितवती । एतत् सम्बोधनं सत्यम् । तव मुखोद्गतधर्मशब्दश्रवणेन अद्य धर्माचरणपूर्वकं निमित्तं वक्तव्यम् । शुभानने ! इति श्रवणात् मम मुखात् शुभशब्द एव वक्तव्यः । एवं सति प्रथमं दानधर्मं कुरु । प्रकृतेयं मम शिशुः क्षुधार्तः । तस्मै अन्नं देहि । अन्नं अहःकृतं वा रात्रिकृतं वा क्षीरादिरसयुक्तं सुपक्वं बालहितं शुचि रुचि पथ्यं सत् देहि । क्षीरान्नं दत्तं चेत् सुखं भुक्त्वा शुभनिमित्तं वच्मि ।"

**मूलम्**

**तदन्नं नैव बुभुजे मानुषत्वात् प्रजापतिः ।**
**रुरोद स शिशुस्तस्या धर्मदेव्याश्च भूमिप ॥ १४३ ॥**

**कल्याणकाण्डदीपः**

त्वं प्रश्नधर्मज्ञा । अत एव महतीति प्रशंसा । "सन्ततिर्हि तव ख्यातिर्भविष्यच्छुभभाग्यताम्" इत्यादि प्रशंसेति भावः । भोजयामास । बलाद् भोजयामास । तेनान्नं निष्ठीवितं पुनर्भोजयामास । पुनर्निष्ठीव्य रुरोद ।

**मूलम्**

**रुदन्तमात्मजं दृष्ट्वा विनिन्द्य प्रतताड च ।**
**दरिद्रोऽसि दुराचार कन्दमूलफलाशन ॥ १४४ ॥**

**कथं नु भोक्ष्यसे सौख्यं क्षीरान्नं राजनिर्मितम्।**
**कदापि रोदनं मातः किं करिष्यामि [1]भूपते ॥ १४५ ॥**

१. भूमिपे।

**कल्याणकाण्डदीपः**

अथ **दरिद्रोऽसि**। अरे निर्भाग्योऽसि। क्षीरान्नभोजने पुण्यहीनोऽसि। **दुराचार** भोजितान्न-निष्ठीवनादिदुराचार। दुश्चेष्टेत्यर्थः। **कन्दमूलफलाशन** आस्यकण्डूतिकरकन्दमूलफलाशन। अतः कथं राज्ञे निर्मितं **सौख्यं** सुखसाधनं **क्षीरान्नं कथं भोक्षसे**। धिक् दुर्विनीत इत्येवं **विनिन्द्य प्रतताड्य**। **कदापीति**। हे मातः कदापि ईक्षणे रोदनम्। अग्रे। किं करिष्यामि वद। ललाटलिखितम्।

वास्तवार्थस्तु— अहो शिशो ! मानुषान्नदरिद्रोऽसि। अन्यदुष्कराचारकन्दो ज्ञानयोगः। तन्मूलकशतानन्दभोक्तः। त्वं राजनिर्मितं असौख्यात्पसौख्यं क्षीरान्नं कथं भोक्षसे। तव रोदनमपि कदा यदा सभाणमकरोत् प्रमाणतः तदाऽसौ विरुरावह इत्यादि मातः प्रमितं तदा इदानीमपि रोदने किं करिष्यामीति।

**गूढकर्तृकव्याख्यानम्**

धरणी क्षणे पुत्रं वसुदानमादिश्य तद्द्वारा स्वर्णपात्रे क्षीरान्नमानाय्य शिशोः ददौ। धर्मदेवी क्षीरान्नं भोजयामास। अपि तु, मानुषान्नमिति शिशुर्न भुक्तवान्। अनिच्छया रोदनं उपचक्रमे। रुदन्तं शिशुं विनिन्द्य भर्त्सयित्वा सन्ताड्य भोजयति। न भुङ्क्ते। कवलशः गृहीत्वा बलात् भोजयति। शिशुः थूत्कारेण निष्ठीवितवान्। पुनः निष्ठीवति। रोदिति। "हन्त ! अरे दरिद्र ! निर्भाग्य ! एतत् श्रेष्ठक्षीरान्नं भोक्तुं न ते पुण्यम्। किं रोदनम् ? किं निष्ठीवनम् ? किं दुश्चेष्टां करोषि ? तव आस्यकण्डूतिकर-कन्दमूलफलाशनमेव तव ललाटे लिखितम्। अत एव राज्ञे निर्मित-श्रेष्ठक्षीरान्नं कथं वा भुञ्जीयाः ?" इति तं ताडयामास।

**मूलम्**

**इति तं भर्त्सयित्वाऽथ स्वयं भुक्त्वाऽन्नमुत्तमम्।**
**ममोदरगतं चान्नं पुत्रस्य हितकारणम् ॥ १४६ ॥**

**इत्युक्त्वा भोजनं चक्रे धर्मदेवी नृपोत्तम।**
**क्षीरान्नभोजनं कृत्वा स्वस्थचित्ताऽभवत्तदा ॥ १४७ ॥**

**कल्याणकाण्डदीपः**

'नृपोत्तम' इति जनकसम्बोधनम् । आद्यादित्वात्तसिः । **इति तं भर्त्सयित्वेति** । अरे शिशो ! **स्वयं** आगतं अनायासेन आयातं **अन्नं** क्षीरान्नं **भुक्त्वा** किं तूष्णीं स्थातुं न शक्यतेऽहं **इति तं भर्त्सयित्वा** ॥ **ममोदरगतं** इत्यादि स्पष्टम् ।

**मूलम्**

**सत्यं वदामि सुश्रोणि ताम्बूलं देहि मेऽङ्गने ।**
**इत्युक्ता धरणीदेवी धर्मदेव्या पुलिन्दया ॥ १४८ ॥**

**एलालवङ्गकर्पूरनागवल्लीदलैर्युतम् ।**
**ताम्बूलमर्पयामास पुलिन्दायै पतिव्रता ॥ १४९ ॥**

**सा पूर्वाभिमुखी भूत्वा पुत्रमङ्के निधाय च ।**
**पुरतो गुल्ममास्थाय पादावास्तीर्य भामिनी ॥ १५० ॥**

**कल्याणकाण्डदीपः**

**सा पूर्वाभिमुखीति** । पूर्वाभिमुखी भूत्वा स्थित्वा प्रपदीनपुरश्चैलपल्लवान् झटिति पृष्ठतः कुर्वाणा उपर्यञ्चलमुत्सार्य जालचोळादपि बहिर्लम्बमानौ स्तनौ लम्बयन्ती उपविश्य पुत्रमङ्के निधाय पादावास्तीर्य तदन्तरा गुल्ममास्थाय दृष्टमुपविष्टाऽभूदिति शेषः ।

**गूढकर्तृकव्याख्यानम्**

''अम्ब राज्ञि ! कदाऽपि रोदनमेव । किं करोमि ? वद । मुख्यतः अस्मद् ललाटलिखितम् । किं कर्तुं भवति ? गच्छतु । अहमेव भुक्तवती चेत् मम उदरगत-अन्नरसः कथमपि पुत्रहितो भवेत्'' इति मत्वा क्षीरान्नं स्वयं भुक्तवती । मनःस्वास्थ्यं जातम् । ततः हे राज्ञि ! इतो मे ताम्बूलं देहि । धरणिः एला-लवङ्ग-कर्पूर-जाति-पत्र-पूगीफल-नागवल्लीदलयुतताम्बूलमर्पितवती । ताम्बूलं चर्वितम् ॥ ततः धर्मदेवि पूर्वाभिमुखी (प्रपदीनपुरश्चैलपल्लवान् झडिति पृष्ठतः कुर्वाणा उपर्यञ्चलमुत्सार्य जालचोलादपि बहिर्लम्बमानौ स्तनौ लम्बयन्ती उपविश्य) पुत्रमङ्के निधाय पादौ आस्तीर्य तदन्तरा गुल्मं आस्थाय हृष्टं उपविष्टा ।

**मूलम्**

**एवंरूपगतं कृष्णं श्रीनिवासं सुरोत्तमाः ।**
**द्रष्टुकामाश्च राजेन्द्र महिमां प्राकृतोचिताम् ॥ १५१ ॥**

**सदाराश्च सपुत्राश्च सविमानगणास्तथा ।**
**अन्योन्यं भारतीं प्रोचुः सम्भ्रमात्कौतुकान्विताः ॥ १५२ ॥**

**कल्याणकाण्डदीपः**

**एवंरूपगतमिति** । इत्थंरूपेण स्थितम् । "इवेत्थमर्थयोरेवम्" इति अमरः । **कृष्णं** कृष्णवर्णोपेतं **श्रीनिवासं** नारायणं **प्राकृतोचितां** लौकिकजनमनोहरां **महिमां** महेन हासोत्सवेन निवृत्तां क्रीडां च । "महेर्णिजन्तादेरच्" । "भावप्रत्ययान्तादिमनिच् टाप्" । **द्रष्टुकामाः सुरोत्तमाः** द्रष्टुं काम इच्छा येषां ते तथा । "तुं काममनसोः" इति तुमुनोन्त्यलोपः । सदाराः सपुत्राः सविमानगणाश्च आजग्मुरिति शेषः । **अन्योन्यमिति** । **सम्भ्रमात्** मनो अनवस्थानात् । कौतुकान्विताः अन्योन्यं भारतीं प्रोचुः ।

अत्रेदं बोध्यम् । आपादमौळिशङ्खचक्रादिरेखाङ्कितम् । त्रिपौरुषं निष्टसकाञ्चनशिखराभरण-भूषितधृतसुरपारिजातपुष्पयष्टिकाद्रितुरम्बं दीर्घमौक्तिकनासाभरणं माङ्गल्यतन्त्वादि । तालपत्रादि-शङ्खोर्मिकादि कण्ठकर्णहस्ताद्याभरणादिसर्वसुमङ्गल्याभरणभूषितं हरिद्राकुङ्कुमाञ्जनगन्धादिचर्चितं सायंसन्ध्या सरस्वत्यात्मकं गायित्रीप्रतिपाद्यं चिदानन्दाद्यात्मकमेतद्रूपमिति । पुलिन्दिनीयं शबरी मतङ्गमतानुयायिनी ।

**मूलम्**

**किं तेन सुकृतं राज्ञ्या जन्मन्यस्मिन् नृपोत्तम ।**
**लक्ष्मीसहायो भगवान् क्रीडते प्राकृतो यथा ॥ १५३ ॥**

**कल्याणकाण्डदीपः**

सा कीदृशीत्यत आह— **किमिति** । **अस्मिन् जन्मनि** फलदायकं **तेन राज्ञा** कृतं **सुकृतं किं** कीदृशं स्यात् । बलिकृतसदृशं वा दशरथकृतसदृशं वा । कुतोऽयं वितर्क इत्यत आह— **लक्ष्मीति** । यत इति शेषः । यस्य भवन इति च ।

**मूलम्**

**एवं हरेश्चित्रविचित्रकर्म**
**गायन्ति कञ्जोद्भवशम्भुशक्राः ।**
**कलौ युगे पापकृतां नराणा-**
**मुद्धारणार्थं जगदीशक्रीडा ॥ १५४ ॥**

*इति श्रीमद् भविष्योत्तरपुराणे श्रीवेङ्कटेशमाहात्म्ये*
*श्रीनिवासस्य पुलिन्दिनीरूपवर्णनं नाम अष्टमोऽध्यायः ॥*

॥ श्रीकृष्णार्पणमस्तु ॥

**कल्याणकाण्डदीपः**

**एवमिति** । कञ्जोद्भवशम्भुशक्राद्या हरेः चित्रचारित्र्यव्यापारं विशेषतो गायन्ति । अहं तु साधारण्येनापाततः श्रवणमात्रेण कलिमलापहा जगदीशक्रीडेति वच्मीत्याह पुराणर्षिः जगदीश-क्रीडेति ।

*श्रीमद्भविष्योत्तरपुराणव्याख्याने कल्याणकाण्डदीपे*
*बकुळापुळिन्दिनीवृत्तिकाद्वयोदयो नाम अष्टमोऽध्यायः ॥*

बकुळावर्त्तिक्या रम्भाकाण्डतूलतन्तुरूपादानं धर्मसारो भजनं पञ्च तन्तवः । मधुसूदनादयः पञ्चतन्तुमूर्तयः । पुळिन्दिनीवृत्तिकायाः क्षीरकाकाशान्यतरं तूलतन्तुरूपादानम् । मृगमदोभञ्जनम् । पञ्चतन्तवः । पद्मनाभादि पञ्चतन्तुमूर्तयः ॥ श्रीनिवासाय मङ्गळम् ॥

**गूढकर्तृकव्याख्यानम्**

इत्येवं रूपं धृतवन्तं कृष्णवर्णविशिष्टं श्रीहरिं श्रीनिवासं सर्वे देवतोत्तमाः द्रष्टुं स्वकलत्रपुत्रबान्धवैः सह विमानैः आगत्य पुलिन्दारूपं हरिं प्रति मिथं ऊचुः— किमिदं रूपम् ? आपादमौलिशङ्खचक्रादि-रेखाङ्कितं, त्रिपौरुषं, निरस्तप्तकाञ्चनशिखाभरणं, दीर्घमौक्तिकनासाभरणं, तालपत्रादिशङ्खोर्मिकादि-कण्ठकर्महस्ताद्याभरणम्, हरिद्राकुङ्कुमाञ्जनगन्धादिचर्चितं, सायंसन्ध्या सरस्वत्यात्मकम्, गायत्री-प्रतिपाद्यम्, सच्चिदानन्दाद्यात्मकमिति वर्णयन्तः देवाः अतिसम्भ्रमकौतुकान्विताः । "इयं राज्ञि कियत् पुण्यं जन्मान्तरे कृतवती ? साक्षात् श्रीहरिः प्राकृतवत् अत्र क्रीडते" इति ।

पुराणर्षिः सूतः— "विप्राः ! शृणुत । श्रीहरिः अचिन्त्याद्भुतचित्रविचित्रकर्म करोति । तत् कर्म विधिभवेन्द्रादिदेवाः परया भक्त्या गायन्ति । एवं सति जगदीशचेष्टाः तत्रापि कलौ पापकृतां नराणां उद्धारायैव भवन्ति । स्मरणमात्रेण श्रवणमात्रेण कलिमलापहेति वच्मि" इति । इत्येवमादि अंशं शतानन्दमुनिः जनकराजं प्रति निरूपयामास । तदेव सूतः शौनकादिविप्रान् प्रति निरूपयामास ॥

*॥ इति अत्र श्रीमद्भविष्योत्तरपुराणे वेङ्कटगिरिमाहात्म्ये कन्याभिः श्रीनिवासपुलन्दिनीरूपवर्णनं वर्णनं नाम अष्टमोऽध्यायः ॥*

॥ श्रीकृष्णार्पणमस्तु ॥



॥ श्रीः ॥

## श्रीमद्भविष्योत्तरपुराणान्तर्गतं

# श्रीवेङ्कटेशमाहात्म्यम्

### ॥ अथ नवमाध्यायकथासङ्क्षेपः ॥

**(गूढकर्तृकव्याख्यानानुसारी)**

ततः धर्मदेवी भोजनं कृत्वा स्वर्णशूर्पे मुक्तातण्डुलान् त्रिधा विभज्य फलकथनात् प्राक् नारायणं ततः लक्ष्मीं विधिमुखदेवान् काशीविश्वनाथादीन् पुण्यक्षेत्राधिदेवताः गङ्गादिपुण्यतीर्थानि भक्त्या स्मरन्ती हस्ते यष्टिं धृत्वा त्रिराशीन् प्रति फलमाह— "महाराज्ञि ! तव पुत्री वने सुन्दरं पुरुषश्रेष्ठं दृष्ट्वा मोहिता। अतः तस्याः कामज्वरः प्राप्तः। अत एव अङ्गशोषणम्, नान्यत् कारणम्। अस्य परिहारोपायः तस्मै एव किरातरूपिणे तव पुत्री दातव्या । सः पुरुषः श्रीनिवासः । अद्य वेङ्कटगिरौ वसति । विद्याबुद्धिबलरूपयौवनादिसद्गुणसम्पन्नः । तस्य हयं तव पुत्री शिलाभिः हतवती । इष्टं चेत् मदुक्तं सत्यं वेति विचारय । तस्मै दत्तैव पुत्री सुखिनी, नो चेत् इतो दिनमात्रे मरिष्यति । न संशयः ।

धरणी— "हन्त हन्त ! याचनां विना कथं देया ?" धर्मदेवी— "राज्ञि ! मा चिन्तय । अद्यैव घटिकान्ते काचन वृद्धा धर्मार्थकुशला अत्र आयास्यति । तया सह तव पतिदेवादिभिः सह कन्यादानप्रसक्तिं कुरु । इदं तावदस्तु । अद्य ममाग्रे तस्मै श्रीनिवासायैव तव सुतां दास्यामि" इति सङ्कल्पं कुरु । धरणी— "तथाऽस्तु । तस्मै एव दास्यामि । पुत्री जीवतु" इत्याह । ततः धर्मदेवी एतावत् कार्यसिद्धिं उत्पाद्य नरनारायणाश्रमं गता ।

ततः धरणी पद्मासद्मनि गत्वा "पुत्रि ! किं ते मनोगतम् ? वद । तत् कार्यं अकार्यं वा, पूरयामि । पश्य । मनोगतं न वदसि चेत् । विषं पिबामि ।" पद्मा आह— आत्मकृते अतिदुःखितां जननीं दृष्ट्वा "अम्ब ! वने पुराणपुरुषोत्तमं अपश्यम् । ततो मे ईदृशी अवस्था । सः कमलेक्षणः । शङ्खचक्रगदापद्मपाणिः । कण्ठे कौस्तुभो राजते । स एव सर्वोत्तमः । जगज्जनकः । तं विना न हि जीवामि" इति ।

पुत्रीमनोगतं विदित्वा धरणी नृपं प्रति पुत्रीचिन्ताकारणं धर्मदेवीवचनं चाह । तदैव अगस्त्ये-श्वरपूजां परिसमाप्य बकुलया सह कन्यका आगताः । तदा धरणी कन्यामुखेन बकुलायाः आत्मनि कार्यमस्तीति विदित्वा तां आनाय्य उपचर्य, "मातः ! त्वं का ? कुतः आयाता ?" बकुला— "कन्यान्वेषिणी आगता ।" धरणी— "वः वरापेक्षा अस्ति । को वा वरः ? कुलगोत्रादिकं वद ।" बकुला— "वरः कृष्णः ! 'श्रीनिवास' इति ख्यातः । वेङ्कटगिरिवासी, चन्द्रकुलम्, वसिष्ठगोत्रम्, वसुदेवदेवक्यौ जनकजनन्यौ,, श्रवणनक्षत्रम्, पञ्चविंशतिवार्षिकः । तस्मै दत्ता चेत् तव कुमारी सुखमेष्यति ।" इति ।

ततः धरणी वसुदानमुखेन नृपं आनाय्य "महाराज ! कन्यार्थं आगता साध्वी । पुत्रीमनो विदितम् । अद्य कन्यावरयोः गोत्रनक्षत्राद्यानुकूल्यं पुरोहितमुखेन विचारय । धर्मदेवीवचः सत्यम् । पद्मा श्रीनिवासमेव इच्छति । शुभं शीघ्रं विधीयताम्" इत्याह । आकाशः हृष्टः पुत्रीपरिणयातुरः पद्मासद्मनि सतीसहितं आगत्य तन्मनोगतं विदित्वा "श्रीनिवासायैव त्वां दास्यामि" इति पुत्रीं समाश्वास्य शीघ्रं वसुदानद्वारा सुरगुरुं आनाय्य "गुरुवर्य ! श्रीनिवासाय पद्मां प्रदास्यामि इति मे मतिः । भवदाज्ञया करवाम" इति जगाद । गुरुः— "मत्तः शुकमुनिः श्रीनिवासं वेत्तितराम् । व्यास-सुतः श्रीनिवासभक्तः । तं आगमय (आह्वय)" इत्याह ।

तदा नृपादेशेन तोण्डिमानः शुकं प्रति गत्वा दृष्ट्वा "आकाशः भवतां आगमनं काङ्क्षति" इत्याह । तदा शुकः तन्मुखेन श्रीनिवासाय पद्माप्रदानं विदित्वा आनन्दपरवशः मुहूर्तं ननर्त । ततः "एवं नृपः सदा दानी भवतु" इति प्रशस्य स्नानादिकं निर्वर्त्य तुलसीमालालङ्कृतः राजधानीं प्रययौ ।

आयान्तं शुकं आकाशः गुरुसहितः ससम्भ्रमं राजगृहं आनयत् । तं विध्युक्तं पूजयामास । तं प्रति "मुनिवर्य ! श्रीनिवासाय पद्मां भवदनुमोदितः ददामि" इत्याह । शुकः आह— "राजेन्द्र ! साक्षात् श्रीनिवासः तव जामाता भवति । शुभं शीघ्रं विधीयताम् । पुण्यात्मनः तव सङ्गत्या अचिन्त्यं अगम्यं अप्रमेयं पश्यामः" इति अस्तौत् । ततः नृपप्रार्थनया गुरुः "कन्यावरयोः जातके विमृश्य गोत्र-प्रवर-नक्षत्र-कूटादिकं सर्वथा अनुकूलमस्ति । कन्यादानं कुरु राजन्" इत्याह ।

ततः नृपः सभां कृत्वा स्वाशयं निवेद्य गुरुबन्धुमित्रादिभिः अनुमोदितः पुण्याहं वाचयित्वा कन्यादानाय सङ्कल्पं चकार । ततः गुरोः अनुज्ञया श्रीनिवासाय शुभपत्रिकामलिखत् । "भगवन् ! मम कन्यां स्वीकृत्य अनुगृहाण" इति विलिख्य शुकद्वारा पत्रं प्राहिणोत् । ततः शुकः बकुलया सहितः वेङ्कटाचलं ययौ ।

इतः गिरौ इतोऽपि बकुला नागतेति चिन्तयत्येव श्रीनिवासे सः बकुलाशुकौ आगच्छन्तौ वीक्ष्य हृष्टः । तौ आपृच्छ्य कन्याघटनं सफलं विदित्वा मुनिं प्रति "मुनिवर ! जगत्कुटुम्बिनो मम कल्याणोद्युक्तस्य प्रत्युपकर्तुं न शक्यते । तथाऽपि देहालिङ्गनं ददामि" इति ब्रुवन् आत्मालिंगनं शुकाय ददौ । ततः शुकदत्तशुभपत्रं आकाशलिखितं पठित्वा सन्तुष्टः स्वयमपि आकाशाय शुभपत्रं लिलेख । "राजोत्तमाय नमः । मया भवत्-शुभपत्रं दृष्टम् । हृष्टम् । वैशाखशुक्लदशम्यां शुक्रवारे विवाहे तव कन्यां स्वीकरोमि । वेदितव्यं सर्वं वेत्ति शुकमुनिः" इति शुभलेखां विलिख्य शुकद्वारा आकाशाय प्राहिणोत् ।

ततः बकुलां प्रति "अस्य कार्यं किं जातम् ? का वार्ता नारायणपुर्याम् ?" इति पप्रच्छ । बकुला आह— "श्रीनिवास ! धर्मदेवी आगता । कन्या भवद्दानयोग्या इति राज्ञी आह । पद्मा त्वामेव इच्छति । आकाशः सर्वानुमत्या तवैव कन्यां दातुं निश्चिकाय ॥ जगदीश ! श्रीनिवास ! इदं सर्वं कार्यं त्वत्त एव जातम् । भवतः परं दैवं न । त्वमेव सर्वोत्तमः ।" इति उक्तवतो मातरं प्रतिनन्द्य किञ्चित् हसन् एवं वाक्यमाह इत्येवं पद्मापरिणयनिश्चयं यत् शतानन्दः जनकं प्रति निरूपयामास तदेव वर्णनं सूतः शौनकादिविप्रान् प्रति निरूपयामास ॥

*इति श्रीमद्भविष्योत्तरपुराणे श्रीवेङ्कटेशमाहात्म्ये नवमाध्यायकथासङ्क्षेपः ॥*

॥ श्रीकृष्णार्पणमस्तु ॥



॥ श्रीः ॥

श्रीमद्भविष्योत्तरपुराणान्तर्गतं

# श्रीवेङ्कटेशमाहात्म्यम्

## अथ नवमोऽध्यायः

### पद्मावतीपरिणयनिश्चयः

श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

**मूलम्**

**धरण्यै पुलिन्दोक्तपद्मावतीदेहशोषणनिवृत्त्युपायः**

शतानन्द उवाच—

भोजनान्तेऽस्मरद् बाला देवान् स्वकुलपूजितान् ।
आदौ नारायणं ध्यात्वा पश्चाल्लक्ष्मीं पितामहम् ॥ १ ॥

सरस्वतीमुमाकान्तमुमामिन्द्रमतःपरम् ।
[1]शचीं गुरुं यमं सूर्यं जलेशं च ततःपरम् ।
[2]देवर्षीन् पितरो राजन् गन्धर्वान् राजसत्तमान् ॥ २ ॥

---

१. शचीमग्नियमाद्यांश्च सदारान् दिक्पतीनथ ।
कुबेरमग्निं वायुं च वरुणं वासुकिं तथा ॥

२. देवानृषीन् पितृन् ।

**कल्याणकाण्डदीपः**

नारायणाद्रिकृतवास हरे नमस्ते
नारायणाखिलजगत्पतये नमस्ते ।
कारुण्यपूर्ण कमलापतये नमस्ते
कञ्जाक्ष रक्ष कमनीय नमो नमस्ते ॥ १ ॥

अथाध्यायत्रयीपद्यानां गूढार्थानामर्थः सम्प्रकाश्यते । अन्येषां भावमात्रम् । **स्वकुलपूजितानिति । स्वकुलम्** वैष्णवकुलम् । तत्रादौ साधारण्येन सर्वत्र व्याप्य सन्निहितान् परोक्षान् देवान् स्मरति 'आदौ' इत्यादिना 'राजसत्तमान्' इत्यन्तेन । 'राजन्' इति जनकसम्बोधनम् ।

**मूलम्**

**काशीशं विश्वनाथं च बिन्दुमाधवमेव च ।**
**विष्णुपादं प्रयागं च गोदातीरनिवासिनम् ॥ ३ ॥**

**कल्याणकाण्डदीपः**

भूमौ विशेषतः सन्निहितानपरोक्षान् देवान् स्मरति 'काशीशं' इत्यादिना 'पाहि माम्' इत्यन्तेन ।

**नारसिंहं जगन्नाथं पाण्डुरङ्गं अहोबलम् ।**
**पम्पाध्यक्षं विरूपाक्षं श्रीशैलं पुण्यकाननम् ॥ ४ ॥**

**श्रीवेङ्कटगिरीशं च काळहस्तीश्वरं हरम् ।**
**घटिकाचलसंस्थानं वृद्धाचलनिवासिनम् ॥ ५ ॥**

**वरदं सर्वलोकेशं श्रीरङ्गं श्वेतरूपिणम् ।**
**कुम्भकोणालयं कृष्णं शार्ङ्गपाणिं महीपते ॥ ६ ॥**

**सेतुं रामकृतं राजन् पद्मनाभमनन्तरम् ।**
**सुब्रह्मण्यं कुमाराख्यं मधुसूदनं[1] शङ्करम् ॥ ७ ॥**

१. शङ्करौ ।

**चन्द्रेश्वरं च गोकर्णं तथा हरिहरं नृप ।**
**गङ्गां गोदावरीं कृष्णां तुङ्गभद्रां मलापहाम् ॥ ८ ॥**

कावेरीं कपिलां क्षीरां सुवर्णमुखरीं तथा।
मूकाम्बिकां भैरवं च कालभैरवमेव च ॥ ९ ॥

कामाक्षीं च विशालाक्षीं [1]मत्स्याक्षीं मनसौख्यदाम्।
रमे कोल्हापुराध्यक्षे पाहि मां परदेशगाम् ॥ १० ॥

सस्मार भक्तिभावेन चोवाच मधुरं वचः।
शृणु [2]मत्तः सविस्तारं शपे गुल्मं [3]सपुत्रकम् ॥ ११ ॥

---

१. कमलाक्षीं वरप्रदाम्। २. मातः। ३. सुपुत्रकम्।

**कल्याणकाण्डदीपः**

शपे उपलम्भे। स्पृशामीति यावत्।

**मूलम्**

भर्तारं बदरीवासं मातरं पितरं गुरुम्।
स्वात्मानं तु शपे राज्ञि सत्यमित्यवधारय ॥ १२ ॥

सत्यं वदामि सुश्रोणि ताम्बूलं देहि मेऽङ्गने।
एलालवङ्गकर्पूरं जाती(ति)पत्रं सपूगकम्।
नागवल्लीदलैर्युक्तं देहि मे मन्दगामिनि ॥ १३ ॥

**गूढकर्तृकव्याख्यानम्**

अस्मिन् अध्याये धर्मदेवी राज्ञी सत्कृता पुरतः किं चकार ? भोजनानन्तरं धर्मदेवी स्वस्याः वैष्णवकुलपूजित-अपरोक्षदेवान् अस्मरत्। आदौ जगज्जन्मादिकारणं साक्षात् नारायणम्, ततः ईशकोटिप्रविष्ट-नित्यावियोगिनी दुःखास्पृष्टां साक्षाल्लक्ष्मीम्, विधिम्, सरस्वतीम्, उमेशम्, उमाम्, इन्द्रशचीम्, सदारान् अग्नियमादीन् दिक्पालान्, वासुकिम्, देवर्षि-पितृ-गन्धर्व-राजोत्तमान्, काशीविश्वनाथम्, बिन्दुमाधवम्, विष्णुपादम्, प्रयागम्, गोदातीरनिवासि-नारसिंहम्, जगन्नाथम्, पाण्डुरङ्गविठ्ठलम्, पम्पाधीशविरूपाक्षम्, पुण्यवनवत् श्रीशैलम्, श्रीवेङ्कटाचलनाथं श्रीवेङ्कटेशम्, कालहस्तीश्वरम्, घटिकाचलस्थ-चतुर्भुजप्राणदेवम्, वृद्धाचलनिवासि नृसिंहम्, कञ्चीवरदराजम्, श्वेतरूपि रङ्गनाथम्, कुम्भकोणस्थ-कुम्भेश्वरम्, मधुरास्थशार्ङ्गपाणि श्रीकृष्णम्, रामकृत-रामसेतुम्,

अनन्तशयनस्थ-अनन्तपद्मनाभम्, सुब्रह्मण्यम्, कुमारधारासमीपस्थ-कुमारस्वामिनम्, मधुसूदनम्, शङ्करम्, चन्द्रप्रतिष्ठित-चन्द्रेश्वरम्, गोकर्णेश्वरम्, तुङ्गभद्रातीरस्थ-हरिहरम्, गङ्गाम्, कश्यप-अत्रि-भरद्वाज-विश्वामित्र-गौतम-जमदग्नि-वसिष्ठ-इत्येतन्नामभिः प्रवहत् सप्तगोदावरीम्, कृष्णाम्, मलापहारिणीम्, वराहवज्रदंष्ट्रोद्भवां तुङ्गभद्राम्, सह्याद्रिज-कावेरीम्, मलयाचलज-कपिलाम्, नन्दिपर्वतज-क्षीराम्, सुवर्णमुखरीम्, मूकाम्बिकाम्, भैरवं कालभैरवम्, कञ्ची-कामाक्षीम्, विशालाक्षीम्, हिमाचलस्थ-कमलाक्षीम् अस्मरत्। अन्ते "कोल्लापुराध्यक्षे रमे परदेशस्थां मां रक्ष" इति सस्मार।

ततः "राज्ञि! शृणु। मदाधारभूतं गुल्मं, पुत्रं विधिम्, पतिं बदरीनरनारायणम्, मातरम्, पितरम्, गुरुम्, आत्मानम्, च प्रति शपथं कृत्वा एतेषां गौरवेण सत्यं वच्मि। शुभाङ्गने! सपूग-एला-लवङ्ग-कर्पूर-जातिपत्र-जातिफल-नागवल्लीदल-ताम्बूलं देहि" इत्याह॥

**मूलम्**

**धरण्युवाच—**

**सत्यं वद महाप्राज्ञे मम दुःखप्रशान्तये ॥ १४ ॥**

**त्रिराशिं मौक्तिकानां तु शूर्पपूर्णमिदं शुभम्।**
**इति तस्या वचः श्रुत्वा तुष्टो भागीरथीपिता ॥ १५ ॥**

**कल्याणकाण्डदीपः**

**त्रिराशीति**। त्रयाणां राशीनां समाहारः त्रिराशि।

**मूलम्**

**हस्ते दत्वा वरां यष्टिं प्रियायाः प्रीतिकारिणीम्।**
**[1]वदामि शृणु भद्राणि दुहितुस्तेऽङ्गशोषणम् ॥ १६ ॥**

१. वदेऽहं।

**कल्याणकाण्डदीपः**

"**हस्ते दत्वा**" इत्यादि सार्धं पद्यं गूढार्थम्। शपथकारणाय वरां यष्टिं मदनदण्डं हस्ते दत्वा **भद्राणि** वचनानि आ ईषद् वदे। शृणु इत्यर्थः। **अङ्गशोषणमिति**। अङ्गं शरीरं शुष्यते येन तत् तथा। ज्वरतापः तव चिन्ताकारणम्। मध्यराश्युद्दिष्ट मानसं अहं आ वदे इत्यर्थः।

मूलम्

**आगतं पुरुषेणापि [1]यस्य कस्याप्युपायतः ॥ १७ ॥**

१. मन्मथाकृतिना शुभे ।

कल्याणकाण्डदीपः

तत्किं दैवेन पौरुषेण वा इत्यत आह— **आगतमिति** । यद्यपि चेतनस्य जायमाना पीडा सर्वाऽपि दैवेनैव तथापि पुरुषयत्नोऽपि मिलित इत्याह— **पुरुषेणापीति** । स पुरुषः किं पूर्वो वा अपूर्वो वा । अपूर्वश्चेत् कथं तस्या रक्षद्वारयुवतिव्यूहभेदनासमर्थस्य तदन्तस्थमत्पुत्र्याश्च मेलनम् ? इत्यत आह— **यस्य कस्याप्युपायत इति** । किं चित्तस्तम्भन-नेत्रस्तम्भनवशीकरणादिमन्तो जना लोके न सन्ति ? तेषां मध्ये यस्य कस्य वा उपायः तस्मात् इत्यर्थः । सैनिकानां मनस्तम्भनम् । दौवारिकाणां नेत्र-स्तम्भनं युवतीनां वशीकरणमिति विवेकः ।

मूलम्

**सविस्तरं राजपुत्रि प्रवदामि निबोध तत् ॥ १८ ॥**

**[1]इतोत्तरदिने कश्चित् पुरुषं तुरगारुहम् ।**
**दृष्ट्वा मोहवशं याता कामज्वरसुपीडिता ॥ १९ ॥**

१. इतःपूर्वदिने ।

कल्याणकाण्डदीपः

दक्षिणराद्युदिष्टं भूतवृत्तान्तमाह— **सविस्तरं** इत्यादिना **पीडिता** इत्यन्तेन ।

मूलम्

**दुहिता ते भवद्राज्ञि ततोऽस्या अङ्गशोषणम् ।**
**तच्छान्त्यर्थं वरारोहे दातव्या पुरुषाय सा ॥ २० ॥**

**धरण्युवाच—**

**क्वास्ते किरातरूपी स दुहितुर्मेऽङ्गशोषकः ।**
**वद तन्नाम किं भद्रे वरं दास्ये तवेप्सितम् ॥ २१ ॥**

इति पृष्टा धर्मदेवी धरणीं वाक्यमब्रवीत् ॥ २२ ॥

कल्याणकाण्डदीपः

उत्तरराश्युद्दिष्टं तच्छान्त्याद्याह— तच्छान्त्यर्थं इत्यादिना अब्रवीत् इत्यन्तेन ।

मूलम्

धर्मदेव्युवाच—

वैकुण्ठस्थो हरिः साक्षाद्वर्तते वेङ्कटाचले ॥ २३ ॥

कल्याणकाण्डदीपः

वैकुण्ठस्थ इत्यादि पद्येन पात्रताम् ।

मूलम्

श्रीनिवासेति विख्यातो विद्यावान् धनवान् बली ।
पुत्र्या तव वरारोहे हतो यस्य हयोत्तमः ॥ २४ ॥

कल्याणकाण्डदीपः

पुत्र्या इत्यनेन अवश्यदानाकरणं अपराधः ।

मूलम्

आरामद्वारनिकटे पतितः पृच्छ [१]तत्सखीन् ।
[२]गौरवाद् राजपुत्र्यां हि क्षमितं पुरुषेण तत् ॥ २५ ॥

१. तत्सखीः । २. गौरवं राजपुत्र्यास्तु ।

कल्याणकाण्डदीपः

तत्सखीन् तद्बालसखीजनान् । गौरवात् इति क्षमाम् ।

मूलम्

सत्यं विद्धि वचो मेऽद्य दत्ता चेत् सुखमेष्यति ।
अदत्वा दुःखमाप्नोति न मे वाणी वृथा भवेत् ॥ २६ ॥

**कल्याणकाण्डदीपः**

सत्यम् इत्यादिना इष्टम् । अदत्ता इत्यादिना तदन्तेन अनिष्टम् ।

**मूलम्**

**अद्यैव दिनमात्रेण मरिष्यति न संशयः ।**
**अमङ्गलवचः श्रुत्वा किञ्चिद्दुःखसमाकुला ॥ २७॥**

**गूढकर्तृकव्याख्यानम्**

धरणी "महाप्राज्ञे ! धर्मदेवि ! सर्वदुःखनिवृत्तये सत्यं वद । सत्यं वद । तवाज्ञया स्वर्णशूर्प-पूर्णमुक्ताराशिः सिद्धः ।

धर्मदेवी ततः पद्मा-इष्टार्थ-अनुकूल-सर्वेष्टप्रद-योगदण्डं हस्ते धृत्वा तव दुहितुः ज्वरताप-निमित्त-अङ्गशोषणं यत् तत्कारणं एतत् मध्यराशि-उद्दिष्टम् । इयं मानसपीडा दैविकी । अत्र पुरुषयत्नोऽपि मिलितः । मन्मथाकारपुरुषेण तव पुत्री देहमनःपीडा । इदं स्पष्टं निबोधामि ॥ (धरणी— "पुरुषेणेति वदसि खलु । सः पूर्वो वा अपूर्वो वा । अपूर्वश्चेत् युवतिव्यूहभेदनपूर्वकं कथं प्रवेशः साध्यः ? तत्रापि व्यूहान्तर्वर्ति-पद्मासमीपे कथं प्राप्तिः ?" धर्मदेवि— "कथमिति चेत् येन केनाप्युपायेन नेत्रस्तम्भन-वशीकरणेन" इति मन्तव्यम् ।)

इतः दक्षिणराशि-उद्दिष्टं भूतवृत्तान्तं वच्मि— इतःपूर्वदिने अश्वारूढं समायातं पुरुषं दृष्ट्वा मोहिता तत्सङ्गं कर्तुं ऐच्छत् । तदलाभे तव पुत्र्याः कामज्वरः । तेन अङ्गशोषणं जातम् ।

उत्तरमुक्ताराशि-उद्दिष्टं भाविपरिहारं वच्मि— तव पुत्री-देहमनःपीडनं तस्यैव पुरुषाय तव पुत्री-समर्पणेन गच्छति ।

धरणी— "स पुरुषः पुत्रीदेहशोषणजनकः कुत्रास्ति ? तस्य नाम किम् ? तवेच्छानुसारेण तस्मै एव पुत्रीं दास्यामि ।"

धर्मदेवि— "धरणि ! वैकुण्ठस्थितः साक्षात् श्रीहरिः अद्य वेङ्कटाचलेऽस्ति । सः श्रीनिवास इति ख्यातः । स श्रीनिवासः अश्वमारुह्य वने आगतः । तस्य हयः तव पुत्र्या हतः । श्रीनिवासः धनवान्, बली । आरामद्वारनिकटे अश्वः हतः भुवि निपतितः । मदुक्तिसत्यत्वपरीक्षायै पद्मा-सखीजनं पृच्छ । एतावदपराधेनापि पद्मया श्रीनिवासः कियद्वा भवतु, राजपुत्रीति गौरवेण उदारत्वात् खलु अक्षमत । मदुक्तं न कदापि असत्यम् । यदि पद्मां श्रीनिवासाय ददासि सर्वं सुखम् । नो चेत् अतिशयितदुःखं

अनुभवति । मे वाणी वृथा न । शीघ्रं पुत्रीदानं यदि न करोषि । अद्य दिनान्ते तव दुहिता मरिष्यति । न संशयः ।

धरणी— "पुत्री मरिष्यति" इति अमङ्गलकरवचनं श्रुत्वा राज्ञ्याः किञ्चित् दुःखं जातम् ।

मूलम्

ऊचे वदसि कल्याणि दुःखहेतुर्वचो मम ।
नासत्यं वचनं देवि मयोक्तं पूर्वमेव तत् ।
भीता तद्वचनाद्राज्ञी रुदन्ती वाक्यमब्रवीत् ॥ २८ ॥

धरण्युवाच—

अयाचिता मया कन्या कथं दत्ता भविष्यति ।
इति चिन्तापरां राज्ञीं धर्मदेवी वचोऽब्रवीत् ॥ २९ ॥

धर्मदेव्युवाच—

अद्यैव घटिकान्तेऽत्र आगमिष्यति काचन ।
अबला बहुवृद्धा च धर्मार्थकुशला भुवि ॥ ३० ॥
मद्वाक्ये विश्वसन्ती त्वं राजानं परिबोधय ।
तोण्डिमानं च ते भर्तुर्भ्रातरं ससुहृद्गणम् । ॥ ३१ ॥
[1]सम्मत्य साधुमार्गं तु समाश्रय नृपप्रिये ।
सन्निधौ मम सङ्कल्पं कुरु कन्यानिमित्तकम् ॥ ३२ ॥

---

१. सम्बोध्य ।

कल्याणकाण्डदीपः

**कन्यानिमित्तकं** कन्याजीवननिमित्तकं लौकिकीं चिकित्साम् ।

मूलम्

धरण्युवाच—

येन केनाप्युपायेन जीविता स्यात् सुता मम ।
सुतां तस्यैव दास्यामि गिरिगह्वरवासिनः ॥ ३३ ॥

धर्मदेव्युवाच—

एवं चेत्ते सुता राज्ञि जीविष्यति न संशयः ।
पतिर्मे वर्तते यत्र देवि तत्र व्रजाम्यहम् ॥ ३४ ॥

[1]शपथान्तं बोधयित्वा निर्जगाम पुराद्बहिः ।
कक्षे बद्ध्वा सुतं राजन् स्वर्णशूर्पं सगुल्मकम् ।
जगामोत्तरमभ्येत्य पुलिन्दा मिथिलेश्वर ॥ ३५ ॥

१. साऽपि तां बाढमित्युक्त्वा ।

**गूढकर्तृकव्याख्यानम्**

तदा वदति— "हे मङ्गलकारि ! धर्मदेवि ! अमङ्गलवचनं कुतो वदसि ? मम अतीव दुःखं भवति ।"

धर्मदेवी— "राज्ञि ! पूर्वमेव उक्तवती न खलु किम् ? मम वचनं न कदापि असत्यं भवति" इति ।

एवं निश्चयेन उक्तवत्यां भीता रुदती धरणी वचनं वक्ति— "धर्मदेवि ! अस्मासु आगत्य कन्या दीयतामिति अप्रार्थ्य कन्या कथं देया ? ब्रूहि ।"

एवं चिन्तयन्तीं दृष्ट्वा धर्मदेवी— "अयि ! तथा वदसि वा ? तर्हि शृणु । अद्यैव दिने एकघटिकान्ते अत्र काचन अबला आगमिष्यति । सा बहुवृद्धा अस्ति । किञ्च धर्मार्थविचारकुशला च । अतः मम वचने विश्वसन्ती त्वं आकाशं एतदंशं विचारय । तव देवृ तोण्डिमानस्य पुरतः, तव भर्तुः आप्तबन्धुमित्रवर्गस्य पुरतः प्रसक्तिं कुरु । एवं च योग्यमार्गं अनुसृत्य मदुक्त्या प्रवर्तस्व ॥ अद्य प्रथममेककार्यं कुरु । कन्यानिमित्तकं कन्यादानरूपसङ्कल्पं ममाग्रे कुरु ।

धरणि— "यया कया वा रीत्या समम्, मम दुहिता जीविता चेत् समम्, पर्वतगह्वरे वसतीति वदसि खलु । तस्यैव श्रीनिवासस्य मम सुतां पद्मां दास्यामि" इत्याह ।

धर्मदेवी— "एवं चेत् राज्ञि, सुता जीविष्यति । संशयं मा कृथाः । राज्ञि ! इतः मम पतिस्थानं यास्यामि" इत्याह ॥

एवमुक्त्वा धर्मदेवी स्वधाम गन्तुं प्रस्थिता । ततः प्रस्थाने शिशुं कक्षे बद्ध्वा, शिरसि गुल्मं, मुक्तापूर्णं राज्ञीदत्तस्वर्णशूर्पं धृत्वा उत्तरां दिशं ययौ ॥

मूलम्

पुलिन्दिन्यां गतायां तु धरणी बाष्पलोचना।
पुत्रीनिकेतनं प्राप्य रुदन्ती भृशदुःखिता।
किं ते मनोगतं पुत्रि न वदिष्यसि किं च माम् ॥ ३६ ॥
न च मातृसमं मित्रं पुत्रीणां विद्यते शुभे।
किमकार्यं च कार्यं च तन्ममाचक्ष्व भामिनी ॥ ३७ ॥
पूरयामि मनस्थं ते वृथा किं देहशोषणम्।
अभाग्याऽहं महाराज्ञि विषपानं करोमि च ॥ ३८ ॥

कल्याणकाण्डदीपः

विषपानमिति। स्वर्णपात्रे शुद्धजलमादाय।

गूढकर्तृकव्याख्यानम्

पुलिन्दिन्यां गतायां धरणी नेत्रयोः बाष्पं मुञ्चन्ती पद्मासद्म प्राप्य, पुत्रीं वदति। धरणी— "पुत्रि, पद्मे! किं ते मनसि वर्तते? किं मां न वदिष्यसि? मङ्गलकारि! लोके पुत्रीणां मातृसमं आप्तमित्रं किमपि नेति वदन्ति। किञ्च तव मनोगतं कार्यं वा अकार्यं वा? ममाग्रे ब्रूहि। सङ्कोचो माऽस्तु। तव मनोरथं पूरयामि। एवं किमपि अनिवेद्य वृथा देहशोषणेन किम्? अहं अत्यन्तनिर्भाग्या। अहं तु राजपत्नी। किमनेन? शृणु। तव मनोगतं यदि न वदेः, विषं पीत्वा प्राणान् त्यजेयम्।

मूलम्

[1]साऽतिदुःखपरा दीना रुदती दुःखिताऽभवत्।
दुःखितां जननीं दृष्ट्वा मन्दमाह मनोगतम् ॥ ३९ ॥

१. सा च।

पद्मावत्युवाच—

किं वदिष्यामि हे मातः सूतिका[1]सुखमागतम्।
अथवा पुत्रलाभं वा प्रवदामि [2]प्रजापते ॥ ४० ॥

१. दुःख-। २. निगूढजम्।

**कल्याणकाण्डदीपः**

**किं वदिष्यामीति** । गूढार्थमिदं पद्यम् ॥ **सूतिकासुखमागतं** = हे मातः आगतं सूतिकासुखम् । सूतिरेव सूतिका । प्रसवः तस्याः सूयत इति सूता । 'षूञ् प्राणिप्रसवे', 'अकर्मकाद्रत्यर्थे'त्यादिना कर्तरि क्तः । सूतैव सूतिका । तस्याङ्गनाया वा यत्सुखं तत् तथा । "प्रसूतिः प्रसवः" इत्यमरः । प्रसूता च प्रसूतिकेति च ।

ननु सूतेः वेदनाङ्कत्वात् प्रसूतौ चोपचारस्य चातिकटुतीक्ष्णौषधभक्षणतृट्सहनाङ्गसन्तापनादिदुःखस्वरूपत्वात् कथं सुखस्वरूपत्वम् ? इति चेन्न । कर्णनासवेधवदिष्टोत्पत्तिनान्तरीयकदुःखादिकदुःखाननुबन्धीष्टसाधनत्वेन सुखरूपत्वात् । **अथवा पुत्रलाभं वा** पुत्रप्राप्तिलक्षणं सुखकारणं वा । एषां मध्ये किं सुखं वदिष्यामि इत्यर्थः ।

अयं भावः— हे अम्ब ! त्वं मनोगतं किमपि न वदिष्यसि । कार्यमेव वा भवतु उत अकार्यमेव वा मां आचक्ष्व । न च मातृसमं मित्रमित्येवं पृच्छसि । तवात्र वक्तव्यं किमस्ति ? प्राप्तं अप्राप्तं सुखमितरद्वा जन्यं जनन्यै निवेदनीयम् । तत्रेतरस्य निजानुभावेनानेनोक्तत्वाद्राजपुत्रीत्वादुक्त्यनवकाशः । सुखकारणं चास्मिन्वयसि मज्जनाभ्यञ्जनकेशधूपनप्रसादनकबरीकरणाङ्गरागलेपनयथेष्टदुकूलपरिवर्तनकुचोळक्षेपणाभरणधारणतिलकगन्धपुष्पाञ्जन-आसनभोजनपानीयपानताम्बूलबालविनोदान्दोलनशयनादि मामकीनबन्धुबन्धुतद्बन्धुबन्धुपरिजनवधूनामपि मत्कृपाकटाक्षमात्रेणानुक्तिसिद्धं मम तु किं वक्तव्यमस्ति ? तथापि कथमस्ति सूतिकासुखं पुत्रलाभश्चेति । अत्र मैत्र्यात् सूतिसुखं पुत्र्याः सुखदुःखरूपमपि मातुः सुखं तत् । मातुरीषद्दुःखासहिष्णुतया कारुण्ये सूतिकासुखम् । अतिकारुण्ये पुत्रसुखं इति क्रमः ।

अत्र 'किं वदिष्यामि' इत्यनेन मत्परिजनजननीजन्यो विवाहिताः सत्यः पुत्रानप्यलभन् । मम तु तव दुहिता भूत्वा विद्यमानायाः तारुण्येऽपि विवाहस्य प्रसक्तिरेव नास्ति । अस्य दुर्दैवस्य किं वदिष्यामीति कोपः फलितः ।

**मूलम्**

**पद्मावतीकथितभगवल्लक्षणतद्भक्तलक्षणानि**

**नाकृतं तादृशं किञ्चिज्ज्ञातं क्वापि तु मे वरे ।**<br>
**काङ्क्षां सम्प्रति तामद्य वक्तुं शक्नोमि न स्वयम् ।**<br>
**तथापि तव वक्ष्यामि मातृत्वाच्छृणु भामिनि ॥ ४१ ॥**

**कल्याणकाण्डदीपः**

अथ धरणी— महास्वामिना अनुजोपनयनात् पूर्वं यावद्बलं यत्ने कृतेऽपि असाध्यं जातम्। त्वं च न कन्यासामान्यम्। परन्तु "पुत्रीयं तव पुण्यदा बहुकीर्तिफलप्रदा" इति अवतारवाणीबलमालम्ब्य तूष्णीमास्महे। तद्बलादुचितवरलाभे ईषन्मार्गसूचनमात्रे जाते यत्नः क्रियते। कुतस्तूष्णीमस्माकं कुप्यसि ? किं करोमि सुत इत्याह ॥ अथ पद्मा— यद्यपि उक्तार्थे वचनविलम्बे अन्यपूर्वकत्वापवाद उत्पद्यते। बहुभिर्दृष्टत्वात्। उक्ते अविलम्बेन कार्ये जाते गुणः। अन्यथा स एव दोषः। अनुक्त्वा न निर्वाहः। प्रयत्नानुत्पत्तेः। किञ्च "मत्या वध्वो हि पितरं मातरं वा विवाहय" इति वक्तारो न दृश्यन्ते। तस्मान्न वक्तव्यम्। तथाऽपि मातृत्वात् विश्रम्भेण लज्जामानौ विहाय वच्मीत्याह **तथापीति**।

**गूढकर्तृकव्याख्यानम्**

एवं ब्रुवतीं मातरं दृष्ट्वा पद्मा अतिदुःखिता अश्रु मुञ्चन्ती दुःखितमातरं मन्दं मन्दं स मनोगतं वक्तुमारभते। पद्मा— अम्ब, मातः ! किं वदामि ? मम प्रसववेदना आसन्नेति वा। प्रसवानन्तरं कटु-तीक्ष्ण-औषधं सेव्यं कथम् ? इति वा ? कठिणपथ्यं कार्यं वा ? इति। हृद् कथं इति वा। अङ्गं सन्तपनीयं कथमिति वा ? पुत्रलक्षणं वा सुखकारणं वा ? एतेषु किं ? इति वदामि। अम्ब ! इदमेकं गोप्यमिति किं वदामि ? किमपि अकार्यं जातं इति वा ? परन्तु अम्ब ! त्वं तदा किं अवदः ? तव मनोगतं कार्यं अकार्यं वा पूरयामि, ब्रूहि। मातृसमं मित्रं नेति। तव अत्र किमस्ति वक्तव्यं सुखनिमित्तम् ? सुखकारणं अस्मिन् वयसि मज्जन-अभ्यञ्जन-केशधूपन-प्रसाधन-कवरीकरण-अङ्गराग-यथेष्टदुकूलपरिवर्तन-कुचोलक्षेपण-आभरणधारण-तिलक-गन्ध-पुष्प-अञ्जन-आसन-भोजन-पान-ताम्बूल-विनोद-आन्दोलन-शयनादि मामकीन-बन्धुपरिजन-बन्धूनामपि मत्कृपाकटाक्षमात्रेण अनुक्तिसिद्धम्। मम तु किं वक्तव्यमस्ति ? मत्परिजनजननीजन्यः विवाहिताः पुत्रानपि लेभिरे। मम तु तव दुहिता भूत्वा विद्यमानायाः तारुण्येऽपि विवाहस्य प्रसक्तिरेव नास्ति। अस्य दुर्दैवस्य किं वदिष्यामि ? धरणी— महास्वामिना अनुजोपनयनात्पूर्वं यावद्बलं यत्ने कृतेऽपि असाध्यं जातम्। त्वं च न कन्यासामान्यम्। परन्तु "पुत्रीयं तव बहुपुण्यकीर्तिप्रदा" इति गगनवाणीमालम्ब्य तूष्णी-मास्महे। तद्बलात् उचितवरलाभे ईषन्मार्गसूचनमात्रे जाते यत्नः क्रियते। कुतः अस्माकं कुप्यसि ? सुते ! किं करोमि ? पद्मा— अकृत्यं तादृशं न किमपि जातम्। काङ्क्षा या काऽपि मनसि स्थिता चेत्, तां कथं अन्यस्य अग्रे वक्तुं शक्नोमि ? यद्यपि उक्तार्थे वचनविलम्बे अन्यपूर्वकत्वात् अपवाद उत्पद्यते। बहुभिः दृष्टत्वात्। उक्ते अविलम्बेन कार्ये जाते गुणः। अन्यथा स एव दोषः। अनुक्त्वा

न निर्वाहः । प्रयत्नानुत्पत्तेः । किञ्च ह्रीमत्यः वध्वो हि पितरं मातरं वाऽहमिति वक्त्र्यः न दृश्यते । तस्मात् न वक्तव्यम् ।

**मूलम्**

**त्वयाऽऽज्ञप्ता [1]पुरा मातः पुष्पारामं सखीयुता ।**
**तत्र कश्चित् पुमान् [2]यातः पुराणपुरुषोत्तमः ॥ ४२ ॥**

**मातः स्मरामि तद्वक्त्रं पुण्डरीकनिभेक्षणम् ।**
**तं विना न हि जीवामि सत्यमित्यवधारय ॥ ४३ ॥**

**चरितं तस्य कृष्णस्य जानन्ति विबुधादयः ।**
**पापालयाश्च मनुजाः प्रभावं न हरेः परम् ।**
**सर्वं सर्वोत्तमः साक्षात् स एव पुरुषोत्तमः ॥ ४४ ॥**

१. [illegible] । २. प्राप्तः ।

**कल्याणकाण्डदीपः**

**तत्र कश्चित् पुमान् यातः** इति । किं तेन सामान्यपुंदर्शनेन इत्यत आह— **पुराणपुरुषोत्तम इति** । किं वृद्धः ? [illegible] आह— **मातरिति** । **पुण्डरीकनिभेक्षणं** पद्मदळपत्रलोचनम् । मात नूतन-यौवनेऽपि पु[illegible] यावत् । **सर्वोत्तमः** उक्तोऽर्थः । **पुरुषोत्तमः** । समतीतक्षराक्षरः ।

**गूढकर्तृकव्याख्यानम्**

तथापि मातृत्वा[illegible] लज्जमानौ विहाय वच्मि । एतावत्प्रार्थनेनापि नाभाषतेति मा कुप्य । "अम्ब ! [illegible] आज्ञप्ता सखीयुताऽहं पुष्पारामं गता । तत्र कश्चित् पुरुष आगतः । सः पुराणपुरुषोत्तम , [illegible] विद्यमानः, सर्वोत्तमः, नवयौवनः, समतीतक्षराक्षरः, पुण्डरीकेक्षणः । तादृशस्य दिव्य[illegible] न विस्मर्तव्यम् । सदा स्मरामि । "स्मर्तव्यः सततं विष्णुः विस्मर्तव्यो न जातुचित्" । तं विना न हि जीवामि । सत्यं स एव सर्वोत्तमः । सः कथं लक्ष्यः ?

**मूलम्**

**दक्षिणं पाणिमाश्रित्य राजते चक्रमुत्तमम् ।**
**[1]तथेतरे शङ्खवरो राजते [2]राजवत् सदा ॥ ४५ ॥**

यत्कण्ठे कौस्तुभं रत्नं कर्णे मकरकुण्डले ।
यस्य चक्रप्रभावेण दग्धा वाराणसी पुरा ॥ ४६ ॥
यस्य शार्ङ्गध्वनिं श्रुत्वा विद्रवन्त्यसुरादयः ।
तद्भक्तलक्षणं वक्ष्ये शृणु मातः सविस्तरम् ॥ ४७ ॥

१. तथोत्तरे । २. हंसराजवत् ।

**कल्याणकाण्डदीपः**

एतत् केन ज्ञायत इत्यतः तल्लक्षणादित्याह— दक्षिणमि[illegible] इति । सूर्यवत् इति शेषः । राजवदिति । राजवत् चन्द्रवत् । "राजा नृपे लताभेदे [illegible] क्षत्रियचन्द्रयोः" इति रत्नमाला । भक्तलक्षणादपि स पुरुषोत्तम इति जानामीत्यतः तद्भक्त[illegible]ह— तद्भक्तेति ।

**मूलम्**

वेदशास्त्रपरा ये च ये [1]सद्धर्मव्रते पराः ।
वेदोक्तं कर्म कुर्वन्ति नोऽसूयन्ति परोन्नति[illegible] ॥ ४८ ॥

१. च धर्मव्रते ।

परनिन्दां न कुर्वन्ति परस्वं न हरन्ति ये ।
न स्मरन्ति न पश्यन्ति न स्पृशन्ति कदाच[illegible] ॥ ४९ ॥
परदारान् सुरूपांश्च ये च तान् विद्धि वैष्ण[illegible] ।
शङ्खचक्राङ्किता ये च ऊर्ध्वपुण्ड्रधराश्च ये ।
नासत्यं ब्रुवते ये तु पितृमातृव्रते स्थिताः ॥ ५० ॥
तद्भक्तलक्षणं ह्येतत् तं विना को नु जीवति ।
[1]नन्दनावचनं श्रुत्वा सानन्दा वाक्यमब्रवीत् ॥ ५१ ॥

१. तनयावचनं ।

**गूढकर्तृकव्याख्यानम्**

दक्षिणपाणौ सूर्यसदृशसुदर्शनम्, वामे पाञ्चजन्यः, हंस इव [illegible] राजते शङ्खः । कण्ठे कौस्तुभरत्नम्, कर्णयोः मकरकुण्डले, सुदर्शनप्रभावेन वाराणसी दग्धा [illegible] शार्ङ्गध्वनिना असुरादयः

विद्रवन्ति दिशो दश । किञ्च तद्भक्ताः कथम् ? अपौरुषेयवेदवेदाङ्गादिशास्त्रज्ञाः वेदविहितकर्मानुष्ठानपराः, निन्दितकर्म न कुर्वन्ति । शङ्खचक्रगदापद्माङ्कितगात्राः ललाटे ऊर्ध्वपुण्ड्रधारिणः, ''पृथ्वीमण्डलमध्यस्थाः पूर्णबोधमतानुगाः । वैष्णवा विष्णुहृदयास्तान् नमस्ये गुरून् मम'' इत्युक्तेः । ईदृशान् विष्णुभक्तान् विद्धि । तेषां शीलं किम् ? यावज्जीवं मातापितृसेवानिरताः, असत्यं कदापि अभाषिणः, एतत् विष्णुभक्तलक्षणम् । एतादृशपुरुषोत्तमं विना को नु जीवति ?

**मूलम्**

**धरण्युवाच—**

**सत्यं वद वरारोहे भ्रमो वा ज्वरकारणम् ॥ ५२ ॥**

**कल्याणकाण्डदीपः**

सदागमैकविज्ञेयो योगिध्येयो नारायणः कथमनया मानुष्या कलौ दृष्ट इत्याश्चर्येण पृच्छति **सत्यमिति** । **ज्वरकारणं भ्रमो वा** ? ज्वरस्य कारणं बीजं भ्रमः चित्तमोहः । अथवा क्रियाविशेषणतया ज्वरकलावलिका वा ? सावधाना सत्यं वद ।

**मूलम्**

**पद्मावत्युवाच—**

**सत्यं वदामि हे मातर्दृष्ट एव महाप्रभुः ।**
**तद्दर्शनधिया मेऽद्य जायते देहशोषणम् ॥ ५३ ॥**

**शतानन्द उवाच—**

**सान्त्वयित्वा सुतां भद्रां [1]भद्राभवनमभ्यगात् ।**
**पाकार्थं परमानन्दभरिता भाग्यसम्पदा ॥ ५४ ॥**

१. भर्तुर्भवनमभ्यगात् ।

**पुत्र्यङ्गशोषसङ्क्षुब्धं कृच्छ्रसन्तापसंयुतम् ।**
**अवदत् स्वपतिं प्राप्य पुत्रीकायविशोषणे ॥ ५५ ॥**

**कारणं धर्मदेव्युक्तमथ तच्छान्तिकारणम् ।**
**सर्वं सम्बोधयामास पुत्र्या हृद्गतमादरात् ॥ ५६ ॥**

**कल्याणकाण्डदीपः**

किञ्च हे सुते ! बालिकानां पूर्णचन्द्रदर्शनवत् दृग्निन किं प्रकृतानुपयुक्तेनेत्यत आह— **सत्यमिति**। हे मातः ! सावधाना वच्मि। उक्तं सत्यम्। न सम्मोहो नापि कलावलिका। महाप्रभुरपि निगमैकगोचरोऽपि स्वयमेव प्रसन्नो मत्पाणिग्रहयालुः मया दृष्टः न चन्द्र इव। मयैव कुलं व्यपदिशन्त्या विलम्बः प्रार्थितः। सुकृताय कामाय च विधिवद्दत्ता चेत्, सुखम्। अन्यथा रुक्मिणीमिव मामनु-कूलामपहरत्येवेत्याह।

अथ धरणी इत्थमालोचयामास— नेयं मानुषी। रूपमात्रं तु मानुषम्। अयोनिजा दैवचोदना-दागता। आकाशवाण्या पालिता। धर्मदेवीवचनं बालसखीवचनं च समाख्यानम्। तस्मान्नैतच्चित्र-मिति। एवं निश्चित्यावतरत् ज्वरां, मज्जनं कारयित्वा कुङ्कुमादिभिरलङ्कृत्य भद्रां सुतां स्वयमपि तथा भद्रा भूत्वा, अयि दयिता, आलोचनं मा कुरु। तव मनोरथं पूरयित्वैव राजादीनां राज्यपरिपालनादौ प्रवृत्तिः नान्यथा इति सान्त्वयित्वा "निरन्ननीतं सार्धदिनं जातम्। किं भोक्ष्यसे ?" इत्याह। "मार्जनान्ते भोक्ष्ये" इति सुतयोक्ते भाग्यसम्पदा सार्धदिनमस्तमितपुण्यसूर्योदयेन परमानन्दभरिता सति पाकार्थं महानसभवनमभ्यगात्।

**मूलम्**

**धरणीशं प्रति पद्मावतीसखीभिः सह बकुलागमनम्**

**एतस्मिन्नेव समये कन्याश्च बकुलान्विताः।**
**अभिषिच्य जगन्नाथं शङ्करं ब्राह्मणैः सह ॥ ५७॥**

**सम्भारान् शिरसा धृत्वा ब्राह्मणैः [1]सपुरोहिताः।**
**राजधानीं समासाद्य अन्तर्भवनमभ्ययुः ॥ ५८॥**

१. सपुरोहितैः।

**कल्याणकाण्डदीपः**

**एतस्मिन्निति**। शङ्करमभिषिच्य राजगृहं प्रति गच्छमानैर्ब्राह्मणैः सह प्रसन्नाभयवरप्रसाद-मालागन्धतीर्थादिसम्भारान् शिरसा धृत्वा समाराधनभोजनायाहूतैर्ब्राह्मणैः सह राजधानीं समासाद्य सपुरोहिताः कन्योपवेशनशालायां तां चित्रासन उपविश्य अन्तर्भवनमाययुः। ब्राह्मणाः भोजनशाला-माराधकराजदाराणामसूर्यंपश्यत्वात् पुरन्ध्र्योऽन्तर्भवनं पुरोहितसाहित्यादिति भावः।

**मूलम्**

**समागतान् द्विजान् सर्वान् सम्पूज्य विधिपूर्वकम्।**
**गन्धपुष्पाक्षताद्यैश्च वस्त्रालङ्कार[1]दक्षिणैः।**
**विप्राशिषोक्तमन्त्रैश्च सुतां सम्मार्जयत् तदा ॥ ५९ ॥**

१. भूषणैः।

**कल्याणकाण्डदीपः**

**समागतानिति । विधिपूर्वकं** पाद्यार्घ्यादिपूर्वकं गन्धपुष्पाक्षताद्यैः भोजनमध्यैः **वस्त्रालङ्कार-दक्षिणैः** दक्षिणान्तैरुपचारैः सम्पूज्य इत्यन्वयः ।

**गूढकर्तृकव्याख्यानम्**

एवं पद्माभिप्रायं श्रुत्वा धरण्याः आनन्दो जातः । तदा धरणिः प्रत्यक्षमपि विषयं प्रमाणयितुं पृच्छति— "पद्मे ! किमेवं वदसि ? तव किमपि चित्तभ्रमणं उत ज्वरकारणम् ? इदानीं दृष्टं चेत् कलिकालः प्राप्तः । "सदागमैकविज्ञेयः योगिध्येयो नारायणः" इति वदन्ति । अद्य साक्षात् परमात्मा कथं दृश्यते ? कथमनया मानुष्या कलौ दृष्टः ? मम तु आश्चर्यम् । अद्य सत्यं वद ।

पद्मा— "अम्ब ! शृणु । शिशवः पूर्णचन्द्रं गगने दृष्ट्वा नन्दन्ति । "चन्द्रमानीय देहि" इति हठेन याचन्ते । चन्द्रः दुर्ग्राह्यो न वेति न जानन्ति । तथा दुर्लभवस्तु आनीय देहीति याचते । कथं देयम् ? अस्याः कालो न गच्छतीति दृश्यते । बुद्धिर्न, इतोऽपि बालिका इति माऽऽक्षिप । शृणु । सत्यं वदामि । मम मोहो न । (नापि कलावालिका) सः पुरुषोत्तमः महाप्रभुरपि निःशेषागमैकगोचरोऽपि स्वयमेव प्रसन्नः । मत्पाणिग्रहयालुः मया दृष्टः । मयैव कुलादिकं व्यपदिशन्त्या विलम्बः प्राप्तः । प्रकृते तद्दर्शनबुद्ध्या अद्य मे देहशोषणम् । सुकृताय कामाय च विधिवत् दत्ता चेत् सुखम् । अन्यथा रुक्मिणीं कृष्णः इव मामनुकूलां अपहरत्येव, न संशयः । धरणी, पद्मोक्तिं श्रुत्वा मनसि "इयं पद्मा मानुषी न, अयोनिजा, दैवचोदनादागता, गगनवाण्या पालिता । धर्मदेवीवचनं बालसखीवचनं च समाख्यातम् । तस्मात् नैतद् चित्रम्" इति निश्चित्य मनसि नन्दयन्ती, तदा "पद्मे ! तव इष्टं साधयामि । मा चिन्तय" इति सान्त्वयित्वा ज्वरे शान्ते तस्याः मज्जनं कारयित्वा कुङ्कुमादिभिरलङ्कृत्य भद्रां सुतां ध्यायन्ती पतिभवनमगात् ॥

पतिं वक्ति— महाप्रभो ! इति सम्बोध्य पद्माज्वराङ्गशोषणकारणं, पद्मावचनं स्वयमुक्तं, आत्मानं प्रति धर्मदेवीवचनं, पद्मामनःपीडापरिहायोपायं च, अन्ते मुख्यतः पद्मामनोगतं आदरेणावदत् । तदैव

अगस्त्यालयगतकन्यकाः बकुलया सह तत्र आगताः । अगस्त्येश्वर-अभिषेकपूजादिकं समाप्य विप्रपुरोहितसहितं पूजानिवेदित-देवप्रसादादिसम्भारान् शिरसि कृत्वा, अन्तःपुरं समायाताः । ततः आकाशः सम्प्राप्तविप्रान् सादरं गन्धपुष्पाक्षतः, वस्त्रालङ्कारदक्षिणैः पूजयामास । तदा विप्राः वेदमन्त्रोक्तैः पद्मां आशीश्चक्रुः । तद्दत्ताभिषेकतीर्थोदकैः पद्मां प्रोक्षितवान् । विप्राज्ञया भोजनं चकार ।

**मूलम्**

**स्वयं भुक्त्वा महाराजो ब्राह्मणानामथाज्ञया ।**
**साऽपि भुक्त्वा महाराजधरणी बहिरागता ॥ ६० ॥**

**ददर्श तां महाराज बकुलां नवरूपिणीम् ।**
**धर्मदेवीवचः [1]श्रुत्वा तत्समीपमुपागता ॥ ६१ ॥**

१. स्मृत्वा ।

**कल्याणकाण्डदीपः**

**स्वयं भुक्त्वेति** । पुत्रीं भोजयित्वेति पूर्वशेषः । बहिर्गत इति पश्चात् । एतन्मध्ये काचन धरणीसखी, हे देवाङ्गने ! यद्यसि कल्याणार्थं गिरेरागता तर्हि धर्मदेवीवचनादद्यैषा जीवेत् श्रीनिवासायैव दास्यामीति प्रतिश्रुतम् । तस्मात् त्वं धैर्येण पृच्छेत्युवाच **साऽपीति** । महाराजस्य धरणी महाराज-धरणी । **वचः श्रुत्वेति** । श्रुत्वा या स्मृतिस्तयेति शेषः ।

**मूलम्**

**धरण्युवाच—**

**[1]पप्रच्छ कन्यां कारुण्यां बकुलागमनं मुने ।**
**[2]सा का कस्मादुपायाता पूज्यैषा प्रतिभाति मे ।**
**तदाज्ञाकारिका काचिद्वाक्यमाह महीपते ॥ ६२ ॥**

१. पृच्छतां कन्यका अस्याः किमागमनकारणम् । २. कैषा ।

**कन्यकोवाच—**

**वासः पन्नगशैलेन्द्रे स्वामी मे वेङ्कटेश्वरः ।**
**कार्यमस्तीति कथितं तया बकुलमालया ॥ ६३ ॥**

**मूलम्**

**समागतान् द्विजान् सर्वान् सम्पूज्य विधिपूर्वकम् ।**
**गन्धपुष्पाक्षताद्यैश्च वस्त्रालङ्कार[1]दक्षिणैः ।**
**विप्राशिषोक्तमन्त्रैश्च सुतां सम्मार्जयत् तदा ॥ ५९ ॥**

१. भूषणैः ।

**कल्याणकाण्डदीपः**

**समागतानिति । विधिपूर्वकं** पाद्यार्घ्यादिपूर्वकं गन्धपुष्पाक्षताद्यैः भोजनमध्यैः **वस्त्रालङ्कार-दक्षिणैः** दक्षिणान्तैरुपचारैः सम्पूज्य इत्यन्वयः ।

**गूढकर्तृकव्याख्यानम्**

एवं पद्माभिप्रायं श्रुत्वा धरण्याः आनन्दो जातः । तदा धरणिः प्रत्यक्षमपि विषयं प्रमाणयितुं पृच्छति— "पद्मे ! किमेवं वदसि ? तव किमपि चित्तभ्रमणं उत ज्वरकारणम् ? इदानीं दृष्टं चेत् कलिकालः प्राप्तः । "सदागमैकविज्ञेयः योगिध्येयो नारायणः" इति वदन्ति । अद्य साक्षात् परमात्मा कथं दृश्यते ? कथमनया मानुष्या कलौ दृष्टः ? मम तु आश्चर्यम् । अद्य सत्यं वद ।

पद्मा— "अम्ब ! शृणु । शिशवः पूर्णचन्द्रं गगने दृष्ट्वा नन्दन्ति । "चन्द्रमानीय देहि" इति हठेन याचन्ते । चन्द्रः दुर्ग्राह्यो न वेति न जानन्ति । तथा दुर्लभवस्तु आनीय देहीति याचते । कथं देयम् ? अस्याः कालो न गच्छतीति दृश्यते । बुद्धिर्न, इतोऽपि बालिका इति माऽऽक्षिप । शृणु । सत्यं वदामि । मम मोहो न । (नापि कलावालिका) सः पुरुषोत्तमः महाप्रभुरपि निःशेषागमैकगोचरोऽपि स्वयमेव प्रसन्नः । मत्पाणिग्रहयालुः मया दृष्टः । मयैव कुलादिकं व्यपदिशन्त्या विलम्बः प्राप्तः । प्रकृते तद्दर्शनबुद्ध्या अद्य मे देहशोषणम् । सुकृताय कामाय च विधिवत् दत्ता चेत् सुखम् । अन्यथा रुक्मिणीं कृष्णः इव मामनुकूलां अपहरत्येव, न संशयः । धरणी, पद्मोक्तिं श्रुत्वा मनसि "इयं पद्मा मानुषी न, अयोनिजा, दैवचोदनादागता, गगनवाण्या पालिता । धर्मदेवीवचनं बालसखीवचनं च समाख्यातम् । तस्मात् नैतद् चित्रम्" इति निश्चित्य मनसि नन्दयन्ती, तदा "पद्मे ! तव इष्टं साधयामि । मा चिन्तय" इति सान्त्वयित्वा ज्वरे शान्ते तस्याः मज्जनं कारयित्वा कुङ्कुमादिभिरलङ्कृत्य भद्रां सुतां ध्यायन्ती पतिभवनमगात् ॥

पतिं वक्ति— महाप्रभो ! इति स[illegible] पद्माज्वराङ्गशोषणकारणं, पद्मावचनं स्वयमुक्तं, आत्मानं प्रति धर्मदेवीवचनं, पद्मामनःपीडापरिहारोपायं च, अन्ते मुख्यतः पद्मामनोगतं आदरेणावदत् । तदैव

अगस्त्यालयगतकन्यकाः बकुलया सह तत्र आगताः । अगस्त्येश्वर-अभिषेकपूजादिकं समाप्य विप्रपुरोहितसहितं पूजानिवेदित-देवप्रसादादिसम्भारान् शिरसि कृत्वा, अन्तःपुरं समायाताः । ततः आकाशः सम्प्राप्तविप्रान् सादरं गन्धपुष्पाक्षतः, वस्त्रालङ्कारदक्षिणैः पूजयामास । तदा विप्राः वेदमन्त्रोक्तैः पद्मां आशीश्चक्रुः । तद्दत्ताभिषेकतीर्थोदकैः पद्मां प्रोक्षितवान् । विप्राज्ञया भोजनं चकार ।

मूलम्

स्वयं भुक्त्वा महाराजो ब्राह्मणानामथाज्ञया ।
साऽपि भुक्त्वा महाराजधरणी बहिरागता ॥ ६० ॥

ददर्श तां महाराज बकुलां नवरूपिणीम् ।
धर्मदेवीवचः [1]श्रुत्वा तत्समीपमुपागता ॥ ६१ ॥

१. स्मृत्वा ।

कल्याणकाण्डदीपः

स्वयं भुक्त्वेति । पुत्रीं भोजयित्वेति पूर्वशेषः । बहिर्गत इति पश्चात् । एतन्मध्ये काचन धरणीसखी, हे देवाङ्गने ! यद्यसि कल्याणार्थं गिरेरागता तर्हि धर्मदेवीवचनादद्यैषा जीवेत् श्रीनिवासायैव दास्यामीति प्रतिश्रुतम् । तस्मात् त्वं धैर्येण पृच्छेत्युवाच साऽपीति । महाराजस्य धरणी महाराज-धरणी । वचः श्रुत्वेति । श्रुत्वा या स्मृतिस्तयेति शेषः ।

मूलम्

धरण्युवाच—

[1]पप्रच्छ कन्यां कारुण्यां बकुलागमनं मुने ।
[2]सा का कस्मादुपायाता पूज्यैषा प्रतिभाति मे ।
तदाज्ञाकारिका काचिद्वाक्यमाह महीपते ॥ ६२ ॥

१. पृच्छतां कन्यका अस्याः किमागमनकारणम् । २. कैषा ।

कन्यकोवाच—

वासः पन्नगशैलेन्द्रे स्वामी मे वेङ्कटेश्वरः ।
कार्यमस्तीति कथितं तया बकुलमालया ॥ ६३ ॥

**वयं प्राप्ता महाभागे त्वत्समीपं महामते।**
**पृच्छतां [1]चापि वृत्तान्तं तदागमनजं सखे ॥ ६४ ॥**

१. तां च।

### कल्याणकाण्डदीपः

**कन्यां** स्त्रीबालाम्। एवं सर्वत्र। **कारुण्यां** अतिशयेन स्वदयापात्राम्। अतिशायिनेऽच्। **मुने** इति शौनकसम्बोधनम्। **कार्यमस्तीति**। तवैव समीप इति शेषः। **त्वत्समीपमिति**। साऽप्यस्माभिः सहेति शेषः। हे सखे! धरणी! तदागमनजं वृत्तान्तं च पृच्छताम्।

### मूलम्

**एवमुक्ताऽथ कल्याणी प्रतिनन्द्याथ भारतीम् ॥ ६५ ॥**

### गूढकर्तृकव्याख्यानम्

धरणी अपि भुक्त्वा बहिरागता पश्यति। नवीना अपरिचिता दृश्यते। तद्दर्शनात् धर्मदेवीवचनं स्मृतम्। क्षणे बकुलां समागता धरणी— "भो कन्यकाः! आगतेयं का? अस्याः नाम किम्? कुत आयाता? विचारयत। ईक्षणे पूज्येति भाति" इत्यादिदेश। राज्ञीवचनं श्रुत्वा कन्यकानां एकतमा आह। कन्यका— "महाराज्ञि! श्रूयताम्। इयं आगता एवं उक्तवती। मम वासो वेङ्कटाचले। श्रीनिवासदासी बकुला। बकुलमालिकेति मां वदन्ति। महाराज्ञिसमीपे मम कार्यम् अस्ति इति वदति। तां तव समीपे आनीतवत्यः। इतः सा कुतोऽत्र आयाता" इति विचारयत इत्याह।

### मूलम्

**धरण्युवाच—**

**तिष्ठ भद्रे वरारोहे रत्नपीठे सुनिर्मले।**
**[1]संस्थिताऽऽनन्दभरिता बकुला भाग्यमात्मनः ॥ ६६ ॥**

**मेने कृतार्थ[2]मधुना साफल्यं जन्मनो नृप।**
**[3]वाचमर्थान्वितामाह धरणी देवमातरम् ॥ ६७ ॥**

१. इत्युक्ता सा तया [illegible] रत्नपीठे निवेशिता।
२. मात्मानं। ३. उवाच नृपभार्याऽथ।

धरण्युवाच—

स्वागतं ते महाभागे मम पुण्यस्य कारणम्।
मन्ये कृतार्थमात्मानं सफलं साधुसङ्गमात्।
निर्देशितव्यं यत् कर्म तदद्य विदधीमहि ॥ ६८ ॥

किमर्थमागमो मातः किं कार्यं वदतामिति।
बभाषे बकुला भार्यां राज्ञस्तस्य महात्मनः ॥ ६९ ॥

**कल्याणकाण्डदीपः**

**एवमुक्त्वेति** । **कल्याणी** धरणी । **भाग्यमिति** । राजपत्न्या सन्मानं भाग्यं सुकृतफलम् । **अर्थान्वितां** परमार्थाम् । **कृतार्थं** सकलपुरुषार्थजातं **निर्देशितव्यं** आज्ञापनीयम् । **विदधीमहि** कुर्वीमहि ।

**गूढकर्तृकव्याख्यानम्**

ततः धरणी कन्यकावचनं पुरस्कृत्य बकुलामाह— "मङ्गलकरि ! आगम्यताम् । दयां कुरु । अस्मिन् रत्नासने उपविश । ततः बकुला उपविष्टा । ततः धरणी आत्मानं कृतार्थां जन्म सफलं मेने । देवमातरं यशोदारूपां बकुलामाह धरणी— "भाग्यवति ! ते सुखागमनम् । ते आगमनं मम पुण्योदयं सूचयति । दर्शनादेव साधवः । लोके साधुसज्जनाः स्वदर्शनदानेन लोकत्रयं पुनन्ति । हे मातः ! तव आगमनं किं प्रयोजनम् ? निर्देशितं चेत् कर्तुं सिद्धा ।

**मूलम्**

**धरणीं प्रति बकुलोक्तस्वागमनकारणम्**

बकुलोवाच—

कन्यापेक्षा मुख्यकार्यं पुनः कार्यशतेन किम्।
मुख्यवाक्यं ततः श्रुत्वा वरारोहामथाब्रवीत् ॥ ७० ॥

धरण्युवाच—

सम्यगुक्तं त्वया देवि वरापेक्षाऽपि वर्तते ॥ ७१ ॥

**कल्याणकाण्डदीपः**

**कन्यापेक्षा** कन्याकाङ्क्षा तावदस्ति । तत्पूरणं **मुख्यकार्यम्** । तत्प्रथमं वक्तव्यम् । पुनरप्रथमतया विद्यमानेन कार्यशतेन प्रथममुक्तेन प्रकृते किं साध्यमस्ति ? इत्यर्थः । **वरापेक्षापीति** ।

**मूलम्**

**धरण्युवाच—**

**को वा वरः कश्च देशो गोत्रनक्षत्रकं च कम् ।**
**जननी [1]का तस्य मातः जनकश्च महामते ॥ ७२ ॥**

**किं कुलं च किमाचारः जातिर्वा तस्य का वद ।**
**कुलाचारकथां श्रुत्वा कुलज्ञा वाक्यमब्रीत् ॥ ७३ ॥**

१. तस्य का बाला ।

**कल्याणकाण्डदीपः**

अत्रापि मुख्यकार्यमित्यनुषज्य पुनः प्रश्नशतेन किमिति व्याख्येयम् । तत्तदङ्गं पृच्छति क इति ।

**मूलम्**

**बकुलोवाच—**

**शृणु राज्ञि सविस्तारं गोत्रनक्षत्रबन्धुताम् ।**
**देवकी जननी तस्य जनकः शूरनन्दनः ॥ ७४ ॥**

**निशाकरकुलं तस्य नाम्ना कृष्ण इति स्मृतः ।**
**वसिष्ठगोत्रे चोत्पन्नो नक्षत्रं श्रवणं तथा ॥ ७५ ॥**

**आवासो वेङ्कटगिरिर्विद्यावान् धनवान् बली ।**
**[1]बाहुजाचारसम्पन्नो वयसा पञ्चविंशतिः ॥ ७६ ॥**

१. बहुलाचारसम्पन्नो ।

**कल्याणकाण्डदीपः**

**बाहुजाचारः** । क्षत्रियाचारः ।

मूलम्

पाणिग्रहणकालोऽयं दत्ता चेत् [1]सुखमेष्यसि।
किमत्र बहुनोक्तेन दर्शनान्ते सुखं भवेत्।
तद्वृत्तमखिलं श्रुत्वा तामाहानन्दनिर्भरा ॥ ७७॥

१. सुखमेष्यति।

कल्याणकाण्डदीपः

तद्वृत्तमखिलमिति। उक्तादन्यदखिलम्। द्वितीयतया वक्तव्यम्, श्रोतव्यं चेत्यर्थः।

मूलम्

धरण्युवाच—

शङ्का जाता वरारोहे मम ते वचनात् [1]सखे ॥ ७८॥

सभाग्यश्च कुलीनश्च बुद्धिमांश्च युवा बली।
वाग्मीत्युक्ताऽसि चैतावत् विवाहो न कृतः कुतः ॥ ७९॥

सा तद्ववचनमाकर्ण्य मनसीत्थमचिन्तयत्
धैर्येण वचनं प्राह धरणीं राजवल्लभाम् ॥ ८०॥

१. शुभे।

बकुलोवाच—

कृतं वैवाहिकं देवि बाल्ये भागीरथीपितुः।
तत्रापत्यमनालोक्य द्वितीयं कर्तुमुत्सुकः ॥ ८१॥

कल्याणकाण्डदीपः

तत्रापत्यमनालोक्य द्वितीयं कर्तुमुत्सुक इति गूढार्थम्। द्वितीयं पाणिग्रहणं कर्तुं स्वीकर्तुं वा उत्सुकः स्वयमेव उद्युक्तः। गूढार्थस्तु— तत्रापत्यमनालोक्यद्वितीयं – अनालोकि अद्वितीयं तत्र अपत्यं इति च्छेदः। अनालोकि अनु द्योते। अपत्यं अपतनकारणं चाक्षुषं सामर्थ्यम्। तत्र

पूर्वकलत्रे **अनालोक्य** अद्वितीयं अतादृशं द्वितीयं कलत्रं कर्तुं स्वीकर्तुं उत्सुक इत्यर्थः । आङ्पूर्वा-ल्लोकेभवि क्विप् । आलोकोऽभावः अनालोक् । तस्मिन् अनालोकि ।

किञ्च कान्तचित्तानानुकूल्ये त्रपावतीनां अङ्गनानां यादृशी त्रपतिर्जायते तत्रापत्यं तादृशीं लज्जां तत्र अनालोक्य **अद्वितीयं** द्वितीयं कर्तुमुत्सुकः इति अर्थः । त्रपति लज्जा । त्रपतिरेव त्रापत्यम् । स्वार्थे ष्यञ् । तच्च तत् त्रापत्यं च तत्रापत्यं इति विग्रहः ।

यद्यपि विवाहे नानृतं पातकम्, तथाऽपि तत्रेदं तात्पर्यम् । पित्रोः अपातकित्वेन पतनाप्रसक्तेः न ब्रह्माऽपत्यम् । लक्ष्म्या अनालोके अदर्शनं तु धनाभिजनाद्युन्मदेनान्धा लक्ष्मीः दिवैव न पश्यति किमुतानापने । "उन्मत्तगौरिवान्धा श्रीः क्वचिदेवावतिष्ठते" इति भारतोक्तेः ।

तृतीयार्थे । मत्पुत्रः तपसा ब्रह्मचर्येण शुकनारदाद्यधिकोऽपि कामोपचारे विटच्छायः । सा तु कामोपचारविदग्धाऽपि नारदोक्तपुण्यकाद्याचरणात् कामोपभोगविरक्ता । पूर्णकामायाः तवेदं कान्त-चित्ताननुगुणं पुण्यकाचरणं न सम्यगित्युक्तेऽपि न लज्जेति । अतो धर्मपत्न्यां सत्यामपि द्वितीयां भोगिनीं वेश्याच्छायामुत्कण्ठते । अत एव वेङ्कट इति नामेति । अत्र मूलप्रमाणजिज्ञासायां पुराणान्तरं द्रष्टव्यम् ।

कृतं वैवाहिकं 'अस्माभिः' इति शेषः । तदा बालः इदानीं प्रवृद्धः स्वयमेवोत्सुक इति भावः । "पुनः कार्यशतेन किम् ?" इति सूचितं अनन्तरवक्तव्यं आह बकुळा । हे धरणि ! इदमवधारय । अद्य चन्द्रवारः । अगस्त्येशदर्शनार्थमहमेक एवागमम् । तत्र त्वत्सखीः दृष्टवती । तदा मया किञ्चित् कार्यं स्मृतम् । अस्मिन् संवत्सरे मत्पुत्रस्य विवाहेन निर्वाहः । तव मन्दिरे मत्पुत्रोचिता कन्या अस्तीति वार्ताभवम् । अतः अस्मिन् वत्सरे तव कन्या विवाहालोचनमस्ति न वेति मनो ज्ञातुमहमागता । अस्ति चेत् सऋत्विजो यजमाना कन्यानिरीक्षणाय सन्नद्धा अत्रैव यान्ति न चेदन्यत्र गच्छन्ति ।

अथ धरणी— तावद्विलम्बो नास्ति । घटिकाद्वयं स्थातव्यम् । दैवघटने सति निश्चित्यैव मत्वा पुनरागन्तव्यमिति प्रायो भवेत् इति मध्ये शेषः ।

### गूढकर्तृकव्याख्यानम्

बकुला— "महाराज्ञि ! इतरशत[illegible]ः किम् ? कन्यापेक्षा मुख्यकार्यम् । कन्यापेक्षिणी आगता । इयदेव ।"

धरणी— "बकुले ! महान् तोषः । अस्माकमपि वरापेक्षा । कन्यापेक्षया आगता भवतु । वरः कः ? तस्य देशः कः ? गोत्रं, कुलं, वरस्य जननी, जनकः कः ? जातिः का ? आचारः कः ? इति ।"

बकुला— "राज्ञि ! वरः श्रीनिवासः । जननी देवकी । जनको वासुदेवः । कुलं चन्द्रवंशः । श्रीनिवासः कृष्णः इति वदन्ति । वसिष्ठगोत्रम् । श्रवणनक्षत्रम् । वेङ्कटाचले वासः । वरः विद्या-धन-बलादिमान् । अनिन्दितसदाचारः । पञ्चविंशतिवार्षिकः ॥ तव पुत्र्याः अयं पाणिग्रहणमहोत्सवकालः । श्रीनिवासाय दत्ता सुखमेष्यति । किं बहुना ? वरदर्शनादेव ते सुखं जायते ।

धरणी बकुलोक्त्या अत्यानन्दिता "मातः ! सर्वं विदितम् । सन्तोषः । परन्तु ईषत् शङ्का । वरः विद्या-धन-यौवन-रूप-बलादिसकलसद्गुणसम्पन्नः वाग्मीति वदसि । एतावत् विवाहो न कुतः कृतः ?"

बकुला तद्वाक्यस्य किं प्रत्युत्तरं देयमिति चिन्तयती श्रीनिवासानुग्रहेण धैर्येण अविलम्बमाह— "देवि ! बाल्ये विवाहः कृतः । तत् कलत्रे अपत्यं नाभूदिति द्वितीयविवाहोद्युक्तः । इदमेव कारणम् । रोगादिसकलदोषरहित-श्रीनिवासे इतरदोषं कमपि न गणय ।" धरणी कारणं श्रुत्वा समाहिता ।

**मूलम्**

**[1]इदं कारणमाविद्धि श्रीनिवासे निरामये ॥ ८२ ॥**

**तद्वृत्तमखिलं श्रुत्वा [2]सम्मान्य नृप पूज्य च ।**
**[3]स्वपुत्रं सन्दिदेशाऽथ नृपाह्वाने नृपोत्तम ॥ ८३ ॥**

**स पुत्रवचनं श्रुत्वा हर्षादन्तःपुरं ययौ ।**
**एकान्ते राजशार्दूलमिदं वचनमब्रवीत् ॥ ८४ ॥**

१. न दोषमितरं विद्धि । २. सम्पूज्य बकुलां नृप । ३. सा पुत्रं ।

**गूढकर्तृकव्याख्यानम्**

बकुलां अन्नपानादिसत्कारैः सत्कृत्य पत्याह्वाने वसुदानमादिदेश । वसुदानो गत्वा मातृसन्देशं आकाशमाह । आकाशः पुत्रेण वृत्तं मत्वा आनन्दितः । स्वयं धरणीभवनं ययौ ।

**मूलम्**

**धरण्युक्त्या वियन्नृपकृतपद्मावत्याश्वासनप्रकारः**

धरण्युवाच—

कन्यार्थमागता [1]साध्वी बकुला वेङ्कटाचलात्।
सुतं सम्प्रेषयित्वाऽथ पुरोहित[2]मथानय ॥ ८५ ॥

[3]तस्याचारं विचार्याशु कुलविद्याबलादिकम्।
गोत्रर्क्षाद्यानुकूल्यं ब्राह्मणैर्वेदपारगैः ॥ ८६ ॥

विचार्य वरवध्वोश्च योनिनाडी सुसङ्गतिम्।
सर्वं सम्यक् समालोच्य कन्यादानं कुरु प्रभो ॥ ८७ ॥

१. राजन्। २. महानय। ३. वरस्यापि।

**कल्याणकाण्डदीपः**

**कन्यार्थमागतेति**। ब्राह्मणैः सह तस्याचारं विचार्य **आशु** शुभं शीघ्रं विधीयतामिति 'कन्यार्थ-मागता' इत्यादि 'पारगैः' इत्यन्तस्यार्थः ॥

**मूलम्**

कन्यार्थमागता साध्वी दुहितुर्विदितं हृदम्।
तमेवेच्छति त्वत्पुत्री वेङ्कटाद्रिनिवासिनम् ॥ ८८ ॥

**कल्याणकाण्डदीपः**

अथ आकाशः— सा कन्यार्थमागता इति यत् तत् साधु। अहमपि अवश्यं विचारयिता। परन्तु पुत्रीमनो न विदितमित्याह— **कन्यार्थमिति**। **तमिति**। 'तत्' शब्दात् 'यस्य' इति अध्याहारः। यस्य कन्यार्थमागता साध्वी **तं एव वेङ्कटाद्रिनिवासिनं** अं वासुदेवं **ते पुत्री इच्छति**। तस्मात् **ते दुहितुः हृत्** मनः मया **विदितं** इति। "हृत् अम्" इति पदच्छेदः।

अत्र मध्ये कथासन्दर्भशेषः— [illegible]त्रीमनः अभाषमाणायाः मूर्च्छितायाः कथं ज्ञातम्? इति पप्रच्छ अनन्तरं राजा। अथ धरणीदेवी— "समायात" इत्यारभ्य "सम्मान्य नृप पूज्य च" इत्य-

न्तोक्ततत्समागम-तदाकरणतत्सम्भाषणादितद्वृत्तान्तं (पुत्रीवचनबकुळागमनादि तत्सम्भाषणान्तं सर्ववृत्तान्तं) उक्त्वा, इत्येवं मया दुहितुर्हृत् विदितमिति ।

अथ राजा— अयि किं पद्मा मूर्च्छा प्रबुद्धा ? किमवतरत् ज्वरा ? नेत्रे उन्मील्य किं पश्यति ? किं भाषत ? इति पृष्टा सती सर्वं तथेत्याह धरणी ।

**मूलम्**

**धर्मदेवीवचः सत्यं शुभं शीघ्रं विधीयताम् ।**
**[1]परिगृह्य वचश्चाह परमानन्दनिर्भरः ॥ ८९ ॥**

१. इति पत्न्या वचः श्रुत्वा ।

**कल्याणकाण्डदीपः**

अथ राजा परमाश्चर्येण किं गुरोः ईशस्य च माहात्म्यं कुलगुर्वादीनां वचनं च सत्यं सदागतम् । वृथा राजसभावेन राज्ञा अनादरः कृतः । एवं शुभोदये सति एतदुपरि किं कर्तव्यमित्यत आह— **धर्मदेवीवचः इति** । **शुभं शीघ्रमिति** । "शुभस्य शीघ्रकरणं कालेन क्रियतेऽशुभम् । अशुभस्य कालहरणं कालेन क्रियते शुभम् । श्रेयांसि बहुविघ्नानि" इत्यादेः पद्मोक्तापवादभयाच्च इति भावः । **परिगृह्येति** । धरणीवचः परिगृह्य ।

**गूढकर्तृकव्याख्यानम्**

धरणी एकान्ते पतिमाह— "महाराज ! एतावत् वरानुकूल्यनिरीक्षणे वयं स्थिताः । अपि तु अद्य बकुला नाम वेङ्कटाचलात् कन्यार्थमागता । अयमेव सुयोगः । वसुदानं सन्दिश्य गुरुं पुरोहितं आनय । पुरोहितेन वरकुल-विद्या-बलादिकं, कन्यावरयोः गोत्रप्रवरनक्षत्रादि आनुकूल्यं वेदशास्त्रपारङ्गतविप्रैश्च विचारयत । वधूवरजातकं विमृश्य नाडी-गण-योनिकूटादिकं च सुसङ्गतं विचारय । एवं कन्यादानं कुरु प्रभो । साध्वी अस्मत्कन्यामेव अपेक्षते । पद्मामनोगतं च विदितम् । पद्मा वेङ्कटाचलवासि-श्रीनिवासमेव अपेक्षते ॥ धर्मदेवीवचनं च सत्यम् । एकैकं सङ्गतम् । अतः शुभं शीघ्रं विधीयताम् ।"

**मूलम्**

**आकाशराजोवाच—**

**बकुलागमनेऽस्माकं शिवं भद्रे समागतम् ।**

अहो मङ्गलमस्माकं सम्प्राप्तं पूर्वपुण्यगम्।
अभवन् पितरः सर्वे कृतार्था मुक्तिभागिनः ॥ ९० ॥

**कल्याणकाण्डदीपः**

पूर्वपुण्यगं पूर्वे जन्मनि च कृतसुकृतादागतम् ।

**मूलम्**

[१]तद्वाक्यामृतपानेन रोमहर्षस्तु जायते।
कदा पश्यामि [२]देवेशं वधूवरसमागमम् ॥ ९१ ॥

सभर्तृकां [३]राज्ञि पुत्रीं रत्नसिंहासने स्थिताम्।
कथं पश्यामि नेत्राभ्यां बन्धुमण्डलमध्यगाम् ॥ ९२ ॥

इत्युक्त्वा भवनं [४]चागाद्दुहितुर्हितवत्सलः।
नृपः पद्मावतीं प्राह सान्त्वयन् वचसाऽऽदरात् ॥ ९३ ॥

१. त्वद्वाक्या- । २. कल्याणं । ३. राजपुत्रीं ।
४. चागात् राजा दुहितृवत्सलः ।

**कल्याणकाण्डदीपः**

अहमपि दुहितृहृदयं जानामीत्याशयेन पत्न्या सह तद्भवनमगात् इत्याह— **भवनं चेति** ।

**गूढकर्तृकव्याख्यानम्**

आकाशः सङ्गतिं श्रुत्वा परमानन्दितः "देवि ! महानुभावबकुलासमागमात् नः मङ्गलं जातम् । जन्मान्तरे वयं बहुपुण्यं अर्जिताः । अस्मत्सकलपितरः कृतार्थाः मुक्तिभागिनः । कोटिजन्मकृतपुण्येनापि अगम्य-अमेय-अचिन्त्य-भगवत्सेवा सुदुर्लभा ॥ साक्षात् वैकुण्ठाधीश-श्रीनिवासकल्याणोत्सवे सुकुतूहलिनी प्रयतमाना बकुला खलु । सैव कृतार्था ॥ श्रीनिवासो वर इति वचनं श्रुत्वा श्रीनिवासो वर इति बकुलावचनामृतपानेन मम रोमहर्षः जायते । पद्माश्रीनिवासयोः वधूवरयोः विवाहे समागमं कदा पश्येयम् ? समस्तबन्धुजनमध्ये रत्नसुवर्णासने कल्याणमण्डपे पद्मां स्वपति-श्रीनिवासेन उपविष्टां नेत्राभ्यां कदा पश्येयम् ? इति त्वरते . मनः" इति सम्भाष्य आकाशः पद्मासद्म आगत्य तां आह ।

मूलम्

राजोवाच—

भद्रे दुःखं मनस्थं ते त्यज शीघ्रमतःपरम्।
हृदये तव कल्याणि यत् काङ्क्षा वर्तते वद ॥ ९४ ॥

कल्याणकाण्डदीपः

भद्र इत्यादि। भद्रे! कल्याणि! इतःपरं मनस्थं दुःखं दुःखकारणं चिन्तासन्तापं शीघ्रं त्यज।

मूलम्

तदद्याहं करिष्यामि नात्र कार्या विचारणा।
जनकस्य वचः श्रुत्वा जननीं वाक्यमब्रवीत् ॥ ९५ ॥

कल्याणकाण्डदीपः

जननीमिति। तामेव पुरस्कृत्य न जनकं लज्जया इति भावः।

मूलम्

पद्मावत्युवाच—

मातस्ते कथितं सर्वं वृत्तान्तं जनकस्य मे।
समाचक्ष्वाथ सङ्कोचात् [1]यथा त्वद्धृदयं गतम् ॥ ९६ ॥

१. न वक्तुमहमुत्सहे।

कल्याणकाण्डदीपः

मातरिति। हे मातः! ते यद्वृत्तान्तं विस्तरेण कथितं जातं तदद्य मत्पुरतः इदानीं सङ्कोचात् मे जनकस्य समाचक्ष्व। अन्यद्वा यथा मन इति भावः।

मूलम्

पुत्रीगिरं विदित्वा सा भर्तारं वाक्यमब्रवीत्।

धरण्युवाच—

साधयस्व महाभाग विवाहं विधिपूर्वकम् ॥ ९७ ॥

विलम्बो नैव कर्तव्यः शुभस्यार्थं शुभानन ।

राजोवाच—

तस्मै दास्यामि कृष्णाय श्रीनिवासाय भामिनीम् ॥ ९८ ॥

**कल्याणकाण्डदीपः**

मुख्यवाक्यमाह— **साधयस्वेति** । सङ्क्षेपेण सान्त्वयति **तस्मा इति** । **तस्मै** स्वेष्टाय । **भामिनीं** इत्युक्त्या कोपो न कार्य इति सूचयति ।

**मूलम्**

समाश्वास्य सुतां राजा पुत्रमिन्द्रनिकेतनम् ।
प्रेषयामास राजेन्द्रो गुर्वागमनकाङ्क्षया ॥ ९९ ॥

**कल्याणकाण्डदीपः**

**इन्द्रनिकेतनमिति** । राजकृतावज्ञादिना कोपदूषितान्तःकरणत्वेन कुलाचार्यतया मानुषरूपेण सन्निहितत्वेऽपि सूक्ष्मज्ञानाय च सुरगुर्वाकाङ्क्षया इन्द्रनिकेतनं सुतं प्रेषयामासेति भावः ।

**मूलम्**

विलिख्य पत्रिकां राजा पुत्रीकल्याण[1]कारिकाम् ।
सम्प्रेषयामास तदा तत्पुत्रेण वियन्नृपः । ॥ १०० ॥

१. सूचिकाम् ।

**कल्याणकाण्डदीपः**

**विलिख्य पत्रिकामिति** । "श्रीमत्पूज्यतमसुरगुरुसन्निधानस्य अनन्तराजकृत-अनन्तानन्त-प्रणामपूर्वकविज्ञापनम् । विलम्बिनामसंव...रस्य वैशाखशुद्धषष्ठीपर्यन्तं भवदीयामोघानुग्रहात् वयं सर्वे कुशलिनः । भवदीयानुग्रहातिशयस्याज्ञापयध्वम् । प्रकृतं श्रीपद्माश्रीनिवासकल्याणं प्रसक्तमस्ति ।

श्रीनिवासकल्याणकार्यगौरवमवलम्ब्य अल्पकस्यापि मम मन्दिरं प्रत्यागमनं प्रार्थये" इति पत्रिकां विलिख्य ।

**गूढकर्तृकव्याख्यानम्**

दुहितरि अतिवत्सल आकाशः पद्मां प्रति— "मङ्गलकरि पद्मावति ! किं तव मनसि अस्ति ? किमपि भवतु । वद । दुःखं मा कृथाः । लज्जां त्यक्त्वा वद । मनोगतं करिष्यामि ।"

पद्मा लज्जया जनकं प्रति उक्तवतीव जननी पुरस्कृत्य भाषते— "मातः ! मम वृत्तमखिलं ते पूर्वमेवोक्तम् । तत् त्वं जनकस्याग्रे वद" इत्याह । धरणी, पुत्री-आशयं ज्ञात्वा "महाराज ! पुत्रीविवाहं विधिपूर्वं साधयस्व । विलम्बो माऽस्तु । शुभं शीघ्रं विधीयताम् ।"

आकाशः— "पद्मे ! शृणु । कृष्णाय श्रीनिवासायैव भक्तवत्सलायैव त्वां विवाहविधिपूर्वकं दास्यामि । एतावान् विलम्बः कृत इति मा मे कुप्य । शान्ता भव" इत्युक्त्वा समाधाय, पुत्रं वसुदान-मानाय्य "त्वं स्वर्गं गत्वा अस्मत्पुरोहितं गुरुं दृष्ट्वा 'आकाशः भवन्तमपेक्षते' इति विज्ञाप्य तमत्र आनय" इत्युक्त्वा पुत्रीकल्याणसूचकपत्रं विलिख्य वसुदानेन प्रेषयामास ।

**मूलम्**

**वियन्नृपाज्ञया धरातलं प्रति बृहस्पत्यागमनम्**

स गत्वाऽतित्वरेणैव चन्द्रांशत्वात् तु भूमिप ॥ १०१ ॥

वन्दयित्वाऽऽनन्दपूर्णं गुरुमिन्द्रस्य भूपतेः ।
प्रतिष्ठाप्य वरं पत्रं पुरतः पुरुषर्षभ ॥ १०२ ॥

राजपुत्रं सपत्रं च दृष्ट्वाऽङ्गिरसनन्दनः ।
करद्वयेन तामाशु गृहीत्वाऽऽनन्दनिर्भरः ॥ १०३ ॥

स पपाठ महाराज पत्रिकां शुभसूचिकाम् ।
तत्क्षणादागमद्राजन् राजानं स पुरोहितः ॥ १०४ ॥

**कल्याणकाण्डदीपः**

सपुरोहितः इति व्यस्तं समस्तं च । सः पुरोहितः सः कुलगुरुः ।

**गूढकर्तृकव्याख्यानम्**

वसुदानस्तु चन्द्रांशोत्पन्नवान् । नाकं द्रुतं ययौ । आकाशः कथं पत्रं लिलेख ? "श्रीमत्पूज्यतम-सुगुरुसन्निधाने आकाशकृत-अनन्तानन्तप्रणामपूर्वकविज्ञापनम् । विलम्बिसंवत्सरे वैशाखशुद्धषष्ठीपर्यन्तं भवदमोघानुग्रहात् वयं सर्वे कुशलिनः । प्रकृते श्रीपद्माश्रीनिवासकल्याणप्रसक्तिमत् श्रीनिवासकल्याण-कार्यगौरवं अवलम्ब्य अल्पकस्यापि मम गृहं प्रत्यागमनं प्रार्थये" इति । वसुदानस्तु पत्रिकां नीत्वा स्वर्गे आनन्दपूर्णं इन्द्रस्य गुरुं बृहस्पत्याचार्यं दृष्ट्वा वन्दित्वा पत्रं गुरुपुरतः स्थापयामास । तदा आङ्गिरससुतः बृहस्पतिः आकाशसुतं तद्दत्तपत्रं च दृष्ट्वा स्वकरद्वयेन पत्रं गृहीत्वा अत्यानन्दितः शुभपत्रं पठित्वा क्षणात् आकाशं प्राप्तः ।

**मूलम्**

**प्राप्तं पुरोहितं [१]नत्वा कृत्वा च विधिपूर्वकम् ।**
**कालोचितां [१]वाचयित्वा [२]विद्यमानमुवाच सः ॥ १०५ ॥**

१. कालोचितं । २. वन्दमान- ।

**कल्याणकाण्डदीपः**

प्राप्तं पुरोहितं नत्वा विधिपूर्वकं पूजां च कृत्वा कालोचितां वाचं वाचयित्वा । कच्चिद्देवनिरातङ्काः कश्चिद्भवत्सु भक्तियुक्ता मयि प्रसन्ना इत्यादि कामं प्रवेदनं कृत्वा सर्वं तथेति वाचयित्वा ।

**मूलम्**

**राजोवाच—**

**तवाज्ञया करिष्यामि विवाहं दुहितुर्मम ॥ १०६ ॥**

**श्रीनिवासस्य सम्बन्धं विदितं स्यात् तवानघ ।**
**कन्यार्थमागता साध्वी विदितं गोत्रनाम च ॥ १०७ ॥**

**कल्याणकाण्डदीपः**

**तवाज्ञयेति** । श्रीनिवासस्य सम्ब- **तव** भवतां **विदितं** विज्ञापितं कृत्वा **तव** भवतां मनसः स्याच्चेत् भवदाज्ञया दुहितुर्विवाहं करिष्यामीति योजना । हे राजन् ! गुर्वनुज्ञायाचनं च यदा पूर्वं

सम्बन्धोपयोगिकुलगोत्रादिवेदनान्तरम् । तत्किं विदितम् ? इत्यतो विदितमिति सहेतुकमाह— **गोत्रनामेति** । गोत्रयोः कुलगोत्रयोः नाम । "गोत्रं नाम्नि कुले च" इत्यमरः । चः समुच्चये । साध्वी च समागता गोत्रनाम च विदितमित्यर्थः ।

### मूलम्

**तथाऽपि तव वाक्येन [1]करिष्ये कर्म शं मुने ।**
**स राजवचनं श्रुत्वा राजानं प्रत्यभाषत ॥ १०८ ॥**

१. विवाहं कर्तुमुत्सहे ।

### कल्याणकाण्डदीपः

तर्हि का चिन्ता ? इत्यत आह— **तथाऽपीति** । तव वाक्येन यत् शं शुभं कर्म तत् शं सुखकरम्, तस्मादिति भावः ।

### गूढकर्तृकव्याख्यानम्

ततः गुरुं प्राप्तं आकाशः नत्वा विधिपूर्वकं पूजयित्वा कालोचितं वायचित्वा "गुरुवर्य ! श्रीनिवाससम्बन्धं भवतां विदितं विज्ञापितं कृत्वा भवदाज्ञया मम दुहितृविवाहं करिष्यामि । श्रीनिवासो वरः । तत्सम्बन्धः प्रशस्तः ॥ किञ्च साध्वी बकुला नाम कन्यार्थं अस्मासु आगत्य पद्मां अपेक्षमाणा । तस्या मुखतः वरगोत्रनामकुलादिकं विदितम् । अद्य तव वाक्येन शुभकार्यं कर्तुमुत्सहे ।

### मूलम्

**गुरुरुवाच—**

**[1]फलवृक्षं समाश्रित्य बहवो जीविता भुवि ।**
**तथा वयं हि जीवामस्तव भाग्यावलम्बिनः ॥ १०९ ॥**

१. सफलं वृक्षमाश्रित्य ।

### कल्याणकाण्डदीपः

**फलवृक्षमिति** । "एको वृक्षं वर्धयति बहवो भुञ्जते फलम् । भोक्तारो भुञ्जते भागं स्वामी सम्पूर्णमश्नुते" इति यथा तथेति भावः । अस्मिन् कार्ये यः उदासीनः सः निर्भाग्यः इति यावत् ।

अत्र सन्दर्भशेषः— बृहस्पतिः— हे राजन् ! किं तव अस्मिन् दिने चिकीर्षितम् । राजा ! सूर्यस्य पश्चिमप्रतिष्ठायाः पूर्वमेव ग्रहादियोगं पर्यालोच्य वाङ्निश्चयं कृत्वा पत्रिकां समर्प्य अथ श्रीनिवाससन्निधानाल्लिखितलग्ने सन्निहितेऽपि कन्यां गृहीष्यामि इति माङ्गल्यपत्रिकानयनमित्याह । अथ गुरुः अस्मदीयपत्रिकां समर्प्य तल्लिखितपत्रिकामादाय तुभ्यं दातारः कः इत्याह । राज्ञा सा साध्वीत्युक्ते तां बकुलां पप्रच्छ धरणी । सा च आह उत्तरं मम आनुषङ्गिकीयं प्रवृत्तिः । पुत्रः प्रबुद्धः स्वतन्त्रः । एवं त्वरया कार्यसाधने मम धैर्यं नास्तीति । अथ राजा एतत्कुलगुरुकार्यमिति कुलगुरुं पप्रच्छ । अथ सोऽप्याह । स्वयं प्रसन्नस्य हरेः स्वेच्छया दर्शनं नान्यथा इति कदाऽपि दर्शनहीनस्य मम असाध्यमित्याह । अथ राजा तर्हि भवद्भिरेव भवितव्यमिति ययाचे ।

## गूढकर्तृकन्याख्यानम्

गुरुः— "महाराज ! एको वृक्षं वर्धयति । तत्फलं बहवः अश्नन्ति । भोक्तारोऽपि फलं किमपि भुञ्जते । स्वामी नाम तत्पूर्णफलमश्नुते । प्रकृते त्वं फलसहितवृक्षं वर्धितवान् । तत्फलं वयं आश्रित्य जीवामः । प्रकृते कल्याणकार्ये को वा उदास्ते ? उदास्ते चेत् स निर्भाग्य एव । अद्य किं तव चिकीर्षितम् ?"

## मूलम्

**[1]अहं पुरा गतो राजन् सर्वदाऽऽश्रितवान् शुकः ।**
**स जानाति महाराज स्थितिं तस्याथ शार्ङ्गिणः ॥ ११० ॥**

---

**१. अहं कदाचिदेवात्र समागच्छामि भूतलम् ।**
**न जानामि ततः सम्यक् शुक आश्रितवान् सदा ॥**

### कल्याणकाण्डदीपः

अत आह— **अहमिति** । **हे राजन् !** **पुरा** चिरातीते काले चोलराजकाले । औषधार्थं तत्सन्निधिं सकृद्गतः । सर्वदा सहवासो नास्तीति न मयापि भवितव्यमित्याह । तर्हि एतत्समाधानं भवद्भिरेव कर्तव्यमित्यत आह— **सर्वदेति** ।

अयं भावः— एकान्तानां शुकनारदादीनां भाषितं प्रचारयति श्रीनिवासः । तेषां तादृशी गुरुतरा सभाऽस्ति । यत्र वरदाः ते । नारदः शुकेनैतत् सुशकमिति ।

**मूलम्**

**अत्रैवोत्तरदिग्भागे क्रोशपञ्चात्मके नृप।**
**[1]समास्ते व्यासतनयः श्रीनिवासपरायणः ॥ १११ ॥**

**तमाहूय महाराज शीघ्रेण पृथिवीपते।**
**स वदत्यात्मनः सौख्यं तस्य वृत्तान्तमादितः ॥ ११२ ॥**

१. शुकोऽस्ति।

**कल्याणकाण्डदीपः**

स कुत्रास्ते इत्यत आह— **अत्रैवेति** । **तमिति** । शीघ्रेण कालेन कार्यं साधयेति भावः ।

**गूढकर्तृकव्याख्यानम्**

आकाशः— "ग्रहादियोगं पर्यालोच्य, वाङ्निश्चयं कृत्वा, शुभपत्रिकां समर्प्य, श्रीनिवास-सन्निधानात् निश्चितलग्ने कन्यां गृहीष्यामि" इति सम्मतिशुभपत्रिकानयनं भवितव्यम् ।

गुरुः— "अस्मत्पत्रिकां समर्प्य, तल्लिखितपत्रिकामादाय तुभ्यं दातारः के ?"

आकाशः— "साध्वी कुर्यात् । कर्तुमीष्टे इति भाति ।

धरणि— "अपि साध्वि ! साध्येत एतत् ?"

साध्वी— "मम इयं आनुषङ्गिकी प्रवृत्तिः । पुत्रः प्रबुद्धः । स्वतन्त्रः । त्वरया कर्तुमधीरः ।"

आकाशः— "तर्हि भवद्भिरेव भवितव्यम् ।"

गुरुः— "राजन् मया अवश्यं कर्तव्यम् । परन्तु शृणु । पुरा चोलराजकाले औषधार्थं श्रीनि-वाससन्निधिं गतवान् । सकृत् गतवान् । सर्वदा संव्यवहाराभावात् न मया कार्यं सुसूत्रं भवेत् । "

आकाशः— "भगवन् ! अस्य समाधानं भवद्भिरेव कर्तव्यम् ।"

गुरुः— "अत्र भुवि कदाचिदागच्छामि । अतः श्रीनिवासविचारं न सम्यक् वेद्मि । शुकः नारदः इत्यादयः सन्ति खलु एकान्तभक्ताः । तेषां भाषितं श्रीनिवासः अभ्यर्चयति । तेषां तस्मिन् श्रद्धा तादृशी । शुकः श्रीनिवासं सदाश्रितः । श्रीनिवासस्थितिं स वेत्ति । तेनैव इदं कार्यं सुशकम् । व्याससुतः शुकः अत्र उत्तरदिग्भागे पञ्चक्रोशदूरे श्रीनिवासपरायण आस्ते । स आनीतश्चेत् सः श्रीनिवासवृत्तान्तं यावत् आदितः अनुकूलं वदेत् ।"

आकाशः ततः गुरुवचनेन शुकाय पत्रं लिखति— "श्रीमते शुकमुनये नमः । आकाशस्य इदं विज्ञापनम् । पत्रार्थः पद्माविवाहलक्षणः । इदं पत्रं गुरुणा अवलोकितं आदृतं च । श्रीनिवाससम्बन्धः अस्माभिः चिकीर्ष्यते । एतत्पत्रावलोकनक्षणे श्रीनिवासमवलम्ब्य तद्गौरवे दृष्टिं कृत्वा, पत्रलिखितं श्रीनिवासलिखितं मत्वा परमानुग्रहेण मयि आगम्यताम्" इति आकाशो विज्ञापयति । प्रकृतसर्वं एतत् पत्रहारितोण्डिमानेन समक्षं भाषणेन स्पष्टं भवेत् । इति साष्टाङ्गप्रणतिपूर्वकं विज्ञापनम् ॥

एवं लिखित्वा अनुजतोण्डिमानाय दत्वा तं प्रति, "त्वं शीघ्रं शुकं दृष्ट्वा तस्मै शुभपत्रिकां दत्वा मम नतिपूर्वकं प्रकृतार्थं निवेद्य, सादरं तमत्रानय" इति आदिदेश । ततः तोण्डिमानः विप्रपूर्णाभिमानी सूर्यसदृशप्रभरथेन वेगेन शुकाश्रमं प्राप ।

**मूलम्**

**बृहस्पत्युक्त्या वियन्नृपकृतशुकाह्वानम्**

**एवमुक्तोऽथ गुरुणा भ्रातरं ब्राह्मणप्रियम् ।**
**सन्दिदेश महाराज शुकाश्रममरिन्दमः ॥ ११३ ॥**

**स गत्वा वायुवेगेन रथेनादित्यवर्चसा ।**
**[1]ध्यानं गतं मुनिं दृष्ट्वा यानादुत्तीर्णवान् नृपः ॥ ११४ ॥**

१. ध्यानयोगादुत्थितं तं दृष्ट्वा शुकमुवाच ह ।

**कल्याणकाण्डदीपः**

**मुनिं दृष्ट्वेति** । **यानात्** रथात् । **उत्तीर्णवान्** विमुक्तोऽभूदिति शेषः । उद्गतोऽश्व इत्यत्रेव उद्गिमोक्षणे आश्चर्यमोक्षणे भावे इत्युपसर्गवृत्तेः ।

**मूलम्**

**तोण्डिमान उवाच—**

**शृणु तापसश्रेष्ठ वचनं राजभाषितम् ।**
**पद्मावतीविवाहार्थं सम्पन्नं गुरुपूजितम् ॥ ११५ ॥**

[1]पत्रार्थमवलम्ब्याथ गच्छ तन्नगरं प्रति ।

१. पद्मावती विवाहार्हा सम्पन्ना गुरुपूजिता ।
श्रीनिवासाय तां कन्यां प्रदातुं काङ्क्षते नमः ।
युक्तायुक्तविचिन्तायै गुरुमाहूतवानपि ।
तदर्थमेव चाद्य त्वां समाह्वयति भूमिपः ।
युक्तायुक्तविचिन्त्याथ लेखितुं शुभपत्रिकाम् ।
अवकाशं च कृत्वाऽद्य गच्छ तन्नगरीं प्रति ॥

एवमुक्तो महीदेवो महीपालेन भूमिप ॥ ११६ ॥

ससम्भ्रमात् समुत्थाय [1]सम्भ्रमन् विभ्रमन्निव ।
भिन्दन् कमण्डलुं राजन् छिन्दन् कृष्णमृगत्वचम् ।
विच्छिद्य मणिमालाश्च स ननर्त महामुनिः ॥ ११७ ॥

मुहूर्तमित्थं राजेन्द्र तद्बुद्धिरवशं गता ।
उवाच पश्चाद्राजानं कृष्णद्वैपायनिर्मुनिः ॥ ११८ ॥

१. व्यभ्रमद् ।

**कल्याणकाण्डदीपः**

**पद्मावतीति** । पद्मावत्या विवाहलक्षणे योऽर्थः तेन सम्पन्नं तत्सम्पादनोद्युक्तम् । आदिकर्मणि क्तः । गुरुपूजितं गुरुणा शिरसा ऊह्य आहृतम् । पत्रार्थं श्रीनिवासं अवलम्ब्य तद्गौरवे दृष्टिं निक्षिप्य आगच्छ इति राजभाषितं शृणु इति योजना ।

इदमत्र हृदयम् । गुर्वर्थं लिखितपत्रशिरोभागे शुकमहामुने तुभ्यं नमः । प्रकृतसर्वं तोण्डिमानो विज्ञापयतीति विलिख्य पत्रिकां तामेवाददिति ।

**गूढकर्तृकव्याख्यानम्**

तत्र शुकाश्रमे ध्यानयोगात् उत्थितं श्रीशुकं दृष्ट्वा रथादवरुह्य तं नत्वा सादरं तस्मै पत्रिकां समर्प्य "तापसशार्दूल ! श्रूयताम्, आकाश एवं सन्दिशति— "पद्मां विवाहार्हां आकाशः वेङ्कटाचल-

वासिश्रीनिवासाय प्रदातुमपेक्षते । अत्र युक्तायुक्तविचाराय गुरुमाहूतवान् । तथाऽपि आर्यगुरुजनं भवादृशं आह्वयति । पर्यालोच्य विवाहशुभपत्रिका लेखनीया । दयया शीघ्रं आगन्तव्यम्" इति ।

शुकः एतादृशोक्तिं तोण्डिमानात् श्रुत्वा अत्यानन्दवशः, ससम्भ्रमं, विभ्रमन् सुभ्रमन्निव इतस्ततः सञ्चरन्, कमण्डलुं भिन्दन् कृष्णाजिनं छिन्दन् तुलसीमणिमालां छिन्दन् महामुनिः मुहूर्तं ननर्त । एवं बुद्धिः अवशं गता ॥

**मूलम्**

**शुक उवाच—**

**साधूदितं वाक्यमुदारविक्रमं**
**महोत्सवं वेङ्कटशैलवासिनः ।**
**कन्याप्रदानं पुरुषार्थसाधनं**
**समस्तलोकस्य पवित्रकारणम् ॥ ११९ ॥**

**कल्याणकाण्डदीपः**

**साध्विति** । राज्ञा उदितं वाक्यं साधु कार्यसाधकम् । **उदारविक्रमं** उदारः = महान् विक्रमः = अतिशक्तिः यस्मिन् राजशासन इव तत् । तथा अमरराजेनाप्यतिक्रमितुमशक्यम् । नैतावन्मात्रं **महोत्सवं हर्षकरं कन्याप्रदानं** राज्ञः महापुरुषार्थसाधनं **लोकस्य पवित्रकारणं** पावित्र्यहेतूनां गङ्गादितीर्थानामप्यतिशयेन पावित्र्यहेतुः । **कन्याप्रदानमिति** । श्रीकृष्णस्य तुलसीकन्याप्रदानवदिदानीमपि वेङ्कटशैलवासिनः महोत्सवं महाहर्षकरं वेङ्कटशैलवासिनः कन्याप्रदानं कर्तुः पुरुषार्थसाधनम् । कन्या प्रदीयते यस्मिन्निति व्युत्पत्त्या तदुत्सवदर्शनं तत्कथनं श्रवणं च द्रष्टुः वक्तुः श्रोतुः लोकस्य पवित्रकारणम् ।

**मूलम्**

**आकाशराजधिषणौ श्रीनिवासकृपाबलात् ।**
**महादानपराविथं [1]एवमेव दिने दिने ॥ १२० ॥**

**[2]प्रशशंस महाराज पद्मतीर्थेऽवगाह्य च ।**
**कृत्वा मा[illegible]ह्नकीं सन्ध्यां त्यक्त्वा [3]जीर्णं स्वभूषणम् ॥ १२० ॥**

१. भूयात्सा च । २. इत्याशिषा प्रशस्याथ । ३. जीर्णोपबृंहणम् ।

स नवानि कुशाग्राणि निकृत्य मुनिसत्तमः ।
[1]एकैकं बन्धयित्वा तु उत्तमाङ्गविभूषणम् ॥ १२१ ॥

कवचं कल्पयामास कुशाग्रैः कुसुमैस्तथा ।
तुलसीमणिमालाभिः [2]कर्णभूषणभूषितः ॥ १२२ ॥

मृगत्वग्भिः [3]कक्षलम्बैः कञ्चुकैः समलङ्कृतः ।
ज्ञानाश्वमधिरूढस्तु स जगाम नृपालयम् ॥ १२३ ॥

१. किरीटं बन्धयित्वा तैः उत्तमाङ्गनिबन्धनम् ।
२. कण्ठकर्णविभूषितः । ३. पादलम्बैः ।

### कल्याणकाण्डदीपः

**आकाशराजधिषणौ इति** । **धिष्ण्ये** मन्दिरे । **एवमेव** । महोत्सवसमृद्धिर्भवति । किं तेन राज्ञा त्वया पौरैः प्रसर्पकैः परिजनैश्च कृतं सुकृतं न साधारणं, किन्तु महत् इति प्रशशंस इत्यर्थः । महाराजधिष्ण्यामपि प्रवर्तमानमहोत्सवस्य प्रगल्भते न पूर्यत इति सूचनाय तदर्थकपादयोः न्यूनाधिकभावः । "न वा एकेन" इत्यादिना न छन्दोभङ्गः । "धिष्ण्यमोको निवसनम्" इत्यमरः ॥

अथवा पाठान्तरे आकाशराजधिषणौ राजबृहस्पती । एवमेव यथाऽह्नः यथा चाद्यः तथोपरि दिने दिने मिलितौ भूत्वा श्रीनिवाससेवापरायणौ । अतः किं वक्तव्यं महान्तावित्यर्थः । "धिषणो गुरुः" इत्यमरः । अथ मुनिः अहं आगच्छामि, त्वं गच्छेत्यनुज्ञाय पद्मतीर्थे अवगाह्य ।

### गूढकर्तृकव्याख्यानम्

तोण्डिमानं प्रति, "राजन् ! तोण्डिमान ! आकाशोक्तं यत्, तत् साधु । राजशासनवत् अत्यन्तशक्तिमत् । अमरेन्द्रेणापि अनुलङ्घ्यम् । आकाशः वेङ्कटाचलवासिने श्रीनिवासाय कन्याप्रदानं करोति यत् तत् न केवलं विवाहमहोत्सवः । राज्ञः परमपुरुषार्थसाधनम् । "पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम्" इत्युक्तेः पावित्र्यहेतुत्वेन प्रसिद्धं गङ्गादितीर्थानामपि पावित्र्यहेतुकं (श्रीकृष्णस्य तुलसीकन्यादानवत्) श्रीनिवासकल्याणोत्सवः, महानन्दकरः । तदुत्सवदर्शन-कथा-कथन-श्रवणं च पुरुषार्थफलप्रदम् । एवमेव आकाशगृहे महोत्सवसमृद्धिः । आकाशेन पौरैः परिजनैश्च किं सुकृतं कृतम् ? आकाशधिषणौ ह्यः, अद्य, उपरिदिनेऽपि मिलितौ श्रीनिवाससेवापरौ । श्रीनिवासकृपाबलात् महादानपरौ । अतः तौ महान्तौ इति किमु वक्तव्यम् ? आकाशराजस्य बुद्धिः कियन् महती ?

महादानपरा । ईदृशी बुद्धिः दिने दिने भूयात् ।'' एवं आशास्य, आकाशं प्रशस्य, तोण्डिमानं प्रति ''त्वं पुरतो गच्छ । अहं आगच्छामि'' इति तं अनुज्ञाप्य पद्मतीर्थे स्नात्वा माध्याह्निकीं सन्ध्यां कृत्वा जीर्णालङ्कारान् विसृज्य नवकुशाग्राणि निकृत्य तैः किरीटं बन्धयित्वा, तैः कवचं कृत्वा, धृत्वा तुलसीमणिमालाभिः कर्णकण्ठेषु भूषितः, आपादं लम्बमानमृगचर्मकञ्चुकेन समावृतः ज्ञानाख्य-अश्वमारूढः आकाशराजधानीं नारायणपुरं प्रययौ ।

**मूलम्**

**तमायान्तं मुनिं दृष्ट्वा चतुरङ्गबलान्वितः ।**
**पुरोहितं पुरस्कृत्य कुशमूलफलोदकैः ॥ १२४ ॥**

**[1]एवम्भूतं नृपं दृष्ट्वा सन्तुष्टमनसो मुनेः ।**
**यानादुत्तीर्य राजेन्द्रः साष्टाङ्गं प्रणिपत्य तम् ॥ १२५ ॥**

१. अभियातस्तदा राजा सन्तोषं प्राप सा पुरी ।

**कल्याणकाण्डदीपः**

**पुरोहितं पुरस्कृत्येति** । पुरोहितं सुराचार्यं पुरस्कृत्य कुशमूलफलोदकैः सह पुरोहितं निज-पुरोहितं पुरस्कृत्य ऋषिमभिजगामेत्यर्थः । एवम्भूतं मुनिं दृष्ट्वा सन्तुष्टमनसो मुनेर्दर्शनानन्तरं यानादुत्तीर्य सुमनो लाजाक्षतानुपरि उत्क्षिप्य तत्रैवासने उपवेश्य स्वपुरोहितोक्तमार्गेण पाद्यादिभिरभ्यर्च्य साष्टाङ्गं प्रणिपत्येति क्रमः ।

**मूलम्**

**गजमारोप्य नगरीं सपुरोहितमानयत् ॥ १२६ ॥**

**कल्याणकाण्डदीपः**

**गजमिति** । आरोपिताम्बरविमानं पट्टगजम् । **सपुरोहितमिति** । पुरोहिताभ्यां दिव्यमानुषरूपाभ्यां गुरुभ्यां सहितम् । **ऋषिं** शुकं तं गजमारोप्य इत्यर्थः ।

**गूढकर्तृकव्याख्यानम्**

अत्र राजधान्यां निजकुलपुरो॥९॥ बृहस्पतिं कुश-कन्दमूल-फल-उदकैः युतः पुरस्कृत्य शुकमुनिं द्रष्टुं जगाम । समायान्तं शुकं दृष्ट्वा हस्त्यश्वरथपदातिरूपचतुरङ्गबलयुतः स्वयं यानात् उत्तीर्य मुनिं

अभिजगाम। तदा कृत्स्ना पुरी सन्तोषं प्राप। राजा सुमनो-लाजा-पुष्प-अक्षतान् उपरि उत्क्षिप्य तत्रैव आसने उपवेश्य स्वपुरोहितोक्त्या अर्घ्यपाद्यादिभिः अभ्यर्च्य साष्टाङ्गं प्रणम्य आरोपिताम्बरविमानं पट्टगजं आरोप्य दिव्यमानुषरूपाभ्यां गुरूभ्यां सादरं सवैभवं राजधानीं आनयत्।

**मूलम्**

**निकेतनान्तर्भवने निवेश्य**
**निधिं मुनीनां [1]निरतं परात् परे।**
**सम्पूजयामास विधानवित्तमो**
**विद्यागुरुं ज्ञानगुरुं [2]शुकं नृपः ॥ १२७॥**

१. प्रवरं स राजा। २. च नत्वा।

**कल्याणकाण्डदीपः**

**विद्यागुरुमित्यादि।** विद्यया ज्ञानेन च गुरुं गुरोरपि गुरुं शुकम्। यद्वा, बृहस्पतिं शुकं च इति वा।

**मूलम्**

**[1]तापसौ तौ तु पप्रच्छ कन्यार्थं स तु भूपतिः।**

**राजोवाच—**

**पद्मावतीं प्रदास्यामि निश्चितेयं [2]मतिर्मुनी।**
**श्रीनिवासाय कृष्णाय भवद्भ्या[3]मनुरोचते ॥ १२८॥**

१. तापसं परिपप्रच्छ कन्यार्थं धिषणाग्रतः।
२. मतिर्मम। ३. मनुमोदितः।

**कल्याणकाण्डदीपः**

**कन्यार्थं** कन्यानिमित्तम्। **पद्मावतीमित्यादि।** हे मुनी! श्रीनिवासाय कृष्णाय पद्मावतीं प्रदास्यामि प्रदास्याम इति मतिः मनसि वर्तते। तत् भवद्भ्यामनुरोचते। तस्मै कन्यादानं यदि भवन्तौ प्रीणयति तर्हि इमां पद्मां श्रीनिवासाय दास्यामीति मतिः निश्चिता दृढनिरूढेत्यर्थः। रुचिरभिप्रीतौ। "रुच्यर्थानां प्रीयमाण" इति भवद्भ्यामिति चतुर्थीद्विवचनम्। "हरये रोचते भक्तिः" इति यावत्।

मूलम्

तौ तद्वचनमाकर्ण्य राजानं राजसत्तम।
शुकोऽब्रवीद्गिरं पुत्रीकारणात् करुणान्वितः ॥ १२९ ॥

कल्याणकाण्डदीपः

पुत्रीकारणात् इति। पुत्रीचिन्ताकारणात् याचमाने राज्ञि करुणान्वितः दयायुतः।

मूलम्

शुक उवाच—

मा कुरुष्व महाराज सन्देहं दानकर्मणि ॥ १३० ॥

धन्योऽसि त्वं महीपाल कुलं पावनतां गतम्।
[1]पितरस्त्रिदिवं प्राप्ता नात्र कार्या विचारणा ॥ १३१ ॥

किं त्वया चरितं पुण्यं पूर्वजन्मनि भूमिप।
भगवानरविन्दाक्षः श्रीनिवासः सतां गतिः ॥ १३२ ॥

जामातृत्वं समापन्नस्तस्मान्नास्ति तवाधिकः।
विलम्बो नैव कर्तव्यः शुभं शीघ्रं विधीयताम् ॥ १३३ ॥

१. पितरस्तु दिवं।

कल्याणकाण्डदीपः

'जामातरत्वम्' इति पाठे उदीचां मातरपितरशब्दवज्जामातरशब्दः। शुभं शीघ्रं विधीयतामित्यादि। इत्येवं शुकेनोक्ते अथ राजोवाच। नास्माभिर्विलम्बः। त्वरितलग्नमन्विष्य दानं तथा श्रीनिवाससन्निधानाद् अविलम्बेन कार्यसिद्धिश्च इत्येते भवतोः अधीने इति। अथ ते सिद्धी आवामन्वित्याहतुः।

गूढकर्तृकव्याख्यानम्

निकेतनस्य अन्तर्भवने मुनिवरं निवे[illegible] विधिना स्वगुरुं बृहस्पतिं, शुकं सम्पूजयामास। आकाशः शुकं पृच्छति— "तापसवर्य! गुरुवर्य! भवद्भ्यां अनुमोदितः श्रीश्रीनिवासाय पद्मां प्रदास्यामि" इति मे दृढमतिः उत्पन्ना।

श्रीशुकः राजोत्तमस्य वचनं श्रुत्वा "भाग्यशालिन् ! आकाशराज ! दानकार्ये कमपि संशयं मा कृथाः । तत्रापि इदं श्रीनिवासाय पद्माप्रदानम् । भूपते ! त्वं धन्यो जातः । तव कुलं पावनतां गतम् । तव पितरः स्वर्गं प्राप्ताः इति विद्धि । संशयो न । जन्मान्तरेषु अमितपुण्यराशिं आर्जितः । तेन सतां गतिप्रदः अव्याकृतषड्गुणैश्वर्यसम्पन्नः कमलदलायताक्षः साक्षात् श्रीनिवासः तव जामातृत्वं गतः । तस्मात् त्वत्तः पुण्यवान् नैव । अतः विलम्बं अकृत्वा शुभं शीघ्रं विधीयताम् ।

**मूलम्**

**वयं धन्याः कृतार्थाः स्म तव सङ्गेन भूमिप ।**
**वयं तु तपसाऽऽराध्य कन्दमूलफलाशनाः ॥ १३४ ॥**
**सर्वसङ्गं परित्यज्य न पश्यामोऽत्र तं विभुम् ।**
**सङ्गतेस्तव पश्यामः श्रीनिवासं श्रिया युतम् ॥ १३५ ॥**
**सङ्गतिस्तव [1]भद्रं नो भवेज्जन्मनि जन्मनि ।**
**[2]एवमुक्त्वा स राजर्षिस्तूष्णीमास स तापसः ॥ १३६ ॥**

१. भद्रा । २. एवं तमुक्त्वा ।

**कल्याणकाण्डदीपः**

अथ स राजा— तर्हि लिखितलग्ने पाणिं गृहीष्ये इति तत्सन्निधानात् स सूर्यं प्रति माङ्गल्य-पत्रिकालाभो यथा स्यात् तथा अनुग्रहः क्रियताम् । परन्तु विरक्तानापि भवतां मत्सङ्गत्या आयासो भवतीत्यत आह— **वयमित्यादि** । अस्माकं तव सङ्गेन अस्मिन् कार्ये आयासः । किन्तु सर्वसङ्गं परित्यज्य मन्दधनाः कन्दमूलफलाशनाः सन्तः "यदन्नः पुरुषो भवति तदन्नास्तस्य देवताः" इति श्रुतेः । तान्येव इन्दिराध्यपदस्य समर्प्य । एवं तपसा आराध्याऽपि परिश्रमेण अत्र भुवि **तं विभुं** सर्वजनसाधारण्येन कल्याणमहोत्सवाभिव्यक्तपरमानन्दमूर्तिं न पश्यामः । हे भूमिप ! तव सङ्गेन **तं** तादृशं विभुं पश्यामः । अतः तव सङ्गेन वयं धन्याः कृतार्थाः स्मः । अतः तव सङ्गतिर्नो **भद्रं** मङ्गलम् । अतो नायास इति भावः । स राजर्षिः स बृहस्पतिः **तापसः** तपस्वी **सः** शुकः एवमुक्त्वा तूष्णीमास ।

**गूढकर्तृकव्याख्यानम्**

भूपाल ! तव तत्सङ्गेन वयं धन्याः कृतार्थाश्च । वयं कन्दमूलफलानि अश्नन्तः । अत्युग्रं तपः तपन्तः सर्वसङ्गं त्यक्तवन्तः । चिरं ध्यायन्तोऽपि सर्वान्तर्यामि श्रीशं साक्षात्कर्तुं अशक्ताः । अद्य

महात्मनस्तव सत्सङ्गतेः साक्षात् लक्ष्मीसमेतं श्रीनिवासं पश्यामः । इह जन्मनि जन्मजन्मान्तरेष्वपि भवतः भद्रा सङ्गतिः नः भवतु ।" एवमाभाष्य शुकः तूष्णीं अभवत् ।

आकाशः शुकवचनेन आनन्दितः "शुकमुने ! तुभ्यं नमो नमः । भवत्समागमात् आत्मानं कृतकृत्यं मन्ये" इत्युक्त्वा गुरुं प्रति "सुराचार्य ! पद्माश्रीनिवासयोः ग्रहयोगः कीदृशः ? गोत्रनक्षत्राणां बलाबलत्वं विचार्यताम् । अस्माभिः विलम्बो न । त्वरितं लग्नं अन्विष्य दानम्, तथा श्रीनिवास-सन्निधानात् अविलम्बेन कार्यसिद्धिः इत्येते भवदधीने ।"

गुरुशुकौ— "ते सिद्धी आवां अनु ।"

आकाशः— "मिलितलग्ने त्वरितेऽपि तल्लग्ने पाणिं गृहीष्ये" इति तत्सन्निधानात् माङ्गल्य-पत्रिकालाभो यथा स्यात् तथा अनुग्रहः क्रियताम् । परन्तु विरक्तानामपि भवतां मत्सङ्गत्या आयासो भवति ।

शुकः— "अस्माकं तव सङ्गेन आयासो न । किन्तु सर्वसङ्गं परित्यज्य मन्दधनाः कन्दमूल-फलाशनाः तपसा आराध्यापि अत्र भुवि सर्वजनसाधारण्येन कल्याणमहोत्सव-अभिव्यक्तपरमानन्दमूर्तिं न पश्यामः । भूमिप ! तव सङ्गेन तादृशविभुं पश्यामः । अतो वयं धन्याः कृतार्थाः । तव सङ्गतिः नः भद्रं मङ्गलम् । अतः आयासो न ।" एवमुक्त्वा शुकः तूष्णीं आस ।

**मूलम्**

**शुकवाक्यं ततः श्रुत्वा स राजाऽऽनन्दनिर्भरः ।**
**[1]वैयासकिं नमस्कृत्य प्रशशंस प्रजापतिः ॥ १३७ ॥**

**अथ राजा वचः प्राह सुराचार्य नमोऽस्तु ते ।**

१. वैयासकेर्वचः श्रुत्वा ।

**राजोवाच—**

**कृतार्थमात्मनो मन्ये व्यासपुत्र नमोऽस्तु ते ॥ १३८ ॥**

**कल्याणकाण्डदीपः**

**कृतार्थमिति** । आत्मनो जन्म [illegible]ार्थं मन्ये । अयं भावः— मम अल्पकस्यापि पिहितनयन-स्याप्येवं लाभ इति । भवद्भिरप्युक्ते धैर्यमिति ।

मूलम्

**ग्रहाणां च गतिस्तात तयोर्योगो विचिन्त्यताम् ।**
**गोत्रयोगं ऋक्षयोगं पश्य विप्र बलाबलम् ॥ १३९ ॥**

**इति राज्ञो वचः श्रुत्वा सुराचार्यः ससम्भ्रमः ।**
**छायाशास्त्रविधानज्ञो बकुलां वाक्यमब्रवीत् ॥ १४० ॥**

**कल्याणकाण्डदीपः**

अथ राजा गुरुमाह— **ग्रहाणां चेति** । हे तातस्थानीय गुरो ! अस्मिन्मासे त्वरितलग्नसम्पादिका ग्रहगतिः का ? **तयोः** पद्माश्रीनिवासयोः ग्रहाणां गतिः या सा च विचार्या । अतः **तयोर्योगो** विवाहयोगः विचिन्त्यताम् । **गोत्रयोगं** गोत्राणां कुलगोत्रप्रवराणां योगम् अपूर्वसम्बन्धलक्षणं सङ्गतिम् । इति राजोवाच इति ।

**गूढकर्तृकन्याख्यानम्**

आकाशः— "अल्पकस्य मम पिशितनयनस्यापि एवं लाभ इति भवद्भिरपि उक्ते आत्मनः जन्म कृतार्थं मन्ये । मुने ! तुभ्यं नमः ।"

आकाशः— "तात ! स्थानीयगुरो ! अस्मिन्मासे पद्माश्रीनिवासयोः ग्रहगतिः कीदृशी ? तयोः विवाहयोगः विचिन्त्यताम् । कुलगोत्रप्रवराणां योगः कथम् ? नक्षत्रयोगः कीदृशः ? विप्राणां ग्रहमैत्र्यम्, क्षत्रियाणां गणकूटम्, वैश्यानां स्त्रीदीर्घता, शूद्राणां योनिकूटम्, अवश्यं अवेक्षणीयम् । वधूवरयोः द्वादशकूटानि अवेक्षणीयानि । दिनकूटं, गणकूटं, माहेन्द्रकूटं, स्त्रीदीर्घकूटम्, योनिकूटम्, राशिकूटम्, ग्रहमैत्रीकूटम्, वश्यकूटम्, रज्जुकूटम्, वेधाकूटम्, वर्णकूटम्, नाडीकूटम्, इत्यादिकं अवेक्षणीयम् ।"

गुरुः ज्योतिःशास्त्रविधानज्ञः तदा अकिञ्चिद्ज्ञः इव बकुलां प्रश्नयति ।

मूलम्

**गुरुकृतपद्मावतीश्रीनिवासविवाहयोगाद्यानुकूल्यविचारः**

**बृहस्पतिरुवाच—**

**गोत्रं यद्वेङ्कटेशस्य तन्ममाचक्ष्व भामिनि ।**
**नक्षत्रं च वरारोहे कथ्यतामिति चाब्रवीत् ॥ १४१ ॥**

**कल्याणकाण्डदीपः**

अथ बृहस्पतिः राजकृतानादरापराधस्य सभायां शिक्षां कुर्वन्निव स्वचित्तशुद्ध्यै स्वचित्त-स्थितकोपकालुष्यनिष्कासनाय शुकमुखेन कोपकारणं प्रकटीकारयन्नाह **गोत्रमित्यादिना** । अथाह बकुळा— किं भवद्भिर्न ज्ञातम् ? इति ।

**मूलम्**

**सा तस्य वचनं श्रुत्वा किञ्चित्कोपान्विताऽब्रवीत् ।**

**बकुलोवाच—**

**ब्राह्मणाः सत्यसम्पन्नाः कलौ मिथ्याप्रवादिनः ॥ १४२ ॥**

**कल्याणकाण्डदीपः**

अथ बृहस्पतिः— न ज्ञातं मया इति । अथाह बकुळा— **ब्राह्मणा इति** । "ब्राह्मणाः सत्यसम्पन्नाः" इत्ययं प्रवादो गते कृतादिद्वापरान्ते काले स्थितः । "कलौ स प्रवादो गत" इति । मिथ्या प्रवादो येषामिति मिथ्याप्रवादिनः ।

**मूलम्**

**जानन्तोऽपि महाराज न वदन्ति हिताहितम् ॥ १४३ ॥**

**कल्याणकाण्डदीपः**

तत् कुतः ? इत्यत आह **जानन्तोऽपीति** । **हिताहितं** यथावद् ज्ञातस्य वचनं राजादिसर्वेभ्यो हितम् । अवचनं च अहितम् । हितं चाहितं च हिताहितम् । 'विप्रतिषिद्धं चे'ति समाहारः । एतज्जान-न्तोऽपि न वदन्ति, तूष्णीमासते । अस्तु नाम, वरगोत्रादिकमज्ञातवत् । कन्यागोत्रादिकमज्ञातमिति तैः शक्यते वक्तुम् । "सभा वा न प्रवेष्टव्या वक्तव्यं वाऽसमञ्जसम्" इत्यादेरर्थः अस्यां सभायां न प्रवर्तत इति शुकं निरीक्ष्योवाच बकुळा । तदपि पूर्वमेव न वच्मीति । एवं बृहस्पतिनोक्ते किमेवं राजपुरोहितयोः मनोभङ्ग इत्यालोचयामास बकुळा ।

**गूढकर्तृकव्याख्यानम्**

गुरुः— "हे मानिनि ! श्रीवे[illegible]स्य गोत्रं नक्षत्रं च किम् ? ब्रूहि" इति ।

बकुळा तद्वचनश्रवणे कुपिता "किमेतत् भो ! भवतामपि अज्ञातम् ? अलं तूष्णीं भवतु ।"

गुरुः— "नैव । न ज्ञातं मम । उच्यताम् ।"

बकुला— "ब्राह्मणाः सत्यसम्पन्नाः खलु । इदं पूर्णकालिकं द्वापरयुगीयमेव । अद्य कलि-युगम् । प्रायः सर्वेऽपि विप्राः अनृतं वदन्ति । राज्ञः हितं जानन्तोऽपि यथार्थं न वदन्ति । तूष्णीं आसते । महाराज ! अस्तु नाम वरगोत्रादिकं अज्ञातवत् । कन्यागोत्रादिकमपि तैः शक्यते वक्तुम् । "सभा वा न प्रवेष्टव्या वक्तव्यं वा समञ्जसम्" इत्यादिकं भवादृशानां वेद्यमेव खलु । एतादृशं सर्वं एतत्सभायां न प्रवर्तते इति भाति" इति शुकमुखं निरीक्ष्य अवदत् ।

**मूलम्**

**शुक उवाच—**

**अविश्वासस्तु विप्राणां क्षत्रियाणां वरानने ।**
**धर्मोऽप्यधर्मतामेति ह्यधर्मो धर्मतां गतः ॥ १४४ ॥**

**कल्याणकाण्डदीपः**

तदा शुक आह— **अविश्वास इति** । हे वरानने ! युक्तवचने कलौ विप्राणां वचने क्षत्रि-याणामविश्वासः । तथा च "श्रोतर्यप्रतिपत्तौ तु वक्तुर्वाक्यं वृथा भवेत्" इति न्यायात् किमुक्त्वा इति तूष्णीम्भाव इति । विप्रवाक्येऽविश्वासः अन्यत्र विश्वासः इति ।

**मूलम्**

**तस्मात् त्वया महाभागे कथनीयं हिताहितम् ॥ १४५ ॥**

**कल्याणकाण्डदीपः**

अब्राह्मणपुलिन्दिनीवाक्ये विश्वासात् सर्वमिदं कार्यं प्रचरति । न कुलाचार्यवाक्यविश्वासात् । अतः त्वयैव वक्तव्यमित्याह— **तस्मादिति** ।

**गूढकर्तृकव्याख्यानम्**

शुकः बकुलोक्तिं श्रुत्वा सभाप्राप्त-अवनतिं दृष्ट्वा सभामानं रक्षन् एवं समाधानं वक्ति— "वरानने ! शृणु । त्वदुक्तं सत्यम् । अभ्युपगच्छामः । अपि तु त्वदुक्तरीत्या जानन्तोऽपि वयं अवक्तव्यमिति अस्मदाशयः । कुतः ? अद्य कलियुगम् । विप्रवचने सामान्यतः क्षत्राणां अविश्वासः । अतःपूर्वं स्वयमुक्तं चेत् गोत्रादिकं विश्वासो न भवेत् । यदा अविश्वासः, वक्तुः उक्तिः वृथा स्यात् ।

एवं न्यायसत्त्वात् उक्त्वा किं फलं इति तूष्णीम्भावः । एतावदेव विना पुनः किमपि नास्ति । किञ्च विप्रवाक्ये अविश्वासः इतरवाक्ये विश्वासः कुतः ? "धर्मोऽप्यधर्मतामेति अधर्मो धर्मतां गतः" । इदानीन्तनकाले धर्मो नाम अधर्मो जातः । अधर्म एव अद्य धर्मः भवति । किन्तु कर्तुं भवति । इदं सर्वं कालमहिमा ॥ पश्य । अब्राह्मणी पुलिन्दा । तद्वाक्ये विश्वासः । तदुक्तिप्रकारेणैव इदानीं सर्वमपि प्रचरति । वंशपरम्परागतकुलाचार्यवचनप्रकारेण प्रचरति इति जानासि किम् ? नैव । विद्यमानं एवम् । महनीये ! अद्य त्वमेव हिताहितं ब्रूहि ।"

एतेन राज्ञा तोण्डिमानेन पुरोहितः अवधीरित इति मत्वा तदा आकाशतोण्डिमानयोः विवेको जातः । तेन पुरोहितश्च निर्मलचित्तो जातः ।

**मूलम्**

**बकुलोवाच—**

**नक्षत्रं श्रवणं तस्य गोत्रं वासिष्ठसंज्ञिकम् ।**
**ऊचुः पुरातना मत्स्यकूर्मकृष्णादिरूपिणः ॥ १४६ ॥**

**राजोवाच—**

**गोत्रमत्रेर्महाभाग नक्षत्रं मृगशीर्षकम् ।**
**सीतासत्यादिरूपायाः पद्मावत्या विदुर्बुधाः ॥ १४७ ॥**

**कल्याणकाण्डदीपः**

अनेन संवादेन वृथैव राजसभावेन राज्ञा पुरोहितोऽवधीरित इति राज्ञ अचातुर्यं सभाव्यज्ञासीत् । अनेन राजा तोण्डिमानोऽपि गुरोरिदमनुशासनमिति प्रसन्नो न रुष्टः । तेन पुरोहितश्च निर्मलचित्तः ।

**गूढकर्तृकव्याख्यानम्**

बकुला— "गुरवः ! श्रीनिवासः श्रवणे जातः । वसिष्ठं गोत्रम् । स च मत्स्य-कूर्म-वराह-वामन-त्रिविक्रम-नारसिंह-राम-भार्गव-कृष्णादिरूपी इति पुरातना ज्ञानिनो वदन्ति ।"

आकाशः— "गुरो ! पद्मागोत्रं अत्रिगोत्रम् । मृगशीर्षनक्षत्रम् । पद्मा सीता सत्यास्वरूपा इति ज्ञानिनः ।"

मूलम्

उभयोर्वचनं श्रुत्वा गुरुर्योगं विचिन्त्य सः ।
हर्षोद्रिक्तमना भूत्वा सत्यमाह महामतिः ॥ १४८ ॥

गुरुरुवाच—

नाडीयोगं विशेषेण[1] सूत्रकूटं[2] च भूमिप ।
योनिकूटं विधानज्ञो ग्रहाश्च शुभदर्शनाः ।
सर्वं विचार्य भूपाल स्वार्यभावं समाश्रितः ॥ १४९ ॥

१. विशेषतः । २. चानुकूलं ।

कल्याणकाण्डदीपः

**उभयोरिति** । मासे त्वरितलग्नयोगम् । अथ उभयोर्योगं कुलगोत्रसूत्रप्रवरनक्षत्रैः योगम् । अपूर्वसम्बन्धलक्षणं पाणिग्रहणम् । **विधानज्ञः** दैवज्ञः । सूत्रकूटं **नाडीयोगं** कन्यकाकण्ठसूत्रात्मकं नाडीयोगं विशेषेण विचिन्त्यं नाडीकूटं कन्यकाकण्ठसूत्रं ज्ञेयम् । "तस्मात् चिन्तयेत् पूर्वमेव" इत्युक्तेः । **योनिकूटं** च योनिभ्यां कूटं सानुरागसजातीयसम्बन्धं विचिन्त्य उभयोर्विवाहे ग्रहाः **शुभदर्शनाः** शुभदृष्टयः इत्याह इति शेषः । माघफाल्गुनवैशाखज्येष्ठाः विवाहे शुभा इति वैशाखेन । शुक्लपक्षः श्रेष्ठ इति शुक्लपक्षतः । "सोमसौम्यगुरुशुक्रवासराः सर्वकर्मसु भवन्ति सिद्धिदाः" इति शुक्रवासरेण । "रोहिणीमृगमघास्तिस्र उत्तराहस्तस्वातीमूलानुराधारेवत्यः सर्वसम्मताः" इत्युक्तेः उरुत्तराफल्गुनीभ्यां मैत्रपरममैत्राभ्यां नक्षत्रेण ।

तथा विलम्बिसंवत्सरवैशाखशुद्धदशमीशुक्रवासरे उत्तराफल्गुन्योः रात्रौ त्रयोदशघटिकायामाग्नेयनामकनिशामुहूर्तगकुम्भलग्नेन च योगं चन्द्रकुलैककुलत्वात् कुलेन क्षत्रियैकजातित्वाज्जात्या आत्रेयवासिष्ठाविति गोत्रभेदात् गोत्रेण । आत्रेयार्चनाश्यावाश्वस्य इति 'वासिष्ठेन्द्रप्रमदाभरद्वस्वि'ति त्र्यार्षेयप्रवरभेदात् प्रवरेण, 'सौम्यार्कीसुहृदौ समौ' कुजगुरुशुक्रस्य शेषावरीत्युक्ते मृगश्रवणाभ्यां वृषभमकरराश्यधिपत्योः शुक्रार्क्योर्मित्रत्वात् पञ्चगुणा इति । राशिभ्यां 'हस्तरेवतीपुनर्वसुपुष्यस्वातीमृगश्रवणाश्विन्यनुराधाः देवगणाः' इति गुणैक्यात् षड्गुणा इति गुणेन । मृगशिरनक्षत्रस्य श्रवणस्य च मध्यमचरमनाडीत्वात् तद्भेदादष्टौ गुणा इति नाडीभ्यां 'अश्वगजाजीसर्पिणी'त्यादिना मृगस्य सर्पिणीयोनित्वात् 'गोषण्डवानरो हरी'त्यादिना श्रवणस्य वानरयोनित्वात् योनिभ्यामित्येवं योगो ज्ञेयः ।

**स्वार्यभावमिति** । अन्यदा अन्यत्र तोण्डिमाने स्वयं सङ्क्रामिते स्वीयमार्यभावं स्वनियतकार्यवशादाश्रित इत्यर्थः ।

### गूढकर्तृकव्याख्यानम्

गुरुः ततः वधूवरयोः योगं विचिन्त्य सर्वथा वधूवरजातकयोः आनुरूप्यं शुभप्रदत्वं मत्वा आनन्दितः, "महाराज ! नाडिकूट-सूत्रकूट-योनिकूटादीनि अनुकूलानि । योनिकूटं नाम सानुराग-सजातीयसम्बन्धः । सः अनुकूलः । उभयोः विवाहे ग्रहाः सर्वे शुभदृष्टयः । माघ-फाल्गुन-वैशाख-ज्येष्ठाः विवाहे शुभाः प्रशस्ताः । वैशाखे शुक्लपक्षः श्रेष्ठः । सोमसौम्यगुरुशुक्रवासराः सर्वकर्मशुभाः । इति शुक्रवारेण रोहिणी-मृग-मघाः तिस्रः । उत्तरा-हस्त-स्वाती-मूल-अनुराधा-रेवत्यः सर्वसम्मता इत्युक्तेः उत्तराफाल्गुनीभ्यां मैत्र-परममैत्राभ्यां नक्षत्रे तथा विलम्बिसंवत्सरे वैशाखशुद्धदशमी शुक्रवारे उत्तराफाल्गुन्योः रात्रौ त्रयोदशघटिकायां आग्नेयनामक-निशामुहूर्तग-कुम्भलग्ने च योगम् ।

चन्द्रैककुलत्वात् कुलेन, क्षत्रियैकजातित्वात् जात्या आत्रेयवासिष्ठाविति गोत्रेण आत्रेयानस-श्यावाश्य इति वासिष्ठेन्द्रप्रमदाभरद्वस्विति त्र्यार्षेयप्रवरभेदात् प्रवरेण, सौम्यार्कासुहृदौ समौ । 'कुज-गुरुशुक्रस्य शेषावरी'त्युक्तेः । मृगश्रोणाभ्यां वृषभमकरराश्यधिपत्योः शुक्रार्कयोः मित्रत्वात् पञ्च गुणा इति राशिभ्यां, हस्तरेवतीपुनर्वसुपुष्यस्वातीमृगश्रवणाश्विन्यनुराधा देवगणा इति गणैक्यात् षड्गुणा इति गणेन, मृगशिरानक्षत्रस्य श्रवणस्य मध्यमचरमनाडीत्वात् तद्भेदात् अष्टौ गुणा इति नाडीभ्याम्, अश्वगजअजीसर्पिणीयोगित्वात्, 'गोषण्डवानरो हरी'त्यादिना श्रवणस्य वानरयोनित्वात् योनिभ्यां इत्येवं योगो ज्ञेयः ।

भूपाल ! सर्वं विचार्य अन्यत्र तोण्डिमाने स्वयं सङ्क्रामितं स्वीयं आर्यभावं स्वनियतकार्यवशात् आश्रितः सन् बन्धुमित्राद्यैः प्रभो कन्यादानं कुरु ।

आकाशः गुरुवाक्येन विचक्षणः अत्यन्तभक्त्या स्वार्यभावं समाश्रितः ।

### मूलम्

**सम्मन्त्र्य बन्धुमित्राद्यैः कन्यादानं कुरु प्रभो ।**
**एवं गुरुवचः श्रुत्वा विचार्याशु विचक्षणः ।**
**भक्त्या परमया राजा स्वार्यभावं समाश्रितः ॥ १५० ॥**

ज्ञातिबान्धवसम्बन्धिसुहृन्मित्रजनैर्युतः ।
मन्त्रं चकार राजेन्द्रः कन्यादाननिमित्तकम् ॥ १५१ ॥

ते सर्वे बन्धुवर्गाश्च राजानं प्रत्यपूजयन् ।
सभां च कारयामास रत्नसिंहासने स्थितः ॥ १५२ ॥

वाचयित्वाऽथ पुण्याहं कन्यानिश्चयकारणात् ।
ददौ दक्षिणताम्बूलभूभूषणगवां गणम् ॥ १५३ ॥

**कल्याणकाण्डदीपः**

**दक्षिण** इति जनकसम्बोधनम् । "च्छन्दोभङ्गं न कारयेत्" इति ऐच्छिको वा ह्रस्वः ।

**मूलम्**

भुजमुद्धृत्य राजेन्द्र सभामध्ये वचोऽब्रवीत् ॥ १५४ ॥

राजोवाच—

पद्मावतीं प्रदास्यामि श्रीनिवासाय शार्ङ्गिणे ।
यूयं बन्धुगणाश्चात्र दयां [1]कुर्वन्तु मां प्रति ॥ १५५ ॥

१. कुरुत ।

प्रतिज्ञामकरोदित्थं कन्यार्थे वेङ्कटेशितुः ।
स चोवाच महाराजा गुरुं [1]गुरुप्रियः सदा ॥ १५६ ॥

१. गुरुजनप्रियः ।

राजोवाच—

किं कार्यं वद विप्रेन्द्र सङ्कल्पानन्तरं मया ।
राजानमब्रवीद्राजन्नङ्गिरा देवतागुरुः ॥ १५७ ॥

बृहस्पतिरुवाच—

विलिख्य पत्रिकां राजन् श्रीनिवासाय विष्णवे।
विप्रं प्रेषय राजेन्द्र [1]तेषामागमने नृप ॥ १५८ ॥

[2]स गुरोर्वाक्यमाकर्ण्य राजा गुरुमभाषत ॥ १५९ ॥

१. तस्यागमनकारणात्। २. स्वगुरो-।

**गूढकर्तृकन्याख्यानम्**

ज्ञातिबान्धवसुहृन्मित्रजनैः युतः कन्यादाननिमित्तकं मन्त्रालोचनं चकार। ते सर्वे बन्धुवर्गाः आकाशं प्रत्यपूजयन्। सभां च कारयित्वा रत्नसिंहासने स्थित्वा कन्यानिश्चयकारणात् पुण्याहवाचनं कारयामास। ततः सभामध्ये भुजमुद्धृत्य सर्वसमक्षं "बान्धव-आप्त-मित्रजनाः! अहं शार्ङ्गपाणिने श्रीनिवासाय मम पुत्रीं पद्मां प्रदास्यामि इति इच्छामि। यूयं सर्वे मयि दयया अनुमोदद्ध्वम्" इति प्रार्थ्य, तत्प्रकारेण श्रीनिवासाय पद्मां दास्यामीति सङ्कल्पयामास।

ततः गुरुं प्रति "गुरुवर्य! सङ्कल्पानन्तरं पुरतः किं कार्यम्? उच्यताम्।

गुरुः— "राजन्! सर्वान्तर्यामि-श्रीनिवासाय शुभपत्रिकां विलिख्य अत्र श्रीनिवासागमनाय योग्यविप्रं प्रेषय" इत्यवदत्।

**मूलम्**

राजोवाच—

किं लेख्यं [1]वर्तते विद्वन्नप्राकृतशरीरिणः।
तथापि लेखनं यत्तु [2]तल्लिख्ये गुरुसत्तम ॥ १६० ॥

१. प्राकृतैः २. तद्ब्रूहि।

**कल्याणकाण्डदीपः**

**तथापि लेखनमिति**। लोकसङ्ग्रहार्थमिति शेषः।

**मूलम्**

आकाशराजवचनं श्रुत्वा गीष्पतिरादरात्।
लेख्यांशं बोधयामास राज्ञस्तस्य महात्मनः ॥ १६१ ॥

**श्रीनिवासं प्रति वियन्नृपलिखितविवाहपत्रिकाप्रकारः**

गुरूपदिष्टमार्गेण लेखयामास पत्रिकाम् ।
अप्राकृताय नित्याय सच्चिदानन्दमूर्तये ॥ १६२ ॥

स्वतन्त्रायाद्वितीयायानन्तरूपाय शार्ङ्गिणे ।
भक्तप्रियाय भक्तैकवेद्योपादेयरूपिणे ॥ १६३ ॥

देवाधिदेवपूज्याय ब्रह्मपूज्याय विष्णवे ।
श्रीनिवासाय कृष्णाय वेङ्कटाचलवासिने ॥ १६४ ॥

साङ्गैः सर्वैश्च वेदाद्यैरागमैः सपुराणकैः ।
अवेदितानन्तगुणकर्मणे श्रीधराय ते ॥ १६५ ॥

[1]आशीर्वादं मया प्रोक्तं क्षेममालिख्यतेऽनघ ।
वयं कुशलिनः सर्वे भवतां क्षेममङ्गलम् ॥ १६६ ॥

१. आशीर्वादं करिष्यामि बन्धुत्वात्ते सुरोत्तम ।

लेखितव्यं विशेषेण बन्धुत्वात् पुरुषोत्तम ।
त्वत्पादपद्मसंवीक्षाकाम आकाशनामकः ॥ १६७ ॥

त्वदाश्रयं समाकाङ्क्षल्लेखयाम्यद्य माधव ।
स्त्रीपुत्रभ्रातृभिः साकं सर्वे कुशलिनो वयम् ॥ १६८ ॥

त्वदनुग्रहमात्रेण वसामोऽत्र हरेः पुरे ।
सर्वेषां भवतां क्षेमं पत्रद्वारा निबोधय ॥ १६९ ॥

चैत्रशुक्लत्रयोदश्यामेतत्पत्रं विलिख्यते ।
[1]अनन्तरं पद्मजातां दास्यामीति मतिर्मम ॥ १७० ॥

१. कन्यां पद्मावतीं तुभ्यं ।

तामङ्गीकुरु गोविन्द विवाहविधिपूर्वकम् ।
शुको वेत्ति गुरुर्वेत्ति हृदयं मम सर्वदा ॥ १७१ ॥

मा कुरुष्वात्र सन्देहं कन्यार्थं पुरुषोत्तम ।
वैशाखशुद्धदशमी शुक्रवारे शुभे तिथौ ॥ १७२ ॥

**कल्याणकाण्डदीपः**

**शुभे तिथाविति** । तिथिद्वयोरिति अमरवचनात् साधुः ।

**मूलम्**

बन्धुभिः सह सम्प्राप्य मामुद्धृत्यानुगैः सह ।
हर्षेण पाणिग्रहणं कर्तव्यं मे मनोगतम् ॥ १७३ ॥

अधिकं लेखनीयं मे किञ्चास्ति पुरुषोत्तम ।
शुको वदति तत् सर्वं तत् सत्यं कुरु केशव ॥ १७४ ॥

**कल्याणकाण्डदीपः**

**शुको वदतीत्यादि** । यद्वक्तव्यं तत् सर्वं शुको वदतीत्यर्थः ।

**गूढकर्तृकव्याख्यानम्**

आकाशः— "गुरुवर ! किं लेखनीयम् ? वयं तु प्राकृताः पाञ्चभौतिकशरीरिणः । सः श्रीनिवासः अप्राकृतशरीरी प्रकृतिसम्बन्धरहितः । तादृशाय कथं लेख्यम् ? तथापि लेखनप्रकारं वद ।"

गुरुः— तदा आकाशस्य लेख्यांशं बोधितवान् । आकाशः गुरूक्तिप्रकारेण पत्रं लिखति—

प्रकृतिसम्बन्धरहिताय उत्पत्तिनाशरहिताय सच्चिदानन्दस्वरूपाय सर्वस्वतन्त्राय अद्वितीयाय अनन्तानन्तनामरूपक्रियावते शार्ङ्गधराय भक्तप्रियाय भक्तैकमार्गेण वेद्यरूपाय उपादेयगुणरूपाय देवोत्तमपूज्याय ब्रह्मणा पूज्याय सर्वान्तर्यामिणे सदा लक्ष्म्याः आवासस्थानभूताय सकलदुरितापहारकाय वेङ्कटाचले वसते वेदवेदाङ्गादिसकलशास्त्रसकलपुराणैश्च अविज्ञात-अनन्तगुणकर्मणे श्रीदेवीं सदा आत्मवक्षसि धृतवते श्रीनिवासाय ते भवतः पादारविन्दयुगलं वीक्षितुकामः आकाशोऽहं अद्य तव बन्धुत्वात् देवदेवोत्तम ! ते आशीर्वादं करिष्यामि ।

माधव ! तव आश्रयं इच्छन् लिखामि । अत्र वयं सर्वेऽपि स्त्रीपुत्रभ्रातृभिः साकं कुशलिनः । भवतः अनुग्रहेणैव अत्र नारायणपुरे वसन्तः, भवत्सर्वेषां क्षेमं पत्रमुखेन तदा तदा सूचयन् भव ।

इदानीं चैत्रशुद्धत्रयोदश्यां इदं पत्रं लिख्यते । ते मम दुहितरं पद्मां प्रदातुं इच्छामि । अतः त्वं विवाहोत्सवे विधिपूर्वकं तां वेदप्रतिपाद्य श्रीनिवास अङ्गीकुरु । मम हृद्गताभिप्रायं सर्वमपि शुकः गुरुश्च वित्तः । कन्यास्वीकारे संशयो माऽस्तु । पुराणपुरुषोत्तम ! किमस्ति अधिकं लेखनीयं ते ?

महानुभावाय समस्तकल्याणगुणसिन्धवे नित्यस्वरूपाय सत्यमूर्तये सुखस्वरूपिणे जगतः सृष्ट्याद्यष्टककर्तृत्ववते ते आशिषः सन्तु ॥

**मूलम्**

**इत्याशिषः सन्तु महानुभाव ते**
**समस्तकल्याणगुणार्णव प्रभो ।**
**नित्याय सत्याय सुखस्वरूपिणे**
**समस्तलोकप्रभवे महात्मने ॥ १७५ ॥**

**इत्थं लिखित्वा वरपत्रिकां शुभां**
**आकाशराजो जगदीशसन्निधिम् ।**
**सम्प्रेषयामास शुकं महान्तं**
**सपुत्रमित्रः सहबान्धवानुगाः ॥ १७६ ॥**

**क्रोशमात्रमुपागम्य शुकं वचनमब्रवीत् ।**

**राजोवाच—**

**येन केन प्रकारेण तस्य चित्तं [1]समाश्रय ॥ १७७ ॥**

**[2]कोटिं वा अर्बुदं वाऽपि लक्षं वाऽयुतमेव च ।**
**दास्यामि द्रव्यनिचयं नात्र कार्या विचारणा ॥ १७८ ॥**

१. वशीकुरु । २. अयुतं खर्वलक्षं वा कोटिं वाऽर्बुदमेव वा ।

### कल्याणकाण्डदीपः

'क्रोशमात्रम्' इत्यादि 'विचारणा' इत्यन्तपद्यद्वयस्येत्थं योजना। क्रोशमात्रं **उपागम्य** उपसृत्य, **अयुतं** दशसाहस्रं वराहम्, तस्यापर्याप्तत्वे लक्षं वा, तस्याप्यल्पत्वे कोटिं वा, अनेनाप्यप्रसादेऽर्बुदं वा, इत्येवंसङ्ख्यया द्रव्यनिचयं दास्यामि। अत्र एतद्दानशक्तौ विचारणा न कार्या। यदि च 'पयोधि-कन्याप्रणयिन्युदारे न दानमर्थोपचितेषु युज्यते' इति न्यायाद्दानोपानोऽनुपायश्चेद्येन केन प्रकारेण। साधू राजा पुरातनः। किञ्च सा कन्या लोकोत्तरा। तत्रापि तवैव भागः। अपि च अस्मभ्यं रोचते। अन्यथा महान् विषादः। मया च प्रतिश्रुतं भाषितं सत्यं कुरु इत्याद्येवं दीने मयि दयोत्पादनलोभं न अकीर्तिः। भक्ताभिलषितकरणभक्तभाषितसत्यकरणप्रणिपाताद्यनेकोपायेषु येन केन निरपायोपायेन तस्य चित्तं समाश्रय गृहाण इत्येवं शुकं वचनमब्रवीदिति। अथ शुको बाढमिति सान्त्वयामास। अथ राजा परावृत्य पुरीं गतः।

### गूढकर्तृकव्याख्यानम्

एवं शुभपत्रिकां विलिख्य शुकद्वारा प्रेषयामास। शुकप्रेषणे पुत्रभ्रातृमित्रबन्धुजनैः सह आकाशः तं शुकं क्रोशदूरं अन्वगच्छत्। तदा मुनिमाह— "मुनिवर्य! येन केन श्रीनिवासचित्तं वशीकुरु। दशसाहस्रं ददामि। तस्य अपर्याप्तत्वे लक्षं वा। तस्यापि अनल्पत्वे कोटिं वा। तेनापि अप्रसादे अर्बुदं वा द्रव्यं दातुं सिद्धोऽस्मि। अत्र सन्देहो माऽस्तु। यदि च "पयोधिकन्या प्रणयिनि उदारे न दानं अर्थोपचितेषु युज्यते" इति न्यायात् दानोपायो अनुपायश्चेत् राजा साधुः पुरातनः। किञ्च कन्या लोकोत्तरा। तत्रापि तवैव भागः। अपि च नो रोचते। अन्यथा महान् विवादः। मया च प्रतिश्रुतं भाषितं सत्यं कुरु इत्याद्येवं दीने मयि दयोत्पादन-लोभन-अकीर्ति-भक्ताभिलषितकरण-भक्तभाषितसत्य-करण-प्रणिपाताद्यनेकोपायेषु येन केन निरपायोपायेन तस्य चित्तं समाश्रय।"

ततः शुकः 'बाढम्' इति सान्त्वयामास। शेषाचलं प्रति प्रस्थितः।

### मूलम्

**एवमुक्तो [1]महीपेन शुकः शेषाचलं प्रति ॥ १७९ ॥**

**[2]मध्यन्दिने भानुगतिर्महात्मा**
**समागतस्तत्र शुकः सशिष्यः।**

१. महीदेवो गतः। .. मध्यङ्गते भानुमतौ महात्मा।

'गुरुद्वयेनानुगतो विरागी
तद्दर्शनाल्हाद'ह्रताघ एकः ॥ १८० ॥

१. हरेर्जनन्यानुगतो । २. गताध्वशोकः ।

**कल्याणकाण्डदीपः**

'एवमुक्तो महीपेन' इत्यादि 'ह्रताघ' इत्यन्तमेकं वाक्यम् । अथैवं महीपेनोक्तो **विरागी** वाहनादि-भोगपरित्यागी । **गुरुद्वयेन** दैवमानुषभेदेन गुर्वोः कुलगुरुसुरगुर्वोः द्वयेनानुगतः । यद्वा गुरुद्वये नानुगतः इति पदविभागः । गुर्वोः महात्मभिरपि त्यक्तुमशक्यतयां महतोः द्वये देहगेह्यभिमानेनानुगतः तमनुसृत्य प्रवर्तमानौ न भवतीति तथा न समासः । तथा चैकादशे भागवते द्वितीयेऽष्टात्रिंशाच्छ्लोके "अविद्यमानो ह्यवभाति हि द्वयोर्ध्यातुर्धिया स्वप्नमनोरथो यथा" इत्यादेः तात्पर्यम् । " 'आत्मनो देहगेहादिद्वयशब्देन भण्यते' इत्यादि हरिवंशेषु" इत्यन्तम् । उपनिषदि च "प्रपञ्चो यदि" इत्यादि स्वाश्रमपर्यन्तं राजगोप्य-श्रीनिवासस्वस्वगोष्ठीभिः तोषयताऽनुगम्यमानः । **एकः** अनुगतगुरुद्वयमनुज्ञाप्य सन्निवर्त्य स्वप्रधानः सन् स्वाश्रमात् सशिष्यो महात्मा **भानुगतिः** भानोर्गतिरिव गतिर्यस्य तथा । ते वनेन पृथिवीं पुनानो हरिपदं दर्शयन् दिग्विभासी वैशाखशुद्धषष्ठ्यां सोमवासरे मध्यन्दिनेऽपि कार्यवशात् । **तद्दर्शनाह्लाद-ह्रताघः** भाविना भगवद्दर्शनेन य आह्लादः चन्द्रिकाजातीयस्तेन ह्रतं परिह्रतं अघं मार्गे घर्मदुःखं यस्य सः तथा सन् शेषाचलं प्रति समागत इत्यर्थः । "दुःखं व्यसनेष्वघम्" इत्यमरः ।

यद्यपि,

> "बृहस्पतावुपाध्याये पितृराज्ञोः पितामहे ।
> वर्णज्येष्ठे पितृव्ये च भ्रातृश्वशुरयोरपि ॥
>
> मातामहे मातुले च ज्येष्ठसोदर्य एव च ।
> एतत्पत्न्यश्च महति दीर्घसंयुक्तशीर्षके ।
> दुर्वहायामलघुनि गुरुः स्याद्वाच्यलिङ्गकः ॥"

इति कोशात् राजबृहस्पतीभ्यामिति अर्थो लभ्यते, तथाऽपि स मन्दमनोरमः कुतः पूर्वमेव परा-वृत्त्युन्नायकक्रोशमात्रमुपागम्येति गम्यावधि येन केनेत्यादि विचारेणेत्यन्तवक्तव्यवचनाख्यलिङ्गद्वयं कथं न ज्ञेयं सूक्ष्मदृष्टिभिः ? इति ।

दैवमानुषभेदेन गुरुद्वयमेलनं च दैवमानुषभेदेन वसिष्ठद्वयमेलनवद्बोध्यम् । तदुक्तं रामायणे उत्तरे प्रथमसर्गे पञ्चश्लोके—

कश्यपोऽत्रिर्वसिष्ठश्च विश्वामित्रोऽथ गौतमः ।
जमदग्निर्भरद्वाजः ते सप्त ऋषयोऽगमन् ॥ इति ।

अस्य व्याख्या— यद्यपि वसिष्ठः पुरोहितो नित्यं रामसन्निहितः । आगतश्च स एव नापूर्वः । अतो मुनिभिः सहोत्तरदिशो नूतनतया रामाभिनन्दनायागमनोक्तिर्न सङ्गच्छते । तथाऽपि योगवैभवा-द्दैवमानुषभेदेन अगस्त्यादिवत्साधनानुष्ठानार्थं द्विरूपत्वादागमनोक्तिरिति । तथा अत्रापि गुरुः इन्द्रभवने देवकार्यवशात् ज्योतिर्मण्डले लोकरक्षार्थं आकाशराजभवने स्वपौत्रीपद्मासहायेन श्रीनिवासप्रसादार्थं पौरोहित्यव्याजेन नित्यसन्निहितोऽपि विशेषसेवार्थं रूपान्तरेणागत इति ।

अत्र 'एकः' इत्यनन्तरं 'दूरादागतः' इत्यतःपूर्वं वराहानुसारेण कथासन्दर्भशेषः— अथ धरणी-कृतकार्यतया जिगमिषया त्वरयन्त्या बकुळायाः पादाववनिज्य ताभिः पादावनेजनीभिर्नाभिमभिमृश्य, अर्घ्यं दत्वा, सोदकेन अञ्जलिना मुखाक्ष्याद्यभिमर्शनानन्तरं आचामयित्वा, शीतलगन्धहरिद्राकुङ्कुम-सिन्धूराञ्जनपुष्पमालाभिरभ्यर्च्य भद्रचोळदुकूलं पुरतो निधाय सताम्बूल-फलपुष्पं सानेकलड्डुकादि-खाद्यं सहरिद्राङ्कुरतण्डुलं सगजमणितालपत्रमुपायनं दत्वा सन्दर्शितसपद्मा नत्वा, आशीर्गृहीत्वा, पद्माहितङ्करः शुकपद्मामेतां दृष्ट्वा तयेङ्गितसन्दिष्टः प्रस्थितः । यूयमपि कल्याणाभिमुख्यः द्रागागच्छेति उक्त्वा तथैवेति तयोक्ता यथामर्यादं आद्वारमनुसृत्य प्रेषयामास । साऽपि स्वमनोऽनुगामिनीं गुञ्जाभिधानां तुरङ्गीमारुह्य पूर्णकामा हसन्मुखी अञ्जनाचलं प्रतस्थ इति ।

**मूलम्**

**[1]दूरादायान्तमावेक्ष्य वेङ्कटाद्रिशिखामणिः ।**
**माता न चागता कस्मादिति चिन्तापरो हरिः ॥ १८१ ॥**

१. अम्बामवीक्ष्य नायान्तीं ।

**एतस्मिन्नेव काले तु कृष्णद्वैपायनात्मजम् ।**
**ददर्श स शिरःपाणिं कृतकार्यविनिश्चयात् ॥ १८२ ॥**

**शुकं प्राहातिभक्त्यै... आसनादुत्थितो हरिः ।**

**श्रीनिवास उवाच—**

**कार्यं मदीयं विप्रेन्द्र पक्कं वाऽपक्कमेव वा ॥ १८३ ॥**

**श्रीशुक उवाच—**

**कार्यं तव कृपासिन्धो पक्कमेव न संशयः ।**
**शुभवाक्यं ततः श्रुत्वा दण्डवत्प्रणिपत्य तम् ॥ १८४ ॥**

**आलिलिङ्गे शुकं कृष्णो भक्तिहर्षवशं गतः ।**
**अतिचित्रचरित्रात्मा शुकमाह महीपते ॥ १८५ ॥**

**कल्याणकाण्डदीपः**

**शुभवाक्यमिति** । शुकोक्तं तत्र वृत्ततयाऽवदद्वृत्तान्तं वाक्यं श्रुत्वा । **आलिलिङ्ग इति** । इदमालिङ्गनं स्नेहहर्षाधीनं साधारणम् । वक्ष्यमाणं तु स्वात्मप्रदानाङ्गमसाधारणम् । अतो न पुनरुक्तिः । दण्डप्रणामादि विडम्बनमात्रमित्याह— **अतिचित्रचरित्रेत्यादिना** ।

**गूढकर्तृकव्याख्यानम्**

ततः शुकः शिष्यैः मध्याह्ने बकुलया सह गच्छन् वैशाखशुद्धषष्ठीसोमवासरे भगवद्दर्शनं भविष्यति इति आनन्दातिशयात् मार्गश्रमं अननुभवन् शेषाचलं आससाद ।

इतः वेङ्कटगिरौ श्रीनिवासः अम्बा बकुला इतोऽपि नायाता । कुतः ? इति चिन्तयति स्म । एतस्मिन् एव काले तु शिरसि पाणिं कृत्वा आयान्तं शुकं दूरादेव वीक्ष्य निश्चितकार्यं मत्वा उपागतं श्रीनिवासः आसनादुत्थाय अतिभक्त्या प्राह— "विप्रवर्य ! मदीयकार्यं पक्कं वा अपक्कं वा ?"

शुकः— "कृपासिन्धो ! तव कार्यं पक्कमेव, न संशयः ।"

श्रीनिवासः शुकेन यावत् वृत्तं श्रुत्वा दण्डवत् प्रणतः हर्षेण शुकस्य स्वदेहालिङ्गनसौख्यं ददौ ।

**मूलम्**

**श्रीनिवास उवाच—**

**वदन्ति लोका अनृतान् सहस्रान्**
**विवाहकामा नरजन्मनश्च ।**

**ते यान्ति मद्धाम जगत्कुटुम्ब-**
**प्रपालनस्यैव विवाहकामाः ॥ १८६ ॥**

**कल्याणकाण्डदीपः**

एतदेव स्पष्टयति **वदन्तीत्यादिना** । **नरजन्मनः** यस्य कस्यचित् अनाथब्राह्मणस्य । विवाह-कामाः विवाहितारो ये लोकाः । "मातापितृविहीनं तु संस्कारोद्वाहनादिभिः । यः स्थापयति तस्येह पुण्यसङ्ख्या न विद्यते" इति धर्मज्ञलोकाः । **सहस्रान्** बहून् । **अनृतान्** असत्यान् वदन्ति । ते च ते अनृतवादिनोऽपि । "गोब्राह्मणार्थे हिंसायां वृत्त्यर्थे प्राणसङ्कटे । स्त्रीषु नर्मविवाहेषु नानृतं स्याद्धि पातकम्" इति पातकाभावात् मद्धामैव यान्ति । अतः ते महान्ताः । यूयं तु गुर्वादयो जगत्कुटुम्ब-प्रपालनस्यैव विवाहकामाः । सीददेकब्राह्मणकुटुम्बस्थापनरूपं धर्मस्य अन्यत् स्वर्गादिना अलमिति स्वधामदातुरनन्तब्रह्माण्डान्तर्गतानन्तानन्तब्राह्मणकुटुम्बस्थापनस्य ममैव विवाहकामेभ्यस्तेभ्योऽपि महद्भयः । तत्समं किं देयमस्ति इति चिन्तयामीति । यूयं सर्वस्थापकस्य ममापि स्थापयितारः । त्वादृशा दुर्लभाः । "यस्तद्वेद स पितुः पिता सत्" इत्यादेः ।

**मूलम्**

**नरो बिभर्ति स्वं पुत्रं स्वभार्यां स्वजनं [1]तथा ।**
**ब्रह्माण्डं भवनं विद्धन् ब्रह्मा मन्नाभिसम्भवः ॥ १८७ ॥**

**या लक्ष्मीर्मम कल्याणी ये चान्ये मम औरसाः ।**
**चतुर्नवतिलक्षं च जीवराशिरसङ्ख्यया ।**
**एतेषां रक्षणे दीक्षाबद्धोऽहं मुनिसत्तम ॥ १८८ ॥**

१. गृहम् ।

**कल्याणकाण्डदीपः**

अनयोः को विशेष इत्यत आह— **नरो बिभर्तीति** । धर्मसन्तानात्मकैकब्राह्मणोद्वाहने एकस्यैव कुटुम्बस्य स्थापनम् । ममैकस्योद्वाहने तु ब्रह्माण्डान्तर्गतानेककोटिकुटुम्बस्थापनं भवतीति नरोद्वाहन-मदुद्वाहनयोर्विशेष इति भावः । **असङ्ख्ययेति** । राशिसङ्ख्यया जीवाः चतुर्नवतिलक्षं सन्ति । मद्रक्ष-णीयाः प्रत्येकं तु असङ्ख्यया असङ्ख्याः सन्तीत्यर्थः ।

मूलम्

**महाकुटुम्बयुक्तस्य मम कल्याणकारणात्।**
**यन्मिथ्याभाषितं स्वामिंस्त्वयाऽद्य मुनिसत्तम ॥ १८९॥**

**कल्याणकाण्डदीपः**

अत्रेदं तात्पर्यम्। "विवाहे नानृतं पातकम्" इति धर्मस्थितौ सत्यां मत्कुलगोत्रादिकं गुरुणा कुतो नोक्तम् ? इत्येवं गुरुं कटाक्षीकृत्य, अस्तु नाम तेनानुक्तिः। भवता स्वतन्त्र इति ज्ञात्वाऽपि मदधीनः श्रीनिवासोऽविलम्बेन कार्यसिद्धिः मन्मिलित इति यन्मिथ्या भाषितं तस्य फलं दास्यामीत्याह— **महाकुटुम्बयुक्तस्येति**। मम कल्याणकारणात् यत् त्वया **मिथ्या** मिथ्यावचनं **भाषितं** उक्तम्।

मूलम्

**त्वत्कृतस्योपकारस्य प्रतिदातुं न विद्यते।**
**तथाऽपि तव दास्यामि शरीरालिङ्गनं मुने ॥ १९०॥**

**कल्याणकाण्डदीपः**

**त्वत्कृतस्य** तेन मिथ्यावचनेन कृतस्य **उपकारस्य प्रतिदातुं** प्रत्युपकारतया दातुं देयं अनुगुणं न विद्यते इत्यर्थः।

**गूढकर्तृकव्याख्यानम्**

शुकं आह— लोके यस्यकस्यचित् अनाथविप्रस्य विवाहकर्तारः ये तेषां पुण्यसङ्ख्या इह न विद्यते। इति धर्मरहस्यज्ञाः लोकाः बहून् अनृतवादान् कुर्वन्ति। ते च अनृतवादिनोऽपि "गोब्राह्मणार्थे हिंसायां वृत्त्यर्थे प्राणसङ्कटे। स्त्रीषु नर्मविवाहेषु नानृतं स्याद्धि पातकम्" इति पातकाभावात् मद्धामैव यान्ति। अतस्ते महान्तः। यूयं तु गुरवः जगत्कुटुम्बकस्य विवाहकामाः। एकब्राह्मणकुटुम्बस्थापन-रूपधर्मस्य स्वर्गादिफलं अपर्याप्तमिति मद्धामैव दातुः मम अनन्तब्रह्माण्डान्तर्गत-अनन्तानन्तब्राह्मण-कुटुम्बस्थापनस्य ममैव विवाहकामेभ्यः मद्धाम देयमिति किं वाच्यम् ? अतः सर्वजगत्स्थापयितारः भवादृशाः दुर्लभाः। लोके नरः सुतं भार्यां गृहं स्वजनं इत्यादि कुटुम्बं बिभर्ति। अहं तु स्वामी यजमानः ब्रह्माण्डं भवनं लक्ष्मीः मम सौभाग्यवती। विधिर्मे नाभिसम्भवः। अन्ये औरसपुत्राः। चतुर्नवति-लक्षसङ्ख्याका जीवराशिभेदाः। एते मया रक्षणीयाः। प्रत्येकं तु असङ्ख्याताः। एतादृशमहाजग-त्कुटुम्बयुक्तस्य मम कल्याणकारणात्, मुनिवर ! अहं स्वतन्त्र इति मत्वाऽपि श्रीनिवासः मदधीनः,

अविलम्बेन कार्यसिद्धिः, मन्मिलितः, इति यावत् मिथ्या भाषितम्, तावत् त्वत्कृत-उपकारस्य प्रत्युपकर्तुं न शक्यम् । तथाऽपि मुने ! तव मम शरीरालिङ्गनं दास्यामि । मम शरीरात् गरिष्ठं शुभं दातुं अन्यत् किमपि न ।'' एवमुक्त्वा शुकाय आत्माङ्गसङ्गं ददौ ।

**मूलम्**

**मच्छरीराद्गरिष्ठं तु न [१]जानाम्यात्मनो धिया ।**
**एवमुक्त्वाऽङ्गसङ्गं च तस्यादात् पुरुषोत्तमः ॥ १९१ ॥**

**त्वदीयपुण्यस्य न पारमस्ति**
**मदीयसङ्गस्तव पुण्यसम्भवः ।**
**मदङ्गसङ्गान्न गरिष्ठमस्ति**
**मदङ्गसङ्गस्य मदङ्गमेव ॥ १९२ ॥**

**त्वत्पुण्यस्यावधिर्नास्ति मत्सङ्गस्तव पुण्यजः ॥ १९३ ॥**

१. विजानामि ते शुभम् ।

**कल्याणकाण्डदीपः**

**त्वदीयपुण्यस्येति** । ''पुण्यसङ्ख्या न विद्यते'' इत्युक्तेः । **मदीयसङ्गः** मदङ्गसङ्गः । तव पुण्यात् सम्भवो यस्य स तथा । अत एवोक्तं ''स्वात्मानमेवैष ददौ स यस्मात्'' इति । यद्वा, मदः स्वरूपानन्दः तस्य सङ्गः अपूर्वसम्बन्धः अतिशयलक्षणः । **मदङ्गसङ्गादिति** । मदस्य स्वरूपानन्दस्य अङ्गम् अतिशयाकारः तस्य सङ्ग आविर्भावः, तस्मात् । शकन्ध्वादिः पाण्डुरङ्गवत् । शिष्टं स्पष्टम् ।

**मूलम्**

**तथा त्वया कृतं कर्म यथा पूर्वं कपीश्वरः ।**
**सीतानिमित्तं यत्कर्म कृतवान् मारुतात्मजः ॥ १९४ ॥**

**[१]तस्य तृप्तो महाराज दत्तवान् सहभोजनम् ।**
**सत्यलोकाधिपत्यं च सीतावार्तावलम्बिने ॥ १९५ ॥**

**तस्माद्गरिष्ठं ते कर्म मुने तापसपुङ्गव ॥ १९६ ॥**

१. तस्मै प्रादां महादेव सन्तुष्टः ।

**कल्याणकाण्डदीपः**

**तस्माद्वरिष्ठं ते कर्मेति** । क्षेमापेक्षया योगो गरिष्ठः । अतः तत्साधनं कमपि तथेति भावः ।

**मूलम्**

**एवमुक्त्वा सुभद्राणि वाक्यानि विविधानि च।**
**ततः प्रोवाच भगवान् कक्षे किं भाति भानुवत् ॥ १९७॥**

**कल्याणकाण्डदीपः**

**भानुवदिति** । माङ्गल्यपत्रिकायां निविष्टतप्तस्वर्णमयत्वात् वर्तुळं, परिवृतत्वात्, कुङ्कुमाक्तत्वात् अक्षरोन्नायकरेखामयूखत्वात् मध्याह्नसूर्यातपतप्तत्वेनोष्णत्वात्, पद्माननपद्मविकासकत्वात् शुकहृदयाकाशे भासमानत्वात्, शुभोदयहेतुत्वादित्येवं भानूपमत्वात् **भानुवत्** इति ।

**गूढकर्तृकव्याख्यानम्**

"त्वं कियत्पुण्यं कृतवान् इति वक्तुं न शक्यम् । त्वत्कृतपुण्यस्य फलत्वेन तव ममाङ्गसङ्गो लब्धः । एतत्फलानुगुणं त्वदीयकर्म । त्वया यादृशं पुण्यं कृतं तथा त्रेतायां हनूमान् सीतानिमित्तं यत्कर्म कृतवान् तेन तुष्टोऽहम् । तस्मै हनुमते सहभोजनं सत्यलोकस्य अधिपत्यं च दत्तवान् । मुनिवर ! अद्य तव कर्म हनुमत्कर्मणोऽपि गरिष्ठम्" इत्येवमुक्त्वा "शुकमुने ! किं तत् ? किं तत् तव कक्षे भानुरिव भाति ?" इति अवदत् ।

**मूलम्**

**श्रीनिवाससन्निधौ वियन्नृपप्रेषितशुकोक्तविवाहोदन्तः**

**शुक उवाच—**

**राजराजेन लिखिता पत्रिका पुरुषोत्तम ॥ १९८॥**

**प्रोक्तं [1]त्वया महाराज पूर्वमेवास्य कारणम् ।**
**[2]इत्युच्चरन् रमाकान्तः पत्रिकां शिरसा दधौ ॥ १९९॥**

१. ते च महाभाग । २. इत्युक्तः सन् ।

श्रीनिवास उवाच—

कुशली वर्तते राजा भार्या तस्य पतिव्रता।
भ्राता तस्य महाभागः पुत्रस्तस्य विशाम्पतेः ॥ २०० ॥

शुक उवाच—

सर्वं तु कुशलं तस्य भगवन् भूतभावन।
एवमुक्तः पपाठाथ पत्रिकां पुरुषोत्तमः ॥ २०१ ॥

**वियन्नृपं प्रति श्रीनिवासविलिखितशुभपत्रिका**

पठन् हृष्टमना भूत्वा वाचमूचे रमापतिः ॥ २०२ ॥

श्रीनिवास उवाच—

पत्रिका लिख्यते विप्र मयाऽऽकाशनृपाय च।
त्वद्वाचमनुसृत्यैव राज्ञः प्रीतिविधायिका ॥ २०३ ॥

ततः स पुत्रं पुरुहूतमित्रं
पत्रं लिलेखाथ महार्थसंयुतम्।
अत्यन्तसंहृष्टमनःप्रसूचकं
कृष्णावतारे प्रति रुक्मिणीमिव ॥ २०४ ॥

इत्थं स सम्प्रार्थितचित्तवृत्तिः
शुकेन देवोऽपि पुराणमूर्तिः।
तत्पृष्ठभागे पुरुहूतमित्रं
स्वयं लिलेखाथ महार्थसंयुतम् ॥ २०५ ॥

**कल्याणकाण्डदीपः**

तत्पृष्ठभाग इति। स लिखितभागः पृष्ठभागो यस्य तत्पुरःपुटस्य तस्मिन्नित्यर्थः।

### गूढकर्तृकव्याख्यानम्

शुकः— "पुरुषोत्तम ! इयं पत्रिका शुभपत्रिका । राजराज-आकाशेन ते लिखिता । महानुभाव ! अस्य कारणं पूर्वमेव उक्तं खलु ।"

श्रीनिवासः— शुकदत्तपत्रं स्वीकृत्य शिरसा धृत्वा "मुनिवर्य ! राजा राज्ञी तदनुजः तत्पुत्रः एते अपि कुशलिनः ?"

शुकः— "भगवन् ! भूतभावन ! भवदनुग्रहेण तस्य सर्वं कुशलम् ।"

श्रीनिवासः— आकाशलिखितं पत्रं पठितुमुपचक्रमे । पठन् आनन्दितः, "विप्रवर्य ! अद्य अहं आकाशराजाय भवदाशयं अनुसृत्य लिखामि । यया राज्ञः प्रीतिः तथा लेख्यम् ।" इत्युक्त्वा श्रीनिवासः महार्थगर्भितं अत्यन्तमनस्सन्तुष्टिसूचकपत्रं कृष्णावतारे स्वयं रुक्मिणीं प्रति यथा तथा लिलेख ।

### मूलम्

**श्रीनिवास उवाच—**

**राजाधिराजपूज्याय सुधर्मतनयाय च ।**
**नमो नमोऽतिभक्त्यैव क्षेममालम्ब्य [1]तेऽनघ ॥ २०६ ॥**

१. लिख्यते ।

**श्रीनिवासेन बालेन पोष्येण नृपसत्तम ।**
**लिख्यते श्रीनिवासेन शुभविज्ञप्तिगर्भिणी ॥ २०७ ॥**

**श्रीमद्राजाधिराजेन्द्रकिरीटाघृष्टपादुक ।**
**अस्मद्बन्धुवरेण्याथ गुणपूर्णसमृद्धिमन् ॥ २०८ ॥**

**सुधर्मतनयाऽऽकाशनाम्नाऽऽशासु सुकीर्तिमन् ।**
**नमो नमोऽस्तु ते राजन् श्रीनिवासस्य शार्ङ्गिणः ॥ २०९ ॥**

**श्रीनिवासेन बालेन विज्ञप्तिः क्रियते त्वियम् ।**
**भवद्भिर्लिखितं दृष्ट्वा सन्तोषो ह्यभवन्मम ॥ २१० ॥**

**वैशाखशुद्धदशमीशुक्रवारे महोत्सवे।**
**अङ्गीकरोमि राजेन्द्र कन्यां तव विशाम्पते ॥ २११ ॥**

**कल्याणकाण्डदीपः**

लिखितमभिनीय दर्शयति— 'राजाधिराजपूज्याय' इत्यादिना 'राजसत्तम' इत्यन्तेन। राजाधिराजपूज्याय सुधर्मतनयाय च ते नमो नमः। अतिभक्त्यैव पोष्येण बालेन नूतनवयस्केन चिरञ्जीविना श्रीनिवासेन ते पुरातनानां भवतां क्षेमम् **आलम्ब्य** आलम्बनं कृत्वा मयाऽपि क्षेमेण स्थितमिति शेषः। प्रजाक्षेमस्य स्वपुत्रवत् स्नेहेन प्रजापरिपालनपरराजक्षेमावलम्बनत्वादिति भावः। **हे अनघ ! नृपसत्तम !** भवद्भिः वैशाखशुद्धदशमीशुक्रवारे महोत्सव इति लिखितं पत्रं दृष्ट्वा मम सन्तोषमभवत्। तस्मिन् सुमुहूर्ते महोत्सवं यथा भवति, तथा तां कन्यां **अङ्गीकरोमि** प्रतिगृह्णामि।

**गूढकर्तृकन्याख्यानम्**

"राजाधिराजपूज्याय, सुधर्मराजसुताय, अतिभक्त्या प्रणामपूर्वकं इदं पत्रं लिख्यते। श्रीमद्राजाधिराजकिरीटैः घृष्टपादुक ! अस्मद्बन्धुवैरण्यैः आढ्य !, गुणपूर्णसमृद्धिमन् ! सुधर्मसुत ! आकाशनाम्ना दिगन्तविश्रान्तकीर्तिमन् ! तुभ्यं नमः।

बालेन श्रीनिवासेन इयं विज्ञप्तिः। भवत्पत्राभिप्रायं विदित्वा मम सन्तोषोऽभूत्। वैशाखशुद्धदशम्यां भृगुवासरे विवाहोत्सवे तव पुत्रीं पद्मां अङ्गीकरोमि।

**मूलम्**

**यथा पुरा सागरो मे कन्यादानं सुकीर्तिमान्।**
**तथा दत्वा तु मे कन्यां भवेस्त्वं बहुकीर्तिमान् ॥ २१२ ॥**

**यथा वै सागरा [1]राजन् कपिलेन निपातिताः।**
**भगीरथो महाराजो गङ्गामादाय तान् पुरा ॥ २१३ ॥**

१. पूर्वात्।

**उद्धृत्य कीर्तिमापेदे तथा त्वं राजसत्तम।**
**दत्वा मे सुभग[illegible]न्यां तव पूर्वोत्तरं कुलम् ॥ २१४ ॥**

उद्धृत्य बहुलां कीर्तिं लभस्वेतरदुर्लभाम् ।
लिखितव्यं विशेषेण किं तेऽस्ति नृपसत्तम ॥ २१५ ॥

विशेषज्ञोऽसि धर्मात्मा वेत्ति सर्वं शुको मुनिः ।
इति .................... ज्ञेयं प्रणतिपूर्वकम् ॥ २१६ ॥

**कल्याणकाण्डदीपः**

न केवलं दानप्रतिग्रहाभ्यां आवयोरेव महाल्लाभः । अपि तु सर्वेषामपि लोकानामित्याशयेन लिखति 'यथा' इत्यादिना सार्धपद्येन । न केवलं गङ्गावतरणात् सागरभगीरथयोरेव महान् लाभः, अपि तु, सर्वेषां लोकानां तदाख्यानकरणतल्लेखनप्रवचनकीर्तनश्रवणदर्शनस्नानादिभिर्महान् लाभः । तेन तस्य महती कीर्तिः । तथा न केवलमावयोरेव महान् लाभः । अपि तु, सर्वेषामपि पद्माकल्याणाख्यान लेखनप्रवचनकीर्तनश्रवणकरणादिना महान् लाभ इति भावः । तेन तवापि महती कीर्तिरिति भावनीया ।

**गूढकर्तृकव्याख्यानम्**

यथा पुरा समुद्रनाथः मे कन्यां दत्वा सुकीर्तिमाप तथा त्वं कन्यादानेन कीर्तिं लभस्व । पुरा भगीरथः कपिलाख्यभगवता क्रोधाग्निदग्धान् पूर्वजनान् सगरपुत्रान् भुवि गङ्गानयनेन उद्धृत्य यथा कीर्तिमापेदे तथा त्वं तव सुभगां कन्यां दत्वा तव पूर्वोत्तरकुलं उद्धृत्य अनन्यलभ्यकीर्तिं लभस्व ।

राजश्रेष्ठ ! ते लिखितव्यो विशेषः कः ? विशेषज्ञोऽसि । धर्मात्मा शुकः सर्वं वेत्ति ॥ इति श्रीनिवासकृत-साष्टाङ्गप्रणतिपूर्वकं विज्ञापनम् ।"

**मूलम्**

इत्थं लिखित्वा वरपत्रिकां शुभां
[1]आकाशराजो जगदीशसन्निधिम् ।
सम्प्रेषयामास सुरेन्द्रपूज्यं
पुरं नृपेन्द्रस्य वियन्नृपस्य ॥ २१७ ॥

१. शेषाद्रिनाथो मुनिना शुकेन ।

मूलम्

श्रीनिवास उवाच—

अविदित्वा कुलं गोत्रं नाम संस्थानमन्दिरम्।
कथं दास्यति राजेन्द्रः कन्यां मम महीसुरः ॥ २१८॥

कल्याणकाण्डदीपः

शुकस्य मोहं दर्शयितुं पृच्छति अविदित्वेत्यादिना।

गूढकर्तृकव्याख्यानम्

एवं शुभलेखां विलिख्य शुकद्वारा आकाशराजपुरीं प्राहिणोत्। पुनः शुकं पप्रच्छ "मुने! राजेन्द्रः मम कुलगोत्रादिकं, नाम, नक्षत्रनाम, व्यवहारनाम, आवासस्थानं इत्यादिकं अविदित्वा, अविचार्य, मे कन्यां कथं दास्यति ? न जाने।"

मूलम्

श्रीशुक उवाच—

न कुलं न च गोत्रं ते न जन्म मरणं हरे।
न जरा न च वृद्धिश्च न चान्यस्य समाश्रयः ॥ २१९॥

विडम्बमात्रं गोविन्द कुरुषे पुरुषोत्तम।
न तेऽपेक्ष्यं कुलं गोत्रं विदितस्य जगत्पतेः ॥ २२०॥

मम वाक्यात् यद्राजः कन्यां ते सम्प्रदास्यति ॥ २२१॥

मम वाक्यात् जगन्नाथ दयां कृत्वा वियन्नृपे।
इयं च कन्या गोविन्द स्वीकार्या कृपया त्वया ॥ २२२॥

श्रीनिवासाज्ञया शुकस्य वियन्नृपनगरं प्रत्यागमनम्

इति स्तुत्वा शुकस्तीव्रं विसृष्टो हरिणा पुरा।
हरिसन्दर्शनाद्धृष्टहर्षो राजपुरं ययौ ॥ २२३॥

**कल्याणकाण्डदीपः**

**इत्थमित्यादि** । **जगदीश** इति सम्बोधनम् । **आकाशराज इति** । जान्ते षष्ठी । आकाशराजस्य सन्निधिमिति योजना । 'वयोगताम्' इत्यनन्तरं मध्ये पूर्वपद्यशेषः । "श्रीनिवासः— कार्यं मदीयं हे मातः पक्वं वा अपक्वमेव वा । बकुळा— कार्यं तव कृपासिन्धो पक्वमेव न संशयः ॥" इति ।

**गूढकर्तृकन्याख्यानम्**

शुकः— "हरे ! श्रीनिवास ! तव कुलं कुतः आयातम् ? गोत्रं किम् ? तव जन्म-मरण-जरा-वृद्धि-स्थान-आश्रयः न सन्ति । पुरुषोत्तम ! केवलं विडम्बयसि । सकलजगत्पालकस्य तव कुल-गोत्रादिकं अनपेक्ष्यमेव । श्रीनिवास ! मम वचने विश्वस्य राजा ते कन्यां दास्यति । तदस्तु । त्वं तु मम वाक्ये विश्वस्य दयया आकाशसुतां पद्मां परिगृहीष्व । एवं श्रीनिवासं स्तुत्वा तेन अनुमतः स्वस्य श्रीहरिसन्दर्शनलाभसन्तुष्टः शुकः आकाशराजपुरीं प्रति प्रययौ ॥

**मूलम्**

**गते तु मुनिशार्दूले भगवान् [1]माधवो नृप ।**
**मातरं सन्ददर्शाथ घर्मश्रान्तां वयोगताम् ॥ २२४ ॥**

**बकुलां प्रणिपत्याथ माधवो वाक्यमब्रवीत् ॥ २२५ ॥**

१. भक्तवत्सलः ।

**श्रीनिवासाय बकुलाकथितपद्मावतीपरिणयोदन्तः**

**श्रीनिवास उवाच—**

**अम्ब कालविलम्बस्ते किमर्थं कमलानने ।**
**का तत्र वार्ता नगरे तां ममाचक्ष्व भामिनि ॥ २२६ ॥**

**कल्याणकाण्डदीपः**

कार्योत्सुक्यात् स्वल्पोऽपि कालो विलम्बाय ते इति भावः । यद्वा, शुकः आगत्य पुनर्गतः । तव कालविलम्बः कुत ? इति । अथ बकुळा— आगिरेरापुरनिर्गमनं श्रुतं पुळिन्दावृत्तान्तं विना दृष्टं सद्वृत्तं यावद्वृत्तान्तमाचख्यौ । अथ श्रीनिवास उवाच— **का तत्रेति** । तत्र नगरे वार्ता विशेषवार्ता का वा त्वया श्रुताऽस्ति ? तत् किम् ? तर्हि तां ममाचक्ष्व भामिनि !

मूलम्

बकुलोवाच—

साधिता बहुयत्नेन कन्या ते पुरुषोत्तम।
दैवमेव परं मन्ये पौरुषं नैव कारणम् ॥ २२७॥

कल्याणकाण्डदीपः

**साधितेत्यादि**। यद्यपीति शेषः। यद्यपि बहुयत्नेन कन्या ते मया साधिता। तथाऽपि हे पुरुषोत्तम ! परं केवलं दैवमेव अदृष्टनियामकं, भगवदानुकूल्यमेव अविलम्बेन कार्यसिद्धौ कारणं मन्ये। मदीयं पौरुषं तत्र नैव कारणं इति अर्थान्तरन्यासः।

मूलम्

नारायणाश्रमात् कृष्ण धर्मदेवी समागता।
दैवयोगेन सा भद्रा सम्प्राप्ता राजमन्दिरम् ॥ २२८॥

कल्याणकाण्डदीपः

कुतः ? इत्यत आह— **नारायणेति**।

मूलम्

उवाच तां भवद्दानयोग्यां कन्यां रमापते।
कन्याऽपि त्वदृतेऽन्यं सा नैव काङ्क्षति लौकिकम्॥ २२९॥

तयोर्वाक्यं समाकर्ण्य दातुं ते सोऽन्वपद्यत।
इमां दास्यामहे पुत्रीं वेङ्कटाद्रिनिवासिने ॥ २३०॥

इत्थं सङ्कल्पयामास सभामध्ये मुदा नृपः।
त्वयैव जातमेतद्धि न दैवं भवतः परम् ॥ २३१॥

पुलिन्दावचनाद्राजा कन्या सङ्कल्पिता तव।
इति मातृवचः श्रुत्वा किञ्चिद्धास्यमुखो हरिः।
[1]स मातृवचनं श्रुत्वा मातरं वाक्यमब्रवीत् ॥ २३२॥

१. मातरं प्रतिन-चाथ चिन्तयन् वाक्यमब्रवीत्।

***इति श्रीमद्भविष्योत्तरपुराणे श्रीवेङ्कटाचलमाहात्म्ये***
***पद्मावतीपरिणयनिश्चयो नाम नवमोऽध्यायः ॥ ९ ॥***

॥ श्रीकृष्णार्पणमस्तु ॥

कन्या सङ्कल्पितेति वार्ता मया श्रुता यतोऽत इति शेषः । **स मातृवचनमिति** । **सः** श्रीनिवासः ॥

*श्रीमद्भविष्योत्तरवेङ्कटेशमाहात्म्यव्याख्याने कल्याणकाण्डदीपे श्रीनिवासहय्यङ्गवीने*
*पुलिन्दिनीशुकबकुलावतीनां मज्जनं नाम नवमोऽध्यायः ॥*

श्रीकृष्णार्पणमस्तु ॥

**गूढकर्तृकन्याख्यानम्**

मुनिश्रेष्ठे शुके प्रयाते श्रीनिवासः मातरं बकुलां दृष्ट्वा बहुदूरसञ्चारश्रान्तां वृद्धां प्रणम्य वदति— "अम्ब ! आगमनस्य कुत इयान् विलम्बः ? राजधान्यां का वार्ता ? वद ।"

बकुला— "पुरुषोत्तम ! श्रीनिवास ! बहुयत्नेन कार्यं साधितवती । परन्तु अत्र दैवमेव कारणम् । अदृष्टनियामकभगवदानुकूल्यमेव अविलम्बेन कार्यसिद्धिकारणम् । मदीययत्नः कारणं न । श्रीनिवास ! नरनारायणाश्रमात् धर्मदेवी आयाता । दैवयोगात् राजमन्दिरं प्राप्य पद्माकन्या भवते एव दानार्हेति प्राह । पद्माऽपि त्वां विना अन्यं कमपि प्राकृतनरं नेच्छति । एवं उभयमतानुसारेण राजा तवैव कन्यां दातुं निश्चित्य सभामध्ये सकलसमक्षं 'वेङ्कटाचलवासि-श्रीनिवासाय पुत्रीं दास्यामि' इति सङ्कल्पितवान् । एतत् सर्वकार्यं त्वयैव जातम् । 'न दैवं केशवात्परम् ।' त्वमेव दैवम् । अयं निश्चयः ।"

श्रीनिवासः बकुलोक्त्या किञ्चित् हसन् मातरं प्रतिनन्द्य मनसि चिन्तयन् एवमूचे ॥ इत्येवमंशं यत् शतानन्दमुनिः जनकराजं प्रति निरूपयामास । तदेव सूतः शौनकादिविप्रान् प्रति निरूपयामास ॥

*॥ इति अत्र श्रीमद्भविष्योत्तरपुराणे वेङ्कटगिरिमाहात्म्ये पद्मापरिणयनिश्चयो नाम*
*नवमोऽध्यायकथाभिप्रायः ॥*

॥ श्रीकृष्णार्पणमस्तु ॥



॥ श्रीः ॥

## श्रीमद्भविष्योत्तरपुराणान्तर्गतं

# श्रीवेङ्कटेशमाहात्म्यम्

### ॥ अथ दशमाध्यायकथासङ्क्षेपः ॥

**(गूढकर्तृकव्याख्यानानुसारी)**

जनकः पृच्छति— "बकुलावचनं श्रुत्वा श्रीनिवासः किं चकार ?" इति ।

श्रीनिवासः स्वयं सुखपूर्णोऽपि एवं विडम्बयति— "अम्बा ! अद्याहं अबन्धुः । आकाशः सबन्धुः । मम च तस्य च सम्बन्धः कथं युज्यते ? बकुला— "त्वादृशः पुरुषो जगति नैव । त्वं सत्यस्वरूपः, कुतो विडम्बयसि ? श्रीशुकगुर्वोः वाक्यं पूजय । जगत्कुटुम्बिन् ! ब्रह्मादिसकलदेवान् तव बन्धून् स्मर । अस्मिन् कलौ तेषां त्वत्कल्याणवीक्षणेन सद्गतिः भवतु ।" श्रीनिवासः 'तथा' इति शेषगरुडौ सस्मार । क्षणात् तौ प्राप्तौ । "विधये पत्रं विलिख्य, तमानय" इति उक्त्वा गरुडद्वारा प्राहिणोत् । शिवाय पत्रं विलिख्य शेषद्वारा "तमानय" इति प्राहिणोत् । विधिः सत्ये गरुडदत्तं श्रीनिवासपत्रं पठित्वा हृष्टः सकुटुम्बं सपरिवारं स चतुरङ्गबलं समुनिदेवगणं सवैभवं सत्यात् वेङ्कट-गिरिं प्रययौ । इतः श्रीनिवासः पूर्वमेव गरुडमुखेन विधिं आयान्तं मत्वा स्वयं गरुडमारुह्य सुतं विधिं द्रष्टुं ययौ । श्रीनिवासं आत्मानं द्रष्टुं आगतं वीक्ष्य विधिः हंसादवरुह्य पितरं श्रीनिवासं प्रणनाम । हरिः विधिं आलिलिङ्ग । पितृपुत्रौ उभौ आनन्दितौ मिथः योगक्षेमं पृच्छन्तौ । ततः श्रीनिवासः "पुत्र विधे ! मम विचारं किं ब्रवीमि ? चिरदृष्टोऽसि । वैकुण्ठे मयि सति भृगुः ममोरसि तताड । तेन तव माता रमा कोल्लापुरं गता । तद्वियोगेन वैकुण्ठं विहाय अत्र वेङ्कटाद्रौ वल्मीके वसन् चोलभृत्यः कुठारेण मम शिरसि तताड । गुरुप्रसादात् शिरःक्षतं शमयित्वा एतावत् जीवितः । पश्य इमां मातरं बकुलाम् । इयं बकुला पूर्वं यशोदा । मम कल्याणेक्षणकाङ्क्षिणी अवतीर्णा । किञ्च आकाशराजतनया पद्मा मे देयेति निश्चितम् । अत्र त्वं विवाहे सहकुरुष्व" इति ।

ततः वायुः भारत्या सपरिवारं आगतः । ततः शिवः उमया कैलासात् सपरिवारं आगतः । ततः यक्षराजो धनाधिपः अलकया, अग्निः र [illegible]स्वधाभ्यां सह, ततो यमः, ततः ऐरावतारूढः इन्द्रः शच्या

सह प्राप्तः । चन्द्ररविलोकाभ्यां चन्द्रसूर्यौ, ततः रत्या सह कामः, ततः कश्यपादिसकलमुनयः । ततः गन्धर्वाः, अप्सरसः, सिद्धाः, विष्णुभक्ताः राजानः इत्यादयः सर्वे ससम्भ्रमं समायाताः । सर्वान् प्रति श्रीनिवासः— "स्थीयतां स्थीयताम्" इत्युवाच । ततः शिल्पी विश्वकर्मा प्राप्तः । इन्द्रद्वारा तेन विवाहार्थं अत्यद्भुतं सभाभवनं कारयामास ।

ततः विश्वकर्माणं इन्द्रेण सह आकाशराजधानीं प्रेषयित्वा तत्रापि सभाभवनं विवाहमण्डपं पुरालङ्कारं च कारयामास । कल्याणमण्डपं तन्मध्ये कल्याणवेदीं नवरत्नमयीं विश्वकर्मणा आकाशः कारयामास ॥ इन्द्रः विश्वकर्मणा रत्नगोपुरस्तम्भसहितं रत्नमयतोरणालङ्कृतं सभाभवनं गजाश्वशालादिकं कारयामास ॥ इत्येवं श्रीनिवासविवाहार्थं सकलदेवागमन-विवाहमण्डपनिर्माणनिरूपणं यत् शतानन्दः जनकं प्रति निरूपयामास तदेव वर्णनं सूतः शौनकादिविप्रान् प्रति निरूपयामास ॥

*इति श्रीमद्भविष्योत्तरपुराणे श्रीवेङ्कटेशमाहात्म्ये दशमाध्यायकथासङ्क्षेपः ॥*

॥ श्रीकृष्णार्पणमस्तु ॥



॥ श्रीः ॥

## श्रीमद्भविष्योत्तरपुराणान्तर्गतं

# श्रीवेङ्कटेशमाहात्म्यम्

## अथ दशमोऽध्यायः

### ब्रह्माद्यागमनम्

श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

**मूलम्**

**श्रीनिवासाज्ञया ब्रह्माद्यानयनार्थं शेषगरुडगमनम्**

जनक उवाच—

मातुर्वचनमाकर्ण्य कृतवान् किं रमापतिः ।
तन्ममाचक्ष्व भगवन् सविस्तारं सतां प्रियः ॥ १ ॥

**कल्याणकाण्डदीपः**

शुकवर्तिकाया वादनतूलतन्तुरुपादानम् । हरिवन्दनं सुगन्धिभञ्जनम् । तन्तवः पञ्च । अनिरुद्धादयः पञ्चतन्तुमूर्तयः ॥

श्रीः ॥ श्रीनिवासाय नमः ॥

जय देव जगन्नाथ जय लक्ष्मी महीपते ।
जय भक्तिकृतां सर्वदोषापह नमोऽस्तु ते ॥

दशमे व्याख्येयानि व्याक्रियन्ते ।

मूलम्

शतानन्द उवाच—

त्वं हरेरसि भक्तेषु प्रथमोऽतिप्रियः सदा ।
तस्माद्धरिकथासक्तमनास्ते तु वदामि तत् ॥ २ ॥

स्वयमानन्दपूर्णोऽपि कर्मभुङ् नरवद्धरिः ।
मात्रा चोदितमाकर्ण्य तामूचे मधुरं वचः ॥ ३ ॥

श्रीनिवास उवाच—

[1]नोत्सवे विद्यते बुद्धिर्मम मातस्तथाऽनघे ।
अबन्धी बन्धुयुक्तस्य सम्बन्धो न प्रशस्यते ॥ ४ ॥

१. महोत्सवं विधातुं हि मम बुद्धिर्न विद्यते ।
अबन्धोर्बन्धुयुक्तस्य सम्बन्धो न प्रशस्यते ॥

ययोरेव समं वित्तं ययोरेव समोऽन्वयः ।
तयोर्विवाहो मैत्री च नोत्तमाधमयोरपि ॥ ५ ॥

विवाहश्च विवादश्च समयोरेव शोभते ।
अहमेकः सोऽपि बन्धुसमेतो धरणीपतिः ॥ ६ ॥

कथं नृपस्यास्य मयोचितः स्याद्
अबन्धुना बन्धुयुतस्य सङ्गः ।
भवेत्सुखं नेति वदन्ति सन्त
इत्यद्य चिन्ता खलु बाधते माम् ॥ ७ ॥

बन्धुहीनस्य मे राजा कथं कन्यां प्रदास्यति ।
वासुदेववचः श्रुत्वा बकुला वाक्यमब्रवीत् ॥ ८ ॥

॥ श्रीः ॥

श्रीमद्भविष्योत्तरपुराणान्तर्गतं

# श्रीवेङ्कटेशमाहात्म्यम्

## अथ दशमोऽध्यायः

### ब्रह्माद्यागमनम्

श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

**मूलम्**

**श्रीनिवासाज्ञया ब्रह्माद्यानयनार्थं शेषगरुडगमनम्**

जनक उवाच—

मातुर्वचनमाकर्ण्य कृतवान् किं रमापतिः ।
तन्ममाचक्ष्व भगवन् सविस्तारं सतां प्रियः ॥ १ ॥

**कल्याणकाण्डदीपः**

शुकवत्तिकाया वादनतूलतन्तुरुपादानम् । हरिवन्दनं सुगन्धिभञ्जनम् । तन्तवः पञ्च । अनिरुद्धादयः पञ्चतन्तुमूर्तयः ॥

श्रीः ॥ श्रीनिवासाय नमः ॥

जय देव जगन्नाथ जय लक्ष्मी महीपते ।
जय भक्तिकृतां सर्वदोषापह नमोऽस्तु ते ॥

दशमे व्याख्येयानि व्याक्रियन्ते ।

मूलम्

शतानन्द उवाच—

त्वं हरेरसि भक्तेषु प्रथमोऽतिप्रियः सदा।
तस्माद्धरिकथासक्तमनास्ते तु वदामि तत् ॥ २ ॥

स्वयमानन्दपूर्णोऽपि कर्मभुङ् नरवद्धरिः।
मात्रा चोदितमाकर्ण्य तामूचे मधुरं वचः ॥ ३ ॥

श्रीनिवास उवाच—

[१]नोत्सवे विद्यते बुद्धिर्मम मातस्तथाऽनघे।
अबन्धी बन्धुयुक्तस्य सम्बन्धो न प्रशस्यते ॥ ४ ॥

१. महोत्सवं विधातुं हि मम बुद्धिर्न विद्यते।
अबन्धोर्बन्धुयुक्तस्य सम्बन्धो न प्रशस्यते ॥

ययोरेव समं वित्तं ययोरेव समोऽन्वयः।
तयोर्विवाहो मैत्री च नोत्तमाधमयोरपि ॥ ५ ॥

विवाहश्च विवादश्च समयोरेव शोभते।
अहमेकः सोऽपि बन्धुसमेतो धरणीपतिः ॥ ६ ॥

कथं नृपस्यास्य मयोचितः स्याद्
अबन्धुना बन्धुयुतस्य सङ्गः।
भवेत्सुखं नेति वदन्ति सन्त
इत्यद्य चिन्ता खलु बाधते माम् ॥ ७ ॥

बन्धुहीनस्य मे राजा कथं कन्यां प्रदास्यति।
वासुदेववचः श्रुत्वा बकुला वाक्यमब्रवीत् ॥ ८ ॥

बकुलोवाच—

त्वादृशः पुरुषो लोके नासत्यं वदति क्वचित् ।
सत्यमेव प्रशंसन्ति मुनयो वीतकल्मषाः ॥ ९ ॥

**कल्याणकाण्डदीपः**

**त्वादृश इति** । 'त्यदादिषु' इत्यादिना कञ् । त्वामिव पश्यन्ति जना यं सः **त्वादृशः पुरुषः**, **लोके** भूलोके **न** नास्ति । कुतः ? श्रीनिवासः **क्वचित्** कदाचित् असत्यं न वदति । वदति चेत्, सत्यमेव वदतीति वीतकल्मषाः मुनयः त्वां प्रशंसन्ति । त्वं तु सबन्धुरपि अबन्धुरित्यसत्यमेव ब्रूषे यतोऽत इति शेषः ।

**गूढकर्तृकव्याख्यानम्**

जनकः शतानन्दं पृच्छति— पूज्य मुनिवर्य ! रमापतिः साक्षात् श्रीनिवासः बकुलोक्तिं श्रुत्वा पुरतः किं चकार इति ।

शतानन्दः वदति— जनकराज ! त्वं परमात्मभक्तेषु प्रथमः । तत्प्रीतिपात्रः । अतः सावधानमनाः शृणु । श्रीनिवासः स्वयं आनन्दपूर्णोऽपि कर्मबद्धकर्मफलानुभोगी मनुज इव आचरन् बकुलोक्तिं श्रुत्वा तां प्रति मृदुवक्ति— "अम्ब ! अद्य कल्याणाय प्रयत्नं कर्तुमेव मम मनो नायाति ।" कुतः ? "अहं बन्धुरहितः । स राजा बहुबन्धुसहितः । अतः मम तस्य च सम्बन्धो नाम न प्रशस्तः । लोके ययोः धनसम्पत्तिः समा समश्च वंशः तादृशयोरेव विवाहः मैत्री च प्रशस्ता । उत्तमस्य अधमस्य च विवाहसम्बन्धः उत लौकिकव्यवहारश्च नोपपद्यते । अहं तावत् एकाकी । सः धरणीपतिः बहुबान्धवैः युतः । बन्धुयुक्तस्य तस्य बन्धुरहितस्य मम सम्बधः कथं योग्यो भवेत् ? बन्धुहीनस्य मे आकाशः कन्यां दातुं कथं इच्छति ? इति चिन्ता मां बाधते ।"

**मूलम्**

शुकस्त्वत्कार्यनिष्ठस्तु देवानां गुरुरीश्वरः ।
[1]स धर्मिष्ठो महीपालः तस्याशां मा वृथा कुरु ॥ १० ॥

---

१. मद्धर्मणो मही...स्य ।

**कल्याणकाण्डदीपः**

मम बान्धवाः के सन्तीत्यत आह— **शुकस्त्वत्कार्यनिष्ठस्त्विति** । स च कौपीनाभिमानत्यागी अत्यन्तालौकिको विवाहवार्तानभिज्ञः "या निशा" इत्यादेः, अतो न स तत्रेश्वर इत्याह **देवानां गुरुरीश्वर इति** । देवानां गुरुः वैदिकलौकिकोभयाभिज्ञः त्वत्कार्यनिष्ठः स ईश्वर इति भावः । किञ्च किं लौकिकचातुर्येण ? स महीपालो **धर्मिष्ठः** धर्मैकायतचित्तः । किञ्च तादृशवृद्धस्याशामुत्पाद्य विच्छेदे महानधर्मोऽकीर्तिश्चेति आह **तस्याशामिति** ।

**मूलम्**

**स्मर बन्धून् सुरान् सर्वान् ब्रह्मरुद्रपुरोगमान् ।**
**पुत्रान् पौत्रांस्तथा भ्रातॄन् स्नुषाश्च पुरुषोत्तम ॥ ११ ॥**

**कल्याणकाण्डदीपः**

अथोवाच वेङ्कटः— अथापि "ययोरेव समं वित्तं ययोरेव समं वयः। तयोर्विवाहो वादश्च नोत्तमाधमयोः क्वचित्" इति न्यायेन लोकसम्मतं न भवतीत्यत आह **स्मर बन्धूनित्यादि** । अथ श्रीनिवासः— कर्तव्ये विशेषतः स्वतन्त्रः सर्वज्ञः दक्षोऽपि अन्यान् पृष्ट्वा तद्वचनं वाचयित्वा आकर्ण्य कर्तव्यमिति न्यायमनुशिक्षयन् एतेषां कलौ भूमावागमनं कथं स्यात् ? इति पप्रच्छ ।

**मूलम्**

**तेषां गतिस्तु गोविन्द दुर्लभा च कलौ युगे ।**
**सोऽपि पश्यतु राजर्षिः [1]त्वत्सम्बन्धाज्जनार्दन ॥ १२ ॥**

१. त्वत्सम्बन्धिजनानिह ।

**गूढकर्तृकव्याख्यानम्**

बकुला— "श्रीनिवास ! त्वत्सदृशः पुरुषो लोके नैव । त्वं न कदापि असत्यवक्ता । पापरहिताः मुनयः त्वं सत्यस्वरूप इति त्वां प्रशंसन्ति । त्वं सबन्धुरपि अबन्धुरिति कुतो वदसि ? तव बन्धवः कुतो न सन्ति । तव समये शुकमुनिरस्ति । सः त्वत्कार्ये तत्परो यतते । स तव बन्धुर्न किम् ? न तु सः कौपीनाभिमानत्यागी विरागी । लौकिकव्यवहाररूपविवाहवार्ताया एव अनभिज्ञः । अतः स एतत्कार्ये साङ्गं कर्तुं नेष्टे इति न वाच्यम् ।

किञ्च सः आकाशः महाराजः धर्मैकायत्तचित्तः वृद्धः । तादृशस्य आशां प्रदर्श्य निराशायां जनितायां महान् अधर्मः अकीर्तिश्च स्यात् । अतः तस्य आशां मा वृथा कुरु । पुरुषोत्तम ! त्वं बन्धुसहित एव । जगत्कुटुम्बी । अनन्तानन्तबन्धवः सन्ति । अद्य ब्रह्मरुद्रेन्द्रादीन् त्रयस्त्रिंशत्कोटिदेवान् तव बन्धून् स्मर । तव पुत्रान् पौत्रान् भ्रातॄन् स्नुषाश्च स्मर । त्वं सर्वज्ञोऽपि अनभिज्ञ इव अस्मान् पृच्छसि । अद्य त्वत्सकाशात् विधिमुखानां देवानां अपि सद्गतिः भवतु । तेषां अद्य कलौ गतिः दुर्लभा । योगेश्वरस्य तव सम्बन्धात् गतिः भवतु । किञ्च सः राजर्षिः आकाशः अपि त्वत्सम्बन्धिजनान् पश्यतु । त्वामेव पश्यन् जनः किं वा न पश्येत् । भवदनुग्रहेण सर्वेषां सर्वं सुघटमेव ।

**मूलम्**

**मातुर्वचनमाकर्ण्य मनसा शेषपक्षिणौ ।**
**सस्मार पृथिवीपालः श्रीनिवासः सतां गतिः ॥ १३ ॥**

**तावागतौ [1]शेषवयः पतीह**
**क्षणेन शेषाचलवल्लभान्तिकम् ।**
**ददर्श [2]भक्तः पुरतः स्थितौ तौ**
**निर्देशयामास [3]पुराणमूर्तिः ॥ १४ ॥**

१. शेषवियच्चरौ तदा । २. भक्त्या पुरतः स्थिताविमौ ।
३. पुराणपूरुषः ।

**कल्याणकाण्डदीपः**

अथात आह बकुळा— **तेषामिति** । 'यद्यपि' इति शेषः । ब्रह्मादीनां कलौ युगे यथावत्स्थिति-गतिः दुर्लभा, तथापि **त्वत्सम्बन्धात्** तव = योगेश्वरस्य सम्बन्धात् **सः** राजर्षिः अन्यः **अपि** योग्यजनः **पश्येत्** । त्वामेव हरिं पश्यन् जनाः अनुहरिं सुरान् किं न पश्येदिति भावः ।

इदमत्र बोध्यम्— "यथापूर्वमकल्पयत्" इति श्रुतेः "कल्पेन कल्पो व्याख्यातः" इति "यथा राजा तथा प्रजाः" इति च न्यायमनुसृत्य, अणिमादिसिद्धिमतां ब्रह्मादिदेवानां योगवैभवातिशयात् प्राकाम्यसिद्ध्या देशकालजनावस्थानुगुणं मानुषरूपं गृहीत्वा स्वस्ववस्त्राभरणवाहनछत्रचामरादि-सम्पदामपि तदानुगुण्यं सम्पाद्य रामा[illegible]क कपिराक्षसानामिव गतिरुपपन्नेति भावः । शेषः वयः पती

इति ह इति च्छेदः । 'खगबाल्यादिनोर्वयः' इत्यमरः । वयसां पतिः वयःपतिः । निर्देशयामासेति । "अववादस्तु निर्देशो निर्देशः शासनं च सः" इत्यमरः । आज्ञापितवानित्यर्थः । करणे णिच् ।

**मूलम्**

**श्रीनिवास उवाच—**

**पक्षिराड् गच्छ मे पुत्रं सत्यलोकेश्वरं प्रियम् ।**
**गच्छाहिभूषणं शेष मम पौत्रमुमापतिम् ॥ १५ ॥**

**[1]विलिख्य पत्रिकां ताभ्यां ब्रह्मेशाभ्यां शिवात्मकाम् ।**
**प्रणिपत्याथ विश्वेशं खमार्गेणाथ जग्मतुः ॥ १६ ॥**

१. इत्युक्त्वा पत्रिकां ताभ्यां विलिख्यादात् शुभात्मिकाम् ।

**गूढकर्तृकव्याख्यानम्**

बकुलायां एवं उपदिशन्त्यां सज्जनानां गतिप्रदः श्रीनिवासः मनसा शेषगरुडौ सस्मार । क्षणात् तौ द्वावपि श्रीनिवासं समुपाययौ । भक्त्या "किं करवाम ? आज्ञापयतु" इति ऊचतुः ।

श्रीनिवासः— "पक्षिराज ! शीघ्रं सत्यं गत्वा मम प्रियपुत्रं विधिं प्रति मम सन्देशं निवेद्य तमत्रानय" इत्याह । शेषं प्रति— शेष ! शीघ्रं कैलासं गत्वा मम पौत्रं रुद्रं दृष्ट्वा मम सन्देशं निरूप्य "उमापते ! श्रीनिवासः त्वां अपेक्षते" इति उक्त्वा तमत्रानय" इत्याह । ताभ्यां विधिरुद्राभ्यां शुभपत्रिके विलिख्य शेषगरुडद्वरा प्राहिणोत् । तौ शेषगरुडौ श्रीनिवासं प्रणम्य गगनमार्गेण जग्मतुः ।

**सत्यलोकं ततो गत्वा ब्रह्माणं भास्करोपमम् ।**
**दृष्ट्वा नत्वाऽथ भक्त्यैव पक्षिराट् पत्रिकामदात् ॥ १७ ॥**

**पितामहस्तु तं दृष्ट्वा गरुडं प्रत्यभाषत ।**

**ब्रह्मोवाच—**

**चिरकालेन सम्प्राप्तः पक्षिराड् [1]विष्णुवाहन ॥ १८ ॥**

१. कश्यपात्मज ।

क्व चास्ति वासुदेवस्तु श्रीनिवासः पिता मम।
पितामहवचः श्रुत्वा पक्षिराड् वाक्यमब्रवीत् ॥ १९ ॥

गरुड उवाच—

वासुदेवे वसत्यङ्ग वैकुण्ठगिरिमूर्धनि।
तद्विवाहार्थमायान्तं मां विद्धि चतुरानन ॥ २० ॥

नारायणेन लिखितां पत्रिकां [1]पश्य पूरुष।
पपाठ पत्रिकामित्थं चोदितोऽनेन वै विधिः।
पत्रिकां कीर्तयामास वायुः सर्वात्मगोचरः ॥ २१ ॥

१. अवलोकय।

**कल्याणकाण्डदीपः**

**सर्वात्मगोचरः**। सर्वात्मानो गोचरो रक्षितव्यदेशो यस्य स तथा। 'प्राणेशः' इति यावत्।

**गूढकर्तृकव्याख्यानम्**

पक्षिराट् सत्यं गत्वा विधिं ददर्श। सः सूर्य इव ज्वलति। तं भक्त्या प्रणम्य तस्मै श्रीनिवासदत्तपत्रिकामदात्। विधिः गरुडं दृष्ट्वा "कश्यपसुत! पक्षिराज! किं भो! चिरदृष्टोऽसि। कुतः तव आगमनम्? मम पिता वासुदेवः कुत्र अस्ति?" गरुडः— श्रीनिवासः अद्य वैकुण्ठगिरेः मूर्धनि वसति। अद्य तस्य विवाहः प्रचरति। श्रीनिवासकल्याणाय तस्याज्ञया त्वां नेतुं आगतः।" वायुः तदा स्वयं पत्रिकां पपाठ।

**मूलम्**

चिरञ्जीवाय पुत्राय ब्रह्मणे नाभिजन्मने।
[1]श्रीनिवासेन लिखिता आशीभिरभिवन्द्य च ॥ २२ ॥

१. श्रीवेङ्कटाद्रिनाथस्य श्रीनिवासस्य मङ्गलाः।

वैदिक्य आशिषः सर्वाः सर्वदा सन्तु पुष्कलाः।
कलावाकाशरा... म कन्यादानं करिष्यति ॥ २३ ॥

पत्रिकादर्शनादेव सपुत्रः सपरिग्रहः ।
सलोकपालः सस्त्रीकः सगन्धर्वः सहोरगः ॥ २४ ॥

समागत्याशु कल्याणं दृष्ट्वा गच्छ यथासुखम् ।
पत्रगर्भं समाज्ञाय किञ्चिद्धास्यमुखान्वितः ॥ २५ ॥

**कल्याणकाण्डदीपः**

**पत्रगर्भं** गम्भीराभिप्रायम् ।

**मूलम्**

सन्तोषमतुलं लेभे [1]स पुण्यपुरुषोत्तमः ।
द्वारपालान् समाहूय इदं वचनमब्रवीत् ॥ २६ ॥

१. विधिः कल्याणकौतुकी ।

**गूढकर्तृकव्याख्यानम्**

चिरञ्जीवि मन्त्राभिजन्मने विधये श्रीवेङ्कटाचलनाथ-श्रीनिवासकृत-मङ्गलकर-वेदोक्ताशिषः । अस्मिन् कलौ आकाशो नाम राजश्रेष्ठः स्वपुत्रीं पद्मां विवाहे मे प्रदास्यति । त्वं एतत्पत्रदर्शनक्षणात् सपुत्रकलत्रं सस्त्रीक-लोकपाल-गन्धर्व-उरगसहितपरिवारेण आशु अत्रागत्य कल्याणं दृष्ट्वा यथासुखं गच्छेः'' इति पत्राभिप्रायः ज्ञातः । भावगर्भितं पत्रं दृष्ट्वा किञ्चित् जहास । कुतः ? ''श्रीनिवासः निगमगोचरः नित्यतृप्तः आप्तकामः स्वरमणः । ईदृशस्य विवाहापेक्षा । सर्वमिदं तस्य विडम्बनम्'' इति । किञ्च अचिन्त्याद्भुतलीलादर्शनयोगः लब्धः इति आनन्दितः । श्रीनिवासकल्याणे क्षणकौतुकी द्वारपालान् आहूय आदिदेश । सेनापतयः वदन्ति ।

**मूलम्**

**श्रीनिवासविवाहदर्शनार्थं शेषाचलं प्रति ब्रह्माद्यागमनम्**

भेर्यश्च दुन्दुभिश्चैव वाद्यन्तामिति चाब्रवीत् ।
भवद्भिर्मे ख्यापयद्भिर्गमनं धरणीतले ॥ २७ ॥

इत्युक्ता द्वारपालास्ते वाद्यानि समवादयन् ।
ब्रह्माणं प्रणिपत्याथ निदेशज्ञो वचोऽब्रवीत् ॥ २८ ॥

द्वारपाल उवाच—

कं वा देशं समुद्दिश्य वाद्यन्तां वाद्यमुच्यते ।

**कल्याणकाण्डदीपः**

परमालस्यमूर्त इति । अतो हासः । कं वा देशमिति । कं देशमुद्दिश्य वाद्यं वाद्यतामित्युच्यते त्वया स्वामिनेति निदेशज्ञो वचः अब्रवीत् इति योजना ।

**मूलम्**

प्रयाणभेरीनिनदः सुमङ्गलः
संश्रूयते सर्वजनैः कुतूहलात् ।
कं देशमुद्दिश्य पितामहाद्य
सन्ताड्यते वाद्यगणो वदाद्य ॥ २९ ॥

ब्रह्मा उवाच—

भारतेऽस्मिन् महावर्षे जम्बुद्वीपस्य दक्षिणे ।
शेषाचलं समुद्दिश्य नियुङ्क्ष्व चतुरङ्गिणीम् ॥ ३० ॥

सेनां [1]परमकल्याण सेनापतिमभाषत ॥ ३१ ॥

१. परां ममेत्युक्त्वा ।

**कल्याणकाण्डदीपः**

अस्योत्तरं 'भारते' इत्यारभ्य 'शेषाचलं समुद्दिश्य' इत्यन्तम् । नियुङ्क्ष्वेति । परमकल्याण ! हे सेनानीः !

**मूलम्**

स्कन्दाह्वय सुरान् सर्वान् [1]घटिकापालकान् नृप ।
सत्यलोकजनान् सर्वान् [2]समाहूय पितामहः ॥ ३२ ॥

१. सर्वान् दिक्पालकानिति । २. स्वयमाह ।

भवन्तः [1]शासिताः सर्वे कल्याणार्थं कलौ युगे।
श्रीनिवासस्य कृष्णस्य पितुर्मे [2]पुरुषोत्तमाः ॥ ३३ ॥
समागच्छन्तु सर्वे मे सेनाधीशा मया सह।
[3]ब्रह्मणो भारती श्रुत्वा [4]सेनानाथा अथाब्रुवन् ॥ ३४ ॥

१. रसिकाः। २. पुरुषर्षभाः। ३. इति ब्रह्मवचः।
४. सेनानाथास्तमब्रुवन्।

**कल्याणकाण्डदीपः**

चतुरङ्गिणीं सेनां शेषाचलं समुद्दिश्य नियुङ्क्ष इत्युक्त्वा पुनः सेनापतिमभाषत किं इति ? **स्कन्द इत्यादिना**। सर्वान् सुरान् घटिकापालकांश्च आह्वय इति। **घटिकायन्त्रपालकान्** – ब्रह्मलोके युगमन्वन्तरादयः क्षणायन्त इति घण्टिकायन्त्रं पाल्यत इति भावः।

अत्र तावत् सन्दर्भशेषः। हे घटिकापालकाः ! जम्बूद्वीपस्य दक्षिणे कस्मिन्नब्दे कस्मिन् मासे कस्मिन् पक्षे कस्यां तिथौ कस्मिन्नक्षत्रे कियती घटिका जाता ? इति पप्रच्छ। ते च आहुः— विलम्बिसंवत्सरवैशाखशुद्धसप्तम्यां आश्लेषानक्षत्रे घटिकैका जातेति। अथास्यां तिथावानन्दयोग इति जनान् सर्वान् समाहूय "हे पुरुषोत्तमाः ! पितुः मे श्रीनिवासस्य कृष्णस्य कल्याणार्थं वयं सर्वे शासिताः श्रीनिवासेनानुशासिताः। अतो मया सह समायात" इति।

**गूढकर्तृकव्याख्यानम्**

विधिः— द्वारपालकाः ! प्रयाणं अद्य मे भूलोकाय। तदर्थं भेरीदुन्दुभिप्रभृतिवाद्यानि वाद्यताम्। द्वारपालकाः प्रयाणभेरीवाद्यानि वादयामासुः। तन्नादं श्रुत्वा निदेशज्ञ एकः आगत्य प्रणिपत्य "स्वामिन् महाप्रभो ! किमेतत् ? मङ्गलकरभेरीनिनादः श्रूयते। जनानां घोषं श्रुत्वा कुतूहलिनो जाताः। अद्य कः देशः प्रयातव्यः ? विधिः— "अस्मिन् महाभरतखण्डे जम्बूद्वीपस्य दक्षिणतः स्थित-शेषाचलः प्रयातव्यः। अद्य हस्त्यश्वरथपदातिचतुरङ्गबलं शेषाचलं गन्तुं नियुङ्क्ष।" ततः स्कन्दमाहूय "त्वं समस्तसुरान् अष्टदिक्पालकान् प्रति 'यूयं सर्वे भूलोकं प्रयात। विधिना आदेशः कृत' इति वद।" ततः घटिकायन्त्रपालकं "घटिकापाल ! इत एहि। अद्य कालः कियान् ब्रूहि। अद्य जम्बूद्वीपस्य दक्षिणस्यां दिशि कस्मिन् मासे कस्मिन् पक्षे कस्यां तिथौ कस्मिन् क्षेत्रे कियती घटिका जाता ? वद। घटिकापालः— महाप्रभो ! विलम्बिसंवत्सरे वैशाखशुक्लसप्तम्यां तिथौ आश्लेषानक्षत्रे अद्य ..... घटिका जाता। अयमेव सुयोगः। प्रयाणं शुभम्।

विधिः सत्यलोकजनान् सर्वान् प्रति "महाशयाः ! पुरुषश्रेष्ठाः ! भवन्तः सर्वे रसिका एव भवथ । अद्य मे पितुः श्रीनिवासस्य कल्याणोत्सवः भविष्यति । तदर्थं वयं सर्वे श्रीशेन आदिष्टाः । अतः यूयं सर्वे मया सह प्रयात ।" सेनाधीशान् प्रति— "सेनाधीशाः ! मया सह अद्यैव प्रयात ।"

**मूलम्**

**सेनापतय ऊचुः—**

**[1]वार्षिकं दीयतां ब्रह्मन् वेतनं स्वामिना त्वया ॥ ३५ ॥**

१. वार्षिकं देहि नो ब्रह्मन् आगच्छामस्त्वया सह ।

**एवमुक्तो धनं तेषां दत्तवान् स पितामहः ।**
**वाहनानि विचित्राणि [1]यानानि विविधानि च ॥ ३६ ॥**

**भूषणानि च वस्त्राणि रत्नानि विविधानि च ।**
**पत्नीः सन्देशयामास विवाहार्थं [2]रमापते ॥ ३७ ॥**

**नीलमौक्तिकवैडूर्यांस्तथा मकरकुण्डले ।**
**स्वयमन्तर्गतः श्रीमानात्मानमथ भूषयत् ॥ ३८ ॥**

१. रथांश्च विविधानपि । २. पितामहः ।

**कल्याणकाण्डदीपः**

**वाहनानीति** । पूर्वमेव विश्वकर्मणा रमापतेर्विवाहार्थं कारितानि विविधानि विचित्राणि अपूर्वाणि वाहनानि गरुडहनुमदादीनि यानानि शिबिकव्योमयानादीनि कोशगृहात् स्वयमादाय विविधानि भूषणानि वस्त्राणि रत्नानि विशेषतः नीलमौक्तिकवैडूर्यान् तथा मकरकुण्डले पत्नीः सन्देशयामास ।

**दधार शिरसा धाता किरीटं पश्चिमेन तु ।**
**ततोऽन्यशिरसा ब्रह्मा रक्तवस्त्रं समादधे ॥ ३९ ॥**

**दक्षिणेनोत्तमाङ्गेन शिरोवेष्टिमबन्धयत् ।**
**कुशकेतुः कुशः [illegible]ः ततोऽन्यत्र च मूर्धनि ॥ ४० ॥**

नीलमौक्तिकवैडूर्ययुते मकरकुण्डले ।
कर्णयोर्भूषयामास करौ कनककङ्कणैः ॥ ४१ ॥

कवचं धारयामास नवरत्नसमाकुलम् ।
काञ्चीदाम समाबध्य मुक्तामणिविभूषितम् ॥ ४२ ॥

सरस्वतीं च सावित्रीं [1]तथाऽन्याश्च स्वयोषितः ।
पुत्रान् पौत्रान् तथा सर्वान् सवाजिरथकुञ्जरान् ॥ ४३ ॥

१. गायत्रीं वै ततःपरम् ।

मनःपुत्रान् समाहूय वीर्यपुत्रान् पितामहः ।
अलङ्कारयुतान् कृत्वा गमनाभिमुखोऽभवत् ।
स्वसेनां पुरतः कृत्वा [1]पुरान्निर्याय नाभिजः ॥ ४४ ॥

१. नाभिजो निर्ययौ पुरात् ।

हंसं चन्द्रप्रतीकाश[1]मारुह्य स पितामहः ।
विमानानि विचित्राणि [2]वध्वर्थं सुकृतानि च ॥ ४५ ॥

१. मारुरोह पितामहः । २. वध्वमारुरुहुस्तदा ।

घण्टाचामरनिर्घोषैः [1]स्वगतानि च रेजिरे ।
[2]शूरान् वीरान् रसान् धीरान् गजाश्वरथसंस्थितान् ॥ ४६ ॥

१. सहिता नृप रेजिरे ।
२. शूरा वीरासना धीरा गजाश्वरथसंस्थिताः ।

समुच्छ्रितैर्ध्वजै[1]र्दीप्तैः पताकैः समलङ्कृतान्(तः) ।
नानायुधधरा [2]राजन् तेषां मध्ये पितामहः ।
रराज [3]राजवत् राजस्ताराभिर्गगने यथा ॥ ४७ ॥

१. दीर्घपताकैः । २. वीराः । ३. चन्द्रमा राजन् ।

**कल्याणकाण्डदीपः**

'शूरान्' इत्यादि पद्यद्वयमेकं वाक्यम् । समुच्छ्रितैः ध्वजैः मत्स्य-मकरसिंहव्याघ्रवानराद्याकारैः दीप्तैः पताकैः । ऊर्ध्वाधोनीचोच्च वह्निज्वालाकारैः महारजतवस्त्रमयैः समलङ्कृतान् गजाश्वरथसंस्थिता-न्नानायुधधरान् शूरान् भटान् परितः कृत्वा तेषां मध्ये पितामहः । यथा राजा चन्द्रः ताराभिः नील-पीतादिवर्णाभिः गगने राजते तथा सेना गगने नीलपीतादिच्छत्रध्वजपताकादिभिः तारास्थानीयैः मध्ये देवचन्द्रो ब्रह्मा रराजेत्यर्थः । राजन् इति सम्बोधनम् । पदे पदे तत्करणं तु प्रमेयभेदात् तत्सौक्ष्म्याद्राज्ञो वृद्धत्वाच्च शोकातुरत्वात् प्रायः पुराणसमये निद्राळूनां निद्रा भवतीति तदपगमनाय चेति सूचनाय चेति ज्ञातव्यम् । तेषां मध्ये राजन् पितामह इति वा उपमानेऽप्येवम् ॥

**मूलम्**

**श्वेतच्छत्रं हेमदण्डं रत्नकुम्भमहोज्ज्वलम् ।**
**शतयोजनविस्तीर्णं दशलक्षजनैर्धृतम् ॥ ४८ ॥**

**नभः प्रकाशयामास देवदेवस्य वै तदा ।**
**अवादयन् महाराज वाद्यानि विविधानि च ॥ ४९ ॥**

**कल्याणकाण्डदीपः**

**श्वेतच्छत्रमिति** । गूढार्थमिदं पद्यम् । 'रराज' इत्यादि देहलीदीपन्यायेन पूर्वोत्तरान्वयी । हेमदण्डं रत्नकुम्भं रत्नकलशम्, अत एव महोज्वलं शतयोजनविस्तीर्णं मानुषशतसङ्ख्याकयोजनप्रमाणपरिमित-विस्तारोपेतं दशलक्षजनैर्धृतम् । धृतिः धारणम्, तदस्यास्तीति धृतम् । अर्श आद्यच् । तावत्सङ्ख्याकै-र्जनैः पूर्यत इत्यर्थः । दशलक्षजनपर्याप्तच्छायामिति भावः । दशलक्षजनैः धृतच्छायामिति वा । **श्वेत-च्छत्रम्** । गगने ताराभिः परितो विद्यमानाभिः नीलपीतादिभिः यथा चन्द्रो राजते तथा सैन्यगगनमध्ये नीलपीतरक्तहरितकपिलचित्रैः च्छत्रध्वजपताकादिभिः रराज इत्यर्थः । ब्राह्मपङ्क्तश्वेतच्छत्रस्य सत्यलोके इयं निजस्थितिः । दण्डधर्ता च एक एव, च्छत्रकुटुम्बी ब्रह्मा । पुष्पकवद्विष्वकर्मनिर्माणमेव तादृश-मतिविचित्रम् । अस्य च कलौ ब्रह्मणो भूप्रस्थानवेलायामधोऽधोलोकक्रमेण अवरोहणे यथा देशकाल-जनावस्थानुगुणं प्रभापरिमाणगुणक्रियादीनां स्वामिनो ब्रह्मण एव सङ्कोचः । ब्रह्मणश्च आकारालङ्कार-परिमाणगुणक्रियादीनां यथा देशकालाद्यनुगुणं भगवत इव योगवैभववान् मानुषरूपादिविडम्बनेन सङ्कोचः । यथा रामाभिषेके कपिराक्ष...ाम् । तथा च सत्यस्थितिमवलम्ब्येयमुक्तिरिति ।

एतेन गिरिपुरयोः क्रोशषट्कपरिमिते मध्यदेशे शतयोजनविस्तीर्णस्य कथं गमनागमनोक्तिः इति निरस्तम् । सङ्कुच्य भूस्थितावपि शतयोजनविस्तीर्णत्वदशलक्षजनैर्धृतत्वरूपविशेषणद्वयोपपत्तिरित्थं शतयोजनविस्तीर्णं युज्यते । आस्तरणवस्त्रमेष्विति योजनानि । अधिकरणे ल्युट् । च्छत्रशलाकाः । शतानि च तानि योजनानि च शतयोजनानि । तैः विस्तीर्णं पट्टच्छत्रस्य शतशलाकत्वात् । तदुक्तम्—

"न ते शतशलाकेन जलफेननिभेन च ।
आवृतं वदनं वल्गुच्छत्रेणाभिविराजते ॥" इति ।

'योजनायुतविस्तीर्णे' इति पाठेऽपि योजनशब्दः शलाकार्थः । योजनानां शलाकानां अयुतं तेन विस्तीर्णमिति । दशलक्षजनैर्धृतं जनबाहुल्यान्निबिडतया दिङ्मोहान्मार्गभ्रेषो न स्यादिति दशलक्षजनैर्धृतं गृहीतं येन पथा छत्रं गच्छति तेन पथा गन्तव्यमिति, गृहीतमार्गमित्यर्थः । मार्गोन्नायकतया अवधृतमिति वा ।

यद्वा, विमानव्याजेन दशलक्षाणि विस्तारार्थं दशस्थूलशलाकोपाग्रेन योजितानि स्तम्भच्छद्मानि येषां ते - दशलक्षाः, ते च ते जनाश्च दशलक्षजनाः, तैः ।

चतुर्दिक्षु चत्वारः विदिक्षु चत्वारः । अग्रे वितानाङ्कौ द्वाविति दशस्तम्भायमानदण्डा इति लक्षाणां दशत्वम् । वस्तुतस्तु दशदिशो लक्ष्ययन्तीति दशलक्षाः । च्छत्रकुटुम्बीजातीयेन (ते च ते जनाश्च दशलक्षजनाः, तैः) इत्यर्थः । दिश अष्टौ, ऊर्ध्वमधश्च इति दश दिशः । कर्तरि घञ् । 'स्थूललक्ष' इत्यत्रेव । स्थूलं अर्थिभ्यो देयं द्रव्यं लक्षयतीति व्युत्पत्तेः । लिङ्गभट्टीयादौ दर्शनात् । च्छत्रकुटुम्बिनो दशलक्षत्वं च ।

"सर्वमेतत् पथिस्थेन लक्ष्यं च्छत्रकुटुम्बिना ।
दिशश्चतस्रो विदिश अधरोर्ध्वं तथैव च ॥" इति ।

"लक्षं सङ्ख्ये सङ्ख्यायां लक्षं च्छद्मानि कथ्यते" इति विश्वः । अन्यत्राप्येवंजातीयकेषु "किरीटं शतभारं स्यात्" इत्यादिषु मूलरूपकामरूपोभयपरेष्वर्थो ज्ञेयः ॥

### गूढकर्तृकव्याख्यानम्

सेनापतयः— स्वामिन् ! महाप्रभो ! अस्माकं प्राप्तव्यं वार्षिकवेतनं नायातम् । तत् दातव्यम् । वयं प्रयातुं सिद्धाः ।" विधिः तदा तेभ्य सेनापतिभ्यः दातव्यवेतनं ददौ ।

ततः श्रीनिवासविवाहार्थं पूर्वमेव विश्वकर्मणा कारित-नानाविधविचित्र-अपूर्व-हनुमद्गरुडादि वाहनानि शिबिकव्योमयानानि कोशगृहात् स्वयमादाय अदापयत् । स्वपत्नीभ्यः अलङ्कारार्थं नानाविध-अनर्घ्यवस्त्राभरणानि विशेषतः नीलमाणिक्य-पद्मरागमौक्तिकादि-नवरत्नखचितानि सन्देशयामास । ततः विधिः स्वं भूषणैः समभूषयत् । अन्तर्गृहे स्थित्वा पश्चिमे शिरसि किरीटम्, अन्यस्मिन् रक्तोष्णीवम्, दक्षिणे शिरोवेष्टम्, उत्तरे शिरसि कुशमयकिरीटं दधार । कर्णयोः रत्नखचितमकर-कुण्डले । करयोः कनककङ्कणे । देहे नवरत्नखचितदिव्यकवचं धारयामास । मध्ये मुक्तामयकाञ्चीदाम बन्धयामास । स्वस्य पत्नीः सरस्वतीं सावित्रीं गायत्रीं स्वपुत्रान् पौत्रान् मानसपुत्रान् वीर्यजातपुत्रान् समाहूय तेभ्यः विविधवस्त्रभूषणानि दत्त्वा यूयं सर्वे अलङ्कृताः सिद्धा भवतेति सन्दिश्य प्रयाणो-न्मुखोऽभूत् ।

समस्तसेनां पुरतः कृत्वा सत्यात् निर्ययौ । चन्द्रसदृशहंसवाहनं आरुरोह । तस्य वध्वः अद्भुत-विमानानि आरुरुहुः । अनेकघण्टादिवाद्यानि वाद्यन्ते स्म । अपरे केचन चामरैः वीजयन्ति स्म । शौर्यसाहसयुतधीराः गज-अश्व-रथेषु वीरासमं बद्ध्वा संस्थिताः । तत्र तत्र दीर्घपताकायुतध्वजाः समुच्छ्रिताः । शूराः सर्वे विविध-आयुधानि धारयामासुः । ईदृशमहावाहिनीमध्ये गगने नक्षत्रेषु चन्द्र इव विधिः विराजते स्म । तदा केचन श्वेतच्छत्रं दधुः । तत् कीदृशम् ? हेमपत्रावृतदण्डयुक्तं, रत्नखचित-कलशविशिष्टं, महोज्ज्वलम् । पुनः कीदृशं श्वेतच्छत्रम् ? शतयोजनविस्तीर्णम् । दशलक्षजनैः धृतम् ।

अत्र वेङ्कटगिरि-नारायणपुर्योः क्रोशषट्कपरिमिते मध्यदेशे । शतयोजनविस्तीर्णस्य श्वेतच्छत्रस्य गमनागमनं कथम् ? समाधानम्— ब्राह्मच्छत्रस्य शतयोजनविस्तीर्णत्वं दशलक्षजनधृतत्वं च सत्ये युज्यते । अद्य कलौ विधेः भूलोकप्रस्थानवेलायां अधोलोकं प्रति क्रमेण अवरोहणे । यथादेश-कालावस्थानुगुणम् । प्रभापरिमाणगुणक्रियादीनां विधेरिव छत्रस्य सङ्कोचः । योजनशब्दः "युज्यते अनेनेति योजनम्" इति व्युत्पत्तेः । शलाकार्थः । शतसङ्ख्याकशलाकाभिः विस्तीर्णम् । दशदिशः लक्षयन्तः ये जनाः तैः धृतम् । इत्यभिप्रायः । एवं छत्रं नभसि राजमानम् ।

**मूलम्**

**भेरीणां नवसाहस्रं दुन्दुभीनां शतं तथा ।**
**मृदङ्गपणवाडम्बिढक्कानिस्साणडिण्डिमान् ॥ ५० ॥**

**गोमुखान् मुरजान् वीणांस्तथाऽन्या झर्झरादिकान् ।**
**बर्बरैः शतशृङ्गै - दीर्घशृङ्गैश्च सुस्वरैः ॥ ५१ ॥**

समस्वरैः सप्तरागैः सर्पाणामपि मोहकैः ।
फूत्कारैश्च वषट्कारैः [1]धनकांस्यसुवारिजैः ॥ ५२ ॥

१. ध्वनयद्भिश्च वारिजम् ।

### कल्याणकाण्डदीपः

'भेरीणां' इत्यादि 'धनकांस्यसुवारिजैः' इत्यन्तपद्यत्रयमेकं वाक्यम् । बर्बरादि वारिजान्तं सुषिरवाद्यैः सह दुन्दुभ्यादिझर्झरादिकान्तानानद्धान् दृतमवादयन्निति सम्बन्धः । या वादिता भां भां कारं करोति सा भेरी । यो वादितो दुं दुं करोति स दुन्दुभिः । शतृहृदयं भिनत्तीति भेरी । दुं दुं शब्देन उभिः पूर्णं यस्मिन् स दुन्दुभिः । "भेरी स्त्री दुन्दुभिः पुमान्" । मृदङ्गो मर्दको हरी तक्याकृतिरङ्कयः । पणवो मध्यतन्त्री आलिङ्ग्यः चौडिकेति प्रसिद्धः । अभ्यामाडम्बिनः उच्छ्रितध्वनयः । ते च ते ढक्कानिः-[illegible]डिण्डिमाश्च, तान् । ढकृगिति कायतीति ढक्का यशः पटहः स्यात् । "यशः पटहो ढक्का" इति अमरः । निस्साणं रणवाद्यम् । डिं डिं शब्दं करोतीति डिण्डिमः । डक्कुर इति प्रसिद्धिः । गोमुखान् मुरजान् गोमुखाकृतिमृदङ्गात् । शेखरवाद्यात् । सूर्यचन्द्रवाद्यमिति प्रसिद्धिः । एते ऊर्ध्वकाः । झर्झरान्ता आनद्धाः । बर्बरशब्दं करोतीति बर्बरः सुषिरवाद्यविशेषः । सुस्वरैः शतभृङ्गैः दीर्घभृङ्गैः सर्पाणामपि मोहकैः समस्वरैः निषादादिभिः सप्तरागैः फूत्कारैः वषट्कारैः धनकांस्यसुवारिजैः धनकांस्यबद्धमुरजपृष्ठशङ्खैः एतानि सुषिराणि ।

### मूलम्

गन्धर्वैर्गाननिपुणैः स्वरभेदविचक्षणैः।
वीणादण्डसुयन्त्राणि वादयद्भिः सुखावहैः ॥ ५३ ॥

नर्तकैर्नटकैश्चापि हाहाहूहूनुतोऽञ्जसा ।
स्तूयमानास्तुम्बुरुणा सूतमागधवन्दिभिः ॥ ५४ ॥

### कल्याणकाण्डदीपः

गन्धर्वैरिति । वीणादण्डसुयन्त्राणि वादयद्भिः स्वरमूर्च्छाविचक्षणैः स्वरोच्छ्रयकुशलैः । सुखावहैरानन्ददायकैः । गाननिपुणैर्गन्धर्वैः गीयमानः तुम्बुरुणा सूतमागधवन्दिभिश्च स्तूयमानः हाहाहूहूभ्यां नतः सन् । नर्तकैर्नटकैश्च सेव्यमानः स्वलोकानुगुणरूपेण सत्यात् तपोलोकं प्रतस्थ इति अन्वयः ।

"पुराणवित् पुरा राज्ञः गुणवादी सुधार्मिकः ।
शुचिर्दक्षोऽमोघमन्त्रः सूतश्च कृतिभिः स्मृतः ॥

राज्ञः पुरजनस्यापि मङ्गळाचारशंसिनः ।
मान्यैर्मगधिकागीतैः मागधा इत्युदीरिताः ॥

वन्द्यभूभृद्गुणोत्कर्षश्रावका वन्दिनः स्मृताः ।
गीतमाधुर्यसम्पन्नौ विख्यातौ च हहाहुहूः ॥"

**नर्तकाः** पदार्थाभिनायकाः । **नटकाः** वाक्यार्थाभिनायकाः ।

**गूढकर्तृकव्याख्यानम्**

प्रस्थाने विविधवाद्यानि वादितानि । (भां भां कुर्वन्तीति भेर्यः । रिपुहृदयं भिनत्तीति वा ।) नवसहस्रसङ्ख्याकभेर्यः । (दुं दुं कुर्वन्तीति) दुन्दुभयः शतत्रयम् । मृदङ्गाः पणवाः ढकाः मड्डवः निस्साणाः (रणवाद्य) (डिं डिं कुर्वन्तीति) डिण्डिमाः । गोमुखाकृतिमृदङ्गाः । सूर्यवाद्यचन्द्रवाद्यानि । (झर् झर् कुर्वन्तीति) झर्झराः । बर्बरशब्दं कुर्वन्तीति बर्बराः । सुषिरवाद्यानि । सुस्वरैः शतभृङ्गैः दीर्घभृङ्गैः सर्पाणामपि मोहकैः सप्तस्वरैः निषादादिभिः सप्तरागैः वीणाः वादयन्तः । ("शिशुर्वेत्ति पशुर्वेत्ति वेत्ति गानरसं फणीः" इत्युक्तेः ।) स्वराः सर्वमोहकाः आसन् । केचित् फूत्कारान् केचित् वषट्कारान् कुर्वन्ति । केचित् वारिजान् धमन्तः । गानविद्यानिपुणगन्धर्वाः सप्तस्वरप्रस्तारक्रमविचक्षणाः गायन्तः । नर्तकाः नृत्यन्तः । नटकाः नटन्तः । हाहाहूहूप्रमुखा गन्धर्वाः तुम्बरुमुखाः गायन्तः । सूताः मागधाः वन्दिनः वैतालिकाः स्तुतिपाठकाः स्तुवतः । एवंविधसेवासेव्यमानो विधिः प्रयातः ।

**मूलम्**

**सुराः सर्वे श्रीनिवासमहोत्सवदिदृक्षवः ।**
**अनुजग्मुर्महाराज ब्रह्माणं [1]पुरुषोत्तमम् ॥ ५५ ॥**

**[2]सत्यलोकाज्जनोलोकं जनोलोकान्नभस्थलम् ।**
**नभोलोकात् स्वर्गलोकं क्रमेण पृथिवीपते ॥ ५६ ॥**

---

१. यान्तमग्रतः ।

२. सत्यलोकात्तपोलोकं जनोलोकं ततःपरम् ।
महर्लोकात् [illegible]लोकं स्वर्गलोकान्महीतलम् ॥

**कल्याणकाण्डदीपः**

अनुजग्मुरिति । 'गच्छन्तं' इति शेषः । सत्यलोकाज्जनोलोकमिति ।

"सत्यलोकात्तपोलोकं तपोलोकाज्जनस्थलम् ।
जनोलोकात् महर्लोकं महर्लोकात् सुवस्थलम् ।
सुवर्लोकान्नभोलोकं नभोलोकाद्भुवस्थलम् ।
तत्तल्लोकजनैरेवं क्रमेण पृथिवीपते ॥" इत्यर्थः ।

सङ्ग्रहरूपत्वात् पुराणवचनस्य सामर्थ्याश्रयणेनोत्प्लुत्य क्रमोक्तिरिति ध्येयम् । स्वर्गलोकं मेरु-शिखरस्थम् । क्रमकथनं तु तत्तल्लोकानुगुणरूपादिकं स्वीकृत्येति सूचनाय ।

**मूलम्**

[1]एवम्भूतं महाबाहुं ब्रह्माणं ददृशुर्जनाः ।
ऋषयः सत्यसम्पन्नाः [2]अदृष्टाद्भुतदर्शनम् ॥ ५७ ॥

१. एवं क्रमान्महाभागं । २. तदात्यद्भुतदर्शनम् ।

वासुदेवसमाकारं वैश्वानरसमाननम् ।
ददृशुः सर्वलोकेशं साक्षात् ब्रह्माणमग्रजम् ॥ ५८ ॥

[1]सर्वलोकप्रभुं शान्तं साक्षान्नारायणात्मजम् ।
केचिन्नारायणोऽयं वै केचिन्नारायणो न च ॥ ५९ ॥

१. केचिन्नारायणो नायं वदनानां विपर्ययात् ।
इत्यब्रुवंस्ततः सर्वे मत्त्वा तं चतुराननम् ।

ऊहन्तो मुनयः सर्वे वदनानां विपर्ययात् ।
नीलमेघघनश्यामं शङ्खचक्रगदाधरम् ॥ ६० ॥

हंसस्थं भूषणैर्युक्तं कवचाडम्बरान्वितम् ।
अपृच्छंस्ते महीदेवा ब्रह्मणोऽनुचरान् जनान् ॥ ६१ ॥

**कल्याणकाण्डदीपः**

'केचित्' इत्यादि पद्यद्वयमेकान्वयम् । आसत्यात् आच स्वर्गं कामतो नीलमेघश्यामं शङ्ख-चक्रगदाधरं कवचाडम्बरान्वितं कञ्चुकाटोपोपेतं भूषणैः युक्तं ब्राह्मणं दृष्ट्वा केचिद्दूरस्था देवर्षयः नारायणोऽयमिति ऊहन्तोऽभूवन् । केचन समीपस्था वदनानां विपर्ययात् अयं नारायणो न, अपि तु नारायणात्मज इति ।

**मूलम्**

**महीदेवा ऊचुः—**

**कं वा देशं प्रति जनाः कुतो वाऽऽगमनं विधेः ।**

**जना ऊचुः—**

**गच्छामोऽद्य विवाहार्थं श्रीनिवासस्य भूतलम् ॥ ६२ ॥**

**कल्याणकाण्डदीपः**

अथ भूलोकात् रूपं राजरूपं महीदेवा ऋषीनपृच्छन् । ते चाहुरयं विधिरिति । अथापृच्छन् महीदेवा इत्यादि ॥ अथ ऋषयः **गच्छामोऽद्य** इत्यादि । महीदेवाः तद्दर्शनाधिकारिणो ऋषयः ।

**मूलम्**

**तेनैवावाहिताः सर्वे सत्यलोकान्महीसुराः ।**
**ते (तत्) श्रुत्वा वचनं तेषामनुजग्मुर्महर्षयः ॥ ६३ ॥**

**साग्निहोत्राः सपुत्राश्च सशिष्याः सपरिग्रहाः ।**
**एवं विभवमास्थाय ब्रह्माऽगाद्वेङ्कटाचलम् ॥ ६४ ॥**

**कल्याणकाण्डदीपः**

आगात् इति च्छेदः ।

**वादित्राणां स्वनेनैव दुन्दुभीनां च निःस्वनैः ।**
**आपूरितं जग[illegible] सशैलवनकाननम् ॥ ६५ ॥**

**कल्याणकाण्डदीपः**

गिरिनदीगह्वरवासीभिः कथमेतज्जातमित्यत आह **वादित्राणामिति** । ततानद्धसुषिरधनाख्य-वीणादिमुरजादिवंशादिताळादि-आतोद्यवाद्यानाम् ।

**गूढकर्तृकव्याख्यानम्**

विधिं अनुसृत्य सर्वसुरा यान्तः । एवं विधिः सपरिवारं सवैभवं सत्यात् तपः, तपसः जनम्, जनात् महः, महसः स्वर्गम्, स्वर्गात् भुवर्लोकम्, भुवर्लोकात् भूमिं प्रयात् । तत्तल्लोके लोकाः पश्यन्ति स्म । सात्त्विकाः ऋषयः विधिं ददृशुः । विधिः सर्वलोकेशः अग्रेजातः । अद्भुतदर्शनस्य वासुदेवस्य समाकारः अग्निसम्मुखकान्तिराजितः । दूरदेशे स्थिताः विधेः गाम्भीर्येण "कोऽयम् ? नारायण इव भाति" इति वदन्तः । अपरे समीपस्थाः "अयं नारायणो न । नारायणश्चेत् चतुर्वदनानि नाभविष्यन् । चतुरास्यसत्त्वात् विधिरेवायम्" इति वदन्तः । "एतावदेव न । हंसमारूढवान् । कवचाडम्बरेण अन्वितः" इति वदन्तः । तत्र तत्र विप्राः विधिपरिचरजनान् प्रति, जनाः— "विधिः, एते जनाः, कं वा देशं गच्छन्तः ? जनाः— "भुवि श्रीनिवासकल्याणोत्सवो भविष्यति । तदर्थं तेनाहूताः वयं तत्र गच्छामः । तेषां वचनं श्रुत्वा तत्तल्लोकवासिजनाः विप्राः मुनयः स्वस्व-अग्निहोत्रसहिताः सपुत्राः सपरिग्रहाः सशिष्याः तान् जनान् अनुजग्मुः । एवं विभवमापन्नः विधिः वेङ्कटाचलमगात् । तदा तत्तानद्द-सुषिरघनवीणामुरजादिवाद्यवंशादितालादिभेरीदुन्दुभिप्रभृतिवाद्यानां स्वनेन शैलवनकाननादि सकलजगत् आपूरितम् ।

**मूलम्**

**श्रीनिवासं प्रति चारादिज्ञापितब्रह्मागमनम्**

**एतस्मिन्नेव काले तु भगवान् [1]लौकिकीतनुः ।**
**अदृष्ट्वा [2]खगराजानं मातरं वाक्यमब्रवीत् ॥ ६६ ॥**

१. लौकिकैः समैः । २. खगराजं तं ।

**श्रीनिवास उवाच—**

**किं नागतोऽम्ब खगराट् पुत्रार्थं प्रेषितो मया ।**
**मार्गे निरोधितः केन किं [1]कुर्वे कारणं वद ॥ ६७ ॥**

१. वा स्यात् ।

**एवं वदति गोविन्दे चारो दृष्टिपथं गतः ।**
**चारं दृष्ट्वाऽतिसन्तोषं स लेभे पुरुषोत्तमः ॥ ६८ ॥**

**गूढकर्तृकव्याख्यानम्**

एतस्मिन् काले इतः वेङ्कटाद्रौ अव्याहतषडैश्वर्यगुणसम्पन्नः श्रीनिवासः लौकिकजनैः युक्तः विचारयामास । आत्मना प्रेषितो गरुडो नागतः । तदा मातरं बकुलां प्रति "अम्ब । विधिमानय" इति सन्दिश्य गरुडं प्रेषितवान् । स इतोऽपि नागतः । कुतो नागतः ? न जाने । मार्गे गच्छन्तं यः कोऽपि निरुद्धवान् ? किं कारणं स्यात् ? एवं वदति सति श्रीनिवासे एकः चारः दृष्टिपथं गतः । चारदर्शनेन श्रीनिवासस्य सन्तोषो जातः ।

**श्रीनिवास उवाच—**

**क्व चार मम पुत्रस्तु केन वै प्रेषितो भवान् ॥ ६९ ॥**

**चार उवाच—**

**[१]अद्यागच्छति गोविन्द गङ्गां तरति ते सुतः ।**
**एवं वदति [२]चारे तु पुनरेकोऽभ्यभाषत ॥ ७० ॥**

१. आगमिष्यति । २. तच्चारे ।

**द्वितीय उवाच—**

**गोदावरीं तरति ते पुत्रः पौरजनैः सह ।**
**स च तद्वचनं श्रुत्वा किञ्चिद्धास्यमुखान्वितः ॥ ७१ ॥**
**तदाऽऽजगाम गरुडः पक्षिराड् [१]पक्षिवाहनम् ।**
**प्रणिपत्य श्रीनिवासं प्रोवाच च वचस्तदा ॥ ७२ ॥**

१. ब्रह्मचोदितः ।

**गरुड उवाच—**

**[१]कृष्णं नत्वाऽवदत् स्वामिं श्रीशैलमुपगम्य च ।**
**अहोबलं [२]समासाद्य तत्राञ्जमोऽहमागतः ॥ ७२ ॥**

१. कृष्णां तीर्त्वा तु ते पुत्रः । २. चाससाद ।

इत्येवमुच्यमाने तु गरुडेन महात्मना।
तत्क्षणेनैव राजेन्द्र विष्वक्सेनोऽभिवाद्य च ।
विनीतो वाचमूचेऽथ श्रीनिवासं परात्परम् ॥ ७३ ॥

विष्वक्सेन उवाच—

तौम्बुरुं तीर्थमासाद्य तत्रागच्छति भो हरे।
पुत्रस्तव महाराज परमात्मा चतुर्मुखः ॥ ७४ ॥

पुत्रस्तवागच्छतीह भवद्दर्शनकौतुकी।
सेनापतौ वदत्येवं भगवानुत्थितो मुदा ॥ ७५ ॥

[१]भगवान् स्कन्धमारुह्य पक्षिणः पृथिवीपते।
उत्तराभिमुखः प्रायात् पुत्रस्नेहेन भूमिप ॥ ७६ ॥

---

१. गरुडस्कन्धमारूढः प्रयाणाभिमुखो हरिः ।

### गूढकर्तृकव्याख्यानम्

श्रीनिवासः— "चार ! किं अरे वृत्तम् । मम पुत्रो विधिः कुत्रास्ति ? कुतः त्वं आयातः ?"

चारः— स्वामिन् गोविन्द ! तव सुतो विधिः गङ्गां तरन् अस्ति । तद्वृत्तं त्वां कथयितुमागतः । एवं वदतोः अपरचारः आगत्य "जगदीश ! तव सुतः विधिः पौरजनैः सह गोदावरीं तरन् अस्ति ।" तद्दूतवचनेन श्रीनिवासस्य किञ्चित् हासो जातः । ततः विधिना चोदितः गरुडः आगत्य श्रीनिवासं प्रणम्य "स्वामिन् जगदीश ! तव पुत्रः विधिः कृष्णां तीर्त्वा श्रीशैलं उपागतवान् । तं तीर्त्वा अहोबलं आससाद । तदा मां "पूर्वमेव गत्वा मां आगच्छन्तं श्रीनिवासं ब्रूहि" इति सन्दिदेश । तदाज्ञया अहमागतः । एवं गरुडे वदति विष्वक्सेन आगत्य श्रीनिवासं प्रणम्य विनीतः सन् "स्वामिन् ! श्रीहरे " तव पुत्रः चतुर्मुखः तुम्बुरुतीर्थमासाद्य तत्र अवगाहमानः 'त्वां पश्यामि पश्यामि' इति भवद्दर्शनलालसः । एवं सेनापतौ विष्वक्सेने वदति श्रीनिवासः ससंभ्रमं मुदा उत्थाय पुत्रं द्रष्टुं इच्छन् गरुडमारूढः उत्तराभिमुखं अयात् ।

विष्वक्सेनोऽतिवेगेन ब्रह्माणमुपगम्य च।
आनम्य शिरसा भक्त्या प्रोवाच वचनं विधिम् ॥ ७७॥

**चतुर्मुखश्रीनिवासयोः परस्परावलोकनसंवादः**

विष्वक्सेन उवाच—

भगवानरविन्दाक्षस्तव दर्शनलालसः ।
गरुडस्कन्धमारुह्य समागच्छति तेऽन्तिकम् ॥ ७८ ॥

तच्छ्रुत्वा वचनं तस्य विष्वक्सेनस्य धीमतः ।
चन्द्रबिम्बनिभाद्धंसादवरुह्य पितामहः ॥ ७९ ॥

पादाभ्यामागमच्छीघ्रं यत्रागच्छति केशवः ।
स ददर्श महाराज जनकं चतुराननः ॥ ८० ॥

दण्डवत् प्रणिपत्याथ [१]स पपात धरातले ।
स चावरुह्य गरुडादाससाद पितामहम् ।
उत्थाप्यालिङ्ग्य सस्नेहमुवाच मधुसूदनः ॥ ८१ ॥

१. चाग्रे बद्ध्वा करौ स्थितः ।

श्रीनिवास उवाच—

उत्तिष्ठ तात भद्रं ते पश्य मामातुरं कृशम् ।
बहुकालेन ते बुद्धिर्मम दर्शनलालसा ।
[१]तच्च दैवमहं मन्ये त्वद्बुद्धिर्मम दर्शने ॥ ८२ ॥

१. तदेव परमं ।

कौतूहलं नोपनीता कदाचिदपि येन वै ।
न किञ्चिद्विद्यते वस्तु त्वां विना चतुरानन ॥ ८३ ॥

[१]एवमुक्ते हृषीकेशो नोवाच चतुराननः ।
मुहूर्तद्वयमात्रं तु [२]श्रीनिवासेन भूमिप ॥ ८४ ॥

१. वदत्येवं । २. श्रीनिवासेन नोचिवान् ।

आनन्दबाष्पसन्दिग्धनयनौ तौ परस्परम् ।
स्नेहात् प्रफुल्लवदनौ मुखं ददृशतुर्मुदा ॥ ८५ ॥

पितुर्मुखं सुतोऽपश्यत् सुतवक्त्रं हरिस्तथा ।
ततः सन्तुष्टमनसौ लेभाते परमां मुदम् ॥ ८६ ॥

### गूढकर्तृकव्याख्यानम्

एतस्मिन्नन्तरे विष्वक्सेनः वेगेन गत्वा विधिमासाद्य प्रणम्य भयभक्त्या "भगवन् पितामह ! कमलाक्षः श्रीनिवासः पुत्रं कदा पश्यामि इति तव दर्शनलालसः । मदुक्तिक्षणादेव गरुडस्कन्धमारूढः तव समीपं आगच्छत् । एवमुक्ते विधिः क्षणात् हंसादवरुह्य श्रीनिवास-आगतमार्गेण आगच्छति । ततः श्रीनिवासं ददर्श । दण्डवत् प्रणम्य तस्य अग्रे करौ बद्ध्वा भयभक्त्या स्थितः । श्रीनिवासोऽपि गरुडादवरुह्य विधिमुपगम्य आनतं उत्थाप्य तं आलिङ्ग्य "तात विधे ! तव भद्रं भूयात् । अपि त्वं मां अपश्यः । कथं अस्मि ? कियन् कृशो जातः । एतावत्कालानन्तरमपि मां द्रष्टुं तव बुद्धिर्जाता खलु । तदेव परं मन्ये । विचार्यमाणे कदाचिदपि तव मां द्रष्टुं बुद्धिर्जातेति भाति । पश्य ! मम तु विधे, त्वां विना सन्तोषकवस्तु किमपि न । एवं वदति सति विधिः नोवाच । तदा श्रीनिवासोऽपि नोवाच । उभयोः नेत्रयोः आनन्दबाष्पं सिञ्चति । एवं मुहूर्तद्वयं उभावपि आस्ताम् । एकस्य मुखं एकः पश्यन्तौ प्रीत्या उभौ अपि सन्तुष्टौ ।

### मूलम्

तौ क्रीडन्तौ श्रीनिवासब्रह्माणौ देवसंसदि ।
[1]पिता पुत्रौ तदा दृष्ट्वा सत्यलोकनिवासिनः ।
लेभिरे परमानन्दं तन्मायामोहिताः सुराः ॥ ८७ ॥

१. पितृपुत्रौ ।

देवा ऊचुः—

न तेन सदृशः पुत्रो न तेन जनको भुवि ।
सम्प्रशंसुर्महाराज भक्तिस्नेहवशङ्गताः ॥ ८८ ॥

ततः सुतं समाश्वास्य [1]परिमार्ज्याक्षिजं जलम् ।
[2]पाणिना पाणिमुद्धृत्य स्वनेत्रजल[3]मुत्सृजन् ॥ ८९ ॥

वल्मीकस्थान[4]मासाद्य पुत्रेण सह तस्थिवान् ।
तत्र च श्रीनिवासस्तमुवाच पुरुषोत्तमः ॥ ९० ॥

१. परिमृज्याक्षिजं । २. ब्रह्मणः । ३. मुन्मृजन् । ४. माश्रित्य ।

### गूढकर्तृकव्याख्यानम्

एवं रीत्या श्रीनिवासब्रह्माणौ क्रीडां कुर्वाणौ दृष्ट्वा । सत्यनिवासिनः सर्वे सुराः तन्मायया मोहिताः परमानन्दमापुः । देवाः— "जगति एतादृशपिता न । एतादृशसुतो न । इति तयोः स्नेहवशङ्गताः तौ श्रीनिवासविरिञ्चौ प्रशंसन्तः । ततः श्रीनिवासः पुत्रं समाश्वास्य, तस्य नेत्रजन्यवारि परिमृज्य, ब्रह्मणः सकाशात् स्वनेत्रवारि परिमार्जयन् वल्मीकस्थानं पुत्रं नीत्वा तत्र तेन सह उपविष्टः वदति ।

श्रीभगवानुवाच—

अस्ति ते कुशलं तात [1]स्नुषायाश्च परस्परम् ।
पुत्रपौत्रप्रपौत्राणां क्षेमं प्रब्रूहि मे सुत ॥ ९१ ॥

१. स्नुषाया मम सम्प्रति ।

ब्रह्मोवाच—

सर्वं मङ्गलमस्माकं त्वत्प्रसादेन केशव ।
तात मे वद ते क्षेमं पुराणपुरुषोत्तम ॥ ९२ ॥

### कल्याणकाण्डदीपः

सर्वमङ्गलमिति । स्वदेशस्थितानामस्माकं हे केशव ! त्वत्प्रसादेन सर्वं मङ्गलम् । हे तात ! पितः ! प्रेषितस्य ते योगं क्षेमं च वद इत्यर्थः ।

### गूढकर्तृकव्याख्यानम्

श्रीनिवासः—"विधे ! अपि कुशलं भवतः ज्ञातम् । मम स्नुषाणां क्षेमं वा । तव पुत्राः पौत्राः प्रपौत्राः कथं सन्ति ? अपि ते सर्वं क्षेमिणः ?

विधिः— "तात श्रीनिवास ! भवत्कृपाकटाक्षेण सत्यादिलोकवासिनां अस्माकं सर्वं मङ्गल-मेव । पुराणपुरुषोत्तम ! तव क्षेमातिशयं वद ।"

**मूलम्**

**चतुर्मुखं प्रति श्रीनिवासज्ञापितस्वपरिणयोदन्तः**

श्रीभगवानुवाच—

द्वापरान्ते कृतं कर्म शृणु पुत्र [1]समाधिमान् ।
[2]शेषतल्पगतं प्रायादपमृद्य पदाद् भृगुः ।
तताडोरसि ते मातुरास्पदे कमलासन ॥ ९३ ॥

१. समाधिना ।
२. वैकुण्ठे शेषतल्पस्थं भृगुः पादतलेन माम् ।

तदा ते जननी पुत्र करवीरपुरं गता ।
तेन दुःखेन सन्तप्तस्त्यक्त्वा वैकुण्ठमुत्तमम् ॥ ९४ ॥
इहागतो वेङ्कटाद्रिं तत्रापश्यं निकेतनम् ।
अत्र वल्मीकगो नित्यं [1]चोलभृत्येन घातितः ॥ ९५ ॥
प्राहरन् मां राजभार्याताडितो धेनुकोपतः ।
बृहस्पतेः प्रसादेन [2]जीवायतनकारणात् ॥ ९६ ॥
अद्य दग्धं महद्दुःखं दर्शनात् तव पुत्रक ।
[3]वन्दनं कुरु कल्याणीं मातरं मम नन्दन ॥ ९७ ॥

१. चोलभृत्यः कुठारतः । २. जीवामि करुणानिधे । ३. अभिवादय ।

**कल्याणकाण्डदीपः**

**बृहस्पतेरिति । प्रसादेन** औषधानुग्रहेण । **जीवायतनकारणात्** प्राणमात्राश्रयणकारणात् । हे पुत्रक ! तव दर्शनं जातम् । तस्मात् तव दर्शनात् इदानीं महत् दुःखं भृगुशापनिमित्तं स्वाङ्गीकृतं रामावतारे भुक्तं कृष्णावतारे प्रतिबद्धं प्रारब्धशेषपरिपाकरूपं व्यसनं अद्य श्रीनिवासावतारे अनुभूय दग्धं भस्मीभूतं निश्शेषमभूत् । एतत्कथाप्रसङ्गिनां प्रारब्धशेषो निःशेषो भवतीति ध्येयम् ।

### गूढकर्तृकव्याख्यानम्

श्रीनिवासः— "तात विधे ! द्वापरान्ते प्रचरितं कर्म वच्मि । सावधानेन शृणु । वैकुण्ठे शेषतल्पशायिनि मयि स्थिते भृगुमुनिरागत्य पादेन मम वक्षसि तताड । मम वक्षः, तव विदितं, तव मातृकमलावासस्थानम् । स्वालिङ्गनस्थाने ताडनात् अवमानिता कोपेन रमा मां त्यक्त्वा करवीरपुरं गता । तद्वियोगः अतिदुःसहोऽभूत् । तेन सन्तप्तः प्रियतमस्थानमपि वैकुण्ठं विहाय इहागतः । अत्रापि वासाय अनूकूलस्थानमेव न लब्धम् । अन्ते वेङ्कटाद्रौ इदं वल्मीकं मद्भागस्थं परं स्थानं मत्वा इतः किं करवाणि ? अत्रैव स्थितः । यथाकथञ्चित् समाधानेन भवितव्यमिति स्थिते अत्रापि मम दुःखं जातम् । अहं अदृष्टहीनः । "प्रायो गच्छति यत्र दैवहतकः तत्रापतन्त्यापदः" इत्युक्तेः । चोलराजीय-गोपालकः मदर्थे क्षीरं सिञ्चतीं दृष्ट्वा धेनुं तीक्ष्णकुठारेण मम शिरसि प्रजहार । शिरो भिन्नम् । रक्तं अतिस्रुतम् । महत् क्षतशान्त्यर्थं प्रयत्नः । स महानुभावः अस्ति खलु गुरुः परमदयालुः । तदनुग्रहेण अद्यावधि जीवितः । गुरुः चिकित्सां चकार । अद्य क्षतं शान्तम् । साकल्येन वच्मि । भृगुशापनिमित्तं दुःखं अङ्गीकृत्य रामावतारे भुक्तं कृष्णावतारे प्रतिबद्धं प्रारब्धशेषपरिपाकरूपं व्यसनं अद्य मम श्रीनिवासावतारे अनुभूय दग्धम् । एतावदस्ति । विधे ! पश्य । कल्याणी इयं मम बकुला माता । इमां वन्दस्व । उत्तिष्ठ ।

### मूलम्

**इत्युक्तो बकुलां ब्रह्मा ववन्दे हरिमातरम् ॥ ९८ ॥**

**ब्रह्मोवाच—**

**जननी तव गोविन्द कुत्रेयं जनिता पुरा ।**
**एतदाख्याहि भगवन् श्रोतुं कौतूहलं हि मे ॥ ९९ ॥**

**श्रीभगवानुवाच—**

**यशोदा बकुला भूत्वा वर्तते वेङ्कटाचले ॥ १०० ॥**

#### कल्याणकाण्डदीपः

**यशोदा बकुळा भूत्वेति** । असम्मितेयं सृष्टिः । विशेषस्तूक्तचरः ।

मूलम्

**रक्षितोऽहं तया भद्र बहुकालं पितामह।**
**आपत्काले तु यो रक्षेत् तं विन्यात् पितरं सुत ॥ १०१ ॥**

कल्याणकाण्डदीपः

**तं विन्यात् पितरमिति।** तं चेतनं **पितरं** पितृगणगणितं विन्यात्। "जनिता चोपनीता च" इत्यादेः।

गूढकर्तृकव्याख्यानम्

विधिः— (क्षणात् बकुलां प्रणम्य) तात गोविन्द! तव इयं जननी का पुरा? वक्तव्यम्। कुतूहली श्रोतुम्।

श्रीनिवासः— तात विधे! मम कृष्णावतारे नन्दपत्नी यशोदा, मां पोषितवती जननी खलु। सा मम बाललीलादिकं दृष्ट्वा सन्तुष्टा। अपि तु, "जगदीश कृष्ण! तव कल्याणं ईक्षितुकामा। तत् अनुगृहाण" इति मां ययाचे। तदा "अहं कलौ अवतरिष्यामि, तदा तव मनोरथं पूरयिष्यामि" इति वरं दत्तवान्। तेनैव प्रकारेण सा यशोदैव अद्य बकुला जाता। अत्र वेङ्कटाचले अस्ति। चिरात् मां अन्नपानादि उपचारैः पोषितवती। अद्य इयं मे आपद्बन्धुः। (आपदि यो रक्षेत् तं पितरं गुरुं विन्यात्। अत्र "जनिता चोपनेता च यस्तु विद्यां प्रयच्छति। अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः" इति ज्ञानिनः।)

मूलम्

**कदाचिन्मृगयासक्तः पद्मतीर्थसमीपतः।**
**[1]तत्रारामे पुष्पपूर्णे कन्याशतसमन्विते ॥ १०२ ॥**

**तेषां मध्ये राजकन्यां नाम्ना पद्मावतीं विदुः।**
**सा मामपेक्षति मोहेन सौन्दर्यात् तत् पितामह ॥ १०३ ॥**

१. आगामहं तत्र पुष्पवने कन्या उपागमन्।
तासां मध्ये विराजन्ती कन्या काचिदुपागमत्।
यामाकाशप्रभोः पुत्रीं नाम्ना पद्मावतीं विदुः।
तामावेदयति मोहान्मे मनस्तामेव काङ्क्षति।

**कल्याणकाण्डदीपः**

क्षेममुक्त्वा योगमाह कदाचिदिति । पद्मतीर्थसमीपतः । तद्देशे मृगयासक्तोऽभवम् ।

**तामेव घटयाशु त्वं [1]पुत्रो यदि भवान् मम ।**
**[2]एवमुक्ते हृषीकेशे शुश्रुवे दुन्दुभेः स्वनः ॥ १०४ ॥**

१. पुत्रोऽसि परमो मम । २. वदत्येवं ।

**कल्याणकाण्डदीपः**

**तत्र** पद्मतीर्थसमीपे विद्यमाने । कन्याशतैः समन्विते पुष्पपूर्णे आरामे एका कन्या आसीत् । तेषां कन्याशतानां मध्ये तां राजकन्यां नाम्ना पद्मावतीं विदुः । कमलावतारां विदन्ति ज्ञानिनः । सा मत्सौन्दर्यात् जातेन मोहेन मदनसम्भ्रमेण मामपेक्षति । परस्मैपदमार्षम् । चान्द्रं वा । मामाकाङ्क्षते । तवाकाङ्क्षा नास्ति किम् ? इत्यत आह **तदिति** । **तत् एव** तस्मादेव । तत्सौन्दर्याज्जातकाम-मोहादेव । "ममाऽप्याकाङ्क्षाऽस्ति" इति शेषः । किं तव साधुदाराः पुत्राश्च न सन्ति ? इत्यत आह— **पुत्रो यदीति** । यद्यपि लक्ष्मी मम कळत्रं, भवान् पुत्रः इत्येतत् सत्यं, तथाऽपि भोगिनीमन्या-माकाङ्क्ष्ये । अतः कामातुरत्वादाशु घटय । किं बहूक्त्या ? इत्यर्थः । यद्वा, हे पितामह ! यदि भवान् तस्याः पुत्रः तर्हि तव पितुः ममैव तामाशु घटय । नो चेत्, माऽस्त्वित्यर्थः ॥

**गूढकर्तृकन्याख्यानम्**

एकदा मृगयायै पद्मतीर्थसमीपवनदेशे अचरम् । तत्र एकपुष्पोद्याने काश्चन कन्या आगताः । तासां मध्ये एकतमा कन्या अत्युज्ज्वलरूपवती । सा आकाशराजपुत्री पद्मावतीति नाम । तां साक्षात् रमा-वतारां वदन्ति ज्ञानिनः । सा पद्मा प्रथमं मां दृष्ट्वा मोहिता । तस्याः सौन्दर्येण ममापि मोहो जातः । अतः तां परिणेतुमपेक्षे । "तव दाराः पुत्राश्च न किम् ? पुनः कुतः तवापेक्षा" इति चेत् । रमा भार्या अस्ति । त्वं पुत्रोऽसि । सत्यम् । तथाऽपि, भोगाय अन्यां अपेक्षे । अद्य त्वं मम पुत्रोऽसि । अतः तां पद्मां आशु घटय । (यः प्रीणयेत् सुचरितैः पितरं स पुत्रः इति वदन्ति) । त्वं पुत्रः मम वाक्यं कुरु । मां तोषय । इयं तव बकुलाऽपि मम कल्याणं काङ्क्षति । पद्मा तव जननी । सा मां वृणोति । एवं च मातापितृसेवां कृत्वा पुत्रश्[illegible]ाच्यो भव । त्वं मे परमपुत्रः ।" एवं वदति सति दुन्दुभि-स्वनः श्रुतः ।

मूलम्

**श्रीनिवासपरिणयार्थं शेषाचलं प्रति रुद्राद्यागमनम्**

श्रीभगवानुवाच—

कस्य वाद्यमिदं [1]ब्रूहि कश्च मामुपगच्छति।
वदत्येवं परे धाम्नि वायुस्तमभिपद्यत ॥ १०५॥

१. ब्रह्मन्।

एणं समारुह्य सभारतीशः
सुगन्धमादाय ययौ गिरीन्द्रम्।
ज्येष्ठं सुतं श्रेष्ठगुणं जनार्दनः
क्षेमावलम्बं ददृशे मुदान्वितः ॥ १०६॥

कल्याणकाण्डदीपः

**एणमिति**। **सुगन्धमिति**। सुगन्धं शोभनो गन्धो गन्धवान् परागो यस्मिन् स सुगन्धः। सुगन्धवत् पुष्परेणुमिश्रवायुः, तम्। अतो नेत्वम्। तत्र तदेकान्तगृहात्। **ज्येष्ठमिति**। "दृष्ट्वा तस्मै" इति शेषः।

मूलम्

स्थीयतामिति तं वायुं साधु साध्वित्यभाषत ॥ १०७॥

श्रीनिवास उवाच—

पुत्राणां मम कल्याणं गरीयो भारतीपते।
भारती सर्वलोकेषु विश्रुता [1]पतिभाविनी ॥ १०८॥

१. प्रतिभाति मे।

कल्याणकाण्डदीपः

**पतिभाविनी** पतिभक्तिमती।

**कल्याणकाण्डदीपः**

क्षेममुक्त्वा योगमाह कदाचिदिति । पद्मतीर्थसमीपतः । तद्देशे मृगयासक्तोऽभवम् ।

**तामेव घटयाशु त्वं [1]पुत्रो यदि भवान् मम ।**
**[2]एवमुक्ते हृषीकेशे शुश्रुवे दुन्दुभेः स्वनः ॥ १०४ ॥**

१. पुत्रोऽसि परमो मम । २. वदत्येवं ।

**कल्याणकाण्डदीपः**

तत्र पद्मतीर्थसमीपे विद्यमाने । कन्याशतैः समन्विते पुष्पपूर्णे आरामे एका कन्या आसीत् । तेषां कन्याशतानां मध्ये तां राजकन्यां नाम्ना पद्मावतीं विदुः । कमलावतारां विदन्ति ज्ञानिनः । सा मत्सौन्दर्यात् जातेन मोहेन मदनसम्भ्रमेण मामपेक्षति । परस्मैपदमार्षम् । चान्द्रं वा । मामाकाङ्क्षते । तवाकाङ्क्षा नास्ति किम् ? इत्यत आह तदिति । तत् एव तस्मादेव । तत्सौन्दर्याज्जातकाम-मोहादेव । "ममाऽप्याकाङ्क्षाऽस्ति" इति शेषः । किं तव साधुदाराः पुत्राश्च न सन्ति ? इत्यत आह— **पुत्रो यदीति** । यद्यपि लक्ष्मी मम कळत्रं, भवान् पुत्रः इत्येतत् सत्यं, तथाऽपि भोगिनीमन्या-माकाङ्क्ष्ये । अतः कामातुरत्वादाशु घटय । किं बहूक्त्या ? इत्यर्थः । यद्वा, हे पितामह ! यदि भवान् तस्याः पुत्रः तर्हि तव पितुः ममैव तामाशु घटय । नो चेत्, माऽस्त्वित्यर्थः ॥

**गूढकर्तृकव्याख्यानम्**

एकदा मृगयायै पद्मतीर्थसमीपवनदेशे अचरम् । तत्र एकपुष्पोद्याने काश्चन कन्या आगताः । तासां मध्ये एकतमा कन्या अत्युज्ज्वलरूपवती । सा आकाशराजपुत्री पद्मावतीति नाम । तां साक्षात् रमा-वतारां वदन्ति ज्ञानिनः । सा पद्मा प्रथमं मां दृष्ट्वा मोहिता । तस्याः सौन्दर्येण ममापि मोहो जातः । अतः तां परिणेतुमपेक्षे । "तव दाराः पुत्राश्च न किम् ? पुनः कुतः तवापेक्षा" इति चेत् । रमा भार्या अस्ति । त्वं पुत्रोऽसि । सत्यम् । तथाऽपि, भोगाय अन्यां अपेक्षे । अद्य त्वं मम पुत्रोऽसि । अतः तां पद्मां आशु घटय । (यः प्रीणयेत् सुचरितैः पितरं स पुत्रः इति वदन्ति) । त्वं पुत्रः मम वाक्यं कुरु । मां तोषय । इयं तव बकुलाऽपि मम कल्याणं काङ्क्षति । पद्मा तव जननी । सा मां वृणोति । एवं च मातापितृसेवां कृत्वा पुत्रशब्दवाच्यो भव । त्वं मे परमपुत्रः ।" एवं वदति सति दुन्दुभि-स्वनः श्रुतः ।

मूलम्

**श्रीनिवासपरिणयार्थं शेषाचलं प्रति रुद्राद्यागमनम्**

श्रीभगवानुवाच—

कस्य वाद्यमिदं [1]ब्रूहि कश्च मामुपगच्छति।
वदत्येवं परे धाम्नि वायुस्तमभिपद्यत ॥ १०५ ॥

१. ब्रह्मन्।

एणं समारुह्य सभारतीशः
सुगन्धमादाय ययौ गिरीन्द्रम्।
ज्येष्ठं सुतं श्रेष्ठगुणं जनार्दनः
क्षेमावलम्बं ददृशे मुदान्वितः ॥ १०६ ॥

कल्याणकाण्डदीपः

**एणमिति**। **सुगन्धमिति**। सुगन्धं शोभनो गन्धो गन्धवान् परागो यस्मिन् स सुगन्धः। सुगन्धवत् पुष्परेणुमिश्रवायुः, तम्। अतो नेत्वम्। तत्र तदेकान्तगृहात्। **ज्येष्ठमिति**। "दृष्ट्वा तस्मै" इति शेषः।

मूलम्

स्थीयतामिति तं वायुं साधु साध्वित्यभाषत ॥ १०७ ॥

श्रीनिवास उवाच—

पुत्राणां मम कल्याणं गरीयो भारतीपते।
भारती सर्वलोकेषु विश्रुता [1]पतिभाविनी ॥ १०८ ॥

१. प्रतिभाति मे।

कल्याणकाण्डदीपः

**पतिभाविनी** पतिभक्तिमती।

### गूढकर्तृकव्याख्यानम्

श्रीनिवासः— "विधे ! वाद्यध्वनिः श्रूयते खलु । को वा मामुपगच्छति ?" तदा भारतीपतिः वायुः क्षणेन सुगन्धद्रव्यैः शेषाद्रिमागच्छत् । क्षणात् दुष्टदमनः श्रीनिवासः कुशलिनं आयान्तं ज्येष्ठं सुतं वायुं दृष्ट्वा "स्थीयतां स्थीयताम् । भवदागमनेन तुष्टोऽहम् । कल्याण भारतीपते ! मम पुत्राणां गरिष्ठोऽसि । भारती तु सर्वलोकविख्याता इति भाति ।"

### मूलम्

**यथार्हं श्रीनिवासेन सत्कृतो निषसाद च ।**
**एवमुक्ते परं धाम्नि नीलकण्ठोऽभ्यपद्यत ॥ १०९ ॥**

**पितामहं च पितरं ववन्दे वसुधाधिप ।**
**पार्वत्या षण्मुखेनाऽपि प्रमथाधिपसेवकैः ॥ ११० ॥**

**तमालिङ्ग्य हृषीकेशः प्राह शङ्करमागतम् ।**
**वत्सात्राऽऽयाहि निकटं तिष्ठ भद्र वरासने ॥ १११ ॥**

**एवं सम्भाषमाणे तु नीलकण्ठेन केशवे ।**
**ततः समागतः सद्यः कुबेरो नरवाहनः ।**
**यक्षेन्द्रो भृत्यपुत्रैश्च भार्याबन्धुसमन्वितः ॥ ११२ ॥**

### गूढकर्तृकव्याख्यानम्

एवं भाषमाणे कैलासात् नीलकण्ठः पत्नीपुत्राभ्यां पार्वतीस्कन्दाभ्यां प्रमथादिगणैः सवैभवं आगत्य श्रीनिवासं विधिं च प्रणनाम । विनीतः किञ्चित् दूरे अतिष्ठत् । ततः हृषीकेशः श्रीनिवासः पौत्रं आलिङ्ग्य वत्स इत एहि । दूरे किं तिष्ठसि ? अस्मिन् आसने उपविशेत्याह । तत्रान्तरे नरवाहनः यक्षराजः धनाधिपः कुबेरः स्वपत्नीपुत्रबन्धुमित्रैः यक्षश्रेष्ठैः समागतः ।

### मूलम्

**तमायान्तमुपालक्ष्य भगवानाह भूमिप ।**
**धनाधिप महाप्राज्ञ धनवान् भव सर्वदा ॥ ११३ ॥**

**इत्याशिषा नन्दयति हृषीकेशो धनेश्वरम् ।**
**स्वाहास्वधासमेतश्च मेषवाहनमास्थितः ।**
**अग्निश्चागात् सपुत्रश्च स्वजनैर्वेङ्कटाचले ॥ ११४ ॥**

**कल्याणकाण्डदीपः**

**अग्निश्चागादिति ।** गन्तृगम्ययोरग्निवेङ्कटाचलयौर्दाहैकार्थानुप्रवेशादग्निः वेङ्कटाचलमागादित्युक्तम् ।

**मूलम्**

**स जातवेदसं दृष्ट्वा जाताह्लादो जगत्पतिः ।**
**तमालिङ्ग्यातिवेगेन तिष्ठ तिष्ठेति चाब्रवीत् ॥ ११५ ॥**

**ततः प्रेतपतिश्चागाद्यमदूतैः सभार्यया ।**
**स्ववाहनं समारुह्य प्राप शेषगिरिं स्वयम् ।**
**चित्रगुप्तो महाप्राज्ञः सम्प्राप्तो राजसत्तम ॥ ११६ ॥**

**कल्याणकाण्डदीपः**

**तत इति ।** ततः अग्न्यनन्तरं प्रेतपतिश्च अगात् । स्वपुरान्निरगात् । **सभार्यया** भयासहिता सभा, सा च सा अर्या आर्या वा सभार्या, तया । भामत्या स्वामिन्या पूज्यया वेत्यर्थः । यद्वा, सभासु भामतीषु आर्यया । अथवा, देवाङ्गनासभायामार्यया । भार्यया श्यामलया । यमदूतैश्च सह स्ववाहनं समारुह्य शेषगिरिं प्राप्य इत्यर्थः । यमशेषगिर्योः क्रौर्यैकार्थसमावेशादेकान्वयः ।

**मूलम्**

**ततो जलपतिश्चागान्नक्रमारुह्य भक्तिमान् ।**
**भार्यया बहुरत्नाढ्यां नारायणगिरिं प्रति ॥ ११७ ॥**

**कल्याणकाण्डदीपः**

**ततो जलपतिरिति ।** अबैकार्थसन्निवेशात् वरुणो जलपतिः नारायणगिरिमिति ।

**मूलम्**

**आरुह्य गजराजानमिन्द्रः साक्षाच्छचीपतिः ।**

**भोगिराजगिरिं राजन् सर्वभोगालयो महान्।**
**सपौलोम्या सपुत्रेण सम्प्राप्तस्त्रिदशेश्वरः ॥ ११८ ॥**

**कल्याणकाण्डदीपः**

**आरुह्येति** । एकार्थसन्निवेशाय भोगालयो भोगिराजगिरिमिति । सर्वभोगालयो महान् यः त्रिदशेश्वरः । साक्षाच्छचीपतिः इन्द्रः **सपौलोम्या** शच्या सपुत्रेण पुत्रेण युगपत् सपुत्रेणेति यौगपद्ये अव्ययीभावः । 'अव्ययीभावे चाकाल' इति सहस्य सः । ''तृतीयासप्तम्योः'' इति अमभावः । यद्वा, नीकपेन स्वपुत्रेण सह विद्यमानेन । नीकेनेत्यर्थः । 'स्वपुत्रेण' इति पाठः सुगमः ।

**मूलम्**

**एतस्मिन्नेव काले तु सम्प्राप्तौ [1]भानुचन्द्रकौ ॥ ११९ ॥**

**मन्मथो मूलरूपेण सरतिस्तुरगोपरि।**
**मुनयश्च [2]महाराजाः समाजग्मु[3]र्महोत्सवाः ॥ १२० ॥**

**गूढकर्तृकव्याख्यानम्**

उपागतं कुबेरं वीक्ष्य श्रीनिवासः ''धनाधिप कुबेर ! त्वं महाप्राज्ञः । त्वं सर्वदा धनवान् भव । एवं आशीः कृत्वा तोषयामास । ततः स्वाहास्वधाभ्यां पुत्रमित्रबन्धुभिः मेषारूढः अग्निः आयात् । तस्य दर्शनेन श्रीनिवासस्य आह्लादोऽभूत् । तं आलिङ्ग्य तिष्ठ तिष्ठ इत्याह । ततः प्रेतपतिः यमराजः महिषारूढः भार्याबन्धुदूतैः आगतः । ततः महाप्राज्ञः चित्रगुप्तः । ततः भगवद्भक्त-जलपति-वरुणः नक्रारूढः बहुरत्नैर्युतः भार्यासहितः आगतः । ततः समस्तसम्पत्सम्पन्नः देवानां अधिपः इन्द्रः शची-जयन्ताभ्यां ऐरावतारूढः श्रीनिवासमुपागतः । श्रीनिवाससत्कृतः वरासन उपविष्टः । तदैव चन्द्रसूर्यौ स्वस्वलोकवत् । ततः मन्मथः मूलरूपी रतियुक्तः अश्वारूढः आगतः ।

**कश्यपोऽत्रिर्भरद्वाजो वामदेवश्च गौतमः।**
**विश्वामित्रो वसिष्ठश्च वाल्मीकि[4]श्चाणुकश्चलः ॥ १२१ ॥**

१. चन्द्रभास्करौ । २. महाराज । ३. महागिरिम् । ४. र्जमदग्निजः ।

[1]स्वयम्पाको दधीचिश्च शुनश्शेपश्च गालवः ।
[2]गार्गि कृष्णे महाराज सपुत्राः सपरिग्रहाः ॥ १२२ ॥

१. पुलस्त्यश्च । २. गार्ग्यः कृष्णो ।

[1]गन्धर्वाप्सरसः सर्वाः पितरः सिद्धचारणाः ।
ये मुक्ता सर्वराजानाः तेऽपि तत्र समागताः ॥ १२३ ॥

१. गन्धर्वाप्सरसश्चैव सर्वे सिद्धाः सहोरगाः ।
एवं महर्षयो देवाः राजानश्च सहागताः ।
विष्णुभक्ताश्च राजानः तेऽपि तत्र समागताः ।

[1]वैमानिकाः समाजग्मुः सर्वे सम्भ्रमकातराः ।
समाश्वास्याथ गोविन्दो यथायोग्यं [2]यथावयः ॥ १२४ ॥

स्थीयतामिति चोवाच सर्वेषां पुरतो हरिः ।
[3]वासुदेवस्य राजेन्द्र विश्वकर्माऽक्षिगोचरः ॥ १२५ ॥

१. विवाहार्थं । २. तथा नृप । ३. ततोऽभूत् वासुदेवस्य ।

**कल्याणकाण्डदीपः**

**वासुदेवस्येति** । विश्वकर्मा इन्द्रेण सह सभां प्रविश्य निःशङ्कं स्वात्मानं श्रीनिवासं दर्शयामास । तं दृष्ट्वा श्रीनिवासः ''कच्चिन्न सर्वे कर्मान्ताः प्रत्यक्षास्तेऽविशङ्कया । सर्वे वा पुनरुत्सृष्टा मध्यमे वाऽत्र कारणम्'' इति नीतिमनुसृत्य इन्द्रस्य तैक्ष्ण्यं सूचयन्नुपालम्भते— 'तमालोक्य' इत्यादिना 'अन्यं नियोजय' इत्यन्तेन ।

**मूलम्**

**ब्रह्माज्ञया विश्वकर्मकृतपरिणयार्हपुरनिर्माणक्रमः**

तमालोक्य हृषीकेश इन्द्रमाहातिमन्युमान् ।

श्रीभगवानुवाच—

पश्येन्द्र गर्वबाहुल्यमस्य विश्वकृतो नृप ॥ १२६ ॥

### गृहकर्तृकन्याख्यानम्

ततः बहुमहर्षयः कश्यप-अत्रि-भरद्वाज-वामदेव-गौतम-विश्वामित्र-वसिष्ठ-वाल्मीकि-जामदग्न्य-पुलस्त्य-दधीचि-शुनःशेपः गालवगार्ग्यकृष्णादयः पुत्रकलत्रसहिताः वेङ्कटाद्रिं प्राप्ताः । ततः गन्धर्वाः ऊर्वशी-मेनका-रम्भा-घृताची-तिलोत्तमादि अप्सरसः सिद्ध-साध्य-उरगाः विष्णुभक्त-अनेकनृपाः श्रीनिवासकल्याणाय सम्भ्रमेण वेङ्कटाद्रिं प्राप्ताः । प्राप्तसर्वान् यथोचितं समाश्वास्य तान् स्थीयतां स्थीयतां इत्युवाच । अनन्तरं देववर्धकी विश्वकर्मा श्रीनिवासदृष्टिगोचरो बभूव । इन्द्रेण सह सभां प्रविश्य निश्शङ्कं स्वं दर्शितवन्तं विश्वकर्माणं श्रीनिवासो दृष्ट्वा इन्द्रस्य तैक्ष्ण्यं सूचयन् उपालभते ।

भ्रातृबाहुबलात् राजन् न जानाति हिताहितम् ।
यथेतराः प्रपश्यन्ति तथा मामिन्द्र पश्यति ॥ १२७ ॥

त्यजाद्यैनं सुरश्रेष्ठ कर्मण्यन्यं नियोजय ।
अन्यं शालाकर्मरतं शुद्धं मद्भक्तिसंयुतम् ॥ १२८ ॥

नियोजय सुरश्रेष्ठ देवतागृहकर्माणि ।
[1]अप्रियं वचनं श्रुत्वा विश्वकर्तुः सुरेश्वरः ॥ १२९ ॥

प्रणिपत्याह गोविन्दं वर्धकिं गर्हयन् नृप ।
क्षमस्वानन्त दौरात्म्यमल्पस्य मम कारणात् ॥ १३० ॥

१. इत्यप्रियं वचः श्रुत्वा विश्वकर्मा नरेश्वर ।
प्रणिपत्याह गोविन्दं वर्धकी भयविह्वलः ॥

वर्धक्युवाच—

भगवंस्त्वदभीष्टं यदज्ञानान्न मया कृतम् ।
क्षमस्व मम दौरात्म्यं भगवन् करुणानिधे ॥ १३१ ॥

देवादिदेव देवेश अल्पस्य मम कारणात् ।
इयान् कोपः किमर्थं ते सञ्जातो भगवन् हरे ॥ १३२ ॥

**गूढकर्तृकव्याख्यानम्**

इन्द्र अपि अपश्यः इमं विश्वकर्माणं, अस्य कियान् गर्वः । अस्य अनुजः मयोऽसुरबल-मस्ति । अतः एषः हिताहितं न वेत्ति । इतरान् यथा तथा मां पश्यति । अस्तु । साधु जातम् । अस्तु । इन्द्र अयं विश्वकर्मा मे माऽस्तु । अयं दुष्टः । इमं त्यज ॥ मयि यस्य भक्तिविश्वासः निष्कपटमनः तादृशान्यं शालाकर्मनिपुणं देवगृहरचनाय नियोजयेत्यादिदेश । ततः स्वस्य अप्रियोक्तिं श्रुत्वा विश्वकर्मणा भीतिर्जाता । कम्पमानः स्थितः मूढः श्रीनिवासं प्रणम्य "जगदीश ! रमापते ! तव अभीष्टं यत् तत् अज्ञानात् न मया कृतम् । भो अव्याजकरुणामूर्ते ! भक्तवत्सल ! देवदेवोत्तम ! अल्पभूतस्य मम निमित्तेन इयन्तं कोपं मा कुरुष्व । अज्ञानकृतमदपराधं क्षमस्व" इति ययाचे ।

**एवं सम्प्रार्थितः शक्रं श्रीनिवास उवाच ह ।**

**श्रीनिवास उवाच—**

**सभां कारय देवेन्द्र देवार्थं मुनिकारणात् ॥ १३३ ॥**

**कल्याणकाण्डदीपः**

**प्रणिपत्येति** । अल्पस्थोऽपटोरस्य विश्वकर्मणः दौर्जन्यं मम याचनाकारणात् क्षमस्वेत्येवं वर्धकिं गर्हयन् श्रीनिवासं प्रणिपत्याह ययाच इत्यर्थः । **सभामिति** । इन्द्रः अथ तं निर्भर्त्स्य महद्भूतां महदुचितां देवार्थं देवेभ्यः सभाम् । **मुनिकारणात्** मुनिभ्यो मुनिनिवासयोग्यानि कुटीराणि कुर्वित्याह ।

**मूलम्**

**पञ्चाशद्योजनगणविशालां सुमनोहराम् ।**
**सुविचित्रां च महतीं त्रिंशद्योजनमायताम् ।**
**अस्थिरां कुरु भो शक्र सभां त्रिदशयोजनाम् ॥ १३४ ॥**

**कल्याणकाण्डदीपः**

अथ श्रीनिवासः इन्द्रमुवाच— **अस्थिराम्**इत्यादि । अत्र द्वौ बाह्याभ्यान्तरावर्थौ । **अस्थिरां** यावत्कार्यमल्पकालस्थितिमतीं **त्रिदशयोजनां** त्र्यधिकादश त्रिदश, त्रि दशेति वा, योजनानि यस्यां सा, ताम् । त्रयोदशेन वा त्रिंशता वा योजनेन प्रमितां **सभां कुरु** कारय इत्येकः अर्थः । द्वितीयस्तु, **अस्थिरां** अस्थ्याद्यशुद्धवस्तुत्यागिनीं **त्रिदशयोजनाम्** । वास्तुमण्डलान्तरावाह्यब्रह्मादिशिवान्तत्रिदश-त्रिदशाधिष्ठिताम् । अत एव । त्रिदशयोजनां त्रिदशऋषिगन्धर्वादिमेळनोपयोगिनीं सभामिति । अस्थीनि

**गूढकर्तृकव्याख्यानम्**

ततः बहुमहर्षयः कश्यप-अत्रि-भरद्वाज-वामदेव-गौतम-विश्वामित्र-वसिष्ठ-वाल्मीकि-जामदग्न्य-पुलस्त्य-दधीचि-शुनःशेपः गालवगार्ग्यकृष्णादयः पुत्रकलत्रसहिताः वेङ्कटाद्रिं प्राप्ताः। ततः गन्धर्वाः ऊर्वशी-मेनका-रम्भा-घृताची-तिलोत्तमादि अप्सरसः सिद्ध-साध्य-उरगाः विष्णुभक्त-अनेकनृपाः श्रीनिवासकल्याणाय सम्भ्रमेण वेङ्कटाद्रिं प्राप्ताः। प्राप्तसर्वान् यथोचितं समाश्वास्य तान् स्थीयतां स्थीयतां इत्युवाच। अनन्तरं देववर्धकी विश्वकर्मा श्रीनिवासदृष्टिगोचरो बभूव। इन्द्रेण सह सभां प्रविश्य निश्शङ्कं स्वं दर्शितवन्तं विश्वकर्माणं श्रीनिवासो दृष्ट्वा इन्द्रस्य तैक्ष्ण्यं सूचयन् उपालभते।

भ्रातृबाहुबलात् राजन् न जानाति हिताहितम्।
यथेतराः प्रपश्यन्ति तथा मामिन्द्र पश्यति ॥ १२७ ॥

त्यजाद्यैनं सुरश्रेष्ठ कर्मण्यन्यं नियोजय।
अन्यं शालाकर्मरतं शुद्धं मद्भक्तिसंयुतम् ॥ १२८ ॥

नियोजय सुरश्रेष्ठ देवतागृहकर्माणि।
[1]अप्रियं वचनं श्रुत्वा विश्वकर्तुः सुरेश्वरः ॥ १२९ ॥

प्रणिपत्याह गोविन्दं वर्धकिं गर्हयन् नृप।
क्षमस्वानन्त दौरात्म्यमल्पस्य मम कारणात् ॥ १३० ॥

१. इत्यप्रियं वचः श्रुत्वा विश्वकर्मा नरेश्वर।
प्रणिपत्याह गोविन्दं वर्धकी भयविह्वलः ॥

वर्धक्युवाच—

भगवंस्त्वदभीष्टं यदज्ञानान्न मया कृतम्।
क्षमस्व मम दौरात्म्यं भगवन् करुणानिधे ॥ १३१ ॥

देवादिदेव देवेश अल्पस्य मम कारणात्।
इयान् कोपः किमर्थं ते सञ्जातो भगवन् हरे ॥ १३२ ॥

**गूढकर्तृकव्याख्यानम्**

इन्द्र अपि अपश्यः इमं विश्वकर्माणं, अस्य कियान् गर्वः । अस्य अनुजः मयोऽसुरबलमस्ति । अतः एषः हिताहितं न वेत्ति । इतरान् यथा तथा मां पश्यति । अस्तु । साधु जातम् । अस्तु । इन्द्र अयं विश्वकर्मा मे माऽस्तु । अयं दुष्टः । इमं त्यज ॥ मयि यस्य भक्तिविश्वासः निष्कपटमनः तादृशान्यं शालाकर्मनिपुणं देवगृहरचनाय नियोजयेत्यादिदेश । ततः स्वस्य अप्रियोक्तिं श्रुत्वा विश्वकर्मणा भीतिर्जाता । कम्पमानः स्थितः मूढः श्रीनिवासं प्रणम्य "जगदीश ! रमापते ! तव अभीष्टं यत् तत् अज्ञानात् न मया कृतम् । भो अव्याजकरुणामूर्ते ! भक्तवत्सल ! देवदेवोत्तम ! अल्पभूतस्य मम निमित्तेन इयन्तं कोपं मा कुरुष्व । अज्ञानकृतमदपराधं क्षमस्व" इति ययाचे ।

**एवं सम्प्रार्थितः शक्रं श्रीनिवास उवाच ह ।**

**श्रीनिवास उवाच—**

**सभां कारय देवेन्द्र देवार्थं मुनिकारणात्** ॥ १३३ ॥

**कल्याणकाण्डदीपः**

**प्रणिपत्येति** । अल्पस्थोऽपटोरस्य विश्वकर्मणः दौर्जन्यं मम याचनाकारणात् क्षमस्वेत्येवं वर्धकिं गर्हयन् श्रीनिवासं प्रणिपत्याह ययाच इत्यर्थः । **सभामिति** । इन्द्रः अथ तं निर्भर्त्स्य महद्भूतां महदुचितां देवार्थं देवेभ्यः सभाम् । **मुनिकारणात्** मुनिभ्यो मुनिनिवासयोग्यानि कुटीराणि कुर्वित्याह ।

**मूलम्**

**पञ्चाशद्योजनगणविशालां सुमनोहराम् ।**
**सुविचित्रां च महतीं त्रिंशद्योजनमायताम् ।**
**अस्थिरां कुरु भो शक्र सभां त्रिदशयोजनाम्** ॥ १३४ ॥

**कल्याणकाण्डदीपः**

अथ श्रीनिवासः इन्द्रमुवाच— **अस्थिरामित्यादि** । अत्र द्वौ बाह्याभ्यान्तरावर्थौ । **अस्थिरां** यावत्कार्यमल्पकालस्थितिमर्तीं **त्रिदशयोजनां** त्र्यधिकादश त्रिदश, त्रि दशेति वा, योजनानि यस्यां सा, ताम् । त्रयोदशेन वा त्रिंशता वा योजनेन प्रमितां सभां कुरु कारय इत्येकः अर्थः । द्वितीयस्तु, **अस्थिरां** अस्थ्याद्यशुद्धवस्तुत्यागिनीं **त्रिदशयोजनाम्** । वास्तुमण्डलान्तरावाह्यब्रह्मादिशिवान्तत्रिदशत्रिदशाधिष्ठिताम् । अत एव । त्रिदशयोजनां त्रिदशऋषिगन्धर्वादिमेळनोपयोगिनीं सभामिति । **अस्थीनि**

अस्थ्यादीनि रहयतीति अस्थिरा । रह त्यागे । अदन्तः । 'अन्येभ्योऽपि' इति डः । त्रिदशानां त्र्यधिक-दशानां त्रिदशानां योजनं आवाहनं यस्यां सा त्रिदशान् योजयति मेलयतीति त्रिदशयोजना । "अत-स्त्रयोदशा पूज्या ब्रह्माद्या देवताः क्रमात्" इति शौनकी ।

*अयं भावः*— प्रायः पुरीपरिदेशस्य अस्थिशृङ्गशफखुरजीर्णघटकपालशकलेङ्गाणभस्मतुष-केशादिदूषितत्वात् । तत्त्याजनाय भूमिं संशोध्य उचितदारुभिः यथाविधि सभादिमन्दिरान्तानि वर्धकिना निर्माय स्वस्तिवाचनादि ब्रह्माद्यावाहनबहिर्बल्यन्तवास्तुशान्तिकर्म कारयित्वा ब्राह्मणान् तर्पयित्वा त्वं प्रविश्य तत्र स्थितो भव । पुरुषा मृगमपि नियोजय । अथ अहं राजपुरप्रवेशन्यायेन प्रविशामीति । इयं योजना वासुदेवभवनविषयेति ध्येयम् । एकयोजनापि सभापुष्पकवत् त्रिंशद्योजन-सभायतीति ज्ञेयम् ।

**मूलम्**

**इत्येवं शासितः [1]तेन तथा चक्रे मयाऽनुजः।**
**कारयामास विपुलां विचित्रां महतीं सभाम् ॥ १३५ ॥**

**चक्रे शक्राज्ञया तत्र विश्वकर्मा ममाग्रजः ।**
**अनन्तरं वाक्यमूचे शतक्रतुमनामयम् ॥ १३६ ॥**

१. शक्रः तेन वर्धकिना तदा ।

**कल्याणकाण्डदीपः**

**एवं शासित इति** । शक्रद्वारा अनुशासितः मया अनुजः स विश्वकर्मा **तथा** तथैव करोमीति **चक्रे** विज्ञापनं चक्रे इत्यर्थः ।

**मूलम्**

**श्रीभगवानुवाच—**

**आकाशराजनगरं शीघ्रं गच्छ शचीपते ।**
**राजानं सान्त्ववचनैः [1]धैर्येण नृप बोधय ।**
**तत्राऽप्यनेन कर्तव्यं सभागेहादि कारय ॥ १३७ ॥**

१. कार्ये कर्मणि ।

**कल्याणकाण्डदीपः**

**राजानं सान्त्ववचनैरिति** । अयं भावः— अस्मदीयमहाशालादि- वाजिशालान्तसमारम्भं दृष्ट्वा कियन्तो जना आयान्ति ? ते च कीदृशमहात्मानः । कियत्कालं स्थास्यन्ति ? तेषां सभाजनादि मया कथं कार्यं स्यात् ? इति भीतिश्चिन्ता च स्याताम् । अतः श्रीनिवासानुग्रहात् सर्वं सुललितं स्यात् । अतो धैर्येण निश्चिततया स्थातव्यमिति बोधयेत्यर्थः ।

**गूढकर्तृकव्याख्यानम्**

श्रीनिवासः— इन्द्र ! समागत देवसमूहस्य सभाभवनम् । महर्षीणां कुटीराणि विश्वकर्मणा कारय (पञ्चाशद्योजनायतं त्रिंशद्योजनपरिणाहं) सभाभवनं भवितव्यम् । अतिमनोहरं अतिविचित्रं च । प्रायः पुरीपरिदेशस्य (अस्थि-शृङ्ग-शफ-खुर-जीर्णघट-कपालशकल-अङ्गारभस्म-तुषकेशादि-दूषितत्वात्) भूमिं संशोध्य उचितदारुभिः यथाविधि सभागृहादि मन्दिरान्तानि वर्धकिना निर्मापय । स्वस्तिवाचनादि ब्रह्माद्यावाहन-बहिर्बल्यन्त-वास्तुशान्तिकर्म कारयित्वा विप्रान् तर्पयित्वा त्वं प्रविश्य तत्र स्थितो भव । पुरुषा मृगमपि नियोजय ।" एवं आदिष्टः इन्द्रः विश्वकर्मणा अद्भुतसभाशालां कारितवान् । (विचित्रा कथम् ? एकयोजनापि सभाशाला पुष्पकवत् त्रिंशद्योजनसभायिता) पुनः इन्द्रं प्रति इन्द्र ! एतावदेव न । आकाशराजस्य नारायणपुरं गत्वा तत्रापि विश्वकर्मणा सभागेहादि कारयम् । अत्र-विषये आकाशं सभागृहादि मन्दिरान्तरचनानि कारयितव्यानि" इति बोधय । "कियन्तो जनाः आयास्यन्ति ? कति दिनानि स्थास्यन्ति" इत्येवमादिप्रकारेण चिन्तयन्तं नृपं "महाराज ! चिन्तां मा कृथाः । श्रीनिवासानुग्रहात् सर्वं सुललितं स्यात् । धैर्येण भव" इति समाश्वासय ।

**मूलम्**

**वासुदेवस्य वाक्यानि श्रुत्वा तस्य शचीपतिः ।**
**जगाम राजनगरं सहितो विश्वकर्मणा ॥ १३८ ॥**

**[१]विभज्य नगरं राज्ञः परितो बहुयोजनम् ।**
**[२]स चिच्छेद महाराजा वनानि गिरिगह्वरान् ॥ १३९ ॥**

**समां च विषमां चक्रे धरां च धरणीपते ।**
**गृहाणि च विचित्राणि सभाश्च [३]कुटिराणि च ॥ १४० ॥**

१. विस्तार्य । २. सञ्छिद्य च महाराज । ३. उटजास्तथा ।

अस्थ्यादीनि रहयतीति अस्थिरा । रह त्यागे । अदन्तः । 'अन्येभ्योऽपि' इति डः । त्रिदशानां त्र्यधिक-दशानां त्रिदशानां योजनं आवाहनं यस्यां सा त्रिदशान् योजयति मेलयतीति त्रिदशयोजना । ''अत-स्त्रयोदशा पूज्या ब्रह्माद्या देवताः क्रमात्'' इति शौनकी ।

*अयं भावः*— प्रायः पुरीपरिदेशस्य अस्थिशृङ्गशफखुरजीर्णघटकपालशकलेङ्गाणभस्मतुष-केशादिदूषितत्वात् । तत्त्याजनाय भूमिं संशोध्य उचितदारुभिः यथाविधि सभादिमन्दिरान्तानि वर्धकिना निर्माय स्वस्तिवाचनादि ब्रह्माद्यावाहनबहिर्बल्यन्तवास्तुशान्तिकर्म कारयित्वा ब्राह्मणान् तर्पयित्वा त्वं प्रविश्य तत्र स्थितो भव । पुरुषा मृगमपि नियोजय । अथ अहं राजपुरप्रवेशान्यायेन प्रविशामीति । इयं योजना वासुदेवभवनविषयेति ध्येयम् । एकयोजनापि सभापुष्पकवत् त्रिंशद्योजन-सभायतीति ज्ञेयम् ।

**मूलम्**

**इत्येवं शासितः [१]तेन तथा चक्रे मयाऽनुजः।**
**कारयामास विपुलां विचित्रां महतीं सभाम् ॥ १३५ ॥**

**चक्रे शक्राज्ञया तत्र विश्वकर्मा ममाग्रजः ।**
**अनन्तरं वाक्यमूचे शतक्रतुमनामयम् ॥ १३६ ॥**

१. शक्रः तेन वर्धकिना तदा ।

**कल्याणकाण्डदीपः**

**एवं शासित इति** । शक्रद्वारा अनुशासितः मया अनुजः स विश्वकर्मा **तथा** तथैव करोमीति **चक्रे** विज्ञापनं चक्रे इत्यर्थः ।

**मूलम्**

**श्रीभगवानुवाच—**

**आकाशराजनगरं शीघ्रं गच्छ शचीपते ।**
**राजानं सान्त्ववचनैः [१]धैर्येण नृप बोधय ।**
**तत्राऽप्यनेन कर्तव्यं सभागेहादि कारय ॥ १३७ ॥**

१. कार्ये कर्मणि ।

**कल्याणकाण्डदीपः**

**राजानं सान्त्ववचनैरिति** । अयं भावः— अस्मदीयमहाशालादि- वाजिशालान्तसमारम्भं दृष्ट्वा कियन्तो जना आयान्ति ? ते च कीदृशमहात्मानः । कियत्कालं स्थास्यन्ति ? तेषां सभाजनादि मया कथं कार्यं स्यात् ? इति भीतिश्चिन्ता च स्याताम् । अतः श्रीनिवासानुग्रहात् सर्वं सुललितं स्यात् । अतो धैर्येण निश्चिततया स्थातव्यमिति बोधयेत्यर्थः ।

**गूढकर्तृकव्याख्यानम्**

श्रीनिवासः— इन्द्र ! समागत देवसमूहस्य सभाभवनम् । महर्षीणां कुटीराणि विश्वकर्मणा कारय (पञ्चाशद्योजनायतं त्रिंशद्योजनपरिणाहं) सभाभवनं भवितव्यम् । अतिमनोहरं अतिविचित्रं च । प्रायः पुरीपरिदेशस्य (अस्थि-शृङ्ग-शफ-खुर-जीर्णघट-कपालशकल-अङ्गारभस्म-तुषकेशादि-दूषितत्वात्) भूमिं संशोध्य उचितदारुभिः यथाविधि सभागृहादि मन्दिरान्तानि वर्धकिना निर्मापय । स्वस्तिवाचनादि ब्रह्माद्यावाहन-बहिर्बल्यन्त-वास्तुशान्तिकर्म कारयित्वा विप्रान् तर्पयित्वा त्वं प्रविश्य तत्र स्थितो भव । पुरुषा मृगमपि नियोजय ।'' एवं आदिष्टः इन्द्रः विश्वकर्मणा अद्भुतसभाशालां कारितवान् । (विचित्रा कथम् ? एकयोजनापि सभाशाला पुष्पकवत् त्रिंशद्योजनसभायिता) पुनः इन्द्रं प्रति इन्द्र ! एतावदेव न । आकाशराजस्य नारायणपुरं गत्वा तत्रापि विश्वकर्मणा सभागेहादि कारयम् । अत्र-विषये आकाशं सभागृहादि मन्दिरान्तरचनानि कारयितव्यानि'' इति बोधय । ''कियन्तो जनाः आयास्यन्ति ? कति दिनानि स्थास्यन्ति'' इत्येवमादिप्रकारेण चिन्तयन्तं नृपं ''महाराज ! चिन्तां मा कृथाः । श्रीनिवासानुग्रहात् सर्वं सुललितं स्यात् । धैर्येण भव'' इति समाश्वासय ।

**मूलम्**

**वासुदेवस्य वाक्यानि श्रुत्वा तस्य शचीपतिः ।**
**जगाम राजनगरं सहितो विश्वकर्मणा ॥ १३८ ॥**

**[१]विभज्य नगरं राज्ञः परितो बहुयोजनम् ।**
**[२]स चिच्छेद महाराजा वनानि गिरिगह्वरान् ॥ १३९ ॥**

**समां च विषमां चक्रे धरां च धरणीपते ।**
**गृहाणि च विचित्राणि सभाश्च [३]कुटिराणि च ॥ १४० ॥**

१. विस्तार्य । २. सञ्छिद्य च महाराज । ३. उटजास्तथा ।

**कल्याणकाण्डदीपः**

**विभज्येति**। राज्ञः नगरं परितः कञ्चिदासन्ननिष्कुटदेशभागं नागरिकं विहाराय **अविभज्य** विहाय ततःपरं बहुयोजनं वनानि गिरिगह्वरान् गिरयश्च गह्वराणि च लतादिपिहितस्थानानि च येषां देशान् ते तान् **चिच्छेद** शोधयामास। 'अभितः परितः' इति द्वितीया। ''गुहायां दम्भगहननिकुञ्जेषु च गह्वरम्'' इति रत्नमाला। **विषमां** निम्नोन्नतां धरां **समां चक्रे** कारयामास। मार्गं च कारयामासेति यावत्। अथ एवं भूशोधनानन्तरं उचितदारुभिः यथाविधि विचित्राणि गृहाणि सभाश्च कुटिराणि च कारयामास।

अथातः पुरं प्रविश्य महासमारम्भं दृष्ट्वा उक्तप्रकारेण आलोचयन्तं सान्त्ववचनैः धैर्यमुत्पाद्य अथ राजदर्शितं कल्याणवेदिं ददर्श। सा कीदृशी ? इत्यतः तत्स्वरूपमाह **कल्याणवेदिमिति**।

**मूलम्**

**कल्याणवेदिं कमनीयरत्नैः**
**[1]सम्पूर्णकक्षैर्विकृतां विचित्रिताम्।**
**स्तम्भैर्युतां मौक्तिकरत्ननिर्मितैः**
**नारायणस्यैव नृपेण निर्मिताम्** ॥ १४१ ॥

१. सम्पूर्णकक्षैः सुकृतां।

**कल्याणकाण्डदीपः**

**कमनीयरत्नैः** मनोरमरत्नखचितैः **सम्पूर्णकक्षैः** बृहदञ्चलपल्लवैः **विकृतां** विशेषेण अलङ्कृतां **विचित्रितां** स्वर्णरजतद्रवादिभिर्नानावर्णैः चित्रितां सध्वजपताकरत्नमालालम्बिचित्रवस्त्रच्छदवितानां दर्पणचामरभृङ्गाळुभूषितां शङ्खचक्रालङ्कृतां **स्तम्भैः युतां मौक्तिकरत्ननिर्मितां** एतैः निर्मिततळाम्। **नारायणस्यैवेति**। विश्वकर्मणा नृपेण कारितां **कल्याणवेदिं** भद्रकौतुकपरिष्कृतभूमिं राजदर्शितां दृष्ट्वा सम्यग्वर्तत इत्युक्तवान्। तदुक्तं वाराहे—

''आहूय विश्वकर्माणं पुरालङ्कारकर्मणि।
नियोजयामास सोऽपि निर्ममे निमिषान्तरात्॥'' इति।

कौतुकवेदिकादि पुरालङ्कारकर्मणीत्यर्थ।

मूलम्

वासुदेवस्य भवनं वासवो विश्वकर्मणा।
कारयामास राजेन्द्र [1]रत्नस्तम्भं सगोपुरम् ॥ १४२ ॥

धनधान्यसमाकीर्णं रत्नतोरणमण्डितम्।
[2]वापीशतयुतं वाजिगजानां भवनैस्तथा ॥ १४३ ॥

१. सरत्नस्तम्भगोपुरम्। २. वापीकूपशतं।

कल्याणकाण्डदीपः

अथ राजवचनानुसारेण अवशिष्टभवनादि कारयामासेत्याह **वासुदेवस्येति**। वासुदेवस्य भवनादि गजशालान्तानि कारयित्वा स्वस्तिपुण्याहादि वास्तुशान्तिपूर्वकं स्वयं प्रविश्य स्थितोऽभूदिति शेषः।

गूढकर्तृकव्याख्यानम्

इन्द्रः श्रीनिवासाज्ञया नारायणपुरं गत्वा तत्र नगरं परितः आसन्ननिष्कुटदेशभागं नागरिकजन-विहाराय विभज्य, ततः बहुयोजनपर्यन्तं वनगतवृक्षलतादिकं उन्मूल्य गिरीन् विभिद्य गह्वरदरी-कन्दरादिकं मृत्-शिलाभिरापूर्य, निम्न-उन्नतभूमिं समां कारयामास। सर्वत्र भूमिं समविशालां सुचयं कारयित्वा भुवं संशोध्य उचितदारुभिः यथाविधि चित्रविचित्रगृहाणि सभागृहाणि कुटीराणि च कारयामास। ततः अन्तःपुरं प्रविश्य महासमारम्भं दृष्ट्वा चिन्तयन्तं नृपं सान्त्वयित्वा धैर्यं उत्पाद्य राजदर्शितकल्याणवेदिं ददर्श। कल्याणवेदिः मनोहररत्नखचिता सम्पूर्णकक्षैर्युता बृहत् चलपल्लवैः युता समलङ्कृता स्वर्णरजतद्रवादिभिः नानावर्णैः चित्रिता ध्वजपताकारत्नमालालम्बिचित्रवस्त्रछदविताना छत्रचामरभृङ्गालुभूषिता शङ्खचक्रालङ्कृतसमचतुस्तम्भैः मौक्तिकरत्नखचितैः युता नारायणायैव नृपेण विश्वकर्मणा कौतुकावेदिकादि पुरालङ्कारकर्म कारितम्। ततः नृपवचनेन अवशिष्टभवनरचनं विश्वकर्मणा कृतम्। वासुदेवस्य भवनादि गजतुरगशालान्तानि कारयित्वा आकाशः स्वस्तिपुण्याहादि वाचयित्वा वास्तुशान्तिपूर्वकं स्वयं प्रविश्य स्थितो भवत्। इत्येवं श्रीनिवासकल्याणाय सकलसुरागमनं आगतेभ्यो भवननिर्माणं इति यत् शतानन्दमुनिः जनकराजं प्रति निरूपयामास। तदेव सूतः शौनकादिविप्रान् प्रति निरूपयामास ॥

*(॥ इति अत्र श्रीमद्भविष्योत्तरपुराणे वेङ्कटगिरिमाहात्म्ये गूढकर्तृकव्याख्यानानुसारेण दशमाध्यायकथाभिप्रायः ॥)*

**कल्याणकाण्डदीपः**

**विभज्येति** । राज्ञः नगरं परितः कञ्चिदासन्ननिष्कुटदेशभागं नागरिकं विहाराय **अविभज्य** विहाय ततःपरं बहुयोजनं वनानि गिरिगह्वरान् गिरयश्च गह्वराणि च लतादिपिहितस्थानानि च येषां देशान् ते तान् **चिच्छेद** शोधयामास । 'अभितः परितः' इति द्वितीया । "गुहायां दम्भगहननिकुञ्जेषु च गह्वरम्" इति रत्नमाला । **विषमां** निम्नोन्नतां धरां **समां चक्रे** कारयामास । मार्गं च कारयामासेति यावत् । अथ एवं भूशोधनानन्तरं उचितदारुभिः यथाविधि विचित्राणि गृहाणि सभाश्च कुटिराणि च कारयामास ।

अथातः पुरं प्रविश्य महासमारम्भं दृष्ट्वा उक्तप्रकारेण आलोचयन्तं सान्त्ववचनैः धैर्यमुत्पाद्य अथ राजदर्शितं कल्याणवेदिं ददर्श । सा कीदृशी ? इत्यतः तत्स्वरूपमाह **कल्याणवेदिमिति** ।

**मूलम्**

**कल्याणवेदिं कमनीयरत्नैः**
**[1]सम्पूर्णकक्षैर्विकृतां विचित्रिताम् ।**
**स्तम्भैर्युतां मौक्तिकरत्ननिर्मितैः**
**नारायणस्यैव नृपेण निर्मिताम् ॥ १४१ ॥**

१. सम्पूर्णकक्षैः सुकृतां ।

**कल्याणकाण्डदीपः**

**कमनीयरत्नैः** मनोरमरत्नखचितैः **सम्पूर्णकक्षैः** बृहदञ्चलपल्लवैः **विकृतां** विशेषेण अलङ्कृतां **विचित्रितां** स्वर्णरजतद्रवादिभिर्नानावर्णैः चित्रितां सध्वजपताकरत्नमालालम्बिचित्रवस्त्रच्छदवितानां दर्पणचामरभृङ्गाळुभूषितां शङ्खचक्रालङ्कृतां **स्तम्भैः युतां मौक्तिकरत्ननिर्मितां** एतैः निर्मिततळाम् । **नारायणस्यैवेति** । विश्वकर्मणा नृपेण कारितां **कल्याणवेदिं** भद्रकौतुकपरिष्कृतभूमिं राजदर्शितां दृष्ट्वा सम्यग्वर्तत इत्युक्तवान् । तदुक्तं वाराहे—

"आहूय विश्वकर्माणं पुरालङ्कारकर्मणि ।
नियोजयामास सोऽपि निर्ममे निमिषान्तरात् ॥" इति ।

कौतुकवेदिकादि पुरालङ्कारकर्मणीत्यर्थः ।

**मूलम्**

**वासुदेवस्य भवनं वासवो विश्वकर्मणा।**
**कारयामास राजेन्द्र [1]रत्नस्तम्भं सगोपुरम् ॥ १४२ ॥**

**धनधान्यसमाकीर्णं रत्नतोरणमण्डितम्।**
**[2]वापीशतयुतं वाजिगजानां भवनैस्तथा ॥ १४३ ॥**

१. सरत्नस्तम्भगोपुरम्। २. वापीकूपशतं।

**कल्याणकाण्डदीपः**

अथ राजवचनानुसारेण अवशिष्टभवनादि कारयामासेत्याह **वासुदेवस्येति**। वासुदेवस्य भवनादि गजशालान्तानि कारयित्वा स्वस्तिपुण्याहादि वास्तुशान्तिपूर्वकं स्वयं प्रविश्य स्थितोऽभूदिति शेषः।

**गूढकर्तृकव्याख्यानम्**

इन्द्रः श्रीनिवासाज्ञया नारायणपुरं गत्वा तत्र नगरं परितः आसन्ननिष्कुटदेशभागं नागरिकजन-विहाराय विभज्य, ततः बहुयोजनपर्यन्तं वनगतवृक्षलतादिकं उन्मूल्य गिरीन् विभिद्य गह्वरदरी-कन्दरादिकं मृत्-शिलाभिरापूर्य, निम्न-उन्नतभूमिं समां कारयामास। सर्वत्र भूमिं समविशालां सुचयं कारयित्वा भुवं संशोध्य उचितदारुभिः यथाविधि चित्रविचित्रगृहाणि सभागृहाणि कुटीराणि च कारयामास। ततः अन्तःपुरं प्रविश्य महासमारम्भं दृष्ट्वा चिन्तयन्तं नृपं सान्त्वयित्वा धैर्यं उत्पाद्य राजदर्शितकल्याणवेदिं ददर्श। कल्याणवेदिः मनोहररत्नखचिता सम्पूर्णकक्षैर्युता बृहत् चलपल्लवैः युता समलङ्कृता स्वर्णरजतद्रवादिभिः नानावर्णैः चित्रिता ध्वजपताकारत्नमालालम्बिचित्रवस्त्रछदविताना छत्रचामरभृङ्गालुभूषिता शङ्खचक्रालङ्कृतसमचतुस्तम्भैः मौक्तिकरत्नखचितैः युता नारायणायैव नृपेण विश्वकर्मणा कौतुकावेदिकादि पुरालङ्कारकर्म कारितम्। ततः नृपवचनेन अवशिष्टभवनरचनं विश्वकर्मणा कृतम्। वासुदेवस्य भवनादि गजतुरगशालान्तानि कारयित्वा आकाशः स्वस्तिपुण्याहादि वाचयित्वा वास्तुशान्तिपूर्वकं स्वयं प्रविश्य स्थितो भवत्। इत्येवं श्रीनिवासकल्याणाय सकलसुरागमनं आगतेभ्यो भवननिर्माणं इति यत् शतानन्दमुनिः जनकराजं प्रति निरूपयामास। तदेव सूतः शौनकादिविप्रान् प्रति निरूपयामास॥

*(॥ इति अत्र श्रीमद्भविष्योत्तरपुराणे वेङ्कटगिरिमाहात्म्ये गूढकर्तृकव्याख्यानानुसारेण दशमाध्यायकथाभिप्रायः ॥)*

## ।। अथ गूढकर्तृकव्याख्यानानुसारेण एकादशाध्यायकथासारः ।।

अनन्तरं श्रीनिवासः विधिमुखसर्वदेवेषु मिलितेषु तान् प्रति "हे सुराः ! आकाशतनयां पद्मां विवाहे अङ्गीकरवाणि । भवतां अनुमोदश्चेत् भवतु" इत्याह । देवा आहुः— "तथाऽस्तु । सर्वोऽपि भवदनुग्रहः ।" विधिः— "तात ! त्वं सत्यसङ्कल्पः । विवाहात् पूर्वं पुण्याहः, ततः अष्टवर्गं कार्यम् । श्रीनिवासः— "विधे ! वसिष्ठं आनाय्य तं पौरोहित्ये नियोज्य त्वं यजमानो भूत्वा यजुःशाखीयैः मन्त्रैः स्वस्तिवाचनादि मङ्गलंक्रियाः कारय । किञ्च देव-ऋषीणां मानने शङ्करम्, देवाह्वाने कुमारम्, प्रत्युत्थाने मन्मथम्, पाककरणे अग्निम्, जलसम्पादने वरुणम्, दुष्टदमने यमम्, सुगन्धे वायुम्, वस्त्रालङ्कार-दक्षिणादाने कुबेरम्, दीपधारणे चन्द्रम्, भाण्डशोधने अष्टवसून्, द्रोणपात्रविनियोगे ग्रहांश्च विधिः नियोजयामास ।

ततः विधिः "स्वामिन् जगदीश ! मङ्गलस्नानं कुरु । पुण्याहं, इष्टदेवताकुलदेवतापूजां, कुलदेवताप्रतिष्ठां, साङ्गं कुरुष्व" इत्याह । एतन्मध्ये श्रीनिवासः रमां सस्मार । दुःखितः । तदा विधिं प्रति "तात विधे ! अस्मदादिसकलसत्त्वेऽपि नित्यावियोगिनीं दुःखास्पृष्टां रमां विना एतत् सभा अतारं आकाशमिव, अफलो वृक्ष इव, नैव शोभते । यदा जगत् सर्वं लीयते तदा मे मुख्याश्रयभूतां रमां विना मम नैव सुखम् ।" इत्याह । ततः श्रीनिवासः भृगालवासुदेवनगराय रमानयनाय रविं प्राहिणोत् । ततः रविः करवीरपुरं गत्वा रमां विज्ञापयति— "जगदम्बा ! जगत्कर्ता स्वामी श्रीनिवासः, तव पतिः शयितः निश्चेतनः । कदा रमां द्रक्ष्यामि इति पुनःपुनर्वदति । त्वं नायासि चेत् भर्ता जीवति वा न वा" इति निवेदयामास । क्षणात् रमा भानुना रथमास्थाय वायुवेगेन आयाता । इतः रमां आयान्तीं पूर्वं मत्वा श्रीनिवासः अतीव कृश इव जातः । केवलं दौर्बल्यं नटन् स्ववामबाहुं हरभुजे दक्षिणबाहुं विधिभुजे न्यस्य रमां द्रष्टुं सिद्धः । रमा रथादवरुह्य तादृशावस्थं हरिं वीक्ष्य हसन्ती तत्पादकमले पुष्पैः अर्चयित्वा तं आलिलिङ्ग । क्षणात् श्रीशः हृष्टपुष्टाङ्गो जातः । एवं विडम्बनं चकार । ततः रमां प्रति "रमे ! रामावतारे यदुक्तं त्वया, स्मर । अद्य कलौ वेदवतीविवाहकालः प्राप्तः" इत्याह । रमा आह— "जगदीश स्वामिन् ! मम प्रार्थितं सफलं कुरु । वेदवतीं स्वीकुरु" इति तं ननाम ।

एवं रमासङ्गत्या अनुमोदेन पूर्णमनोरथः आनन्दबाष्पं मुञ्चन् रमाब्रह्मादिलोकैः स्तूयमानः तदा वेङ्कटगिरौ श्रीनिवासो व्यराजत । इत्येवं श्रीनिवासस्य रमासमागमोपायं यं शतानन्दः जनकं प्रति निरूपयामास तदेव वर्णनं सूतः शौनकादिविप्रान् प्रति निरूपयामास ॥

*इति श्रीमद्भविष्योत्तरपुराणे श्रीवेङ्कटेशमाहात्म्ये एकादशाध्यायकथासङ्क्षेपः ॥*

।। श्रीकृष्णार्पणमस्तु ॥

॥ श्रीः ॥

# अथ गूढकर्तृकव्याख्यानानुसारेण एकादशोऽध्यायः

**मूलम्**

**देवादिकृतपरिणयार्थं भगवत्प्रार्थनाभ्युपगमः**

शतानन्द उवाच—

वासवे तु गते राजन् वासुदेवोऽवदत् सुरान् ॥ १४४ ॥

**कल्याणकाण्डदीपः**

श्रीनिवासः एतन्मध्ये किं अकरोत् ? इत्यत आह **वासवे त्विति**।

**मूलम्**

श्रीभगवानुवाच—

[१]आकाशराजतनुजां सुरेश्वरा
पाणिग्रहं तत्र करोमि पद्मजाम्।
अङ्गीकृतं चेद्भवदीयमण्डलै-
[२]रङ्गीकरोम्याशु सुराजकन्याम् ॥ १४५ ॥

वासुदेववचः श्रुत्वा वासुदेवात्मजादिकाः।
वाक्यमाहुर्महाराज वासुदेवपरायणाः ॥ १४६ ॥

१. आकाशराजस्य सुताऽस्ति या सुरा।
२. रङ्गीकरोम्यद्य तु राजकन्यकाम्।

**कल्याणकाण्डदीपः**

**आकाशराजतनुजाम्**। अत्रेत्थं योजना— विवाहार्थमागत हे पद्मज ! हे रुद्रपुरोगाः सुराः ! शृणुत। नात्र पाणिग्रहणं करोमि। किन्तु तत्र नारायणपुरे गत्वा पाणिग्रहणं करोमीति मनःसङ्कल्पः।

परन्तु भवदीयमण्डलैः अङ्गीकृतं चेत् आकाशराजस्य तनुजां सुराजकन्यां अङ्गीकरोमि । आकाशराजः तस्मात् तनु यथा भवति तथा जातामिति वा । राज इति जान्ते षष्ठ्यन्तं पञ्चम्यन्तं वा ।

### गूढकर्तृकव्याख्यानम्

ततः श्रीनिवासः किमकरोत् ? इत्यत आह शतानन्दः जनकं प्रति— यदा इन्द्रः आकाशराजपुरीं विश्वकर्मणा सह ययौ तदा श्रीनिवासः सुरान् प्रति "विधे ! रुद्रादिदेवाः ! शृणुत । यूयं सर्वे मम विवाहार्थं आगताः । एतत् तोण्डदेशाधिपः आकाशो नाम राजा स्वपुत्रीं पद्मां नाम कन्यां मे प्रदास्यामीति निश्चितवान् । ममापि तां अङ्गीकरोमि इति अपेक्षा । पाणिग्रहणोत्सवः नारायणपुरे कर्तव्यः अस्ति । यूयं सर्वे यदि अङ्गीकुरुथ, तर्हि तां अङ्गीकरोमि ।

### मूलम्

**ब्रह्मादिदेवा ऊचुः—**

**वयं तु दासभावेन तिष्ठामः पुरुषोत्तम ।**
**[1]व्याहर्तुमक्षमाः सर्वे पश्यामोऽत्र महोत्सवम् ॥ १४७ ॥**

**शङ्कर उवाच—**

**विनोदवचनं कृष्ण भाषसे प्राकृतो यथा ।**
**[2]मनो यदि प्रशस्तं चेत् [3]कुरुतादिति चाब्रवीत् ॥ १४८ ॥**

१. त्वत्प्रसादात् वयं । २. मनसस्ते । ३. क्रियतामिति ।

### कल्याणकाण्डदीपः

**विनोदवचनं** क्रीडावचनम् । **कुरुतादिति** । किमन्याभ्युपगमेन ? इति भावः ।

### मूलम्

**शङ्करस्य वचः श्रुत्वा प्रशशंस हसन् हरिः ।**
**ततश्चतुर्मुखः प्राह शेषाचलपतिं प्रति ॥ १४९ ॥**

### कल्याणकाण्डदीपः

**प्रशशंसेति** । सम्यगुक्तम् । यदेकस्यापि कार्यस्य परिसाधने एकः साधकेषु खण्डितवक्ता अपेक्षितः । एकश्चिन्तापरिहारो जात इवेति ..शशंस इत्यर्थः ।

### मूलम्

**ब्रह्मोवाच—**

**सर्वज्ञस्त्वं दयासार सत्यसङ्कल्पवानसि।**
**अष्टवर्गं ततः कार्यं विवाहात् पूर्वमेव हि।**
**तस्मादाज्ञां च मे देहि पुण्याहे पुरुषोत्तम ॥ १५० ॥**

### कल्याणकाण्डदीपः

**अष्टवर्गमिति** । ततः विवाहस्य अङ्गीकृतत्वात् । विवाहात्पूर्वमेव अष्टवर्गाख्यं कर्म कार्यम् । **ततः** तत्पूर्वमेव पुण्याहं **कर्म कार्यं** इति **हि** प्रसिद्धिः । **तस्मात् पुण्याहे** कर्तव्ये मया कर्तव्यं किम् ? तत्र मत्कर्तव्ये **आज्ञां** अनुज्ञां देहीत्याहेति शेषः ।

अष्टवर्गं नाम गौर्यादिषोडशमातर एको वर्गः । ब्राह्मण्यादि सप्त द्वितीयः । सत्यवस्वादि विश्वे-देवाः तृतीयः । मात्रादयः तिस्रः चतुर्थः । पित्रादित्रयः पञ्चमः । सभार्यामातामहादित्रयं षष्ठः । दुर्गा-गणपत्यादयः सप्त सप्तमः । नन्दिन्यादि पञ्च अष्टमः । इत्यष्टौ वर्गदेवा अस्मिन् कर्मणि देवता इति अष्टवर्गः ॥

यद्वा अष्टभिः मातृभिः वर्गः अष्टवर्गः । तदुक्तं पारिजाते—

"तिस्रः पूज्याः पितुः पक्षे तिस्रो मातामहे तथा ।
इत्येताः मातरः प्रोक्ताः पितुर्मातुः स्वसाऽष्टमम् ॥" इति ।

इत्येवमष्टवर्गो देवता अस्मिन्निति अष्टवर्गः ।

### गूढकर्तृकव्याख्यानम्

विधिमुखसुराः— स्वामिन् जगदीश ! पुरुषोत्तम ! वयं सर्वे तव दासाः । त्वदनुग्रहेणैव वयं विवाहोत्सवं पश्यामः । अतः तव अङ्गीकार एव अस्मदङ्गीकारः ।

ततः शङ्करः— जगदीश ! श्रीनिवास ! प्राकृतनरवत् कुतः विनोदवचनं वदसि ? भवदिच्छा-प्रेरिता वयं वदामः । एवं सति तव मनसः यथा प्रशस्तं तथा कर्तुं त्वं सर्वस्वतन्त्रोऽसि ।

श्रीनिवासः— शङ्कर ! सम्यगुक्तं त्वया । मम सन्तोषो जातः । कुतः ? यस्य कस्यापि कार्यस्य साधने अन्येषां अनुमोदनमपि एकं साधनम् । अतः अद्य शङ्करः मम कन्याङ्गीकारे ममैव स्वातन्त्र्यं दत्तवान् । अतः तव अनुमोदेन मम चिन्ता परिहृता । इति शङ्करं प्रशशंस ।

विधिः— स्वामिन् ! जगदीश ! त्वं सर्वज्ञः । परमदयालुः । सत्यसङ्कल्पः । ईदृशस्य अस्मादृशैः वक्तव्यं किम् ? त्वं सत्यसङ्कल्पः खलु । अद्य राजकन्या अङ्गीकरोमीति सङ्कल्पितवान् । अङ्गीकृतं पूर्यत एव । मोघो नैव । एवं सति अस्मादृशानां सम्मतिं पृच्छसि । किं ब्रूमः ? विचार्यमाणे इदं अस्मदनुमति पृच्छा न । परन्तु अस्मद्बुद्धिशुद्धिकरणरूपभवदनुग्रहैवेति विद्मः । त्वं भक्तवत्सलः । त्वं दयसे न चेत् कथं सा राजपुत्री राजा राज्ञी च कृतार्थाः भवेयुः ? सर्वस्यापि तव दयैव निदानम् ।

इदमस्तु । इदं मम विज्ञापनम्— विवाहः अङ्गीकृतः । विवाहात् पूर्वं एव विवाहाङ्गाष्टवर्गाख्यं कर्म कर्तव्यम् । ततः पूर्वं पुण्याहं कर्म । इति विवाहसम्प्रदायः । अतः प्रथमं पुण्याहे कर्तव्ये मया कार्यं किम् ? अनुज्ञां देहि । सिद्धः" इति ययाचे । अत्र अष्टवर्गं नाम । गौर्यादि षोडशमातरः एको वर्गः । ब्राह्मी आदि सप्त द्वितीयवर्गः । सत्यवस्वादि विश्वेदेवाः तृतीयवर्गः । मात्रादयः तिस्रः चतुर्थवर्गः । पित्रादित्रयः पञ्चमवर्गः । सभार्यमातामहादित्रयं षष्ठवर्गः । दुर्गागणपत्यादयः सप्त सप्तमः । नन्दिन्यादि पञ्च अष्टमो वर्गः । इति अष्टौ वर्गदेवाः अस्मिन् कर्मणि देवताः इति अष्टवर्गम् । एतादृशविधिवाक्यं श्रुत्वा श्रीनिवासः "महाभाग ब्रह्मन् ! तर्हि वसिष्ठं आह्वय ।" क्षणे वसिष्ठ आगतः ।

### मूलम्

**वसिष्ठादीन् प्रति भगवत्कृतविवाहकार्यनियोजनप्रकारः**

**स पुत्रवचनं श्रुत्वा वसिष्ठमुनिमानयत् ।**
**वसिष्ठं च महाभाग पौरोहित्ये नियोजय ॥ १५१ ॥**

**यजुःशाखैर्महामन्त्रैः कर्तव्यं स्वस्तिवाचनम् ।**
**सर्वेषामपि देवानां यजमानो भवानिति ॥ १५२ ॥**

### कल्याणकाण्डदीपः

**स पुत्रवचनमिति । आनय** आकारय । हे महाभाग ! ब्रह्मन् ! आगतं वसिष्ठं प्रकृतविवाहकर्मणि त्वं पुरोहितो भवेति पौरोहित्ये नियोजय । तथा यजुःशाखोक्तमन्त्रैः स्वस्तिवाचनादि वसन्तपूजान्तं याज्ञिकं कर्तव्यमिति वद इत्याह इत्यर्थः । **सर्वेषामिति** । हे ब्रह्मन् ! अस्मिन् विवाहकर्मणि नियुक्तानां सर्वेषां देवानामपि भवान् **यजमानः** स्वतन्त्राधिकारी । मुख्यतः पद्मापरिणयफलस्वामीति यावत् । मद्वक्तव्यं किमपि नास्तीति भावः । अहमपि त्वया यद्यथोच्यते तत् तथा करोमीति ।

### गूढकर्तृकव्याख्यानम्

श्रीनिवासः— "वसिष्ठ ! प्रकृते विवाहकर्मणि त्वं पुरोहितो भवितव्यः । तथा यजुःशाखोक्त-महामन्त्रैः स्वस्तिपुण्याहवाचनादि-वसन्तपूजान्त-याज्ञिकं कर्तव्यम्" इति वसिष्ठं उक्त्वा तं तत्कार्ये नियोजय । "एतावदेव न । ब्रह्मन् ! अस्मिन् विवाहकर्मणि नियुक्तसर्वदेवानां भवान् यजमानो भवितव्यः । स्वतन्त्राधिकारो ते दत्तः । मुख्यतः पद्माविवाहफलस्य त्वं स्वामी । इतः तव मद्वक्तव्यं किम् ? अहमपि यदा यदा यत् यत् कार्यं उच्यते तत्तत् तदा कर्तुं सिद्धः । इति वसिष्ठं वद" इत्याह ।

### मूलम्

**[१]देवानां सऋषीणां तु नमने शङ्करः स्वयम् ।**
**देवाह्वाने कुमारं तु प्रत्युत्थाने च मन्मथम् । ॥ १५३ ॥**

**दत्वा तेषां वीटिकां तु कृष्णवर्त्मानमाह्वयत् ।**
**गृहाण वीटिकां [२]चाग्ने पाकार्थं हव्यवाहन ॥ १५४ ॥**

**ऋषीणां सर्वदेवानां तव पाकस्तु सम्मतः ।**
**तस्मात् पाकं [३]तु कर्तव्यं स्वाहादेव्या स्वधान्वितः॥ १५५ ॥**

१. देवानां च ऋषीणां तु मानने शङ्करं न्यधात् ।
२. चात्र । ३. कुरुष्व त्वं स्वधास्वाहासमन्वितः ।

#### कल्याणकाण्डदीपः

**देवानामिति** । सऋषीणां देवानां नमने । तत्कर्तृकनमनोद्देश्यतया तु नमने तत्तदुचितप्रियवचने वेदवादे लोकवादे प्रकृतकार्यनिर्वाहाय खण्डितवचने च । "णमु प्रह्वत्वे शब्दे च" इति धातुः । स्वयमेवात्मनैवाधिकृतः । तत्र अस्मदीयनियोगो नापेक्षित इत्याहेत्यर्थः । **देवाह्वान इति** । विनियुक्त-देवाह्वाने उत्सवार्थं देवऋष्याह्वाने च कुमारं 'नियोजयामास' इति शेषः । **प्रत्युत्थान इति** । सभापतिना शङ्करेणोक्तस्थानोपवेशनाय प्रत्युत्थाने मन्मथम् । **दत्वेति** । तेषां वसिष्ठब्रह्मशङ्करकुमारमन्मथानां **वीटिकां** ताम्बूलपट्टिकां दत्वा पुनः वीटिकां आदाय गृहीत्वा स्कन्देन कष्णवर्त्मानमाह्वयत् । "अग्ने आगच्छ वीटिकां च गृहाण" इत्याह ।

अथ अग्निः विज्ञापयामास किमर्थम् ? इति । अथ 'पाकार्थम्' इत्याह देवः । ममैव निर्बन्धः कुतः ? इत्यत आह— **हव्यवाहनेति** । हे हव्यवाहन ! ऋषीणां सर्वदेवानां तव पाकस्तु विशेषेण अतिशयेन सम्मतः, अत इति भावः । अहमेकः कथमेषां बहूनां कुर्याम् इत्यत आह— **स्वाहेति** । **स्वाहादेव्या** स्वधादेव्या चान्वितः कुरु । भार्याद्वयमस्ति, का चिन्ता ? इति भावः ।

### मूलम्

**[1]संशासितो यज्ञमूर्तिस्तथाऽस्त्वित्यवदन्नृप ॥ १५६ ॥**

१. इति शिष्टो यज्ञमूर्तिस्तथाऽस्त्वित्यब्रवीद् हरिम् ।

### कल्याणकाण्डदीपः

विवाहकाले स्त्रियो न भर्तृस्वाधीना इत्यत आह **संशासित इति** । रूपद्वयमादाय उभयकार्यं कर्तव्यम् । किमरे बहु भाषसे ? इत्यनुशासित इत्यर्थः ।

### गूढकर्तृकव्याख्यानम्

ततः श्रीनिवासः देवऋषीणां मानने शङ्करं नियोजयामास । देवाह्वाने उत्सवं द्रष्टुं देवऋषि-आह्वाने षण्मुखं नियोजयामास । समागतदेवर्षिवृन्दप्रत्युत्थाने मन्मथः नियोजितः । विधिरुद्रषण्मुखमन्मथानां वीटिकाः दत्ताः । षण्मुखः अग्नि-आह्वाने प्रेषितः । क्षणात् अग्निरागतः ।

श्रीनिवासः— "अग्ने ! किं भो ! इत एहि । वीटिकां गृहाण । त्वमेव भवितव्यः पाक-कार्याय ।"

अग्निः— "स्वामिन् जगदीश ! कुतो ममैव निर्बन्धः ?"

श्रीनिवासः— "अग्ने ! तथा न हि । भो ! शृणु । त्वं खलु हव्यवाहनः । सकलसुराः अग्निमुखाः त्वन्मुखेनैव सकलसुराः हविः भक्षयित्वा तृप्तिमायान्ति । त्वं न चेत् सुराणां भोजनं कुतः ? उपवासं चरेदेव । अत एव त्वं पचसि चेत् सर्वसुर-ऋषीणां सम्मतिः तृप्तिश्च ।

अग्निः— "स्वामिन् ! एतद् बहुसुरमुनिजनकृते । मया एकेनैव अपि शक्यते ।"

श्रीनिवासः— "तव स्वाहा स्वधा च वर्तते हि । तयोः साहाय्येन कुरु । चिन्ता कुतः ?"

अग्निः— "अयं उत्सवकालः । स्त्रियः भर्तॄणां स्वाधीना अपि स्युः ? कथं कर्तव्यम् ?"

श्रीनिवासः— "तर्हि कथं कर्तव्यम् ? रूपद्वयं स्वीकृत्य उभयकार्यं कर्तव्यम् । किं अरे ! बहुभाषसे । वैश्वानर ! तूष्णीं भव ! प्रति न वद । पाकः बहुकष्टेनापि कार्यः । "कष्टं कष्टं" इत्युक्ते कथं भवेत् ?

अग्निः— "जगत्प्रभो ! तथाऽस्तु । सिद्धः ।" अग्निः तदा "जलाहरणाय एकः नियोजितव्यः" इति वक्तुमपि भीतः ।

ततः सम्प्राह वरुणं जलार्थं सर्वदेहिनाम् ।
दुष्टानां [1]रञ्जने राजन् [2]शिष्टानामुपसाधने ॥ १५७ ॥

१. दण्डने । २. शिष्टानां परिपालने ।

**कल्याणकाण्डदीपः**

बलवच्छासनेन खिन्नं जलार्थमेकं देयमिति वक्तुं च भीतं अग्निं तोषयन्निव वरुणं जलार्थं नियोजयामासेत्याह तत इति ।

**मूलम्**

यमं सङ्कल्पयामास सुगन्धे [1]वायुमुत्सवे ॥ १५८ ॥

१. वायुमादिशत् ।

**कल्याणकाण्डदीपः**

सुगन्ध इति । उत्सवे समाजोत्सवे सुगन्धे सुगन्धार्थम् । तादर्थ्ये सप्तमी ।

**मूलम्**

धनदाने ब्राह्मणार्थं वस्त्रालङ्कारकर्मसु ।
कुबेरं योजयामास भगवान् नृपसत्तम ॥ १५९ ॥

[1]सदीपधारणे राजन् निशाकरमयोजयत् ।
वसून् सन्देशयामास भाण्डानां शुद्धिकारणात् ॥ १६० ॥

१. प्रदीपधारणे ।

**कल्याणकाण्डदीपः**

**धनदान इति** । ब्राह्मणेभ्य इदं ब्राह्मणार्थम् । अर्थेन नित्यसमासः । ब्राह्मणार्थमिदम् । **वस्त्रालङ्कारकर्मसु** वस्त्राणां अलङ्काराणां कार्येषु इदं इयत् धनमित्येवं धनदाने ।

**मूलम्**

**ग्रहांश्च द्रोणपत्रेषु [1]न्ययुञ्जदरिमर्दनाः ॥ १६१ ॥**
**एवं संशासिताः सर्वे पुराणपुरुषेण च ।**
**आज्ञामादाय शिरसा सर्वे स्वस्थाः स्वकर्मसु ॥ १६२ ॥**

१. न्ययोजयदरिन्दम ।

**कल्याणकाण्डदीपः**

**ग्रहानिति** । **द्रोणपत्रेषु** द्रोणानि च पत्राणि च द्रोणपत्राणि, तेषु । द्रोणकर्मसु पत्रकर्मसु इत्यर्थः । 'पात्रेषु' इत्यपि पाठः । द्रोणकर्मणः पत्रकर्मणश्च पत्रतापनदारणसन्धानच्छेदनादिना बहुरूपत्वात् बहुवचनम् ।

**गूढकर्तृकव्याख्यानम्**

तथाविधं अग्निं दृष्ट्वा श्रीनिवासः जलसम्पादनार्थं वरुणमानाय्य, "जलाधिप ! वरुण ! जलाभरणनिर्वाहः त्वदीय एव ।

ततः "विवाहे जनसम्मर्दः भवति । कोऽपि कलकलं कलहः भवेत् । तथा मा भूत्" इति दुष्टानां दण्डने शिष्टानां अनुकूलतासम्पादने तेषां रक्षणे दण्डधरं यमराजं नियोजयामास । सङ्घे सर्वेषां सुगन्धपरिमलवितरणे वायुमादिशत् । ततः विप्रादिभ्यः विविधवस्त्रालङ्कारदापने विवेकेन तारतम्येन धनदाने धनाधिपं कुबेरं नियोजयामास । तत्र तत्र दीपिकास्थापने, दीपसंयोजनज्वालने चन्द्रं नियोजयामास । भाण्डादि बृहत्पात्राणां शुद्धीकरणे अष्टवसून् नियोजयामास । द्रोणपत्राणि अनुकूलीकृत्य भोजनकालविनियोगे नवग्रहान् नियोजयामास । इत्येवं एकैकः एकैकस्मिन् कार्ये नियुक्तः । तथाऽस्तु इति अङ्गीकृत्य तदनुज्ञया स्वस्वकर्मणि स्वस्थचित्ता बभूवुः ॥

**मूलम्**

**ततो वाक्यमुवाचेदं ब्रह्मा लोकपितामहः ॥ १६३ ॥**

**कल्याणकाण्डदीपः**

अथ ब्रह्मा प्राथमिकस्वाधिकारं प्रचारयति तत इति ।

**मूलम्**

ब्रह्मोवाच—

मज्जनं कुरु गोविन्द मङ्गलं मधुसूदन ॥ १६४ ॥

**कल्याणकाण्डदीपः**

मज्जनमिति । मङ्गळं मज्जनम् ।

**मूलम्**

पुण्याहपूर्वकर्माणि इष्टदेवनिवेदनम् ।
[1]पूर्वं देवप्रतिष्ठां च साङ्गं कुरु रमापते ॥ १६५ ॥

**विवाहार्थं करवीरपुराद्रमाह्वानम्**

स पुत्रवचनं श्रुत्वा सस्मार [2]जगदात्मकः ।
रमां राजीवनयनां करवीरपुरालयाम् ॥ १६६ ॥

नित्यावियोगिनीं राजन् नरवन्नृपसत्तम ।
रुरोद लोकरीत्यैव भगवान् लौकिकीतनुः ॥ १६७ ॥

१. कुलदेवप्रतिष्ठां । २. जगदीश्वरः ।

**कल्याणकाण्डदीपः**

कुर्मः कुतस्त्वरयसि ? इत्यत आह— पुण्याहेत्यादि । प्रातःकालो अत्येति । पुण्याहपूर्वाणि कर्माणि कर्तव्यानि बहूनि सन्ति । 'अतः' इति शेषः । इष्टदेवनिवेदनं इष्टदेवतायै निवेदनम् । प्रकृतकर्मविज्ञापनं प्रार्थनमिति यावत् । एतत् कर्तव्यं न किम् ? अतः कुलदेवप्रतिष्ठां साङ्गं कुर्वित्याहेत्यर्थः । जगदात्मकः जगति लोकलीलायामात्मा मनो यस्य स तथा । लौकिकीतनुः विडम्बितलोकलीलातनुः । लोकरीत्या स्वेच्छया लोकरीतिं प्रकारं प्राप्तः "प्रकारस्यन्दयोः" इत्यमरः । रुरोद । अश्वाददे ।

**कल्याणकाण्डदीपः**

**धनदान इति** । ब्राह्मणेभ्य इदं ब्राह्मणार्थम् । अर्थेन नित्यसमासः । ब्राह्मणार्थमिदम् । **वस्त्रालङ्कारकर्मसु** वस्त्राणां अलङ्काराणां कार्येषु इदं इयत् धनमित्येवं धनदाने ।

**मूलम्**

**ग्रहांश्च द्रोणपत्रेषु [1]न्ययुञ्जदरिमर्दनाः ॥ १६१ ॥**
**एवं संशासिताः सर्वे पुराणपुरुषेण च ।**
**आज्ञामादाय शिरसा सर्वे स्वस्थाः स्वकर्मसु ॥ १६२ ॥**

१. न्ययोजयदरिन्दम ।

**कल्याणकाण्डदीपः**

**ग्रहानिति** । **द्रोणपत्रेषु** द्रोणानि च पत्राणि च द्रोणपत्राणि, तेषु । द्रोणकर्मसु पत्रकर्मसु इत्यर्थः । 'पात्रेषु' इत्यपि पाठः । द्रोणकर्मणः पत्रकर्मणश्च पत्रतापनदारणसन्धानच्छेदनादिना बहुरूपत्वात् बहुवचनम् ।

**गूढकर्तृकव्याख्यानम्**

तथाविधं अग्निं दृष्ट्वा श्रीनिवासः जलसम्पादनार्थं वरुणमानाय्य, "जलाधिप ! वरुण ! जलाभरणनिर्वाहः त्वदीय एव ।

ततः "विवाहे जनसम्मर्दः भवति । कोऽपि कलकलं कलहः भवेत् । तथा मा भूत्" इति दुष्टानां दण्डने शिष्टानां अनुकूलतासम्पादने तेषां रक्षणे दण्डधरं यमराजं नियोजयामास । सङ्घे सर्वेषां सुगन्धपरिमलवितरणे वायुमादिशत् । ततः विप्रादिभ्यः विविधवस्त्रालङ्कारदापने विवेकेन तारतम्येन धनदाने धनाधिपं कुबेरं नियोजयामास । तत्र तत्र दीपिकास्थापने, दीपसंयोजनज्वालने चन्द्रं नियोजयामास । भाण्डादि बृहत्पात्राणां शुद्धीकरणे अष्टवसून् नियोजयामास । द्रोणपत्राणि अनुकूलीकृत्य भोजनकालविनियोगे नवग्रहान् नियोजयामास । इत्येवं एकैकः एकैकस्मिन् कार्ये नियुक्तः । तथाऽस्तु इति अङ्गीकृत्य तदनुज्ञया स्वस्वकर्मणि स्वस्थचित्ता बभूवुः ॥

**मूलम्**

**ततो वाक्यमुवाचेदं ब्रह्मा लोकपितामहः ॥ १६३ ॥**

**कल्याणकाण्डदीपः**

अथ ब्रह्मा प्राथमिकस्वाधिकारं प्रचारयति तत इति ।

**मूलम्**

**ब्रह्मोवाच—**

**मज्जनं कुरु गोविन्द मङ्गलं मधुसूदन ॥ १६४ ॥**

**कल्याणकाण्डदीपः**

**मज्जनमिति ।** मङ्गळं मज्जनम् ।

**मूलम्**

**पुण्याहपूर्वकर्माणि इष्टदेवनिवेदनम् ।**
**[1]पूर्वं देवप्रतिष्ठां च साङ्गं कुरु रमापते ॥ १६५ ॥**

**विवाहार्थं करवीरपुराद्रमाह्वानम्**

**स पुत्रवचनं श्रुत्वा सस्मार [2]जगदात्मकः ।**
**रमां राजीवनयनां करवीरपुरालयाम् ॥ १६६ ॥**

**नित्यावियोगिनीं राजन् नरवन्नृपसत्तम ।**
**रुरोद लोकरीत्यैव भगवान् लौकिकीतनुः ॥ १६७ ॥**

१. कुलदेवप्रतिष्ठां । २. जगदीश्वरः ।

**कल्याणकाण्डदीपः**

कुर्मः कुतस्त्वरयसि ? इत्यत आह— **पुण्याहेत्यादि** । प्रातःकालो अत्येति । पुण्याहपूर्वाणि कर्माणि कर्तव्यानि बहूनि सन्ति । 'अतः' इति शेषः । **इष्टदेवनिवेदनं** इष्टदेवतायै निवेदनम् । प्रकृतकर्मविज्ञापनं प्रार्थनमिति यावत् । एतत् कर्तव्यं न किम् ? अतः कुलदेवप्रतिष्ठां साङ्गं कुर्वित्याहेत्यर्थः । **जगदात्मकः** जगति लोकलीलायामात्मा मनो यस्य स तथा । **लौकिकीतनुः** विडम्बितलोकलीलातनुः । **लोकरीत्या** स्वेच्छया लोकरीतिं प्रकारं प्राप्तः "प्रकारस्यन्दयोः" इत्यमरः । **रुरोद** । अश्रूाददे ।

मूलम्

न शोभते सभा दिव्या तया विरहिता सुत।
भवानहं महाप्राज्ञ देवाश्च सपरिग्रहाः ॥ १६८ ॥
न शोभन्ते यथाऽऽकाशे तारास्तारापतिं विना।
अपादपं यथाऽरण्यमपक्षाश्च विहङ्गमाः ॥ १६९ ॥

कल्याणकाण्डदीपः

**न शोभत इति**। **तया** सभालङ्कारया विना सभा न शोभते। भवान् शिशुः **तया** मात्रा विरहितो न शोभसे। अहं च एतावदायुष्मान् युवा तया भार्यया विना न शोभे। सपरिग्रहा अपि सभार्या अपि देवाः स्वस्वभार्याश्वसाविना। **अपादपमिति**। अरण्यं अपादपं न शोभते। **अपक्षा** विहङ्गमाश्च न शोभन्ते।

मूलम्

[१]अतिथिश्च यथाऽदत्त अधनाः सुहृदो यथा।
तथा वयं महालक्ष्म्या रहिताः कमलासन ॥ १७० ॥

१. अफलाश्च यथा वृक्षाः।

कल्याणकाण्डदीपः

**अतिथिरिति**। **अदत्तः** दत्तं धनमस्यास्तीति दत्तः, न दत्तः अदत्तः। तृणादिना सत्कृतोऽपि धनदानेन अतोषितोऽतिथिर्न शोभते यथा। "अतिथिश्च यथाऽन्नः" इति पाठ सुगमः। सुहृद्यागते सुहृदोऽपि अधनाश्चेन्न शोभन्ते। तत्परितोषकधनाभावादिति भावः।

वस्तुतस्तु,

"एकामुत्क्रम्य कामार्थमन्यां लब्धुं य इच्छति।
समर्थस्तोषयित्वाऽर्थैः पूर्वोढामपरां वहेत् ॥
आज्ञासम्पादनीं दक्षां वीरसूं प्रियवादिनीम्।
पत्नीं त्यक्त्वा तु भोगार्थमन्योद्वाही सुतोषयेत् ॥"

इति वचनात् तत्परित्यागे धर्महानिः। "न सा सभा यत्र न सन्ति वृद्धा न ते वृद्धा ये न वदन्ति धर्मम्" इत्यादेः।

किञ्च,

"सदारोऽन्यान् पुनर्दारानुद्वोढुं कारणान्तरात् ।
यदीच्छेदग्निमान् कर्तुः क्व होमोऽस्य विधीयते ।
स्वेऽग्नावेव भवेत् होमो लौकिके न कदाचन ॥" (कात्यायनस्मृति १९.१३)

इति वचनात् तत्सन्निध्यभावे अग्नेर्विच्छेदात् विधिलोपः । असम्भवपक्षमवलम्ब्य लौकिकेऽनळे चेद्रात्रौ त्रयोदशघटिकानन्तरं विवाहाग्नेरुत्पत्तेः । षट्घटिकात्मकौपासनकालस्य अतीतत्वात् परसायं-निरीक्षणेन कृतदारसङ्ग्रहस्यापि प्रातरौपासनलोपः । अभोजनेन स्थितौ तु बन्धुर्भोजनस्यावर्जनीयतया विधिभ्रेषः । अग्निद्वयसंसर्गश्च अतिरिच्यत इति । अतो महालक्ष्मी मया इदानीं अवश्यमादरणीयेति आन्तरङ्गिको भावः । अयमपि लोकसङ्ग्रहार्थः । अत एव **जगदात्मक** इत्याद्युक्तम् ।

## गूढकर्तृकव्याख्यानम्

ततः विधिः स्वाधिकृतकार्यप्रचारणाय श्रीनिवासं विज्ञापयति "गोविन्द ! मधुसूदन ! श्रीनिवास ! शीघ्रं मङ्गलस्नानं कुरु । श्रीनिवासः "तिष्ठ, तिष्ठ, कुर्मः ।"

विधिः— "तथा न । प्रातः कालः अत्येति । प्रथमं स्वस्तिपुण्याहवाचनं भवितव्यम् । पुरतः कर्तव्यानि कर्माणि बहूनि सन्ति । अत एवोक्तम् । इष्टदेवता पूजा भवितव्या । ततः कुलदेवताप्रतिष्ठापनं साङ्गं कर्तव्यं अस्ति ।" श्रीनिवासः विधिवाक्यं श्रुत्वा जगन्मातरं रमां स्मृत्वा रोदनं कर्तुं उपचक्रमे । नेत्रयोः अश्रु मुञ्चति । वागेव नास्ति । पुनः पुनः रोदिति । विधिः तदा पश्यति । "स्वामिन् ! तात ! किमिदम् ? अज्ञानम् ? मोहः ? नटनम् ? किम् ? किं स्मृतवान् ? कुतो रोदनम् ?

श्रीनिवासः लोकाचारं विडम्बयन् वक्ति— "विधे ! नित्यं मम वियोगरहिता किञ्च दुःखरहिता या तां रमां विना केन वा मम समाधानम् ? चिरात् मां विहाय कोल्लापुरं गता । अद्य मम समये न तिष्ठति । ईदृश्याः अनवस्थाने मम दुःखं कुत इति पृच्छसि वा ? पश्य विधे ! इदानीं अहं अस्मि । पुत्रः त्वं असि । पौत्रः शङ्करोऽस्ति । एतावन्तः सस्त्रीकाः देवाः सन्ति । किं तेन ? गगने नक्षत्राणि असङ्ख्यातानि सन्ति । किं तेन ? चन्द्रं विना न शोभन्ते । एतावन्तो जना वयं स्मः । किं तेन ? तां रमां विना अस्माभिः सर्वैरपि विद्यमानैः नैव शोभा । रमां विना अस्माकं सर्वेषां अवस्थानं कीदृशं चेत् ? अफला वृक्ष इव । अपक्षाः पक्षिण इव । अवृक्षं अरण्यमिव । अधनानि मित्राणीव । अतः इयं सभा नित्यावियोगिनीं दुःखास्पृष्टां मम अत्यन्तप्रियतमां तां रमां विना नैव शोभते ।

एतावदेव न। विधे ! शृणु धर्मरहस्यम्। इदानीं अन्यां कन्यां विवोढुं अस्मि खलु। रमा ज्येष्ठा भार्या। तदनुमतिं विना यदि परिणयः प्रवर्तेत, तदा धर्महानिः लोकमर्यादाऽतिक्रमश्च स्यात्। अत्र ज्ञानिनः। "एकामुत्क्रम्य कामार्थं अन्यां लब्धुं य इच्छति। समर्थस्तोषयित्वार्थैः पूर्वोढां अपरां वहेत्। आज्ञासम्पादिनीं दक्षां वीरसू प्रियवादिनीम्। पत्नीं त्यक्त्वा तु भोगार्थं अन्योद्वाही सुतोषयेत्" इति वचनात्। अद्य रमा ज्येष्ठा भार्या। तां अत्र आनाय्य तां आपृच्छेत्। गौरववचनैः तर्पयेत्। "आर्ये ! भगवति ! यदि त्वं अनुज्ञां ददासि अन्यां वहामि नोचेत् न" इति प्रार्थ्य तदनुमत्या विवहेत्। अयं धर्मसमयः। अद्य तां विना इयं सभा न धर्मसभा। कुतः ? धर्महानौ कुतः धर्मसभा। अत्र ज्ञानिनः "न सा सभा यत्र न सन्ति वृद्धाः। वृद्धा न ते ये न वदन्ति धर्मम्" इति। रमा ज्ञानवयोवृद्धा। तदनुमतिं विना न किमपि कर्तव्यम्। प्रकृतविवाहो भोगार्थः न तु अपत्यार्थः।

सा त्वां पुत्रं लब्धवती। पुनश्च शास्त्रविधिः एवमस्ति। रमां धर्मपत्नीं विना अग्नौ औपासनाख्यकर्मलोपः स्यात्। अतः तां विना सर्वं समञ्जसं न। शङ्करः श्रीनिवासोक्तिं श्रुत्वा समुत्तिष्ठन् "तात श्रीनिवास ! किं रोदनम् ? किं अश्रुविमोचनम् ? किं चिन्ता ? विडम्बनं करोषि। देवदेवेश ! त्वं सङ्गरहितः अप्रमेयः क्लेशरहितः। एतादृशस्य रोदनं वृथा।

**मूलम्**

**वासुदेववचः श्रुत्वा वासुदेवमभाषत।**
**शङ्करः पृथिवीपाल समुत्थाय महाभुजः ॥ १७१ ॥**

**शङ्कर उवाच—**

**किमर्थं [1]रुदसे तात किं ते कार्यविडम्बनम् ॥ १७२ ॥**

१. रोदनं।

**कल्याणकाण्डदीपः**

अथ शम्भोः क्रमागतस्वाधिकारप्रचारावसरः **वासुदेववच इति**। महादेवः शङ्करो वासुदेववचः श्रुत्वा समुत्थाय वासुदेवमभाषत— हे तात ! किमर्थं किंनिमित्तं रुदसे ? नेत्रयोः नीरमाददासि। **कार्यविडम्बनं** कार्यस्याविलम्बेन प्रवर्तमानस्यास्य कार्यस्य **विडम्बनं** विलम्बनं ते तव किमेतत् ? एवं करणं न शोभनमिति भावः। "किं ते कार्यं विडम्बनम्" इति पाठे, हे तात ! ते विडम्बनं लोकानुकरणमेव कार्यम्। किमन्यत् कार्यमस्ति ? इत्यर्थः।

मूलम्

असङ्गस्याप्रमेयस्य [1]अक्रूरवरदस्य च ॥ १७३ ॥

अक्लेशकस्य [2]देवस्य किमर्थं रोदनं वृथा ।
स च तद्वचनं श्रुत्वा नीलकण्ठमभाषत ॥ १७४ ॥

१. चाक्रूरवरदस्य च । २. देवेश ।

**कल्याणकाण्डदीपः**

किमर्थमित्येतद्विवृणोति **असङ्गस्येत्यादिना** । **किमर्थं** किन्निमित्तम् । **वृथा** निष्फलमित्यर्थः । कारणं फलं च नास्तीति यावत् ।

मूलम्

श्रीभगवानुवाच—

नैव जानासि भो शम्भो बालभावेन पौत्रक ।
यदा ब्रह्मावसाने च न किञ्चिदवशिष्यते ॥ १७५ ॥

तदा क्षीरोदके शम्भो निरालम्बे निराश्रये ।
[1]सा च मे शयने भूत्वा क्रीडते हितकारिणी ॥ १७६ ॥

१. सा मे शय्यासखी ।

**कल्याणकाण्डदीपः**

कारणं फलं च विद्यमानं त्वं नैव जानासि इत्याह **नैवेत्यादिना** । ऊर्ध्वाधारः आलम्बः । अधराधारः आश्रयः । स्थित्यै स्थानं नास्ति । गृहीतुं शाखाद्यालम्बो नास्ति । एवं क्लेशसागरे मग्नस्य मम क्लेशकारणं त्वं सुखी कथं जानीथाः ? किं तत्फलं कारणं च ? इत्यतः क्रमेण ते दर्शयति— **सा चेति** । या रमा कोल्हापुरवासिनी **सा च शयने** शेषपर्यङ्के शयानस्य **मे** हितकारिणी भूत्वा क्रीडते लीलां करोति । सौख्यतरं सौख्यम् । तथा च रमाविरहो दुःखकारणं, तल्लाभः फलमिति भावः ।

यद्वा, हे शम्भो ! त्वं मे महिमानं नैव जानासि । तर्हि को जानाति ? इत्यत आह— **निरालम्ब इति** । या रमा निरालम्बे निराश्रये **शयने** लयजलधौ क्रीडते **मे** मह्यं **हितकारिणी** भूत्वा **क्रीडते** तमश्चण्डवातादिरूपेण लीलां करोति, सा च सैव जानातीत्यर्थः ।

**गूढकर्तृकव्याख्यानम्**

श्रीनिवासः— "शङ्कर ! त्वं इतो बालः । कार्यकारणभावं न वेत्सि । वच्मि, शृणु । ब्रह्मावसाने महाप्रलये किञ्चिदपि नावशिष्यते । ऊर्ध्व-आधारः न । अध-आधारो न । स्थित्यै स्थानं न । एवं क्लेशसागरमग्नस्य मम क्लेशकारणं त्वं सुखी निश्चिन्तपुरुषः कथं वेत्सि ? महादेव ! तस्मिन् प्रलयोदके मम रमा एकैव हितैषिणी भूत्वा । तमश्चण्डवातादिरूपेण स्वक्रीडां करोति । सा चासौ वा मम समये स्थिता मम क्लेशं वेत्ति । अतः तां रमां विना मम सौख्यं कुतः ?

**मूलम्**

**एतादृशीं विना शम्भो मम सौख्यं कथं भवेत् ।**
**[1]वदत्येवं जगन्नाथे वेधा वाक्यमभाषत ॥ १७७ ॥**

१. एवमुक्ते ।

**ब्रह्मोवाच—**

**नोक्तं त्वयेदं गोविन्द पूर्वमेव जनार्दन ।**
**अद्य मां कमलानाथ रमाह्वाने नियोजय ॥ १७८ ॥**

**भगवदुक्त्या रमानयनाय करवीरपुरं प्रति सूर्यगमनम्**

**सोऽपि पुत्रवचः श्रुत्वा द्युमणिं शीघ्रमाह्वयत् ।**
**षण्मुखेन महाराज सोऽपि तत्र समागतः ॥ १७९ ॥**

**कल्याणकाण्डदीपः**

अथ क्रमप्राप्तकुमाराधिकारप्रचारः सोऽपीति । कारणं आह्वानकारणम् ।

**मूलम्**

**ननाम भक्त्या स्तुत्वाऽथ प्राञ्जलिः सम्मुखस्थितः ।**
**भास्करं भक्तिनम्राङ्गं भगवानाह कारणम् ॥ १८० ॥**

**गूढकर्तृकव्याख्यानम्**

विधिः— स्वामिन् ! जनार्दन ! पूर्वमेव त्वयोक्तं चेत् समीचीनमभविष्यत् । तथाऽपि चिन्ता न । रमापते ! कृपया मे अनुज्ञा देहि । [illegible]ात् रमां आनयामि ।

श्रीनिवासः षण्मुखे "सूर्यमत्रानय" इति प्राहिणोत् । सूर्यः क्षणात् आगत्य श्रीनिवासं प्रणम्य स्तुवन् कृताञ्जलिपुटः तस्थौ ।

मूलम्

श्रीभगवानुवाच—

सृगालवासुदेवस्य नगरं गच्छ भानुमत् ।
तत्रास्ते जगतां माता तामानय [1]महीधर ॥ १८१ ॥

भारतीं वासुदेवस्य [2]निशम्य नृपसत्तम ।
विनयेन समायुक्तः शिरसा नम्य चावदत् ॥ १८२ ॥

१. मम प्रियाम् । २. श्रुत्वा पौत्रो दिवाकरः ।

भानुरुवाच—

कथं तां लोकजननीमानयिष्ये तवान्तिकम् ।
तन्ममाचक्ष्व गोविन्द कथं मां विश्वसेद्रमा ॥ १८३ ॥

कल्याणकाण्डदीपः

कथं तामिति । तां भृगुपदप्रहारेण तुभ्यं कुपिताम् ।

मूलम्

श्रीभगवानुवाच—

अस्ति तस्यास्त्वयि स्नेहः सदा लोकमहोदये ।
त्वदागमनसंहृष्टा समायाति ममान्तिकम् ॥ १८४ ॥

उपायं प्रवदिष्यामि तदागमनकर्मणि ।
अश्रु मुञ्चन् [1]नयनजं तद्वारनिकटे स्थितः ॥ १८५ ॥

त्वां [2]च दृष्ट्वा जगन्माता सान्त्वयिष्यति भानुमत्॥ १८६ ॥

१. अपमृजन् । २. तु ।

**कल्याणकाण्डदीपः**

**त्वयीति** । हे भानो ! त्वयि **तस्याः** लक्ष्म्याः **स्नेहं** स्नेहकारणं अस्ति । अतो विश्वसेत् इत्याह भगवान् । अथ सूर्यः तस्याः मयि सौहृदमस्तीति त्वया यदा ज्ञातमिति पृच्छति— **यदेति** । 'ज्ञातम्' इति शेषः । लोकविनिर्णय इत्युत्तरम् । **लोकविनिर्णये** ।

"सूर्यस्य मन्दशुक्रौ तु शत्रू प्रोक्तौ बुधः समः ।
चन्द्रस्य शत्रवो नैव मित्रे सूर्यशशाङ्कजौ ।
अनलस्यानिलो मित्रं लक्ष्म्याः सूर्यशशाङ्ककौ ।
अग्निश्च बान्धवाः प्रोक्ता एतेऽप्यन्योन्यबान्धवाः ॥"

इत्यादि मित्रामित्रलोकविनिर्णये काले । अत एवोक्तं लक्षणसारसङ्ग्रहे—

"शकाररेफकाराणां श्रीकारः सञ्चयस्तथा ।
शकाररेफयोश्चन्द्र ईकारस्य ग्रहो रविः ॥
तयोरन्योन्यमित्रत्वादीशयोर्देवता रमा ।
रेफस्याग्नेरधीशत्वात् श्रीकारो वर्णशेखरः ॥" इत्यादि ।

तदावासकमलविकासकत्वाच्च त्वयि स्नेहोऽस्तीति भावः ।

**गूढकर्तृकव्याख्यानम्**

विनीतं स्थितं सूर्यं प्रति श्रीनिवासः— "भानुमन् ! अद्यैव सृगालवासुदेवनगरं (करवीरपुरम्) गत्वा तत्र जगन्माता रमा आस्ते । मम प्रियतमां तामानय । विलम्बं मा कुरु ।

सूर्यः— "स्वामिन् जगदीश ! साक्षात् जगज्जननी क्व ? अहं क्व ? कथं मम वाक्ये विश्वसेत् ? तव समीपे तदानयनं कथं शक्यम् ?

श्रीनिवासः— भानो ! तथा न । शृणु । रमायाः त्वयि वात्सल्यम्, कथं ? इति चेत् । त्वं तावत् तव उदयेन लोकमहोदयं जनयसि । अतः त्वं लोकबान्धव इति ख्यातः । कस्य वा लोकस्य त्वं प्रियो न ? अत तव आगमनमात्रेण संहृष्टा तव वाक्ये गौरवविश्वासं कृत्वा मम सन्निधौ आयात्येव ।

सूर्यः— सत्यं भवतु । तस्याः मयि विश्वास इति कथम् ?

श्रीनिवासः— तथा वा । शृणु । अत्र ज्ञानिनः "सूर्यस्य मन्दशुक्रौ तु शत्रू प्रोक्तौ बुधः समः । चन्द्रस्य शत्रवो नैव मित्रे सूर्यशशाङ्कजौ । अनलस्यानिलो मित्रं लक्ष्म्याः सूर्यशशाङ्ककौ ।

अग्निश्च बान्धवाः प्रोक्ताः एतेऽप्यन्योन्यबान्धवाः ।" एवं मित्रामित्रनिर्णये । उक्तं लक्षणसारसङ्ग्रहे— शकाररेफेकाराणां श्रीकारः सञ्चयस्तथा । शकाररेफयोश्चन्द्रः ईकारस्य ग्रहो रविः । तयोरन्योन्यमित्रत्वात् ईशयोर्देवता रमा । रेफस्याग्नेरधीशत्वात् श्रीकारो वर्णशेखरः । तदावासकमलविकासजनने तव हेतुत्वात् । कमलविकासजनकत्वे कमलालया मनोविकासजनकत्वं तव लक्षणम् । अद्यापि तव ज्ञातं वा । तव दर्शनमात्रेण कमलाविकासो भवत्येव । (कमलं अस्ति अस्याः आवासत्वेनेति कमला । कं जलं अलति इति कमलम् ।) अतः समायात्येव ।

ततः सूर्यः तथापि सांशयिका बभूव । श्रीनिवासः— "भानुमन् ! कुतः तूष्णीं अभवः ? इतोऽपि संशयस्तव ? शृणु । तां रमामानेतुं उपायं वच्मि । तत्र गच्छ । तद्गृहद्वारसमीपे उपविश । मा वद । तूष्णीं भव । नेत्रयोः अश्रु मुञ्चन् अपमृजन् भव । ईदृशं त्वां दृष्ट्वा त्वयि, सकरुणा सान्त्वयितुमायाति । "तात शिशो भानुमन् ! भुवि मया तव दापितः अक्षरदत्तः वाङ्नियोगः अधिकारः केन पुरुषेण हृतः ? शिशो ! मा रोदीः । प्रत्याहरिष्यामि ।

**मूलम्**

**एवं वदति वाक्यं त्वां किञ्चिद्दुःखसमाकुला ।**
**शासनं ते हृतं केन [1]तव भानोर्महीतले ॥ १८७॥**

---

१. धरण्यां कथ्यतामिति ।

**कल्याणकाण्डदीपः**

हे भानुमन् । नयनजमश्रु अम्बु मुञ्चन् सन् तद्वारनिकटे स्थितो भव । तादृशं मित्रं त्वां च दृष्ट्वा इत्थं सान्त्वयिष्यतीत्याह **शासनमिति** । "हे भानो ! महीतले विद्यमानेन **केन पुरुषेण ते** त्वत्सम्बन्धी **शासनं** मया दापितोऽक्षरदत्तो वाङ्नियोग अधिकारः **हृतं** अपहृतम् । तस्मिन्मित्रस्य तव प्रत्याहरिष्यामि । हे शिशो ! मा रोदीः" इति मातेव पुत्रं सकरुणा सान्त्वयिष्यति । तव इति सम्बुद्धिः वा । तौ तीति तवः । "तु गतिवृद्धि-भाषाहिंसासु" पचाद्यच् । सर्वदा अन्तरिक्षे अप्रतिहतगते । सा च प्रशासनात् । "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इत्यादि श्रुतेः । 'अहमादित्यैः' इत्यादि च ।

यद्वा, **लोकविनिर्णये** भूरादिलोकविदारणविनियोगे इत्यर्थः । कूटस्थापरपर्यायमहालक्ष्म्यन्तर्गतमहालक्ष्मीरूपाक्षरेण अन्तरिक्षलोकधृतिपोषणाय आदित्यस्य शासनात् । तथा च सूत्रम् "अक्षरमम्बरान्तधृतेः" इति । "लेख्यं भूम्यादिदानार्थं यातनाऽऽज्ञा च शासनम्" इत्यमरः ।

### गूढकर्तृकव्याख्यानम्

"अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैः उत विश्वदेवैः । अहं मित्रावरुणो भाबिभर्म्यहं त्वष्टार-मुतपूषणं भगम्" इति अम्भ्रणीसूक्तानुसारेण अहं विष्णुव्यतिरिक्त-एकादशादित्यैः सह तेषां निया-मकतया तैः तैः सह वर्ते । अहं त्वष्टारं पूषणं भगं च धारयामि पोषयामि च । सदा तव अन्तरिक्षे वासस्य, सञ्चारस्य प्रतिहतिः यथा न भवेत् तथा अवेक्षे । तादृशसञ्चारसामर्थ्याधिकारं अहं ते दत्तवती । इदं मे शासनम् । एवं सति तव अधिकारस्य का प्रतिहतिः अभूत् ? वद । परिहरिष्यामि । अहं अक्षरशब्दवाच्या । "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत" इति श्रुतेः । "कूटस्थोऽक्षर उच्यते" इत्युक्तेः । कूटस्थ-अपरपर्याय-महालक्ष्म्यन्तर्गत-महालक्ष्मीरूप-अक्षरेण, अन्तरिक्षे लोकधृतिपोषणाय आदित्यस्य शासनात् । तथा च सूत्रं "अक्षरमम्बरान्तधृतेः" । एवं महालक्ष्मीः त्वां सान्त्वयिष्यति ।

### मूलम्

**[1]एवमाचक्ष्व वचनं किञ्चिद्दुःखसमाकुलः ।**
**न शासनं हृतं मातर्येन दत्तं स चाद्य वै ॥ १८८ ॥**

१. त्वं समाचक्ष्व तां देवीं इत्थमत्यन्तदुःखितः ।
न शासनं हृतं मेऽद्य मातः केनापि भूतले ॥

**शयनं तु कृतं तेन तव भर्ताऽद्य भूतले ।**
**येन वै शासनं दत्तं मातर्मे कृपयेदृशम् ॥ १८९ ॥**

**निश्चेतनोऽद्य पतितः [1]स च जीवति वा न वा ।**
**भर्ता तव [2]जगन्मातरशक्त इव भाति मे ॥ १९० ॥**

१. भर्ता । २. जगन्नाथस्त्वशक्तोऽद्य विभाति मे ।

### कल्याणकाण्डदीपः

अथ भगवान् वक्तव्यमुपदिशति— **एवमाचक्ष्वेति** । हे सूर्य ! त्वं किञ्चिद्दुःखसमाकुलः । मृषा अश्रुनयनो भूत्वा हे मातः शासनं केनापि नापहृतम् । परन्तु त्वया दापितं त्वदन्तर्यामिणा त्वद्रूपेण येनाक्षरेण शासनं दत्तं सः दाता चाक्षरः अद्य वसन्ते धर्मश्रान्तः पर्वते सञ्चरन् विषमे पतितः । तदेवैकं निमित्तं जातम् । **निश्चेतनः** निर्गतश्चे[illegible]या निश्चेतनो विसंज्ञो भूत्वा शेते । "संज्ञा स्यात् चेतना नाम

हस्ताद्यैश्वार्थसूचना" इत्याद्यमरः । स च जीवति वा न वेति वा भूत्वा वर्तते । अथ सा अमोघया मम मायया मुग्धा पतने किमभूत् ? इति पृच्छति । अथ एवमाचक्ष्व— कदा कदाऽपि द्रक्ष्यामि । हे जगन्मातः ! तव भर्ता कुतो वा इतःपरं अशक्त इव भाति मे । अशक्तत्वात् पतित इति भावः ।

**मूलम्**

**कदा द्रक्ष्यामि [१]त्वां देवि वर्तते जीवनाल्पकः ।**
**सा तद्वचनमाकर्ण्य समायाति न संशयः ॥ १९१ ॥**

१. देवीं तां इत्यास्ते प्रलपन्निति ।

**कल्याणकाण्डदीपः**

अथ सा अशक्तौ किमभूत् ? इति पृच्छति । अथ एवमाचक्ष्वेत्याह— **कदेति** । हे देवि ! त्वां कदा द्रक्षामीति च वर्तते । अतो जीवनाल्पकः । अल्पं जीवनं अन्ननीरादि यस्य सः जीवनाल्पकः । उपादेयमन्ननीरादिहीनमित्यर्थः । अतोऽशक्त इति भावः । अथ मम वार्ता का वा अस्ति ? इति पृच्छति । अथ एवमाचक्ष्व— कुपिता गतेति कोपेन काऽपि वार्ता नास्ति । त्वमपि असान्त्विता कथं गच्छेयमिति नागताऽसि । अस्मिन्नपि समये तव कोपो नोचित इति हितोपदेशाय अहमेव मैत्र्यादागत इति ।

**गूढकर्तृकव्याख्यानम्**

तदा त्वं मृषैव रमापुरतः पदे पदे रोदनं क्रन्दनं कुरुष्व । अतिकष्टेन गद्गदस्वरेण तां ब्रूहि "अम्ब ! शासनं केनापि कदापि न हृतम् । परन्तु । त्वया दापितम् । त्वदन्तर्यामिणा त्वद्रूपेण येन अक्षरेण शासनं दत्तम् । सः दाता अक्षरः । अद्य वसन्ते धर्मभ्रान्तः । पर्वते सञ्चरन् विषमे पतितः । तदैव । एकं निमित्तम् । भूतले शयनं कृतम् । अद्य तव भर्ता सुष्ठु निश्चेतनः । तस्य दर्शने जीवति वा न वेति सन्देहो जायते । शरीरस्मृतिरेव न । देवीं कदा द्रक्ष्यामि कदा द्रक्ष्यामि इति अति मन्दं वदति । प्रलपति । अथ त्वां प्रति "पतने किमभूत् ?" इति पृच्छति । "कदा द्रक्ष्यामि इति वदति" इति वद । "एतन्मनोव्यथया अन्ननीरनिद्रादिकं त्यक्तवान्" इति वद । ततः भानुमन् ! मम वार्ता का वाऽस्ति इति पृच्छति । तदा त्वं "मातः ! त्वं कुपिता गता खलु" इति वद । मातः, त्वमपि कोपेन असमाहिता । कथं गच्छेयम् ? इति शङ्किता अस्मिन्नपि समये आपदि नागताऽसि । दृष्ट्वा दृष्ट्वा तूष्णीं भावः अपि न्याय्यः । तव कोपो नोचितः । अहं तु श्रीनिवास-अवस्थां द्रष्टुं असहमानः स्वयं मैत्र्यात् आगतः" इति वद । तदा तव वचने विश्वस्य आयाति ।

मूलम्

उपायं तु ततः श्रुत्वा किञ्चिद्धास्यमुखान्वितः ।
बभाषे भक्तिनम्राङ्गो भयभक्त्या समन्वितः ॥ १९२ ॥

सर्वज्ञा सर्वलोकेषु विश्रुता [1]विमलात्मिका ।
जानाति हृद्गतं कृष्ण कथं [2]मामुपबोधसे ॥ १९३ ॥

[3]अरोगस्याथ रोगं हि कथमाख्यामि भूपते ।
स भानोर्वचनं श्रुत्वा भानुमाह मनोगतम् ॥ १९४ ॥

१. कमलालया २. विश्वसेत् विभो ।
३. अरोगस्य च । ४. कथं वक्ष्यामि ते हरे ।

कल्याणकाण्डदीपः

**उपायं तु ततः श्रुत्वेत्यादि । भयभक्त्येति** । अपहसतीति कोपः स्यादिति भयेन ।

गूढकर्तृकव्याख्यानम्

सूर्यः— लोकप्रभो ! किञ्चित् हसितः । कमलापते ! पुनः पुनः जल्पतीति मे मा कुप्य । तव अविदितं किमस्ति ? सा कमलालया सर्वज्ञा सर्वलोकविश्रुता सर्वप्राणिहृद्गतं जानाति । एवं सति तस्याः पुरतः मिथ्यालापं कथं बध्नामि ? किञ्च स्वामिन् ! त्वं अनामयः । चिन्ता-सन्ताप-आधि-व्याधि-सकलदोषवर्जितः । त्वन्नामस्मरणमात्रेण "रोगार्तो मुच्यते रोगात् बद्धो मुच्येत बन्धनात्" । त्वं भवरोगवैद्यः । ईदृशस्य तव अरोगस्य रोग इति कथं कथयेयम् ? यद्यपि तवाज्ञया त्वं रोगीति वदेयम्, अपि तु रमा मदुक्तौ कथं विश्वसेत् ? अतः इदं न्याय्यं वा समञ्जसं वा ?

मूलम्

श्रीभगवानुवाच—

मम मायामोहिता सा भविष्यति न संशयः ॥ १९५ ॥

कल्याणकाण्डदीपः

**न संशय इति** । तव माया मोहिताऽगताऽपि पूर्वमेव कोपः । अधिवेदनं ज्ञात्वाऽपि पुनर्द्विगुणकोपेन परावर्त्य गमने का गतिरिति सूर्य आह । अथ भगवान्— किं वा करोमि ? तद्विचारो भवतां माऽस्तु । यावदुक्तं कुरुतेति

**मूलम्**

**इत्युक्तः प्रणिपत्याथ वासुदेवं रथे स्थितः ।**
**करवीरपुरं गत्वा यथोक्तं तत् तथाऽकरोत् ॥ १९६ ॥**

**कल्याणकाण्डदीपः**

सूर्य आह । अथ भगवान्— इत्युक्त इत्यादि ।

**गूढकर्तृकव्याख्यानम्**

श्रीनिवासः— भानुमन् ! त्वदभिप्रायः ज्ञातः । भो ! मम माया दुरत्यया । मन्मायामोहिता तव वचने विश्वस्य आयास्यत्येव ।

सूर्यः— मोहिता आगत्य सन्दर्भं दृष्ट्वा पुनः द्विगुणकोपेन यदि परावर्तते तर्हि किं कुर्मः ?

श्रीनिवासः— पूर्वं मम मायया मोहिता कोल्हापुरं गता । अद्यापि मन्माययैव मोहिता आयास्यति । संशयं मा कृथाः । प्रयाहि । तदा सूर्यः क्षणात् श्रीनिवासं प्रणम्य श्रीनिवासरथमास्थितः करवीरपुरं ययौ । तत्र रमां दृष्ट्वा श्रीनिवासोक्तं यथावत् आह । यथावदाचरत् ।

**मूलम्**

**करवीरपुराच्छेषाचलं प्रति रमाऽऽगमनम्**

**सा तद्वचनमाकर्ण्य [1]यथा देवस्तथा रमा ।**
**रथमारुह्य [2]वेगेन भानुवाक्यादरेण सा ॥ १९७ ॥**

**सम्प्राप्ता वायुवेगेन [3]रमासार्धं रमापतिम् ।**
**तदागमनवार्तां च श्रुत्वा तस्मिन् क्षणे हरिः ॥ १९८ ॥**

१. यथादेशं तदा । २. खेदेन । ३. रवियुक्ता ।

**जगाम दर्शनापेक्षी [1]आसक्त इव भूपते ।**
**[2]भगवानाकृतिं प्राप्य तदद्भुतमिवा[3]भवत् ॥ १९९ ॥**

१. ह्यशक्त इव सम्मुखम् । २. तादृशीमाकृतिं । ३. करोत् ।

देवानां पूर्वदेवानां मुनीनामूर्ध्वरेतसाम् ।
भुजे भुजङ्गभूषस्य भुजमास्थाप्य भूमिप ॥ २०० ॥

तथेतरं ब्रह्मकण्ठे निधाय निजमात्मभूः ।
एवम्भूतं वासुदेवं ददर्श कमलालया ॥ २०१ ॥

रथादुत्तीर्य वेगेन किञ्चिद्धास्यमुखाम्बुजा ।
चम्पकापुष्पनिचयं विकीर्य पदपङ्कजे ॥ २०२ ॥

समालिङ्ग्यातिभक्त्यैव मुहूर्तद्वयमात्रतः ।
रमालिङ्गनमात्रेण पुष्टाङ्गो विष्टरश्रवाः ॥ २०३ ॥

**कल्याणकाण्डदीपः**

**समालिङ्ग्येति** । अथ रमा अतिभक्त्यैव शम्भुब्रह्माणौ विसर्जयित्वा स्वयमेव श्रीनिवासस्य एकं भुजं स्वस्कन्धे निधाय स्वेनैकेन भुजेन तं पार्श्वे गृहीत्वा आलिङ्ग्य वल्मीकान्तरा आनीयैकपीठोपविष्टौ वर्तिकाद्वयोपारूढदीवाविव मुहूर्तद्वयपर्यन्तं ब्रह्मादिषु पश्यत्सु समाश्लिष्टौ बभूवतुः । **विष्टरश्रवाः** अश्वत्थनारायणः ।

**मूलम्**

कुशलं परिपप्रच्छ सा तस्यापि हरेस्तथा ।
पितरौ सर्वलोकानां रमानारायणावुभौ ।
सम्प्राप्तौ स्वस्थतां राजन् सर्वदेवनमस्कृतौ ॥ २०४ ॥

**कल्याणकाण्डदीपः**

**कुशलमिति** । **सर्वलोकानां पितरौ** पश्यतां सर्वलोकानां **स्वस्थलं** स्वैकान्तरस्थलम् ।

**गूढकर्तृकव्याख्यानम्**

सूर्यवचनमाकर्ण्य रमा तद्वचने विश्वस्य भगवदाज्ञां स्मरन्ती रथमारुह्य सूर्यसहिता वायुवेगेन वेङ्कटाद्रिमाजगाम । ततः रमा आगच्छन्तीति वार्तां पूर्वमेव श्रुत्वा श्रीनिवासः रमादर्शनलालसः इच्छामात्रेण सकलचराचरात्मकजगत्सृष्ट्यादिकर्ता तदा केवलं रोगग्रस्त-अतिदुर्बल इव आकृतिं प्राप्तः

रमाभिमुखं ययौ । स्वस्य वामभुजं हरभुजे दक्षिणभुजं विधिभुजे न्यस्य शनैः शनैरगात् । तदानीन्तन-तादृश-आकृतिः देव-दैत्य-मुनीनां अत्यद्भुता आसीत् । एतादृशाकृतिं श्रीनिवासं रमा दूरतः अपश्यत् । क्षणात् रथादवरुह्य मनसि हसन्ती अत्यन्तभक्त्या श्रीनिवासपादारविन्दे चम्पकपुष्पैः अर्चयित्वा प्रणम्य विधिहरौ विसर्ज्य स्वयमेव श्रीनिवासस्य एकभुजं स्वस्कन्धे निधाय एकेन भुजेन तं पार्श्वे गृहीत्वा । दृढं आलिङ्ग्य बल्मीकान्तरे निनाय । तत्र वर्तिकाद्वयारूढदीपौ इव एकासने उभौ उपविष्टौ । एवं मुहूर्तद्वयान्तं तूष्णीं स्थितौ । तदा रमालिङ्गनमात्रेण श्रीनिवासः हृष्टपुष्टाङ्गः अभूत् । ततः साक्षात् जगज्जननीजनकौ रमाश्रीनिवासौ अन्योन्यं कुशलं पृच्छन्तौ । तदा विधिमुखादिसमस्तदेवाः तौ रमाश्रीनिवासौ ववन्दिरे ।

**मूलम्**

**रमायै श्रीनिवासकथितपद्मावतीपरिणयोदन्तः**

**श्रीरमोवाच—**

**[1]रमा मुह्यति गोविन्द तव माया दुरत्यया ।**
**भानुमामन्त्र्य गोविन्द कर्म चित्रं त्वया कृतम् ।**
**त्वन्मायामोहिताः सर्वे ब्रह्मेशानादयः सुराः ॥ २०५ ॥**

१. मां मोहयति ।

**कल्याणकाण्डदीपः**

अथ श्रीनिवासः— किमेतदाश्चर्यम् ? कोपेन गता स्वयमेव आगता ? रमा— किं ब्रवीमि ? कार्यमतिक्रान्तमित्याह— **रमेत्यादि** । हे गोविन्द ! रमाऽपि मायाऽपि तव मायया मुह्यति । मायामपि मोहयन्ती तव माया **दुरत्यया** सर्वैरप्यत्येतुमशक्या, नैतदाश्चर्यमित्याह । तर्हि किं चित्रं इत्यत आह— **भानुमिति** । भानुमाहूय उपायमुपदिश्य यत्कर्म त्वया कृतं तच्चित्रम् । किं वा भवतु, इदानीमपि किं जितं जातं भवद्भिः पुनरहं करवीरपुरं गच्छामीत्याह ।

**मूलम्**

**वदादेशं वासुदेव ममाद्याह्वानकारणम् ।**
**स रमावचनं श्रुत्वा साध्वीमाह रमापतिः ॥ २०६ ॥**

**कल्याणकाण्डदीपः**

अथ श्रीनिवासः— पुनः गच्छामीत्युक्तं यत्तन्मया शतापराध इत्युक्ता मत्पादोपसङ्ग्रहणकालः प्राप्तः। सा दुराशा तव कुतः ? इत्युक्ते, लक्ष्मीस्तदा सम्भ्रान्ता तदादेशं ज्ञापयेत्याह— **वदेति**।

**गूढकर्तृकव्याख्यानम्**

(तदा श्रीनिवासः— "रमे ! मनोरमे ! किमेतदाश्चर्यम् ? कोपेन गता अद्य स्वयमेव आगता ?

रमा— किं ब्रवीमि ? कार्यं अतिक्रान्तम्। भवतु। जगदीश ! वेदप्रतिपाद्य ! रमाऽपि मायाऽपि तव मायया मुह्यति। मायामपि मोहयन्ती तव माया दुरत्यया। भानुं उपायं उपदिश्य यत्कर्म कृतवान् तत् चित्रम्। समीचीनम्। भवतु। इदानीं किं जितं भवता ? पुनः करवीरं यामि।

श्रीनिवासः— "पुनर्यामीति वदसि। अहं शतापराधीति ते भाति। ततः किम् ? तव पादोप-सङ्ग्रहणपूर्वकयाचनाकालः प्राप्तः। किं कर्तव्यम् ? भवितव्यं भवतु। रमे इतोऽपि तव दुराशा कुतः ?)

रमा सम्भ्रान्ता— "स्वामिन् ! जगज्जन्मादिकारण ! अस्मदादि सकलजगत् तव माया-मोहितम्। इदमस्तु। प्रकृते मदाह्वानकारणं किम् ?"

**मूलम्**

**श्रीनिवास उवाच—**

**त्वया रामावतारेऽथ कथितं स्मर भामिनि।**
**[1]वेदवत्याश्च विभवं सम्प्राप्तं कालनिर्णयम्॥ २०७॥**

**त्वत्सन्निधौ कर्तुकामो विवाहं च कलौ युगे।**
**[2]एवमुक्ते हृषीकेशे साऽस्मरत् पूर्विकां [3]क्रियाम्॥ २०८॥**

१. वेदवत्या विवाहस्य सम्प्राप्तः काल एष वै।
२. वदत्येवं। ३. गिरम्।

**कल्याणकाण्डदीपः**

हे भामिनि ! कोपने त्वया रामावतारे कथितं स्मर इत्याह देवः। रामावतारे उक्तं बह्वस्ति। किमिति स्मर्तव्यमित्यत आह— **वेदवत्या इति**। **कालनिर्णयं** निर्णीतकालम्। वेदवत्या **विभवं** कल्याणं प्राप्तं स्मर। कृदभिहितो भावो द्रव्यवत् प्रकाशते साहचर्यनियम इत्यत्रेव।

**गूढकर्तृकव्याख्यानम्**

श्रीनिवासः— "रमे ! भामिनि ! मा भ्रम । मम रामावतारे त्वया किं कथितं स्मर ।"

रमा— "रामावतारे कथितं बहु अस्ति । किं किं स्मर्तव्यम् ?"

श्रीनिवासः— तथा न । त्वं त्रेतायां किं उक्तवती ? अहमेव त्वां पृष्टवान् खलु । "इयं स्त्री का ? त्वमिव भाति" इति । तदा त्वं "इयं वेदवती । मदर्थं अतिकष्टं अनुभूतवती । मामेव वृता तपः तपन्ति" इति । ततः अहं "कलौ इमां परिणेष्यामि । तावत् इयं विधिना पूजिता सत्ये तिष्ठतु" इति प्रत्युक्तवान् खलु । तेन प्रकारेण अद्य तस्या विवाहकालः प्राप्तः । प्रतिज्ञातं पालयितुकामः । इदं सर्वं सत्यं वा न वा स्मर । एतत्कृते तव अत्राह्वानम् । अद्य इदं सर्वं सत्यं इति कृत्वा भवत्याः अभिमतं चेत् विवाहो भवतु । (नो चेत् जहि । गच्छ । किं तूर्ष्णी असि ? ब्रह्मादयः यूयं सर्वे स्वं स्वं लोकं गच्छत । रमा पुनः करवीरं याति । पश्यत । इतः अहं किं करवाणि ? भवन्तः सर्वे गच्छन्तु । मद्भागे पुनः को वाऽस्ति ? कुत्र गच्छामि ? मद्भक्ता यत्र गायन्ति तत्र गत्वा तिष्ठामि ।)

**मूलम्**

**रमोवाच—**

**तामङ्गीकुरु गोविन्द विवाहे विधिपूर्वकम् ।**
**वचनं सफलं कृष्ण कुरु मे भक्तवत्सल ॥ २०९ ॥**

**कल्याणकाण्डदीपः**

कर्तुकामः अस्मि, नो चेत् गच्छ । हे ब्रह्मादयः ! स्वं स्वं लोकं गच्छत । रमा पुनः स्वपुरं गच्छति । अहमपि भक्तरक्षणार्थं अन्यत्र गच्छामि इति अजिगमिषत् । अथ सम्भ्रान्ता रमा पादौ गृहीत्वा ययाचे— तामिति ।

**मूलम्**

**इत्युक्त्वा श्रीनिवासं सा ननाम च मुदान्विता ।**
**हरिस्तु लोकजननीमानन्दयदुदारधीः ॥ २१० ॥**

**स रमागिरमाकर्ण्य परिपूर्णमनोरथः ।**
**परमानन्दसम्पूर्ण उरगाद्रौ व्यराजत ॥ २११ ॥**

[1]सन्तोषसन्दिग्धसमानगात्रः
सानन्दबाष्पेण समृद्धनेत्रः ।
ब्रह्मेशशक्रार्हकृताङ्घ्रिपत्रः
स्वधामभूतो विकटाख्यगोत्रः ॥ २१२ ॥

१. सन्तोषसंसूचकसर्वगात्रः आनन्दबाष्पेण समृद्धनेत्रः ।
ब्रह्मेशशक्रस्तुतसच्चरित्रः तदा बभौ वेङ्कटशैलमित्रः ॥

*इति श्रीमद्भविष्योत्तरपुराणे श्रीवेङ्कटाचलमाहात्म्ये*
*पद्मावतीपरिणयनिश्चयो नाम दशमोऽध्यायः ॥*

*(गूढकर्तृकव्याख्यानानुसारेण एकादशोऽध्यायः)*

॥ श्रीकृष्णार्पणमस्तु ॥

**कल्याणकाण्डदीपः**

**सन्तोषेति** । **विकटाख्यगोत्रः** वेङ्कटाचलः स्वधामभूतो यस्य सः श्रीनिवासः । पादोपसङ्ग्रहणकाले सन्तोषेण परमान्देन सन्दिग्धं समुपबृंहितं समानं सद्गात्रं यस्य स तथा । "समानाः सत्समैके स्युः" इत्यमरः । **ब्रह्मेशशक्रार्हकृताङ्घ्रिपत्रः** अर्हणमर्हः, कृतोऽर्हो ययोस्ते अर्हकृते कृतार्ह इत्यर्थः । ब्रह्मादिभिः अर्हकृते अङ्घ्रिपत्रे यस्य स तथा सन् बभौ इत्यर्थः ।

*इति श्रीमद्भविष्योत्तरपुराणव्याख्याने कल्याणकाण्डदीपे *श्रीमहालक्ष्मीवर्तिकायाः*
*श्रीनिवासहय्यङ्गवीनावगाहनं नाम दशमोऽध्यायः ॥*

श्रीकृष्णार्पणमस्तु ॥

**गूढकर्तृकव्याख्यानम्**

रमा एवं मर्मस्पृक् वाचं श्रुत्वा सम्भ्रान्ता । स्वयं उक्तं अस्मरत् । भर्तुः पादौ गृहीत्वा ययाचे— "प्राणवल्लभ ! स्वामिन् ! विधिपूर्वकं विवाहे वेदवतीं स्वीकुरुष्व । मम मनोरथं पूरयित्वा आनन्दमूर्ते ! मां आनन्दय ! भवान् भक्तपराधीनः । भक्तान् उद्धर" इति उक्त्वा भक्त्या प्रणनाम ।

* महालक्ष्मीवर्तिकायाः पद्मतूलतन्तुरुपादानं घुसृणचूर्णं भञ्जनं तन्तवः पञ्च जनार्दनादि श्रीनिवासपञ्चमाः पञ्च तन्तुदेवताः इति ।

श्रीनिवासः— तर्हि भवतु । तव सन्तोष एव मम सन्तोषः । इति उदारधीः रमां रमयामास । एवंरीत्या ज्ञानानन्दपरिपूर्णः रमासहितः श्रीनिवासः उरगाद्रौ विरेजे । नित्यावियोगिनी दुःखास्पृष्टा रमा स्वपादौ गृहीत्वा भक्त्या प्रार्थयामास यदा, तदा आनन्द-उपबृंहितदेहोऽभूत् । नेत्रयोः आनन्दबाष्पं असिञ्चत् । तदा रमासहितं श्रीनिवासं विधिमुखामराः नमन्ति स्तुवन्ति स्वाधिष्ठानेन वेङ्कटाद्रिं पापहारकं परमपवित्रं कुर्वन् शेषाचले विरेजे । इत्येवं साक्षाल्लक्ष्मीसमागमं यं अंशं शतानन्दमुनिः जनकराजं प्रति निरूपयामास । तदेव सूतः शौनकादिविप्रान् प्रति निरूपयामास ॥

*॥ इति अत्र श्रीमद्भविष्योत्तरपुराणे वेङ्कटगिरिमाहात्म्ये एकादशाध्यायकथाभिप्रायः ॥*

॥ श्रीकृष्णार्पणमस्तु ॥



॥ श्रीः ॥

## श्रीमद्भविष्योत्तरपुराणान्तर्गतं

# श्रीवेङ्कटेशमाहात्म्यम्

### ॥ अथ एकादशाध्यायकथासङ्क्षेपः ॥

### (गूढकर्तृकव्याख्यानानुसारेण द्वादशाध्यायकथासङ्क्षेपः)

ततः जनकः पृच्छति— "सज्जनानां गतिप्रदः श्रीनिवासः पुरतः किमकरोत् ?" इति ॥ ततः विधिना आदिष्टाः गरुडादयः कटाहभाण्डनिचयं आनीतवन्तः । तेषु सुगन्धसलिलं पूरितम् । सर्वे सुवासिन्यः अरुन्धतीं पुरस्कृत्य दीपयुक्तकलशधारणे उमां नियोजितवत्यः । कृष्णावतारवैभवं गायन्त्यः वैशाखशुक्लसप्तमीदिने चतुर्दिक्षु जलपूर्णकलशान् संस्थाप्य सूत्रेण वेष्टयित्वा तन्मध्ये रत्नपीठे श्रीनिवासं उपवेश्य तस्य हृदयज्ञा रमा यदा श्रीनिवासः वसिष्ठादिमुनिभ्यः अनुज्ञां लब्ध्वा उपनिवेश, सुगन्धतैलपूरितरुक्मपात्रमादाय "**श्रीश ! जगदीश ! श्रीनिवास ! गोविन्द ! मुकुन्द ! अरविन्द-नयन ! दीर्घायुर्भव, विद्यावान् धनवान् बुद्धिमान् पुत्रवान् कीर्तिमान् भव**" इति आशीर्भिः श्रीनिवासस्य तैलाभ्यञ्जनं चकार । हरिद्राचूर्णेन अङ्गानि परिमृज्य तप्त(सप्त)तीर्थपुण्योदकैः अभ्य-षिञ्चत् । सुवासिन्यः कौङ्कुमजलैः आरार्तिकां नीराजयामासुः । रमा वस्त्रेण अङ्गं ममार्ज । ततः श्रीनिवासः वरासने उपविश्य ललाटे ऊर्ध्वपुण्ड्रं धृतवान् ।

तदा विधिमुखाः सुराः, वसिष्ठादिमुनयः, तुम्बुरादिगन्धर्वाः, रम्भादिनर्तक्यः, सूतमागधवन्दिनः सर्वे सम्मिलिताः । तदा दैवज्ञैः मुहूर्तकालः दर्शितः । अनर्घ्यवस्त्राभरणैः भूषितः "पुरोहितं वसिष्ठं पुरतः कर्तव्यं आचर" इत्याह । ततो वसिष्ठः मौक्तिकैः वेदिकां रचयित्वा तत्र वधूवरौ प्रतिष्ठाप्य विप्रानानाय्य सङ्कल्पविधिपूर्वकं पुण्याहवाचनं चकार । ततो विधिः विधिपूर्वकं अष्टवर्गं कृत्वा विप्रेभ्यः ताम्बूलदक्षिणां ददौ । तदा श्रीनिवासस्य प्रियदेवाः धनं वस्त्रं ददुः । ततः पुरोहितः वसिष्ठः श्रीनिवासं "युष्मद् कुलदेवता का ?" इति पप्रच्छ । "मम पाण्डवानां च शमी कुलदेवता" इति श्रीनिवासः प्रत्याह । ततः अगस्त्योक्त्या कुमारतीर्थस्य उत्तरभागे स्थितशम्याः स्कन्धं वसिष्ठः आनिनाय । ततः श्रीनिवासः शमीं प्रदक्षिणीकृत्य नमस्कृत्य "**शमि पा॑ शमय मे शमि शत्रुविनाशिनि । मातर्मे कुरु कल्याणं**

**अविघ्नेन सुरप्रिये**" इति प्रार्थयामास । तां विधिवत् सम्पूज्य शिरसा धृत्वा मङ्गलवाद्यपूर्वकं नारदानुमत्या वराहालये स्थापयितुं इच्छन् मुक्तापूरितसुवर्णकलशे शमीशाखां प्रत्यस्थापयत् ।

ततः "कल्याणोत्सवे उपवासेन नारायणपुरी न गन्तव्यम्" इत्याह विधिः । एतावत् बहुजनभोजनादिसत्कारः बहुलद्रव्यव्ययसाध्यः । अतः कथम् ?" इति रिक्ततां विडम्बयति वासुदेवे तदा शम्भुराह— "तात श्रीनिवास ! विवाहकरणे गृहनिर्माणे बहुलार्थव्ययेनापि कार्यं निर्वर्तयेत् । धनाभावे ऋणं चरेत् । विवाहार्थं सकलसम्भाराः सम्पाद्याः" इति । ततः श्रीनिवासः धनाधिपं कुबेरमानाय्य "विवाहार्थं यावदिष्टं धनं ऋणत्वेन देहि" इति ययाचे । कुबेरः— युगानुसारी त्वम् । अतः पत्रं दत्तं चेत् धनं ददामि" इत्याह । श्रीनिवासः विधेः सूचनया स्वयं पत्रं विलिख्य कुबेरकरे अदात् । कुबेरात् धनं गृहीत्वा पुनः तद्धनं तत्करे दत्वा तस्मै आदिदेश "प्रस्थमूलं तण्डुलं, माषः, आढकं, मुद्गं, गोधूमं, गुड-तैल-मधु-क्षीर-शर्करा-आज्य-दधि-प्रभृतिकं, योग्यमूल्यवस्त्राणि, उत्तरीयाणि, तिल-हिङ्गु-मरीच-जीरक-सर्षप-मेथिकान्, हरिद्राक्तवस्त्राणि, पूगीफल-ताम्बूल-नागवल्ली-कर्पूर-एला-जातिफल-जातिपत्र-लवङ्ग-मृगनाभि-प्रभृतिकं, कन्यार्थं माङ्गल्यसूत्रं, कनिष्ठाङ्गुलिमुद्रिकां, हस्ताङ्गुलीयकं इत्यादिपदार्थान् सिद्धीकुरु ।"

अग्निं आनाय्य "त्वं भक्ष्यान्नशाकादि कुरु । अग्ने ! स्वामितीर्थे अन्नम्, पापविनाशने सूपम्, वियद्गङ्गायां परमान्नम्, देवतीर्थे शाकम्, तुम्बुरुतीर्थे घृतं तापय । कुमारधारिकायां विविधभक्ष्याणि, पाण्डुतीर्थे उत्तमतिन्त्रिणीरसम्, अन्यान्येषु कन्दमूलफलैः व्यञ्जनानि लेह्यपेयानि पच्यन्ताम्" इति । ततः श्रीनिवासाज्ञया शीघ्रं अग्निना पाकः कृतः । ततः कश्यपादिसर्वदेवऋषिविप्राः भोजनाय आगताः । ततो विधिः श्रीनृसिंहाय नैवेद्यं निवेदितवान् । ततः हरिः "**एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः । त्रीन् लोकान् व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः**" इति सङ्कल्प्य श्रीकृष्णार्पणं उक्तवान् । सर्वे भुक्त्वा ताम्बूलदक्षिणां स्वीकृत्य आनन्दिताः । ततः हरिः स्वयं भुक्तवान् । तद्रात्रौ श्रीनिवासः अनिद्रोऽपि निदद्रौ । विधिमुखाः सर्वे सुराः, ऋषयः, तत्र तत्र कन्दरेषु गुहासु शयिताः ॥

ततः परेद्युः वैशाखशुक्लअष्टमी प्रातः श्रीनिवासप्रेरितो विधिः सकलसैन्यसमेतं सकलवाद्यवैभवपूर्वकं देव-ऋषि-आदि सर्वेऽपि नारायणपुरं प्रस्थिताः । विधिं अग्रतः, रुद्रं दक्षिणतः, वायुं वामे, कुमारं पृष्ठतः कृत्वा श्रीनिवासः गरुडमारुह्य प्रस्थितः । भेरिदुन्दुभिप्रभृतिवाद्यानि वादितानि । बहुनार्यः गायन्त्यः नृत्यन्त्यः महाजनसम्मर्दः जातः । सर्वे वेङ्कटगिरेः अवारुरुहुः । चतुरङ्गबलं पद्मतीर्थं गतम् । ततः शुकाश्रमः प्राप्तः । ततः शुकमुनिः हरिं प्रणम्य "देवदेवोत्तम ! मदीयमानं अल्पं फलकन्दमूलं कृपया भुज्यताम्" इति ययाचे । श्रीनिवासः— "वयं बहवः, अतो माऽस्तु ।" शुकः— "**निष्किञ्चनोऽहं**

**गोविन्द निष्किञ्चनजनप्रिय । त्वयि भुक्ते जगद् भुक्तं नात्र कार्या विचारणा ॥"** श्रीनिवासः प्रसन्नः सपुत्रकलत्रः शुककुटीरं प्रविश्य तद्दत्तमौञ्जे उपविष्टः । शुकः शीघ्रं पद्मे स्नात्वा अमृतबीजं मुष्टिभिः विहत्य तत्तण्डुलैः उत्तमं अन्नं बृहतीतिन्त्रिणीरसं च चकार । अन्तर्यामिणं बाह्यं च हरिं अनुसन्दधत् **"सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्"** इति मन्त्रेण पादावनेजनं कृत्वा पूजयित्वा पद्मपत्रे अन्नं रसं निक्षिप्य सर्वसारभोक्ता श्रीनिवासः प्रीयताम्" इति प्रार्थ्य सादरं भोजयामास । तृप्तो हरिः बहिरागत्य फूत्कृतवान् । तेन ऋष्यादयः सर्वे भोजनसन्तृप्ताः शुकं प्रशशंसुः । सर्वे तत्र अष्टमी सौम्यवासरं निन्युः ।

परेद्यवि नवम्यां गुरौ प्रातः सर्वे प्रस्थिताः । इतो राजधान्यां आकाशः नवम्यां गुरौ सायं अष्टवर्गं कृत्वा पुत्रीं पद्मां मङ्गलस्नानं कारयामास । पुत्र-पुरोहित-शक्र-तोण्डमानसहितः स चतुरङ्गबलं मङ्गलवाद्यवैभवपूर्वकं श्रीनिवासं सन्द्रष्टुं आगत्य गजारोपितपद्मां पुरतो निधाय शक्रेण दर्शितं श्रीनिवासं ददर्श । आत्मानं कृतार्थं मेने ।

इतः नारदेन दर्शितं आकाशं श्रीनिवासो ददर्श । क्षणमिव आकाशः श्रीनिवासं द्वारतोरणे आसाद्य वस्त्राभरणादिभिः पूजयामास । ततः पद्माश्रीनिवासौ मिथः अवलोकितवन्तौ । नगरद्वारि दुर्गां नत्वा प्रार्थ्य पुरतो ययतुः । आकाशः मङ्गलवाद्यपूर्वकं पद्माश्रीनिवासौ पुरे चारयन् नीराजयन्तीषु नारीषु राजमानं चतुष्पथं वीथीत्रयं परिक्रम्य जामातरं श्रीनिवासं वासुदेवभवनं प्रावेशयत् । ततः श्रीनिवासादि-अखिल-सुरमुनीनां षड्रसोपेत-दिव्य-मृष्टान्नभोजनं कारितम् । एवं सर्वे तद्रात्रिं सुखं निन्युः ।

परेद्युः वैशाखशुक्लदशमीशुक्रवारे प्रातः श्रीनिवासः मङ्गलस्नानं चकार । वसिष्ठमाह— "अहं, रमा, बकुला, विधिः, पुरोहितः त्वं पञ्च; नृपगृहे आकाशः, धरणी, पद्मा, पुरोहितः, तोण्डमानः एते पञ्च; उपवासपराः" इति ॥ रात्रौ त्रयोदशघटिकात्मकः मुहूर्तकाल आसीत् । तदा सर्वेषां भोजनस्य असाध्यत्वात् मध्याह्ने भोजनं सर्वेषां कारितम् । ततः सायं नृपः पत्नी-पुरोहित-अनुज-बन्धु-समेतः । अलङ्कृत-ऐरावतेन सह जामातृ-आह्वानकारणात् श्रीनिवासालयं आययौ । ततः पुरोहितवसिष्ठाज्ञया राज्ञी धरणी जामातृ-श्रीनिवासं समवलोक्य आत्मानं कृतार्थां मत्वा सुगन्ध-माल्य-वस्त्राभरणादिभिः वरपूजां चकार ।

ततः जामातरं ऐरावतमारोप्य सकल-अलङ्कार-अलङ्कृत-राजभवनं प्रवेशयामास । सर्वे देवमुनि-विप्रादयः आगताः । भवनद्वारि जामातरं तोण्डमानसती कुङ्कुमोदकेन नीराजयामास । ततः जामातरं कल्याणमण्डपे रत्नवेद्यां रत्नसिंहासने उपावेशयत् । ततः सर्वे देवमुनयः विधिं पुरतः कृत्वा स्व-स्व-उचितासने उपविविशुः । ततो राजा धरण्या सह कन्यादानसङ्कल्पं विधिपूर्वकं कृत्वा धरण्या स्नावितेन

हेमकलशपूरित-स्वामिपुष्करिणीतीर्थजलेन पुरोहितोक्तमन्त्रेण **"सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्"** इति उच्चरन् श्रीनिवासपादावनेजनं कृत्वा, विष्णुपादोदकं शिरसा धृत्वा, सकलभवनं मार्जयामास। ततः पद्मां सालङ्कृतां चक्रुः। सुमुहूर्तोऽयं इति दैवज्ञः घण्टिकाघोषं चकार। सुमुहूर्ते पुरोहितादयः मङ्गलाष्टकं ब्रुवाणाः मङ्गलाष्टकं अब्रुवन्॥ (निम्नलिखितकथासारपत्राणां पाठान्तरं अन्ते ७४९ पत्रे प्रदत्तम्।

अथ आकाशः निजभाषितं सत्यं विधातुं कन्यादानकाले श्रीनिवासाय कोटिनिष्कान् ददौ। तद्दक्षिणाधनराशिं दृष्ट्वा, श्रीनिवासः— "राजेन्द्र ! कन्यादानमात्रेण तृप्तोऽहं पुत्रवत् तव विधेयः। ईदृशाय देयं किमस्ति ? तथाऽपि 'मम जन्मनि एकमेव कन्यादानम्। तदपि उत्तमकल्पेनैव भवतु' इति अनुसन्दधत् भवान् वैवाहिककर्मणि निपुणः, दानकर्मतत्परः, ईदृशस्य तव दानं किञ्चिन्निमित्तमात्रपात्रे सति द्रव्यदाने तात्पर्यम्। कन्यादानादिविशेषनिमित्ते तु किमु वक्तव्यम् ? अतः अलङ्कृत्य कन्यादानं इति विधेः रक्षणाय वच्मि। जामात्रे मे देय-रत्नखचितभूषणानि देहि" इत्याह। ततः आकाशः श्रीनिवासाय शतभारमितकिरीटं, तावन्मितकटिकाञ्चीं, केयूरद्वन्द्वं, नूपुरद्वन्द्वं, पादुके द्वे, राममुद्राङ्कित दश अङ्गुलीयकानि, अनर्घ्य सप्त पदकानि, मौक्तिकां मालां, रत्नखचितकङ्कणद्वयं, षष्ठिभारमितभोजनपात्रं, लघुपात्राणि, बृहत्-जलपात्राणि, चतुःषष्टिकचोलान् (पानपात्रं) इत्येवमादीन् दत्वा श्रीनिवासाय कन्यादानं चकार॥

ततः कन्यावरतः पुरोहितौ गोत्रप्रवरोच्चारणं चक्रतुः। कन्यातः गुरुः। वरतः वसिष्ठः। आत्रेयार्चनानसश्यावाश्वत्र्यार्षेयप्रवरान्वित-आत्रेयगोत्रोद्भवां सुवीरशर्मणः प्रपौत्रीं, सुधर्मणः पौत्रीं, आकाशशर्मणः पुत्रीं, पद्मानाम्नीं कन्यां, धर्मप्रसम्पत्त्यर्थं वृणीध्वम्" इति। "वासिष्ठेन्द्रप्रमदाभरद्वसु-त्र्यार्षेयप्रवरान्वित-वासिष्ठगोत्रोद्भवाय ययातिशर्मणः प्रपौत्राय शूरसेनशर्मणः पौत्राय वसुदेवशर्मणः पुत्राय श्रीवेङ्कटनाम्ने वराय वृणीमहे।" एवं कन्यावरतः पुरोहितौ कन्यादानप्रतिग्रहीतृस्थानीयौ कन्यावर-प्रवरं त्रिः उच्चारितवन्तौ। ततः ज्योतिर्विद्भिः सुमुहूर्तोऽयमिति सूचिते अन्तःपटे अपसारिते कन्यावरौ परस्परं गुडजीरकान् अवकिरन्तौ अन्योन्यं मुखं ददृशतुः॥

आकाशः धरण्या सह कन्यादानसङ्कल्पं कृत्वा "वेङ्कटनाम्ने वराय श्रीधररूपाय श्रीरूपिणीं पद्मानाम्नीं कन्यां निरतिशयानन्दब्रह्मलोकावाप्त्यर्थं तुभ्यमहं सम्प्रददे" इत्युक्त्वा वरहस्ते कन्याहस्तं निधाय सुवर्णपुष्पसहितं स्वामिपुष्करिणीतीर्थोदकधारापूर्वकं "कन्यां प्रतिगृह्णातु भवान्" इत्याह। वरः श्रीनिवासः "ॐ स्वस्ति, प्रतिगृह्णामि" इत्याह। आकाशः— **"मम यस्य छलोद्भूता पालिता-काशभाषया। तुभ्यं कृष्ण मया दत्ता पुत्रपौत्रप्रवर्धिनी। धर्मे च अर्थे च कामे च नाति-चरितव्या"** ॥ श्रीनिवासः—**"नातिचरामि।"**

ततः पुरोहितः, वधूवरयोः करयोः परस्परं कङ्कणं बन्धयामास । ततः पुरोहितनिर्देशेन मन्त्रपूतं मुक्ताप्रवालकृष्णमणियोजित-स्वर्णमयमाङ्गल्यसूत्रं वसिष्ठादिविप्राणां अरुन्धतीप्रभृतिसुवासिनीनां आकाशस्य च करस्पर्शपूर्वकं "त्वं सावित्री भव । बहुपुत्रवती भव । सर्वलोकमङ्गलदायिनी भव" इति सुवासिनीषु शुभाशीर्वादगानं गायन्तीषु श्रीनिवासः "**माङ्गल्यं तन्तुनाऽनेन जगज्जीवनहेतुना । कण्ठे बध्नामि सुभगे चिरं जीव मया सह**" एवं वदन् पद्माकण्ठे बबन्ध ॥

ततः वसिष्ठः होममण्डपे बृहस्पतिप्रभृतिभिः अनुमोदितः पद्माञ्जल्यर्पितलाजैः पत्नीत्वसिद्धये श्रीनिवासेन लाजाहोमं कारयामास । वेदवेदाङ्गतत्त्वज्ञाः विप्राः वेदमन्त्रैः आशिषः अभिनन्दन्तः श्रीनिवासशिरसि रत्नाक्षतान् चिक्षिपुः । ततः आकाशः विप्रेभ्यः अनर्घ्यवस्त्राणि ताम्बूलदक्षिणाः दापयामास । सभां पूजयामास । विधिमुखदेवाः श्रीनिवासाय अनर्घ्यवस्त्राभरणानि पारितोषकानि ददुः । अरुन्धतीप्रभृतिसुवासिन्यः श्रीनिवासं नीराजयामासुः । रात्रौ पञ्चदशघटिकातः पूर्वं भोजनं प्रवृत्तम् । वधूवरौ एकासने भोजनार्थं प्रतिष्ठापितौ । श्रीनिवासः पद्मया सह "**अन्नाभिमानी चन्द्रस्तु केशवस्तत्र देवता**" इति चन्द्रान्तर्गत-केशवाधिष्ठित-अमृतान्नं अक्षारलवणं भुक्तवान् । श्रीनिवास-पुरतः वसिष्ठगुरुः आकाशः दक्षिणतः रमाधरणीबकुलाः तत्पङ्क्तौ अष्टवर्गसुवासिन्यः सरस्वतीपार्वती-मुखाः पुरतः वधूवरपक्षीयाः तोण्डिमान-इन्द्रादयः भुक्तवन्तः । एवं वैशाखशुद्धदशमीरात्रिः गता ॥

ततः अतिरिक्तदशमी उषःकाले सुवासिन्यः श्रीनिवासं मङ्गलस्नानं कारयामासुः । ब्रह्मादि-मानुषान्तानां अन्योन्यं परिरम्भण-गन्ध-माल्य-ताम्बूल-फल-लड्डुकादिभिः उपचारः कृतः । आकाशः देव-मुनि-नरादिसकलानां भक्ष्यभोज्यादिमृष्टान्नैः भोजनं कारयामास । शाल्योदनराशयः पर्वतोपमाः । पानक-रसायन-इक्षुरस-घृत-क्षीर-तक्र-सूप-पायसादयः ह्रदोपमाः । गण्डूषपाणिपादप्रक्षालनाय शुद्धजलकुल्यानि निर्मितानि । बहिः सारमेय-राक्षसगणाः उच्छिष्टान्नभक्षणेन तृप्ताः । एवं चत्वारि दिनानि महोत्सवसम्भ्रमः आसीत् ।

पञ्चमे दिने नाकबलिः प्रववृते । दीपज्वालाविराजितचतुःकलशान् संस्थाप्य मङ्गलकररत्नसिंहासने वधूवरौ प्रतिष्ठाप्य आकाशः वरं श्रीनिवासं पूजयामास । बकुलमालिका सम्पूजिता । ततो राजा पद्मां दुःखेन कष्टेन श्रीनिवासाय अर्पयामास ।

धरणी "जगदीश ! श्रीनिवास ! नवमासधृतां इमां पुत्रीं लालितवती पालितवती इमां इदानीं तवाधीनां कृतवती" इति वदन्ती दुःखेन अर्पयामास । रुदन्तीं दृष्ट्वा आकाशः "हा पुत्रि ! मन्दभाग्योऽहम् । इतस्तव वियोगेन मम जीवितं स्थिरं न भवेत् । त्वां विना तवानुजः वसुदानः क्षणमपि भवितुं न सहते ।" इति रुदन्तं दृष्ट्वा तोण्डिमानः दुःखितः । "पद्मे ! तव वियोगेन वयं सर्वे निर्भाग्या

जाताः । अस्मत् प्राणाः अस्थिराः" इति । ततः अनुजः वसुदानः दुःख्यन् (दुःखी सन्) "भगिनि पद्मे ! धनार्जकः पुरुषः मातरं बालकं यथा, तथा अस्मान् त्यक्त्वा कुत्र गच्छसि" इति रुरोद । एवं तत्रत्यसुरमुनिसकलानां दुःखमासीत् ॥

ततः सतां सद्गतिदायकः श्रीनिवासः रुदन्तं नृपं दृष्ट्वा स्वभगिनीं पार्थपत्नीं सुभद्रां स्मृत्वा रोदनं कर्तुं आरेभे । इदं लोकविडम्बनं लोकस्य अत्यद्भुतमासीत् ।

एवं विडम्बयन् श्रीनिवासः पद्मया सह ऐरावतमारुह्य मङ्गलवाद्यवैभवपूर्वकं विधिमुखैः सह ग्रामं प्रदक्षिणीकृत्य स्वमन्दिरं प्रविवेश ॥ ततः वेङ्कटाचलं गन्तुमैच्छत् पद्माश्रीनिवासौ गरुडमारूढौ । प्रयाणात् पूर्वं श्वश्रूश्वशुरौ दृष्ट्वा प्रणम्य "प्रयाणाय अनुज्ञां देहि" इति ययाचे ।

आकाशः— "वेदप्रतिपाद्य श्रीनिवास ! दीर्घायुर्भव । सर्वलोकपालको भव" इति आशीश्चक्रे ।

धरणी— "श्रीनिवास ! नूतनवधूसहितः सत् इतोऽपि मासमेकं अत्र स्थित्वा गच्छ ।

श्रीनिवासः— "महाराज ! इदं विज्ञापनम् । कार्यस्य महती त्वरा । प्रयातुं अनुज्ञां देहि ।"

एवं अनुमतः विधिरुद्रादिसकलसुरयुतः प्रतस्थे । तदा पौराः प्राकार-गोपुरारूढाः पद्माश्रीनिवासौ पश्यन्तः वदन्ति— पद्माक्षी पद्मा एव धन्या, पुण्यवती । पतिं अनुसृत्य कथं धैर्येण गच्छति, पश्यत पश्यत । कालवैपरीत्यम् ॥

प्रयाणकाले आकाशः जामात्रे पारिबर्हं किं किं ददौ ? शालितण्डुलशतखारीः वृषभैः, मुद्गत्रिंशत् खारीः महागुडभारम्, तिन्त्रिणीभारम्, पयो घटसहस्रम्, दधिभाण्डशतम्, पञ्चशतघृतपूर्णचर्मपात्रं, सर्षप-मेथिका-हिङ्गु-लवणानि, तैलपूर्णपात्रं, शर्करापूर्णद्विशतघटान्, उर्वारुक-चूत-राजरम्भाफल-कूष्माण्ड-कन्दमूल-फल-मरीचि-आमलकानि, द्विशतमधुपूर्णभाण्डानि, कदलीपत्रं, इन्धनं, अश्व-गज-धेनु-सहस्रम्, आविकशतम्, दासीदासान्, विविधवस्त्र-रत्नपयङ्क-उपबर्हयुत-शय्या इत्यादि स्वीकृत्य श्रीनिवासमुपागम्य ददौ ।

श्वशुरं दृष्ट्वा श्रीनिवासः प्रत्युत्थाय प्रणम्य "महाराज ! बहुदूरमागतः । अनघ ! तव बालकस्य मे किं दातव्यम् ? कन्यां दत्वा बहुपुण्यं प्राप्तः । मम असदृशसन्तोषः । किं ते मनोगतम् ? वद शीघ्रम् ।"

आकाशः— "केशव ! तव परमानुग्रहेण अस्माकं सर्वं सम्पूर्णं सर्वं मङ्गलम् । जगन्नाथ ! नान्यत् किमपि याचे । अपि तु, तव पादारविन्दयोः अचलां भक्तिं देहि ।

श्रीनिवासः तदा आकाशाय सायुज्यं ददौ । अनुजग्राह । शालकवसुदानाय देहगतवस्त्रं ददौ । ततः जामात्रा आज्ञप्तः पुत्रीमुपागम्य "पद्मे ! नारायणपुरं गच्छामि । त्वं श्रीनिवासेन सह विहरन्ती तव सुचरितैः पतिं प्रीणय । पत्यौ तुष्टे शयनं कुरु" इत्यादिवाक्यैः पद्मं हितं उपदिश्य तद्वियोगेन दुःख्यन् आकाशो नगरं ययौ ॥

श्रीनिवासः पद्मासहितः सकलसुरयुक्तः सुवर्णमुखरीं प्राप्य तद्देशे वासं चकार ॥ षण्मासावधि गिरिं नारोहेत् इति दीक्षायुतः अगस्त्याश्रमं प्राप्य तत्र वासं विदधे । ततः देवानां मुनीनां यथोचितं वस्त्राणि दत्वा स्वस्वधामानि प्राहिणोत् । ततः पत्यनुमता रमा कोल्लापुरं गता । विधिभवेन्द्रादि सकलाः श्रीनिवासकल्याणमहोत्सवानन्दं समनुभूय राजेन्द्र-पूज्य-महानुभाव-आकाशं स्तुवन्तः स्वधाम ययुः । मुनयः अरण्यं जग्मुः । सकलेषु गतेषु श्रीनिवासः अगस्त्याश्रमं प्राप्य अव्याकृतषड्गुणैश्वर्यसम्पन्नः तदाश्रमे असदृशभोगान् भुञ्जानः वसति स्म ॥

एवं निरूप्य शतानन्दः जनकं प्रति "जनकराज ! श्रीश्रीनिवासविवाहाध्यायमाहात्म्यं ये शृण्वन्ति तेषां भाग्योदयं वक्ष्ये, विवरेण शृणु । कोटिकन्याप्रदानेन आसमुद्रभूमिदानेन यावत्फलं तावत्फलं एतद्विवाहाध्यायमाहात्म्यसादरश्रवणात् लभ्यते । ये जनाः श्रीनिवासकल्याणोत्सवं कारयन्ति, राजन् ! श्रीवेङ्कटेशानुग्रहेण तेषां उत्सवो भवत्येव । हे जनकनृप ! एवं श्रीनिवासचरित्रं ते कथितवान् । एतत् श्रीनिवासविवाहचरित्रं शृण्वतां शुभं स्यात् । शृण्वतां श्रावयतां अपि सर्वाभीष्टानि सिद्ध्यन्ति । सर्वेषां मङ्गलप्रदम् । इत्येवमादि अंशान् श्रीश्रीनिवासविवाहप्रशंसनविषयं यं शतानन्दो जनकं प्रति निरूपयामास तमेवांशं सूतः शौनकादिविप्रान् प्रति निरूपयामास ॥

*इति श्रीमद्भविष्योत्तरपुराणे श्रीवेङ्कटेशमाहात्म्ये श्रीनिवासविवाहप्रशंसनं नाम*
*गूढकर्तृकव्याख्यानानुसारेण द्वादशाध्यायाभिप्रायः समाप्तः ॥*

॥ श्रीकृष्णार्पणमस्तु ॥



॥ श्रीः ॥

## श्रीमद्भविष्योत्तरपुराणान्तर्गतं

# श्रीवेङ्कटेशमाहात्म्यम्

## अथ एकादशोऽध्यायः

*(गूढकर्तृकव्याख्यानानुसारेण द्वादशोऽध्यायः)*

**पद्मावतीपरिणयः**

**मूलम्**

**भगवतः लक्ष्म्यादिकारितपरिणायार्हमङ्गलाभिषेकक्रमः**

जनक उवाच—

तत: किमकरोत् कृष्णः श्रीनिवासः सतां गतिः ।
तन्ममाचक्ष्व भगवन् विस्तरेण महामुने ॥ १ ॥

**कल्याणकाण्डदीपः**

भद्रां कौतुकवेदिमागतवतोरन्योन्यमासेदुषोः
क्ष्माभृद्वीर्ययदीश्वरप्रभृतिभिः देवैः शिवेन्द्रादिभिः ।
व्याप्तां पार्श्वयुगे पुरोऽम्बुजभुवा पश्चाद्धिरण्यम्बया
पद्मावेङ्कटयोरपाङ्गसरणिर्वैवाहिकी पातु वः ॥

इन्दिरालिङ्गितानन्दसान्द्रसुन्दरविग्रहम् ।
नन्दनन्दनसन्तोषसन्दिग्धाक्षं भजेऽनिशम् ॥

**ततः किमकरोत् इति** । एवं दीपिकापात्रस्नेहदशात्मना दशलक्षणीं व्याख्याय एकादशलक्षणं आलोकात्मना व्याक्रियते ।

मूलम्

शतानन्द उवाच—

श्रीलक्ष्मीसहितः श्रीमान् श्रीनिवासः पितामहम्।
अब्रवीत् प्रीतमनसा सप्रयोजनयत्नवान् ॥ २ ॥

कल्याणकाण्डदीपः

**सप्रयोजनयत्नवान्** । प्राकृतजनविमोहनातिरिक्तप्रकृताष्टमङ्गळाद्यात्मकप्रयोजनसहितयत्नवान् इत्यर्थः ।

मूलम्

श्रीनिवास उवाच—

कर्माणि पुत्र कार्याणि कुरु शीघ्रमतन्द्रितः।
स तद्वचनमाकर्ण्य ससन्तोषः पितामहः ॥ ३ ॥

कटाहभाण्डनिचयानानेतुं प्रेषयच्चरान्।
गरुडप्रमुखान् वीरान् नारायणपरायणान् ॥ ४ ॥

कल्याणकाण्डदीपः

**कार्याणीति** । विवाहपूर्वाङ्गतया कर्तव्यानि कर्माणि मङ्गळमज्जनादीनि कुरु कारय । **कटाहभाण्डनिचयान्** कटाहमणिककुम्भ्यादिपात्रनिचयान् । "सर्वमावपनं भाण्डम्" इत्यमरः । **चरान्** चारान् । "अपसर्पश्चरस्पर्श" इत्यमरः ।

मूलम्

ते तस्य वचनं श्रुत्वा क्षणेन गरुडादयः।
[1]कटाहानुपगृह्याथ जग्मुस्तीर्थान्यनेकधा।
पूरयन् निर्मलं तोयं ततापं स जलाधिपः ॥ ५ ॥

१. कटाहादीन् गृहीत्वाऽथ समाजग्मुरनेकधा।
अपूरयत् ततस्ते, वरुणः सलिलाधिपः ॥

**कल्याणकाण्डदीपः**

'कटाहान्' इत्यादि तताप स जलाधिपः इत्यन्तस्यार्थः— कोल्लापुरादिस्थानान्तरस्थितान् कटाहादीनुपगृह्य, अनेकधा तीर्थानि स्वामिपुष्करिण्यादीनि आजग्मुः। तत्तीर्थतटाके अधिश्रयण्यादिषु कटाहादीन् यथास्थानं स्थापितवन्तः। ततः तानि तीर्थानि तत्तदभिमानिनो देवाः स्वस्वाभिमन्यमानं निर्मलं तोयं वरुणाज्ञया **पूरयन्** अपूरयन्। तन्निर्मलतोयं **स जलाधिपः** अग्निः **तताप** सन्तप्तमकरोत् इति। "मङ्गळमज्जनाय स्थापयामासुः" इति शेषः।

**मूलम्**

## सुगन्धतैलनिचयं दिव्यतीर्थोद्भवं शुभम् ॥ ६॥

**कल्याणकाण्डदीपः**

**दिव्यतीर्थोद्भवं** देवानामुपायोद्भवम्। **सुगन्धतैलनिचयं** कर्पूरमल्लिकाचम्पकादिसुगन्धवासिततैलकुम्भीसमूहम्। मङ्गलमज्जनाय स्थापयामासुरिति शेषः। "तीर्थं शास्त्राध्वरं क्षेत्रोपायोपाध्यायमन्त्रिषु" इत्यमरः।

**गूढकर्तृकव्याख्यानम्**

जनकः शतानन्दं पृच्छति— "महामुने सज्जनानां गतिप्रदः श्रीनिवासः रमासमागमानन्तरं पुरतः किं कार्यं चकार ?" शतानन्दः वक्ति— "राजन् शृणु। अव्याहतषड्गुणैश्वर्यसम्पन्नः श्रीनिवासः रमासहितः सन्तुष्टमनाः प्रयोजनकरकार्ये प्रयतमानः आसीत्। तथोक्ते प्रकृतकर्तव्य-अष्टमङ्गलाद्यात्मक प्रयोजने तात्पर्यवान् अभूत्।

तदर्थं पुत्रं विधिं आदिशति— "विधे! विवाहस्य पूर्वाङ्गत्वेन कर्तव्य-मङ्गलस्नानादिकं कर्म शीघ्रं कारय" इति। श्रीनिवासोक्तिं श्रुत्वा विधिः सन्तोषेण कटाह-भाण्ड (मणिककुम्भी) इत्यादि पात्राणि आनेतुं ये ये कार्यदक्षाः आरब्धान्तगामिनः नारायणे भक्ताः तादृशगरुडादीन् प्रेषयामास। ब्रह्माज्ञया गरुडादयः क्षणात् कोल्लापुरादीनि स्थलान्तराणि गत्वा तत्रस्थितकटाहादिविविध-उपागृह्य स्वामिपुष्करिणीप्रभृतितीर्थानि प्रति आजग्मुः। ततः तत्तत्तीर्थतटाके अधिश्रयण्यादिषु कटाहादि पात्राणि यथास्थानं स्थापितवन्तः। तत्तत्तीर्थाभिमानिदेवाः स्व-स्व-अभिमन्यमानं निर्मलं तोयं वरुणाज्ञया पात्रेषु अपूरयन्। ततः तानि तोयानि वरुणसहितः अग्निः अतापयत्। ततः देवानां उपायात् उत्पन्नं कर्पूर-मल्लिका-चम्पका-जाति-प्रभृति-सुवासिततैलं कुम्भीषु पूरयित्वा मङ्गलमज्जनाय स्थापयामासुः।

**मूलम्**

**तदा सर्वाः सुवासिन्यो वस्त्रालङ्कारमण्डिताः ।**
**अरुन्धतीं पुरस्कृत्य कृतमङ्गलकौतुकाः ॥ ७ ॥**

**कल्याणकाण्डदीपः**

**तदेति** । **सर्वाः** अमरसिद्धवैखानसगन्धर्वऋष्यादिसम्बन्धिन्यः सुवासिन्यः पुरन्ध्र्यः । **अरुन्धतीं पुरस्कृत्य** कृतहरिद्रातैलाभ्यङ्गादिमङ्गळमज्जनाः सत्यः, **वस्त्रालङ्कारमण्डिताः** भूत्वा **कृतमङ्गलकौतुकाः** कृतानि मङ्गळस्य प्रकृतकल्याणमङ्गलस्य कौतुकानि अङ्गभूतानि अष्टौ मङ्गळानि दर्पणपूर्णकलशकन्यापुष्पाक्षतदीपमङ्गळध्वजलाजोत्तराणि याभिः ताः तथा । 'अभूवन्' इति शेषः । तथा कण्डनदळनयवारकमण्डपमृद्वेदिकवर्णककुङ्कुमहरिद्राताम्बूलादीनि मङ्गळानि च चक्रुरित्यर्थः ।

**मूलम्**

**सदीपकलशे राजन् पार्वतीमुपधारणे ।**
**[1]चक्रुस्ताः सम्मताः सर्वाः ससावित्रीपुरस्सराः ॥ ८ ॥**

१. चक्रुः समस्ता माङ्गल्यान् ससावित्रीपुरोगमाः ।

**कल्याणकाण्डदीपः**

अत्र बहुमानकार्ये दीपधारणे पूर्णकलशधारणे कन्यापूर्वकपूजने च कन्याः काः चक्रुः ? इत्यत आह— 'सदीपकलश' इत्यादिना 'पुरःसरा' इत्यन्तेन । अत्रेदं बोध्यम् । नियता वरपरीक्षायाः कन्या न सन्ति । तथा च पूर्वोक्तदीपधारणादिबहुमानकार्ये मदीयाः कन्याः किं न स्युः ? इति पूर्वं विप्रतिपन्ना यास्ताः सर्वा अङ्गनाः ससावित्रीपुरस्सराः पुनः युक्तायुक्त-विचारेण **सम्मताः** ऐकमत्यं प्राप्ताः सत्यः । **सदीपकलशे** दीपौ च कलशश्च दीपकलशाः, तैः सहिते, तत्कर्मके **उपधारणे** अधिकपदार्थधारणे **पार्वतीं** कन्याकुमारीं त्रिकन्यारूपां चक्रुः इत्यर्थः । **पार्वती** कन्याकुमारी । दुर्गायाः कृष्णाभगिनीत्वात् । सुन्दरनाथपत्न्या मीनाक्ष्याः पार्वत्या अलिगिरीशश्रीनिवासभगिनीत्वाद्वा तस्या एव कलशोपधारणे विनियोगो युक्तः । तथा च कारिका—

"भगिनी वरवध्वोर्या कन्या कलशधारणे ।
सा कन्या [illegible]गस्यापि धारणे सर्वसम्मता ॥" इति ।

मूलम्

**गायन्त्यः शुभगानानि दशाकृतिकृतानि च ।**
**कृष्णावतारविभवं गायन्त्यश्चामराङ्गनाः ।**
**सिद्धाङ्गनाश्च राजेन्द्र तथा वैखानसाङ्गनाः ॥ ९ ॥**

ततः किमभूत् ? इत्यत आह— 'गायन्त' इत्यादिना 'अङ्गनाः' इत्यन्तेन । **दशाकृतिकृतानि** । दशाकृतिभिः दशावतारैः कृतानि कर्माणि येषां तानि शुभगानानि **गायन्त्यः** विशेषतः कृष्णावतारविभवं च गायन्त्यः । 'आसन्' इति शेषः ।

गूढकर्तृकव्याख्यानम्

ततः अमर-सिद्ध-वैश्वानर-गन्धर्व-ऋष्यादिसम्बन्धिन्यः पुरन्ध्र्यः सुवासिन्यः अरुन्धतीं पुरस्कृत्य हरिद्रा-तैलाभ्यङ्गादि-मङ्गलमज्जनं कृतवत्यः वस्त्राभरणैः अलङ्कृताः प्रकृतक्रियमाणविवाहाङ्गभूत-अष्टमङ्गलवस्तूनि सिद्धानि चक्रुः । अष्टमङ्गलानि कानि ? दर्पणः, पूर्णकलशः, कलशवती, पुष्पाक्षता, दीपः, मङ्गलध्वजः, लाजाः । (तथा कण्डन-दलन-यवारक-मडप-मृद्वेदिक-वर्णक-कुङ्कुम-हरिद्रा-ताम्बूलादीनि च मङ्गलानि) सिद्धानि चक्रुः । ततः दीप-दर्पण-पूर्णकलशधारणे कन्यापूर्वकपूजने च बहुमानकार्ये कन्याः काः कलशवतीः चक्रुः । तदा विचारः प्राप्तः । वरपक्षीयाः कलशवत्याः नियताः का अपि न सन्ति । सदीपकलशधारणे मदीयाः किं न स्युः ? मदीयाः किं न स्युः ? इति पूर्वं सर्वाङ्गनाः किञ्चित् विप्रतिपन्नाः भूत्वा पुनः विचारेण ऐकमत्या दीपसहितकलशधारणे त्रिकन्यारूपां पार्वतीं कलशवतीं चक्रुः । दुर्गा मीनाक्षी पार्वतीति त्रिरूपम् । दुर्गा कृष्णभगिनी । मीनाक्षी अलिगिरीशभगिनी । अत एव दर्पणकलशोपधारणे पार्वतीं कलशवतीं चक्रुः । तदुक्तम्— "भगिनी वरवध्वोः या कन्या कलशधारणे । सा कन्या दर्पणस्यापि धारणे सर्वसम्मता ।" ततः सुशारीरयुक्तसुवासिन्यः परमात्मनः मत्स्यकूर्मवराहादिदशावतारचरित्रवर्णनात्मकगानानि गायन्त्यः । तत्रापि कृष्णावतारवैभवं विशेषतः चामरधारिण्यः सिद्धवैखानसाङ्गनाश्च गायन्त्यः ।

मूलम्

**एवं प्रवर्तिते पुण्ये विवाहे वेङ्कटेशितुः ।**
**स्नुषाश्च वासुदेवस्य हसन्त्यश्चारुलोचनाः ।**
**श्वसारं पुरतः कृत्वा मातरं बकुलां नृप ॥ १० ॥**

**मूलम्**

**तदा सर्वाः सुवासिन्यो वस्त्रालङ्कारमण्डिताः ।**
**अरुन्धतीं पुरस्कृत्य कृतमङ्गलकौतुकाः ॥ ७ ॥**

**कल्याणकाण्डदीपः**

**तदेति** । **सर्वाः** अमरसिद्धवैखानसगन्धर्वऋष्यादिसम्बन्धिन्यः सुवासिन्यः पुरन्ध्र्यः । **अरुन्धतीं पुरस्कृत्य** कृतहरिद्रातैलाभ्यङ्गादिमङ्गळमज्जनाः सत्यः, **वस्त्रालङ्कारमण्डिताः** भूत्वा **कृतमङ्गल-कौतुकाः** कृतानि मङ्गळस्य प्रकृतकल्याणमङ्गलस्य कौतुकानि अङ्गभूतानि अष्टौ मङ्गळानि दर्पण-पूर्णकलशकन्यापुष्पाक्षतदीपमङ्गळध्वजलाजोत्तराणि याभिः ताः तथा । 'अभूवन्' इति शेषः । तथा कण्डनदळनयवारकमण्डपमृद्वेदिकवर्णककुङ्कुमहरिद्राताम्बूलादीनि मङ्गळानि च चक्रुरित्यर्थः ।

**मूलम्**

**सदीपकलशे राजन् पार्वतीमुपधारणे ।**
**[1]चक्रुस्ताः सम्मताः सर्वाः ससावित्रीपुरस्सराः ॥ ८ ॥**

१. चक्रुः समस्ता माङ्गल्यान् ससावित्रीपुरोगमाः ।

**कल्याणकाण्डदीपः**

अत्र बहुमानकार्ये दीपधारणे पूर्णकलशधारणे कन्यापूर्वकपूजने च कन्याः काः चक्रुः ? इत्यत आह— 'सदीपकलश' इत्यादिना 'पुरःसरा' इत्यन्तेन । अत्रेदं बोध्यम् । नियता वरपरीक्षायाः कन्या न सन्ति । तथा च पूर्वोक्तदीपधारणादिबहुमानकार्ये मदीयाः कन्याः किं न स्युः ? इति पूर्वं विप्रति-पन्ना यास्ताः सर्वा अङ्गनाः ससावित्रीपुरस्सराः पुनः युक्तायुक्त-विचारेण **सम्मताः** ऐकमत्यं प्राप्ताः सत्यः । **सदीपकलशे** दीपौ च कलशश्च दीपकलशाः, तैः सहिते, तत्कर्मके **उपधारणे** अधिक-पदार्थधारणे **पार्वतीं** कन्याकुमारीं त्रिकन्यारूपां चक्रुः इत्यर्थः । **पार्वती** कन्याकुमारी । दुर्गायाः कृष्णाभगिनीत्वात् । सुन्दरनाथपत्न्या मीनाक्ष्याः पार्वत्या अलिगिरीशश्रीनिवासभगिनीत्वाद्वा तस्या एव कलशोपधारणे विनियोगो युक्तः । तथा च कारिका—

"भगिनी वरवध्वोर्या कन्या कलशधारणे ।
सा कन्या [illegible]गस्यापि धारणे सर्वसम्मता ॥" इति ।

**मूलम्**

**गायन्त्यः शुभगानानि दशाकृतिकृतानि च ।**
**कृष्णावतारविभवं गायन्त्यश्चामराङ्गनाः ।**
**सिद्धाङ्गनाश्च राजेन्द्र तथा वैखानसाङ्गनाः ॥ ९ ॥**

ततः किमभूत् ? इत्यत आह— 'गायन्त' इत्यादिना 'अङ्गनाः' इत्यन्तेन । **दशाकृतिकृतानि** । दशाकृतिभिः दशावतारैः कृतानि कर्माणि येषां तानि शुभगानानि **गायन्त्यः** विशेषतः कृष्णावतारविभवं च गायन्त्यः । 'आसन्' इति शेषः ।

**गूढकर्तृकव्याख्यानम्**

ततः अमर-सिद्ध-वैश्वानर-गन्धर्व-ऋष्यादिसम्बन्धिन्यः पुरन्ध्र्यः सुवासिन्यः अरुन्धतीं पुरस्कृत्य हरिद्रा-तैलाभ्यङ्गादि-मङ्गलमज्जनं कृतवत्यः वस्त्राभरणैः अलङ्कृताः प्रकृतक्रियमाणविवाहाङ्गभूत-अष्टमङ्गलवस्तूनि सिद्धानि चक्रुः । अष्टमङ्गलानि कानि ? दर्पणः, पूर्णकलशः, कलशवती, पुष्पाक्षता, दीपः, मङ्गलध्वजः, लाजाः । (तथा कण्डन-दलन-यवारक-मडप-मृद्वेदिक-वर्णक-कुङ्कुम-हरिद्रा-ताम्बूलादीनि च मङ्गलानि) सिद्धानि चक्रुः । ततः दीप-दर्पण-पूर्णकलशधारणे कन्यापूर्वकपूजने च बहुमानकार्ये कन्याः काः कलशवतीः चक्रुः । तदा विचारः प्राप्तः । वरपक्षीयाः कलशवत्याः नियताः का अपि न सन्ति । सदीपकलशधारणे मदीयाः किं न स्युः ? मदीयाः किं न स्युः ? इति पूर्वं सर्वाङ्गनाः किञ्चित् विप्रतिपन्नाः भूत्वा पुनः विचारेण ऐकमत्या दीपसहितकलशधारणे त्रिकन्यारूपां पार्वतीं कलशवतीं चक्रुः । दुर्गा मीनाक्षी पार्वतीति त्रिरूपम् । दुर्गा कृष्णभगिनी । मीनाक्षी अलिगिरीशभगिनी । अत एव दर्पणकलशोपधारणे पार्वतीं कलशवतीं चक्रुः । तदुक्तम्— "भगिनी वरवध्वोः या कन्या कलशधारणे । सा कन्या दर्पणस्यापि धारणे सर्वसम्मता ।" ततः सुशारीरयुक्तसुवासिन्यः परमात्मनः मत्स्यकूर्मवराहादिदशावतारचरित्रवर्णनात्मकगानानि गायन्त्यः । तत्रापि कृष्णावतारवैभवं विशेषतः चामरधारिण्यः सिद्धवैखानसाङ्गनाश्च गायन्त्यः ।

**मूलम्**

**एवं प्रवर्तिते पुण्ये विवाहे वेङ्कटेशितुः ।**
**स्नुषाश्च वासुदेवस्य हसन्त्यश्चारुलोचनाः ।**
**श्वसारं पुरतः कृत्वा मातरं बकुलां नृप ॥ १० ॥**

**कल्याणकाण्डदीपः**

ततः किमभूत् ? इत्यत आह— 'एवम्' इत्यादिना 'नृप' इत्यन्तेन । **एवं** उक्तप्रकारेण **वेङ्कटेशितुः** रमावेश्याविटस्वामिनः विवाहे प्रवर्तिते सति तैलशास्त्रादिकर्तुं श्रीनिवासाह्वानसमये किञ्चिद्विलम्बस्य कारणमभूदिति शेषः । तत्किम् ? इत्यत आह **स्नुषाश्चेत्यादिना** । अतिवृद्धस्य पत्न्यादिसमृद्धस्यापि षोड्शवर्षस्येव एवं विवाहलौल्यं ईदृशस्य श्वशुरस्य विवाहे मादृशानां स्नुषाणां प्रचारश्चेत्येतदाश्चर्यमिति लज्जया मातरं बकुलां श्वसारं रमां च पुरतो निधाय तत्पृष्ठतः चारुलोचनाः विकसितनेत्राः आस्यं वस्त्राञ्चलेनाच्छाद्य हसन्त्यः तूष्णीं स्थिता आसन् ।

**मूलम्**

**एवं महोत्सवस्तत्र समभूत् सप्तमीदिने ॥ ११ ॥**

**कल्याणकाण्डदीपः**

**एवं महोत्सवस्तत्र समभूदित्यादि** । **समभूत्** आभिमुख्येन अवर्तत । उपक्रान्तोऽभूत् इत्यर्थः । 'संयाति' इत्यत्रेव 'सम्' इत्युपसर्ग आभिमुख्ये । अभिमुखवाचि समित्युपसर्गवृत्तिः ।

**गूढकर्तृकव्याख्यानम्**

एवं रमावेश्या विटस्वामिनः वेङ्कटेशस्य विवाहे तैलशास्त्रादिकं भवितव्यम् । वरः आगन्तव्य इत्याहुः । तदा वराह्वाने केचित् गताः । श्रीनिवास-आगमने किञ्चित् विलम्बः अभवत् । कुतः ? तैलशास्त्रं कया कर्तव्यं इति विचारः प्रवृत्तः । श्रीनिवासस्य स्नुषाः युवत्यः मिलित्वा अन्योन्यं भाषमाणाः हसन्त्यः क्षणं मौनिन्यः "अयि भो ! अयि भो ! अपि अपश्यत । अस्माकं श्वशुरः अस्ति । अतिवृद्धः पत्नीप्रभृतिभिः समृद्धः । पुराणपुरुषः । षोडशवर्षीयः । एवं विवहेत् इति लौल्यम् । किं ब्रूमः ? ईदृश-आर्यगुरुश्वशुरस्य विवाहे अस्मादृशस्नुषाणां ससम्भ्रमव्यापारः । आश्चर्यम्" इति वदन्त्यः । स्वासां किमपि चरितुं लज्जा । तदा मातरं बकुलां स्वसारं रमां च पुरतो निधाय तासां पृष्ठतः आस्यं वस्त्राञ्चलेन आच्छाद्य मृदु हसन्त्यः आसन् । एवं वैशाखशुद्धसप्तमीदिने महोत्सवः अभूत् ॥

**मूलम्**

**चतुर्दिक्षु च संस्थाप्य कलशान् जलपूरितान् ।**<br>
**सूत्रेण वेष्टयित्वा तु तन्मध्ये रत्नपीठकम् ॥ १२ ॥**

**संस्थाप्य सम्भ्रमैर्युक्ता इदमाहुः [2]महीपते।**
**उत्तिष्ठ पुरुषश्रेष्ठ तिष्ठ [3]तत्सूत्रमण्डले ॥ १३ ॥**

१. पीठिकाम्। २. सुराङ्गनाः। ३. त्वं सूत्रमण्डले।

**कल्याणकाण्डदीपः**

अपहसन्त्य एवाह्वयामासुरित्याह **चतुर्दिगिति**। ससम्यामलुगार्षः। चतुर्दिक्षु कलशान् वसन्तोदकपूरितान् कनककलशान् चतुःसमुद्रबुद्ध्या चतुरः संस्थाप्य तन्मध्यस्था यावत्प्रजासङ्गहबुद्ध्या सूत्रेण आवेष्ट्य तन्मध्ये सिंहासनबुद्ध्या रत्नपीठकं संस्थाप्य सम्भ्रमेण युक्ताः सत्य इदमाहुरित्यादि।

अत्रेदं बोध्यम्— अथ अस्मिन् समये श्रीनिवासः आलोचयामास। तथा हि। विहितानुष्ठानं तावद् द्वेधा दृश्यते। यावच्छास्त्रपूर्ति, यावदिच्छापूर्तीति। तत्राद्यं द्वितीयानुकूल्यरहितस्य, द्वितीयं सानुकूल्यस्य। तथा च कूटस्थस्येतरयोषित्साधारणी प्रवृत्तिर्न युज्यते। यद्यपि अनसूयारुन्धतीत्यादयो वृद्धाः पुरन्ध्यो भक्तिपूर्वं मत्सेवानिरताः सन्ति, ताश्च आशीपूर्वकं तैलशास्त्रादि कुर्युः, तथाऽपि निरतिशयकठिणबलवद्विग्रहस्य मम यावदपेक्षितसुगन्धितैलेन अङ्गमर्दनं न ताभिः कर्तुं शक्यते। तासां तादृक्सामर्थ्यविदूरत्वात्। यद्यप्यस्ति बलदेवः, तथाऽपि मङ्गळमज्जने न पुंसामधिकारः। किं च,

"अक्षता विप्रहस्तेन मातृहस्तेन भोजनम्।
दानं दद्यात् स्वहस्तेन नारीहस्तेन मर्दनम्॥"

इति अङ्गनाहस्तकृतमेव मर्दनं पथ्यम्। भरतभारद्वाजाद्युपचारे तथैव चिरन्तनाचाराच्च। सरस्वत्यादीनामपहासलज्जादाक्षिण्यादिदोषैः अप्रसक्तिः। किञ्च, पुंसामधिकारे ब्रह्माऽधिकृतः। विवाहे आतैलाभिषेकमावसन्ताभिषेकमङ्गनाकार्यं भारि। मम चैकमप्यकृत्वा स्थातुं न शक्यमित्येवं निर्बन्धे स्थिता मात्रादयो न सन्ति। अन्याश्च अनाथवत्यो यावन्मन आयाति तावत् कुर्वन्ति। अतः "अङ्गनाधिकारे यावत्कार्यमहं कुर्वे, नात्र चिन्ता" इति वचनं कस्याश्चिदादातव्यम्। महालक्ष्म्यास्तादृग्वचनादाने सर्वं समञ्जसं भवति।

यद्यपि आशीर्वृद्धैर्ग्राह्याः। तथाऽपि वृद्धाभावे समैर्वा स्यात्। रमा च मम समाऽसमा। अथवा "व्यवहारे स्त्रीपुंसयोर्विपरीतं बलाबलम्" इति तया आशीर्वादेऽपि न चिन्ता। रमायाः समासमत्वात् मद्वेश्यादृशाश्रयणात् मदन्तरबलत्वात् मङ्गळदेवतात्वात् पत्नीत्वात्। निरपहासलज्जादाक्षिण्यं यावदपेक्षितकार्यसिद्धिरिति।

**मूलम्**

**स इत्थमुक्तवचनो योषितः प्रति भूमिप।**
**प्रोवाच दीनवदनः प्रस्रवन् नेत्रजं जलम् ॥ १४ ॥**

**कल्याणकाण्डदीपः**

अतस्तदाकारेण मृषा दैन्येन तत्साधयति— **स इत्थमिति** । इत्थमुक्तवचनः श्रीनिवासः योषितः कटाक्षीकृत्य ब्रह्माणं प्रति दीनवदनः नेत्रजं जलं प्रस्रवन् प्रोवाच इत्यर्थः ।

**गूढकर्तृकव्याख्यानम्**

ततः चतुर्दिक्षु कलशेषु वसन्तोदकं आपूर्य तान् चतुरः चतुःसमुद्रबुद्ध्या संस्थाप्य तन्मध्यस्था यावत् प्रजासङ्घबुद्ध्या सूत्रेण आवेष्ट्य तन्मध्ये सिंहासनबुद्ध्या रजतपीठं संस्थाप्य सम्भ्रणेन युक्ताः एवं आहुः ॥

एतन्मध्ये श्रीनिवासः एवं आलोचयामास— "विहितकर्मानुष्ठानं तावत् द्वेधा । यावत्-शास्त्रपूर्ति, यावदिच्छापूर्ति । तत्र आद्यं द्वितीयानुकूल्यरहितस्य । द्वितीयं सानुकूल्यस्य । तथा च कूटस्थस्य इतरयोषित्-साधारणी प्रवृत्तिः न युज्यते । यद्यपि अनसूया-अरुन्धती-प्रभृति-वृद्ध-सुवासिन्यः पुरन्ध्यः सन्ति । ताः भक्तिपूर्वं मत्सेवानिरताः सन्ति । ताश्च आशीर्वादपूर्वकं तैलवस्त्रादिकं कुर्युः । तथाऽपि निरतिशयकठिणबलवान् अहम् । एतादृशस्य मम यावदपेक्षितं सुगन्धतैलेन मम शरीरे सम्यक् मर्दनं ताभिः कर्तुं न शक्यते । कुतः ? तादृक्-सामर्थ्यविदूरत्वात् । तर्हि तादृशः कोऽस्ति ? यद्यपि बलदेवो वर्तते । तथाऽपि तैलशास्त्रं कृत्वा मङ्गलस्नानकारणे पुंसां अधिकारो न । किञ्च एवं वदन्ति "अक्षता विप्रहस्तेन मातृहस्तेन भोजनम् । दानं दद्यात् स्वहस्तेन नारीहस्तेन मर्दनम्" एवं विद्यमानत्वात् अङ्गनाहस्तकृतमेव मर्दनं पथ्यम् । एवं चिरन्तन-आचार-सम्प्रदायाच्च । किञ्च सरस्वत्यादयः सन्ति । तथाऽपि ताभ्यः अपहास-लज्जा-दाक्षिण्यादि-दोषाः सङ्घटन्ते । अतः तत्प्रसक्तिरेव मा भूत् ।

किञ्च पुरुषाधिकारे विधिः अधिकृतः । विवाहे आतैलाभिषेकं आवसन्ताभिषेकं अङ्गना कार्यं भारि । मम च एकमपि अकृत्वा स्थातुं न शक्यम् इत्येवं निर्बन्धे स्थिताः मात्रादयो न सन्ति । अन्याश्च नाथवत्यो यावन्मन आयाति तावत् कुर्वन्ति । अतः अङ्गनाधिकारे यावत् कार्यं अहं कुर्वे अत्र चिन्ता काऽपि मास्तु इति वचनं कस्याश्चित् आदातव्यम् । महालक्ष्म्याः तादृक्वचनादाने सर्वं समञ्जसं भवति । यद्यपि आशीः वृद्धैः ग्राह्या । तथाऽपि वृद्धाभावे समैर्वा स्यात् । अद्य रमा च मम समा असमा च (अथवा षिड्गव्यवहारे स्त्रीपुंसयो [illegible]परीतं बलाबलं इति तया रमया आशीर्वादेऽपि न चिन्ता ।)

"रमायाः समासमत्वात् (मद्देश्या दशाश्रयणात्) मदन्तरबलात् रमा मङ्गलदेवता इति मङ्गलदेवतात्वात् पत्नीत्वात् निरपहासलज्जादाक्षिण्यं यावदपेक्षितकार्यसिद्धिः" इति आलोचितवान् । ततः यदा "हे पुरुषोत्तम ! सूत्रमण्डले तिष्ठ" इति ऊचुः तदा श्रीनिवासः सर्वासां योषितां पश्यन्तीनां स्वाभिप्रायं निर्वर्तयितुं मृषा दैन्येन अतिदुःखित इव नेत्रयोः अश्रु मुञ्चन् योषितः कटाक्षीकृत्य पुत्रं विधिं आह ।

**मूलम्**

**पितामह महाप्राज्ञ [1]विवाहः स्थाप्यतां मम ।**
**कः करोत्यभिषेकं मे [2]तैलेन क्रमभाविना ॥ १५ ॥**

१. विवाहविभवे । २. तैलेनाशीः क्रमेण वै ।

**कल्याणकाण्डदीपः**

दैन्यमेव प्रकटयति— कः **करोतीत्यादिना** । **क्रमभाविनेति** । प्रथमं तैलशास्त्रं ततः तैलाभिषेकः ततो यावदपेक्षितमङ्गनाहस्तेन सतैलाङ्गमर्दनम्, अथ तापितोदकपूर्णकुम्भाभिषेकः, अथ स्नेहघ्नीकल्पमार्जनं पुनरभिषेक इत्यादिक्रमेण **भाविना** प्रथमभाविना **तैलेन** तच्छास्त्रपूर्वकतैलेनाभिषेकम् । **कः** येषु योषिज्जनेषु को जनः करोति ?

**गूढकर्तृकव्याख्यानम्**

"हे पितामह ! एतत् विवाहविभवे मम भागे अनुकूला काऽपि नास्ति । प्रथमं तैलशास्त्रं मे कः करोति ? आशीःपूर्वकं तैलशास्त्रं कृत्वा ततः तैलाभिषेकः, ततः यावदपेक्षितं अङ्गनाहस्तेन सतैलाङ्गमर्दनम्, अथ तापितोदकपूर्णकुम्भाभिषेकः । अथ स्नेहघ्नीकल्कमार्जनम् । पुनः अभिषेकः । इत्यादिक्रमेण एषु योषिज्जनेषु कः जनः करोति ?

**मूलम्**

**यस्य नास्ति महाराज [1]माता वा पितरस्तथा ॥ १६ ॥**
**विवाहे [2]भरणे चैव तस्य धिग्जन्म जीवनम् ।**
**भगिन्यो भ्रातरश्चैव मातुला भागिनेयकाः ॥ १७ ॥**
**न मे सन्ति [3]महाराज कः करोत्यभिषेचनम् ।**
**मातापितृविहीनानां का गतिर्वै भविष्यति ॥ १८ ॥**

१. माता वाऽपि पिता तथा । २. मरणे । ३. महाप्राज्ञ ।

**कल्याणकाण्डदीपः**

**यस्येति** । **यस्य** जनस्य **भरणे** पोषणे माता तथा **भरणे** गृहारामक्षेत्रपशुधनादिना पूरणे, स्थिति-करण इति यावत्, पिता चास्ति **तस्य** जनस्य **जन्म** शरीरं जीवनं च दानभोगादि शोभते ।

अयमर्थः— यस्य मातैवास्ति न पिता तस्य शरीरमेव शोभते क्षीरादिसम्भावनादिना पोष-णात् । न जीवनम् । यस्य पितैवास्ति न माता तस्य जीवनं शोभते, न शरीरमिति । तथा यस्य नरो विवाहे उपयमने माता पिता चास्ति तस्य जन्म अभ्यङ्गोपहारवस्त्रभूषणपुष्पादिपोषणभूषणाभ्यां शरीरं जीवनं च विवाहोपयोगि सम्पाद्य वस्तुसम्पत्त्या अन्नदक्षिणादानकन्याकनकवस्त्रादिभोगात्मकजीवनं शोभते ।

यस्य भरणे माता नास्ति जीवने च पिता नास्ति तस्य जन्म जीवनं च धिक् । तज्जन्मनो जीवनस्य च निन्द्यता शोच्यतेत्यर्थः । तथा यस्य विवाहे माता पिता च नास्ति तस्य धिग्जन्मजीवितम् । विवाहसमयेऽजीवन्मातृपितृकः कुतो जायेत ? कुतो जीवेत ? इति शोच्यते इत्यर्थः ।

"विवाहे मरणे च" इति पाठे यस्य स्त्रीजनस्य मरणे तत्काले पतिः पुत्रश्चास्ति तस्य स्त्रीजनस्य जन्म जीवनं च शोभते । सौमङ्गल्यात् साग्निकत्वात् गतिदर्शनाच्च । यदि पतिरेव पुत्र एव तर्हि तस्य जन्मैव जीवनमेव । यस्य नोभयं, तस्य नोभयम् । यस्य पितृजनस्य मरणे पत्नी पुत्रश्चास्ति तस्य जन्म जीवितं च शोभते । साग्निकत्वात् गतिदर्शनाच्च । यद्यन्यतरत् तर्हि अन्यतरदेव । यदि नोभयं, तर्हि नोभयम् । पितृशब्दपर्यायः पितरशब्दः । यथा देवशब्दपर्यायो देवरशब्दः । आर्षो वाऽयम् । पितृत्वस्य बहुरूपत्वाद्वा । "जनिता च" इत्यादिनोक्तं पञ्चविधेषु एकेनापि जीवनं भवतीति सूचनाय वा बहु-वचनम् । 'माता' 'पिता' चेति प्रथमा षष्ठ्यर्थे । तत्राद्येन अविप्रतिपन्नं द्वितीयेन पालनादेव तृतीयेन विद्याधनदानात् तच्च सर्वधनप्रधानमुभयोर्लोकयोरभिजित्यै स्यात् इत्यादिनिमित्तं बोध्यं वा । तथा भरणमरणे चैव जन्मजीवनपदानां सन्निवेशस्वारस्यादयमर्थो व्यज्यते । केचित्तु अनङ्गदशादशमदशा-वाचिना मरणशब्देन तदन्तानङ्गदशा लक्ष्यते । तेन तदङ्गगर्भाधानं लक्ष्यते । तथा च भ्रात्रादीनां गर्भाधाने प्राप्ते कलौ मातापितर एव हृष्यन्ति नान्ये भ्रात्रादयः । यद्वा म्रियन्ते जना अस्मिन्निति मरणं युद्धम् । बलवता राज्ञा युद्धे प्रसक्ते मातापितरावेवाकौटिल्येन वर्तेते न भ्रातर इति योजनया अर्थ(भाव)द्वयमप्यत्र आहुः । 'धिगुपर्यादिषु' इत्युपपदविभक्तिर्द्वितीया षष्ठ्यर्थे ।

"या नारी कण्ठसूत्रेण पत्युरग्रे प्रमीयते ।
पुत्रोत्सङ्गो. ्राणा सेहामुत्र महीयते ॥"

**मूलम्**

**न च मातृसमं मित्रं जनकेन समं सुखम् ।**
**न भार्यासदृशं भाग्यं न पुत्रेण समा गतिः ॥ १९ ॥**

**न भ्रातृणां समः स्नेहः न [1]विष्णुं देवता वरा ।**
**इति [2]सञ्चिन्त्य गोविन्दो लीलामानुषविग्रहः ।**
**रुरोद लोकरीत्यैव पश्यन् ब्रह्माननं हरिः । ॥ २० ॥**

१. विष्णोर्देवता परा । २. सम्भाष्य ।

**कल्याणकाण्डदीपः**

**न भ्रातृणामिति** । सौभ्रातृयुक्तानां भ्रातृणां रामलक्ष्मणादीनामिव यः स्नेहः तत्समः स्नेहो नास्तीत्यर्थः । **न विष्णुं देवता वरेति** । विष्णुं विना वरा देवता नास्तीत्यर्थः ।

**गूढकर्तृकव्याख्यानम्**

लोके यस्य पुरुषस्य शरीरपोषणे माता, तथा गृहारामक्षेत्रपशुधनादिना स्थितिकरणे पिता च अस्ति तस्य जन्म सार्थकं शोभते । दानभोगादिरूपं च शोभते । किञ्च यस्य नरस्य विवाहसमये मातापितरौ उभावपि स्तः अभ्यङ्गवस्त्रभूषणादिभिः शरीरं जीवनं च शोभते । यस्य पोषणे माता न, जीवनेऽपि पिता न, तस्य जन्मनः जीवनस्य धिक्कारोऽस्तु । तस्य जन्म जीवनं च दह्यताम् । यस्य पुरुषस्य विवाहे मातापितरौ न स्तः तस्य जन्म जीवनं निरर्थकम् । सः कुतो भुवि जायेत जीवेत् । प्रकृते विधे ! मम भागे भगिन्यो वा भ्रातरो वा मातुला वा भागिनेया वा केऽपि न सन्ति । को वाऽस्ति अद्य मे अभिषेकं कर्तुम् । लोके मातापितृविहीनानां का गतिः भविष्यति, कथं ज्ञायते ?

किञ्च ज्ञानिनः एवं वदन्ति "मातुः समं मित्रं न । मातृसमो बन्धुः न । किञ्च न मातुर्दैवतं परम् । मातृदेवो भव । पितृदेवो भव । आचार्यदेवो भव । मातासमो नास्ति शरीरपोषणे । इत्यादि-वचनानि सन्ति । तथा पितृसमं सौख्यं न । भार्यासमं भाग्यं न । पुत्रेण समा गतिर्न । भ्रातुः समः स्नेहो न । तथोक्ते सौभ्रात्रयुक्तानां रामलक्ष्मणादीनामिव यः स्नेहः तत्समस्नेहो नास्ति । विष्णोः परा देवता न । न दैवं केशवात् परम् । न माधवसमो देवः । न हरेः परमो न हरेः सदृशः परमः स तु सर्वचिदा-त्मगणात् । एतेन विष्णुं विना उत्कृष्टदेवता नेति लोकानुभवं स्मरन् लोकरीत्या आभाषमाणः स्वस्य लीलार्थं मानुषशरीरं धृतवान् श्रीनिवासः दुःखितः नेत्रयोः अश्रु मुञ्चन् विधेः आननं पश्यति ।

मूलम्

उपधार्य हरेर्वाक्यं स भवः कञ्जसम्भवः ।
सान्त्वयन् वासुदेवं च भारतीमाह भूपते ॥ २१ ॥

ब्रह्मोवाच—

किमर्थं [1]मुह्यसेऽस्मान् वै मायापञ्जरवासिनः ॥ २२ ॥

[2]कश्च नास्तीति यत् प्रोक्तं तदसत्यं चतुर्भुज ।
पुत्रोऽहं तव कल्याण पौत्रः साक्षात् त्रिलोचनः ॥ २३ ॥

१. मोहयसि नो । २. कोऽपि ।

मन्मथोऽन्यः पुमान् पुत्रः पौत्रपुत्रः षडाननः ।
जगत्प्राणो ज्येष्ठपुत्रः स्नुषा ते भारती हरे ॥ २४ ॥

सरस्वत्यादिकाः सर्वाः स्त्रियस्त्वत्पादसेवकाः ।
त्वं पुमान् परमः साक्षाज्जगद्धात्री तवाङ्गना ॥ २५ ॥

क्रीडामात्रमिदं मन्ये त्वत्कृतं पुरुषोत्तम ।
एवं विभवमापन्नो [1]वृथाऽस्मान् कृष्ण मुह्यसि ॥ २६ ॥

इत्थमुक्ते चतुर्वक्त्रे वासुदेवं [2]रमासखी ।
रमां सङ्केतयामास सा रमा वाक्यमब्रवीत् ॥ २७ ॥

१. त्वं नो मोहयसे वृथा । २. रमापतिः ।

कल्याणकाण्डदीपः

रमासखी बकुळा ।

गूढकर्तृकव्याख्यानम्

तदा श्रीनिवासस्य मुखभावं जानन् विधिः तस्य समाधानकरं वाक्यं वक्ति— हे स्वामिन् ! जगदीश ! जगज्जन्मादिकारण ! कुतः अस्मान् वृथा मोहयसि । तव पुरतः वयं सर्वे कियन्तः ? वयं तु तव मायाख्यपञ्जरे सततं बद्धाः । नः दुःखं नाम कीदृशम् ? नः सुखं नाम कीदृशम् ? अपि त्वं

दुःखी । वयं सुखिनः । त्वं नः पुरतः दुःखं निवेदयसि । कुतो नटनं करोषि ? इदं तव दुःखं न । अस्मादृशानां मोहजनकक्रीडैव । नान्या । मद्भागे मत्समये कोऽपि नास्तीति वदसि खलु । किं असत्यं भाषसे ? त्वं तावत् सत्यमूर्तिः सत्यसङ्कल्पः । त्वं सत्यरूपः । सत्यनारायणः । इदं सत्यजगत्परिपालकः । समस्तमपि जगत् तव कुटुम्बम् । एवं सत्यपि तव भागे कोऽपि नास्तीति वचनं कथं युज्यते ? हे कल्याणमूर्ते ! कमलानाथ ! अहं तव सुतो न किम् ? त्रिनयनोऽस्ति पौत्रो न किम् ? मन्मथः अन्यः पुत्रः अस्ति । प्रपौत्रोऽस्ति षण्मुखः । जगत्प्राणः महाबलः वायुदेवोऽस्ति तव ज्येष्ठपुत्रः । भारती अस्ति तव ज्येष्ठस्नुषा । सरस्वत्यादिकाः सर्वाः त्वत्पादकैङ्कर्ये सदा सिद्धाः । एतद्सर्वलोकस्य मूर्ध्नि त्वं तिष्ठसि परमपुरुषः सर्वोत्तमः । तव अङ्गना तव नित्यावियोगिनी दुःखास्पृष्टा जगज्जननी साक्षात् रमा । ईदृश-अनुत्तम-असदृशवैभवं आपन्नः सन्नपि कोऽपि मम भागे नेति वदसि खलु । इदं सर्वं तव विडम्बनमेव । कुतो मोहयसे नः ?" इति सविनयं विज्ञापितवान् । एवं विधिना उक्तं श्रुत्वा श्रीनिवासः स्वकृपाकटाक्षं कुर्वन् रमां सङ्केतयामास ।

**मूलम्**

**विदितं हृदयं देव तव वेङ्कटवल्लभ ।**
**तैलाभ्यङ्गादिकर्माणि करिष्ये पुरुषोत्तम ॥ २८ ॥**

**कल्याणकाण्डदीपः**

**तैलाभ्यङ्गादिकर्माणि इति** । सर्वाणि तैलाभ्यङ्गादि वैवाहिककार्याणि अहं करिष्यामि इति वचनं ददाविति भावः ।

**मूलम्**

**उत्तिष्ठ त्यज दुःखं त्वं [1]समारुह्य वरासनम् ।**
**स रमागिरमाकर्ण्य [2]सन्तोषनयनं जलम् ॥ २९ ॥**

**मुञ्चन् मुनिवरान् [3]दीनान् नन्दयन् नरसारथिः ।**
**कश्यपात्रिभरद्वाजविश्वामित्रपुरोगमान् ।**
**[4]प्रणिपत्याथ विश्वेशो विश्वं सर्वं विडम्बयन् ॥ ३० ॥**

---

१. समारोह । २. सन्तोषान्नयनात् । ३. राजन् ।
४. प्रणिपत्य वसिष्ठं स आह विश्वं विडम्बयन् ।

श्रीनिवास उवाच—

अनुज्ञां देहि मे ब्रह्मन् मज्जनार्थं [1]महीपते।
तथाऽस्त्वित्यब्रवीत् कृष्णं वसिष्ठः सपुरोहितः ॥ ३१ ॥

१. महामुने।

### गूढकर्तृकन्याख्यानम्

पतिमनोज्ञा रमा तदा एवं वदति— "स्वामिन् ! जगदीश ! वेङ्कटवल्लभ ! ज्ञातं तव हृदयम् । तैलाभ्यञ्जनादि-सर्ववैवाहिककार्याणि अहमेव करिष्यामि । इयं सिद्धाऽस्मि । स्वामिन् ! एतावत् यद् दुःखं कृतं यद् दैन्यं कृतं तावता अलम् । वरासनं आरोह । तैलशास्त्रं तैलाभ्यञ्जनादिकं करोमि विलम्बं मा कुरु" इत्याह । ततः रमोक्तिं श्रुत्वा यस्याः मुखात् स्वस्य प्रियतमं वचनं निस्सरतु इति निरीक्षितवान् तादृशरमामुखोद्गतं वचनं श्रुत्वा आनन्दमूर्तिः श्रीनिवासः आनन्दबाष्पं मुञ्चन् स्वलीलया तत्रत्य-कश्यपात्रिभरद्वाजादिमुनिवरान् नन्दयन् लोकं विडम्बयन् स्वपुरोहितं वसिष्ठं प्रणम्य तं प्रति "महामुने ! मङ्गलस्नानं चिकीर्षामि । तत् अनुज्ञां देहि" इति ययाचे । वसिष्ठः तथाऽस्तु इत्याह ।

सपत्नीकान् सुरान् सर्वान् सभार्यान् ऋषिमण्डलान्।
अनुज्ञाप्यानुगैः सार्धमुदतिष्ठत् सुरोत्तमः।
देवानामन्त्र्य राजेन्द्र देवस्त्रीणामतःपरम् ॥ ३२ ॥

विकीर्य केशमूलानि पूर्वाभिमुखमास्थितः।
रत्नपीठं समारोप्य श्रीनिवासं सुयोषितः ॥ ३३ ॥

### कल्याणकाण्डदीपः

**देवस्त्रीणामतःपरमिति** । अतःपरं देवस्त्रीणामनुज्ञां सम्पाद्य इत्यर्थः । विकीर्य इत्यर्धस्य अर्थः— पार्वती कन्यापूर्वं तैलशास्त्रार्थं भगवान् सोत्तरच्छदे भद्रपीठे केशमूलानि विकीर्य पूर्वाभिमुखमास्थितः अभूत् । अथ अरुन्धत्यादयः अक्षतान् शिरसि विकीर्य ताम्बूलं दत्वा कन्यापूर्वं तैलशास्त्रं चक्रुरिति । **रत्नपीठमिति** । अथ सुयोषितः देवाङ्गना रत्नपीठं श्रीनिवासं समारोप्य अभिषेकार्थं सन्नद्धा आसन् ।

### गूढकर्तृकव्याख्यानम्

ततः स्व-स्व-पत्नीसहितदेवान् भार्यासहितमुनीन् अनुज्ञाप्य अनुचरैः सहितः मज्जनार्थं उदतिष्ठत् । पार्वती कलशवती पूर्वं तैलशास्त्रार्थं श्रीनिवासः सोत्तरच्छदे भद्रपीठे उपविश्य पूर्वाभिमुखः केशमूलानि विकीर्णवान् । अथ अरुन्धत्यादयः श्रीनिवासस्य शिरसि अक्षतान् विकीर्य ताम्बूलं दत्वा कलशवती पार्वतीपूर्वं तैलशास्त्रं चक्रुः । तदन्तरे देवाङ्गनाः श्रीनिवासं रत्नपीठे समारोप्य अभिषेकार्थं सन्नद्ध आसन् ।

### मूलम्

**तासां मध्ये सिन्धुपुत्री रमा कमललोचना ।**
**रुग्मपात्रं समादाय तैलपूरितमादरात् ॥ ३४ ॥**

**अभिषिञ्चद्रमादेवी आशीर्भिरभिनन्द्य च ।**

**रमोवाच—**

**दीर्घायुर्भव गोविन्द [1]बहुपुत्रधनादिपः ॥ ३५ ॥**

---

१. पुत्रवान् धनवान् भव ।

### कल्याणकाण्डदीपः

अथ रमा पूर्वदत्तवचनमनुसृत्य तेलाभिषेकाद्युद्वर्तनान्तमकरोदित्याह—"तासां मध्य" इत्यादिना "केशवस्य च" इत्यन्तेन ।

तासां सन्नद्धानां योषितां मध्ये मध्यादागत्य कमललोचना सिन्धुपुत्री रमा आदरात् भक्तिमवलम्ब्य, तैलपूरितं रुग्मपात्रं समादाय, **अभिषिञ्चद्रमादेवी** । अभिषिञ्चती च सा रमादेवी च अभिषिञ्चद्रमादेवी, तैलाभिषेकार्थं प्रवर्तमाना । हे **गोविन्द** ! **दीर्घायुः** प्राकृतानामपि दीर्घकालमत्र गिरावभिव्यक्तस्थितिमान् भव इति ययाचे । **बहुपुत्रधनादिपः** एतद्-आकाङ्क्षिणां एतद्-दानाय तत्प्रभुः भव ।

**मूलम्**

**चतुर्दशानां लोकानामेकच्छत्राधिपो भव।**
**एवमुक्त्वा [1]सुवसना अभ्यषिञ्चद्रमा हरिम् ॥ ३६ ॥**
**देवाङ्गं मर्दयामास तैलेनातिसुगन्धिना।**
**तदा ददौ ब्रह्मपत्नी रसं [2]कटुककर्दमम् ॥ ३७॥**

१. तदा देवी। २. कर्पूरकर्दमम्।

**कल्याणकाण्डदीपः**

**चतुर्दशानां लोकानां एकच्छत्राधिपो भव**। करादाने निग्रहानुग्रहे चाभिव्यक्तप्रतिहतशासनो भवेति लक्ष्म्या वरे याचिते, श्रीनिवासेन एवमस्तु इत्युक्त्वा आशीर्भिः मनोरथैः अभिनन्द्य स्वयं सम्प्रहृष्य सुवसना रमा हरिमभ्यषिञ्चत्। अथ अतिसुगन्धिना भेषजेन तैलेन देवाङ्गं देवस्य अङ्गं निरतिशयकठिण-बलवच्छरीरं आरोग्यार्थं अनिर्लज्जं अदाक्षिण्यं यावदपेक्षितं यावच्छक्ति मर्दनं चकार। तदा ब्रह्मपत्नी सरस्वती कटुककर्दमं अङ्गसौगन्ध्यर्थं सुगन्धिहरिचन्दनपङ्कं लक्ष्मीहस्ते ददौ इत्यर्थः।

**गूढकर्तृकव्याख्यानम्**

तथा सन्नद्धयोषित्सु रमा आगत्य भक्त्यादरपूर्वकं सुगन्धतैलपूरितरुक्मपात्रं आदाय पूर्वोक्तवाग्दानं स्मरन्ती आपादमौलि-अङ्गाङ्गेषु तैलाभिषेके प्रवर्तमाना श्रीनिवासं आशीर्भिः अभिनन्दन्ती "गोविन्द ! दीर्घायुष्मान् भव। विद्यावान् भव। बुद्धिमान् भव। भाग्यवान् भव। पुत्रवान् भव। चतुर्दशलोकानां एकच्छत्राधिपो भव" इति। अत्र एतदाशीर्वचनतात्पर्यं किम् ? "दीर्घायुष्मान् भव इत्युक्ते अद्य कलौ प्राकृतनराणामपि अत्र वेङ्कटगिरिं आगतानां बहुजन्मार्जितपुण्यपरिपाकवशात् तेषां तव अभिव्यक्तरूपस्य सन्दर्शनम् अत्र दीर्घकालं अनुगृहाण" इति। धनवान् भव = धनवतः कारय। पुत्रवान् बुद्धिमान् भव = पुत्रवतः बुद्धिमतः कारय। किञ्च धनवान् भव इति धनसद्विनियोग-समर्थान् कारयेति अर्थं सूच-यन्ती आशीः चकार। चतुर्दशलोकाधिपो भव। छत्राधिपो भव इति = ये ये राजानः तव भक्ताः तान् न्यायपूर्वककरादानदुष्टनिग्रहपरिपालनदक्षान् कारयेत्यर्थः।

ततः रमा अतिसुगन्धतैलं करे गृहीत्वा देवस्य अङ्गाङ्गं तस्य निरतिशयकठिणबलवच्छरीरं तस्य आरोग्यार्थं अनिर्लज्जं अदाक्षिण्यं यावदिष्टं तैलं संलिप्य मर्दयामास। तदा सरस्वती अङ्गसौगन्ध्यार्थं कर्पूरमिश्रित-हरिचन्दनपङ्कं आनीय ...ाहस्ते ददौ।

मूलम्

[1]मार्जारतैलगन्धेन तथा मृगमदेन च ।
हरिद्राचूर्णपिष्टेन [2]विमृज्य विकटेश्वरम् ॥ ३८ ॥

१. तेन मार्जारतैलेन । २. निर्मज्य च वृषाकपिम् ।

सुमङ्गलैर्वाद्यघोषैः सहसर्वपरिच्छदैः ।
समन्तात्सर्वविधिषु करिकुम्भैरुपाहृतैः ॥ ३९ ॥

समन्तात्पुण्यतीर्थस्थपुण्यतीर्थाभिपूरितैः ।
सरत्नैः काञ्चनैः कुम्भैः तापितोदकमिश्रितैः ।
अभिषेकं ततश्चक्रे [1]सर्वाङ्गं जगदीशितुः ॥ ४० ॥

आपादमौलिपर्यन्तं सा कृत्वोद्वर्तनं हरेः ।
मेने कृतार्थमात्मानं सेवया केशवस्य च ॥ ४१ ॥

१. कमला ।

कल्याणकाण्डदीपः

एतदेव विशदयति— **मार्जरिति** । हरिद्राचूर्णेन सह पिष्टेन मृगमदेन सह तथा पिष्टेन मार्जार-तैलगन्धेन पुष्कळकतैलपङ्किलहरिचन्दनेन हरिकर्दमात्मककटुककर्दमेन विकटेश्वरं विमृज्य ततः सूत्र-मण्डले कन्यापूर्वं पीठे उपवेश्य श्रीनिवासमङ्गळमजनार्थं स्वामिपुष्करिण्याद्यनेकतीर्थाभिमानिभिर्देवैः स्वस्वतटे कटाहेषु तापितस्वस्वाभिमन्यमानजलपूरितैरानीतकरिकुम्भस्थकनककुम्भैः जगदीशितुः सर्वाङ्गं प्रति अभिषेकसूक्तैः अभिषेकं चक्रे । अथ मुद्गातिचूर्णेन हरेरापादमौळिपर्यन्तं उद्वर्तनं मालिन्यो-त्सादनं कृत्वा, एवं केशवस्य सेवया आत्मानं स्वं कृतार्थं मेने इति योजना ।

अत्रोपपत्तिः । भवेति प्रार्थनायां लोट् । प्रार्थनं चेह श्रीनिवासाय यथा पुरस्तात् तव वल्मी-कान्तःस्थित्वा बहिरनभिव्यक्तस्थितिः, तथा उत्तरत्र मा भविष्यत् । कुतः ? अहं च धर्मपत्नी परिणेया च पद्माभोगिनी भोगो हि वित्तवतां वित्तं चोद्यमवताम् । अतो राजवत् करद्रव्यमादाय प्रजारक्षणादि कर्तव्यम् । अन्यथा सा पद्मा वित्ताभावे भोगिनीति शब्दमात्रमभूदिति मा विप्रलम्भेन योजयेदिति ॥ तथा च श्रुतिः— "यत्सानोः सानुमारुहद्भूर्यस्पष्ट कृत्वम् । तदिन्द्रो अर्थं चेतति यूथेन वृष्णिरेजति ।"

### मूलम्

चतुर्दशानां लोकानामेकच्छत्राधिपो भव।
एवमुक्त्वा [1]सुवसना अभ्यषिञ्चद्रमा हरिम् ॥ ३६ ॥

देवाङ्गं मर्दयामास तैलेनातिसुगन्धिना।
तदा ददौ ब्रह्मपत्नी रसं [2]कटुककर्दमम् ॥ ३७ ॥

१. तदा देवी। २. कर्पूरकर्दमम्।

### कल्याणकाण्डदीपः

**चतुर्दशानां लोकानां एकच्छत्राधिपो भव।** करादाने निग्रहानुग्रहे चाभिव्यक्तप्रतिहतशासनो भवेति लक्ष्म्या वरे याचिते, श्रीनिवासेन एवमस्तु इत्युक्त्वा आशीर्भिः मनोरथैः अभिनन्द्य स्वयं सम्प्रहृष्य सुवसना रमा हरिमभ्यषिञ्चत्। अथ अतिसुगन्धिना भेषजेन तैलेन देवाङ्गं देवस्य अङ्गं निरतिशयकठिण-बलवच्छरीरं आरोग्यार्थं अनिर्लज्जं अदाक्षिण्यं यावदपेक्षितं यावच्छक्ति मर्दनं चकार। तदा ब्रह्मपत्नी सरस्वती कटुककर्दमं अङ्गसौगन्ध्यर्थं सुगन्धिहरिचन्दनपङ्कं लक्ष्मीहस्ते ददौ इत्यर्थः।

### गूढकर्तृकव्याख्यानम्

तथा सन्नद्धयोषित्सु रमा आगत्य भक्त्यादरपूर्वकं सुगन्धतैलपूरितरुक्मपात्रं आदाय पूर्वोक्तवाग्दानं स्मरन्ती आपादमौलि-अङ्गाङ्गेषु तैलाभिषेके प्रवर्तमाना श्रीनिवासं आशीर्भिः अभिनन्दन्ती "गोविन्द ! दीर्घायुष्मान् भव। विद्यावान् भव। बुद्धिमान् भव। भाग्यवान् भव। पुत्रवान् भव। चतुर्दशलोकानां एकच्छत्राधिपो भव" इति। अत्र एतदाशीर्वचनतात्पर्यं किम् ? "दीर्घायुष्मान् भव इत्युक्ते अद्य कलौ प्राकृतनराणामपि अत्र वेङ्कटगिरिं आगतानां बहुजन्मार्जितपुण्यपरिपाकवशात् तेषां तव अभिव्यक्तरूपस्य सन्दर्शनम् अत्र दीर्घकालं अनुगृहाण" इति। धनवान् भव = धनवतः कारय। पुत्रवान् बुद्धिमान् भव = पुत्रवतः बुद्धिमतः कारय। किञ्च धनवान् भव इति धनसद्विनियोग-समर्थान् कारयेति अर्थं सूच-यन्ती आशीः चकार। चतुर्दशलोकाधिपो भव। छत्राधिपो भव इति = ये ये राजानः तव भक्ताः तान् न्यायपूर्वककरादानदुष्टनिग्रहपरिपालनदक्षान् कारयेत्यर्थः।

ततः रमा अतिसुगन्धतैलं करे गृहीत्वा देवस्य अङ्गाङ्गं तस्य निरतिशयकठिणबलवच्छरीरं तस्य आरोग्यार्थं अनिर्लज्जं अदाक्षिण्यं यावदिष्टं तैलं संलिप्य मर्दयामास। तदा सरस्वती अङ्गसौगन्ध्यार्थं कर्पूरमिश्रित-हरिचन्दनपङ्कं आनीय ...ाहस्ते ददौ।

मूलम्

[1]मार्जारतैलगन्धेन तथा मृगमदेन च ।
हरिद्राचूर्णपिष्टेन [2]विमृज्य विकटेश्वरम् ॥ ३८ ॥

१. तेन मार्जारतैलेन । २. निर्मज्य च वृषाकपिम् ।

सुमङ्गलैर्वाद्यघोषैः सहसर्वपरिच्छदैः ।
समन्तात्सर्वविधिषु करिकुम्भैरुपाहृतैः ॥ ३९ ॥

समन्तात्पुण्यतीर्थस्थपुण्यतीर्थाभिपूरितैः ।
सरत्नैः काञ्चनैः कुम्भैः तापितोदकमिश्रितैः ।
अभिषेकं ततश्चक्रे [1]सर्वाङ्गं जगदीशितुः ॥ ४० ॥

आपादमौलिपर्यन्तं सा कृत्वोद्वर्तनं हरेः ।
मेने कृतार्थमात्मानं सेवया केशवस्य च ॥ ४१ ॥

१. कमला ।

कल्याणकाण्डदीपः

एतदेव विशदयति— **मार्जारेति** । हरिद्राचूर्णेन सह पिष्टेन मृगमदेन सह तथा पिष्टेन मार्जार-तैलगन्धेन पुष्कळकतैलपङ्किलहरिचन्दनेन हरिकर्दमात्मककटुककर्दमेन विकटेश्वरं विमृज्य ततः सूत्र-मण्डले कन्यापूर्वं पीठे उपवेश्य श्रीनिवासमङ्गळमज्जनार्थं स्वामिपुष्करिण्याद्यनेकतीर्थाभिमानिभिर्देवैः स्वस्वतटे कटाहेषु तापितस्वस्वाभिमन्यमानजलपूरितैरानीतकरिकुम्भस्थकनककुम्भैः जगदीशितुः सर्वाङ्गं प्रति अभिषेकसूक्तैः अभिषेकं चक्रे । अथ मुद्गातिचूर्णेन हरेरापादमौळिपर्यन्तं उद्वर्तनं मालिन्यो-त्सादनं कृत्वा, एवं केशवस्य सेवया आत्मानं स्वं कृतार्थं मेने इति योजना ।

अत्रोपपत्तिः । भवेति प्रार्थनायां लोट् । प्रार्थनं चेह श्रीनिवासाय यथा पुरस्तात् तव वल्मी-कान्तःस्थित्वा बहिरनभिव्यक्तस्थितिः, तथा उत्तरत्र मा भविष्यत् । कुतः ? अहं च धर्मपत्नी परिणेया च पद्माभोगिनी भोगो हि वित्तवतां वित्तं चोद्यमवताम् । अतो राजवत् करद्रव्यमादाय प्रजारक्षणादि कर्तव्यम् । अन्यथा सा पद्मा वित्ताभावे भोगिनीति शब्दमात्रमभूदिति मा विप्रलम्भेन योजयेदिति ॥ तथा च श्रुतिः— "यत्सानोः सानुमारुहद्भूर्यस्पष्ट कृत्वम् । तदिन्द्रो अर्थं चेतति यूथेन वृष्णिरेजति ।"

अस्यार्थः— इन्द्रः परमेश्वरः । यत् यस्मात् । सानोः सानुमतः शेषाचलस्य । लाक्षणिकः । सानुं शिखरम् । आरुहत् आरूढवान् । तत्र स्थित्वा प्रजानिग्रहानुग्रहरूपकृत्यं कृत्यं भूरि बहु । अस्पष्ट स्पष्टीकृतवान् । तत् तस्मात् । अर्थं वित्तं प्रति । चेतति प्रवर्तते । लोकैः स्वपूजार्थं वित्तं राजवत् स्वीकरोतीत्यर्थः । एतत् प्रत्यक्षसिद्धम् । तथा च वृष्णिः भक्ताभीष्टवर्षकः । सानुयूथेन तत्रागत-जनसमूहेन ब्रह्मादिसुरवृन्देन वा सह । एजति एजते शोभत इत्यर्थः । "एजृ दीप्तौ" परस्मैपदमार्षम् । यद्वा यूथेन कृत्वा एजति चलति । "एजृ कम्पने", "कपि चलने" । तत्तद्यानारूढां भगवत्प्रतिमां जनाः स्वस्कन्धैः उद्वहन्तीति ।

किमर्थं अभ्यङ्गः ? अभ्युदयार्थं आरोग्यार्थं सौगन्ध्यार्थं लावण्यार्थं नैर्मल्यार्थं च । तथा च वृद्धाभ्यनुज्ञा आशीर्वाददिङ्नियमकालनियमतैलनियमपूर्वकमभिषेकः । भेषजसुगन्धितैलमर्दनं, सुगन्धि-कर्दममर्दनम्, तापितोदकाभिषेचनं, उद्वर्तनं चेति पञ्चानामभ्यङ्गाङ्गत्वं ज्ञेयम् । अभ्यङ्गकालेऽपि धृत-दुकूलस्यानर्घ्यत्वेऽपि न वस्त्रलोभ इति सूचनाय सुवसना इति । यदर्थं मृषा दैन्यं प्रदर्शितं तदुक्तं मर्दयामास इति । कटुकशब्दः सुगन्धवाची ।

"............कटुस्तिक्तरसे वा तद्वति त्रिषु ।
सुगन्धिमत्सराकार्या प्रियतीक्ष्णेष्वपि त्रिषु ॥" इति रत्नमाला ।

"हरिद्रामुष्ककस्तूरीचन्दनैर्हरिकर्दमः ।
कर्पूरागुरुकस्तूरीतक्कोलैर्यक्षकर्दम ॥" इति वचनात् ।

मार्जारेत्याद्युक्तम् । "कर्कटकर्दमं" इति पाठे करोति कटं फलवर्षमिति कर्कटः । स्नेहघ्नो गुल्म-विशेषः । 'सीगि' इति भाषायाम् । अस्मिन्नर्थे इदमर्धं 'आपादं' इत्यतः प्राक् पठनीयम् ।

**गूढकर्तृकव्याख्यानम्**

हरिद्राचूर्णं मृगमदमार्जारतैलादिमिश्रितसुगन्धतैलं अङ्गाङ्गेषु विमृज्य विविधमङ्गलवाद्येषु वादितेषु सूत्रमण्डलमध्ये कलशवतीपूर्वकं श्रीनिवासं रत्नपीठे उपवेश्य अनेकतीर्थाभिमानिदेवैः स्वस्वतटे कटाहेषु तापित स्व-स्व-अभिमन्यमान-स्वामिपुष्करिणी-तीर्थादि-उदकपूरितैः करिकुम्भानीतैः रत्नकाञ्चन-पात्रैः तप्तोदकैः साक्षात् जगदीशितुः अभिषेकसूक्तैः "सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्" इत्यादि ऋग्भिः अभिषेकं चक्रे । ततः मुद्गपर्णेन हरेः आपादमौलि उद्वर्तनं मालिन्योत्सादनं कृत्वा एवं श्रीनिवाससेवया रमा आत्मानं कृताथा मेने ।

मूलम्

[1]चतस्रस्ताः सुवासिन्यः पाणिभिः कलशान् नृप।
धृत्वा कुङ्कुमतोयैस्तं अभ्यषिञ्चन् सुरेश्वरम् ॥ ४२ ॥

[2]दीपान् निवर्तयामासुः पुत्रवान् धनवान् भव।
तदा ददौ ब्रह्मपत्नी सावित्री वस्त्रमुत्तमम् ॥ ४३ ॥

इत्याशिषाऽभिनन्दत्यः श्रीनिवासं सुराङ्गनाः।
गायन्त्यः शुभगीतानि कुङ्कुमैस्सलिलैस्ततः।
आरार्तिकां माङ्गलिकीं सर्वाश्चक्रुस्तथाऽङ्गनाः ॥ ४४ ॥

१. चतस्रस्तु। २. जलैः नीराजयामासुः।

तेन वस्त्रेण सर्वाङ्गं [1]विमृज्य विधिवत् रमा ।
पार्वती [2]धूप्यमादाय ददौ लक्ष्मीकराम्बुजे ॥ ४५ ॥

[3]धूप्यकेशानुधूपेन विकीर्यासितमूर्धजान्।
बबन्ध कमलादेवी मूर्धजान् मधुघातिनः ॥ ४६ ॥

१. ममार्ज। २. धूपमादाय।
३. धूपयित्वा सुधूपेन विकीर्योज्झितबन्धनान्।

कल्याणकाण्डदीपः

पार्वती धूप्यमिति। धूप्यं धूप्यापायहितं धूप्यं धूपपात्रम्। केशानुधूपेन केशसुरभीकरण-शोषणानुकूलेन धूपेन तुरुष्कधूपेनेत्यर्थः। असितमूर्धजान् विकीर्य धूप्य सुरभीकृत्येति योजना।

मूलम्

आदर्शं दर्शयामास सावित्री स्वर्णभूषितम् ।
[1]रतिः शची चामरे चावीजयश्चन्द्रसन्निभे ॥ ४७ ॥

१. रतीशच्यौ चामरे च वीजन्यौ चन्द्रसन्निभे।

छत्रं दधार सा देवी भारती भक्तिसंयुता
पादुके प्रददौ भद्रा गङ्गा गङ्गापितुस्तदा ॥ ४८ ॥

[१]निधाय पादौ पदपीठयुग्मे
पादप्रपन्नार्तिहरो हरिः स्वयम्।
[२]पदा पुरा पावनतां गता मुनेः
शापेन शैलत्वमुपागता बला ॥ ४९ ॥

[३]पादाभ्यां प्रचरन् भूमिं परमासनमास्थितः ॥ ५० ॥

१. विधाय पादौ वरपादुकाद्वये। २. याभ्यां।
३. पादुकाभ्यां चरन् भूमिं वरासनमगाद्धरिः।

### गूढकर्तृकव्याख्यानम्

ततः चतस्रः सुवासिन्यः हस्तेषु कलशान् धृत्वा दिव्यकुङ्कुमोदकैः अभ्यषिञ्चन्। ततः देवाङ्गनाः आयुष्मान् भव भाग्यवान् भव पुत्रवान् भव इत्याशीर्भिः अभिनन्दन्त्यः कुङ्कुमोदकैः नीराजयामासुः। ततः परमात्मनः स्तोत्ररूप-परममङ्गलकर-आरार्तिका-गानानि अगायन्। विधिपत्नी सावित्री दिव्य-मार्जनवस्त्रं आदाय रमाहस्ते ददौ। तेन रमा श्रीनिवाससर्वाङ्गं मार्जयामास। ततः पार्वती-आनीत-धूपेन हरेः शिरोरुहान् विकीर्य धूपयित्वा सम्यक् केशान् बबन्ध। ततः सावित्री स्वर्णभूषितरत्नमुकुरं दर्शयामास। रतिः शची च चन्द्रवत् शुभ्रचामरौ वीजन्यौ। भारती भक्तियुक्ता श्रीनिवासाय छत्रं दधार। विष्णुपादोद्भवा गङ्गा पादयोः धारणार्थं पादुके ददौ। इन्द्रे व्यभिचरितवतीति गौतममुनिना शप्ता शिलात्वं प्राप्ता अहल्या याभ्यां ययोः पादयोः स्पर्शमहिम्ना शिलात्वमुक्ता यथापूर्वं स्वरूपं प्राप्ता तादृशस्वपादौ श्रीनिवासः गङ्गानीतपादुकाद्वये कृत्वा चरन् श्रेष्ठं भद्रासनं अगात्।

### मूलम्

ब्रह्मादयः सुरश्रेष्ठा इन्द्राद्या लोकपालकाः।
कश्यपादिमुनिश्रे[ष्ठा] वसिष्ठादितपोधनाः ॥ ५१ ॥

सनकाद्याश्च योगीन्द्राः [1]कण्वाद्याश्च ऋषीश्वराः ।
अर्यमाद्याश्च पितरस्तुम्बुर्वाद्याश्च गायकाः ॥ ५२ ॥

रम्भाद्याश्चैव नर्तक्यः सूतमागधबन्दिनः ।
[2]आसन्तो ह्यासने रम्ये पश्यन्तः पुरुषोत्तमम् ॥ ५३ ॥

१. भृग्वाद्याश्च । २. आसीनमासने रम्यं ।

**कल्याणकाण्डदीपः**

**ब्रह्मादयः** । आदित्यादिविश्वेवसवः इत्युक्ताः । **इन्द्राद्याः** अष्टौ । **कश्यपाद्याः** सप्त । **वसिष्ठाद्या** मरीच्यादयः सप्त । **सनकाद्याः** चत्वारः । **पश्यन्तः** 'अभूवन्' इति शेषः ।

**मूलम्**

स्वामिपुष्करिणीतीरे दक्षिणे पक्षिवाहनः ।
अष्टमीन्दुकलाकारे ललाटे दर्पणस्फुटे ॥ ५४ ॥

ऊर्ध्वपुण्ड्रं [1]दधाराशु श्रीनिवासः सतां गतिः ।
तदा मुहूर्तकालस्तु दर्शितो दैवचिन्तकैः ॥ ५५ ॥

तदाऽऽह [2]भारतीं राजन् बकुला लोकमातरम् ।
लेपनं कुरु कल्याणि ललाटे [3]कुङ्कुमं रमे ॥ ५६ ॥

१. दधाराऽथ । २. कमलां । ३. कुङ्कुमेन तु ।

**कल्याणकाण्डदीपः**

**लेपनमिति** । लिप्यते येन तल्लेपनम् । करणे ल्युट् । कुङ्कुमं क्षिप इत्यर्थः ।

**गूढकर्तृकव्याख्यानम्**

तदा ब्रह्मादयः आदित्याः विश्वे वसवः तुषिताः भास्वराः महाराजिकाः साध्याः रुद्राः । इन्द्रादयः अष्टदिक्पालकाः कश्यपादि-सप्त-ऋषिश्रेष्ठाः वसिष्ठादितपोधनाः सनकादियोगीन्द्राः भृगुप्रभृतयः ऋषीश्वराः अर्यमाद्याः पितरः तुम्बुर्वाद्याः गायकाः रम्भाद्याः नर्तक्यः सूतमागधबन्दिनः एते सर्वे श्रीनिवासं रम्यरत्नासनोपविष्टं पश्यन्तः आसन् । स्वामिपुष्करिणीतीरे दक्षिणे श्रीनिवासः अष्टमीन्दु-

कलासदृशे दर्पणवत् स्फुटे ललाटे ऊर्ध्वपुण्ड्रं धृतवान् । तस्मिन् काले ज्योतिःशास्त्रतत्त्वज्ञैः ज्योतिषिकैः सुमुहूर्तोऽयं कालः प्राप्तः इति सूचितः ।

ततः बकुला लोकजननीं रमां आह— "हे मङ्गलकरि ! श्रीश्रीनिवासस्य ललाटे कुङ्कुमकर्दमेन स्फुटं तिलकं रचय" इति ।

**मूलम्**

**एवमुक्त्वा देवमात्रा रमा कुङ्कुममालिखत् ।**
**भूषणानि स्वपुत्रस्य [1]पौत्रस्य जगदीश्वरः ॥ ५७ ॥**

**याचयित्वा महाराज कुबेरस्यापि सा रमा ।**
**आदाय तां ददर्शाथ भगवानाह मां नृप ॥ ५८ ॥**

**सम्भूषय वरारोहे भूषणैर्मां वरानने ।**
**एवमुक्त्वा हसन्ती सा भूषणान्यप्यभूषयत् ॥ ५९ ॥**

१. प्रददौ जगदीशितुः ।

**कल्याणकाण्डदीपः**

कुङ्कुमानन्तरं भूषणाय भूषणाभावात् लज्जया तरळात्मानं श्रीनिवासं विज्ञाय यातेन लज्जाहीनं वचनं वाचयित्वा लील्या अपहसिष्यन्ती सा रमा स्वपुत्रादीनां भूषणादीनि याचयित्वा एकस्मिन् पतद्ग्राहे निधाय तस्मै दर्शयामास । अथ श्रीनिवासः— किमर्थान्येतानि ? इति पप्रच्छ । तेषां अधिकानि न्यासार्थं मयि न्यस्तानीत्याह रमा । अथ लज्जाहीनं 'सम्भूषय' इत्यादि 'वरानने' इत्यन्तं वचनमाह । अथैवमुक्ता अपहसन्ती सा भूषणान्यप्यभूषयत् । न केवलं भूषणैस्तं किन्तु नान्यप्यभूषयत् असमान्यपि समीचकारेति 'भूषणानि' इत्यादेः 'अभूषयत्' इत्यन्तस्य भावार्थः ।

**गूढकर्तृकव्याख्यानम्**

तथा रमा कुङ्कुमेन श्रीनिवासललाटे तिलकं रचयामास । अनन्तरं धारणार्थं भूषणानि अपेक्षितानि । भूषणं किमपि नासीत् । श्रीनिवासस्य लज्जा अभूत् । तेन आत्मा तरलो जातः । एतद्विज्ञाय रमा लज्जाहीनं वचनं वाचयित्वा लील्या अपहसिष्यन्ती । तदा किं कर्तव्यम् ? कुबेरं याचित्वा भूषणानि आदाय एकस्मिन् पतद्ग्राहे नि५.५ तस्मै श्रीनिवासाय दर्शयामास । अथ श्रीनिवासः "किमर्थानि

इमानि ?'' इति पप्रच्छ । रमा आह— ''तेषां अधिकानि न्यासार्थं मयि न्यस्तानि'' इति । कथं वा भवतु लज्जाहीनः अहम् ? किं कर्तव्यम् ? चिन्ता न । ''तैरेव भूषणैः मां भूषय'' इत्याह श्रीनिवासः । तदा रमा अन्यतः याचित-हृत-भूषणैः अपहसन्ती श्रीनिवासं अभूषयत् । तथा धारणार्थं कानिचन आभरणानि पुत्राय विधये पौत्राय हराय ददौ । यद्यपि तानि भूषणानि असमानि आसन् । तथापि तानि समीकृत्य अभूषयत् ।

**मूलम्**

**पीताम्बरं दधाराशु कटिसूत्रमनर्घ्यकम् ।**
**स्वर्णैराभरणैर्वस्त्रैः भूषितस्तु ततो हरिः ।**
**कश्यपात्रिर्भरद्वाजवसिष्ठादिमहामुनीन् ॥ ६० ॥**

**नमश्चक्रे विरिञ्चेशो विनुतोऽपि विडम्बयन् ।**
**सन्ध्यामुपास्य विधिवत् कृत्वा तात्कालिकीः क्रियाः ॥ ६१ ॥**

**कल्याणकाण्डदीपः**

**मुनीश्वरान्** इति कारकद्वितीया । **तात्कालिकीः** प्रातरौपासनादयः । अथ भगवान् ह्यः पुलिन्दिन्या बकुलया च सम्पादितोपायनरूपमङ्गलोपस्कारमानय्येति मध्ये शेषः ।

**मूलम्**

**[1]वसिष्ठमाजुहावोच्चैः उत्तरं कार्यमाचरन् ।**

१. वसिष्ठमाहूयोवाच सन्तोषोद्रिक्तमानसः ।

**श्रीभगवानुवाच—**

**मुनिश्रेष्ठ वसिष्ठ त्वमुत्तरं कार्यमाचर ॥ ६२ ॥**

**गूढकर्तृकव्याख्यानम्**

अनन्तरं दिव्यपीताम्बरं परिदधौ । कटौ अनर्घ्यं कटिसूत्रं बबन्ध । एवं रत्नखचितभूषण-वस्त्राणि धृत्वा कश्यपादिमुनिश्रेष्ठान् प्रणनाम । विधिहरमुखसकलसुरगणैः विशेषेण नुतोऽपि प्रकृते प्राकृतदरिद्रनरवत् विडम्बयन् तात्कालिक-सन्ध्यावन्दन-औपासनादिक्रियाः विधिवत् विधाय

स्वपुरोहितं वसिष्ठं आहूय "मुनिश्रेष्ठ वसिष्ठ ! इतः त्वं उत्तरत्र कर्तव्यं समाचर । भवितव्यं सर्वं शीघ्रं भवतु" इत्याह । एतन्मध्ये अविस्मृत्य वदति । ह्यः पुलिन्दिन्या धर्मदेव्या बकुलया च यत् यत् सम्पादित-आनीत-उपायनरूप-मङ्गलोपस्करद्रव्यं तत् तत् अद्य शीघ्रं आनेतव्यं इति सन्दिदेश ।

**मूलम्**

**वासुदेववचः श्रुत्वा वसिष्ठो वदतां वरः ।**
**[1]विलिख्य वेदिकां तत्र मौक्तिकैश्चतुरस्रकाम् ।**
**वधूवरौ प्रतिष्ठाप्य सङ्कल्पविधिपूर्वकम् ॥ ६३ ॥**

१. विरच्य ।

**कल्याणकाण्डदीपः**

**वधूवरौ** लक्ष्मीवेङ्कटेशौ । **सङ्कल्पविधिपूर्वकमिति** । आसनप्राणायामौ कृत्वा "शुभे मुहूर्ते" इत्यारभ्य "दण्डकारण्ये स्वामिपुष्करिण्या दक्षिणे कूले शालिवाहनशके बौद्धावतारे वराहक्षेत्रे विळम्बिनामसंवत्सरे उत्तरायणे वैशाखमासे शुक्लपक्षे सप्तम्यां भौमवासरे एवंगुणविशिष्टायां शुभतिथौ वेदवत्यै दत्तवरपालनार्थं मद्भक्तलोकस्य दैवपित्र्यर्णापाकरणहेतुधर्मप्रजोत्पादनद्वारा भारतीरमणमुख्य-प्राणान्तर्गतश्रीलक्ष्मीनारायणप्रेरणया तत्प्रीत्यर्थं कल्याणाख्यसंस्कारकर्मशिक्षणार्थं श्रवणकीर्तनादिना चतुर्वर्गफलसिद्ध्यर्थं समस्तमङ्गलावाप्त्यर्थं पद्माकल्याणाख्यं कर्म करिष्ये । तदङ्गत्वेन शुद्ध्यर्थं वृद्ध्यर्थं स्वस्त्यर्थं स्वस्तिवाचनं मातृकापूजनं नान्दीसमाराधनं कुलदेवताप्रतिष्ठापनं च करिष्ये । तदादौ निर्विघ्नतासिद्ध्यर्थं गणपतिपूजां करिष्ये" इति सङ्कल्पविधिपूर्वकम् ।

**गूढकर्तृकव्याख्यानम्**

श्रीनिवासवचनं श्रुत्वा वाग्मिनां श्रेष्ठः वसिष्ठः मौक्तिकालङ्कारपूर्वकं चतुरस्रिकां वेदिकां विरच्य वधूवरौ लक्ष्मीश्रीनिवासौ प्रतिष्ठाप्य स्वस्तिपुण्याहवाचनकर्मप्रयुक्तं आदौ सङ्कल्पं कारयामास ।

ब्राह्मणान् वरयित्वा । आसनबन्धं कारयित्वा । ॐ केशवाय स्वाहा । नारायणाय स्वाहा । माधवाय स्वाहा । गोविन्दाय नमः । विष्णवे नमः । मधुसूदनाय नमः । त्रिविक्रमाय नमः । वामनाय नमः । श्रीधराय नमः । हृषीकेशाय नमः । पद्मनाभाय नमः । दामोदराय नमः । सङ्कर्षणाय नमः । वासुदेवाय नमः । प्रद्युम्नाय नमः । अनिरुद्धाय नमः । पुरुषोत्तमाय नमः । अधोक्षजाय नमः । नारसिंहाय नमः । अच्युताय नमः । जनार्दनाय नमः । उपेन्द्राय नमः । हरये नमः । श्रीकृष्णाय नमः ॥

ॐ प्रणवस्य परब्रह्म ऋषिः । परमात्मा देवता । दैवीगायत्रीछन्दः । प्राणायामे विनियोगः ॥ ॐ भूः । ॐ भुवः । ॐ स्वः । ॐ महः । ॐ जनः । ॐ तपः । ॐ सत्यम् ॥ ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमही । धियो यो नः प्रचोदयात् ॥ ॐ आपो ज्योति रसोमृतं ब्रह्मभूर्भुवः स्वरोम् ।

शुभे शोभनमुहूर्ते । श्रीविष्णोराज्ञया प्रवर्तमानस्य अद्यब्रह्मणः द्वितीयपरार्धे श्रीश्वेतवराहकल्पे वैवस्वतमन्वन्तरे कलियुगे प्रथमचरणे भरतवर्षे भरतखण्डे जम्बूद्वीपे दण्डकारण्ये देशे गोदावर्याः दक्षिणे देशे स्वामिपुष्करिण्याः दक्षिणे देशे शालिवाहनशके बौद्धावतारे वराहक्षेत्रे अस्मिन् वर्तमाने चान्द्रमानेन विलम्बिनामसंवत्सरे उत्तरायणे वैशाखमासे शुक्लपक्षे सप्तम्यां तिथौ भौमवासरयुक्तायां शुभनक्षत्रे शुभयोगे शुभकरणे एवंगुणविशेषणविशिष्टायां शुभतिथौ वेदवत्यै दत्तवरपालनार्थं मद्भक्तलोकस्य देव-ऋषि-पितृ-ऋणापकरणहेतुभूत-धर्मप्रजोत्पादनद्वारा श्रीभारतीरमणमुख्यप्राणान्तर्गत-श्रीलक्ष्मी-नारायणप्रेरणया श्रीभारतीरमणमुख्यप्राणान्तर्गतश्रीलक्ष्मीनारायणप्रीत्यर्थं कल्याणाख्यकर्मशिक्षणार्थं श्रवणकीर्तनादिना धर्माद्यखिलपुरुषार्थसिद्ध्यर्थं समस्तमङ्गलावाप्त्यर्थं पद्मावत्याः कल्याणाख्यं कर्म करिष्ये । तदङ्गत्वेन शुद्ध्यर्थं वृद्ध्यर्थं स्वस्त्यर्थं स्वस्तिवाचनं मातृकापूजनं नान्दीसमाराधनं कुल-देवताप्रतिष्ठापनं च करिष्ये" इत्यादिप्रकारेण सङ्कल्पं विधिपूर्वकं कारयामास ।

### मूलम्

**कृत्वा पुण्याहकर्माणि वरयित्वा द्विजन्मनः ।**
**अष्टवर्गं ततश्चक्रे सृष्टिकर्ता पितामहः ॥ ६४ ॥**

**ततो नियुक्ता विधिना दत्वा ताम्बूलदक्षिणाम् ।**
**[1]विप्रेभ्यो वेदविद्भ्यश्च तथा मङ्गलवादिनाम् ।**
**ददुर्देवा धनं वस्त्रं वासुदेवस्य ये प्रियाः ॥ ६५ ॥**

१. विप्राणां वेदविदुषां ।

### कल्याणकाण्डदीपः

धनं कनकाभिषेकम् ।

### गूढकर्तृकव्याख्यानम्

ततः ब्राह्मणैः सह स्वस्तिपुण्याहवाचनकर्म विदधौ । ततः सृष्टिकर्ता साक्षात् विधिः अष्टवर्गं निर्वर्तयामास । विधि-आज्ञया वेदाध्ययनसम्पन्नेभ्यः विप्रेभ्यः तथा मङ्गलाष्टकं वदद्भ्यः देवाः ताम्बूल-

दक्षिणाः ददुः । ततः श्रीनिवासस्य ये प्रियतमा देवाः ते श्रीनिवासाय सताम्बूलं सदक्षिणाकं वस्त्राणि पारिबर्हत्वेन ददुः । ततो विधिः कर्तव्यानि कर्माणि यथाविधि समापयामास ।

**मूलम्**

**भगवत्कृतपरिणयाङ्गकुलदेवताप्रतिष्ठाविधानम्**

**[1]समाप्य सर्वकर्माणि वसिष्ठस्तानि भूमिप ।**
**[2]कुलदेवीमपृच्छत्रं वसिष्ठो वसुधाधिप ।**
**स तस्य वचनं श्रुत्वा भगवानाह [3]तं हरिः ॥ ६६ ॥**

१. ततः समाप्य कर्माणि शास्त्रोक्तानि यथाविधि ।
२. कुलदैवं अपृच्छत् तं । ३. वै मुनिम् ।

**श्रीभगवानुवाच—**

**वसिष्ठ मम कल्याणी कुलदेवी शमी स्मृता ।**
**ममापि पाण्डवानां च नात्र कार्या विचारणा ॥ ६७ ॥**

**वसिष्ठ उवाच—**

**क्व चास्ति स द्रुमश्रेष्ठ [1]अगस्त्यो वाक्यमब्रवीत् ॥ ६८ ॥**

१. इत्युक्तेऽगस्त्य ऊचिवान् ।

**अगस्त्य उवाच—**

**अत्रैवोत्तरदिग्भागे तीर्थे कौमारसंज्ञिके ।**
**वर्तते वृक्षराजस्तु तत्र [1]गच्छ तमानय ।**
**अगस्त्यवचनेनैव तत्र गत्वाऽथ तं द्रुमम् ॥ ६९ ॥**

१. गत्वा ।

**कृत्वा प्रदक्षिणं राजन् भगवान् लौकिकीतनुः ।**
**नमश्चक्रे शमीदृ[illegible] कुलदैवं वृषाकपिः ॥ ७० ॥**

### गूढकर्तृकव्याख्यानम्

ततः वसिष्ठः पुरोहितः श्रीनिवासं इतः कुलदेवतापूजा प्रतिष्ठा कर्तव्या । अद्य तव कुलदेवता का ? इति पप्रच्छ । श्रीनिवासः आह— "पुरोहित ! मङ्गलकरि शमी मम कुलदेवता । अस्मद् पाण्डवानां च शमी कुलदेवता" इति । वसिष्ठः आह "तर्हि सा द्रुमश्रेष्ठा शमी कुत्र वर्तते ? भो अगस्त्यमुने" इति । अगस्त्य आह— अत्रैव उत्तरस्यां दिशि कुमारतीर्थं नाम अस्ति खलु । तस्य समीपे वृक्षराजः शमी अस्ति । तत्र गत्वा आनेतव्या" इति । अगस्त्ये एवं वदति क्षणे श्रीनिवासः पुरोहितसहितः कुमारतीर्थं गत्वा लौकिकशरीरधर्ता तं शमीं प्रदक्षिणीकृत्य नमश्चकार ।

**श्रीभगवानुवाच—**

**शमी शमय मे पापं शमी शत्रुविनाशिनि ।**
**अर्जुनस्य धनुर्धारि रामस्य प्रियदर्शिनि ॥ ७१ ॥**

**मातर्मे कुरु कल्याणमविघ्नेन सुरप्रिये ।**
**कलहः सर्वदेवानां राज्ञस्तस्य च नोद्भवेत् ॥७२ ॥**

**इति सम्प्रार्थ्य देवेशः कुलदेवीं सुरार्चिताम् ।**
**अर्चयित्वा विधानेन [1]स्कन्धाग्रात् समिधं स्वयम् ॥ ७३ ॥**

१. स्कन्धमल्पं महीपते ।

**निकृत्य शिरसा धृत्वा वादित्राणां स्वनेन च ।**
**पूरयन्नम्बरं सर्वं पुनः स्वस्थानमागतः ॥ ७४ ॥**

### गूढकर्तृकव्याख्यानम्

ततः कुलदेवतां शमीं प्रार्थयामास— "हे लोकपूजिते ! अस्मत्-कुलदेवते ! शमि ! त्वं शत्रूणां नाशयित्री । अर्जुनस्य गाण्डीवाख्यधनुर्बाणानां धारयित्री । श्रीरामस्य प्रियं कृत्वा तत् प्रीतिविषया भूता । भक्तस्य मे पापं परिहर । हे देववृन्दप्रीत्यास्पदे मातः ! कोऽपि विघ्नः यथा न भवेत् तथा मे कल्याणं कुरु । किञ्च, विवाहे जनसम्मर्दः स्यात् । येन केनापि कलहः द्वेषः असमाधानादिकं च भवेत् । अतः एकत्र सम्मिलितदेवानां आकाशनृपस्य च कलहादिकं मा भूत् । तथा त्वं अनुगृहाण ।" इत्येवं प्रार्थ्य विधिपूर्वकं अर्चयित्वा तद्वृक्षे अल्पस्कन्धं निकृत्य तं शिरसि धृत्वा मङ्गलवाद्यपूर्वकं सपुरोहितः स्वस्थानमागतः ।

दक्षिणाः ददुः । ततः श्रीनिवासस्य ये प्रियतमा देवाः ते श्रीनिवासाय सताम्बूलं सदक्षिणाकं वस्त्राणि पारिबर्हत्वेन ददुः । ततो विधिः कर्तव्यानि कर्माणि यथाविधि समापयामास ।

**मूलम्**

**भगवत्कृतपरिणयाङ्गकुलदेवताप्रतिष्ठाविधानम्**

[1]समाप्य सर्वकर्माणि वसिष्ठस्तानि भूमिप ।
[2]कुलदेवीमपृच्छत्रं वसिष्ठो वसुधाधिप ।
स तस्य वचनं श्रुत्वा भगवानाह [3]तं हरिः ॥ ६६ ॥

१. ततः समाप्य कर्माणि शास्त्रोक्तानि यथाविधि ।
२. कुलदैवं अपृच्छत् तं । ३. वै मुनिम् ।

श्रीभगवानुवाच—

वसिष्ठ मम कल्याणी कुलदेवी शमी स्मृता ।
ममापि पाण्डवानां च नात्र कार्या विचारणा ॥ ६७ ॥

वसिष्ठ उवाच—

क्व चास्ति स द्रुमश्रेष्ठ [1]अगस्त्यो वाक्यमब्रवीन् ॥ ६८ ॥

१. इत्युक्तेऽगस्त्य ऊचिवान् ।

अगस्त्य उवाच—

अत्रैवोत्तरदिग्भागे तीर्थे कौमारसंज्ञिके ।
वर्तते वृक्षराजस्तु तत्र [1]गच्छ तमानय ।
अगस्त्यवचनेनैव तत्र गत्वाऽथ तं द्रुमम् ॥ ६९ ॥

१. गत्वा ।

कृत्वा प्रदक्षिणं राजन् भगवान् लौकिकीतनुः ।
नमश्चक्रे शमीवृक्षं कुलदैवं वृषाकपिः ॥ ७० ॥

**गूढकर्तृकव्याख्यानम्**

ततः वसिष्ठः पुरोहितः श्रीनिवासं इतः कुलदेवतापूजा प्रतिष्ठा कर्तव्या । अद्य तव कुलदेवता का ? इति पप्रच्छ । श्रीनिवासः आह— "पुरोहित ! मङ्गलकरि शमी मम कुलदेवता । अस्मद् पाण्डवानां च शमी कुलदेवता" इति । वसिष्ठः आह "तर्हि सा द्रुमश्रेष्ठा शमी कुत्र वर्तते ? भो अगस्त्यमुने" इति । अगस्त्य आह— अत्रैव उत्तरस्यां दिशि कुमारतीर्थं नाम अस्ति खलु । तस्य समीपे वृक्षराजः शमी अस्ति । तत्र गत्वा आनेतव्या" इति । अगस्त्ये एवं वदति क्षणे श्रीनिवासः पुरोहितसहितः कुमारतीर्थं गत्वा लौकिकशरीरधर्ता तं शमीं प्रदक्षिणीकृत्य नमश्चकार ।

**श्रीभगवानुवाच—**

**शमी शमय मे पापं शमी शत्रुविनाशिनि ।**
**अर्जुनस्य धनुर्धारि रामस्य प्रियदर्शिनि ॥ ७१ ॥**

**मातर्मे कुरु कल्याणमविघ्नेन सुरप्रिये ।**
**कलहः सर्वदेवानां राज्ञस्तस्य च नोद्भवेत् ॥७२ ॥**

**इति सम्प्रार्थ्य देवेशः कुलदेवीं सुरार्चिताम् ।**
**अर्चयित्वा विधानेन [1]स्कन्धाग्रात् समिधं स्वयम् ॥ ७३ ॥**

१. स्कन्धमल्पं महीपते ।

**निकृत्य शिरसा धृत्वा वादित्राणां स्वनेन च ।**
**पूरयन्नम्बरं सर्वं पुनः स्वस्थानमागतः ॥ ७४ ॥**

**गूढकर्तृकव्याख्यानम्**

ततः कुलदेवतां शमीं प्रार्थयामास— "हे लोकपूजिते ! अस्मत्-कुलदेवते ! शमि ! त्वं शत्रूणां नाशयित्री । अर्जुनस्य गाण्डीवाख्यधनुर्बाणानां धारयित्री । श्रीरामस्य प्रियं कृत्वा तत् प्रीतिविषया भूता । भक्तस्य मे पापं परिहर । हे देववृन्दप्रीत्यास्पदे मातः ! कोऽपि विघ्नः यथा न भवेत् तथा मे कल्याणं कुरु । किञ्च, विवाहे जनसम्मर्दः स्यात् । येन केनापि कलहः द्वेषः असमाधानादिकं च भवेत् । अतः एकत्र सम्मिलितदेवानां आकाशनृपस्य च कलहादिकं मा भूत् । तथा त्वं अनुगृहाण ।" इत्येवं प्रार्थ्य विधिपूर्वकं अर्चयित्वा तद्वृक्षे अल्पस्कन्धं निकृत्य तं शिरसि धृत्वा मङ्गलवाद्यपूर्वकं सपुरोहितः स्वस्थानमागतः ।

श्रीनिवास उवाच—

सा कुत्र स्थाप्यते ब्रह्मन् वसिष्ठ कुलदेविका।
[१]एवमुक्ते वासुदेवे वसिष्ठं वसुधाधिप।
[२]नारदश्चान्तरं कृत्वा प्रोवाच मधुसूदनम् ॥ ७५ ॥

१. वदत्येवं। २. नारदश्चान्तिकं गत्वा।

**कल्याणकाण्डदीपः**

नारदश्चान्तरमिति। तत्र देवर्ष्यादयोऽत्र श्रीनिवासकल्याणसेवायामस्माकमवसरस्यापि स्यादिति तन्निरीक्षणे स्थिताः। अथ अन्तरं अवकाशं प्राप्त नारदः प्रोवाच इत्यर्थः।

**मूलम्**

नारद उवाच—

वराहशरणे देव स्थाप्यतां कुलदेवता।
यस्मिन् स्थाने स्वकं धाम तत्र तां स्थाप्य पूजयेत्।
एवं विद्वन्मतं पूर्वं निर्मितं परमेष्ठिना ॥ ७६ ॥

स नारदवचः श्रुत्वा वसिष्ठसहितो हरिः।
वराहशरणं गत्वा इदं वचनमब्रवीत् ॥ ७७ ॥

श्रीनिवास उवाच—

प्रसादात् तव गोविन्द विवाहं कर्तुमुत्सुकः।
सहितो धरया देव्या [१]भवानागच्छ पालय ॥ ७८ ॥

गुरुस्त्वं [२]मम लोकानां कृतकृत्यं च मां कुरु।
श्रीनिवासवचः श्रुत्वा भूधरो वाक्यमब्रवीत् ॥ ७९ ॥

१. त्वमागच्छ नृपालयम्। २. सर्व-।

### गूढकर्तृकव्याख्यानम्

ततः श्रीनिवासः "एतत्-कुलदेवता शमी कुत्र प्रतिष्ठापनीया ?" इति पुरोहितं पप्रच्छ । तदा तत्रमिलितदेवर्ष्यादयः शमीप्रतिष्ठाविषये स्वेषु विचारं कुर्वन्तः । तेषु नारदं अवकाशं कृत्वा पुरतः आगत्य एवमाह— "भो स्वामिन् ! श्रीनिवास ! श्रोतव्यम् । यत् स्वस्य स्थानं गृहं तत्र तां प्रतिष्ठाप्य पूजयेत् इति ज्ञानिनः विदन्ति । सम्प्रदायोऽपि अयम् । आदौ विधिना विहितम्" इति । एवं नारदे उपदिशति शास्त्रं श्रीनिवासः पुरोहितसहितः वराहदेवालयं गत्वा वराहं नत्वा तं एवं प्रार्थयते— "भो वेदप्रतिपाद्य वराह ! भवदनुग्रहात् अद्य अहं विवोढुं उत्सुकः । त्वं तव पत्नी धरादेव्या सह विवाहार्थं आकाशराजपत्तनं दयया आगच्छ । त्वं सर्वलोक-आदिगुरुः, पूज्यः । त्वं मां अनुगृह्य कृतार्थं कुरु" इति ।

### मूलम्

**वराह उवाच—**

**मम स्थाने महाराज बकुलां विद्धि [1]श्रीपते ।**
**क्षेत्रं पक्वं मदीयं तु तस्मान्मां त्यक्तुमर्हसि ॥ ८० ॥**

१. मे सखीम् ।

### कल्याणकाण्डदीपः

**क्षेत्रमिति** । फले पणं कृत्वा दत्ते क्षेत्रे केदारे किं तद्यात्रुपसत्त्येत्यादि साकूतं विनोदवचनमाह इत्यर्थः ।

### गूढकर्तृकव्याख्यानम्

श्रीनिवासोक्तिं श्रुत्वा वराह आह— श्रीनिवास ! सन्तोषोऽभूत् । भवतु । तव विवाहाय आगमिष्यम् । परन्तु अस्मिन्नेव समये मया अत्रैव भवितव्यं अस्ति । अत्र अहं न चेत् निर्वाह एव न । किं पृच्छसि वा । मम क्षेत्रं कृष्टं व्युप्तं सर्वं भूत्वा अद्य सस्यं पक्वम् । इदं विहाय कथं आगच्छानि । अतः मां त्यक्तुं अर्हसि । एवं उक्तवानिति मा कुप्य । मया नागतमपि मम स्थाने मम मित्रं बकुलां विद्धि । नागत इति ते चिन्ता माऽस्तु" इत्याह ।

### मूलम्

**वराहवचनं श्रुत्वा श्रीनिवासो वचोऽब्रवीत् ॥ ८१ ॥**

श्रीनिवास उवाच—

कुलदेवीप्रतिष्ठां च करिष्ये शरणे तव।
इत्येवं प्रार्थयन्तं तं श्रीनिवासं परात्परम् ॥ ८२ ॥
तथाऽस्त्वित्यवदद्राजन् कोलरूपी हरिः स्वयम्।
कलशे स्वर्णखचिते मुक्ताराशिं प्रपूर्य च ॥ ८३ ॥
वस्त्रेण वेष्टयित्वाऽथ पूजां कृत्वा विधानतः।
प्रतिष्ठाप्य वराहस्य सन्निधौ प्राकृतो यथा ॥ ८४ ॥

### गूढकर्तृकव्याख्यानम्

तदा श्रीनिवास आह— "स्वामिन् वराह ! इदं मे विज्ञापनम्। तव मन्दिरे अस्मत्-कुलदेवतां प्रतिष्ठापयामि" इति। ततः कोलः श्रीनिवासवचनं अङ्गीकृत्य "तथाऽस्तु। मम मन्दिरे स्थाप्यताम्" इति अनुमतिं ददौ। ततः श्रीनिवासः स्वर्णमये कलशे मुक्ताराशिं आपूर्य वस्त्रेण वेष्टयित्वा विधिपूर्वकं पूजयित्वा प्राकृतनरवत् वराहस्य सन्निधौ कुलदेवतां शर्मीं प्रतिष्ठाप्य स्वस्थानं आजगाम।

### श्रीनिवासेन कुबेरात् स्वीकृतऋणप्रकारः

पुनरागत्य स्वस्थानं श्रीनिवासः सतां गतिः।
अभोजनेन गन्तव्यं नारायणपुराह्वयम् ॥ ८५ ॥
आकाशराजनगरमिति निश्चित्य चेतसि।
ब्रह्माणमब्रवीद्राजन् त्वरया गमने रतः ॥ ८६ ॥

श्रीनिवास उवाच—

विधेऽद्यैव सेनां ते नियुङ्क्ष्व चतुरङ्गिणीम्।
[1]इतः सेनां चतुर्वक्त्र नारायणपुरं प्रति ॥ ८७ ॥
[2]वृथाकालं कृथाः पुत्र दूराध्वानं च वर्तते।
बलं [3]गूढतरं तात वृद्धबालाबलान्वितम् ॥ ८८ ॥

१. शीघ्रं गन्तुं। ३. सर्वं वने।
२. मा भूत् कालो वृथैवात्र दूरोऽध्वा ह्यस्य वर्तते।

**कल्याणकाण्डदीपः**

**वृथाकालमिति । कृथाः** अकृथाः कालक्षेपमकरोदित्यर्थः ।

**मूलम्**

**शनैर्गच्छतु [1]राजेन्द्र मुनिमण्डल[2]मागतम् ॥ ८९ ॥**

**स तस्य वचनं श्रुत्वा चक्रपाणेश्चतुर्मुखः ।**
**वचनं व्याहरत् [3]तीव्रं पितरं पुरुषोत्तमम् ॥ ९० ॥**

१. भो पुत्र । २. पूर्वकम् । ३. शीघ्रं ।

**गूढकर्तृकव्याख्यानम्**

ततः श्रीनिवासः पुत्रं आहूय पुरतः कर्तव्यकार्ये समालोचयितुं विधिं प्रति "विधे ! इतः तूर्ष्णीं उपविष्टं चेत् न भवति । शीघ्रं सर्वे प्रयातव्याः । यातव्य अध्वा बहुदूरं वर्तते । अतः भोजनेन गन्तव्यम् इति मतं चेत्, तथा न भवति । बहुकालो वृथा गच्छति । वयं तु देशकालावस्थानुगुणं आलोचनां कर्तुं अर्हाः वा न वा । अद्य भोजनाय बहुद्रव्यव्ययो भवति । तथा कर्तुं भवति वा । इदं सर्वं समं न भवेत् । अतः आकाशराजपत्तनं भोजनं अकृत्वा सर्वेऽपि अद्यैव प्रयातव्याः । अतः विधे ! ते चतुरङ्गसेनां आकाशराजनगराय शीघ्रं गन्तुं अद्यैव नियुङ्क्ष्व" इत्याह ।

एतन्मध्ये एकत्र उपविष्टाः विप्राः सर्वे मिलित्वा श्रीनिवासब्रह्माणौ प्रयाणे संलपन्तौ दृष्ट्वा एवं आलोचनां चक्रुः "चतुरङ्गबलसहितं सर्वे प्रयातव्या" इति श्रीनिवासः विधिं आदिशतीव । "आकाश-राजपत्तनं गन्तव्यमार्गः बहुदूरोऽस्ति । मार्गमध्ये जनसम्मर्दः भवेत् अतिशयः । तत्राऽपि सेनासहितं गमनं अस्माकं न योग्यम् । किमपि आकस्मिकं घटेत । तथा मा भूत् । अतः एवं कृतं चेत् साधु भवेत् । यावत् सेना पुरत एव गच्छतु । वयं तु भोजनं निर्वर्त्य गच्छाम" इति स्वेषु स्वेषु आल-पन्तः । श्रीनिवासः तत् श्रुत्वा विप्राशयं मत्वा पुनः विधिं आह "बलं सर्वं अद्यैव प्रयातव्यम् । तथा वृद्धाः बालाः पुरुषाः स्त्रियः समस्ता अपि शनैः शनैः प्रयान्तः भवन्तु । विप्राः शनैः शनैः गच्छन्तु । कालः अतिक्राम्यति । अध्वा दूरं वर्तते । सेना शनैः गच्छतु इति आदिश"इति । ततः श्रीनिवासमुखनिस्सृतं वचनं श्रुत्वा विधिः ब्रूते ।

मूलम्

**ब्रह्मोवाच—**

**कृत्वा पुण्याहकर्माणि प्रतिष्ठाप्य कुलेश्वरीम् ।**
**नोपवासेन गोविन्द गन्तव्यमिति [1]मां विदुः ॥ ९१ ॥**

१. मे मतिः ।

कल्याणकाण्डदीपः

अथ श्रीनिवासेन एवमुक्ते ब्राह्मणकुलमालुलोचे । भुक्तवतामस्माकं मार्गे असम्मर्दायेदानीमेव सेनाप्रस्थापनं क्रियते । अस्माकं तु भोजनोत्तरमित्याशयेन अजिगमिषुं मुनिमण्डलं प्रत्याह— **शनैरिति** । **आगतमिति** । कर्णोपकर्णन्यायेन अनाहूतमपि स्वयमागतमित्यर्थः । इदं तु कलिकालिकयजमानचित्तस्वभावमवेक्ष्य । **तीव्रमिति** । कृते प्रस्थानेन गन्तव्यमिति वचनं न ऋज्विति भावेन । **कृत्वेति** । **पुण्याहकर्माणि** । बहुवचनमाद्यर्थे । तदादीनि कर्माणि । नान्दीसमाराधनादीनि कृत्वा तथा कुलेश्वरीं प्रतिष्ठाप्य ब्राह्मणसमाराधनं कृत्वा आशीरादाय स्वयं भुक्त्वा गन्तव्यं नोपवासेन इति मुनयो मां **विदुः** वेदयामासुः । 'अतो वच्मि' इति शेषः ।

मूलम्

**मुनयः क्षुधिताः सर्वे बालवृद्धादयस्तथा ।**
**[1]एवमुक्ते चतुर्वक्त्रे चक्रपाणिरभाषत ॥ ९२ ॥**

१. वदत्येवं ।

कल्याणकाण्डदीपः

किञ्च गन्तुं जनानां न शक्तिरित्याह— **मुनय इत्यादिना** ।

गूढकर्तृकव्याख्यानम्

"स्वामिन् ! चक्रपाणे श्रीनिवास ! स्वस्तिपुण्याहकर्मादिकं कृत्वा नान्दीसमाराधनं कृत्वा तथा कुलदेवताप्रतिष्ठापनं कृत्वा ब्राह्मणसुवासिनीसमाराधनं कृत्वा तेभ्यः आशीः गृहीत्वा स्वयं भुक्त्वा गन्तव्यम् । उपवासेन न गन्तव्यम् इति मे अभिप्रायः । एवमेव चरितव्यं इति शास्त्रम् । विप्रा अपि तत्त्ववेदिनः । तेऽपि एवं अभिप्रयन्ति । श्रुतिस्मृतयः भवदाज्ञा । भवता प्रेरितः भवत्प्रीत्यर्थं वच्मि ।

किञ्च विप्राः सर्वेऽपि बालाः वृद्धाः स्त्रियः क्षुधिताः । भोजनं न चेत् दूरं चरितुं कथं शक्यते ? अतः अद्य वक्तव्यं उक्तवान् । एतदुपरि तव यथा सूक्तं तथा कर्तव्यम्" इति विज्ञापयामास ।

मूलम्

श्रीनिवास उवाच—

[1]वाक्यानि बहुधैर्याणि तव पुत्र पितामह ।
कथं कार्यमकार्यं च नैव जानासि [2]पण्डित ॥ ९३ ॥

[3]देशकालावतिक्रम्य भाषसे बालिशो यथा ।
वर्षाणामयुतं तात [4]गतमेकाकिनो गिरौ ॥ ९४ ॥

किञ्चिदुच्छ्रियमापन्नं कथं पश्यसि चक्षुषा ।
ज्ञात्वाऽपि रिक्ततां मेऽद्य त्वेवमुक्ते कथं भवेत् ॥ ९५ ॥

१. वचनानि महार्हाणि । २. पुत्रक ।
३. देशकालौ अनालोच्य । ४. गतं मे कानने ।

कल्याणकाण्डदीपः

**वर्षाणामयुतमिति** । एकाकिनो ममैकस्य गिरौ 'क्लेशेन' इति शेषः । इदानीं किञ्चित् उच्छ्रयं उत्सवं दैवादागतं चक्षुषा कथं पश्यसि ? पश्येः इत्यर्थः । येषां जनानां दर्शने सन्तोषो न भवति तेषां उत्सवं श्रुत्वा कथञ्चिदन्यत्र स्थातुं शक्यं चक्षुषा द्रष्टुं न शक्यमित्याभाणकं सूचयति ।

गूढकर्तृकव्याख्यानम्

पुत्रवचनं श्रुत्वा देवः लोकं विडम्बयन् एवं आह— "विधे ! तव वचनं महार्हम् । त्वां किं ब्रवीमि ? इदं कार्यं इदं अकार्यं इदं युक्तं इदं अयुक्तं इति कुतस्तव न ज्ञायते । देशकालावस्थानुगुणं आलोचनां अकृत्वा वृथा त्वं बालिशो यथा भाषसे खलु । इतो मम विचारः ईषदपि तव मनसि आयातो वा ? अहं एतद्-गिरिकानन गहप्रान्ते अतिक्लेशेन एकं न द्वे न दशसहस्राणि एकाकीकालं अनयम् । एतन्मम कष्टम् अवेक्षितव्यं वा न वा । भवितव्यं अभूत् । इदानीमपि किञ्चित् शिरः अदृष्टहीनस्य मे मद्भागे दैवं नाम चक्षुः उन्मील्य पश्यति । किञ्चित् अनुकूलतां सम्पादयति । अतः किञ्चित् शिरः उन्नमय्य भवानीति स्थिते तत् कथं तव चक्षुषा पश्येः ? ब्रूहि । प्रकृते मम योग्यता कीदृशी ?

स्थितिः कीदृशी ? इति चिन्तितव्यं वा न वा । मम रिक्तहस्ततां ज्ञात्वा ज्ञात्वा एवं उक्ते कथं भवेत् ? इति ।

**मूलम्**

**[1]एवमुक्ते स्वपितरि ब्रह्मा लोकपितामहः ।**
**तूष्णीमास महाराज [2]भगवत्पुरतो नृप ।**
**नीलकण्ठोऽब्रवीद्वाक्यं पितरं [3]स्वपितुस्तदा ॥ ९६ ॥**

१. वदत्येवं । २. भगवत्पुरतस्तदा । ३. स्वपितुस्ततः ।

**नीलकण्ठ उवाच—**

**श्रोतव्यं वचनं तात मम बालस्य [1]भूपते ।**
**विवाहकरणे देव तथा भवनकर्मणि ॥ ९७ ॥**

**आरब्धस्यान्तपर्यन्तं यो हि यत्नं समाचरेत् ।**
**स पुमानिति विख्यातो नरलोके [2]नरप्रिय ॥ ९८ ॥**

१. माधव । २. नरेश्वर ।

**कल्याणकाण्डदीपः**

**विवाहकरण** इति । **भवनकर्मणि** भवनबन्धनकर्मणि । निमित्तसप्तमी । स्तम्भस्थापननान्दी-समाराधनादिना **आरब्धस्य अन्तपर्यन्तं** वास्तुशान्तिवसन्ताराधनपर्यन्तं साक्षात् तद्धेतुभूतव्यापारो यथा अविलम्बेन प्रचरेत् तथा पूर्वमेव यत्नं यः समाचरेत् स पुमान् विख्यातः **नरप्रियः** नरसख इत्यर्थः ।

**मूलम्**

**सम्पाद्याः सर्वसम्भाराः शुभकार्येषु पुष्कलाः ।**
**बहुलार्थव्ययेनापि [1]अभावे ऋणमाचरेत् ।**
**स शम्भुवचनं श्रुत्वा शम्बरारिपिताऽब्रवीत् ॥ ९९ ॥**

१. तदभावे त्वृणं चरेत् ।

**कल्याणकाण्डदीपः**

मया आरम्भोपयोगिद्रव्यं सम्पाद्य आरम्भस्तावत् कृतः । एतदुपरि सम्पाद्य सम्भारान् सम्पाद्य भवितव्यं किं कर्तव्यम् ? इत्यत आह **सम्पाद्येति** । सम्पाद्य सर्वसम्भारानारम्भः, न त्वारभ्य सम्भारसम्पादने यत्नं कुर्वन् जनो न दृष्ट इति शेषः । सत्यमेतत् । सञ्चितं धनं नास्ति किं कर्तव्यम् ? इत्यत आह **अभाव इति** ।

**गूढकर्तृकव्याख्यानम्**

एवं श्रीनिवासे वदति विधिः देवपुरतः किमपि अनुक्त्वा तूष्णीं आस । ततः पौत्रः शिवः मम पिता तावत् तूष्णीं जातः । अतः अद्य यः कोऽपि प्रकृतोचितयुक्तायुक्तसमाधानं नोक्तं चेत् समञ्जसं नेति मत्वा श्रीनिवासपुरतः पुनः विज्ञापयति— "तात श्रीनिवास ! बालस्य मम वचनं किञ्चित् दयया श्रोतव्यम् । कः पदार्थोऽयम् ? बालिशः किमपि जल्पति इति न मन्तव्यम् । कुतः ? "युक्तियुक्तवचो ग्राह्यं बालादपि शुकादपि" इति अनुभविनो वदन्ति । अद्य ममेदं विज्ञापनम् । "लोके विवाहकरणे वा भवनबन्धने वा यः कर्म आरभ्य समाप्तिपर्यन्तं यः यत्नं चरेत् तथोक्ते विवाहकरणं नाम स्तम्भस्थापनं नान्दीसमाराधनं आरभ्य वास्तुशान्ति-वसन्ताराधन-पर्यन्तं क्रियमाणकर्मणि यः अविलम्बेन कर्म चरेत् किञ्च पूर्वमेव यत्नं कुर्यात् स एव पुमान्" इति विज्ञेयः ।

अत्र एवमाहुः— "अनारम्भो मनुष्याणां प्रथमं बुद्धिलक्षणम् । आरब्धस्यान्तगामित्वं द्वितीयं बुद्धिलक्षणम्" इति । किञ्च "विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः प्रारब्धमुत्तमगुणा न परित्यजन्ति" इति नीतेः । "वैवाहिकं कार्यम् । अङ्गीकृतं आरब्धं च । आरभ्य मध्ये बहुद्रव्यसाध्यं इति वैवाहिकात् विरतं चेत् किं कृतं अभूत् ? इदं लोकसम्मतं न । अतः बहुकष्टैरपि कार्यान्तगामित्वं एव धर्म्यं विहितं च । अतः विवाहाय सकलसाहित्यसम्भाराः अवश्यं सम्पादनीयाः । अद्य सञ्चितं धनं न, किं कर्तव्यं इति चेत्, पुरुषः यत्नं कुर्यात् । बहुलार्थव्ययेनापि कार्यं साधनीयम् । धनाभावे ऋणं चरेत् । ऋणाकरणे कथं शक्यते इति ।"

**मूलम्**

**श्रीभगवानुवाच—**

**[1]वचनं किमिदं प्रोक्तं सभायां पौरुषं शिव ।**
**पुरुषः पौरुषं यत्नमाचरेन्नैव भाषयेत्** ॥ १०० ॥

१. सभायां किमिदं प्रोक्तं पौरुषेण वचः शिव ।
को वाऽद्य ऋणदाताऽस्ति विवाहस्यास्य पुष्कलम् ।

**कल्याणकाण्डदीपः**

**पुरुष इति । पौरुषं** पुरुषसम्बन्धिनं यत्नं समाचरेत् । न स्त्रीवद्भाषयेत् इत्यर्थः ।

**गूढकर्तृकव्याख्यानम्**

पौत्रवचनं श्रुत्वा श्रीनिवास आह— "शम्भो ! किमिदं पौरुषं वचनं उक्तवान् । त्वदुक्तिप्रकारेणैव भवतु । ऋणं करवाम । अपि तु अस्मिन् विषमकाले कलौ ऋणदाता वा कोऽस्ति । विवाहस्य तु पुष्कलद्रव्यं ईप्सितम् । पुरुषो नाम स्वपौरुषबलात् यत्नं कृत्वा फलं पश्येत् । वृथा न भाषेत ।" इति ।

**मूलम्**

**एवमुक्त्वा शिवं प्राह कुबेरं पुरुषोत्तमः ॥ १०१ ॥**

**श्रीभगवानुवाच—**

**[१]निमन्त्र्य वर्तते किञ्चिदित [२]एहीति भूपते ।**
**इत्थमुक्तोऽथ धनदः पितामहसमन्वितः ॥ १०२ ॥**
**समुत्तस्थौ [३]सभायास्तु कुबेरः शिवसम्मतः ।**
**ब्रह्मणा सकुबेरेण शङ्करेण रमापतिः ॥ १०३ ॥**
**एकान्ते स्वामितीर्थस्य पश्चिमेऽश्वत्थसन्निधौ ।**
**[४]तानुवाच महाराज श्रीनिवासः सतां गतिः ॥ १०४ ॥**

१. निमित्तं । २. एहि धनाधिन ।
३. सभामध्यात् त्वरितं शिवसंयुतः । ४. गत्वोवाच धनेशानं ।

**कल्याणकाण्डदीपः**

**तानिति** । अश्वत्थसन्निधौ तानुपवेश्य कुबेरं प्रत्युवाचेत्यर्थः ।

**मूलम्**

**श्रीनिवास उवाच—**

**[१]साधयस्वाद्य वसुप कल्याणं मे कलौ युगे ।**
**दत्वा धनं यावदुक्तं पुत्रेण नरवाहन ॥ १०५ ॥**

१. साधयस्व महाभाग ।

**कल्याणकाण्डदीपः**

**साधयस्वेत्यादि** । हे नरवाहन ! वसुप ! **पुत्रेण** मत्पुत्रेण ब्रह्मणा उक्तं धनं **यावत्** यत्सङ्ख्या-परिमितं तावद्धनं दत्वा **कलौ युगे अद्य** अस्मिन्नहनि उपक्रान्तं कल्याणं साधयस्व इत्यर्थः । पूर्वयुगे कल्याणार्थं तु न मया बाधितमिति सूचनाय कलौ इति आरम्भान्यथाऽनुपपत्त्या अस्मिन्नहनि यद्भवितव्यं तन्मात्रं साधय इति **अद्य** इत्युक्तम् ।

**गूढकर्तृकव्याख्यानम्**

इत्येवं पौत्रं उक्त्वा श्रीनिवासः "ऋणं वा कुर्म" इति मनसि कृत्वा धनाधिपं कुबेरं प्रति "हे राजराज ! धनाधिप कुबेर ! इत एहि । किञ्चित् कार्यं भवितव्यं अस्ति त्वत्तः" इत्याह । ततः कुबेरः विधिना हरेण च सभामध्यात् उत्थितः । "किं करोमि आज्ञां दिशतु" इति आह । तदा श्रीनिवासः "तान् त्रीनपि स्वामिपुष्करिणीतीर्थपश्चिमे अश्वत्थवृक्षसन्निधौ एकान्तदेशे नीत्वा तान् उपवेश्य कुबेरं आह— "हे धनाधिप ! अद्य कलौ मम विवाहो निश्चितः । तदर्थं पुष्कलधनं अपेक्षितम् । अद्यैव मत्पुत्रेण विधिना यावदपेक्षितं धनं ऋणत्वेन दत्त्वा प्रकृतविवाहकार्यं साधय" इति ।

**मूलम्**

**वासुदेववचः श्रुत्वा वसुपालोऽब्रवीद् हरिम् ॥ १०६ ॥**

**कुबेर उवाच—**

**तवाधीनमिदं सर्वं जगदेतच्चराचरम् ।**
**बहूनां जीवराशीनां मध्ये कोऽहं जगत्पते ॥ १०७ ॥**

**कल्याणकाण्डदीपः**

**बहूनामिति** । त्वदधीनां बहूनां जीवराशीनां मध्ये अहमेको जीवः । अतो हे जगत्पते ! सकल-जगन्नियामक ! तव कोऽहम् ? महास्वामिनस्तव कार्यसाधने कः पदार्थः ? इत्यर्थः । त्वदनुग्रहेणैवाहं धनपतिपदार्थो नान्यथा इति भावः ।

**मूलम्**

**नियोजितस्त्वया तात रक्षितं च धनं मया ।**

दानादाने नैव शक्ति[१]र्ममास्ति गरुडध्वज।
[२]त्वन्निधेस्त्वं च दाता च दानादाने स्वतन्त्रवान् ॥ १०८॥

---

१. र्मम नास्ति खगध्वज।
२. गृहीत्वा त्वं च दाता च स्वतन्त्रोऽतस्त्वमेव हि।

**कल्याणकाण्डदीपः**

**त्वन्निधेः** त्वत्स्वामिकनिधेः। **त्वं च** त्वमेव। **दानादाने** त्यागपरिग्रहे त्वमेव **स्वतन्त्रवान्** निरुपचरितस्वाधीनस्वत्ववान्।

**मूलम्**

[१]एवमुक्ते धनपतौ श्रीपतिर्वाक्यमब्रवीत् ॥ १०९॥

---

१. ब्रुवत्येवं।

**गूढकर्तृकव्याख्यानम्**

तदा कुबेर आह— "हे स्वामिन्! जगदीश! चराचरात्मकं सकलं जगत् तव अधीनम्। तव इच्छामात्रेण सृष्टिस्थितिलयादिकं गच्छति। एवं त्वदधीनानां सकलजीवराशिमध्ये अहं एकः? अहं तव अधीनः। मयि स्थितं धनं तव अधीनम्। सकलं जगत् त्वदीयम्। एवं सति मदीयं नाम कुत आयातम्? तव धनमेव तव प्रेरणया अहं रक्षितवान्। तत् दातुं वा आदातुं वा अहं कः? मम का शक्तिः? त्वं स्वामी। अहं च धनं च तव स्वाम्यम्। गृहीता दाता वा त्वमेव। सर्वतन्त्रस्वतन्त्रः त्वमेव" इति।

**श्रीनिवास उवाच—**

[१]चतुर्मुखस्यैकदिने अवतारादिपञ्चकम्।
यदावतारसमये धनं नेष्यामि भूतलम्।
भूगतं च धनं राजन् नैव नेष्यामि मद्गृहम् ॥ ११०॥

---

१. एकस्मिन् ब्रह्मदिवसे त्ववतारा दश स्मृताः।
ममावतारसमये नानयामि धनं गृहात्।

**कल्याणकाण्डदीपः**

**चतुर्मुखस्यैकदिने अवतारद्विपञ्चकं** पञ्चानां सम्बन्धः पञ्चकः सङ्ख्यया संज्ञा सङ्घेत्यादिना कन्। द्वौ च तौ पञ्चकौ च द्विपञ्चकौ, अवताराणां द्विपञ्चकौ यस्मिन् कर्मणि तत् तथा प्रवर्तत इति शेषः। यदा अवतारसमये सम्पादितं धनं भूतलं नेष्यामि नेतुमिच्छामि। तच्च भूगतं धनं पुनरवतारसमये मद्गृहं **नैव नेष्यामि** नेतुं नेच्छामि किमुतेदानीमिति भावः। तवैव एतत् स्वामित्वं दत्तमिति भावः।

**मूलम्**

**यथायुगं यथाकालं यथादेशं यथावयः ॥ १११ ॥**

**कल्याणकाण्डदीपः**

तत् तवेदानीं किं न स्यात् ? इत्यत आह— **यथायुगमिति**।

"अनुष्ठितं तु यद्देवैर्मुनिभिर्यदनुष्ठितम्।
नानुष्ठेयं मनुष्यैस्तु उक्तं कर्म समाचरेत् ॥" इति युगाचारः।

अत एवोक्तं भगवत्पादैः "प्रजायते हि" इत्यादि।

**मूलम्**

**[१]तथाऽवतारमाकाङ्क्षन् रमयामि रमान्वितः।**
**निमित्तमात्रं दाने त्वं धनस्य नरवाहन ॥ ११२ ॥**

१. अवतारमहं कुर्वन् रमेऽत्र रमया सह।

**युगानुसारिणे देहि देशकालानुसारतः।**
**स तस्य वचनं श्रुत्वा कुबेरो वाक्यमब्रवीत् ॥ ११३ ॥**

**गूढकर्तृकव्याख्यानम्**

कुबेरस्य विनीतवचनं श्रुत्वा श्रीनिवास आह— "धनाधिप ! शृणु। यदुक्तं त्वया तत् सत्यम्। परन्तु इदं ब्रवीमि। चतुर्मुखस्य एकस्मिन् दिवसे अहं दश अवतारान् करोमि। अवतारसमये मत्सम्पादितधनं भूतलं नानयामि। किञ्च पुनरवतारसमये सञ्चितं भूगतं धनं मद्गृहं नेतुं नेच्छामि। अतः तद्-धनस्य स्वामित्वं तवैव दत्तम्।" कुबेर आह— "स्वामिन्! एतावत् तव इच्छा नासीत्। प्रकृते विवाहाय इच्छां कृतवान्। अतः धनस्य स्वामी भवितव्यः धनं स्वीकुरुष्व" इति। श्रीनिवास आह—

"कुबेर ! तथा न। अहं तावत् युगानुसारं कालानुसारं देशानुसारं वयोनुसारं अवतारं कुर्वन् रमया सह अत्र भुवि रममाणः स्वेच्छया क्रीडामि। मदिच्छा वृथा न भवेत्। अत्र एवं चरेत्— "अनुष्ठितं तु यद् देवैः मुनिभिर्यदनुष्ठितम्। नानुष्ठेयं मनुष्यैस्तु उक्तं कर्म समाचरेत्" इति। युगाचार ईदृशः। प्रकृते कलौ युगे नरलोके अवतीर्णे न मया युगानुसारिणैव चरितव्यम्। अतः त्वं धनस्य निमित्तमात्रं स्वामी भूत्वा युगानुसारिणे मे धनं देहि" इति।

**कुबेर उवाच—**

**युगानुसारिणस्तेऽद्य कथं दास्यामि चक्रभृत् ॥ ११४॥**

**कल्याणकाण्डदीपः**

**युगानुसारिण इति।** कलिमानुषप्रवृत्त्यनुसारिणः ते अद्य विवाहसमये **कथं दास्यामि** ? निह्नवप्रसक्तेरिति भावः।

**मूलम्**

**यदि दत्तं त्वया पत्रं तदा दास्यामि ते वसु।**
**[1]अधनो धनिनं लोके यथा काङ्क्षति भूमिप ॥ ११५॥**

**तथैव नरशार्दूल भगवान् लौकिकीतनुः।**
**एवं तद्वचनं श्रुत्वा हरिर्ब्रह्माणमब्रवीत् ॥ ११६॥**

१. अधनः सधनं।

**कल्याणकाण्डदीपः**

उत यथेत्यत आह **यदीत्यादि। अधनः** अधमर्णः। **धनिनं** उत्तमर्णं पर्युदञ्चने यथा काङ्क्षति तथा त्वया पञ्चारूढपत्रं यदि दत्तं स्यात्, तदा वसु दास्यामि इत्याहेत्यर्थः। **तथैवेति**। 'इत्याह' इति शेषः। अथ "कथं लेख्यम्" इत्यादि ब्रह्माणमुवाच इति शेषः।

**गूढकर्तृकव्याख्यानम्**

कुबेरः— "स्वामिन् ! त्वं कलिकालिकनरव्यवहारी चेत् धनं कथं ते दास्यामि ? वाङ्मात्रेण दातुं न शक्यते। लोके अधमर्णः उत्तमर्णं पर्युदञ्चने यथा काङ्क्षते तथा त्वया पञ्चारूढपत्रं दत्तं चेत् तर्हि वसु दास्यामि" इति। श्रीनिवासः तदा कुबेरमतं मत्वा "ऋणादाने पत्रं कथं लेख्यं" इति ब्रह्मणा सह

विचारयति । विधिं प्रति "विधे ! कुबेरस्तु ऋणं दातुं सिद्धः । अपि तु, पत्रं लेख्यं कथम् ? तद्वद" इति ।

मूलम्

**श्रीनिवास उवाच—**

**कथं लेख्यं मया पत्रं ऋणादाने वदाद्य मे ॥ ११७॥**

**कल्याणकाण्डदीपः**

"प्रत्यर्थिनाऽग्रतो लेख्यं यथा वेदितमर्थिना ।
समामास तदर्धाहर्नामजात्यादिचिह्नितम् ॥
प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्तितम् ।
एषामन्यतमाभावे दिव्यान्यतममुच्यते ॥
समक्षदर्शनात् साक्ष्यं श्रवणाच्चैव सिद्ध्यति ।
एकादशविधः साक्षी शास्त्रे दृष्टो मनीषिभिः ॥
कृतः पञ्चविधस्तेषां षड्विधोऽकृत उच्यते ।
लेखिता स्मारितश्चैव यदृच्छाभिज्ञ एव च ॥
गूढश्चोत्तरसाक्षी च साक्षी पञ्चविधः स्मृतः ।
ग्रामश्च प्राड्विवाकश्च राजा च व्यवहारिणाम् ॥
कार्येष्वाभ्यन्तरो यश्च अर्थिनोः प्रयतश्च यः ।
कुल्याः कुलविवादेषु भवेयुस्तेऽपि साक्षिणः ॥
उभयानुमतः साक्षी भवत्येकोऽपि धर्मवित् ।
त्र्यवराः साक्षिणो ज्ञेयाः ...................... ॥"

इत्यादिवचनानुसारेण ।

मूलम्

**ब्रह्मोवाच—**

**[१]ऋणस्थः श्रीनिवासस्तु धनस्थः नरवाहनः ।
आत्मकार्यनिमित्तं मे कल्याणार्थं कलौ युगे ॥ ११८॥**

१. ऋणग्राही श्रीनिवासो धनदायी धनेश्वरः ।

**कल्याणकाण्डदीपः**

पत्रलेखनप्रकारमाह— 'ऋणस्थ' इत्यादिना 'अश्वत्थवृक्ष' इत्यन्तेन ।

**मूलम्**

**[1]संवत्सरे विलम्बे च वसन्ते सप्तमीतिथौ ।**
**निष्काणां राममुद्राणां लक्षाणि च चतुर्दश ॥ ११९ ॥**

१. वैशाखे शुक्लसप्तम्यां विलम्बे चैव वत्सरे ।

**द्रव्यं दत्तं धनेशेन वृद्धिग्रहणकारणात् ।**
**सवृद्धि दित्सता मूलं स्वीकृतं चक्रपाणिना ॥ १२० ॥**

**विवाहवर्षमारभ्य सहस्रान्ते धनं पुनः ।**
**दास्येऽहं यक्षराजाय श्रीनिवासेन शार्ङ्गिणा ॥ १२१ ॥**

**[1]साक्षिभूतश्चतुर्वक्त्रो द्वितीयश्च त्रिलोचनः ।**
**तृतीयोऽश्वत्थवृक्षस्तु मा सन्देहो धनेश्वर ॥ १२२ ॥**

**इत्येतदृणपत्रं तु श्रीनिवासोऽलिखत् स्वयम् ।**
**एवं पत्रार्थमाकर्ण्य ऋणपत्रं रमापतिः ॥ १२३ ॥**

**लिखित्वा तत्करे दत्वा धनेशं चाब्रवीत् हरिः ।**
**धनं देहि धनेशान पत्रे लिखितमात्रकम् ॥ १२४ ॥**

१. एकः साक्षी चतुर्वक्त्रो ।

**कल्याणकाण्डदीपः**

**वसन्ते** वैशाखशुद्धसप्तम्याम् । **निष्काणामिति** । त्रेतायां रामावतारे भूमौ निहितद्रव्यराशिमध्य इति शेषः । **चतुर्दशेति** । अरुणाधिकरणन्यायेनामूर्तायाः सङ्ख्यायाः द्रव्यपरिच्छेदद्वारा दानकर्मत्वं बोध्यम् । **अश्वत्थवृक्षः** तत्स्थो नारायणः । त्रयाणां साक्षिणामधमर्णस्य चैकस्थानस्थितत्वात् अश्वत्थः साक्षीकृतः । एते कृतेषु लिखिताः साक्षिणः । लेखिता श्रीनिवास एव ।

मूलम्

एवमुक्तो वसुपतिर्वासुदेवेन भूमिप।
ददौ धनं कुबेरस्तु [1]कृतकृत्यो वृषाकपेः ॥ १२५ ॥

१. क्लृप्तसङ्ख्यं।

गूढकर्तृकव्याख्यानम्

ब्रह्मा आह— "कलौ युगे विलम्बिनामसंवत्सरे उत्तरायणे वसन्तर्तौ वैशाखमासे शुक्लपक्षे सप्तम्यां तिथौ भौमवारे अल्कावती-अधीशाय यक्षराजाय धनपतये कुबेराय वेङ्कटाचलवासिना वसुदेवपुत्रेण चक्रपाणि-चतुर्भुज-श्रीनिवासेन मया लिखितं पञ्चारूढपत्रक्रमः कीदृश इति चेत्— अस्मिन् दिने विवाहार्थं आत्मकार्यनिमित्तं त्वत्तः त्रेतायुगे रामावतारे भूमिनिहितद्रव्यराशिमध्ये चतुर्दशलक्षसङ्ख्याक-निष्काः राममुद्राः त्वया दत्ताः श्रीनिवासेन मया स्वीकृताः। एतत् मूलधनं वृद्धिसहितं दातुं सम्मतवान्। एतद्-विवाहवर्षमारभ्य सहस्रवर्षान्ते पूर्वनिरूपितं यावत् मूलधनं तावत् किञ्च तस्य मूलधनस्य वृद्धिधनं तदन्ते यावद् भवति तावच्च एवं मूलं वृद्धिं च आहत्य दातुं अङ्गीकृतवान् अस्मि॥ अस्य ऋणपत्रस्य साक्षी एकः चतुर्मुखः। साक्षी द्वितीयः त्रिलोचन ईश्वरः। साक्षी तृतीयः अश्वत्थवृक्षराजः तथोक्ते तदन्तर्गतः नारायणश्च॥ इत्येवं पत्रं श्रीनिवासेन लिखितम्॥ इत्येवं लेखनीयम्" इति विधिना उक्ते श्रीनिवासः स्वयं पत्रं लिखित्वा तद् ऋणपत्रं कुबेरस्य करे अदात्। ततः कुबेरं प्रति "कुबेर! कुत्र धनं देहि" इति पप्रच्छ। तेन प्रकारेण क्लृप्तसङ्ख्याक-राममुद्राः श्रीनिवासाय ददौ।

मूलम्

श्रीनिवासाज्ञया कुबेरकृतवैवाहिकपदार्थसज्जीकरणप्रकारः

दृष्ट्वा तद् धनराशिं तु तत्करेऽदाद्धरिर्नृप।
कुबेरमब्रवीद्देवः सम्भारानयनं प्रति ॥ १२६ ॥

श्रीभगवानुवाच—

आनीयतां तण्डुलं च प्रस्थमूलं धनेश्वर।

**माषाढकं समुद्गादि [१]वस्तु तत्र समानय।**
**गुडतैलमधुक्षीरशर्कराज्यदधीनि च ॥ १२७॥**

१. गोधूमांश्च।

**कल्याणकाण्डदीपः**

**आनीयतामिति । प्रस्थमूलं** प्रस्थः जनभोजनं, तस्य मूलं, तत्साधनद्रव्येषु आदिमं सम्पाद्यम् । तदुक्तं सुभाषिते— "शय्यागानं चन्दनं च चारुहासम्" इत्यादि । अश्वत्थाग्नीध्रकौपीनादिशब्दवत् । **प्रस्थः** पुरुषाहारपर्याप्तान्नसाधनतण्डुलादिषोडशपलात्मकं परिमाणम् । तत्परिच्छिन्नं तण्डुलादिरपि प्रस्थः । तत्सम्बद्धाज्जनभोजनमपि । **समुद्गादि** मुद्गसहितचणकादि । **क्षीरादि** क्षीरमादि यस्य तत् क्षीरादीति तद्गुणः । क्षीरं नवनीतम् । दध्याज्ययोः पृथगुपादानात् । उत क्षीरादिदुग्धफेनाख्यं भक्ष्यम् । तथा च क्षीरादीत्यनेन क्षीरं नवनीतं तक्रं दुग्धफेनं चेति चतुष्टयमुक्तं भवति । किञ्च क्षीरमादिर्यस्य मूलकारणं तत्क्षीरादि तक्रम् । एतस्य मूलं कारणं क्षीरं, मध्यं दधि, नवनीतमन्त्यम् । एतेन मथित्वा सद्योध्यतनवनीतं मथिरादीनि पण्यानि शर्करा तत्कृतलड्डुकमधूनि तानि च दधिशर्करादिदधीनीत्येकं पदम् । तं तदित्युक्तगुणं भवति । शर्करा आदिर्येषां तानि शर्करातद्घटविवक्षया भिन्नं वा ।

**गूढकर्तृकव्याख्यानम्**

यदा धनं आत्मकरगतं अभूत् तदा श्रीनिवासः तत्सर्वं तस्मै एव कुबेराय समर्प्य तं प्रति तेनैव धनेन सर्वसम्भारान् आनेतुं एवं वदति— "हे धनपते ! विवाहार्थं सर्वविधसम्भाराः सम्पादनीयाः । अत्र कर्मणि त्वमेव यजमानः । त्वमेव एतत् महाकार्यं निर्वाह । पुण्यकीर्तिभाजनं भव । सर्वारम्भं तण्डुलं प्रस्थमूलं इत्युक्तेः आदौ सर्वजनानां पर्याप्त-तण्डुलं आनेतव्यम् । इदं प्रथमं सम्भावयितव्यम् । किञ्च माष-आढक-मुद्ग-चणक-गोधूम-कुलित्थ-तिल-नीरक-मरीच-सर्षप-कुस्तुम्बुरु-हिङ्गु-मेथिका-हरिद्रा-मूलतिन्त्रिणीफल-लवण-गुड-शर्करा-तिलतैल-नारिकेलतैल-मधु-क्षीर-नवनीत-आज्य-दधि-कुङ्कुम-केसर-कर्पूर-लवङ्ग-एला-तण्डुल-जातिपत्र-जातिफल-बादाम-द्राक्षा-खर्जूर-कदलीफलं नारङ्ग इत्यादिपदार्थाः ।

**मूलम्**

**वस्त्राणि [१]मौल्ययोग्यानि उत्तरीयाणि भूपते।**
**तिलहिङ्गुमरीचादिजीरसर्षपमेथिकान् ॥ १२८॥**

१. योग्यमूल्यानि सोत्तरीयाणि चानय।

हरिद्राक्तानि कुर्वीथा वस्त्राणि द्विजयोषिताम्।
'कुचोळाश्च महाराज क्रियन्तामिति चाब्रवीत् ॥ १२९ ॥

देवानामुत्तरीयाश्च देवस्त्रीणां दुकूलकान्।
पूगीफलानि दिव्यानि नागवल्लीदलानि च ॥ १३० ॥

एलालवङ्गकर्पूरमृगनाभिरसं तथा।
माङ्गल्यतन्तुं कन्यार्थं कनिष्ठाङ्गुलिमुद्रिकाम् ॥ १३१ ॥

हस्ताङ्गुलीयकं मेऽद्य कुबेर कुरु शीघ्रतः।
गोविन्दवचनं श्रुत्वा निर्ममे क्षणमात्रतः ॥ १३२ ॥

१. कम्बलांश्च धनाधीश।

**कल्याणकाण्डदीपः**

**वस्त्राणीति**। **मौल्ययोग्यानि** महाधनानि **वस्त्राणि** आच्छादनानि **उत्तरीयाणि** सङ्ख्यानानि **पूगीफलानि** कोलानि नागवल्लीदळानि कलपत्राणि। **कुचोळा इति**। कुकुत्सिताश्चैलन्यूनगुणाश्चोळाः कूर्पासकाः क्रियन्ताम्। अन्यथा चैलाञ्चलेन वृक्षोऽनाच्छाद्य प्रचरेयुरिति। तदुक्तं भारते—

"मानेन रक्ष्यते धान्ये अश्वात् रक्षत्यनुक्रमः।
अभीक्ष्णदर्शनाद्गाश्च स्त्रिया रक्ष्याः कुचोळतः॥" इति। (५.३४.४०)

'काचोळाश्च' इति पाठे कु ईषत् चोळा अल्पाश्चोळा इत्यर्थः। ईषदर्थ इति कोः कादेशः। "पापकुत्सेषदर्थे कु" इत्यमरः। अत एव वधूदेयकूर्पासे काचोळीति लौकिकानां व्यवहारः।

**गोविन्दवचनमिति**। श्रीनिवासानुग्रहात् क्षणमात्रतो निर्ममे।

**गूढकर्तृकव्याख्यानम्**

योग्यमूल्यानि परिधानवस्त्राणि दुकूल-कार्पास-वस्त्राणि उत्तरीयवस्त्राणि। कानिचन वस्त्राणि हरिद्राक्तानि सम्भावितव्यानि। ब्राह्मणसुवासिनीनां दानार्थं वस्त्राणि। विविधकम्बलाः। रत्नकम्बलाः सामान्यकम्बलाः। एते क्रियन्ताम्। देवानां देवस्त्रीणां धारणार्थे दुकूलवस्त्राणि उत्तरीयवस्त्राणि, दिव्य-कोमल-नागवल्लीदलानि, पूगीफलम्, मृगमदः, मार्जारतैलं, चन्दनागरु इत्यादि परिमलद्रव्याणि। कन्यार्थं मङ्गलसूत्रम्, कनिष्ठाङ्गुलिमुद्रिका, हस्ताङ्गुलीयकम्, इतरकन्यालङ्काराः, मेखला, नाग, केयूर,

नूपुर, पादकटक, कर, सुवर्णरत्नवलय, कङ्कण, शिरोभूषण, नासिका-मौक्तिकाः मुखर-कर्णाभरण इत्यादयः शीघ्रं सम्पाद्यन्ताम्'' इति आदिदेश ।

**मूलम्**

**कुबेर उवाच—**

**त्वत्प्रसादेन गोविन्द [1]किं न स्यात् किल देहिनः ।**
**पाकार्थं पुण्डरीकाक्ष नियुङ्क्ष्वाग्निमतःपरम् ॥ १३३ ॥**

**भगवदाज्ञया वह्निकृतदिव्यान्नसज्जीकरणप्रकारः**

**एवमुक्तः कुबेरेण श्रीनिवासः सताङ्गतिः ।**
**षण्मुखं प्रेषयामास [2]अग्न्याह्वानक्रिये हरिः ॥ १३४ ॥**

१. सर्वं सज्जीकृतं मया । २. वह्नेराह्वानकारणात् ।

**कल्याणकाण्डदीपः**

अथ श्रीनिवासं प्रति कुबेरो विज्ञापयामास सर्वं सिद्धमिति । अथ तेन कथमल्पेन कालेन सर्व-सम्भारसम्भरणं स्यात् ? इति पृष्ट आह **त्वत्प्रसादेनेत्यादि** । त्वदनुग्रहे कीटस्यापि राज्यपालनशक्तिः, किमिदमाश्चर्यं मनुष्यधर्मिणो मम ? इति भावः । **अग्न्याह्वानक्रिये इति** । अग्न्याह्वानं क्रिया कर्म यस्मिन् कर्मणि तदग्न्याह्वानक्रियं, तच्च तमादाय गमनं तस्मिन्, इत्यर्थः ।

**मूलम्**

**स गत्वा त्वरितं स्कन्दः [1]शीघ्रमादाय चानलम् ।**
**सम्प्राप्तो वायुवेगेन जातवेदा जनार्दनम् ।**
**ततः प्रोवाच भगवान् त्वरितं हव्यवाहनम् ॥ १३५ ॥**

१. शासनं ज्ञापयन् हरेः ।

**गूढकर्तृकव्याख्यानम्**

ततः भगवदाज्ञानुसारेण कुबेरः समस्तपदार्थान् शीघ्रं निर्माय श्रीनिवासं प्रति ''स्वामिन् ! जगदीश ! भवदाज्ञया सर्वाणि सज्जीकृतानि । इतःपरं पाकार्थं अग्निनियोजनं त्वया कर्तव्यम् ।

इदं समीचीनं भवेत् । ततः श्रीनिवास आह— "कुबेर यद्यपि त्वं धनपतिः, तथाऽपि कथं एतावत् शीघ्रं पदार्थान् सम्पादितवान् ? कुबेर आह— "स्वामिन् ! जगदीश ! भवदनुग्रहे कीटकस्यापि राज्य-पालनशक्तिः सम्भूता । एवं स्थिते मनुष्यधर्मणः मम एतावत्पदार्थसम्पादनशक्तिः कियती ? नेदं आश्चर्यम् । 'किमलभ्यं भगवति प्रसन्ने श्रीनिकेतने' इत्युक्तेः भवत्कृपाकटाक्षमात्रेण अलभ्यं किमपि जगति नास्ति । सर्वं सिद्धं अभूत् ।" श्रीनिवासः ततः कुबेरसूचनेन, षण्मुखं प्रेषयित्वा तद्द्वारा अग्निं आनाय्य तं आदिदेश ।

### मूलम्

**श्रीभगवानुवाच—**

**[1]पाकं भक्ष्यान्नशाकानां कुरु स्वाहासमन्वितः ।**
**नारायणवचः श्रुत्वा नारायणमभाषत ॥ १३६ ॥**

**अग्निरुवाच—**

**पाकार्थं भोजनं कृष्ण नास्त्येकमपि मे हरे ।**
**कार्यः पाको महाराज बहूनां भक्तवत्सल ।**
**स तस्य वचनं श्रुत्वा सन्तर्ज्याग्निमभाषत ॥ १३७ ॥**

१. क्षणात् भक्ष्यान्नशाकादि ।

### कल्याणकाण्डदीपः

**स तस्येत्यादि ।** सन्तर्ज्य किं वदस्यकार्यकरी वेत्यग्निं सम्भर्त्स्य देवान् कटाक्षीकृत्य अभाषत इत्यन्वयः ।

### गूढकर्तृकव्याख्यानम्

श्रीनिवासः अग्निं आदिशति— "हव्यवाहन ! त्वं पाकाध्यक्षो भूत्वा तव भार्या स्वाहासमन्वितः क्षणात् नानाविध-षड्रसोपेत-भक्ष्य-भोज्य-चोष्य-लेह्य-पानीयपदार्थ-पाककार्यं निर्वाह्य क्षणादेव पाकं कुरुष्व ।" अग्निराह— "स्वामिन् ! भवदाज्ञाधारकोऽहं सिद्धोऽस्मि । पाकः करिष्यति तावत् । परन्तु पाकार्थं योग्यभाजनानि न । किञ्च बहुजनानां पाकः कर्तव्योऽस्ति । तदुचित-बृहत्-बृहत्-भाजनानि न । भाजनानि विना पाकः कथं भवेत् ? प्रकृते भाजनं एकमपि न ।" इति । तथोक्ते तदा श्रीनिवासस्य आग्रहो जातः ।

**मूलम्**

**श्रीभगवानुवाच—**

**भवतां भवने तात किञ्चिज्जाते महोत्सवे ।**
**भाजनानि महाभाग वर्धन्ते वटबीजवत्** ॥ १३८ ॥

**मम कल्याणसमये भाण्डमेकं न दृश्यते ।**
**दैवमेव परं मन्ये [1]सर्वथा सर्वसाधने** ॥ १३९ ॥

१. सर्वेषां ।

**कल्याणकाण्डदीपः**

**भवतामिति** । हे तात ! महाभाग ! अग्ने यथा अण्वेकमपि वटबीजं शाखोपशाखाभेदेन महता वृक्षाकारेण वर्धते, यथा भवतां भवने साधारणे काले प्रतीयमानमेकैकमपि भाजनं किञ्चिन्महोत्सवे जाते प्रसक्ते सति भाजनानि शतशः सहस्रशः वर्धन्त इत्यन्वयः । श्रीमतामेवं पात्रवर्धनं न चित्रं रिक्तानामपि पात्रवर्धनेन कार्यं साधनं भवतीत्याह **भवतामिति** ।

'भवताम्' इत्यारभ्य 'सर्वसाधन' इत्यन्तस्यायं भावार्थः— भवतां भवने रिक्ता भूत्वा भवतां सतां भवन इत्यर्थः । यद्येकमपि कुम्भो वा स्थाली वा कटाहो वा कंसो वा दर्वी वा । यद्वा, किञ्चिद्भाजनं एकैकस्यां जातौ एकैकमेव भवेदपि कृतप्रतिकृतान्योन्यन्यायेन पर्यायेण प्रचारितं स तत्तत्पात्र-मेकैकमपि स्वभवने किञ्चिदुत्सवे प्रसक्ते सति पात्राणां शतानि सहस्राणि च प्रसूते । यस्य रिक्तस्य बीजस्थानीयमेकमपि भाण्डं नास्ति । कृतप्रकृतिकृतान्योन्यन्यायेन पात्रप्रचारायोगान्नदृष्टोपायेन कार्यसिद्धिः तस्य धर्म एव परायणमिति । यद्यपि निर्धनस्य सहायसम्पदा कार्यं सिद्ध्यति, तथाऽपि मम कल्याणसहायः शुकः तं प्रति पात्रयाचने कौपीनं पृच्छति तस्माद्दैवमेव परं मन्ये इति ।

**गूढकर्तृकव्याख्यानम्**

अग्निं भर्त्सयति— "किं तात अग्ने ! देवान् कटाक्षीकृत्य यथा एकमपि वटबीजं शाखोप-शाखाभेदेन महावृक्षाकारेण वर्धते तथा भवतां भवने विद्यमानं एकैकमपि भाजनं किञ्चित् महोत्सवे जाते भाजनानि शतशः वर्धन्ते । श्रीमतां एवं पात्रवर्धनेन कार्यसाधनं चित्रं न । रिक्तानामपि एवं पात्रवर्धने चित्रम् । श्रीमतां सर्वक्रियाः अनुकूलाः स्वयं सम्भवन्ति । निर्धनस्य तु इतर-आश्रयं सम्पाद्य कार्यानुकूल्यं क्रियते । प्रकृते मम कल्याणे अनुकूलं पात्रं एकमपि न । निष्किञ्चनस्य मे पात्रं कुत

आयास्यति ? साकल्येन सर्वेषां अपि सर्वकार्यानुकूलतायां दैवमेव परं मन्ये । मम तु दैवं कुत्र अस्ति ? प्रकृते दैवमेव मुख्यतः विश्वरय तूर्ष्णी स्थितं चेत् कथं भवति ? "पात्रं अपेक्षितं, पात्रं अपेक्षितं" इति मुखेन उद्गतमात्रे कथं कार्यं सिद्ध्येत् ? उद्यमेन हि सिद्ध्यति । अद्य पात्रदाता सहायकः कोऽपि मे न । शुकमुनिरेकः अस्ति । सः कौपीनधारी । स किं दद्यात् ? तं विना अपरः कोऽपि सहायो न ।

**मूलम्**

**उपायं शृणु समास्य पाकार्थं भाजनानि मे ।**
**अन्नं स्वामिसरोमध्ये सूपं पापविनाशने ॥ १४० ॥**

**[1]वियद्गङ्गे महाभाग परमान्नं गुडान्वितम् ।**
**देवतीर्थे शाकमग्रे तुम्बुतीर्थे घृतं तथा ॥ १४१ ॥**

**कुमारधारिकातीर्थे भक्ष्याणि विविधानि च ।**
**पाण्डुतीर्थे [2]महाराज कर्तव्यं रसमुत्तमम् ॥ १४२ ॥**

**व्यञ्जनान्यन्यतीर्थेषु कन्दमूलफलैरपि ।**
**क्रियन्तां [3]कन्दमूलैश्च तीर्थेष्वन्येषु [4]भूपते ॥ १४३ ॥**

**वासुदेवस्य वाक्यानि प्रशशंसुर्महर्षयः ॥ १४४ ॥**

१. वियद्गङ्गाजले वह्ने । २. च कर्तव्यो तिन्त्रिणीरस उत्तमः ।
३. लेह्यपेयानि । ४. पावक ।

**कल्याणकाण्डदीपः**

एवमपि हे समास्य ! मम योगीशस्योपायं शृण्वित्याह 'उपायम्' इत्यादिना 'भूपते' इत्यन्तेन । स कः ? इत्यत आह— **पाकार्थमिति** । पाकार्थं भाजनानि मे अलौकिकानीति शेषः । तानि कानि ? इत्यत आह— **अन्नं स्वामिसरोमध्य** इत्यादिना ।

*अयं भावः*— तीर्थाभिमानिनो देवाः योगीशश्रीनिवासयोगबलोपोद्बलितेन स्वस्वयोगबलेन दिव्यविचित्रधातुमयचरुस्थाल्याद्यात्मना आविर्भूय स्वस्वतटाके अधिश्रयण्यामधिश्रिताः सन्तः स्वं

स्वं दर्शयामासुः । तत्र स्वामिसरः चरुस्थाली बभूव । पापविनाशनं सूपभाजनम् । वियद्गङ्गा परमान्न-स्थाली । देवतीर्थं शाकपचनम् । तुम्बुतीर्थं घृतकुम्भी । कुमारतीर्थं नानाविधभक्षपाकोचितपात्राणि । पाण्डुतीर्थं रसावपनम् । एवमन्यानि तीर्थानि । यथा देवानामेव विष्णोः चक्रशङ्खगदापद्मात्मता तक्षकस्य बाणरूपता । काद्रवेयानां उच्चैःश्रवो रोमात्मता तद्वत् तीर्थाभिमानिदेवानां पात्रात्मकत्वं नादृष्टचरमिति ध्येयम् ।

### गूढकर्तृकव्याख्यानम्

अतः एवं सत्यपि योगीश्वरोऽहं, अग्ने ! उपायं वदामि, शृणु । मया सम्भावयितव्य-पाकभाजनानि अलौकिकानि । स्वामिपुष्करिणीतीर्थं अन्नभाजनम् । तत्र अन्नं कुरु । पापविनाशने सूपं कुरु । वियद्-गङ्गायां परमान्नम् । देवतीर्थे शाकम् । तुम्बुतीर्थे घृतम् – नवनीतं तपनीयम् । कुमारधारिकायां विविध-भक्ष्याणि । पाण्डुतीर्थे उत्तमतिन्त्रिणीरसम् । अन्य-अन्य-तीर्थेषु कन्दमूलफलैः विविधव्यञ्जनानि, लेह्य-चोष्य-पेयानि कुरु । इत्येवं पात्रसम्पादनक्रमं उपदिदेश ।

अत्र एवं मन्तव्यम्— अत्र एकैकं तीर्थं एकैकं पात्रस्थानीयं जातम् । तत् तत् तीर्थाभिमानिदेवाः योगीश्वरश्रीनिवासस्य योगबलेन उपोद्बलितेन स्व-स्व-योगबलेन दिव्य-चित्र-धातुमय-चरुस्थाल्या-द्यात्मना आविर्भूय स्व-स्व-तटाके अधिश्रयिण्यां अधिश्रिताः सन्तः स्वं स्वं दर्शयामासुः । (एवं तत्र देवानां चक्रशङ्खगदापद्मात्मता । तक्षकस्य बाणरूपता । काद्रवेयानां उच्चैःश्रवो रोमात्मता । तद्वत् तीर्थाभिमानिदेवानां पात्रात्मकत्वं इति ध्येयम् ।) एवं वैकुण्ठाधीश श्रीहरेः यानि यानि चरितानि तानि सर्वाणि अतिविचित्राणि । पूर्वं कदापि दृष्टानि न श्रुतानि न । किञ्च परमात्मा युगानुसारी । मां निर्धनवत् अनुकरोति यत् तदेव चित्रम् । अचिन्त्यम् । इत्येवं जगदीश-श्रीनिवास-लीला अधिकृत्य महर्षयः प्रशशंसुः ।

### मूलम्

[1]तथा च कृतवान् जातवेदो वेदविदां वरः ।<br>
एवं विचित्रकार्याणि हरेर्वैकुण्ठवासिनः ॥ १४५ ॥

युगानुसारिणस्तस्या[2]द्भुतं तन्तुविडम्बनम् ।<br>
अचिन्त्यं देवताकार्यं ह्यवाङ्मानसगोचरम् ॥ १४६ ॥

---

१. तथैव । २. तदद्भुतविडम्बनम् ।

**कल्याणकाण्डदीपः**

**एवमिति** । यद्यपि हरेः यानि यानि चरितानि तानि सर्वाणि **एवं** यथा तीर्थानामेव पाकपात्रता एवमेव **विचित्रकार्याणि** अदृष्टाश्रुतपूर्वाणि । तथाऽपि वैकुण्ठवासिनो हरेर्युगानुसारिणः, इदानीं **यद्विडम्बनं** निर्धनादिवल्लोकानुकरणं तदेवाद्भुतम् । इदमित्थं एतावदेवेत्येवं वक्तुमशक्यत्वादचिन्त्यम् । इत्याद्येवं वासुदेवस्य वाक्यानि महर्षयः प्रशशंसुः इति पूर्वेणान्वयः । **तथा च कृतवानिति** । यथा श्रीनिवासेनोक्तं तथा च तथैव वेदविदां वरः अग्निः चकार इत्यर्थः ।

**मूलम्**

**अग्निरुवाच—**

**दध्योदनं तिलान्नं च परमान्नं मधुस्रवम् ।**
**[1]माषापूपान् गुडापूपान् शाकसूपरसार्द्रकान् ॥ १४७ ॥**

**सतिन्त्रिणीरसोपेतं कूष्माण्डं सूपपूरितम् ।**
**कन्दमूलफलं चापि भक्ष्यकारेण कारितम् ॥ १४८ ॥**

१. माषापूपा गुडापूपाः शाकद्वयमतःपरम् ।

**कल्याणकाण्डदीपः**

तदेव विशदयति— 'दध्योदनं' इत्यादिना 'रसार्द्रकान्' इत्यन्तेन । दध्योदनस्वरूपमुक्तम् । **तिलान्नं** कृसरान्नम् । परमान्नस्वरूपमुक्तम् । **माषापूपान्** वटकपर्पटक्षुद्रवटकादीन् । **गुडापूपान्** पौळिकादीन् । **रसार्द्रकान्** शृङ्गबेरजम्बीरनागरङ्गादिरससंस्कृतान् तक्रान्तान् चकारेत्यर्थः ।

**मूलम्**

**[1]पाकं सम्पूर्णतां प्राप्तं त्वत्प्रसादेन केशव ।**
**[2]आमन्त्रयद् द्विजेन्द्राणां सुराणामपि भूमिप ॥ १४९ ॥**

१. पाकः सम्पूर्णतां प्राप्तः ।
२. आमन्त्रय द्विजेन्द्रांश्च सुरानपि मुनीनपि ।

**गूढकर्तृकव्याख्यानम्**

ततः वेदविदां श्रेष्ठः अग्निः श्रीनिवासं आह— "जगदीश ! सर्वपाकाः सिद्धाः । दध्योदनं, तिलान्नं, परमान्नं, माषापूपाः, गुडापूपाः, वटक-पर्पट-क्षुद्रवटकादयः, पौलिकादयः, शृङ्गबेर-जम्बीर-नागरङ्गादि-रससंस्कृताः, तक्रादि-रसाद्रिकाः, शाकद्वयम्, तिन्त्रिणीरसोपेतं कूष्माण्डव्यञ्जनं, सूपादयः, कन्दमूलफल-विकृत-व्यञ्जन-तेमनादयः, एवं सर्वपाकाः भगवन् ! भवदनुग्रहेण सज्जीकृताः । पाके आलस्यं नाभूत् । अतः द्विजश्रेष्ठान्, सुरान्, मुनीन्, आमन्त्रय" इति ।

**अग्निवाणीं समाकर्ण्य श्रीनिवासो निरामयः ।**
**सम्प्रेषयच्छिवसुतं षण्मुखं मिथिलेश्वर ॥ १५० ॥**

**कल्याणकाण्डदीपः**

अथाग्निः विज्ञापयामासेत्याह— **पाकमित्यादि** । केशव ! त्वत्प्रसादेन पाकं सम्पूर्णतां प्राप्तम् । 'विद्धि' इति शेषः । पाकेन नालस्यमिति भावः । **आमन्त्रयदिति** । द्विजेन्द्राणां सुराणां चामन्त्रयत् । वसिष्ठेन सवादित्रघोषमक्षतान् दापयित्वा आमन्त्रणमकारयत् इत्यर्थः । अनन्तरमेवाह्वानाय षण्मुखं प्रेषयामासेत्याह— **सम्प्रेषयदिति** । अनेन आमन्त्रणाह्वानयोरविलम्बकथनाद्भाविनां सर्वेषां कार्याणामेवमेवाविलम्ब इति सूचयति ।

**मूलम्**

**श्रीशेषाद्रौ कश्यपादिभ्यो ब्रह्मादिकृतोपचारप्रकारः**

**स जगामातिवेगेना[1]प्याजुहावाग्निसेवकान् ।**
**ब्राह्मणान् वेदविदुषः जपनिष्ठान् जनाधिप ॥ १५१ ॥**

**पाकः सम्पूर्णतां प्राप्तः उत्तिष्ठन्त सुरद्विजाः ।**
**[2]तेनाहुतास्तेऽपि राजन् कश्यपात्रिपुरोगमाः ॥ १५२ ॥**

१. जपतोऽग्निपरायणान् । २. इति तेन समाहूताः ।

**गूढकर्तृकव्याख्यानम्**

ततः पाकं सिद्धं श्रुत्वा श्रीनिवासेन पुरोहितेन सवादित्रघोषं अक्षतान् दापयित्वा द्विजेन्द्राणां देवानां आमन्त्रणं अकारयत । इदं तावत् अभूत् ॥ ततः श्रीनिवासाज्ञया षण्मुखः द्विजसुराणां भोजनप्रयुक्त-

आह्वानाय ययौ । किमिदं भोजनार्थं आमन्त्रणस्य आह्वानस्य च मध्ये विराम एव न । कुतः एतावत् शैघ्र्यम् ? इति चेत् । पुरतः क्रियमाणसर्वकार्याणां कर्तव्यत्वम् । अत एव । स्कन्दः आह्वानाय यदा गतः तदा केचन द्विजाः जपन्तः, केचित् पूजयन्तः, केचित् वेदार्थं विचारयन्तः, केचित् विष्णुसहस्र-नामादिस्तोत्रपारायणपरायणाः, केचित् तपस्यन्तः, पुनः केचित् पाकस्थानं गत्वा तत्र स्थिताः । तदा षण्मुखः सर्वान् प्रति "हे सुराः ! द्विजाः ! पाकः सर्वोऽपि सिद्धः । उत्तिष्ठन्तु भवन्तः । शीघ्रं भोजनाय आगच्छन्तु । आलस्यं मा कुर्वन्तु इति यजमानः श्रीनिवासः अपेक्षते" इत्याह । क्षणात् कश्यपात्रि-प्रभृति-ऋषयः देवाः द्विजश्रेष्ठाः लघुलघु स्व-स्व-आह्निकं समाप्य पाकशालां आगत्य तत्र उप-विविशुः ।

[1]सङ्गम्य निकटं तस्य पाकस्थानस्य [2]भूसुर ।
विभज्य [3]विप्रान् विधिवत् शङ्करस्तारतम्यतः ॥ १५३ ॥

१. देवाश्च । २. भेजिरे ।
३. तत्र विधिवत् पात्रभूतान् पृथक् पृथक् ।

पङ्क्तीश्च कारयित्वाऽथ तारतम्यानुसारतः ।
[1]पात्राण्यास्तीर्य विधिवत् पात्रापात्रविचक्षणः।
पाण्डुतीर्थं समारभ्य श्रीशैलावधि भूसुराः ॥ १५४ ॥

[2]निबिडीकृताश्च राजेन्द्र तस्मिन् कृष्णमहोत्सवे ।
[3]स्थिता ब्रह्मगणास्तत्र स्वस्मिन् पात्रे पृथक् पृथक्॥ १५५ ॥

१. पात्राणि ह्यस्तृणत् शम्भुः । २. देवाश्च निबिडीभूताः ।
३. स्थिता देवद्विजास्तत्र स्वस्वपात्रान्तिके पृथक् ।

**कल्याणकाण्डदीपः**

**अग्निसेवकान्** कर्मनिष्ठान् । **वेदविदुषः** वेदव्याख्यातॄन् । **ब्रह्मनिष्ठान्** जपनिष्ठान् योगिनः । तस्य पाकस्थानसमीपं सङ्गम्य स्थिताः । 'आसन्' इति शेषः । अथ शङ्कर उत्तममध्यमाधमतारतम्यानुसारेण विभज्य पृथक्कृत्य वैश्वदेवानन्तरं पात्रविस्तरणमिति विध्यर्हं **पात्राण्यास्तीर्य** आच्छाद्य स्थापयित्वा पङ्क्तिं स्थापयित्वेत्यर्थः । अस्मिन्नस्मिन्नेते पात्राणि एते नेति विशेषज्ञानी शङ्करः स्थापयामासेति

शेषः । पात्रे सामीप्ये सप्तमी । **स्थिताः** न तूपविष्टाः । तदा तेषां स्थितिसमये त्वमेव वेद्मि, त्वं च यजमानः, कस्यार्पणं कार्यमिति भावः ।

### गूढकर्तृकव्याख्यानम्

कुतः पश्यन्ति ? इतोऽपि पात्राणां आस्तरणं न कृतम् । तावत् पाकस्थाने किं किं पाकम् ? कानि कानि भक्ष्याणि कृतानि इति अवेक्षमाणाः देवमुनिप्रभृतयः, प्राप्ता इति श्रुत्वा शम्भुः कीदृशः यादृश-यादृशानां यत्र यत्र स्थानं कर्तव्यं इति विवेकी विचार्य देव-मुनि-विप्रेषु उत्तम-मध्यम-अधमत्व-प्रकारक-तारतम्यानुसारेण विधिवत् विभज्य वृद्धानां पृथक् पङ्क्तिः, आर्याणां, यूनां, स्त्रीणां, बालानां, इत्येवं पृथक् पृथक् पङ्क्तीः कारयित्वा सादरं पात्राणि अस्तृणात् । कियन्मितं जनाः मिलिताः ? पाण्डुतीर्थं आरभ्य श्रीशैलावधि देवाः मुनयः विप्राः निबिडीभूताः तस्मिन् उत्सवे स्वस्वपात्रान्तिके आस्थिताः । विप्रागमनानन्तरं पात्रास्तरणं कृतम् ॥

### मूलम्

**तदाह भगवान् राजन् ब्रह्माणं चतुराननम् ।**

**श्रीभगवानुवाच—**

**अनर्पितान्नं भो पुत्र [1]न देयं ते द्विजन्मनाम् ॥ १५६ ॥**

**ब्रह्मोवाच—**

**सर्वज्ञं सर्वभोक्तारं [2]सर्वलोकपरावरम् ।**
**त्वामेव वेद्मि गोविन्द न [3]त्वत्साम्यं न चाधिकम् ॥ १५७ ॥**

---

१. नैव देयं । २. सर्वलोकेश्वरं हरिम् ।
३. त्वत्तुल्यो न चाधिकः ।

### गूढकर्तृकव्याख्यानम्

ततः श्रीनिवासः विधिं प्रति "भो विधे ! देवाय नैवेद्यसमर्पणं विना ततः वैश्वदेवं विना अतिथि-अभ्यागतानां विप्राणां आपोशनं न देयं इति शास्त्रविधिः" इति आह । विधिः आह— "स्वामिन् श्रीनिवास ! अद्य नैवेद्यभोक्तारं त्वां विना देवः कः ? न दैवं केशवात् परम् । त्वमेव सर्वज्ञः, सर्वसार-

भोक्ता, सर्वलोकेश्वराणां ईश्वरः, वेदप्रतिपाद्यः, सर्वोत्तमः । "न हरेः परमो न हरेः सदृशः परमः स तु सर्वचिदात्मगणात् ॥" तव समो न । त्वत्तः अधिको न । एवं सति तवैव नैवेद्यं निवेदनीयं इति मन्ये । अतः त्वं एवं कुरु इति मां प्रशाधि" इति विज्ञापयामास ।

**कस्मै निवेदयेयं भोः प्रशाधि कमलापते ।**
**स पुत्रवचनं श्रुत्वा पुत्रमाह हसन्निव ॥ १५८ ॥**

**श्रीभगवानुवाच—**

**अहोबलनृसिंहस्य पूजां [1]कुरु तदर्पणम् ।**
**इत्युक्तो वासुदेवेन नृसिंहस्यार्पणं नृप ॥ १५९ ॥**

**चकार ब्रह्मा सर्वेषां मुनीनामपि सम्मतम् ।**
**वैश्वदेवं ततः कृत्वा देवानामर्चनं तथा ॥ १६० ॥**

**विप्राणामर्चनं ब्रह्मा कृतवान् विधिपूर्वकम् ।**
**अक्षतार्घ्याम्बुगन्धैश्च धूपदीपानुलेपनैः ॥ १६१ ॥**

१. कृत्वा निवेदय ।

**कल्याणकाण्डदीपः**

**अहोबलनृसिंहेत्यादि** । अन्येषां स्वीकृतब्रह्मादिजीवपितृकत्वादसन्निहितत्वात् लक्ष्मीनृसिंह-प्रसादोऽयमिति विधेश्च सन्निहितस्यापि न वराहस्येति भावः । "अशनाया हि मृत्युः मृत्युर्नृसिंहः" इति खण्डार्थे स यद्यद्देवमसृजत तत्तदत्तुमध्रियत ।

"यद्यद् ब्रह्माऽसृजत् पूर्वं तत्तदत्ति जनार्दनः ।
अदितिर्नाम तेनासौ भगवान् पुरुषोत्तमः ॥" (बृ.भा.)

इत्यादि वाजसनेयकोपनिषद्भाष्याद्यवलोकने अत्र किंमूलताकाङ्क्षा निवर्तत इति नात्र प्रपञ्च्यते ।

**अक्षतेत्यादि** । भोक्तृषु हरेः विशेषसन्निधानार्थमक्षतैः अर्घ्यार्थं पूजार्थमब्वर्घ्यं पादार्घाभ्यां चेति यत् तच्च तत् अम्बु च तथा तैः पादार्घ्याचमनैः । गन्धैः सर्वाङ्गीणैः अनुलेपनैः चित्रकसाधनैः कुङ्कुम-गन्धैः धूपैः दीपैः नीराजनैः । **अक्षतेत्यादि** । भोक्तृषु हरेर्विशेषसन्निधानार्थमक्षतैः ।

**गूढकर्तृकव्याख्यानम्**

तत् श्रुत्वा किञ्चित् हसन् श्रीनिवास आह— "विधे ! अहोबलनृसिंहं पूजयित्वा तस्मै नैवेद्य-समर्पणं कुरुष्व" इति । विधिः— अन्येषां देवानां स्वीकृतब्रह्मादिजीवपितृकत्वात् असन्निहितत्वात् "अशनाया हि मृत्युः मृत्युः नृसिंह" इत्युक्तेः लक्ष्मीनृसिंहाय समर्पणीयं इत्याकारकं भगवदभिप्रायं मत्वा श्रीअहोबलनृसिंहाय समर्पणं चकार । ब्रह्मकृतनैवेद्यसमर्पणं सर्वमुनिविप्रसम्मतम् । ततः विधिः वैश्वदेवं विदधौ । ततः सम्प्राप्तविप्राणां विधिपूर्वकं अर्घ्य-पाद्य-आचमनीयैः, गन्धाक्षत-पुष्प-तुलसीमालादिभिः उपचारैः पूजयामास ।

**मूलम्**

**ग्रहानाराधयद्देवो नाममन्त्रादिपूर्वकम् ।**
**गृहीत्वाऽऽनन्दसम्पूर्णो भगवान् लौकिकीतनुः ॥ १६२ ॥**

**कल्याणकाण्डदीपः**

"एवं विनायकं पूज्य ग्रहांश्चैव विधानतः ।
कर्मणां फलमाप्नोति श्रियं चाप्नोत्यनुत्तमम् ॥
विवाहोत्सवयज्ञेषु प्रतिष्ठादिषु कर्मसु ।
नववेश्मप्रवेशे च नित्यं पूज्या नवग्रहाः ॥"

इत्यादि याज्ञवल्क्यादिवचनानि तत्पुरतो मानयन् श्लोकसङ्ग्रहार्थं ग्रहान् आराधयदित्याह— **ग्रहानिति** । **देवः** श्रीनिवासः । **नाममन्त्रादिपूर्वकं** नाम 'आदित्येने'त्यादि मन्त्र 'आकृष्णेने'त्यादि । आदिना स्तोत्रादिपूर्वकं गृहान् पृथक् पृथक् **गृहीत्वा** उपादाय आराधयत् । यद्यपि एते मूर्तिमन्तः सेवकाः सन्ति तथाऽपि तत्तद्ग्रहनियामकान् स्वानेव रूपान् तत्तद्धान्यराशौ आराधयत् इति भावः । सर्वोत्तमस्य अस्य ग्रहाराधनं कथं घटते ? इत्यत आह— **लौकिकीति** । यतः **तनुः** अवतारमूर्तिः **लौकिकी** लोकानुसारिणी अत इत्यर्थः ।

**गूढकर्तृकव्याख्यानम्**

ततः श्रीनिवासः नवग्रहपूजां चकार । "एवं विनायकं पूज्यग्रहांश्चैव विधानतः । कर्मणा फल-माप्नोति श्रियं प्राप्नोत्यनुत्तमाम् । विवाहोत्सवयज्ञेषु प्रतिष्ठादिषु कर्मसु । नववेश्मप्रवेशे च नित्यं पूज्या (विधानतः) नवग्रहाः ।" इति याज्ञिककल्पोक्तेः । "आदित्यादिनवग्रहान् तत्तन्नामग्रहणपूर्वकं तत्त-

न्मन्त्रपूर्वकं आकृष्णेन रजसा वर्तमानो निवेशयन् अमृतं मर्त्यं च । हिरण्मयेन सविता रथेन देवो याति भुवनानि पश्यन्'' इत्यादिमन्त्रपूर्वकं ध्यान-आवाहनादि-पूजां चकार । यद्यपि एते नवग्रहाः मूर्तिमन्तः सेवकाः सन्ति, तथाऽपि तत्तद्ग्रहनियामकस्वानेव रूपान् तत्तद्-धान्यराशौ आराधयत् । श्रीनिवासः सर्वोत्तमः, तस्य नवग्रहाराधनं कथं घटते ? श्रीनिवासः अवतारमूर्तिः । अतः लोकानुसारिणी ।

**मूलम्**

**परिवेषं ततश्चक्रुरष्टदिक्पालकादयः ।**
**पात्रसंस्कारपूर्वं तु चक्रुस्ते परिवेषणम् ॥ १६३ ॥**

**लवणं च समारभ्य घृतान्तं ब्रह्मवादिनाम् ।**
**परिवेषं तु सम्पूर्णमित्युक्तोऽग्निमुखाद्धरिः ॥ १६४ ॥**

**एको विष्णुर्महद्भूतं पृथग्भूतान्यनेकशः ।**
**त्रीन् लोकान् व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः ॥ १६५ ॥**

**इत्थं कृष्णार्पणं चक्रे श्रीनृसिंहाय विष्णवे ।**
**[1]कश्यपं प्राह गोविन्दो जुषध्वमिति [2]भूमिप ॥ १६६ ॥**

**[3]भवन्तो ज्ञानपूर्णाश्च किमन्नेनापि पूर्णता ।**
**भविष्यति महाप्राज्ञा [4]दयावन्तश्च साधवः ॥ १६७ ॥**

१. कश्यपाद्यांश्च । २. चाब्रवीत् ।
३. भवतां ज्ञानपूर्णानां किमन्नेनाद्य पूर्णता ।
४. दयावन्तस्तपोधनाः ।

**कल्याणकाण्डदीपः**

**भवन्त इति** । **ज्ञानपूर्णाश्च** ज्ञानपूर्णा एव । अलौकिकेन भगवद्भक्तिज्ञानामृतान्नाशनेनैव इच्छापूर्तिमन्तः । एतादृशानां भवतां अन्नेनापि प्राकृतेन पूर्णता भविष्यति किं किमपेक्षते ? इत्यर्थः । तथाऽपि महाप्राज्ञा यूयं **दयावन्तः** सन्तः परकष्टप्रहाणेच्छावन्तः सन्तः **साधवः** परकार्यसाधकाः । अतः तथैव समागताः ।

मूलम्

दरिद्रं मां च [1]जानीथ अन्नं मे सजलं लघु ॥ १६८ ॥

बहुकृत्य स्वीकुरुत कृपया नितरामिति ।
प्रार्थनं ब्राह्मणानां तु कृतवान् प्राकृतो यथा ॥ १६९ ॥

१. जानन्तः त्वन्नं ।

कल्याणकाण्डदीपः

तदुपपादयति— **दरिद्रमिति** । अयं भावः— लोके भोक्तारो भोजयितृगृहमायान्ति । किंविवक्षया ? पुष्कळदक्षिणायाः । तदभावेऽपि यथेष्टमृष्टान्नसौष्ठवस्य वा । तदुभयमपि मयि नास्तीति **दरिद्रं** निर्धनं मे **अन्नं सजलं** जलसाहित्योपेतं जलं चान्नसाहित्योपेतमिति भावः । तदपि **लघु** ईषत् । अतःपरं दयया मय्यनुग्रहं कुर्वन्तु इति प्रार्थनमित्याद्यन्वयः ।

गूढकर्तृकव्याख्यानम्

ततः इन्द्रादि-अष्टदिक्पालकाः पात्रसंस्कारपूर्वकं लवणं आरभ्य घृतान्तं देवमुनिविप्रेभ्यः परिवेषणं चक्रुः । ततः परिवेषणं कृतं श्रुत्वा अग्निमुखात् श्रीनिवासः अक्षतासमर्पणं चकार । आचम्य, प्राणान् आयम्य, देशकालौ सङ्कीर्त्य, ब्राह्मणान्तर्यामि निर्दोषानन्तकल्याणगुणगणपरिपूर्ण-श्रीनृसिंहप्रेरणया श्रीनृसिंहप्रीत्यर्थं ब्राह्मण-सुवासिनी-समाराधनं करिष्ये । पृथिवी ते पात्रम् । श्रीविष्णोरन्नं रक्षस्व । नानापात्रस्थितान्यन्नानि प्रत्येकं प्रत्येकं शोभनदेवतान्तर्यामि-श्रीनृसिंहाय दत्तं दास्यमानं स्वाहा । सम्प्रददे । न मम न मम । "एको विष्णुः महद् भूतं पृथक् भूतान्यनेकशः ॥ त्रीन् लोकान् व्याप्य भूतात्मा भुङ्क्ते विश्वभुगव्ययः ॥" अनेन ब्राह्मण-सुवासिनी-समाराधनेन वैशाखमासनियामक-मधुसूदनाभिन्नः भगवान् श्रीलक्ष्मीनृसिंहः प्रीयतां, प्रीतो भवतु । श्रीकृष्णार्पणमस्तु ।" इति अक्षतासमर्पणं कृत्वा कश्यपादीनां आपोशनं दत्वा तान् जुषध्वं जुषध्वं इति "भो महर्षयः ! भवन्तः सर्वे त्रैकालिकज्ञानसम्पन्नाः । एतादृश भवतां मद्दत्त-अन्नेन इच्छा पूर्णा भविष्यति किम् ? तपोधनाः ! दयालवः ! भवन्तः दरिद्रं मां जानन्तोऽपि अपारदयया मद्दत्त-अत्यल्प-अन्न-उदकं बहुकृत्य स्वीकुर्वन्तु" इति प्रार्थये । इति प्राकृतवत् सादरोपचारं प्रार्थितवान् ॥

मूलम्

वासुदेववचः श्रुत्वा वाक्यमाहुर्महीसुराः ॥ १७० ॥

मुनय ऊचुः—

तवान्नममृतप्रख्यं मुक्ति[1]पन्थानसाधनम् ।
वयं धन्याः कृतार्थाः स्म कलौ पापकुले हरे ॥ १७१ ॥
अभिनन्द्य तमित्थं ते सुसन्तुष्टा अभुञ्जत ॥ १७२ ॥

१. मार्गस्य ।

**कल्याणकाण्डदीपः**

**तवान्नमिति** । अमृतप्रख्यं अमृतसमानम् । यतः अमृतजलेन सह साक्षादग्निना लौकिके तीर्थपात्रे पक्वं साक्षात् तदभिमानिना सुधांशुना अमृतरसरूपेण सन्निविष्टं त्वया च अमृतानन्दरसात्मना केशवेनाधिष्ठितं श्रीलक्ष्मीनृसिंहप्रसादश्च । अतः मुक्तिपन्थानो ज्ञानं अपरोक्षं तस्य साधनम् । अतस्तवान्नभोक्तारो वयं धन्या इष्टसुकृतिनः । अतः कृतार्थो मुक्तावानन्दाभिवृद्धिलक्षणो येभ्यस्ते तथा स्मः । अनेन ज्ञानिनामपि तवान्नेन पूर्णता अपेक्षितेति सिद्ध्यति । दरिद्रं पापदरिद्रमिति वयं जानीमः । **पापकुले** पापसन्तानेऽपि हरे पापहारिन् इत्यनेन सूचितम् ।

**गूढकर्तृकव्याख्यानम्**

तादृश-भगवदुक्तिं आकर्ण्य ऋषय ऊचुः— "भो स्वामिन् ! जगज्जन्मादिकारण ! त्वया दत्तं अन्नं अमृतसाधनम् यतः अमृतजलेन साक्षात् अग्निना अलौकिके तीर्थपात्रे पक्वं साक्षात् तदभिमानिना सुधांशुना अमृतरसरूपेण सन्निविष्टम् । त्वया च अमृतरसानन्दात्मना केशवेन अधिष्ठितम् । अन्नाभिमानी चन्द्रस्तु केशवस्तत्र देवता । श्रीलक्ष्मीनृसिंहप्रसादश्च । अतः मुक्तिपन्थानो ज्ञानं अपरोक्षं तस्य साधनम् । अत एव "पुरस्तात् अन्नमाप्नोति पुनरावृत्तिवर्जितम्" इत्युक्तेः पुनरावृत्ति-अजनक-त्वदन्नभोक्तारो वयं धन्याः कृतार्थाः । कृतः अर्थः मुक्तौ आनन्दाविर्भावलक्षणः येभ्यः तादृशाः वयं स्मः । ज्ञानिनामपि तव अन्नेन पूर्णता अपेक्षिता इति सिद्धमेव । दरिद्रं त्वां इत्युक्ते पापदरिद्रं जानीमः । पापकुले जातानपि हरे ! त्वं पापात् रक्षकोऽसि । इत्येवं श्रीनिवासं अभिनन्द्य सन्तुष्टमनस्का भूत्वा भोजनं चक्रुः । भोजनं अभूत् ।

**मूलम्**

भोजनानन्तरं राजन् [1]दक्षिणां च ददौ हरिः ।

१. ब्राह्मणानां यथार्हतः ।

ताम्बूलं दक्षिणां चैव प्रददौ भगवान् हरिः ॥ १७३ ॥
निष्कं द्विजवराणां च तदर्धं ब्रह्मवादिनाम् ।
तदर्धं [1]ब्रह्मचाराणां यथायोग्यमदाद्धरिः ॥ १७४ ॥

१. ब्रह्मचारीणां ।

**कल्याणकाण्डदीपः**

**निष्कमिति** । "चतुःसौवर्णिको निष्को विज्ञेयस्तु प्रमाणतः" इति याज्ञवल्क्यः । *एंटु वराह तूक* सुवर्णसमतोलितम् । राममुद्राङ्कितं रूप्यम् । **द्विजवराणामिति** । सदक्षिणाकद्रव्योत्सर्जनस्यैव मुख्य-दानत्वात् दक्षिण आदक्षिणाभावात् दक्षिणोत्सर्जनस्य दानत्वाभावात् सम्प्रदानत्वाभावेन द्विजवराणा-मित्यादि सम्बन्धसामान्यषष्ठी । तदर्धं निष्कार्धं *नाल्कु वराह तूकं* तदर्धं *एरडु वराह तूकम्* । **ब्रह्म-चाराणामिति** । ब्रह्म वेदः तं चरन्ति उच्चरन्ति अधीयते इति ब्रह्मचाराः कर्मण्यण् ।

अत्र कथासन्दर्भसङ्ग्रहः— तथा च तान् ब्राह्मणान् वसन्तमहानिलये उपवेश्य तन्मध्ये वसन्तमाधवमान्दोलयित्वा सुगन्धैः सुगन्धितैलैः पिष्टातैः मन्दारमालाभिः ताम्बूलैश्चाभ्यर्च्य गन्धर्वैः अप्सरोभिश्च दिव्यनृत्यगीतवाद्यैरभिनन्द्य स्वयं लक्ष्म्या सह नीराजितः सन् आशीरक्षताञ्जलिं शिर-स्यादाय सभायै नम उक्तिं व्यधात् । अथ यथाकामं विश्राम्यतामिति विज्ञापितवानिति ।

**गूढकर्तृकव्याख्यानम्**

सर्वविप्राणां ताम्बूलदक्षिणां ददे । केन क्रमेण ? एकैकस्मै एकैकं निष्कं, निष्को नाम कियान् ? चतुःसौवर्णिको निष्को विज्ञेयस्तु प्रमाणतः" इति याज्ञवल्क्यः । अष्टवराहतूक-सुवर्णसमतोलितं राममुद्राङ्कितं रूप्यम् । एकं एकं रूप्यं एकस्मै द्विजवराय । रूप्यार्धं ब्रह्मवादिनाम् । चतुर्थांशं ब्रह्मचारिणाम् । इत्येवम् । ततः श्रीनिवासः सर्वविप्रान् वसन्तमहानिलये उपवेश्य तन्मध्ये वसन्तमाधवं आन्दोलयित्वा सुगन्धैः सुगन्धतैलैः पिष्टातैः मन्दारमालाभिः ताम्बूलैः अभ्यर्च्य गन्धर्वैः अप्सरोभिः दिव्यनृत्यगीतवाद्यैः अभिनन्द्य स्वयं लक्ष्म्या नीराजितः सन् आशीरक्षतालिं शिरसि आदाय सभायै नम उक्तिं व्यधात् । "अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान् । युयोध्यस्म-ज्जुहुराणमेनो भूयिष्ठान्ते नम उक्तिं विधेम । अस्यार्थः— अग्ने = अङ्गस्य देहस्य प्रेरकत्वात् अग्निशब्दवाच्यः अग्न्यन्तर्गत-श्रीपरमात्मन्, अस्मान् शोभन-अर्चिरादिमार्गेण मोक्षाख्यधनाय नय । हे देव ! सम्पूर्णज्ञानानि भवान् वेत्ति । अस्मान् अल्पीकृत् एनः अस्मत् वियोजय । वयं ते भक्तिज्ञान-भूयिष्ठां नम उक्तिं कुर्मः । एवं सभायै नम उक्तिं व्यधात् । अथ यथाक्रमं विश्राम्यतां इत्याह ।

मूलम्

**स विप्रभोजनान्ते च स्वयं भोजनमाचरत् ।**
**पुत्रेण पुत्रपुत्रेण भार्याबन्धुसमन्वितः ।**
**साग्निना लोकपालैश्च सशेषगरुडान्वितः ॥ १७५ ॥**

कल्याणकाण्डदीपः

**पुत्रेण** ब्रह्मणा । **पुत्रपुत्रेण** शङ्करेण । अनयोः कार्येष्वधिकृतत्वात् । **भार्याः** लक्ष्मीः । **भार्या-बन्धुः** बकुळा । **साग्निना** अग्निसहितेन वरुणेन । पाचकजलधरयोः मिथः साहित्यात् । **लोकपालैः** परिवेषकैः । **सशेषेति** । सन्देशहारिभ्यां ताभ्यामन्वितः ।

'गरुडान्वितः' इत्यतःपरं 'भोजनान्तः' इत्यतःपूर्वम् उत्तरग्रन्थपर्यालोचनया सन्दर्भशेषः । तथा हि । अथाग्निर्विज्ञापयामास सर्वाण्यन्नादीनि अत्यपूर्वाण्ययातयामानि पात्रेषु अवशिष्टानि सन्ति । सर्वे सन्तृप्ताः । नैकोऽपि बुभुक्षुरस्ति । क एषां विनियोगः ? इति । अथ श्रीनिवासः— हे जनाः ! शृणुत । प्रातः प्रयाणम् । पुरं प्रवेश्यैव स्थितिर्न मध्ये । अध्वा च दूरः । अतो बालस्त्रीवृद्धातुराणां पथि आप्यायनार्थं येषां येषां यावद्यावदिष्टं अन्नादि क्षीरादि फलादि तावत्तावत् तदवशिष्टेषु बध्नीतेति आघोषय । अथाप्यवशिष्टानि । बाह्येषु सैनिकादिषु विनियोज्य प्रातः प्रयाणाविलम्बाय यथापूर्वं शिबिर-पात्रादय उपसंहर्तव्या इत्याज्ञापयामासेति । तत् तथा चकार अग्निः ॥

मूलम्

**भोजनान्ते दिनाधीशो रात्रिस्थानमुपागतः ।**
**शयनं कृतवान् कृष्णः पर्यङ्के रमया सह ॥ १७६ ॥**

**स्वयं निद्राविहीनोऽपि रेमे प्राकृतवद्धरिः ।**
**एवं विभवमापन्ना देवाश्च ऋषयस्तथा ।**
**नीत्वा तां सप्तमीरात्रिं सर्वे सम्भ्रमकातराः ॥ १७७ ॥**

कल्याणकाण्डदीपः

**भोजनान्त इति** । श्रीनिवासभयात् ।

**मूलम्**

**ब्रह्मादयः सुरश्रेष्ठाः कश्यपात्रिपुरोगमाः ।
शयनं चक्रिरे राजन् कन्दरेषु गृहेषु च ।
वृक्षमूलेषु शैलानां गह्वरेषु दरीषु च ।** ॥ १७८ ॥

**कल्याणकाण्डदीपः**

**कन्दरेष्वित्यादि** । स्कन्धावारस्योपसंहृतत्वादिति भावः ।

**गूढकर्तृकव्याख्यानम्**

ततः पुत्रेण विधिना पौत्रेण हरेण भार्यया रमया मात्रा बकुलया साग्निना वरुणेन च परिवेषकैः लोकपालैः सन्देशहारिभ्यां शेषगरुडाभ्यां च सहितः श्रीनिवासः भोजनं चकार । भोजनानन्तरं अग्निः उपागम्य विज्ञापयति— "महास्वामिन् सर्वाणि अन्नादीनि अत्यपूर्वाणि अयातयामानि पात्रेषु अवशिष्टानि सन्ति । सर्वे सन्तृप्ताः । नैकोऽपि बुभुक्षुः । क्व एषां विनियोगः" इति । श्रीनिवास आह सर्वजनसमक्षं "हे जनाः ! मदुक्तिं इतः शृणुत सम्यङ् । श्वः प्रातः प्रयाणं कर्तव्यम् । नारायणपुरं प्रविश्यैव स्थितिभोजनादिकम्, मार्गमध्ये न । अध्वा च दूरः । बालाः स्त्रियः वृद्धाः आतुराः दुर्बलाः बहवः सन्ति । अतः एषां पथि किञ्चित् आप्यायनार्थं येषां येषां यावत् यावत् यत् यत् इष्टं अन्नादि क्षीरादि फलादि तावत् तत्तद् अवषिष्टेषु बध्नीत इति आघोषय । अथाऽपि अवशिष्टानि चेत् बाह्येषु सैनिकादिषु विनियोज्य प्रातः प्रयाणाविलम्बाय यथापूर्वं शिबिरपात्रादयः उपसंहर्तव्याः" इत्यादिदेश । तथैव अग्निना कृतम् । तदा सूर्यं अस्तमितः । रात्रिः बभूव । तदा श्रीनिवासः रमया सह स्वयं निद्राविहीनोऽपि प्राकृतवत् पर्यङ्के सुखं शिश्ये । इत्येवं वैभवयुताः सुखशान्तियुताः देवाः ऋषयः विप्राश्च तां सप्तमीं रात्रिं सुखं निन्युः । ब्रह्मादयः सुरश्रेष्ठाः कश्यपात्रिपुरोगमाः, हे जनक ! शृणु, केचित् कन्दरेषु गुहेषु वृक्षमूलेषु शैलानां गह्वरेषु दरीषु च यथेष्टं शयनं चक्रिरे ॥ इत्येवं कथाभिप्रायं यं शतानन्दो जनकं प्रति निरूपयामास तमेवांशं सूतः शौनकादिविप्रान् प्रति निरूपितवान् इति कथाभिप्रायः ॥

**मूलम्**

**भगवादाज्ञया ब्रह्मकृतसैन्यसज्जीकरणप्रकारः**

**ततः प्रभाते विमले श्रीनिवासः सताङ्गतिः ।
गरुडं प्रेषयामास ब्रह्माणं चतुराननम्** ॥ १७९ ॥

स गत्वा वायुवेगेन ब्रह्माणं तल्पसंस्थितम् ।
प्रत्युवाच महाराज पक्षिराट् परमं वचः ॥ १८० ॥

गरुड उवाच—

गच्छ [1]तात सुरश्रेष्ठ वस्त्रालङ्कारभूषितः ।
हंसमारुह्य चन्द्राभं राजेन्द्रनगरं प्रति ॥ १८१ ॥

१. तातान्तिकं ब्रह्मन् ।

वाद्यन्तां च विचित्राणि वादित्राणि महान्ति च ।
गजमारोप्य महती भेरी चाप्यनुवाद्यताम् ॥ १८२ ॥

वाहनानि विचित्राणि आन्दोलानि रथानि च ।
अलङ्क्रियन्तां राजेन्द्र पुरीं गन्तुं ससम्भ्रमम् ॥ १८३ ॥

पक्षिराड्वचनं श्रुत्वा [1]पक्षिराडाह नन्दनः ।
नियोजयामास तदा बलं देवगणस्य च ॥ १८४ ॥

गजानां च हयानां च वृषभाणां च मण्डलम् ।
पदातीनां च शूराणां मण्डलं समलङ्कृतम् ॥ १८५ ॥

१. पक्षिवाहन ।

शूराश्च कृतविद्याश्च [1]घृतवस्त्रसुपाणयः ।
पितामहं पुरस्कृत्य जग्मुर्नारायणा[2]श्रमम् ॥ १८६ ॥

१. धृतशस्त्रास्त्रपाणयः । २. न्तिकम् ।

तान् दृष्ट्वा सर्वदेवांश्च भगवानाह भूपते ।

श्रीनिवास उवाच—

विलम्बः क्रियते कस्माद्गमनार्थं पितामह ॥ १८७ ॥

### मूलम्

**ब्रह्मादयः सुरश्रेष्ठाः कश्यपात्रिपुरोगमाः ।**
**शयनं चक्रिरे राजन् कन्दरेषु गृहेषु च ।**
**वृक्षमूलेषु शैलानां गह्वरेषु दरीषु च । ॥ १७८ ॥**

### कल्याणकाण्डदीपः

**कन्दरेष्वित्यादि** । स्कन्धावारस्योपसंहृतत्वादिति भावः ।

### गूढकर्तृकव्याख्यानम्

ततः पुत्रेण विधिना पौत्रेण हरेण भार्यया रमया मात्रा बकुलया साग्निना वरुणेन च परिवेषकैः लोकपालैः सन्देशहारिभ्यां शेषगरुडाभ्यां च सहितः श्रीनिवासः भोजनं चकार । भोजनानन्तरं अग्निः उपागम्य विज्ञापयति— "महास्वामिन् सर्वाणि अन्नादीनि अत्यपूर्वाणि अयातयामानि पात्रेषु अवशिष्टानि सन्ति । सर्वे सन्तृप्ताः । नैकोऽपि बुभुक्षुः । क्व एषां विनियोगः" इति । श्रीनिवास आह सर्वजनसमक्षं "हे जनाः ! मदुक्तिं इतः शृणुत सम्यङ् । श्वः प्रातः प्रयाणं कर्तव्यम् । नारायणपुरं प्रविश्यैव स्थितिभोजनादिकम्, मार्गमध्ये न । अध्वा च दूरः । बालाः स्त्रियः वृद्धाः आतुराः दुर्बलाः बहवः सन्ति । अतः एषां पथि किञ्चित् आप्यायनार्थं येषां येषां यावत् यावत् यत् यत् इष्टं अन्नादि क्षीरादि फलादि तावत् तत्तद् अवषिष्टेषु बध्नीत इति आघोषय । अथाऽपि अवशिष्टानि चेत् बाह्येषु सैनिकादिषु विनियोज्य प्रातः प्रयाणाविलम्बाय यथापूर्वं शिबिरपात्रादयः उपसंहर्तव्याः" इत्यादिदेश । तथैव अग्निना कृतम् । तदा सूर्यं अस्तमितः । रात्रिः बभूव । तदा श्रीनिवासः रमया सह स्वयं निद्राविहीनोऽपि प्राकृतवत् पर्यङ्के सुखं शिश्ये । इत्येवं वैभवयुताः सुखशान्तियुताः देवाः ऋषयः विप्राश्च तां सप्तमीं रात्रिं सुखं निन्युः । ब्रह्मादयः सुरश्रेष्ठाः कश्यपात्रिपुरोगमाः, हे जनक ! शृणु, केचित् कन्दरेषु गुहेषु वृक्षमूलेषु शैलानां गह्वरेषु दरीषु च यथेष्टं शयनं चक्रिरे ॥ इत्येवं कथाभिप्रायं यं शतानन्दो जनकं प्रति निरूपयामास तमेवांशं सूतः शौनकादिविप्रान् प्रति निरूपितवान् इति कथाभिप्रायः ॥

### मूलम्

### भगवदाज्ञया ब्रह्मकृतसैन्यसज्जीकरणप्रकारः

**ततः प्रभाते विमले श्रीनिवासः सताङ्गतिः ।**
**गरुडं प्रेषयामास ब्रह्माणं चतुराननम् ॥ १७९ ॥**

स गत्वा वायुवेगेन ब्रह्माणं तल्पसंस्थितम् ।
प्रत्युवाच महाराज पक्षिराट् परमं वचः ॥ १८० ॥

गरुड उवाच—

गच्छ [1]तात सुरश्रेष्ठ वस्त्रालङ्कारभूषितः ।
हंसमारुह्य चन्द्राभं राजेन्द्रनगरं प्रति ॥ १८१ ॥

१. तातान्तिकं ब्रह्मन् ।

वाद्यन्तां च विचित्राणि वादित्राणि महान्ति च ।
गजमारोप्य महती भेरी चाप्यनुवाद्यताम् ॥ १८२ ॥

वाहनानि विचित्राणि आन्दोलानि रथानि च ।
अलङ्क्रियन्तां राजेन्द्र पुरीं गन्तुं ससम्भ्रमम् ॥ १८३ ॥

पक्षिराड्वचनं श्रुत्वा [1]पक्षिराडाह नन्दनः ।
नियोजयामास तदा बलं देवगणस्य च ॥ १८४ ॥

गजानां च हयानां च वृषभाणां च मण्डलम् ।
पदातीनां च शूराणां मण्डलं समलङ्कृतम् ॥ १८५ ॥

१. पक्षिवाहन ।

शूराश्च कृतविद्याश्च [1]धृतवस्त्रसुपाणयः ।
पितामहं पुरस्कृत्य जग्मुर्नारायणा[2]श्रमम् ॥ १८६ ॥

१. धृतशस्त्रास्त्रपाणयः । २. न्तिकम् ।

तान् दृष्ट्वा सर्वदेवांश्च भगवानाह भूपते ।

श्रीनिवास उवाच—

विलम्बः क्रियते कस्माद्गमनार्थं पितामह ॥ १८७ ॥

नियोजय बलं सर्वं राजधान्यै नृपस्य च ।
[1]वासुदेववचः श्रुत्वा वासुदेवात्मजोऽब्रवीत् ॥ १८८ ॥

---

१. इत्थं हरेर्वचः ।

### गूढकर्तृकव्याख्यानम्

अनन्तरं परेद्युः निर्मलः प्रातःकालः प्राप्तः । तदा सज्जनाश्रयः श्रीनिवासः विधिं आह्वातुं गरुडं प्रेषयामास । गरुडः विधिं वायुवेगेन प्राप्तः । तदा विधिः शयने स्थितः । विधिं प्रति गरुडः— हे विधे ! तात श्रीनिवासस्य आज्ञा । शीघ्रं श्रेष्ठवस्त्रालङ्कारैः अलङ्कृतः सन् चन्द्रवत् शुभ्रवर्णविशिष्टं तव वाहनं हंसं आरुह्य आकाशराजनगरीं नारायणपुरीं प्रयातु । सन्नद्धो भव । तदर्थं अद्य श्रीनिवासं आगच्छ । अद्य विचित्रविविधवाद्यानि वाद्यन्ताम् । महती भेरी गजं आरोप्य अनुवाद्यताम् । विचित्र-वाहनानि, आन्दोलानि, रथानि च आकाशराजराजधानीं प्रति गन्तुं अलं क्रियन्ताम्'' इत्याह । पक्षिराजवचनं श्रुत्वा तदा विधिः देवगणसैन्यं नियोजयामास । तदा गज-अश्व-वृषभाणां अलङ्कारः कृतः । शूरपदातयः विविधं अलङ्कृतवन्तः । अनेकशूराः कृतविद्याः अनुभवशालिनः अस्त्रशस्त्राणि धृतवन्तः पितामहं पुरतः कृत्वा श्रीनिवासं प्रतिजग्मुः ॥ ततः सर्वदेवप्रभुं विधिं आगतं आलोक्य अव्याहतषड्गुणैश्वर्यसम्पन्नः श्रीनिवासः ब्रूते— ''हे विधे ! प्रयाणार्थं कुतः इतोऽपि विलम्बः क्रियते ? अद्यैव आकाशराजनगरं गन्तुं सकलसैन्यं प्रेषय'' इति ।

### मूलम्

### वियद्राजपुरं प्रति सपरिकरश्रीनिवासगमनम्

ब्रह्मोवाच—

[1]दंशितं तद्बलं सर्वं धृतायुधमरिन्दम ।
उत्तिष्ठ पुरुषश्रेष्ठ [2]पक्षिराजानमारुह ॥ १८९ ॥

---

१. सज्जीकृतं बलं । २. समारोह खगेश्वरम् ।

स इत्थमुक्तो भगवान् गरुडस्कन्धमारुहत् ।
ब्रह्माणमग्रतः कृत्वा शम्भुं कृत्वा तु दक्षिणे ॥ १९० ॥
वामे वायुं ततः कृत्वा कुमारं पृष्ठतस्तथा ।
रमामारोपयामास रथं काञ्चननिर्मितम् ॥ १९१ ॥

मातरं बकुलां राजन् विमानं सूर्यसन्निभम्।
समारोप्य महाराज भगवान् भक्तवत्सलः।
स्वयं तु गरुडारूढो जगाम च सताङ्गतिः ॥ १९२॥

शेषो दधार राजेन्द्र श्वेतच्छत्रं शशिप्रभम्।
चामरे चन्द्रसङ्काशे [1]वीज्यमाने सुरैः परैः ॥ १९३॥

व्यजनेन विचित्रेण रत्नदण्डेन [2]भूमिप।
वीजयामास राजेन्द्र विष्वक्सेनः प्रतापवान् ॥ १९४॥

---

१. वीजयामास मारुतः। २. माधवम्।

भेरीदुन्दुभिनिर्घोषैर्वादित्राणां महास्वनैः।
नर्तकैर्गायकैश्चापि हाहाहूहूयुतोऽञ्जसा ॥ १९५॥

एवं विभवमापन्नः सर्वात्मा सर्वतोमुखः।
गमने वासुदेवस्य देवानामपि भूमिप ॥ १९६॥

**गूढकर्तृकव्याख्यानम्**

श्रीनिवासादेशं श्रुत्वा विधिः वदति— "स्वामिन्! जगदीश श्रीनिवास! समस्तं सैन्यं अस्त्रशस्त्राणि धृत्वा सन्नद्धम्। पुरुषोत्तम! उत्तिष्ठ। पक्षिराजं गरुडं आरोह।" इति। एवं विधौ वदति श्रीनिवासः क्षणात् गरुडस्कन्धं आरुह्य अग्रतः विधिं कृत्वा रुद्रं दक्षिणतः कृत्वा, वायुं वामे, कुमारं पृष्ठतः कृत्वा प्रययौ। श्रीनिवासाज्ञया रमा काञ्चननिर्मिते रथे आस्थिता। देवमाता बकुला सूर्यसदृश-कान्तिमद् विमानं आरुरोह। स्वयं गरुडं आरूढः। तदा साक्षात् शेषः चन्द्रसदृशं श्वेतच्छत्रं श्रीनि-वासस्य दधार। वायुः रत्नखचितदण्डविशिष्टविचित्रव्यजनेन चन्द्रवत् शुभ्रचामरद्वयेन च वीजयामास। प्रतापवान् विष्वक्सेनः रत्नखचितदण्डविशिष्टविचित्रव्यजनेन वीजयामास॥ ततः भेरीदुन्दुभिनिर्घोषैः वादित्राणां महास्वनैः नर्तकैः गायकैः हाहाहूहूनामकगन्धर्वैः युक्तः अत्यन्तवैभवेन सर्वात्मा सर्वतोमुखः श्रीनिवासः प्रययौ।

ऋषीणां पूर्वदेवानां गन्धर्वाणां तपस्विनाम्।
सम्मर्दस्तु बभूवात्र पशूनां मानुषात्मनाम् ॥ १९७॥

वनितानां च वृद्धानां बालानां रक्षसामपि ।
अन्योन्यं कलहस्तत्र वनितानामभूत् तदा ॥ १९८ ॥

ऋषीणामपि कन्यानां देवस्त्रीणां च दैवतैः ।
तत्राधनास्तु गच्छन्ति मार्गमध्ये महीपते ॥ १९९ ॥

काचित् भर्तारमालम्ब्य पुत्रमङ्के निधाय च ।
भारमूढ्वाऽथ शिरसि पद्मामेव स्म गच्छति ॥ २०० ॥

तस्मिन् काले महाराज रथस्थाः सुरयोषिताः ।
पन्थानमनुधावन्त्योऽतर्जयंश्चाधनान् कृशान् ॥ २०१ ॥

तदा वियोगमापन्ना भर्त्रा सा भारपीडिता ।
कूजन्ती नाथ हा नाथ वने न त्यक्तुमर्हसि ॥ २०२ ॥

एवमुक्त्वा विप्रपत्नी सपुत्रा पतिता भुवि ।
क्रन्दन्तः शिशवस्तत्र प्रहृष्टास्तत्र केचन ॥ २०३ ॥

केचित् पयः स्म काङ्क्षन्ति केचिदन्नं महीपते ।
केचिद्भुञ्जते क्षीरान्नं केचिद्दध्योदनं नृप ॥ २०४ ॥

हसन्ति केचित् प्ररुदन्ति केचित्
प्रयान्ति केचित् [1]तु जनास्तदानीम् ।
पतन्तमन्ये करपल्लवेन
[2]उत्थापयन्ति स्म हसन्ति [3]विभ्रमाः ॥ २०५ ॥

१. प्रलपन्ति केचित् । २. समुद्धरन्ति । ३. केचन ।

सुराङ्गनाश्च राजेन्द्र तथा वैखानसाङ्गनाः ।
ऋष्यङ्गनाश्च गन्धर्ववनिताश्चारुलोचनाः
अवरुह्य गिरिश्रेष्ठं श्रीनिवासपरायणाः ॥ २०६ ॥

**शेषाचलं समारभ्य नारायणपुरं प्रति ।**
**तिलमात्रावकाशस्तु [1]स्थले तत्र न दृश्यते ॥ २०७ ॥**

१. मार्गमध्ये ।

**गूढकर्तृकव्याख्यानम्**

श्रीनिवासस्य प्रयाणसमये देवेषु ऋषिषु दैत्येषु गन्धर्वेषु तपस्विषु मनुष्येषु पशुषु तथा स्त्रीषु बालकेषु वृद्धेषु च सम्मर्दः अतिशयितः अभूत् । तदा स्त्रीषु अन्योन्यं कलह उत्पन्नः । ऋषीणां ऋषिकन्यानां देवानां देवस्त्रीणां च कलहो जातः । किञ्च मार्गमध्ये अनेके दरिद्राः गच्छन्तः । तज्जनमध्ये काचित् दरिद्रा पतिं अनुसरती शिशुं अङ्के कृत्वा शिरसि भारं ऊढ्वा पादाभ्यां चरन्ती । तस्मिन् काले रथोपविष्टाः सुरयोषितः गमनकाले कृशान् दरिद्रान् भर्त्सयन्त्यः मार्गे तान् निरुन्धन्त्यः गच्छन्ति । तदा भारपीडिता सा वनिता पतिवियोगं आपन्ना । पतिं उद्दिश्य "हा नाथ ! हा नाथ ! मां त्यक्त्वा कुत्र गच्छसि ? वने मां त्यक्तुं नार्हसि ?" इति कूजन्ती सा स्वपुत्रसहितं भुवि पतिता । पुनः कुत्रचित् शिशवः रुदन्तः । पुनः केचन शिशवः हृष्यन्तः । केचित् शिशवः क्षुधिताः क्षीरं काङ्क्षन्ति । केचित् अन्नम् । केचित् क्षीरान्नं भुञ्जन्तः पुनः केचित् दध्योदनं अश्नन्तः । किञ्च जनमध्ये केचित् हसन्ति, केचित् प्ररुदन्ति, केचित् गच्छन्ति च केचित् प्रलपन्ति । केचन भुवि पतितान् स्वकराभ्यां गृहीत्वा उद्धरन्ति । पतितान् दृष्ट्वा हसन्ति केचन । एवं देववनिताः गन्धर्ववनिताः एताः श्रीनिवासे भक्तियुक्ताः वेङ्कटाचलात् अवरुह्य प्रस्थिताः । एवं जनाः शेषाचलं आरभ्य नारायणपुरपर्यन्तं गच्छन्तः । तेषु तिलमात्र-अवकाशोऽपि नासीत् । तादृश जनसम्मर्द आसीत् ।

**मूलम्**

**मध्ये कृत्वा पद्मतीर्थं गता सा वाहिनी हरेः ॥ २०८ ॥**

**ऋग्यजुःसामाथर्वाद्यैर्गीयमानो जगद्गुरुः ।**
**[1]श्रीमदेतत् पद्मतीर्थं महातीर्थं महीपते ॥ २०९ ॥**

१. श्रीपतिः पद्मतीर्थाख्यं ।

**आससाद जगद्योनिः सच्चिदानन्दविग्रहः ।**
**ससुरासुरगन्धर्वसिद्धसाध्यमरुद्गणैः ॥ २१० ॥**

**भगवन्तं प्रति शुकमुनिकृतोपचारक्रमः**

प्राप्तं गरुडमारूढं कृष्णद्वैपायनो मुनिः ।
साष्टाङ्गपूर्वकं राजन् प्रणिपत्य शुकोऽब्रवीत् ॥ २११ ॥

तपसस्तु फलं मन्ये कृतस्य पुरुषोत्तम ।
यद्भवान् ब्रह्मरुद्राद्यैरगम्यो वेदगोचरः ।
तं [1]भवन्तमहं पश्ये नेत्राभ्यां पुरुषोत्तम । ॥ २१२ ॥

सपुत्रमित्राखिललोकपालं
[2]सशेषलक्ष्मीसहितं मुरारे ।
पश्यामि भाग्योदय[3]मात्मदृष्टेः
त्वत्पादपूजा[4]मरविन्दनाभ ॥ २१३ ॥

१. भवन्तं प्रपश्यामि । २. शेषेण लक्ष्म्या च युतं यतोऽहम् ।
३. शालिदृग्भ्यां । ३. सफला ततो मे ।

विज्ञापनं मे शृणु देवराज
प्रसादहेतोस्तव वासुदेव ।
कृत्वा कृपां वेङ्कटशैलनाथ
भुक्त्वा मदीयं फलकन्दमूलम् ॥ २१४ ॥

इत्युक्तो मुनिना तेन वासुदेवोऽभ्यभाषत ॥ २१५ ॥

श्रीभगवानुवाच—

शृणु तापसशार्दूल वचनं साधुसम्मतम् ।
भवान् कृशो विरागी च ब्रह्मचारी दृढव्रतः ॥ २१६ ॥

वयं संसारनिरता बहवस्तत्र भूसुराः ।
अद्यैव नगरीं गत्वा राज्ञस्तस्य महात्मनः ॥ २१७ ॥

तत्रैव भोजनं [1]कुर्मो वर्तते मम मानसे।
[2]एवमुक्ते हृषीकेशो व्यासपुत्रोऽभ्यभाषत ॥ २१८ ॥

१. कुर्मः इति मे वर्तते मनः। २. वदत्येवं।

**गूढकर्तृकव्याख्यानम्**

हे जनकराज ! भृणु। श्रीनिवासस्य सैन्यं पद्मतीर्थं मध्ये कृत्वा पुरतः गच्छति स्म। ऋग्वेद-यजुर्वेद-सामवेद-अथर्वणवेदैः स्तूयमानः सकलजगतां आदिगुरुः जगतः सृष्ट्यादि-अष्टकर्तृत्ववान् जगजन्मादिकारणं सत्-चित्-आनन्द-एतत्स्वरूपदेहवान् श्रीनिवासः पद्मतीर्थाख्यं महत्तीर्थं प्राप्तः। देव-दैत्य-गन्धर्व-सिद्ध-साध्य-मरुद्गणैः सहितं गरुडारूढं प्राप्तं श्रीनिवासं श्रीशुकमुनिः कृष्णद्वैपायनात्मजः दृष्ट्वा "उरसा शिरसा दृष्ट्या मनसा वचसा तथा। पद्भ्यां कराभ्यां जानुभ्यां प्रणामोऽष्टाङ्ग ईरितः" इत्युक्तेः श्रीनिवासस्य साष्टाङ्गप्रणामं कृत्वा तं प्रति आह— "हे पुरुषोत्तम ! अद्य मे तपसः फलं प्राप्तम्" इति मन्ये। कुतः ? "त्वं वेदप्रतिपाद्यः। ब्रह्मरुद्रादिभिरपि ज्ञातुं न शक्यः, गन्तुं न शक्यः। तादृशं त्वां अद्य एतन्मनेत्राभ्यां पश्यामि। पुत्र-मित्र-अखिललोकपालकसहितं शेषगरुडसहितं रमासहितं त्वां अद्य अत्यन्तभाग्यशालिमनेत्राभ्यां पश्यामि। अत एव मत्कृत-त्वत्पादपूजा अद्य सफला जाता॥ हे स्वामिन् ! वेङ्कटाचलपते ! हे देवदेवोत्तम ! मयि त्वं प्रसन्नो भव। मयि दयां कृत्वा मया दीयमान-कन्दमूल-फलानि भक्षयित्वा सन्तुष्टो भव इति प्रार्थये" इति विज्ञापयामास। ततः श्रीनिवासो वदति— "हे तापसश्रेष्ठ शुकमुने ! सज्जनसम्मतं एकं वचनं वच्मि, भृणु। त्वं तपस्वी, कृशः, सर्वप्रपञ्चविषयेषु हेयताबुद्धिः या सैव वैराग्यं – ईदृशवैराग्यवान्, त्वं ब्रह्मचारी – ब्रह्म नाम वेदः, ब्रह्म चरितुं शीलं अस्येति। अथवा ब्रह्म तपो ज्ञानं वा चरति अर्जयति अवश्यं इति ब्रह्मचारी – वेदाध्ययननिरतः, तपश्चरणशीलः, ज्ञानार्जनपरः, वेदाध्ययनार्थं दृढव्रत-निष्ठावान्। वयं तु "हे विप्रवर्य ! संसारे अत्यासक्तचित्ताः। वयं बहवः आगताः। अस्मिन्नेव दिने महात्मनः आकाशराजस्य पत्तनं गत्वा तत्रैव भोजनं कुर्म इति मनसि कृतवान्" इति।

शुक उवाच—

निष्किञ्चनोऽहं गोविन्द निष्किञ्चनजनप्रिय।
त्वयि भुक्ति जगद्भुक्तं नात्र कार्या विचारणा ॥ २१९ ॥

[1]एवमुक्ते शुके कृष्णं बकुला वाक्यमब्रवीत्।

बकुला उवाच—

शृणु तद्वचनं कृष्ण त्वद्विवाहे रमापते ॥ २२० ॥

यत्नं बहुविधं चक्रे राजानं [2]परिबोधयन्।
मातुर्वचनमाकर्ण्य माधवः शुकमब्रवीत् ॥ २२१ ॥

१. वदत्येवं। २. पर्यबोधयत्।

श्रीनिवास उवाच—

त्वद्वाक्यामृतपानेन तृप्तिर्मेऽभूत् मुनीश्वर।
किमन्नेन प्राकृतेन फलेनाल्परसेन मे ॥ २२२ ॥

तथाऽपि तव वाक्येन करिष्ये भोजनं मुने।
सान्त्वयित्वा मुनिवरं गरुडादवरुह्य सः ॥ २२३ ॥

[1]कुटिकान्तां प्रविश्याथ सपुत्रः सपरिग्रहः।
मुञ्जैः कृतासने रम्ये संस्थितः परमेश्वरः ॥ २२४ ॥

**गूढकर्तृकव्याख्यानम्**

एवं हृषीकेशे श्रीनिवासे उक्तवति वेदव्यासपुत्रः शुकमुनिः भाषते "हे वेदप्रतिपाद्य ! गोविन्द ! अहं निष्किञ्चनः दरिद्रः। त्वं तावत् निष्किञ्चनमादृशजनानां प्रियः। स्वामिन् ! त्वयि भुक्ते कृत्स्नं जगत् भुक्तमिव। अत्र विषये संशयो नैव" इति। एवं शुके वदति बकुला श्रीनिवासं प्रति— "हे रमापते श्रीनिवास ! त्वं शुकवचनं समभ्यर्चय। भवद्-विवाहविषये बहुयत्नान् कृत्वा भवद्-हितकरवाक्यैः आकाशराजं समुदिष्टवान्" इत्याह। बकुलावाक्यं श्रुत्वा श्रीनिवासः शुकं प्रति "हे मुनीश्वर ! शुकाचार्य ! भवन्मुखनिस्सृतवाक्याख्य-अमृतस्य पानेन मे सन्तृप्तिरभूत्। किञ्च अल्परसयुक्तेन अनेन फलेन अनेन प्राकृतान्नेन किं मे प्रयोजनम् ? तथाऽपि तव वाक्यात् हे मुने ! अहं भोजनं कुर्वे" इत्युक्त्वा शुकं समाधाप्य स्वयं गरुडात् अवरुह्य पुत्रपत्नीसहितः सन् श्रीनिवासः शुकस्य पर्णकुटीरं प्रविवेश। शुकदत्त-मुञ्जैःकृत-रम्य-आसने उपविवेश।

**शुकः स्नात्वा पद्मतीर्थे कृत्वाऽन्नं भक्तिसंयुतः ।**
**अमृताबीजनिचयं मुष्टिभि[१]र्विनिहृत्य च ॥ २२५ ॥**

**तत्तण्डुलैर्महाराज कृतवानन्नमुत्तमम् ।**
**बृहतीफलसंयुक्तं तिन्त्रिणीरसमिश्रितम् ॥ २२६ ॥**

१. कुटीरं सं- । २. : प्रविहृत्य ।

**कल्याणकाण्डदीपः**

**अमृताबीजनिचयमिति ।** आमलकीवराठान्तर्गताः कृष्णः सतुषधाना वितुषीकृत्य पूर्वसिद्धानि यानि बीजानि तण्डुलकणस्थानीयानि तेषां निचयं मुष्टिभिः विनिहत्य तत्तण्डुलैः अन्नं कृतवान् । तानेव तण्डुलान् पेषयित्वा क्षीरमादाय तत्क्षीरं आतञ्चनेन दधि कृत्वा तन्मथित्वा नवनीतेन घृतमुत्पाद्य तत्क्षीरेण तद्दध्ना तद्घृतेन सह स्वरसतो मधुरं कृतवान् । अमृतमन्नं पञ्चामृतरसोपेतं उत्तमं बृहतीफल-संयुक्ततिन्त्रिणीरसमिश्रितं व्यजनं च कृत्वा ।

**मूलम्**

**येनान्तर्यामिणो नित्यं पूजनं [१]साधनेन च ।**
**तेनैव [२]ब्रह्ममूर्तेस्तु पूजनं [३]सिद्धसम्मतम् ॥ २२७ ॥**

१. कुरुते नरः । २. बाह्य । ३. साधु ।

**इति तत्त्वार्थविद्वांसः कृत्वा पादावनेजनम् ।**
**पद्मपत्राणि चास्तीर्य तत्रान्नं रससंयुतम् ॥ २२८ ॥**

**विनिक्षिप्य विशेषेण कृतसाष्टाङ्गसन्नतिः ।**
**भोजनं कुरु गोविन्द सदा पूर्णमनोरथ ॥ २२९ ॥**

**एवं सम्प्रार्थितो देवः शुकेन परमर्षिणा ।**
**तद्भक्ति[१]तारतम्येन भगवानात्मभूः स्वयम् ।**
**ऋषीणामुचिताहारं बुभुजे सर्वभोजनः ॥ २३० ॥**

१. पारवश्येन ।

**लक्ष्मीस्तस्याज्ञया मात्रा सार्धं बकुलमालया ।**
**बुभुजे मुनिना दत्तं तदन्नममृतप्रभम् ॥ २३१ ॥**

**कल्याणकाण्डदीपः**

"यदन्नः पुरुषो भवति तदन्नास्तस्य देवताः ।"

"नित्यानन्दचिदाकृते त्रिजगती चित्रान्नभुक्तेऽनिशं
विष्वग्व्याप्तबृहच्छरीरनिरनिष्टावद्यविद्रावण ।
मुक्ताधीश्वरदुर्घटान्नघटनाचातुर्यधुर्यप्रभो
कः कुर्यात् प्रति ते विनाऽञ्जलिपुटं भक्तोऽल्पको वा महान् ॥"

इत्यादि श्रुतिस्मृतितत्त्वार्थविद्वान् सः शुकः येन साधनेनान्तर्यामिणो बिम्बमूर्तेर्नित्यपूजनं तेनैव साधनेन ब्रह्ममूर्ते बृहच्छरीरस्य पूजनं सिद्धसम्मतं इति मनसि कृत्वा अनुसन्धायेत्यादि । शिष्टं स्पष्टम् । यथा नारिकेलात् क्षीरादि तथा धात्री तण्डुलादपीति ज्ञेयम् । अमृता आमलकीत्यर्थः । "पथ्या गुडूच्यामलकीष्वयं स्त्रियाम्" इति त्रिकतान्तरत्नकोशः ।

**गूढकर्तृकव्याख्यानम्**

ततः शुकः पद्मतीर्थे स्नात्वा भक्त्या अन्नं कृतवान् । अमृताबीजानि मुष्टिभिः प्रविहत्य वितुषीकृत्य तत्तण्डुलैः उत्तमं अन्नं चकार । बृहतीफलसंयुक्त-तिन्त्रिणीरसमिश्रितरसं च चकार । ततः मुनिः एवं अनुसन्दधत् । यदन्नः पुरुषो भवति । तदन्नास्तस्य देवताः । "नित्यानन्दचिदाकृते त्रिजगतीचित्रान्न-भुक्तेऽनिशं विष्वग्व्याप्तबृहच्छरीरनिरनिष्टावद्यविद्रावण । मुक्ताधीशसुदुर्घटान्नघटनाचातुर्यधुर्यप्रभो कः कुर्यात् प्रति ते विनाञ्जलिपुटं भक्तोऽल्पको वा महान् ॥" इत्यादि श्रुतिस्मृतितत्त्वार्थज्ञः शुकः येन साधनेन अन्तर्यामिणः बिम्बमूर्तेः नित्यपूजनं तेनैव साधनेन ब्राह्ममूर्तेः बृहच्छरीरस्य पूजनं सिद्धसम्मतम् इत्येवं मनसि कृत्वा अनुसन्धाय "अस्मिन् राष्ट्रे श्रियमावेशयाम्यतो देवीः प्रति पश्याम्यापः । दक्षिणं पादमवने निजेऽस्मिन् राष्ट्र इन्द्रियं दधामि । सव्यं पादमवने निजेऽस्मिन् राष्ट्र इन्द्रियं वर्धयामि । पूर्वमन्यमपरमन्यं पादमवने निजे देवाराष्ट्रस्य गुप्त्या अभयस्यावरुध्यै । आपः पादावनेजनेर्द्विषन्तं निर्दहन्तु मे" इति मन्त्रैः श्रीहरिपादं प्रक्षालनं कृत्वा पद्मपत्राणि आस्तीर्य तत्र रसयुक्तं अन्नं प्रक्षिप्य साष्टाङ्गवन्दनं कृत्वा श्रीनिवासं प्रति "हे सर्वेषु कालेषु परिपूर्णमनोरथवान् श्रीनिवास ! भोजनं कुरुष्व" इति प्रार्थयामास । तद्-भक्तिपरवशः सन् सर्वसारभोक्ता श्रीनिवासः तदा ऋषियोग्य-आहारं बुभुजे । श्रीनिवासाज्ञया लक्ष्मीः मात्रा बकुलया सह शुकदत्त-अमृतसदृश-अन्नं बुभुजे ॥

मूलम्

तस्मिन् भुक्तवति श्रीशे ऋषयः कोपपूरिताः ।
तदा शुकं भीषयन्तः समुत्तस्थुः वरासनात् ॥ २३२ ॥

शापानुग्रहसामर्थ्यसाधनाश्च तपोधनाः।
तेषां मतमनुज्ञाय भगवान् बहिरागतः ॥ २३३ ॥

फूत्कारं कृतवान् कृष्णः सर्वेषां तृप्तिहेतवे ।
तन्मुखाम्भोजसम्भूतवायुना तृप्तिमाययुः ॥ २३४ ॥

सुरधेनोर्यथा तृप्तिस्तथैव मुनिपुङ्गवाः ।
शुकं सन्तोषयामासुर्वचनैः स्तोत्रमिश्रितैः ॥ २३५ ॥

मूलम्

**श्रीनिवासाभिमुखतया स्वपुरात् सपरिकरबियन्नृपागमनम्**

अष्टम्यां तत्र वासं च नवम्यां गुरुवासरे ।
प्रभातसमये प्राप्ते श्रीनिवासस्त्वरान्वितः ।
पुनर्गरुडमारुह्य गुरुवारे जगद्गुरुः ॥ २३६ ॥

चतुरङ्गबलाध्यक्षं ब्रह्माणं च पितामहम् ।
निधाय पुरतो राजन् जगाम जगदीश्वरः ।
अस्ताद्रिं प्रस्थिते भानौ तस्मिन् काले महीपतिः ॥ २३७ ॥

**कल्याणकाण्डदीपः**

**अष्टम्यामिति** । **तत्र** शुकाश्रमे वासं च । भोजनं वासं च कृत्वा नवम्यां गुरुवासरे प्रभातसमये प्राप्ते त्वरान्वित उत्थाय जगद्गुरुरपि गुरुवासरे पूर्वफल्गुन्यां राजसन्मानहेतौ गदायोगे पुनर्गरुडमारुह्य चतुरङ्गबलाध्यक्षं पुरतो निधाय शुकाश्रमात् प्रस्थितो भानावस्ताद्रिप्रस्थिते अस्तमिते चन्द्रे प्रकाशमाने राजपुरीं जगामेत्यर्थः ।

### गूढकर्तृकव्याख्यानम्

श्रीनिवासः यदा भुक्तवान् तदा शापानुग्रहसामर्थ्यवन्तः तपोधनाः ऋषयः शुकाय आत्मनः अनादृतवान् इति अत्यन्तं कुपिताः तं शुकं भर्त्सयन्तः स्व-स्व-आसनात् उत्तस्थुः । ऋषीन् अतीव क्रुद्धान् मत्वा तदाशयं विज्ञाय कुटीरात् बहिरागत्य "सर्वे मुनयः तृप्यन्तु" इति श्रीनिवासः फूत्कारं कृतवान् । ऋषितृप्तिजनकभूतेन श्रीनिवासमुखकमलात् निरसृतवायुना कामधेन्वा यथा ऋषयः तृप्ताः भवन्ति तथा सर्वे मुनिश्रेष्ठाः सन्तृप्ताः भूत्वा स्तोत्रपरवाक्यैः शुकं सन्तोषयामासुः ॥

ततः श्रीनिवासादि सर्वे अष्टम्यां बुधवारे तत्र शुकाश्रमे वासं भोजनं च कृत्वा नवम्यां गुरुवारे प्रभातसमये प्राप्ते, श्रीनिवासः त्वरान्वितः उत्थाय स्वयं जगद्गुरुरपि गुरुवारे पूर्वफाल्गुन्यां राजसन्मानहेतौ गदायोगे पुनः गरुडं आरुह्य हस्त्यश्वरथपदातिरूपचतुरङ्गबलाध्यक्षं विधिं पुरतः कृत्वा शुकाश्रमात् प्रस्थितो भानौ अस्ताद्रिं गते चन्द्रे प्रकाशमाने आकाशराजपुरीं जगाम ॥

### मूलम्

**अष्टवर्गं स्वयं कृत्वा कृतमङ्गलकौतुकः ॥ २३८ ॥**

**पद्मावतीं स्नापयित्वा गन्धतैलेन भूमिप ।**
**अलङ्कृत्य वरां कन्यामलङ्कारैर्महीपतिः ॥ २३९ ॥**

**गजमारोप्य तरसा पुत्रीं पुत्रहिते रतः ।**
**आकाशराजो धर्मात्मा पुत्रेण सह[1]भ्रातृणा ॥ २४० ॥**

**पुरोहितेन शक्रेण तोण्डिमानेन [2]भूमिप ।**
**[3]वासुदेवं जगद्योनिं द्रष्टुकामो रमापतिम् ॥ २४१ ॥**

१. संयुतः । २. निर्ययौ । ३. श्रीनिवासं ।

**चतुरङ्गबलैः सर्वैः गजाश्वरथसङ्कुलम् ।**
**ध्वजैश्चित्रपताकैश्च चामरैर्व्यजनैर्नृप ॥ २४२ ॥**

**भेरीदुन्दुभिनिर्घोषैर्वादित्राणां महास्वनैः ।**
**नर्तकैर्नटकैश्चापि सूतमागधबन्दिभिः ॥ २४३ ॥**

**स्तूयमानो महाराज सैन्यमध्ये विराजितः ।**
**यथाऽऽकाशे चन्द्रबिम्बं नक्षत्रगणमण्डले ॥ २४४ ॥**

**कल्याणकाण्डदीपः**

अथ आकाशराजकथामाह **तस्मिन् काले महीपतिरिति** । नवम्यां गुरुवासरे प्रभातसमये **महीपतिः** राजा **कृतमङ्गळकौतुकः** कृतानि मङ्गळानि प्रकृतपद्माकल्याणस्य कौतुकानि दर्पणकलशाद्यष्टमङ्गळानि येन स तथा । **गन्धतैलेन** मल्लिककर्पूरहरिद्रावासितस्नेहेन तैलशास्त्रविधिना नागवल्लीदलेन सुवासिन्या कन्यापूर्वमभ्यज्योष्णोदकेन स्नापयित्वा स्वयं स्वभार्यया स्नातः । वरां कन्यां अलङ्कारैः अलङ्कृत्य तां पुरस्कृत्य पुण्याहाद्यष्टवर्गं ग्रहमखं तदङ्गब्राह्मणतर्पणं च कृत्वा अक्षतान् शिरसि कृत्वा इत्यतःपरं अत्र सन्दर्भशेषः । तथा हि । अमरावतीमिव सुसंमृष्टाजिरवीथिकां मेर्वाद्याकरध्वजपताकपूगपोतरम्भास्तम्भदीपस्तम्भतोरणाद्यलङ्कृतां निर्धार्य इन्द्रोक्तमार्गेण श्रीनिवासालयसमीपस्थस्वीयमहानसे पाकार्थं सम्भाराः सन्नियन्तामित्यनुशास्य तृतीयकक्ष्यास्थदुर्गालयसोपानमार्गे जानुदघ्नजलकुल्यां स्यन्दयत्विति आज्ञाप्य दुर्गालये वरसिंहासनं प्रतिष्ठाप्य तत्पुरतः सुसम्मृष्टाजिरे किलिञ्जकः कुथा चास्तीर्ये तामित्युक्त्वा देवळान् सन्नह्यतामित्यनुशास्य जनी जन्यजनानां समस्तानां वैशाखे घर्मश्रान्तानां वसन्ताराधनेनाराधयितुं सुगन्धमाल्यपिष्टात सुधूपवर्ति पानकतक्रोदकाद्रचणकसमधुकदलीचूतपनसरसायन नारिकेळ-शालादुरसाळखण्डताम्बूलादीननुशास्य वधूदेहप्रमाणैकविंशतितन्तुकवर्तिकदीपं च सन्नाह्येति । अस्तमिते भानौ । चन्द्रे भासमाने । पुत्रहिते रतः । पुत्रीपुत्रयोर्हित आसक्तः । धर्मात्मा आकाशराजः । **भ्रातृणा** तोण्डिमानेन सह सहकृतेन पुत्रेण शक्रेण सह पुरोहितेन **च** अष्टकन्याभिश्च पुत्रीं साम्बरविमानं गजं ऐरावतं आरोप्य स्वयं रथमारुह्य जगद्योनिं रमापतिं वासुदेवं द्रष्टुकामः प्रतस्थ इत्यन्वयः । गजाश्वरथसङ्कुलं चतुरङ्गबलं शकन्ध्वादिः सर्वं पुरतो निधाय ध्वजैः सिंहाद्याकारैः चित्रपताकैर्नानावर्णवैजयन्तीभिः राजविभवैर्विभूषितः चामरैर्व्यजनैश्च वीज्यमानः भेरीदुन्दुभिनिर्घोषैः अतिशयितभेरीभाङ्कारदुन्दुभिहुङ्कारह्लादैः । तथा वादित्राणामातोद्यानां दूरे घुष्यमाणः **नर्तकैः** पदार्थाभिनयनज्ञैः **नटकैः** वाक्यार्थाभिनयनज्ञैः सूतमागधवन्दिभिः पूर्वोक्तलक्षणैरपि स्तूयमानः । यथाऽऽकाशे नक्षत्रगणमण्डले मध्ये चन्द्रबिम्बो राजते तथा सैन्यमध्ये स्वमित्रक्षत्रराजमण्डले विराजितः सन् वीथीद्वयं परिक्रम्य दुर्गां वीथीं प्रत्याजगामेत्यर्थः ।

मूलम्

**श्रीनिवासवियन्नृपपद्मावतीनां परस्परावलोकनम्**

राजा ददर्श गोविन्दं शक्रेण परिदर्शितम् ।
गरुडस्कन्धमारूढं श्वेतच्छत्रा[१]भिलक्षितम् ॥ २४५ ॥

सुकुमारं युवानं च सुन्दरं [२]जनसुन्दरम् ।
श्रीनिवासं जगद्योनिं सच्चिदानन्दविग्रहम् ॥ २४६ ॥

१. दिभिर्युतम् । २. सुन्दराननम् ।

**गूढकर्तृकव्याख्यानम्**

इतः राजधान्यां आकाशः नवम्यां गुरुवारे प्रातः पद्मावतीकल्याणरूपदर्पणकलशादि-अष्ट-मङ्गलवस्तूनि सिद्धानि कृत्वा मल्लिका-कर्पूर-हरिद्रावासितस्नेहेन तैलशास्त्रविधिना नागवल्लीदलेन सुवासिन्या पूर्वं अभ्यज्य ततः पद्मां उष्णोदकेन स्नापयित्वा स्वयं सभार्यः स्नातः वरां कन्यां पद्मां अलङ्कारैः अलङ्कृत्य तां पुरस्कृत्य पुण्याहादि-अष्टवर्गं नवग्रहपूजां कृत्वा तदङ्गब्राह्मणसन्तर्पणं कृत्वा अक्षतान् शिरसि कृत्वा तद्दिनवैवाहिककार्यं निर्वर्तयामास । किञ्च राजा अमरावतीं इव सुसम्मृष्टा-जिरवीथिकां ध्वजपताकपूगपोतरम्भास्तम्भतोरणाद्यलङ्कृतां कारयित्वा इन्द्रोक्तमार्गेण श्रीनिवासालय-समीपस्थस्वीयमहानसे पाकार्थं सम्भाराः सम्भ्रियन्तां इति अनुशास्य तृतीयकक्ष्यास्थदुर्गालय-सोपानमार्गे जानुदघ्नजलकुल्यां स्यन्दयन्तु इति आज्ञाप्य दुर्गालये वरसिंहासनं प्रतिष्ठाप्य तत्पुरतः सुसम्मृष्ट-अजिरे किलिञ्जकः कुथा च आस्तीर्येतां इत्युक्त्वा देवलकान् सन्नह्यन्तां इति अनुशास्य वैशाखे घर्मश्रान्तानां समस्तजनीजन्यजनानां वसन्ताराधनेन आराधयितुं सुगन्धमाल्यपिष्टातसुधूपवर्ति पानक-तक्र-उदक-आर्द्रचणक -समधु-कदली-चूत-पनस-रसायन-नारिकेल-शलाटु-रसाल-खण्ड-ताम्बूलादीन् अनुशास्य वधूदेहप्रमाण-एकविंशतितन्तुकवर्तिकदीपं च सन्नाह्य सूर्ये अस्तं इते चन्द्रे भासमाने पुत्रीपुत्रहिते आसक्तः धर्मात्मा आकाशः भ्रात्रा तोण्डिमानेन पुत्रेण वसुदानेन शक्रेण पुरोहितेन सहितः अष्टकन्याभिश्च युतः पुत्रीं साम्बरविमानं ऐरावतं आरोप्य स्वयं रथं आरुह्य जग-जन्मादिकारणं रमापतिं द्रष्टुकामः प्रतस्थे ॥

हस्त्यश्वरथपदातिरूप-चतुरङ्गबलं सर्वं पुरतो निधाय सिंहव्याघ्राद्याकारध्वजैः चित्रवर्णपताकैः नानावर्णवैजयन्तीभिः राजवैभवैः विभूषितः चामरैः व्यजनैश्च वीज्यमानः भाङ्कार-भेरी-दुङ्कार-दुन्दुभि-

ह्लादैः वादित्राणां महास्वनैः घुष्यमाणः पदार्थाभिनयनज्ञैः नर्तकैः सूतमागधबन्दिभिः स्तूयमानः यथा आकाशे नक्षत्रगणमण्डलमध्ये चन्द्रबिम्बो राजते तथा सैन्यमध्ये स्वमित्रराजमण्डले विराजितः वीथीद्वयं परिक्रम्य दुर्गावीथीं प्रत्याजगाम । एवं आगच्छन् स्वस्मै इन्द्रेण परिदर्शितं श्रीनिवासं ददर्श । ''हे राजन् ! पश्य । श्वेतच्छत्रेण लक्षितः गरुडस्कन्धं आरूढः सुकुमारः, पञ्चविंशतिवार्षिकः, युवा, लोकसुन्दरः, सुन्दरीजनमनोहरः, सच्चिदानन्दमूर्तिः, जगज्जन्मादिकारणं दृश्यते'' इति इन्द्रः श्रीनिवासं आकाशाय दर्शयति ।

मूलम्

दृष्ट्वा सन्तुष्टमनसा स्वरथादवरुह्य सः ।
पद्मावतीं स्वपुत्रीं च निधाय पुरतो नृपः ॥ २४७ ॥
पुरोहितं पुरस्कृत्य इदं वचनमब्रवीत् ।

आकाशराजोवाच—

धन्योऽहं कृतकृत्योऽहं [1]स्वर्गपन्थानमाश्रितः ॥ २४८ ॥
एतस्मिन्नेव काले तु श्रीनिवासः सताङ्गतिः ।
ददर्श राजशार्दूलं नारदेन [2]प्रकाशितम् ॥ २४९ ॥

नारद उवाच—

दीर्घश्मश्रुं दीर्घबाहुं [3]सर्वदीर्घसमन्वितम् ।
श्वशुरं तव गोविन्द पश्य माधव भूमिपम् ॥ २५० ॥

---
१. स्वर्गमार्गं समाश्रितः । २. प्रदर्शितम् ।
३. सर्वदा दीर्घदर्शनम् ।

कल्याणकाण्डदीपः

राजा ददर्शेति । श्वेतच्छत्राऽभिलक्षितं तेन लक्षणेन व्यावृत्ततया अवधारितं जनसुन्दरं लोकसुन्दरं सुन्दरीजनसुन्दरमिति वा । पद्मावतीमिति । अथ राजा स्वयमवतीर्णः पुत्रीं पुरोहितादीन् गजादवतीर्य पुरतो निधाय पुरोहितं गुरुं पुरस्कृत्य सम्भाष्य । ददर्श इति । दीर्घश्मश्रुमित्यादि-विशेषणचतुष्टयोपेतं नृपं पश्येति नारदेन प्रदर्शितं ददर्शेत्यन्वयः ।

मूलम्

श्रीनिवास उवाच—

धन्यं नारद मे जन्म [१]आकाशो मम बान्धवः ।
[२]तेन सम्बन्धमासाद्य किं मया चरितं पुरा ॥ २५१ ॥

१. यदाकाशोऽद्य । २. सम्बन्धस्तेन सम्प्राप्तः ।

कल्याणकाण्डदीपः

**धन्यमिति** । हे नारद ! मे जन्म अवतारः धन्यम् । कुतः ? यतः आकाशो मम बान्धवः श्वशुरो जातः अत इति शेषः । यः परमधार्मिको राजा तेन सम्बन्धं जामातृत्वमासाद्य कृतकृत्येन मया पुरा किं सुकृतमाचरितं तद्वदेत्यर्थः ।

मूलम्

[१]एवमुक्ते हृषीकेशो राजा सत्यपराक्रमः ।
द्वारतोरणमासाद्य श्रीनिवासं ददर्श ह ॥ २५२ ॥

पूजयामास गोविन्दं वस्त्रैराभरणादिभिः ।
गन्धतैलेन राजेन्द्र जामातरमपूजयत् ॥ २५३ ॥

सा ददर्श वरारोहा पतिं परमपावनम् ।
पद्मावती विशालाक्षी लज्जया परिमोहिता ॥ २५४ ॥

तां ददर्श जगद्योनिः कमलाक्षीं महीपते ।
[२]उभौ लक्ष्मीपती पुण्यौ वाहनादवरुह्य च ॥ २५५ ॥

१. वदत्येवं २. पद्मावतीश्रीनिवासौ ।

कल्याणकाण्डदीपः

**पद्मावतीति** । सौन्दर्यपरिमोहिता लज्जयावनतमुखी कटाक्षेण ददर्श इत्यर्थः । **लक्ष्मीपती** राज्यलक्ष्मीपतिमहालक्ष्मीपती । **वाहनात्** रथात् गरुडात् अवरुह्य अन्योन्यं ददृशतुः । यद्वा लक्ष्मीपती आकाशतोण्डिमानौ वाहनादवरुह्य श्रीनिवासं ददृशतुः । पूर्वं वल्मीकान्तरास्ते श्रीनिवासः सुन्दर-मूर्तिरिति श्रवणमात्रम्, इदानीं साक्षात् ददृशुरिति भावः । यस्मात् **पुण्यौ** तादृक्सुकृतिनौ ।

मूलम्

[1]अन्योन्यालिङ्गनं चक्रू राज्ञस्तस्य महाजनाः ।
वासुदेवस्य ये भक्ता अन्योन्यपरिरम्भणम् ॥ २५६ ॥

१. अन्योन्यालोकनं राजन् चक्राते संस्थितौ तव ।
वासुदेवस्य ये भक्ता अन्योन्यं परिरेभिरे ॥

राज्ञः अस्य च वासुदेवस्य च महाजनाः अभिगम्य अन्योन्यालिङ्गनं चक्रुः । वासुदेवस्य च ये भक्ताः तेऽपि अन्योन्यपरिरम्भणं चक्रुरित्यन्वयः । अत्रेदं बोध्यम्— वधूवरपक्षीयौ शुकनारदौ गुरुवसिष्ठौ इत्याद्येवं सुगन्धिस्नेहेन हृदयं स्नेहयित्वा पिष्टा तेनामोघफलपुष्पादि दत्वा इत्यादिक्रमेणेति । अथ महाजनाः दुर्गालये सोपानमार्गे जानुदघ्नजलकुल्यायां पादौ हस्तौ निमृज्योत्तीर्णाः सोपानमारुह्य ज्योत्स्नाविताने आस्तीर्णकुथायां उपविष्टा बभूवुः । वधूवरौ सिंहासने । तयोः पार्श्वे साष्टमङ्गळा अष्टा कन्याः पश्चात् सरस्वतीबकुळादयः । पुरतो ब्रह्माद्या देवा ऋषयश्च ।

गूढकर्तृकव्याख्यानम्

श्रीनिवासं दूरात् दृष्ट्वा आकाशः सुसन्तुष्टः स्वयं अवतीर्णः पुत्रीं पद्मां ऐरावतात् अवतार्य तां पुरतो निधाय पुरोहितं पुरस्कृत्य सम्भाष्य तं प्रति "अद्य अहं धन्यः, कृतकृत्यश्च अभूवम् । स्वर्गमार्गं उपाश्रितः". इति ॥ ततः नारदः श्रीनिवासं प्रति "हे जगदीश श्रीनिवास ! पश्य तव श्वशुरम् । दीर्घश्मश्रुः, दीर्घबाहुः, दीर्घदृष्टिः दृश्यते खलु, स एव आकाशः. तव श्वशुरः, पश्य" इति आकाशं दर्शयति । आकाशं दृष्ट्वा श्रीनिवासः वदति "हे नारद ! अद्य मे अवतारः धन्यः सार्थकः, यतः आकाशः मम बान्धवः श्वशुरो जातः । परमधार्मिकनृपस्य सम्बन्धं जामातृत्वं आसाद्य कृतकृत्येन मया पुरा किं सुकृतं आचरितम् ? तद्वद" इति ॥ एवं सति राजा नगरद्वारतोरणदेशं आसाद्य श्रीनिवासं ददर्श । ततः अनर्घ्यवस्त्राभरणादिभिः परिमलतैलेन वेदप्रतिपाद्यं श्रीनिवासं पूजयामास । सा पद्मा जगदीशं श्रीनिवासं दृष्ट्वा तस्य सौन्दर्यपरिमोहिता लज्जया अवनतमुखी पतिं श्रीनिवासं कटाक्षेण ददर्श । कमलाक्षीं पद्मां श्रीनिवासः ददर्श । आकाशः स्वरथात् श्रीनिवासः गरुडात् अवरुह्य अन्योन्यं ददृशतुः । तोण्डिमानादयः अपि स्वयानादवतीर्णाः श्रीनिवासं ददृशुः । श्रीनिवासपद्मावत्यौ अन्योन्यं ददृशतुः । तदा श्रीनिवासभक्ताः ये ते, राजतः महाजनश्च सानन्दं अन्योन्यं आलिलिङ्ग । वधूवरपक्षीयौ शुकनारदौ गुरुवसिष्ठौ इत्यादयः सन्तोषेण सुगन्धिस्नेहेन हृदयं स्नेहित्वा पिष्ठातेन आमोद्य फलपुष्पादि दत्वा अन्योन्यं आलिलिङ्गुः ॥

मूलम्

**पूजयामास गोविन्दं वस्त्रालङ्कारपुष्कलैः ।**
**गन्धतैलेन राजेन्द्र जामातारमनामयम् ॥ २५७॥**

**कल्याणकाण्डदीपः**

अथ राजा वरस्य सीमान्तपूजां करिष्य इति सङ्कल्प्य तदङ्गगणेशवरुणौ सम्पूज्य स्वाचार्यपत्नी-हस्तेन पार्वतीमुखाष्टमङ्गळाष्टकन्यापूर्वं पदार्थानुसमयेनोत्तरासंस्थं पाणिपत्नीः हरिद्राङ्गरागगन्धपुष्पकुङ्कुम-कस्तूरीसिन्धूरतिलकसुगन्धिस्नेहपिष्टान्तकताम्बूलसकूर्पासकुङ्कुमाङ्कितवस्त्रादिमङ्गळोपचारैः श्रीनिवासं पूजयामासेत्याह **पूजयामासेति । वस्त्रालङ्कारपुष्कलैः** वस्त्रैः पुष्कळालङ्कारैः इत्यर्थः । वस्त्रालङ्कारः पुष्कलोऽधिको येषां तैः भूषणैरिति वा । अनर्घ्यवस्त्रद्वयं तादृशं शिरोवेष्टनम् । अनर्घ्यकञ्चुकं ऊर्णवस्त्रेण उपर्युत्तरीयं मध्यबन्धनं वस्त्रे पत्रवस्त्रमित्याद्येवं वस्त्रालङ्कारपौष्कल्यम् । कटकाद्याभरणानां अल्पत्वं उत्तरत्र एतेषां पौष्कल्यम् । एवं वस्त्रैराभरणैरलङ्कृत्य सुगन्धलेपनं कृत्वा सुगन्धितैलेन हृदयं स्निग्धीकृत्य पिष्टा-तकमुष्टिभिः पदादिवासनेनामोघमन्दारमालां निधाय रत्नाक्षतां फाले निक्षिप्य आदर्शं दर्शयित्वा नीराज्य दुग्धं प्राशयित्वा एतदङ्गसभापूजनं कृत्वा विष्णुनिवेदितपूर्वसम्भृतवसन्तसम्भारैः सभामाप्य दक्षिणां दत्वा मन्त्राक्षतान् शिरसि सन्धार्योपविष्टः । अथ एवमेव श्रीनिवासोऽपि "स्वाचार्यवसिष्ठारुन्धतीमुखेन कन्यायाः फलपूजां करिष्ये" इति सङ्कल्प्य गणपतिमाराध्य वधूसम्बन्धाष्टकन्यापूर्वं इत्यादि मङ्गलोप-चारैः इत्यन्तपूर्वलिखितोपचारैः पूजयित्वा फलं प्रदाप्य नीराज्य दुग्धं प्राशयित्वा सभां सम्पूज्य दक्षिणां दत्वा आशीराशास्य स्थितः ।

अथ उभौ दुर्गां फलसमर्पणपूर्वं सम्पूज्य वधूदीपं प्रज्वाल्य वरयाचनं चक्रुरित्याह **नगरद्वार-निलयामिति ।**

मूलम्

**श्रीनिवासस्य पद्मावत्या सह दुर्गादर्शनपूर्वकं पुरप्रवेशः**

**नगरद्वारनिलयां [1]दुर्गां मायायुतां हरिः ।**
**पद्मावत्यनुगो [2]राजन् देवीं नत्वा विशेषतः ॥ २५८॥**

१. दुर्गामासाद्य भक्तितः । २. मायी ।

वरं ययाचे गोविन्दः [1]शीघ्रं भार्यां कुरु प्रिये ।
पद्मावतीं विशालाक्षीं सा वव्रे वरमुत्तमम् ॥ २५९ ॥

१. कुरु भार्यां रमामिति ।

**कल्याणकाण्डदीपः**

मायायुतां मायादेवीसन्निधानयुताम् । पद्मावत्यनुगः पद्मापुरःसरः ।

**मूलम्**

पद्मावत्युवाच—

पतिं कुरु रमानाथं श्रीनिवासं जगन्मयम् ।
[1]वन्दयित्वा वरां देवीमैरावतमुपाश्रिता ॥ २६० ॥

गरुडस्कन्धमारूढो भगवान् भक्तवत्सलः ।
दीपकैस्तैल[2]सम्बद्धैः सहस्रायुत[3]संयुतैः ।
[4]लाजपुष्पासुमालाभिर्विकिरद्भिरितस्ततः ॥ २६१ ॥

१. इति स्तुत्वा च सा । २. संसिक्तैः । ३. सङ्घचकैः ।
४. लाजान् पुष्पाण्यक्षतांश्च ।

**गूढकर्तृकव्याख्यानम्**

अथ महाराजाः दुर्गालयसोपानमार्गे जानुदघ्नजलकुल्यायां पादौ हस्तौ निमृज्य उत्तीर्णाः सोपान-मारुह्य ज्योत्स्नाविताने आस्तीर्णकुथायां उपविष्टाः ॥ ततः वधूवरौ सिंहासने तयोः पार्श्वयोः साष्टमङ्गलाः अष्टौ कन्याः । पश्चात् सरस्वतीबकुलादयः । पुरतः ब्रह्माद्या देवाः ऋषयश्च उपविष्टाः ॥

ततः आकाशः "वरस्य सीमान्तपूजां करिष्ये" इति सङ्कल्प्य तदङ्गगणेशवरुणौ सम्पूज्य साचार्यपत्नीहस्तेन पार्वतीमुखाष्टमङ्गलप्रदकरैः पुष्कल-अनर्घ्यवस्त्राभरणैः अनर्घ्यशिरोवेष्ठनेन, अनर्घ्य-कञ्चुक-ऊर्णवस्त्र-उत्तरीय-मध्यबन्धनवस्त्र-कटकाद्याभरणैः जामातरं अलङ्कृत्य सुगन्धलेपनं कृत्वा विष्णुनिवेदितं पूर्वसम्भृतसुगन्धितैलेन हृदयं स्निग्धीकृत्य पिष्टातकमुष्टिभिः पटादिवासनेन अमोघ-मन्दारमालां निधाय रत्नाक्षतां फले निक्षिप्य आदर्शं दर्शयित्वा नीराज्य दुग्धं प्राशयित्वा एतदङ्गसभापूजां कृत्वा विष्णुनिवेदितपूर्वसम्भृतवसन्तसम्भारैः समापय्य दक्षिणां दत्वा मन्त्राक्षतान् शिरसि सन्धार्य उपविष्टः ॥

मूलम्

**पूजयामास गोविन्दं वस्त्रालङ्कारपुष्कलैः ।**
**गन्धतैलेन राजेन्द्र जामातारमनामयम् ॥ २५७ ॥**

**कल्याणकाण्डदीपः**

अथ राजा वरस्य सीमान्तपूजां करिष्ये इति सङ्कल्प्य तदङ्गगणेशवरुणौ सम्पूज्य स्वाचार्यपत्नी-हस्तेन पार्वतीमुखाष्टमङ्गळाष्टकन्यापूर्वं पदार्थानुसमयेनोत्तरासंस्थं पाणिपत्नीः हरिद्राङ्गरागगन्धपुष्पकुङ्कुम-कस्तूरीसिन्धूरतिलकसुगन्धिस्नेहपिष्टान्तकताम्बूलसकूर्पासकुङ्कुमाङ्कितवस्त्रादिमङ्गळोपचारैः श्रीनिवासं पूजयामासेत्याह **पूजयामासेति** । **वस्त्रालङ्कारपुष्कलैः** वस्त्रैः पुष्कळालङ्कारैः इत्यर्थः । वस्त्रालङ्कारः पुष्कलोऽधिको येषां तैः भूषणैरिति वा । अनर्घ्यवस्त्रद्वयं तादृशं शिरोवेष्टनम् । अनर्घ्यकञ्चुकं ऊर्णवस्त्रेण उपर्युत्तरीयं मध्यबन्धनं वस्त्रे पत्रवस्त्रमित्याद्येवं वस्त्रालङ्कारपौष्कल्यम् । कटकाद्याभरणानां अल्पत्वं उत्तरत्र एतेषां पौष्कल्यम् । एवं वस्त्रैराभरणैरलङ्कृत्य सुगन्धलेपनं कृत्वा सुगन्धितैलेन हृदयं स्निग्धीकृत्य पिष्टा-तकमुष्टिभिः पदादिवासनेनामोघमन्दारमालां निधाय रत्नाक्षतां फाले निक्षिप्य आदर्शं दर्शयित्वा नीराज्य दुग्धं प्राशयित्वा एतदङ्गसभापूजनं कृत्वा विष्णुनिवेदितपूर्वसम्भृतवसन्तसम्भारैः सभामाप्य दक्षिणां दत्वा मन्त्राक्षतान् शिरसि सन्धार्योपविष्टः । अथ एवमेव श्रीनिवासोऽपि "स्वाचार्यवसिष्ठारुन्धतीमुखेन कन्यायाः फलपूजां करिष्ये" इति सङ्कल्प्य गणपतिमाराध्य वधूसम्बन्धाष्टकन्यापूर्वं इत्यादि मङ्गलोप-चारैः इत्यन्तपूर्वलिखितोपचारैः पूजयित्वा फलं प्रदाप्य नीराज्य दुग्धं प्राशयित्वा सभां सम्पूज्य दक्षिणां दत्वा आशीराशास्य स्थितः ।

अथ उभौ दुर्गां फलसमर्पणपूर्वं सम्पूज्य वधूदीपं प्रज्वाल्य वरयाचनं चक्रुरित्याह **नगरद्वार-निलयामिति** ।

मूलम्

**श्रीनिवासस्य पद्मावत्या सह दुर्गादर्शनपूर्वकं पुरप्रवेशः**

**नगरद्वारनिलयां [१]दुर्गां मायायुतां हरिः ।**
**पद्मावत्यनुगो [२]राजन् देवीं नत्वा विशेषतः ॥ २५८ ॥**

१. दुर्गामासाद्य भक्तितः । २. मायी ।

वरं ययाचे गोविन्दः [1]शीघ्रं भार्यां कुरु प्रिये।
पद्मावतीं विशालाक्षीं सा वव्रे वरमुत्तमम् ॥ २५९॥

१. कुरु भार्यां रमामिति।

**कल्याणकाण्डदीपः**

मायायुतां मायादेवीसन्निधानयुताम्। पद्मावत्यनुगः पद्मापुरःसरः।

**मूलम्**

पद्मावत्युवाच—

पतिं कुरु रमानाथं श्रीनिवासं जगन्मयम्।
[1]वन्दयित्वा वरां देवीमैरावतमुपाश्रिता ॥ २६०॥

गरुडस्कन्धमारूढो भगवान् भक्तवत्सलः।
दीपकैस्तैल[2]सम्बद्धैः सहस्रायुत[3]संयुतैः।
[4]लाजपुष्पासुमालाभिर्विकिरद्भिरितस्ततः ॥ २६१॥

१. इति स्तुत्वा च सा। २. संसिक्तैः। ३. सङ्घकैः।
४. लाजान् पुष्पाण्यक्षतांश्च।

**गूढकर्तृकव्याख्यानम्**

अथ महाराजाः दुर्गालयसोपानमार्गे जानुदघ्नजलकुल्यायां पादौ हस्तौ निमृज्य उत्तीर्णाः सोपानमारुह्य ज्योत्स्नाविताने आस्तीर्णकुथायां उपविष्टाः॥ ततः वधूवरौ सिंहासने तयोः पार्श्वयोः साष्टमङ्गलाः अष्टौ कन्याः। पश्चात् सरस्वतीबकुलादयः। पुरतः ब्रह्माद्या देवाः ऋषयश्च उपविष्टाः॥

ततः आकाशः "वरस्य सीमान्तपूजां करिष्ये" इति सङ्कल्प्य तदङ्गगणेशवरुणौ सम्पूज्य साचार्यपत्नीहस्तेन पार्वतीमुखाष्टमङ्गलप्रदकरैः पुष्कल-अनर्घ्यवस्त्राभरणैः अनर्घ्यशिरोवेष्ठनेन, अनर्घ्य-कञ्चुक-ऊर्णवस्त्र-उत्तरीय-मध्यबन्धनवस्त्र-कटकाद्याभरणैः जामातरं अलङ्कृत्य सुगन्धलेपनं कृत्वा विष्णुनिवेदितं पूर्वसम्भृतसुगन्धितैलेन हृदयं स्निग्धीकृत्य पिष्टातकमुष्टिभिः पटादिवासनेन अमोघ-मन्दारमालां निधाय रत्नाक्षतां फले निक्षिप्य आदर्शं दर्शयित्वा नीराज्य दुग्धं प्राशयित्वा एतदङ्गसभापूजां कृत्वा विष्णुनिवेदितपूर्वसम्भृतवसन्तसम्भारैः समापय्य दक्षिणां दत्वा मन्त्राक्षतान् शिरसि सन्धार्य उपविष्टः॥

ततः एवमेव श्रीनिवासोऽपि ''स्वाचार्यवसिष्ठपत्नी-अरुन्धतीमुखेन कन्यायाः फलपूजां करिष्ये'' इति सङ्कल्प्य गणपतिं आराध्य पूर्वोक्त-वस्त्र-आभरण-गन्ध-पुष्पादि-उपचारैः कन्यां पूजयित्वा फलं प्रदाप्य नीराज्य दुग्धं प्राशयित्वा सभां सम्पूज्य दक्षिणां दत्वा आशीः आशास्य स्थितः ॥ अनन्तरं श्रीनिवासपद्मावत्यौ उभौ नगरद्वारस्थितदुर्गालयं प्रविश्य दुर्गां दृष्ट्वा नमस्कृत्य फलसमर्पणपूर्वं सम्पूज्य उभौ वरं ययाचाते । श्रीनिवासः ''इमां पद्मां मम भार्यां कुरु'' इति । पद्मा ''इमं श्रीनिवासं मम भर्तारं कुरु'' इति ॥ दुर्गां स्तोत्रैः स्तुत्वा प्रस्थितौ । पद्मा ऐरावतं आरूढा । श्रीनिवासः गरुड-स्कन्धमारूढः ।

**स्तुवद्भिर्वन्दिवृन्दैश्च ससूतैर्मागधैरपि ।**<br>**आशीर्वादं प्रकुर्वद्भिर्वेदघोषपुरस्सरम् ॥ २६२ ॥**

**ब्रह्मादिभिस्सुरश्रेष्ठैर्भूसुरैः शुकपूर्वकैः ।**<br>**श्रीनिवासं प्रपश्यद्भिः पौरनारीनरैर्वृतः ॥ २६३ ॥**

**वीणावेणुमृदङ्गादिपणवानकदुन्दुभीन् ।**<br>**वादयद्भिर्जनैश्चान्यैर्वारनारीगणैस्तथा ॥ २६४ ॥**

**गन्धर्वैर्गाननिपुणैः सूतामात्यैश्च संयुतः ।**<br>**आकाशराजो धर्मात्मा श्रीनिवासपरायणः ॥ २६५ ॥**

**पद्मावत्या समेतं तं श्रीनिवासं ससम्भ्रमम् ।**<br>**सञ्चारयन् समन्ताच्च नारायणपुरे शनैः ॥ २६६ ॥**

**रम्भास्तम्भैरिक्षुदण्डैः पूगीपोतैरलङ्कृतम् ।**<br>**रसालपल्लवयुतैः पूर्णकुम्भैरलङ्कृतम् ॥ २६७ ॥**

**मुक्ताजालवृतैश्चान्यैः पद्मरागविवर्जितैः ।**<br>**वज्रवैडूर्यखचितैरिन्द्रनीलसमप्रभैः ॥ २६८ ॥**

**तथा मरकतप्रख्यैः तोरणैरुपशोभितम् ।**<br>**कुङ्कुमोदकसम्पूर्णक्वणत्कनकभाजनैः ॥ २६९ ॥**

स्त्रभिर्नीराजयन्तीभिः राजमानचतुष्पथम् ।
वीथीत्रयं परिक्रम्य वासुदेवालयं ययौ ॥ २७० ॥

प्रवेशयामास वरं सुमन्दिरं श्रीवेङ्कटेशं [1]वरमात्मसम्मतम् ।
[2]तद्बन्धुसङ्गं मुनिवर्यगुप्तं बलं [3]नियुज्यात्मनिकेतनेषु ॥ २७१ ॥

१. रमया समन्वितम् । २. तद्बन्धुखण्डं ।
३. ययौ आत्मनिकेतनेषु ।

**कल्याणकाण्डदीपः**

**दीपकैरिति** । तैलसम्बन्धिभिः । **सहस्रायुतसंयुतैः** सहस्रदीपैरयुतदीपैश्च संयुतैः । **दीपकैः** दीपस्तम्भैः प्रकाशितोत्सववीथीपथ इत्यर्थः । **लाजापुष्पासुमालाभिः** लाजैः पुष्पैः सुमालाभिः अञ्जलिपुटे कृत्वा इतस्ततः दक्षिणोत्तरतः विकिरद्भिर्जनैर्विकीर्यमाणलाजपुष्पमालतीमल्लिकाबकुळादि पुष्पमालाभिः समानन्दितोत्सवागतवरजनादिः इति यावत् । वरं साक्षादिन्द्रयज्ञया विश्वकर्मनिर्मित-त्वादुत्तमम् । **सुमन्दिरं** कल्याणमन्दिरं श्रीवेङ्कटेशः प्रवेशयामास । अथ **मुनिवर्यगुप्तं** तद्बन्धुसङ्गं तदवरं आत्मसम्मतं मन्दिरं प्रवेशयामास । अथ **आत्मनिकेतनेषु** स्वीयबलनिकेतनेषु **बलं** वरसैन्यं नियुज्य उपचारार्थं कृत तदात्मकृत्योऽभूत् ।

**गूढकर्तृकव्याख्यानम्**

ततः श्रीनिवासः पद्मावतीपुरस्सरः नारायणपुरीवीथीषु ब्रह्मादिसकलसुरश्रेष्ठैः शुकादिविप्रश्रेष्ठैः चतुरङ्गबलसहितः आगच्छन् अस्ति । तदा वीथीषु वीथीषु सहस्रोपसहस्र-अयुतोपयुतसङ्ख्याक-दीपस्तम्भेषु प्रदीपाः दीप्यमानाः ॥ तत्र तत्र महाजनाः लाजान् मल्लिका-मालती-जात्यादि-पुष्पमालाः अक्षतान् अञ्जलौ कृत्वा दक्षिणोत्तरतः श्रीनिवासोपरि विकिरन्तः । सूतमागधबन्दिवैतालिकाख्य-स्तुतिपाठकाः श्रीश्रीनिवासगुणगणान् स्तुवन्तः । वैदिका विप्राः वेदान् घोषयन्ति । वेदमन्त्रैः आशीर्वादं प्रकुर्वन्ति । पुरे समस्तनरनार्यः श्रीनिवासं सकुतूहलं प्रपश्यन्तः । पुरतः वीणाः वेणून् मृदङ्गान् वादकाः वादयन्तः । केचन पणव-आनकदुन्दुभीन् वादयन्तः । गानविद्यानिपुणाः गन्धर्वाः मृदुमधुरं गायन्तः । एवं श्रीनिवासः परमवैभवैः युक्तः पद्मासहितः आगच्छन् ॥ एवं धर्मात्मा आकाशः श्रीनिवासे भक्तियुक्तः सन् पद्मासमेतं श्रीनिवासं नारायणपुरे शनैः शनैः सञ्चारयन् रम्भास्तम्भैः इक्षुदण्डैः पूगिपोतैः रसालपल्लवैः पूर्णकुम्भैः अलङ्कृतं मुक्ता-पद्मराग-वज्र-वैढूर्य-इन्द्रनील-मरकतादि-रत्नखचिततोरणैः

अलङ्कृतं कुङ्कुमोदकपूर्ण-लसत्-कनकभाजनैः नीराजयन्तीभिः नारीभिः विराजितं चतुष्पथयुततीर्थत्रयं परिचक्रमे ॥ साक्षात् इन्द्राज्ञया विश्वकर्मनिर्मितकल्याणमन्दिरं रमासहितं श्रीनिवासं प्रवेशयामास ॥ ततः श्रीनिवासबन्धवः मुनिवराः सैन्यससमूहश्च आत्मकृते निर्मित-स्वस्वमन्दिरेषु प्रविष्टाः ।

**मूलम्**

**श्रीनिवासाज्ञया तोण्डमान्नृपकृतं दिव्यान्नसज्जीकरणम्**

**रात्रिस्तु पञ्चघटिका समभूत् [१]राजसत्तम ।**
**जगाम भवनं राजन् स्वकीयं [२]राजवल्लभम् ॥ २७२ ॥**

**यदा गतो महाराजस्तोण्डि[३]मानं महीपतिम् ।**
**[४]सम्प्राह वरुणं श्रीमान् श्रीनिवासः [५]क्षुधातुरः ॥ २७३ ॥**

**श्रीनिवास उवाच—**

**वैवाहिकजनाः सर्वे उपवासपरायणाः ॥ २७४ ॥**

१. च तदा ततः । २. राजवल्लभः । ३. मानो महीपतिः ।
४. तमाह करुणं राजन् । ५. क्षुधार्दितः ।

**कल्याणकाण्डदीपः**

**रात्रिस्त्विति** । एतावती सतीति शेषः । **जगाम भवनमिति** । 'पद्मया सह' इति शेषः । **यदा गत इति** । **करुणमिति** । करुणा अस्मिन्नस्तीति करुणम् । सा चेत्थम्— यद्यपि उत्सवजनाः क्षुत्पीडिताः तथाऽपि वसन्ताराधनमात्रेण अल्पसन्तोषिणः सन्तः रात्रौ पञ्चघटिका जाताः । बहवो जनाः । एतदुपरि पाकोपक्रमेऽशक्यमुचितकाले भोजनकरणमित्यादि परसङ्कटमनुसन्दधाना त्वयि दयया मयि भक्तिपारवश्येन अस्मिन् दिने कृष्णजन्मनीव उपवास एव परायणमिति निश्चितवन्तः । एवं सति अभ्यस्तोपवासा ऋषयस्तिष्ठन्तु परन्तु बालवृद्धातुराः सन्ति, ते कथमुपवासं कुर्युः ? इति ।

**मूलम्**

**[१]अहं को मम पुत्रस्तु मम माता सखादयः ।**
**भार्या पतिव्रता लक्ष्मीः क्षुधया परिमोहिताः ॥ २७५ ॥**

१. अहं च मम पुत्रश्च मम माता सुरादयः ।

**तेषामन्नं महाराज भक्ष्याणि विविधानि च।**
**कुरु राजंस्त्वरेणैव ऋषीणामूर्ध्वरेतसाम् ॥ २७६ ॥**
**पाकस्तत्र विशेषेण कर्तव्यो जातवेदसा।**
**ममापि प्रेषितव्यं च पक्वान्नं राजसत्तम ॥ २७७ ॥**

**कल्याणकाण्डदीपः**

**अहमिति। को** ब्रह्मा। **पतिव्रतेति।** यद्यपि सा निर्यद्वान्नसम्पन्ना तथाऽपि पातिव्रत्यात् मयि भुक्ते सा भुङ्क्ते इति भावः। **ऋषीणामिति।** अथाह तोण्डिमान्— यद्यपि पूर्वमेव पाकः कारयितव्यः, सर्वे सम्भाराः सम्भृताः, तथाऽपि मामकीनपाचककृतपाको हि तावकीनां ऋष्यादीनां न सम्मतः। "धिग्बलं क्षत्रियबलं ब्रह्मतेजो बलं बलम्।" अतः कथं कर्तव्यम्? इति इन्द्रेण सह मया आलोचितम्। स च मामाह— भगवानागच्छतु, "यथा तु तस्य प्रमितिर्निविष्टा तथा भगवान् पश्यतु कार्यसिद्धिम्" इत्याह। अतः त्वदनुग्रहोऽपेक्षित इत्यत आह— **पाकस्तत्रेति।** तोण्डिमानं मोहयितुं नीतिं च ज्ञापयितुमाह— **ममेति।** उष्णमीषद्वृद्धन्नमात्रं प्रेषयितव्यं येन केन वा मयैव गन्तव्यमिति न कुरुत। महत्यस्ति कार्यधुरेति।

**मूलम्**

**वासुदेववचः श्रुत्वा [1]वसुधेशोऽब्रवीद्धरिम् ॥ २७८ ॥**

१. तोण्डमानो।

**गूढकर्तृकव्याख्यानम्**

तदा रात्रौ पञ्चघटिकात्मकः कालः गतः॥ तदा आकाशः पुत्री पद्मया सह स्वभवनं आगतः। ततः अनुजः तोण्डिमान आगतः। क्षणात् श्रीनिवासः तं दृष्ट्वा सकरुणं वदति— "भो राजन्! वैवाहिकजनाः सर्वे क्षुत्पीडिताः। यद्यपि सर्वेषां वसन्ताराधनं अभूत्। तथाऽपि तेन अल्पसन्तोषिणः सन्तः। इदानीमेव रात्रौ पञ्चघटिका जाताः। जनास्तु बहवः। एतदुपरि पाकोपक्रमे उचितकाले भोजनकरणं अशक्यं इत्यादि परसङ्कटं अनुसन्दधानाः त्वयि त्वया मयि भक्तिपारवश्येन अस्मिन् दिने उपवास एव परायणं इति निश्चितवन्तः। एवं विद्यमानविषयः। ऋषयः तावत् अभ्यस्तोपवासाः। ते तिष्ठन्तु। परन्तु बालवृद्धातुराः सन्ति। ते उपवासं कथं कुर्युः? अहं, मम पुत्रः विधिः, माता क्षुधिताः। भार्या लक्ष्मीः यद्यपि नियतान्नसम्पन्ना तथाऽपि सा पातिव्रत्यात् मयि भुक्ते सा भुङ्क्ते॥ अतः राजन्! सर्वेषां भक्ष्यभोज्यादि नानाविधपाकः कारयितव्य" इत्याह।

अलङ्कृत्तं कुङ्कुमोदकपूर्ण-लसत्-कनकभाजनैः नीराजयन्तीभिः नारीभिः विराजितं चतुष्पथयुततीर्थत्रयं परिचक्रमे ॥ साक्षात् इन्द्राज्ञया विश्वकर्मनिर्मितकल्याणमन्दिरं रमासहितं श्रीनिवासं प्रवेशयामास ॥ ततः श्रीनिवासबन्धवः मुनिवराः सैन्यससमूहश्च आत्मकृते निर्मित-स्वस्वमन्दिरेषु प्रविष्टाः ।

मूलम्

**श्रीनिवासाज्ञया तोण्डमान्नृपकृतं दिव्यान्नसज्जीकरणम्**

**रात्रिस्तु पञ्चघटिका समभूत् [१]राजसत्तम ।**
**जगाम भवनं राजन् स्वकीयं [२]राजवल्लभम् ॥ २७२ ॥**

**यदा गतो महाराजस्तोण्डि[३]मानं महीपतिम् ।**
**[४]सम्प्राह वरुणं श्रीमान् श्रीनिवासः [५]क्षुधातुरः ॥ २७३ ॥**

**श्रीनिवास उवाच—**

**वैवाहिकजनाः सर्वे उपवासपरायणाः ॥ २७४ ॥**

१. च तदा ततः । २. राजवल्लभः । ३. मानो महीपतिः ।
४. तमाह करुणं राजन् । ५. क्षुधार्दितः ।

**कल्याणकाण्डदीपः**

**रात्रिस्त्विति** । एतावती सतीति शेषः । **जगाम भवनमिति** । 'पद्मया सह' इति शेषः । **यदा गत इति** । **करुणमिति** । करुणा अस्मिन्नस्तीति करुणम् । सा चेत्थम्— यद्यपि उत्सवजनाः क्षुत्पीडिताः तथाऽपि वसन्ताराधनमात्रेण अल्पसन्तोषिणः सन्तः रात्रौ पञ्चघटिका जाताः । बहवो जनाः । एतदुपरि पाकोपक्रमेऽशक्यमुचितकाले भोजनकरणमित्यादि परसङ्कटमनुसन्दधाना त्वयि दयया मयि भक्तिपारवश्येन अस्मिन् दिने कृष्णजन्मनीव उपवास एव परायणमिति निश्चितवन्तः । एवं सति अभ्यस्तोपवासा ऋषयस्तिष्ठन्तु परन्तु बालवृद्धातुराः सन्ति, ते कथमुपवासं कुर्युः ? इति ।

मूलम्

**[१]अहं को मम पुत्रस्तु मम माता सखादयः ।**
**भार्या पतिव्रता लक्ष्मीः क्षुधया परिमोहिताः ॥ २७५ ॥**

१. अहं च मम पुत्रश्च मम माता सुरादयः ।

**तेषामन्नं महाराज भक्ष्याणि विविधानि च।**
**कुरु राजंस्त्वरेणैव ऋषीणामूर्ध्वरेतसाम् ॥ २७६ ॥**
**पाकस्तत्र विशेषेण कर्तव्यो जातवेदसा।**
**ममापि प्रेषितव्यं च पक्वान्नं राजसत्तम ॥ २७७ ॥**

**कल्याणकाण्डदीपः**

**अहमिति** । **को** ब्रह्मा । **पतिव्रतेति** । यद्यपि सा निर्यत्नान्नसम्पन्ना तथाऽपि पातिव्रत्यात् मयि भुक्ते सा भुङ्क्ते इति भावः । **ऋषीणामिति** । अथाह तोण्डिमान्— यद्यपि पूर्वमेव पाकः कारयितव्यः, सर्वे सम्भाराः सम्भृताः, तथाऽपि मामकीनपाचककृतपाको हि तावकीनां ऋष्यादीनां न सम्मतः । "धिग्बलं क्षत्रियबलं ब्रह्मतेजो बलं बलम् ।" अतः कथं कर्तव्यम् ? इति इन्द्रेण सह मया आलोचितम् । स च मामाह— भगवानागच्छतु, "यथा तु तस्य प्रमितिर्निविष्टा तथा भगवान् पश्यतु कार्यसिद्धिम्" इत्याह । अतः त्वदनुग्रहोऽपेक्षित इत्यत आह— **पाकस्तत्रेति** । तोण्डिमानं मोहयितुं नीतिं च ज्ञापयितुमाह— **ममेति** । उष्णमीषद्वृद्धन्नमात्रं प्रेषयितव्यं येन केन वा मयैव गन्तव्यमिति न कुरुत । महत्यस्ति कार्यधुरेति ।

**मूलम्**

**वासुदेववचः श्रुत्वा [1]वसुधेशोऽब्रवीद्धरिम् ॥ २७८ ॥**

१. तोण्डमानो ।

**गूढकर्तृकव्याख्यानम्**

तदा रात्रौ पञ्चघटिकात्मकः कालः गतः ॥ तदा आकाशः पुत्री पद्मया सह स्वभवनं आगतः । ततः अनुजः तोण्डिमान आगतः । क्षणात् श्रीनिवासः तं दृष्ट्वा सकरुणं वदति— "भो राजन् ! वैवाहिकजनाः सर्वे क्षुत्पीडिताः । यद्यपि सर्वेषां वसन्ताराधनं अभूत् । तथाऽपि तेन अल्पसन्तोषिणः सन्तः । इदानीमेव रात्रौ पञ्चघटिका जाताः । जनास्तु बहवः । एतदुपरि पाकोपक्रमे उचितकाले भोजनकरणं अशक्यं इत्यादि परसङ्कटं अनुसन्दधानाः त्वयि त्वया मयि भक्तिपारवश्येन अस्मिन् दिने उपवास एव परायणं इति निश्चितवन्तः । एवं विद्यमानविषयः । ऋषयः तावत् अभ्यस्तोपवासाः । ते तिष्ठन्तु । परन्तु बालवृद्धातुराः सन्ति । ते उपवासं कथं कुर्युः ? अहं, मम पुत्रः विधिः, माता क्षुधिताः । भार्या लक्ष्मीः यद्यपि नियतान्नसम्पन्ना तथाऽपि सा पातिव्रत्यात् मयि भुक्ते सा भुङ्क्ते ॥ अतः राजन् ! सर्वेषां भक्ष्यभोज्यादि नानाविधपाकः कारयितव्य" इत्याह ।

ततः तोण्डिमान आह— "स्वामिन् यद्यपि पूर्वमेव पाकः कारयितव्यः आसीत् । किञ्च सर्वे सम्भाराः सम्भृताः । तथाऽपि मामकीनपाचककृतपाको हि तावकीनऋष्यादीनां न सम्मतः । धिक् क्षत्रियबलम् । अतः कथं कर्तव्यं इति पूर्वं मया इन्द्रेण सह आलोचितम् । स च मामाह "भगवान् आगच्छतु । यथा तु तस्य प्रीतिः प्रमितिः निविष्टा तथा भवान् कार्यसिद्धिं पश्यतु" इति । अत एव अद्य भवदनुग्रह एव अपेक्षितः इति व्यजिज्ञपत् । ततः श्रीनिवास आह— राजन् ! भवतु । अद्य पाकः मुख्यतः अग्निनैव कारयितव्यः । इदं न विस्मरतु भवान् । ममापि राजन् ईषत् मृदु-उष्ण-पक्वान्नं प्रेषणीयं येन केन वा । मयैव गन्तव्यं इति न कुरुत । कार्यधुरा महती अस्ति । इत्याह ।

**मूलम्**

**तोण्डिमान उवाच—**

**इदं शरीरं जगदीश राज्यं**
**त्वदीयमेवात्र मुकुन्दमूर्ते ।**
**नरो यथा लोकगतिं [1]प्रयाति**
**तथा [2]गतोऽनन्त प्रमुह्यसे हरे ॥ २७९ ॥**

१. प्रपन्नः । २. ममानन्त विमुह्यसे त्वम् ।

**कल्याणकाण्डदीपः**

**इदं शरीरमिति** । हे जगदीश ! मुकुन्दमूर्ते ! अत्र अस्मिन् नरजन्मनि इदं शरीरं **त्वदीयमेव** त्वत्सेवानियुक्तमेव । परन्तु नरो यथा **लोकगतिं** लौकिकं मार्गं **प्रयाति** प्रचरति तथा त्वमलौकिकोऽपि **तथागतः** नरवल्लौकिकमार्गमाचरयन् मां अनन्त ! हरे ! प्रमुह्यसे ।

**मूलम्**

**एवमुक्त्वा हरिं राजा जगाम भवनं स्वकम् ।**
**क्षणेन कारयामास पाकं राजा हविर्भुजा ।**
**ऋषीणां वेदविदुषां सुराणां सुरयोषिताम् ॥ २८० ॥**
**[1]राजार्पितान्नं राजेन्द्र ब्राह्मणा भोजनप्रियाः ।**
**भोजनं कृतवन्तस्ते भक्ष्यान्नरससंयुतम् ॥ २८१ ॥**

१. राजान्नमर्पयामास विप्राणां चान्नकाङ्क्षिणाम् ।

**कल्याणकाण्डदीपः**

**राजार्पितान्नमिति** । द्विजराजार्पितान्नम् । चन्द्रेण ह्याविष्टेन अन्नाभिमानिना विष्णवेऽर्पितं मम नान्नमिति भावः । तदुक्तं वाराहे—

"वियद्राजोऽपि सानन्दमिन्दुमाहूय सादरम् ।
अन्नं विधीयतां राजन् विविधं रससंयुतम् ।
विष्णोर्नैवेद्ययोग्यं तत्परमान्नं विधीयताम् ।
देवानां च ऋषीणां च नराणामपि सम्मतम् ।
चतुर्विधं सुगन्धाढ्यममृतांशुसुधाकरम् ॥" इति ।

**मूलम्**

**वासुदेवाय राजेन्द्र प्रेषयामास [1]प्रीतिमान् ।**
**अन्नं बहुविधं भक्ष्यं पायसं मधुसंयुतम् ॥ २८२ ॥**

१. सादरः ।

**स्वयं समेत्य राजेन्द्र भोजनं कल्पयद्धरेः ।**
**बुभुजे पुरुषश्रेष्ठो लक्ष्म्या च परमेष्ठिना ॥ २८३ ॥**

**मात्रा च सहितो राजन् सशेषगरुडान्वितः ।**
**दत्वा वस्त्राणि दिव्यानि जामातुः श्रीपतेर्नृपः ॥ २८४ ॥**

**जगाम भवनं राजा वासुदेवाज्ञया [1]नृप ।**
**गते राज्ञि महाराज श्रीनिवासः सुखान्वितः ।**
**निद्रां चकार विधिवन्निर्दोषोऽपि सुखासने ॥ २८५ ॥**

१. तदा ।

**गूढकर्तृकव्याख्यानम्**

श्रीनिवासवाक्यं श्रुत्वा तोण्डिमान आह— "हे जगज्जन्मादिकारण ! मुकुन्दमूर्ते ! अस्मिन् नरजन्मनि इदं शरीरं त्वदीयमेव, त्वत्सेवानियुक्तमेव । परन्तु नरो यथा लौकिकमार्गं प्रचरति तथा त्वं अलौकिकोऽपि तथागतः नरवत् लौकिकमार्गं आचरन् मां श्रीहरे विमुह्यसे" इति । एवं विज्ञाप्य

तोण्डिमानः स्वकं भवनं गत्वा क्षणेन देव-देवस्त्री-ऋषि-वेदार्थज्ञविप्राणां कृते अग्निना पाकं कारयामास । अनन्तरं राजा, "अन्नाभिमानी चन्द्रस्तु केशवस्तत्र देवता" इत्युक्तेः, "वियद्राजोऽपि सानन्दं इन्दुमाहूय सादरम्" अन्नं विधीयतां राजन् विविधं रससंयुतम् ॥ विष्णोः नैवेद्ययोग्यं तत् परमान्नं विधीयताम् । देवानां च ऋषीणां च नराणामपि सम्मतम् ॥" इति वाराहोक्तेः । आकाशराजः समस्तानां, अन्नाभिमानिना चन्द्रेण विष्णवे अर्पितं अमृतान्नं समर्पयामास ॥ सकलाः भक्ष्यभोज्यादिषड्रसोपेतान्नं बुभुजिरे ॥ तदा आकाशः वासुदेवाय भक्ष्यभोज्यादि बहुविधपक्वान्नं प्रेषयामास । स्वयं राजा आगत्य सादरं हरेः भोजनं कारयामास । श्रीनिवासः रमया विधिना मात्रा बकुलया शेषेण गरुडेन च सह भोजनं चकार ॥ भोजनानन्तरं जामातुः दिव्यवस्त्राणि दत्वा श्रीनिवासानुज्ञया स्वकं धाम ययौ । यदा गतः तदा शयनकालत्वात् श्रीनिवासः स्वयं निद्राविहीनोऽपि निर्दोषोऽपि सुखासने सुखं शिश्ये ॥

**मूलम्**

**एवं गता च सा रात्रिः प्रभातसमयोऽभवत् ।**
**पूर्वदेवगुरो[1]र्वरि सम्प्राप्ते दशमीदिने ॥ २८६ ॥**

**समुत्थितो वासुदेवः कृतमङ्गलमज्जनः ।**
**वसिष्ठमब्रवीद्राजन् भगवान् [2]वाक्यमब्रवीत् ॥ २८७ ॥**

१. र्वारः सम्प्राप्तो । २. वेङ्कटेश्वरः ।

**कल्याणकाण्डदीपः**

**पूर्वदेव गुरोर्वार इति** । हे राजन् ! गुरोर्वार एव उषःकाले पूर्ववत् प्रभाते उत्सवदिनत्वात् गृहाजिरादिसम्मार्जनाद्यर्थं समुत्थितपुरजनवत् समुत्थितः सूतादिस्तुत्यादिना सूत्थितः भगवान् कृतमङ्गलमज्जनः सन् दशमीदिने पूर्वदेवगुरोवरि शुक्रवारे सम्प्राप्ते वसिष्ठं वाक्यमब्रवीदित्यन्वयः ।

**मूलम्**

**श्रीभगवानुवाच—**

**मया न भोजनं कार्यं लक्ष्म्या च परमेष्ठिना ।**
**मात्रा पुरोहितेनापि वयं [1]पश्च समन्विताः ॥ २८८ ॥**

१. पश्चान्नवर्जिताः ।

राज्ञस्तु भवने राजा राजपत्नी पतिव्रता ।
कन्या पुरोहितो भ्राता तेऽपि पश्चान्नवर्जिताः ॥ २८९ ॥

एवमुक्त्वा वसिष्ठं च पुरोहितमरिन्दमः ।
कुबेरमब्रवीद्राजन् श्रीनिवासः सताङ्गतिः ॥ २९० ॥

श्रीनिवास उवाच—

गच्छ यक्षगणाध्यक्ष राजानं विप्रकारणात् ।
[1]स तस्य वचनं श्रुत्वा यक्षराड् राजसत्तमम् ॥ २९१ ॥

१. इति तद्वचनं ।

गत्वाऽऽह भारतीं पुण्यां श्रीनिवासेन भाषिताम् ।

कुबेर उवाच—

भोजनं ऋषिमुख्यानां कर्तव्यं पूर्वमेव हि ॥ २९२ ॥

मुहूर्तकालं रात्रौ तु नाडिकानां त्रयोदशे ।
तदाऽसाध्यं महाराज रात्रौ ब्राह्मणभोजनम् ॥ २९३ ॥

**कल्याणकाण्डदीपः**

अथ श्रीनिवासस्य कृत्यवस्तुषु चातुर्यं दर्शयति— "मया भोजनं कार्यं" इत्यादिना "रात्रौ ब्राह्मणभोजनं" इत्यन्तेन ।

ननु कथमेतत् ?

"अपरेद्युः कृतस्नातोऽहतवस्त्रधरो वरः ।
भुक्त्वा निश्यह्नि पूर्वाह्ने उद्वेहन् निशि सर्वदा ॥" इति ब्रह्मपुराणे ।

बोधायनेऽपि—

"स्रग्वी भुक्तवान् दर्भपाणिरपदातिर्गत्वा वधूज्ञातिभिरतिथिवदर्चितः स्नाता हतवासो गन्धानुलिप्तां स्रग्विणीं इषुहस्तां भुक्तवतीं प्रशस्तां वधूमीक्षत" इति ।

व्यासोऽपि—

"भुक्त्वा समुद्वहेत् कन्यां गायत्रीग्रहणं तथा ।
उपोषितः सुतां दद्यादर्चिताय द्विजातये ॥" इति ।

गृह्योऽपि—

"नामांसो मधुपर्को भवति भवति" इति ।

वृत्तावपि—

"अनेन प्रकारेण भोजनमुपदिष्टं भवति ।"

इत्याद्येवं वचनानि सन्ति । आचारोऽप्यस्ति । व्यवहारोऽपि "क्षीरान्नं प्रक्षिप्य धारासेचनम्" इति । तथा च वरस्य एवं भोजनप्राप्तौ किमन्येषाम् ? इति ।

उच्यते— यदि वचनानामसङ्कोचेन प्रवृत्तिमुपगम्य वरस्य भोजनमङ्गीक्रियते, तर्हि प्रयोग-पारिजाते "वधूगमनात् पूर्वं ब्राह्मणैः सह सात्त्विकाहारं भुङ्क्ते" इत्युक्तं स्वगृहे एकवारं भोजनं, ततो मधुपर्काङ्गमेकवारम्, अथ विवाहाह्निकसमाप्तौ वध्वा सहैकवारमित्येवं त्रिवारं एकस्मिन्नह्नि भोजनं प्राप्नोति । न चैतत् क्वचिद् दृष्टतरं उचितं वा । उत एतद्भयात् क्षुत्पिपासातुरस्य न किञ्चिद् भ्राजत इति विवाहकालयोः वधूवरयोः प्रसन्नमुखतायै कर्तव्याहारस्य गोघृतदुग्धशर्करासङ्गृहीतयवगोधूम-लाजादिपिष्टाद्युपहारेणान्यथासिद्धत्वात् पूर्वस्यैकस्यान्नभोजनस्य परित्यागः । अत एवोक्तं "भुक्त्वा समुद्वहेत्" इत्यादि मधुपर्काङ्गवैधभोजनानुवाद इति निर्णयसिन्धौ प्रयोगचिन्तामणौ । तथा च भोजन-द्वयमवशिष्टम् । मधुपर्काङ्गं वध्वा सहेति च । तत्रान्त्ये न सन्देहः । मधुपर्काङ्गं तु वैधं मांसमय-भोज्यकम् । तच्च मधुपर्के पशोर्न वध इति कलौ निषिद्धम् । यद्यपि माषमयभोज्येन तत् प्रतिनिधा-तव्यं भवति । अत एव धर्मसिन्धौ "मधुपर्के माषविकारोपहारो भोजनार्थं देय" इत्युक्तम् । तथाऽपि न मुख्यान्नस्य प्राप्तिः । कुत्राप्यन्नशब्दाप्रयोगात् ।

सात्त्विकोक्तोपहारस्तु दिवा रात्रौ वा लग्ने भवत्येव । तथैव शिष्टाचारोऽप्यस्ति । स च स्वगृह एव युक्तः । अतो महादानप्रतिग्रहयोग्यतायै अग्निसाध्यविवाहहोमगृहप्रवेशहोमोपवासोपवासादिकर्मकर्तृ-त्वाशैथिल्याय हविर्भिन्नान्नस्य प्रत्यक्षस्य विवाहव्रतबाधकत्वात् । विराजो दोहोसि विराडन्नं तस्य दोहः सारोसि इति मधुपर्कद्रव्यस्यान्नरसत्वादुपस्तरणपिधानादिभोजनाङ्गदर्शनात् एतेनैव भोजनसिद्धे-र्नामांसो माधुपर्क इत्यस्य यो मधुपर्केण यद्यदर्चितरस तदह्नि आतृप्ति भोजयितव्य इत्युपलक्षणार्थत्व-

सम्भवात् । अन्यथासम्भवात् वरस्य सात्त्विकोपहार एव युक्तः । कन्याया अपि तथैव सहाधिकारात् । अन्येषामपि कर्माधिकृतानि समवेतानामुपहार एव । किञ्च विष्णुसन्निधानबुद्ध्या सपरिवारबन्धुभोजने भुक्तौदनानामतिथित्वाभावप्रसङ्गः । अत एव पारिजाते मधुपर्कप्रयोगे भोजनं नानुक्रान्तम् । अतो न वचनबाधः आचारः क्वाचित्कः केषाञ्चिदेव । व्यवहारोऽपि तेषामेव इति यत् 'पञ्चान्नवर्जिता' इत्युक्तं न तत् साधु इति । तथा चोक्तं कृष्णभट्टीये— "कन्यावरौ तयोर्मातापितरौ च पुरोधसौ । लाज-होमात् पुरा कश्चित् भोजनं न समाचरेत्" इति । लाजहोमसमवेतभ्रातुरपि भोजनाभावः । **विप्रकारणात्** **इति** । विप्रभोजनकारणं प्रकृत इत्यर्थः ।

**मुहूर्तकालमिति** । रात्रौ रात्रघटकानां घटिकानां त्रिंशतां मध्ये ।

**मूलम्**

**इति सन्दिश्य राजानं कुबेरः पुनरागतः ।**
**तथा चकार राजर्षिर्भोजनं ब्रह्मवादिनाम् ।**
**दत्वा तु दक्षिणां [1]निष्कमेकैकस्य द्विजन्मनः ॥ २९४ ॥**

१. निष्कं ताम्बूलं च द्विजन्मनाम् ।

**कल्याणकाण्डदीपः**

**कुबेर इति** । अथ राजा साष्टमङ्गलकन्यापूर्वं वधूभार्यासमेततैलशास्त्रादिमङ्गळस्नातो युग्मवस्त्रं धृत्वा धृतोर्ध्वपुण्ड्रो धृतमङ्गळतिलकः प्रातः स्वस्तिवाचनाङ्कुरार्पणग्रहयज्ञनान्दीसमाराधनादि कृत्वा तदुभयाङ्गब्राह्मणभोजनं कारयित्वा मध्याह्ने ब्रह्मवादिनां ऋषिमुखानां भोजनं कारयित्वा एकैकस्य द्विजन्मनः एकैकं निष्कमित्यनया मर्यादया पात्रताद्यनुसन्धानपूर्वं दत्वा अक्षतान् धृत्वा भाविनि भव्ये कर्मणि प्रसन्नमनोमुखतायै सवधूभार्यादिपञ्चजनोक्तसात्त्विकाहारमुपाहृत्य सायं पुनराम्लानाम्रपल्लव-रम्भास्तम्भपूगपोतादितोरणाद्यलङ्कृतपूर्वोक्तदीपकदीपितवीथ्यां पुरस्कार्यान् पुरस्कृत्य वराह्वानकर्मणे प्रतस्थ इत्याह— "तथा चकार" इत्यादिना "श्रीनिवासालयं नृपः" इत्यन्तेन ।

**निष्क इति** । अशीतिगुञ्जानां एकः कषः । ते चत्वारो निष्कः । *यन्दु वराह तूक स्वर्णमय*-रामाङ्कितरूप्यमिति यावत् । दत्वा आशीराशास्ते इति शेषः । **एवमिति** । शुक्रवारे दशम्यां हरेः श्रीनिवासस्य कल्याणदिवसे मध्याह्ने एवं जातम् । तस्मिन् सायङ्काले तु वियन्नृपः इत्यन्वयः । ओघ-रावेण सम्बद्धबद्धघण्टाकुलान्वितमिति । ओघरावो द्रुतध्वनिः । "विलम्बितं द्रुतं मध्यं तत्त्वमोघो धनं

व्यासोऽपि—

"भुक्त्वा समुद्वहेत् कन्यां गायत्रीग्रहणं तथा ।
उपोषितः सुतां दद्यादर्चिताय द्विजातये ॥" इति ।

गृह्योऽपि—

"नामांसो मधुपर्को भवति भवति" इति ।

वृत्तावपि—

"अनेन प्रकारेण भोजनमुपदिष्टं भवति ।"

इत्याद्येवं वचनानि सन्ति । आचारोऽप्यस्ति । व्यवहारोऽपि "क्षीरान्नं प्रक्षिप्य धारासेचनम्" इति । तथा च वरस्य एवं भोजनप्राप्तौ किमन्येषाम् ? इति ।

उच्यते— यदि वचनानामसङ्कोचेन प्रवृत्तिमुपगम्य वरस्य भोजनमङ्गीक्रियते, तर्हि प्रयोगपारिजाते "वधूगमनात् पूर्वं ब्राह्मणैः सह सात्त्विकाहारं भुङ्क्ते" इत्युक्तं स्वगृहे एकवारं भोजनं, ततो मधुपर्काङ्गमेकवारम्, अथ विवाहाह्निकसमाप्तौ वध्वा सहैकवारमित्येवं त्रिवारं एकस्मिन्नह्नि भोजनं प्राप्नोति । न चैतत् क्वचिद् दृष्टतरं उचितं वा । उत एतद्भयात् क्षुत्पिपासातुरस्य न किञ्चिद् भ्राजत इति विवाहकालयोः वधूवरयोः प्रसन्नमुखतायै कर्तव्याहारस्य गोघृतदुग्धशर्करासङ्गृहीतयवगोधूमलाजादिपिष्टाद्युपहारेणान्यथासिद्धत्वात् पूर्वस्यैकस्यान्नभोजनस्य परित्यागः । अत एवोक्तं "भुक्त्वा समुद्वहेत्" इत्यादि मधुपर्काङ्गवैधभोजनानुवाद इति निर्णयसिन्धौ प्रयोगचिन्तामणौ । तथा च भोजनद्वयमवशिष्टम् । मधुपर्काङ्गं वध्वा सहेति च । तत्रान्त्ये न सन्देहः । मधुपर्काङ्गं तु वैधं मांसमयभोज्यकम् । तच्च मधुपर्के पशोर्न वध इति कलौ निषिद्धम् । यद्यपि माषमयभोज्येन तत् प्रतिनिधातव्यं भवति । अत एव धर्मसिन्धौ "मधुपर्के माषविकारोपहारो भोजनार्थं देय" इत्युक्तम् । तथाऽपि न मुख्यान्नस्य प्राप्तिः । कुत्राप्यन्नशब्दाप्रयोगात् ।

सात्त्विकोक्तोपहारस्तु दिवा रात्रौ वा लग्ने भवत्येव । तथैव शिष्टाचारोऽप्यस्ति । स च स्वगृह एव युक्तः । अतो महादानप्रतिग्रहयोग्यतायै अग्निसाध्यविवाहहोमगृहप्रवेशहोमोपवासोपवासादिकर्मकर्तृत्वाशैथिल्याय हविर्भिन्नान्नस्य प्रत्यक्षस्य विवाहव्रतबाधकत्वात् । विराजो दोहोसि विराडन्नं तस्य दोहः सारोसि इति मधुपर्कद्रव्यस्यान्नरसत्वादुपस्तरणपिधानादिभोजनाङ्गदर्शनात् एतेनैव भोजनसिद्धेर्नामांसो माधुपर्क इत्यस्य यो मधुपर्केण यद्यदर्चितरस तदह्नि आतृप्ति भोजयितव्य इत्युपलक्षणार्थत्व-

सम्भवात् । अन्यथासम्भवात् वरस्य सात्त्विकोपहार एव युक्तः । कन्याया अपि तथैव सहाधिकारात् । अन्येषामपि कर्माधिकृतानि समवेतानामुपहार एव । किञ्च विष्णुसन्निधानबुद्ध्या सपरिवारबन्धुभोजने भुक्तौदनानामतिथित्वाभावप्रसङ्गः । अत एव पारिजाते मधुपर्कप्रयोगे भोजनं नानुक्रान्तम् । अतो न वचनबाधः आचारः क्वाचित्कः केषाञ्चिदेव । व्यवहारोऽपि तेषामेव इति यत् 'पञ्चान्नवर्जिता' इत्युक्तं न तत् साधु इति । तथा चोक्तं कृष्णभट्टीये— "कन्यावरौ तयोर्मातापितरौ च पुरोधसौ । लाजहोमात् पुरा कश्चित् भोजनं न समाचरेत्" इति । लाजहोमसमवेतभ्रातुरपि भोजनाभावः । **विप्रकारणात् इति** । विप्रभोजनकारणं प्रकृत इत्यर्थः ।

**मुहूर्तकालमिति** । रात्रौ रात्रघटकानां घटिकानां त्रिंशतां मध्ये ।

**मूलम्**

**इति सन्दिश्य राजानं कुबेरः पुनरागतः ।**
**तथा चकार राजर्षिर्भोजनं ब्रह्मवादिनाम् ।**
**दत्वा तु दक्षिणां [1]निष्कमेकैकस्य द्विजन्मनः ॥ २९४ ॥**

१. निष्कं ताम्बूलं च द्विजन्मनाम् ।

**कल्याणकाण्डदीपः**

**कुबेर इति** । अथ राजा साष्टमङ्गलकन्यापूर्वं वधूभार्यासमेततैलशास्त्रादिमङ्गळस्नातो युग्मवस्त्रं धृत्वा धृतोर्ध्वपुण्ड्रो धृतमङ्गळतिलकः प्रातः स्वस्तिवाचनाङ्कुरार्पणग्रहयज्ञनान्दीसमाराधनादि कृत्वा तदुभयाङ्गब्राह्मणभोजनं कारयित्वा मध्याह्ने ब्रह्मवादिनां ऋषिमुखानां भोजनं कारयित्वा एकैकस्य द्विजन्मनः एकैकं निष्कमित्यनया मर्यादया पात्रताद्यनुसन्धानपूर्वं दत्वा अक्षतान् धृत्वा भाविनि भव्ये कर्मणि प्रसन्नमनोमुखतायै सवधूभार्यादिपञ्चजनोक्तसात्त्विकाहारमुपाहृत्य सायं पुनराम्लानाम्रपल्लव-रम्भास्तम्भपूगपोतादितोरणाद्यलङ्कृतपूर्वोक्तदीपकदीपितवीथ्यां पुरस्कार्यान् पुरस्कृत्य वराह्वानकर्मणे प्रतस्थ इत्याह— "तथा चकार" इत्यादिना "श्रीनिवासालयं नृपः" इत्यन्तेन ।

**निष्क इति** । अशीतिगुञ्जानां एकः कषः । ते चत्वारो निष्कः । *यन्तु वराह तूक स्वर्णमय*-रामाङ्कितरूप्यमिति यावत् । दत्वा आशीराशास्ते इति शेषः । **एवमिति** । शुक्रवारे दशम्यां हरेः श्रीनिवासस्य कल्याणदिवसे मध्याह्ने एवं जातम् । तस्मिन् सायङ्काले तु वियन्नृपः इत्यन्वयः । ओघ-रावेण सम्बद्धबद्धघण्टाकुलान्वितमिति । ओघरावो द्रुतध्वनिः । "विलम्बितं द्रुतं मध्यं तत्त्वमोघो धनं

क्रमात्" इत्यमरः । घण्टानां कुलानि समूहाः, बद्धानि च तानि घण्टाकुलानि च, एवम्भूतानि । घण्टामाला इति यावत् । ओघरावेण सम्बद्धानि यानि बद्धघण्टाकुलानि तैरन्वितः तं महारावं अनुत्तमबृंहितम् । एतादृशमैरावतनामकं गजं तथा पुरन्दरं च पुरस्कृत्य ते वरेनैव वराह्वानकर्मणि तस्मै श्रीनिवासाल्यं प्राप्त इत्यन्वयः । मधुपर्केणार्हयिष्यमाणं महद्दैवतं इति तदाह्वानसमये पादेन गमनं उचितमिति शिष्टाचारः । तदुक्तं गृह्ये । "महद्दैवतभूतं स्नातको भवति" इति ।

**गूढकर्तृकव्याख्यानम्**

एवं सा रात्रिः गुरुवाररात्रिः गता । उत्सवदिनत्वात् गृहाजिरादिसम्मार्जनार्थं उषस्येव समुत्थितः श्रीनिवासः कृतमङ्गलस्नानः दशमीदिने शुक्रवारे प्रातः पुरोहितं वसिष्ठं आहूय आह— "मुनिवर्य ! मया, रमया, विधिना, मात्रा. पुरोहितेन त्वया च, पञ्चभिः अन्नं वर्जयित्वा उपोषितैः भवितव्यम् । एवं कन्यापञ्चकं वरपञ्चकं उपवासपरम्" इति पुरोहितं सूचयित्वा श्रीनिवासः कुबेरमाहूय "यक्षराज ! धनाधिप कुबेर ! बहुविप्राणां भोजनं कारयितव्यम् । अतः त्वं शीघ्रं गत्वा आकाशं निवेदय" इत्याह । "तथा" इति कुबेरः गत्वा आकाशं प्रति "महाराज ! श्रीनिवासाज्ञां वच्मि । ऋषिप्रभृति-समस्तानां भोजनाद्युपचारः कर्तव्यः । यतः रात्रौ त्रिंशत्घटिकामध्ये त्रयोदशांशे मुहूर्तकालमिति ज्योतिषिका वदन्ति । अतः रात्रौ तावद्वेलायां एतावद्-जन-भोजनकारणं असाध्यमेव । अतः अद्यैव दिने भोजनं कारयितव्यं" इति सन्दिश्य कुबेरः आययौ । तथैव राजा सकलविप्रादीनां सन्तृप्तिभोजनं कारयित्वा ताम्बूलं, एकैकस्मै एकैकं निष्कं दक्षिणां च ददौ । साष्टमङ्गलकन्यापूर्वं वधूभार्यासमेतः तैलशास्त्रपूर्वकं मङ्गलस्नानं कृत्वा वस्त्रं धृत्वा ऊर्ध्वपुण्ड्रं धृत्वा प्रातः स्वस्तिवाचन-अङ्कुरार्पण-ग्रहयज्ञ-नान्दीसमाराधनादि कृत्वा तदुभयाङ्गविप्रभोजनं कारयित्वा मध्याह्ने ऋषिमुख्यानां भोजनं कारयित्वा एकैकस्य एकैकं निष्कदक्षिणां तारतम्यानुसारं दत्वा विप्रेभ्यः अक्षतान् दधार । निष्को नाम— अशीतिगुञ्जाः एकः कर्षः । चत्वारः कर्षाः एकनिष्कः । अष्टवराहतूक स्वर्णमयरामाङ्कितरूपम् ।

**मूलम्**

एवम्भूते महीपाल कल्याणदिवसे हरेः ।
शुक्रवारे दशम्यां तु सायङ्काले वियन्नृपः ।
चतुरङ्गबलं सर्वं 'विधाय पुरतः सुतम् ॥ २९५ ॥
विष्वक्सेनं महाराज तोण्डिमानं च भ्रातरम् ।
पुरोहितं पुरस्कृत्य सुहृत्सम्बन्धिबान्धवान् ॥ २९६ ॥

### विवाहार्थं श्रीनिवासानयनाय तन्मन्दिरं प्रति नृपागमनम्

ऐरावतं [1]महाभाग रत्नकम्बलभूषितम् ।
[3]ओघरावेण सम्बद्धबद्धघण्टाकुलान्वितम् ॥ २९७ ॥

१. निधाय । २. महानागं । ३. मेघारावेण ।

चतुर्दन्तं महारावं कर्णबद्धसुचामरम् ।
पुरन्दरं पुरस्कृत्य गजमैरावतं तथा ॥ २९८ ॥

#### गूढकर्तृकन्याख्यानम्

ततः तस्मिन्नेव दिनान्ते सायं राजा किं चक्रे ? एवं श्रीनिवासकल्याणदिवसे शुक्रवारे मध्याह्ने समभूत् । तस्मिन् सायङ्काले आकाशः अम्लान-आम्रपल्लव-रम्भास्तम्भ-पूगपोतादि-तोरणादि-अलङ्कृत बहुदीपदीपितवीथ्यां समस्तचतुरङ्गबलं पुत्रं वसुदानं अनुज-तोण्डमानं पुरोहितं विष्वक्सेनं, रत्नकम्बल-भूषित-मेघारावसदृशारावं कुर्वन्तं कण्ठे घण्टामाल्या बद्धं कर्णयोः बद्धचामरं चतुर्दन्तविशिष्टं ऐरावतं महानागं इन्द्रं एवं पुरस्कार्यान् पुरतः कृत्वा सुहृत्-सम्बन्धि-बान्धवजनसहितः वराह्वानाय श्रीनिवास-मन्दिरं प्रतस्थे ॥

आह्वानकर्मणि प्राप्तः श्रीनिवासालयं नृपः ।
तस्मिन् महोत्सवे राजन्नयुतस्तम्भशोभिताम् ।
सभां चकार रत्नाढ्यां विश्वकर्मा विभोः प्रियाम् ॥ २९९ ॥

#### कल्याणकाण्डदीपः

**तस्मिन्निति** । अतः पूर्वं मध्ये सन्दर्भशेषः । अस्मिन्दिने प्राप्तः । श्रीनिवासोऽपि कृतनित्यक्रियो विधिवत् स्वस्ति वाचयित्वा फलताम्बूलदक्षिणान् दत्वा कृतारार्तिकाक्षतः मध्याह्ने ब्राह्मणान् भोजयित्वा रमाब्रह्मादिसपञ्चजनः लघुसात्त्विकमुपाहारमुपाहृत्य सायाह्ने पुनर्मङ्गळस्नातो हुतहुताशन आत्मसमा-रोपिताग्निः अलङ्कृतः स्रग्वीष्टदेवतां स्वात्मानं प्रसाद्य स्वर्चितैर्ज्ञातिबान्धवजनैः अष्टमङ्गळकन्याभिः मङ्गळतूर्यजनैर्मङ्गळसूक्तपठनपरैर्ब्राह्मणैः पुरन्ध्रीभिः प्रसर्पकजनैश्च सह प्रकृतोपयुक्तसम्भृतमङ्गलद्रव्य-सम्भारः सर्वसन्नद्धाह्वाननिरीक्षणं कुर्वन्नास्त इति ।

**तस्मिन्निति** । **महोत्सवे** आह्वानोत्सवकाल एव पुनर्विशेषानुग्रहार्थं पूर्वनिर्मितगृहपूर्वाजिर एव अयुताद्यादित्रिविशेषणविशेषितां पुरतः स्यन्दमानगुल्पदघ्नजलकुल्यां पाद्याद्यर्थं सभां चकार इत्यर्थः ।

### गूढकर्तृकव्याख्यानम्

इतःपूर्वं अस्मिन् दिने श्रीनिवासोऽपि कृतनित्यक्रियः विधिवत् स्वस्ति वाचयित्वा फलताम्बूल-दक्षिणा दत्वा कृतार्तिकाक्षतः, मध्याह्ने विप्रान् भोजयित्वा, रमाब्रह्मादि सपत्नजनः लघु उपहारं स्वीकृत्य पुनः सायाह्ने मङ्गलस्नातः हुताशनः अलङ्कृतः स्रग्वी इष्टदेवतां प्रसाद्य अलङ्कृतैः ज्ञातिबान्धवजनैः मङ्गल-सूक्तपठनपरैः विप्रैः पुरन्ध्रीभिः प्रसर्पकजनैः सह प्रकृतोपयुक्त-सम्भृतमङ्गलद्रव्यसम्भारः सर्वसन्नद्धः आह्वाननिरीक्षणं कुर्वन् आस ॥ श्रीनिवासमहागृहे रत्नखचित-अयुतसङ्ख्याकस्तम्भैः उपशोभितां श्रीनिवासप्रियां दिव्यसभां विश्वकर्मा निर्मितवान् ।

### मूलम्

तत्रासने महाभागा ब्रह्माद्याः सर्वदेवताः ॥ ३०० ॥

विश्वामित्रो भरद्वाजो वसिष्ठो गौतमस्तथा ।
भृगुरत्रिः [1]स्वयम्पाको वाल्मीकिर्मिथिलेश्वर ॥ ३०१ ॥

वैखानसाश्च दूर्वासा मार्कण्डेयोऽथ गालवः ।
दधीचिश्च्यवनो राजन् सनकश्च सनन्दनः ॥ ३०२ ॥

एते श्रेष्ठतमा लोके मुनयो वीतकल्मषाः ।
जटामुकुटभूषाङ्गा जरत्कृष्णाजिनाम्बराः ॥ ३०३ ॥

१. पुलस्त्यश्च ।

### कल्याणकाण्डदीपः

जरत्कृष्णाजिनेति । मृदूकृतकृष्णाजिनेत्यर्थः ।

### मूलम्

कश्यपं तु पुरस्कृत्य समासीना[1]स्तथाऽऽसने ।
तन्मध्ये वासुदेवस्तु रत्नकम्बल[2]संस्थितः ।
कृताञ्जलिपुट[3]स्तत्र ब्रह्मा लोकपितामहः ॥ ३०४ ॥

१. सभान्तरे । २. मास्थितः । ३. स्तस्थौ ।

**कल्याणकाण्डदीपः**

**कृताञ्जलिपुट इति ।** तत्र श्रीनिवाससमीपे कृताञ्जलिपुटः सन् लोकपितामहः ब्रह्मा संस्थित इत्यनुषङ्गः ।

**मूलम्**

**तत्सभाद्वारमासाद्य राजा सत्यपराक्रमः ।**
**पुरोहितं पुरस्कृत्य सम्प्राप्तः सन्निधिं हरेः ॥ ३०५ ॥**

**कल्याणकाण्डदीपः**

**पुरोहितं** गुरुम् ।

**मूलम्**

**समुत्तस्थौ वासुदेवो दृष्ट्वा राजानमागतम् ।**
**परिरम्भणमालभ्य भगवान् वाक्यमब्रवीत् ॥ ३०६ ॥**

**कल्याणकाण्डदीपः**

**समुत्तस्थाविति ।** गुरुं पुरस्कृत्य आगतं राजानं दृष्ट्वा समुत्तस्थौ । **परिरम्भणमालभ्येति ।** गुरवे **परिरम्भणं** आलिङ्गनं दत्वा । **आलभ्य** राजानमालभ्य हस्तावलम्बनं दत्वा राजानमुद्दिश्य वाक्यमब्रवीत् ।

**गूढकर्तृकव्याख्यानम्**

तादृशसभाभवने महाभाग्यशालिनः ब्रह्मादिसर्वदेवाः स्व-स्व-आसने आसीनाः । विश्वामित्रः भरद्वाजः वसिष्ठः गौतमः भृगुः अत्रिः पुलस्त्यः वाल्मीकिः दूर्वासाः मार्कण्डेयः गालवः दधीचिः च्यवनः सनकसनन्दादयः, वैखानसाः एतत्प्रभृतयः पापरहिताः जटामुकुटैः भूषिताः कृष्णाजिनाख्यवस्त्रधारकाः लोके श्रेष्ठतमाः मुनयः कश्यपं पुरस्कृत्य सभामध्ये समासीनाः । तेषां मध्ये श्रीनिवासः रत्नकम्बले आसीनः । तदा विधिः श्रीनिवासाग्रतः अञ्जलिबन्धं कृत्वा स्थितः । तदा सत्यपराक्रमशाली आकाशः तत्सभाद्वारप्रदेशं आसाद्य पुरोहितं गुरुं पुरस्कृत्य श्रीनिवाससमीपं आजगाम । ततः पुरोहितसहितं आगतं आकाशं दृष्ट्वा श्रीनिवासः शीघ्रं उत्थाय गुरवे आलिङ्गनं दत्वा राज्ञे हस्तावलम्बनं दत्वा राजानमुद्दिश्य वदति ॥

**मूलम्**

**श्रीनिवास उवाच—**

**भवान् श्रेष्ठतमः साक्षात् वृद्धोऽसि नृपसत्तम।**
**किमर्थमगमस्तात मद्गृहं राजसत्तम ॥ ३०७ ॥**

**विष्वक्सेनं तु राजेन्द्र ममाह्वाने नियोजय।**
**एवमुक्ते श्रीनिवासे पुरोहितमभाषत ॥ ३०८ ॥**

**कल्याणकाण्डदीपः**

भवान् पूज्या यूयं साक्षात् मुख्यतः सर्वेषां श्रेष्ठतमः अतिशयेन श्रेयांसः। तथा च सूत्रं "राजा सर्वस्य श्रेष्ठः" इति। तत्रापि वृद्धोऽसि जराझर्झरिताङ्गस्थः। **राजसत्तम** हे राजसत्तमाः! तात! हे मम पितृस्थानीया भवन्तः! शृणुत। एवम्भूतानां भवतां मद्गृहं प्रत्यागमः किमर्थः? कस्मै प्रयोजनाय इत्यर्थः। भवद्भिरेव बहुदूरं मद्गृहं प्रति पद्भ्यामागत्य भाव्यम्। कार्यं किमिति? मदाह्वानार्थं चेत्, तर्हि भवद्भिरेवेदानीमागमनमधिकं जातम्। मैवं भूदुत्तरत्र। तत्र विष्वक्सेनं वसुदानं नियोजयेत्यब्रवीत्। यद्यपि नेदं गृह्यं तथाऽपि जामातरि विष्ण्वनुसन्धानपूर्वकं आहूय कन्यादाने सुकृतातिशय इति आचरन्ति शिष्टाः। त्वदीयानुसन्धानं मया विज्ञाय सन्तुष्टमिति ज्ञापनाय सदाचारस्थापनाय च एवमुक्तं भगवता। **एवमुक्त इति**। एवमुक्तिरस्यास्तीत्येवमुक्तः। अर्श आद्यच्। इत्युक्तवति श्रीनिवासे सर्वज्ञ-शिखामणेः सर्वसाक्षिणः किं विज्ञापनीयमिति तूष्णीम्भूय प्रकृतमनुसरन् पुरोहितमभाषत इत्यर्थः।

**मूलम्**

**राजोवाच—**

**विलम्बः कुरुते कस्मात् पूजां कुरु रमापतेः।**
**स राजवचनं श्रुत्वा धरणीं वाक्यमब्रवीत् ॥ ३०९ ॥**

**कल्याणकाण्डदीपः**

**विलम्ब इति**। **रमापतेः** लक्ष्मीपतेः **पूजां कुरुत** कारयत इत्यर्थः। एतेन लक्ष्मीसमेतस्य पूजेति सूचितम्। **स राजवचनमिति**। **स** गुरुः।

### मूलम्

### वियन्नृपोक्त्या वसिष्ठप्रेरितधरणीकृतश्रीनिवासोपचारः

**वसिष्ठ उवाच—**

**अरुन्धतीं पुरस्कृत्य कुरु पूजां रमापतेः ॥ ३१० ॥**

#### कल्याणकाण्डदीपः

**अरुन्धतीमिति** । सा वरपूजाभिज्ञा स्वाधीनवरा चेत्यर्थः । रमापतेः लक्ष्मीसहित श्रीनिवासस्य ।

#### गूढकर्तृकव्याख्यानम्

श्रीनिवासः वदति— "राजश्रेष्ठ ! यूयं पूज्याः । मुख्यतः सर्वेषां श्रेष्ठतमः । तत्रापि अत्यन्तवयोवृद्धोऽसि । राजश्रेष्ठ ! भवन्तः मम पितृस्थानीयाः । शृणुत । एवम्भूतानां भवतां मद्गृहं प्रत्यागमः किमर्थः ? भवद्भिरेव बहुदूरं मद्गृहं प्रति पद्भ्यां आगत्य भाव्यं कार्यं किम् ? मदाह्वानार्थं चेत् तर्हि भवद्भिरेव इदानीं आगमनं अधिकम् । उत्तरत्र मैवं भूत् । उत्तरत्र विष्वक्सेनं वसुदानं नियोजय" इति । एवं श्रीनिवासे आत्मानं उक्तवति तदा आकाशः "सर्वज्ञशिखामणये ! सर्वसाक्षिणे ! किं विज्ञापनीयम्" इति तूष्णीं भूय प्रकृतं अनुसरन् पुरोहितं गुरुं अभाषत "अयि पुरोहित ! कुतः विलम्बः क्रियते ? रमासहितश्रीनिवासस्य पूजां कारयत" इति ।

स पुरोहितः वसिष्ठः राजवचनं श्रुत्वा राजपत्नीं धरणीं प्रति "हे राजवल्लभे, त्वं वरपूजाभिज्ञां अरुन्धतीं पुरस्कृत्य लक्ष्मीसमेतश्रीनिवासस्य पूजां कुरु" इत्याह ।

**सा सम्भ्रमात् समुत्थाय बाष्पसन्दिग्धलोचना ।**
**मुखं विलोक्य राजेन्द्र कृष्णस्य नृपवल्लभा ॥ ३११ ॥**

**मत्वा कृतार्थमात्मानं साऽऽनन्दपरिपूरिता ।**
**सलज्जा पूजयामास सच्चिदानन्दविग्रहम् ॥ ३१२ ॥**

#### कल्याणकाण्डदीपः

**सा सम्भ्रमादिति** । सा नृपवल्लभा धरणी सम्भ्रमात् त्वरया समुत्थाय कृष्णस्य मुखं परिपूर्णचन्द्रपरिहासिस्वद्युतिरञ्जितसर्वसभं वदनं विलोक्य आनन्दाश्रुसङ्कुचितलोचना सती आत्मानं

स्वप्रयत्नं कृतार्थं सफलं मत्वा सानन्दपरिपूतां सानन्देनानुरागेण सम्भृता बभूव । **सलज्जेति** । अन्यासङ्गेनानिमेषेण चानुरागानुगुणं दृष्ट्वा जन्मनो जीवितस्य च नयनानां साफल्यं सम्पादयामीति मनोरथेन स्ववदनगाढालोकनकौतुकाया धरण्या वदने श्रीनिवासेनावलोकिते स्वीयराजदाराचारचित्तस्थैर्यभ्रंशाद्याविष्कारेण सञ्जातमनःसङ्कोचरूपव्रीडासहिता सती पर्यस्तपक्ष्मलोचना **पूजयामास** पूजां कर्तुमुपक्रान्तेत्यर्थः ।

### गूढकर्तृकव्याख्यानम्

ततः धरणी ससम्भ्रमं समुत्थाय पूर्णचन्द्रपरिहासकर-श्रीनिवाससुन्दरमुखं निरीक्ष्य आनन्दाश्रुसङ्कुचितलोचना जाता । तदा स्वप्रयत्नं सफलं मत्वा सानन्दा जाता । सच्चिदानन्दमूर्ति-साक्षात्-श्रीनिवासस्य मुखं सम्यक् दृष्ट्वा आत्मजीवितनयनसाफल्यं सम्पादयामि इति मनोरथेन द्रष्टुं उपक्रान्ता, किन्तु लज्जिता, देवं पूजयितुं आरेभे ।

### मूलम्

**तां दृष्ट्वा योषितः सर्वा विस्मयाकुलमानसाः ।**
**किं तया चरितं पुण्यं पूर्वजन्मनि [1]भूमिप ॥ ३१३ ॥**
**वासुदेवार्चनविधौ निर्मिता परमेष्ठिना ।**
**या त्वमित्थं पूजयसि साक्षान्नारायणं स्वयम् ॥ ३१४ ॥**

१. हे धरे ।

### कल्याणकाण्डदीपः

**तामिति** । **तां** पूजासन्नद्धां **दृष्ट्वा सर्वा योषितः** सरस्वत्याद्या **विस्मयाकुलमानसाः** अपूर्वसन्दर्शनाचित्तविस्तारक्षणविस्मयाविष्टचित्ताः पूर्वजन्मनि तया किं **पुण्यं** सुकृतं **चरितं** कृतमासीत् तदतर्क्यमिति भावः । किं वितर्के । अतो वासुदेवार्चनविधावित्यादि प्रशशंसुरिति शेषः ।

### गूढकर्तृकव्याख्यानम्

एवं पूजासन्नद्धां धरणीं दृष्ट्वा तत्रत्याः सरस्वत्याद्याः योषिताः अपूर्वसन्दर्शनात् विस्मयाविष्टचित्ताः जाताः । आनन्दिताः राजभार्यां आहुः "हे धरे ! पूर्वजन्मनि किं पुण्यं चरितं त्वया ? साक्षात् विधिः श्रीनिवासं पूजयितुमेव इमां धरणीं सृष्टवान् हि । यतः । साक्षात् नारायणं एवं त्वं पूजयन्ती" इति प्रशशंसुः ।

**मूलम्**

**इत्येवं संस्तुता देवी धरणी राजवल्लभा ।**
**तैलकर्पूरगन्धेन चन्दनेन सुगन्धिना ॥ ३१५ ॥**

**अर्चयामास कल्याणी श्रीनिवासं सुरेश्वरम् ।**
**वस्त्रैर्नानाविधै रत्नैर्मुक्तानिर्मितभूषणैः ॥ ३१६ ॥**

**कल्याणकाण्डदीपः**

अथ अरुन्धत्युक्तमार्गेण "एवं शुभतिथौ लक्ष्मीनारायणप्रेरणया लक्ष्मीनारायणप्रीत्यर्थं वराह्वानाङ्गवरपूजां करिष्ये" इति सङ्कल्पं कृत्वा प्रथमं वराष्टमङ्गळकन्यापूजनं पूर्ववत् कृत्वा श्रीनिवासस्य फाले कुङ्कुमाक्षतान् क्षिप्त्वा अथ देवबुद्ध्या शिरसि निधाय ताम्बूलवीटिकां दत्वा पूजयामासेत्याह— **तैलकर्पूरगन्धेनेत्यादिना** ।

तदित्थम् । अरुन्धती । हे तात ! श्रीनिवास ! तव वज्राङ्कुशध्वजसरोरुहलाञ्छनाढ्यावङ्घ्री स्वर्णमये विशालेऽस्मिन् पतद्ग्रहे निधाय देहि । धरणी तमम्भसा क्षालयतीत्याह । अथ तथा चक्रे श्रीनिवासः । एवमुत्तरत्राप्यूह्यम् । अथ तावक्षालयत् । अथ घुसृणमयाङ्गरागेण तौ रञ्जयित्वा हस्तयोः साक्षतपुष्पाम्भोऽर्घ्यं दत्वा अथ आचमनीयं च **सुगन्धिना** स्वभावसुगन्धिना **तैलकर्पूरगन्धेन** पुष्कळतैलघनसारमिश्रेण हरिचन्दनेन श्रीनिवाससन्दोहबाह्वोर्लेपनं चकार । अथ नानाविधैर्वस्त्रैः रत्नैः मिश्रामिश्रैर्नवरत्नमालाभिः मुक्तानिर्मितभूषणैः हंसकादिचतुर्विधाभरणैः पुष्पमालाभिः तथा प्रभ्रष्टकैः अर्चयित्वा सुगन्धितैलेन हृदयं स्नेहित्वा पटवासकमुष्टिभिरामोद्य अथ मङ्गळवाद्यगीतिकाघोषेण नीराज्य कुङ्कुमोदकं उद्धृत्य ब्राह्मणानक्षतगन्धपुष्पमालाफलदानदक्षिणाभिः सन्तोष्य मन्त्राक्षतान् कारयित्वा कृष्णाय पूजा समर्पणमकरोत् । अथ वधूसम्बन्धिबान्धवान् सगुरुधरणीराजादीन् अक्षतगन्धपुष्पताम्बूलादिभिर्मानयामासुः वरसम्बन्धिनः ।

**गूढकर्तृकव्याख्यानम्**

एवं संस्तुता धरा ततः अरुन्धत्युक्तमार्गेण "एवंगुणविशेषणविशिष्टायां शुभतिथौ श्रीलक्ष्मीनारायणप्रेरणया श्रीलक्ष्मीनारायणप्रीत्यर्थं वराह्वानाङ्गवरपूजां करिष्ये" इति सङ्कल्प्य प्रथमं वराष्टकन्यापूजनं पूर्ववत् कृत्वा श्रीनिवासललाटे कुङ्कुमाक्षतान् क्षिप्त्वा अथ देवबुद्ध्या शिरसि निधाय ताम्बूलवीटिकां दत्वा पूजां चकार । तदित्थम् । अरुन्धती आह "तात श्रीनिवास ! तव ध्वजवज्राङ्कुशपद्म-

चिह्नितपादौ स्वर्णमयविशालपतद्गृहे निधाय देहि । धरणी तौ अम्भसा प्रक्षालयति'' इत्याह । अथ श्रीनिवासः तथा चक्रे । धरणी अक्षालयत् । अथ घुसृणमय-अङ्गरागेण तौ रञ्जयित्वा हस्तयोः साक्षत-पुष्पाम्भोऽर्घ्यं दत्वा अथ आचमनीयं च दत्वा तैलघनसारमिश्रेण हरिचन्दनेन श्रीनिवास-अङ्कर-कण्ठयोः लेपनं चकार । अथ नानाविधैः अनर्घ्यवस्त्रैः नवरत्नमालाभिः मुक्तानिर्मितभूषणैः हंसकादि-चतुर्विधाभरणैः पुष्पमालाभिः (तथा प्रभ्रष्टकैः अर्चयित्वा सुगन्धितैलेन हृदयं स्नेहयित्वा पटवासं मुष्टिभिः आमोद्य) मङ्गलवाद्यगीतिकाघोषेण नीराज्य कुङ्कुमोदकं उद्धृत्य विप्रान् अक्षतगन्धपुष्प-मालाफलदानदक्षिणाभिः सन्तोष्य मन्त्राक्षतान् कारयित्वा श्रीनिवासाय पूजां समर्पयत् । अथ वर-सम्बन्धिनः वधूसम्बन्धिबान्धवान् गुरुधरणीराजादीन् गन्धाक्षतताम्बूलदक्षिणादिभिः मानयामासुः ॥

**मूलम्**

**दिव्यालङ्कारालङ्कृत श्रीनिवासस्य सपरिकरनृपमन्दिरप्रवेशः**

**[1]पुरोहितवचः श्रुत्वा पुराणपुरुषोत्तमम् ।**
**गजमारोप्य राजेन्द्र जामातरमनामयम् ॥ ३१७ ॥**

१. ततः पुरोहिता ज्ञातः ।

**कल्याणकाण्डदीपः**

**पुरोहितवच इति** । वरेण सह प्रस्थीयतामिति पुरोहितवचनम् । **पुराणपुरुषोत्तमं** पुरातन-पुरुषसारम् । **अनामयं** निर्दोषम् । देवोपवाह्यैरावतारोहणानर्हतासामर्थ्यादिदोषरहितं जामातरं गजमारोप्य आरुहेत्युक्त्वा प्रतस्थे ।

**मूलम्**

**सहितो वासुदेवस्तु ब्रह्मणा शम्भुना तथा ।**
**वायुना वरुणेनापि यमेन मरुतां गणैः ॥ ३१८ ॥**

**अष्टभिर्वसुभिश्चापि रुद्रादित्यपुरोगमैः ।**
**स्वस्त्रीभिः सहितैः सर्वैः सह श्रीवेङ्कटेश्वरः ॥ ३१९ ॥**

**वसिष्ठादिमुनिश्रेष्ठैः सदारैः ससुतैस्तथा ।**
**जगाम राजभवनं रत्नतोरणमण्डितम् ॥ ३२० ॥**

**नानाजनसमाकीर्णं नानालङ्कारमण्डितम् ।**
**महावाद्यस्वनैर्युक्तो प्रदीपायुतदर्शितः ॥ ३२१ ॥**

**जामात्रा सहितो राजन् द्वारतोरणसन्निधौ ।**
**चतुरङ्गबलं [1]स्थाप्य गृहान्तर्गन्तुमुद्यतः ॥ ३२२ ॥**

१. मुक्त्वा ।

**कल्याणकाण्डदीपः**

**सहित इति ।** "वासुदेवस्तु ब्रह्मणा" इत्यादि "मरुतां गणैः" इत्यन्तपदवाच्यैः साम्बरविमानं गजमारुह्य अथ पादचारिभिः सदारैः गीयमानमङ्गळगीतिकारुन्धत्यादिपुरन्ध्रीसहितैः ससुतैः मङ्गल-सूक्तपठनपरैर्वसिष्ठादिमुनिश्रेष्ठैः अष्टकन्याभिश्च सहितो महावाद्योत्सवैः युक्तो घृष्यमाणः प्रदीपा-युतदर्शितः तत्प्रकाशितवाहनादिः । अग्निचूर्णविशदप्रभाजालोल्लासप्रसन्नः । नानाजनसमाकीर्णं नाना-लङ्कारमण्डितं राजभवनं प्राप इत्यन्वयः । अथ राजा द्वारतोरणसन्निधौ गृहबहिर्द्वारसमीपे चतुरङ्गबलं रक्षार्थं संस्थाप्य जामात्रा सह राजन् तत्प्रकाशप्रकाशितः मुखपद्मद्युतिरञ्जितः प्राङ्मुखस्तस्थौ ।

**गूढकर्तृकन्यास्यानम्**

ततः वरपूजानन्तरं पुरोहितः प्रस्थीयतां प्रस्थीयतां इति वरेण सह लघु लघु त्वरयामास । क्षणात् राजा "जरादादिकारणं पुरुषोत्तमं सकलदोषवर्जितं प्रकृते ऐरावतारोहणानर्हतासामर्थ्यादिदोषरहितं जामातरं वेगेन ऐरावतं आरोपय" इति आदिश्य प्रतस्थे । तदा श्रीनिवासः साम्बरविमानं गजं आरुह्य विधिना शम्भुना कुबेरेण गरुडेन अग्निना वायुना वरुणेन यमेन मरुतां गणैः पादचारिभिः सदारैः ससुतैः सहितः गीयमान-मङ्गलगीतिकां कुर्वन्तीभिः अरुन्धत्यादिपुरन्ध्रीभिः मङ्गलसूक्तपठनपरैः वसिष्ठादि-मुनिश्रेष्ठैः अष्टकन्याभिश्च सहितः महावाद्योत्सवैः युक्तः सूतमागधबन्दिभिः स्तूयमानः अयुतप्रदीप-दर्शितः नानाविधजनसङ्कीर्णं नानालङ्कारमण्डितं राजभवनं प्राप । अथ राजद्वारतोरणसन्निधौ गृहबहि-र्द्वारसमीपे चतुरङ्गबलं रक्षार्थं संस्थाप्य जामात्रा सहितः राजा गृहद्वारि जामातृप्रकाशप्रकाशितः पूर्वाभि-मुखः तस्थौ । ततः अन्तः पविशति ।

**मूलम्**

**तत्रान्तरे श्रीनिवासं नीराजयितुमागता ।**
**तोण्डमो नृपतेर्भार्या कुङ्कुमोदकभाजनम् ॥ ३२३ ॥**

चिह्नितपादौ स्वर्णमयविशालपतद्गृहे निधाय देहि । धरणी तौ अम्भसा प्रक्षालयति'' इत्याह । अथ श्रीनिवासः तथा चक्रे । धरणी अक्षालयत् । अथ घुसृणमय-अङ्गरागेण तौ रञ्जयित्वा हस्तयोः साक्षत-पुष्पाम्भोऽर्घ्यं दत्वा अथ आचमनीयं च दत्वा तैलघनसारमिश्रेण हरिचन्दनेन श्रीनिवास-अङ्कर-कण्ठयोः लेपनं चकार । अथ नानाविधैः अनर्घ्यवस्त्रैः नवरत्नमालाभिः मुक्तानिर्मितभूषणैः हंसकादि-चतुर्विधाभरणैः पुष्पमालाभिः (तथा प्रभ्रष्टकैः अर्चयित्वा सुगन्धितैलेन हृदयं स्नेहयित्वा पटवासं मुष्टिभिः आमोद्य) मङ्गलवाद्यगीतिकाघोषेण नीराज्य कुङ्कुमोदकं उद्धृत्य विप्रान् अक्षतगन्धपुष्प-मालाफलदानदक्षिणाभिः सन्तोष्य मन्त्राक्षतान् कारयित्वा श्रीनिवासाय पूजां समर्पयत् । अथ वर-सम्बन्धिनः वधूसम्बन्धिबान्धवान् गुरुधरणीराजादीन् गन्धाक्षतताम्बूलदक्षिणादिभिः मानयामासुः ॥

**मूलम्**

**दिव्यालङ्कारालङ्कृत श्रीनिवासस्य सपरिकरनृपमन्दिरप्रवेशः**

**[1]पुरोहितवचः श्रुत्वा पुराणपुरुषोत्तमम् ।**
**गजमारोप्य राजेन्द्र जामातरमनामयम् ॥ ३१७ ॥**

१. ततः पुरोहिता ज्ञातः ।

**कल्याणकाण्डदीपः**

**पुरोहितवच इति** । वरेण सह प्रस्थीयतामिति पुरोहितवचनम् । **पुराणपुरुषोत्तमं** पुरातन-पुरुषसारम् । **अनामयं** निर्दोषम् । देवोपवाह्यैरावतारोहणानर्हतासामर्थ्यादिदोषरहितं जामातरं गजमारोप्य आरुहेत्युक्त्या प्रतस्थे ।

**मूलम्**

**सहितो वासुदेवस्तु ब्रह्मणा शम्भुना तथा ।**
**वायुना वरुणेनापि यमेन मरुतां गणैः ॥ ३१८ ॥**

**अष्टभिर्वसुभिश्चापि रुद्रादित्यपुरोगमैः ।**
**स्वस्त्रीभिः सहितैः सर्वैः सह श्रीवेङ्कटेश्वरः ॥ ३१९ ॥**

**वसिष्ठादिमुनिश्रेष्ठैः सदारैः ससुतैस्तथा ।**
**जगाम राजभवनं रत्नतोरणमण्डितम् ॥ ३२० ॥**

**नानाजनसमाकीर्णं नानालङ्कारमण्डितम् ।**
**महावाद्यस्वनैर्युक्तो प्रदीपायुतदर्शितः ॥ ३२१ ॥**

**जामात्रा सहितो राजन् द्वारतोरणसन्निधौ ।**
**चतुरङ्गबलं [1]स्थाप्य गृहान्तर्गन्तुमुद्यतः ॥ ३२२ ॥**

१. मुक्त्वा ।

**कल्याणकाण्डदीपः**

**सहित इति** । "वासुदेवस्तु ब्रह्मणा" इत्यादि "मरुतां गणैः" इत्यन्तपदवाच्यैः साम्बरविमानं गजमारुह्य अथ पादचारिभिः सदारैः गीयमानमङ्गळगीतिकारुन्धत्यादिपुरन्ध्रीसहितैः ससुतैः मङ्गल-सूक्तपठनपरैर्वसिष्ठादिमुनिश्रेष्ठैः अष्टकन्याभिश्च सहितो महावाद्योत्सवैः युक्तो घृष्यमाणः प्रदीपा-युतदर्शितः तत्प्रकाशितवाहनादिः । अग्निचूर्णविशदप्रभाजालोल्लासप्रसन्नः । नानाजनसमाकीर्णं नाना-लङ्कारमण्डितं राजभवनं प्राप इत्यन्वयः । अथ राजा द्वारतोरणसन्निधौ गृहबहिर्द्वारसमीपे चतुरङ्गबलं रक्षार्थं संस्थाप्य जामात्रा सह राजन् तत्प्रकाशप्रकाशितः मुखपद्मद्युतिरञ्जितः प्राङ्मुखस्तस्थौ ।

**गूढकर्तृकव्याख्यानम्**

ततः वरपूजानन्तरं पुरोहितः प्रस्थीयतां प्रस्थीयतां इति वरेण सह लघु लघु त्वरयामास । क्षणात् राजा "जगदादिकारणं पुरुषोत्तमं सकलदोषवर्जितं प्रकृते ऐरावतारोहणानर्हतासामर्थ्यादिदोषरहितं जामातरं देवेन्द्र ऐरावतं आरोपय" इति आदिश्य प्रतस्थे । तदा श्रीनिवासः साम्बरविमानं गजं आरुह्य विधिना शम्भुना कुबेरेण गरुडेन अग्निना वायुना वरुणेन यमेन मरुतां गणैः पादचारिभिः सदारैः ससुतैः सहितः गीयमान-मङ्गलगीतिकां कुर्वन्तीभिः अरुन्धत्यादिपुरन्ध्रीभिः मङ्गलसूक्तपठनपरैः वसिष्ठादि-मुनिश्रेष्ठैः अष्टकन्याभिश्च सहितः महावाद्योत्सवैः युक्तः सूतमागधबन्धिभिः स्तूयमानः अयुतप्रदीप-दर्शितः नानाविधजनसङ्कीर्णं नानालङ्कारमण्डितं राजभवनं प्राप । अथ राजद्वारतोरणसन्निधौ गृहबहि-र्द्वारसमीपे चतुरङ्गबलं रक्षार्थं संस्थाप्य जामात्रा सहितः राजा गृहद्वारि जामातृप्रकाशप्रकाशितः पूर्वाभि-मुखस्तस्थौ । ततः अन्तः पविशति ।

**मूलम्**

**तत्रान्तरे श्रीनिवासं नीराजयितुमागता ।**
**तोण्डम्नो नृपतेर्भार्या कुङ्कुमोदकभाजनम् ॥ ३२३ ॥**

समादायाशु कल्याणी वासुदेवमपूजयत् ।
हत्वा पशून् महाराज तद्द्वारनिकटे नृपः ।
ततः पश्चाच्छ्रीनिवासः प्राविशद्राजमन्दिरम् ॥ ३२४ ॥

द्वाराण्यतीत्याथ बहूनि देवो
राज्ञा समेतः प्रविवेश राजन् ।
रत्नासने राजविनिर्मिते हरिः
रराज राजीवसमाननेत्रः ॥ ३२५ ॥

**कल्याणकाण्डदीपः**

अथ तोण्डिम्नो नृपतेर्भार्या कल्याणी सती हरिद्राकुम्कुमकस्तूरीसिन्धूदूरपुष्पमन्दहासादिवराभ्युद्रमनमङ्गळा सती अष्टमङ्गळकन्याभिः सह आशु नीराजनभाजनकुङ्कुमोदकभाजनं अम्भः पूर्णकुम्भद्वयं च आदाय अभ्युद्गम्य वासुदेवमपूजयत् । अक्षतवीटिके दत्वा पादयोः हस्तयोः कुम्भद्वयस्थितं पृथगम्भो दत्वा नीराज्य कुङ्कुमोदकनीराजनमुद्धधार । अथ राजा तद्वारनिकटे कल्याणमहोत्सवलक्ष्म्याः जनमनोनयनवचनग्रहपीडायाः भूतवेताळादिपीडायाश्च निवृत्त्यर्थं पशून् हत्वा बल्यर्थं विसृज्य परिभ्राम्य क्षिप्त्वा पुरतो गच्छत इत्युवाच । अथ देवोऽपि बहूनि गृहद्वाराण्यतीत्य राज्ञा समेतो राजन् विवाहशालां प्रविवेश । अथ राजविनिर्मिते विश्वेन कारिते रत्नासने प्रत्युप्तनवरत्ने हरितदर्भास्तीर्णे चतुष्पदे भद्रपीठे प्राङ्मुख उपाविश्य राजीवसमाननेत्रः मन्दहासो रराज ।

**गूढकर्तृकव्याख्यानम्**

तदा तोण्डिमन्नृपतेः भार्या कल्याणी हरिद्राकुङ्कुमकस्तूरीसिन्धूर-पुष्पमन्दहासादि वराभ्युद्गमनमङ्गला सती अष्टमङ्गलकन्याभिः सह आशु नीराजनभाजन-कुङ्कुमोदक-भाजनं अम्भः पूर्णकुम्भद्वयं चादाय अभ्युद्गम्यं वासुदेवं अपूजयत् । अक्षतवीटिके दत्वा पादयोः हस्तयोः कुम्भद्वयस्थितं पृथगम्भो दत्वा नीराज्य कुङ्कुमोदकनीराजनं उद्धधार । अनन्तरं राजद्वारनिकटे कल्याणमहोत्सवलक्ष्म । जनमनोनयन-वचन-ग्रहपीडायाः भूतवेतालादिपीडायाश्च निवृत्त्यर्थं पशून् हत्वा बल्यर्थं विसृज्य पुरतो गच्छत इत्युवाच । अथ देवोऽपि अनेकगृहद्वाराण्यतीत्य राज्ञा युक्तः विवाहशालां प्रविवेश । अथ राजविनिर्मिते विश्वेन कारिते रत्नासने (प्रत्युत) नवरत्ने हरितदर्भास्तीर्णे चतुष्पदे भद्रपीठे प्राङ्मुख उपविश्य राजीवसमाननेत्रः मन्दहासो रराज ॥

**मूलम्**

**चतुस्तम्भे रत्नवेद्यां प्रतिष्ठाप्य खगध्वजम् ।**
**परिवार्य [1]तमासुस्ते मुनयो वीतकल्मषाः ॥ ३२६ ॥**

१. च तस्थुस्ते ।

**कल्याणकाण्डदीपः**

अथ वीतकल्मषाः उपवेशने दुरभिमानादिरहिताः **मुनयः** ब्रह्मर्षयः । चतुःस्तम्भे मण्टपे रत्नवेद्यां भद्रासने खगध्वजं उपवेश्य तावत्कालं स्थित्वा वेदिकाया अग्रतः ब्रह्माणं कृत्वा अग्रोपविष्टं ब्रह्माणं दृष्ट्वा तं **परिवार्यासुः** परिवार्यतया उपविष्टाः । दक्षिणतो वधूसम्बन्धिन आकाशादय आसुः । पश्चिमतः वधूवरसम्बधिन्यो सरस्वत्यरुन्धत्यादय आसुः । अथ **सर्वे देवाः** शम्भ्वादयः वरसम्बंन्धिनः उत्तरतः आसुः **यथासुखम्** ।

**ब्रह्माणमग्रतः कृत्वा सर्वे देवा यथासुखम् ।**
**स्वर्णासने समासीनं पश्यन्तो [1]मुनयोत्सवम् ॥ ३२७ ॥**

१. नयनोत्सवम् ।

**गूढकर्तृकव्याख्यानम्**

ततः वीतकल्मषाः मुनयः उपवेशने दुरभिमानादिरहिताः ब्रह्मर्षयः । चतुस्तम्भे मण्डपे रत्नवेद्यां भद्रासने श्रीनिवासं उपवेश्य तावत्कालं स्थित्वा वेदिकायाः अग्रतः ब्रह्माणं कृत्वा, अग्रोपविष्टं विधिं दृष्ट्वा तं परिवार्य उपविष्टाः देवाः । दक्षिणतः वधूसम्बन्धिनः आकाशादयः उपविष्टाः । पश्चिमतः वधूवरसम्बन्धिन्यः सरस्वत्यरुन्धत्यादयः आसुः । अथ सर्वे देवाः शम्भ्वादयः वरसम्बन्धिनः उत्तरतः यथासुखं आसुः । उत्सवं द्रष्टुं आगताः अन्ये मुनयः स्वर्णासने समासीनं पश्यन्तो यथासुखं अग्रतः पार्श्वतः आसुः ॥

**ततः स राजशार्दूलः कृतमङ्गलमज्जनः ।**
**साऽपि स्नात्वा महाराज तैलेनोत्तमगन्धिना ॥ ३२८ ॥**

**अलङ्कारैरलङ्कृत्य स्वात्मानं राजवल्लभा ।**
**स्वामिपुष्करणीतोयं हेमकुम्भप्रपूरितम् ।**
**आनयित्वा ब्राह्मणैश्च हरिपादावनेजने ॥ ३२९ ॥**

**कल्याणकाण्डदीपः**

**स्वर्णासन इति** । उत्सवं द्रष्टुमागता अन्ये मुनयो स्वर्णासनसमासीनं पश्यन्तो यथासुखं अग्रतः पार्श्वतः आसुः । **तत इति** । सभोपवेशनानन्तरं कृतमङ्गळमज्जनः अभूत् । साऽपि राजवल्लभा धरणी उत्तमगन्धिना तैलेन अभ्यज्य **अलङ्कारैः** विशेषालङ्कारैः अलङ्कृत्य सन्नद्धा बभूव । अथ राजा **हरिपादावनेजने** हरिपादयोरवनेजनेऽभिषेकार्थम् । तादर्थ्ये सप्तमी । **हेमकुम्भप्रपूरितं** पूर्वमेव तूर्यघोषेण ऐरावता नीतं स्वदेवसद्मनि स्थापितं पाद्यार्घ्याचमनीयशुद्धाचमनकन्यादानाङ्गधारासेचनदानोदकार्थं पञ्चसु हेमकुम्भेषु प्रपूरितं पूर्णं न किञ्चिन्न्यूनं स्वामिपुष्करिणीतोयं **ब्राह्मणैः** ऋत्विग्भिः **आनीय** अनाच्छय्याचार्याय निवेदयामास । अथ पुरोधा वेदिकादक्षिणतः प्रागग्रोदगग्रान् दर्भानास्तीर्य तदुपरि तत्कुम्भान् निधाय व्रीहियवानारोप्य गन्धादिभिरलङ्कृत्य दूर्वापल्लवैर्मुखमास्तीर्याब्लिङ्गैर्मन्त्रैर्मन्त्रयामास ।

**गूढकर्तृकव्याख्यानम्**

सभोपवेशनानन्तरं राजा कृतमङ्गलस्नानः । सापि राजपत्नी धरणी उत्तमसुगन्धितैलेन अभ्यज्य विशेषालङ्कारैः अलङ्कृत्य सन्नद्धा बभूव । ततः राजा श्रीनिवासपादयोः अभिषेकार्थं पूर्वमेव तूर्यघोषेण ऐरावतानीतं स्वदेवसद्मनि स्थापितं पाद्य-अर्घ्य-आचमनीय-शुद्धाचमन-कन्यादानाङ्ग-धारासेचन-दानोदकार्थं पञ्चसु हेमकुम्भेषु तूर्णं निष्किञ्चिन्न्यूनं स्वामिपुष्करिणीतोयं ब्राह्मणैः ऋत्विग्भिः आनीय आचार्याय निवेदयामास । अथ पुरोधाः वेदिकादक्षिणतः प्राक् उदगग्रान् दर्भान् आस्तीर्य तदुपरि तत्कुम्भान् निधाय (व्रीहियवान् आरोप्य) गन्धादिभिः अलङ्कृत्य दूर्वापल्लवैः मुखं अवस्तीर्य अब्लिङ्गैः मन्त्रैः मन्त्रयामास ।

**मूलम्**

**सङ्कल्प्य विधिवद्राजा कन्यादानाङ्गपूर्वकम् ॥ ३३० ॥**

**कल्याणकाण्डदीपः**

**सङ्कल्प्येति** । अथ राजा देशकालौ सङ्कीर्त्य प्राणानायम्य गृहानीताय वराय अस्मै । **कन्यादानाङ्गपूर्वकम्** । कन्यादानाङ्गमिते विशेषणपूर्वं पूर्वविशेषणं यस्य तत् तथा कन्यादानाङ्गं विराड्दैवत्यम् । **विधिवत्** वरशाखोक्तविध्यर्हम् । तदर्हमिति वतिः । मधुपर्कार्हणं करिष्य इति सङ्कल्प्य मधुपर्कानयनाद्याचार्यतन्त्रनिरीक्षणं चक्र इत्यन्वयः । **तत इति** । **पुरोहितः** आचार्यः गुरुः । "मधुना सर्पिषा वाऽपि सुसम्पृक्तं भवेद्यदि । मधुपर्क इति प्राज्ञैर्याज्ञिकैरभिधीयते" इति तैजस एकस्मिंश्चषके पात्रे

मधुपर्कं चकार । मधुसम्पृक्तं दधि कृत्वा अपरेण तैजसपात्रेण आच्छाद्य तन्तुना वेष्ट्य गर्भगृहे विज्ञातं स्थापयामासेत्यर्थः । अथ राज्ञा त्रिर्निवेदितोदगग्रकूर्चे विष्टरे समन्त्रं उपविवेश वरः ।

### मूलम्

### वियन्नृपकृतवरपादाम्बुजप्रक्षालनम्

ततश्चकार राजेन्द्र मधुपर्कं पुरोहितः ।
पुरोहितेन मन्त्रेण तस्य पादावनेजनम् ॥ ३३१ ॥

सहस्रशीर्षा पुरुष इति मन्त्रं समुच्चरन् ।
पादप्रक्षालनं कृत्वा स्वामितीर्थजलैः शुभैः ॥ ३३२ ॥

हरिपादोदकं पुण्यं [1]दधाराकाशराट् स्वयम् ।
भार्यां पुत्रं भ्रातरं च भवनं कोशमेव च ॥ ३३३ ॥

गजागारं घोटगारं वस्त्रागारं च तज्जलैः ।
मार्जयामास राजेन्द्रः श्रीनिवासपरायणः ॥ ३३४ ॥

१. दधार शिरसा नृपः ।

### कल्याणकाण्डदीपः

अथ पाद्यं त्रिर्निवेदितमित्याह **पुरोहितेनेति** । **पुरोहितेन** गुरुणोपदिष्टेन मन्त्रेण पाद्यं त्रिर्निवेदितेन । **तस्य** श्रीनिवासस्य **पादावनेजनं** पाद्यं निवेद्य पुरोहितेन निवृत्तकर्माङ्गतया अग्रतोऽधिकहितेन मन्त्रेण मन्त्रत्वकारणेन "सहस्रशीर्षा पुरुषः" इति मन्त्रमुच्चरन् पादप्रक्षालनं कृत्वा इत्यादि स्पष्टम् । कोशमर्थोघम् । "कोशोऽस्त्रीकुड्मले खड्गपिधानेऽर्थोघदिव्ययोः" इत्यमरः । इदमुपलक्षणम् । अथ आचम्य पूर्ववत् त्रिर्निवेदितार्घ्यमञ्जलिना गृहीत्वा ततस्त्रिर्निवेदितमाचमनीयस्यैकदेशं पीत्वा आचम्य मध्यमार्ग आनीयमानमधुपर्कनिरीक्षणप्रतिग्रहप्राशनगवोत्सर्जनान्तं मधुपर्कं समाप्य अथ वरं मधुपर्काङ्गं गन्धादिभिरभ्यर्च्य नीराज्य तद्बन्धूनपि पूजयामास ।

### गूढकर्तृकन्याख्यानम्

अथ राजा देशकालौ सङ्कीर्त्य प्राणानायम्य "गृहानीतवराय अस्मै कन्यादानाङ्गं विराड्दैवत्यं वरशाखोक्तविध्यर्हं मधुपर्कार्हणं करिष्ये" इति सङ्कल्प्य मधुपर्कानयनादि आचार्यतन्त्रनिरीक्षणं चक्रे ।

ततः पुरोहितः "मधुना सर्पिषा वाऽपि सुसम्पृक्तं भवेदपि । मधुपर्क इति प्राज्ञैः अभिधीयते" इति तैजस एकस्मिन् चषकपात्रे मधुसम्पृक्तं दधि कृत्वा अपरेण तैजसपात्रेण आच्छाद्य तन्तुना आवेष्ट्य गर्भगृहे विज्ञातं स्थापयामास ।

अथ राज्ञा त्रिः निवेदित-उदगग्रकूर्चे विष्टरे समन्त्रं वरः उपविवेश ॥ पुरोहितेन गुरुणा उपदिष्टेन मन्त्रेण श्रीनिवासस्य पादावनेजनं पाद्यं निवेद्य "सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्" इति मन्त्रं उच्चरन् पादप्रक्षालनं कृत्वा श्रीहरिपादोदकं स्वशिरसि दधार । भार्या-पुत्र-भ्रातृ-कोश-गजागार-रथागार-वस्त्रागारादिकं श्रीनिवासपरायणः पादोदकेन मार्जयामास ।

**राजोवाच—**

**अद्य मे सफलं जन्म जीवितं च सुजीवितम् ।**
**अद्य मे पितरस्तुष्टा वासुदेवपदोदकात्　　॥ ३३५ ॥**

**एवमुक्त्वा महाराजः कन्यां कमललोचनाम् ।**
**अलङ्कृत्य विचित्रैश्च अलङ्कारैर्महीपते　　॥ ३३६ ॥**

**मूलम्**

**[1]ततस्तद्घटिकाघोषं कृतवान् देवचिन्तकः　　॥ ३३७ ॥**

१. ततस्तु घण्टिकाघोषं कृतवान् दैवचिन्तकः ।

**कल्याणकाण्डदीपः**

अथ राजा सुस्नातामलङ्कृतामहतवाससां गन्धानुलिप्तां स्रग्विणीं पद्मां कृत्वा कौतुकवेदिकाप्रवेशे घटिका आयात्विति निरीक्षां चक्रे । तत इति । देवचिन्तकः ज्योतिर्वित् । तद्घटिकाघोषं सुमुहूर्त-सम्बन्धिनी सुलग्नसम्बन्धिनी च घटिका आयाता । सावधानाः सर्वे दातृप्रतिगृहीतृपुरोहितर्त्विजः मुहूर्त-लग्नसाधनाय समाहितमनसः स्त इत्यर्थिकां "सुमुहूर्ताः सावधानाः, सुलग्नाः सावधानाः" इत्युक्तिं कृत्वा घण्टाघोषं कृतवान् । तदुक्तं नाटके—

"सन्नह्यध्वमुपाहरध्वमुचितद्रव्याण्युपाध्वं सुरान्
सम्प्राप्तः सुमुहूर्त एष विजयी कल्याणसम्पत्स्वनिः ॥" इत्यादि ।

व्याख्या— **सुमुहूर्तः प्राप्तः** प्रत्यासन्नः । अतोऽवधानेन भवितव्यं मुहूर्ते सावधाना भवत इत्यर्थः ॥ **उचितद्रव्याणि** तीर्थतोयकलशादीनि इत्यादि सुमुहूर्ता सावधाना इति वा सुलग्नांश-मूर्तकालसहिता घटिका प्राप्ता । भवद्भिः मुहूर्तकाले मनःसमाधीयतामिति तदर्थः । तदुक्तं ज्योतिषे—

"भूतानामन्तकः कालः कालोऽन्यः कालनामकः ।
स द्विधा स्थूलसूक्ष्मत्वान्मूर्तश्चामूर्त उच्यते ।
प्राणादिः कथितो मूर्तः तृट्याद्योऽमूर्तसंज्ञकः ।
तीक्ष्णसूच्याब्जपुण्यस्य दळवेधस्तृटिर्भवेत् ।
तच्छतं लव इत्युक्तं तत्त्रिंशन्निमिषः स्मृतः ।
दशगुर्वक्षरोच्चारः कालः प्राणोऽभिधीयते ॥"

लग्नलक्षणम् । स्वस्थनरनयनस्पन्दनस्य त्रिशततमः अंशः परः कालः । तस्य शततमः अंशः तृटिः ।

"तृटेः सहस्रभागो यो लग्न कालः स उच्यते ।
देवोऽपि तन्न जानाति किं पुनः प्राकृतो जनः ॥
सकालोऽप्यन्यकालो वा पूर्वकर्मवशाद्भवेत् ।
निमित्तमात्रं दैवज्ञः तद्वशाच्च शुभाशुभः ॥" इति ।

**मूलम्**

**[1]सुमुहूर्तमिमं कालं मङ्गळाष्टकमब्रुवन्** ॥ ३३८ ॥

१. सुमुहूर्तोऽयमित्येव ।

**कल्याणकाण्डदीपः**

**समुहूर्तमिति** । अत्यन्तसंयोगे द्वितीया । सुमुहूर्तेऽस्मिन् काले वरस्य दक्षिणोत्तरयोः पार्श्वयोः अष्टौ बृहस्पतिवसिष्ठमुखाः कौतुकवेदिकामध्ये हस्तान्तराळौ पूर्वापरौ समुच्छ्रितौ शुक्लतण्डुलराशी कृत्वा तन्मध्ये कुङ्कुमस्वस्तिकाङ्कितां स्वर्णमयीं प्रत्यूतनवरवाञ्चलां देशकालार्हजनदशानुगुणं जगन्मोहनसौन्दर्यसारलीलेच्छामानुषविग्रहयोः सालपोतप्रमाणयोः कटिदघ्नसर्वजनयोः पद्माश्रीनिवास-योरापादमौळिपरिणाहां द्विगुणीकृतां उदग्दशां उद्धृत्य धृत्वा पूर्वराशौ प्रत्युङ्मुखं वरं परस्मिन् प्राङ्मुखीं कन्यां प्रतिष्ठाप्य **मङ्गळाष्टकमब्रुवन्** वक्तुमुपाक्रमन्नित्यर्थः ।

अथ राजा पूर्वं मन्त्रेण स्थापितघटिकायन्त्रसन्निधिं गत्वा गणेशवरुणौ सम्पूज्य सुमुहूर्ताय नम इति आवाहनादि षोडशोपचारपूजां कृत्वा ज्योतिर्विदं स्वर्णासने उपवेश्य पाद्यार्घ्याचमनीयगन्धाक्षतताम्बूल-वस्त्राभरणमालापारितोषकद्रव्यादि दत्वा नत्वा भवान् सुमुहूर्तं ददात्विति याचयित्वा तद्दत्ताशीर्मन्त्रा-क्षतपुष्पफलान्यादाय वधूवरयोर्दातुं वसिष्ठहस्ते अदात् । स चाक्षतान् वधूवरयोः शिरसि निधाय पुष्पमालामाकलयन् हस्ते फलं ददौ ।

## गूढकर्तृकव्याख्यानम्

तदा राजा एवं मनसि अनुसन्दधानः "श्रीहरिपादोदकात् अद्यैव मे जन्म सफलम् । जीवितं सुजीवितम् । अद्यैव मे पितरः सन्तुष्टाः" इति । अथ आचम्य त्रिः निवेदितं अर्घ्यं अञ्जलिना गृह्य । ततः त्रिः निवेदितं आचमनीयस्य एकदेशं पीत्वा मध्यमार्गं आनीयमान-मधुपर्क-निरीक्षण-प्रतिग्रहण-प्राशनान्त-मधुपर्कं समाप्य अथ वरं मधुपर्काङ्गं गन्धादिभिः अभ्यर्च्य नीराज्य तद्-बन्धून् अपि पूजयामास ।

ततः सुस्नातां अलङ्कृतां अहतवाससं गन्धानुलिप्तां स्रग्विणीं पद्मां कृत्वा कौतुकवेदिकाप्रवेशे घटिका आयातु इति निरीक्षाञ्चक्रे । ततः ज्योतिर्विद्-सुमुहूर्त-सम्बन्धिनी घटिका आयाता । सर्वे दातृप्रतिग्रहीतृ-पुरोहित-ऋत्विजः मुहूर्तलग्नसाधनाय समाहितमनसः स्त इत्यभिप्रायेण सुमुहूर्ताः सावधानाः इत्युक्तिं कृत्वा घण्टाघोषम् कृतवान् । सुमुहूर्ताः सावधानाः, सुलग्नाः सावधानाः । अस्य अर्थः— सुलग्नांशमुहूर्तकालसहिता घटिका प्राप्ता । भवद्भिः मुहूर्तकाले मनः समाधीयताम् । इति ॥

तीक्ष्ण सूच्या अब्जदलभेदः = १ तृटिः । १०० तृटयः = १ लवम् । ३० लवानि = १ निमिषः । १८ निमिषाः = १ काष्ठा । ३० काष्ठाः = १ कला । ३० कलाः = १ क्षणः । १२ क्षणाः १ मुहूर्तः ॥

कालः द्विविधः । स्थूलः मूर्तः (प्राणादिः) । सूक्ष्मः अमूर्तः (तृट्यादिः) । दशगुर्वक्षरोच्चार-कालः प्राणः ।

स्वस्थनरनयनस्पन्दनस्य १/३० अंशः = परकालः । परकालस्य १/१०० अंशः = तृटिः । तृटिकालस्य १/१००० अंशः = लग्नम् ॥

"तृटेः सहस्रभागो यो लग्नकालः स उच्यते ।
देवोऽपि तन्न जानाति किं पुनः प्राकृतो जनः ।

स कालो भव्यकालश्च पूर्वकर्मवशात् भवेत् ।
निमित्तमात्रं दैवज्ञः तद्वशाच्च शुभाशुभम् ॥'' इति ।

सुमुहूर्ते अस्मिन् काले (वरस्य दक्षिणोत्तरपार्श्वयोः अष्टौ बृहस्पतिमुखाः कौतुकवेदिकामध्ये हस्तान्तरस्थौ समुच्छ्रितौ शुक्लतण्डुलराशी कृत्वा तन्मध्ये कुङ्कुमस्वस्तिकाङ्कितां स्वर्णमयीं प्रत्युप्त-नवरत्नाञ्चलां देशकालोचितदशानुगुणं जगन्मोहनसौन्दर्यसारलीलेच्छामानुषविग्रहयोः सालपोतप्रमाणयोः कटिदघ्नसर्वजनाकीर्णयोः पद्माश्रीनिवासयोः आपादमौलिपरिणाहां द्विगुणीकृतां उदग्दशां उद्धृत्य धृत्वा) पूर्वराशौ प्रत्यङ्मुखं वरं प्रत्यङ् राशौ प्राङ्मुखीं कन्यां प्रतिष्ठाप्य मङ्गलाष्टकं वक्तुं उपाक्रमन् ॥

**मूलम्**

**वराय वियन्नृपदत्तवैवाहिकभूषणादिकम्**

**कन्याप्रदानसमये दक्षिणां राजसत्तमः ।**
**कोटिसङ्ख्यं निष्कपुञ्जं दत्तवान् वेङ्कटेशितुः ।**
**तं दृष्ट्वा धनराशिं तु भगवानाह भूमिपम्[1] ॥ ३३९ ॥**

१. भूपतिम् ।

**कल्याणकाण्डदीपः**

अथ राजा निजभाषितं सत्यं कर्तुं दक्षिणां ददावित्याह— **कन्याप्रदानसमय इति** । निष्क-शब्दार्थ उक्तः ''हिरण्यगर्भगर्भस्थं'' इत्यादि मन्त्रेण ।

**मूलम्**

**श्रीभगवानुवाच—**

**दातव्यं किं महाराज पुत्रस्य तव भूपते ।**
**विवाहकर्मनिपुणो भवान् दानपरायणः ॥ ३४० ॥**

**कल्याणकाण्डदीपः**

**दातव्यमिति** । कन्यादानमात्रेण तृप्तस्य **तव पुत्रस्य** पुत्रवद्विधेयस्य **दातव्यं किं** अस्ति ? इत्याह इत्यन्वयः । एवमपि मम जन्मन एकमेव कन्यादानम्, तदुत्तमकल्पेनैव भवतु इत्येव **भवान्**

**विवाहकर्मनिपुणः** तत्रापि **दानपरायणः** किञ्चिन्निमित्तमात्रे पात्रे द्रव्यदाने तात्पर्यं कन्यादानादि-विशेषनिमित्ते तु किं वक्तव्यमिति भावः ।

**गूढकर्तृकव्याख्यानम्**

**काचोळानामिति** । यथा चोळस्य काचोळा व्याप्ता तद्वदाचरन्ती काचोळाः चषकपात्राणि । अथ आकाशः पूर्वमन्त्रेण स्थापितघटिकायन्त्रसन्निधिं गत्वा गणेशवरुणौ सम्पूज्य "सुमुहूर्ताय नम" इति आवाहनादिषोडशोपचारपूजां कृत्वा ज्योतिर्विदं स्वर्णासने उपवेश्य पाद्यार्घ्याचमनीय-गन्धाक्षत-ताम्बूल-वस्त्राभरण-माला-पारितोषक-द्रव्यादि दत्वा नत्वा "भवान् सुमुहूर्तं ददातु" इति याचयित्वा तद्दत्ताशीर्मन्त्राक्षतपुष्पमालान्यादाय वधूवरयोः दातुं वसिष्ठहस्ते अदात् । स च अक्षतान् वधूवरशिरसि निधाय पुष्पमालां आकलयन् हस्ते फलं ददौ ।

अथ आकाशः निजभाषितं सत्यं कर्तुं श्रीनिवासाय कन्यादानकाले कोटिसङ्ख्याकनिष्कान् दक्षिणां ददौ । तत् दक्षिणाधनराशिं दृष्ट्वा श्रीनिवासः आकाशं प्रति "राजश्रेष्ठ ! कन्यादानमात्रेण तृप्तः पुत्रवत् विधेयोऽहम् । ईदृशाय दातव्यं किमस्ति ? न किमपि । तथाऽपि "मम जन्मनि एकमेव कन्या-दानम् । तदपि उत्तमकल्पेनैव भवतु" इति अनुसन्दधत् भवान् वैवाहिककर्मणि निपुणः तत्रापि दानकर्मणि तत्परः । ईदृशस्य तव दातुं किञ्चिन्निमित्तमात्रपात्रे सति द्रव्यदाने तात्पर्यवान् । कन्या-दानादिविशेषनिमित्ते तु किमु वक्तव्यम् ? अत एव अलङ्कृत्य कन्यादानं इति विधिरक्षणाय वच्मि ।

**मूलम्**

**ददस्व भूषणान्यङ्ग बहुरत्नयुतानि च ।**
**इत्युक्तो वासुदेवेन भूषणानि तदा ददौ ॥ ३४१ ॥**

**किरीटं शतभारं तु [1]कर्णिकां च तदैव तत् ।**
**[2]नूपुरकं तदर्धं च तदर्धां चैव कण्ठिकाम् ॥ ३४२ ॥**

१. कटिकाञ्चीं तु तावतीम् ।
२. केयूरनूपुरे दिव्ये तदर्धं चैव पादुकाम् ।

**कल्याणकाण्डदीपः**

अतः अलङ्कृत्य कन्यादानमिति विधिरक्षणाय वच्मि इत्याह **ददस्व इति** । **किरीटमिति** । व्याख्यातं **कर्णिकां च तदैव तत्** । यदा **किरीटं** दीयते **तदैव तत्** । **कर्णभूषे** मकराकारकर्णपाळिभूषे

**ददौ**। **तदैव तत्**। यदा किरीटं दीयते तदैव तत् कर्णभूषणं देयं यतोऽत इति शेषः। तदनुभूषणत्वादिति भावः। "नुपूरकं तदर्धं च तदर्धां चैव कण्ठिकाम्॥" नुपूरकं पादकटकम्। तदर्धं कर्णिकार्धमौल्यकं **कण्ठिकां** कण्ठभूषाम्।

**मूलम्**

**पताकानि च ससानि अनर्घ्यानि नृपोत्तम।**
**मालिकां मौक्तिकीं चापि भुजभूषासमर्धकम्** ॥ ३४३॥

**[1]कर्णभूषैर्मौक्तिके तु निम्बमात्रप्रमाणके।**
**कङ्कणौ रत्नमाणिक्यवज्रवैडूर्यनिर्मितौ** ॥ ३४४॥

१. **कर्णभूषौ मौक्तिकाढ्यौ अंसपर्यन्तलम्बिनौ।**

**द्वात्रिंशद्वारसम्पन्नौ अनर्घ्यौ दत्तवान् नृप।**
**नागभूषणद्वन्द्वं च बाहुपुर्यादिके तथा** ॥ ३४५॥

**अङ्गुल्याभरणं राजन् वीरमुद्रमतः परम्।**
**कटिसूत्रं स्वर्णमयं वरवज्रसमन्वितम्** ॥ ३४६॥

**कवचं कटिमारभ्य बहुरत्नविचित्रतम्।**
**पादरक्षे ततो राजा दत्तवान् मधुघातिने** ॥ ३४७॥

**ददौ भोजनपात्रं च भारषष्टिसमन्वितम्।**
**काचोळानां चतुःषष्टिं दत्तवान् राजसत्तम** ॥ ३४८॥

**कल्याणकाण्डदीपः**

**पताकानि च ससानि इति**। **ससानि** पताकाकारसहजरत्नान्येव नवरत्नखचिततया कृत्रिमाणि भुजभूषणद्वन्द्वकं केयूरद्वयं तोळबन्दी सरिगि। "मालिकां मौक्तिकीं चापि भुजभूषासमर्धिकाम्" इति क्वचित् पाठः। भुजभूषायाः शोभासमृद्धिप्रदामित्यर्थः। "कर्णभूषे मौक्तिके तु निम्बमात्रप्रमाणके"। कर्णभूषे = परिवेषाकारे। तत्र स्यूते मुक्ते तु पिचुमन्दफलप्रमाणके। **कङ्कणाविति**। करणभूषणे। हस्तकडगकुमार्या इव कङ्कण इति पुंसि प्रयोगः। **नागभूषणद्वन्द्वं(कं)** नागमुरगि। **बाहुपुर्यादिक इति**। कहूळाकारे। अङ्गल्याभरणमौक्तिकामालामन्त्रः

"हिरण्यगर्भसम्भूतं सौवर्णं चाङ्गुलीयकम् ।
सर्वप्रदं प्रयच्छामि प्रीणातु मम केशवः ॥" इति ।

**वीरमुद्रं वीरो** रामः, तन्मुद्राङ्कितम् । **कटिसूत्रं** शृङ्खळम् । **भोजनपात्रं** भोजनार्थं पात्रम् । मन्त्रः—

"यानि पापानि काम्यानि कामोत्थानि कृतानि च ।
भुजिपात्रप्रदानेन तानि नश्यन्तु मे सदा ॥" इति ।

**गूढकर्तृकव्याख्यानम्**

राजवर ! अङ्ग ! अद्य मे जामात्रे दातव्य बहुरत्नखचितभूषणानि ददस्व" इत्याह । ततः आकाशः श्रीनिवासवाचोक्त्या तस्मै शतभारमितं किरीटं, मकराकारकर्णपालिभूषे, कर्णिकां च पादकटके, कर्णिकार्धमौल्यकण्ठिकाम्, शतभारमितकटिकाञ्चीम्, केयूरद्वन्द्वम्, (तोलबन्दि) पादुके "हिरण्यगर्भसम्भूतं सौवर्णं चाङ्गुलीयकम् । सर्वप्रदं प्रयच्छामि प्रीणातु मम केशवः" इति राममुद्राङ्कितदशमुद्राङ्गुलीयकम्, मौक्तिकामालां, अनर्घानि सप्त पदकानि, माणिक्यवज्रवैडूर्यनिर्मिते कङ्कणे, कङ्कणे द्वात्रिंशद्धारसंयुक्ते, वज्रस्वर्णमयकटिसूत्रं एकादशशतभारमितम्, षष्टिभारमितभोजनपात्रम्, लघुपात्राणि, बृहत्पात्राणि, अपाम् । चतुःषष्टि कचोलान् (पानपात्रं) इत्येवमादि भूषणानि ददौ ॥ नानाभूषणभूषितश्रीनिवासाय राजा कन्यादानं चकार ।

**मूलम्**

**भूषणैर्भूषिताङ्गस्य कन्यादानमथाकरोत् ।**
**कन्या[1]वरणमुच्चार्य गुरुः साक्षाद्बृहस्पतिः ॥ ३४९ ॥**

१. प्रवर ।

**बृहस्पतिरुवाच—**

**अत्रिगोत्रसमुद्भूतां [1]सुधर्मस्य प्रपौत्रिकाम् ।**
**सुधर्मणश्च पौत्रीं तां पुत्रीमाकाशभूपतेः ॥ ३५० ॥**

**त्वमङ्गीकुरु गोविन्द कन्यां कमललोचनाम् ।**
**एवमुक्ते महाराज मध्ये रत्नाम्बरं दधत् ॥ ३५१ ॥**

१. सुवीरस्य ।

वसिष्ठ उवाच—

प्रपौत्रस्य ययातेश्च पौत्रस्यामिततेजसः ।
शूरसेनस्य राजेन्द्र वसुदेवस्य भूपतेः ॥ ३५२ ॥

पुत्रस्य वेङ्कटेशस्य गोत्रे वासिष्ठसंज्ञके ।
जातस्यात्रिकुलोत्पन्नां कन्यां कनकभूषिताम् ॥ ३५३ ॥

गृहीष्यामो वयं राजंस्तव पुत्रीं नृपोत्तम ।
[1]कन्यावरणमुच्चार्य इत्युच्चारितयोरथ ॥ ३५४ ॥

धरण्या सह राजेन्द्रः कन्यादानपरायणः ।
पूजयित्वा जगन्नाथं गन्धवस्त्रानुलेपनैः
प्रहृष्टहृदयः प्राह श्रीनिवासं परात्परम् ॥ ३५५ ॥

**श्रीनिवासस्य वसिष्ठादिकारितपद्मावतीपाणिग्रहोत्सवः**

आकाशराज उवाच—

[2]कन्यादानं मया दत्तं गृहाण पुरुषोत्तम ॥ ३५६ ॥

१. कन्यावरप्रवरयोः । २. कन्यामिमां प्रदास्यामि ।

**कल्याणकाण्डदीपः**

एवं राजा श्रीनिवासं भूषणैः भूषयामास । '**भूषणैः**' इत्यादि '**पुरुषोत्तम**' इत्यन्तं पद्यसप्तकमेकं महावाक्यम् । '**भूषणैः**' इत्यादि '**गुरुरित्यतःपूर्वमुच्चार्य**' इत्यन्तमेकं खण्डवाक्यम् । '**गुरुः**' इत्यादि '**कमललोचनं**' इत्यन्तं द्वितीयम् । '**एवमुक्त**' इत्यादि '**नृपोत्तम**' इत्यन्तं तृतीयम् । तथा चेत्थं योजना । भूषणैर्भूषिताङ्गस्य कन्यावरणं उच्चार्यम् । '**अमुकगोत्राय**' इत्यादि '**वृणीध्वं**' इत्यन्तं वरण-वाक्यं वरपूर्वकं प्रत्यङ्मुखैः प्राङ्मुखैश्च चतुर्भिश्चतुर्भिरुभयपुरोहितमुखै ब्राह्मणैः त्रिरुच्चारणं कारयित्वा अथ कन्यादानमकरोदिति प्रथमखण्डवाक्यार्थः । एतदेव विशदयति— **कन्यादानमथाकरोत्** इति प्रथमवाक्यांशेन "**सह पुरुषोत्तम**" इत्यन्तेन महावाक्येन । यावत् खण्डवाक्ययोजना सिद्ध्यतीति सा क्रियते । **अथ** भूषणानन्तरं साक्षात् प्रत्यक्षो **बृहस्पतिः** गुरुः आचार्यः । **अत्रिगोत्रसमुद्भूताम्** इत्यादि

आकाशभूपतेः मम पुत्रीं **कमललोचनां कन्यां त्वमङ्गीकुरु** प्रतिगृह्णातु भवान् इत्यर्थकं कन्यादानाङ्गं दातृवाक्यं **राज्ञा** वाचयित्वा धारा निषेचयामास इति द्वितीयखण्डवाक्यार्थः ।

महाराज्ञा एवमुक्ते धारासेचनानन्तरं रत्नाम्बरं मध्ये प्रदेशे वरसमीपे प्राङ्मुखे दधन् वसिष्ठः "**प्रपौत्रस्य ययातेः**" इत्यादि "**पुरुषोत्तम**" इत्यन्तं प्रतिगृह्णीम इत्यर्थकं गृहीष्याम इति प्रतिगृहीतृवाक्यं वरमन्तर्भाव्य स्वयमुदाजहारेति तृतीयखण्डवाक्यार्थः । एवमुक्त्वा कन्यां समभिमृश्य श्रीनिवासेन ग्राहयामासेत्यर्थः । निगमयति— **कन्यावरणमित्यादिना** । मधुपर्काङ्गतया पूर्वं पूजितमपि यतः **कन्यादानपरायणः** कुत्रचिन्मन्त्रतन्त्रपूजाद्यावहनिकादौ सङ्कोचमसहमानः अलभ्ययोगोऽयमित्यनुसन्धाता अतः पुनः कन्यादानाङ्गतया **वस्त्रगन्धानुलेपनैर्जगन्नाथं पूजयित्वा ब्राह्मणैः** कन्यावरणमुच्चार्य उक्तार्थं कन्यादानमकरोत् । दानाङ्गधारासेचनं तदङ्गिदानोदकप्रक्षेपणं च कृत्वा, **हे पुरुषोत्तम !** न केवलं **मया** कन्या दत्ता, अपि तु **कन्यादानं** दानसुकृतमपि **मया दत्तं** कृष्णार्पणबुद्ध्या अर्पितं तदपि पालयेत्युवाचेत्यखण्डार्थः पर्यवस्यति ।

यद्वा, एकस्य कन्यावरणमुच्चार्य इत्यस्यावृत्तिमभ्युपगम्य प्रथममेकवारं कन्यावरणमुच्चार्य '**अत्रिगोत्रसमुद्भूतां**' इत्यादि '**नृपोत्तम**' इत्यन्तमेकवारम् । पुनरपि कन्यावरणमुच्चार्य उक्तरीत्या एकवारं "**कन्यादानं मया दत्तं**" इत्यादिना एवं त्रिवारं कन्यादानमकरोदिति योजना । प्रथमयोजनायां दातृप्रतिगृहीतृवाक्यव्यवधानेन त्रिवरणं द्वितीययोजनायां व्यवधानेनेति भेदः ।

अयमभिप्रायः— वरुणस्य पूर्वं किरातपद्धीये वरपूर्वकं साकारं वृतत्वादाकारानुक्तिः । निरीक्षणस्यापि तथा । अत्रिगोत्रसमुद्भूतामित्येतत्र वरणवाक्यं वरपूर्वकत्वाभावाद्वृणोतेरप्रयोगाद्गृह्णातेः प्रयोगाच्च । प्रतिगृहीतृप्राङ्मुखत्वदिङ्नियमसूचनार्थं मध्ये रत्नाम्बरं दधन् इत्युक्तम् । यद्यपि दानफलस्य राजमात्रगामित्वात् त्वमङ्गीकुर्वित्युक्त्या प्रतिगृह्णामीति प्राप्तम्, तथापि अनादितो निरतिशयरमापरिग्रहवतः प्राप्तव्याभावादेतत्फलस्य ब्रह्मादिगामित्वसूचनाय गृहीष्याम इत्युक्तं वसिष्ठेन । "**कन्यादानं मया**" इत्यादि तु कृतस्य कर्मणः कृष्णार्पणाय इति । कारिकायाम्—

"अस्मै वृणीमह इति वरपक्ष वृणीत वै ।
वृणीध्वमिति दाता च सर्वत्र वरपूर्वकम् ।
प्रदानेऽप्येवमुभयोर्वरणं सम्प्रयुज्यते ॥
प्रत्यङ्मुखा वरयन्ति प्रतिगृह्णन्ति प्राङ्मुखाः ।
वृणीमहे वृणीध्वमिति ब्रूयात् त्रिः प्रयुज्यते ॥" इति पारिजाते ।

एवं सप्तपद्यार्थे सति एतत्कथाकथनश्रवणानुष्ठानध्याननटनाद्युपकारकतया अत्र अप्रचरद्वरणाद्याचाराः क्रमेण लिख्यन्ते । **भूषणैरित्यादि** । अथ दक्षिणोत्तरतः बृहस्पतिवसिष्ठशिष्यधृतान्तःपटपूर्वराशौ प्रत्यङ्मुखवरसमीपे वसिष्ठमुखाः चत्वारः प्रत्यङ्मुखाः ब्राह्मणाः वासिष्ठेन्द्रप्रम(दा)दभारद्वाज-(सु)त्र्यार्षेयप्रवरान्वित वसिष्ठगोत्राविर्भूताय ययातिवर्मणः प्रपौत्राय शूरसेनवर्मणः पौत्राय वसुदेववर्मणः पुत्राय वेङ्कटनाम्ने वराय । आत्रेयार्चनानसश्यावाश्वत्र्यार्षेयप्रवरान्वितात्रेयगोत्राविर्भूतां सुधर्मवर्मणः प्रपौत्रीं सुशर्मवर्मणः पौत्रीं आकाशराजवर्मणः पुत्रीं पद्मानाम्नीं कन्यां धर्मप्रजासम्पत्यर्थं वृणीमहे इति वरणे कृते, अथ अपरराशौ प्राङ्मुखपद्मासमीपे बृहस्पतिमुखाः चत्वारः प्राङ्मुखाः वरपूर्वकं वासिष्ठेन्द्रप्रमदेत्यादि धर्मप्रजासम्पत्यर्थमित्यन्तमनूद्य वृणीध्वमिति प्रतिवरणं चक्रुः । एवं त्रिवारं वरणे कृते वरणकाले तिरस्कारिण्याः पश्चिमराशौ प्राङ्मुखीं कन्यां इदानीं निरीक्षणे पूर्वराशौ प्रत्यङ्मुखीं प्रतिष्ठाय पूर्वं पूर्वराशौ प्रत्यङ्मुखं वरं इदानीं पश्चिमराशौ कन्यापूर्वं प्रदक्षिणं परिवृत्य प्राङ्मुखं कृत्वा प्रतिष्ठाय मङ्गळाष्टकवाचनपूर्तौ ज्योतिर्विदा "सुमुहूर्तोऽयं सुलग्नमिदं तदेव लग्नं सुदिनं ताराबलं विद्याबलं स्मरामि" इत्युक्त्वा सुमुहूर्ते दत्ते सद्यस्तिरस्करणीं उदग्दिशामुदगपसार्य कन्यावरौ परस्पराननयोः गुडजीरिकानवकिरतः परस्परं निरीक्षणं चक्रतुः । परस्परं शिरसोरक्षतारोपणं वा । कन्यादानानन्तरं निरीक्षणमिति केचित् ।

अथ श्रीनिवासः पद्मायाः भ्रुवोर्मध्यं दर्भाग्रेण परिमृज्य, दर्भं निरस्य, अप उपस्पृश्य उपविष्टे कन्याया सह ब्राह्मणाः पुरन्ध्र्यश्च तावाशीर्भिरभिनन्दुः । अथ आकाशो दक्षिणे सपत्नीकः स्वदत्तालङ्कारमात्रालङ्कृतया पद्मया सह उपविश्य ॐ पुण्याहं भवन्तो ब्रुवन्तु, ॐ शुद्धिं भवन्तो ब्रुवन्तु, ॐ ऋद्धिं भवन्तो ब्रुवन्तु, इति ब्राह्मणान् वाचयित्वा अथ ब्राह्मणैरपि ॐ पुण्याहं, ॐ शुद्धिः, ॐ ऋद्धिः भवतु इत्युक्ते "कल्याणाः सन्त्वापः सौमनस्यं भवतु, अक्षताः शुभाः सन्तु, दीर्घमायुरस्तु, शान्तिः पुष्टिस्तुष्टिश्चास्तु, तिथिकरणमुहूर्तनक्षत्रलग्नसम्पदस्तु" इत्युक्त्वा कुशहस्तः प्राणानायम्य देशकालौ सङ्कीर्त्य अमुकप्रवरामुकगोत्रात्मकशर्माऽहं मम समस्तपितॄणां निरतिशयानन्दब्रह्मलोकावाप्त्यादिकन्यादानकल्पोक्तफलावाप्तये, अनेन वरेण अस्यां कन्यायां जनिष्यमाणसन्तत्या द्वादशावरान् द्वादशपरान् पुरुषांश्च पवित्रीकर्तुं आत्मनश्च श्रीश्रीनिवासप्रीतये मिथःसमयरूपगान्धर्वविवाहाङ्गविधिना कन्यादानं करिष्ये इति कुशाक्षतजलेन सङ्कल्प्य वरं गन्धवस्त्रादिभिरभ्यर्च्य तत्पूजावशिष्टगन्धेन कन्याबाहू आलिप्य तयोर्हस्ते हिरण्यं निधाय सपत्नीको वधूवराभ्यां सहोत्थाय कन्यां सम्प्रगृह्य

"कन्यां कनकसम्पन्नां कनकाभरणैर्युताम् ।
दास्यामि विष्णवे तुभ्यं ब्रह्मलोकजिगीषया ॥

विश्वम्भरः सर्वभूता साक्षिणः सर्वदेवताः ।
इमां कन्यां प्रदास्यामि पितॄणां तारणाय च ॥''

इत्युक्त्वा दक्षिणस्थितपत्न्या सन्ततां क्रियमाणां पूर्वार्चितकलशपूरितशुद्धोदकधारां आसिषेच । एवं कन्यादानाङ्गाम्भोधारासेचनानन्तरं कन्या तारयतु, पुण्यं वर्धयतु, शान्तिः पुष्टिस्तुष्टिश्चास्तु, पुण्याहं भवन्तो ब्रुवन्तु, अमुकप्रवरेत्यादि मम समस्तेत्यादि मध्यकप्रीतये इत्यन्तमुक्त्वा आत्रेयार्चनानस-श्यावाश्वत्र्यार्षेयप्रवरान्वितात्रेयगोत्राविर्भूतां इत्यादि कन्यामित्यन्तमुक्त्वा वासिष्ठेन्द्रप्रमदभा(दाभ)र-द्वाज(सु)त्र्यार्षेयप्रवरान्वितवसिष्ठगोत्रोद्भवाय इत्यादि वेङ्कटनाम्ने वराय इत्यन्तमुक्त्वा श्रीधररूपाय वराय श्रीरूपिणीं प्रजापतिदैवत्यां निरतिशयानन्दब्रह्मलोकावास्यर्थं तुभ्यमहं सम्प्रददे इति सहिरण्यं वरहस्ते कन्याहस्तं निधाय श्रीतुळसीदळं साक्षतजलं दानोदकं पत्न्या स्वहस्ते धारारूपेण क्षिप्तं धारारूपेणा-क्षिपत् । प्रजापतिः प्रीयतामिति मनसा सस्मार । कन्यां प्रतिगृह्णातु भवान् इत्युवाच ।

अथ वरः ॐ स्वस्तीत्युक्त्वा कन्यां संस्पृश्य ''क इदं कस्मादादित्यादि वृष्टिरसि द्यौस्त्वा ददातु पृथिवी प्रतिगृह्णातु'' इत्यन्तमुक्त्वा प्रतिगृह्णामीत्युवाच । प्रजापतिमस्मरत् । इत्येवं ''कन्या तारयित्वा'' इत्यारभ्य ''प्रतिगृह्णामि'' इत्यन्तमुक्त्वा त्रिवारं दाने प्रतिग्रहे च सति दाता गौरीं

''पद्मां कन्यां इमां कृष्ण यथाशक्ति विभूषिताम् ।
गोत्राय वर्मणे तुभ्यं दत्तां कृष्ण समाश्रय ॥
पद्मे ममाग्रतो भूयाः पद्मे मे देवि पार्श्वयोः ।
पद्मे मे पृष्टतो भूयात् तद्दानान्मोक्षमाप्नुयाम् ॥
मम यज्ञस्थळोद्भूता पालिताऽऽकाशभाषया ।
तुभ्यं कृष्ण मया दत्ता पुत्रपौत्रप्रवर्धनी ॥
धर्मे चार्थे च कामे च नातिचरितव्या ।''

इत्युवाच राजा । श्रीनिवासो ''नातिचरामि'' इति ।

अथ पुरोधसो वधूवरावासने प्राङ्मुख उपवेश्य स्वर्णपात्रे पूर्वार्चितकलशोदकमासिच्य सपलाशया सहिरण्यपवित्रया सकुशदूर्वापल्लवया औदुम्बर्यार्द्रया शाखया अब्लिङ्गकैः मन्त्रैः वधूवरावभ्यसिञ्चताम् । अथानयोरक्षतारोपणं विधिवदास । अथ श्रीनिवासः स्वशेखरपुष्पमेकमादाय क्षीरघृतेनाप्लाव्य पद्माभाले तिलकं निदधौ । पद्माऽपि स्वशेखरस्थपुष्पदळमादाय क्षीरेणाप्लाव्य वेङ्कटललाटे तिलकमक्षिपत् । अथ पद्मा पतिकण्ठे मल्लिकाचम्पकमालां निदधौ । वेङ्कटस्वाम्यपि पद्माकण्ठे ।

### गूढकर्तृकव्याख्यानम्

अथ साक्षात् आकाशतः पुरोहितो गुरुः कन्याप्रवरं ऊचे— ''आत्रेयार्चनानसश्यावाश्यत्र्यार्षेय-प्रवरान्वित-आत्रेयगोत्रोद्भवाम्, सुधर्मशर्मणः प्रपौत्रीम्, सुशर्मणः पौत्रीम्, आकाशशर्मणः पुत्रीं पद्मा-नाम्नीं कन्यां धर्मप्रजासम्पत्त्यर्थं वृणीध्वम्'' इति । अथ श्रीनिवासतः पुरोहितो वसिष्ठः वरप्रवरमूचे— ''वासिष्ठेन्द्रप्रमदाभरद्वसुत्र्यार्षेयप्रवरान्वित-वासिष्ठगोत्रोद्भव-ययातिशर्मणः प्रपौत्राय, शूरसेनशर्मणः पौत्राय, वसुदेवशर्मणः पुत्राय, वेङ्कटनाम्ने वराय वृणीमहे'' इति ॥ एवं कन्यावरतः पुरोहितौ कन्यावरप्रवरं कन्यादातृप्रतिगृहीतृस्थानीयो त्रिः ऊचतुः ॥

एवं त्रिः वरणे कृते मङ्गलाष्टकवाचनपूर्तौ ज्योतिर्विदा ''सुमुहूर्तोऽयं सुलग्नमिदम् । तदेव लग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव । विद्याबलं दैवबलं तदेव लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि'' इत्युक्त्वा सुमुहूर्ते दत्ते सद्यः अन्तःपटे अपसारिते कन्यावरौ परस्परं आननयोः गुडजीरिकान् अवकिरतः परस्परं निरीक्षणं चक्रतुः ॥

### मूलम्

**इत्युक्त्वा प्राक्षिपद् राजा धरण्या स्रावितां तदा ।**
**मन्त्रपूतां स्वामितीर्थधारां सकनकां करे ॥ ३५७ ॥**

**दक्षिणे श्रीनिवासस्य ददौ पद्मावतीं ततः ।**
**विधानं च ततश्चक्रे राजेन्द्रः सपुरोहितः ।**
**मुनीनामञ्जलिपुटे राजा रत्नाक्षतान् ददौ ॥ ३५८ ॥**

**ते वेदमन्त्रैर्जगदीशमूर्धनि**
**मुक्ताक्षतान् वेदविदः प्रसुस्रुवुः ।**
**तदाऽभवत् तत्र महोत्सवो नृप**
**आकाशराजालयवासिनां च ॥ ३५९ ॥**

### कल्याणकाण्डदीपः

अथ विप्रा वेदमन्त्रैराशीराशास्य अक्षतान् प्रसस्रुरित्याह **मुनीनामिति** । अथ **राजा** सपुरोहितो **मुनीनामञ्जलिपुटे** नानारत्नाक्षतान् स्वसमप्रमाणमुक्तादिनवरत्नसम्मिश्रान् अभग्नाग्रान् घृतकुङ्कुम-

मङ्गळान् शालितण्डुलान् ददौ । मुक्ताक्षतान् तन्मिश्रान् प्रसुस्रुवुः प्रसारितवन्तः । तदेति । महोत्सवः । परमानन्दजनकव्यापारः । देवानां ऋषीणां गन्धर्वाप्सरसां आकाशराजालयवासिनां च पुरोहितादीनामभवत् । देवाः दिव्यपुष्पाणि वियद्गङ्गाजलकणैः सह मेघो कृत्वा वायुवशेन नारायणपुरोपरि दुन्दुभिं नादयन्तो ववृषुः । ऋषयः साधु साध्विति साधुवादान् ददुः । ननृतुश्चाप्सरस्सङ्घाः । गन्धर्वाश्च जगुः । कलौ वाचस्पतिवसिष्ठाद्या अतिचित्रविचित्रश्रीभूसमेतश्रीनिवाससौन्दर्यशोभातिशयदर्शन-सम्मुग्धचित्ततया अदेहाभिमाना व्यत्यस्तवाग्व्यापारा आसन् इति । मन्त्राणि तन्त्राणि च यद्वा तद्वा बभूवुरिति भावः ।

### मूलम्

**पूजयित्वा जगन्नाथं गन्धवस्त्रानुलेपनैः ।**
**कङ्कणं बन्धयामास वासुदेवकराम्बुजे ।**
**[1]बृहस्पतिः कराब्जेन पद्मावत्याः कराम्बुजे ॥ ३६० ॥**

१. पद्मावत्या कराम्भोजेऽबन्धयत् कङ्कणं गुरुः ।

### कल्याणकाण्डदीपः

बृहस्पतिः वासुदेवकराम्बुजे पद्माहस्तेन कङ्कणं कौतुकसूत्रं बन्धयामास । "विश्वेत्ता ते सवने" इति मन्त्रमुच्चरन् दक्षिणे बन्धनं कारयामास । पद्मावत्याः कराम्बुजे । कराब्जेन वेङ्कटपतिकराब्जेन बृहत्सामेत्युच्चरन् वामे बन्धयामासेत्यर्थः । ततः पुरोधाः विवाहव्रतरक्षणाय गणपतिं स्मरन् आविवाह-व्रतस्था ये पञ्चपञ्चाखण्डितपूगीफलानां तयोरुत्तरीयां तयोर्बन्धनं चकार । अथ तावपि बबन्ध । ततो वधूवरौ रमां पार्वतीं शचीं च प्रार्थयेताम् । अथ तिथ्यादि सङ्कीर्त्य चतुर्दिनविवाहव्रतं करिष्ये इति सङ्कल्प्य रोहिणीसोमपरूपौ भूत्वा दाक्षायणीमपूजयेताम् ।

### मूलम्

**[1]स्वीयं तु मिलितं राजा माङ्गल्यं सूत्रमुत्तमम् ।**
**श्रीनिवासेन देवेन कृतवान् स पुरोहितः ।**
**बबन्ध सूत्रं गोविन्दः कण्ठे मन्त्रनिमन्त्रितम् ॥ ३६१ ॥**

१. तथा माङ्गल्यसूत्रस्य बन्धं वैवाहिकं तदा ।

सुवासिन्य ऊचुः—

सावित्री भव कल्याणी बहुपुत्रवती भव ।
सर्वलोकस्य जननी भव मङ्गलदायिनी ॥ ३६२ ॥

इत्थं सुमङ्गलीस्त्रीषु गायन्तीषु शुभाशिषः ।
ब्राह्मणानां करस्पर्शाद् राज्ञश्चापि महात्मनः ॥ ३६३ ॥

बबन्ध पूतं माङ्गल्यसूत्रं मन्त्राभिमन्त्रितम् ।
कण्ठे पद्मावतीदेव्याः श्रीनिवासो जगत्पतिः ॥ ३६४ ॥

माङ्गल्यतन्तुनाऽनेन जगज्जीवनहेतुना ।
कण्ठे बध्नामि सुभगे चिरञ्जीव मया सह ।
मन्त्रेणानेन गोविन्दः कण्ठे तस्या बबन्ध च ॥ ३६५ ॥

**कल्याणकाण्डदीपः**

**सपुरोहितो राजा देवेन श्रीनिवासेन** कारितेन माङ्गल्यतन्तुना स्वीयं माङ्गल्यसूत्रं कृष्ण-मणिमालं करस्पृष्टं **ब्राह्मणानां** अरुन्धतीवसिष्ठादिब्राह्मणीब्राह्मणानां **तस्य च राज्ञः करस्पृष्टं** मन्त्रनिमन्त्रितं "माङ्गल्यं तन्तुना" इत्यादि मन्त्रमुच्चरन् "सावित्री भव" इत्यादि "मङ्गळदायिनी" इत्यन्तमाशास्य **सूत्रं** कृष्णमणिमालां सरत्नमुक्ताप्रवालां स्वर्णमयीं **कण्ठे** पद्मावतीकण्ठे **गोविन्दः बबन्ध** । अथ श्रीनिवासो देवदुर्लभैश्चतुर्विधाभरणैः स्वीयैः पद्मां भूषयामास । अथ सा पद्मा अष्टमङ्गळद्रव्यपूर्णानि उपायनानि त्रिदेवताप्रीत्यर्थं सुवासिनीभ्यो ददौ ।

अत्रेदं बोध्यम्— पद्मायाः सहजमाङ्गल्यसूत्रं पूर्वमेवैकमासीत् । अन्यत् कात्यायनीपूजाङ्गं धरण्या बद्धं द्वितीयं च । अन्यानि च सावित्र्यारुन्धत्यादिदत्तानीति नातो मङ्गलसूत्रबन्धनं विना कथं कन्यादानम् ? इति शङ्का । युक्तं च पूर्वमेव सोमादिविवाहात् । इति ।

**गूढकर्तृकव्याख्यानम्**

अथ श्रीनिवासः पद्मया सह रत्नासने उपविष्टः । विप्राः पुरन्ध्यश्च श्रीनिवासपद्मे आशीर्भिः अभि-नन्दुः । आकाशः दक्षिणे भार्या धरण्या सह स्वदत्तालङ्कार-अलङ्कृतपद्मया सह उपविश्य "ॐ पुण्याहं

भवन्तो ब्रुवन्तु । ॐ शुद्धिं भवन्तो ब्रुवन्तु । ॐ ऋद्धिं भवन्तो ब्रुवन्तु" विप्रान् वाचयित्वा । विप्रैः "ॐ पुण्याहम् । ॐ शुद्धिः । ॐ ऋद्धिः भवतु" इत्युक्ते "कल्याणाः सन्त्वापः । सौमनसं भवतु । अक्षताः शुभाः सन्तु । दीर्घमायुरस्तु । शान्तिः पुष्टिः तुष्टिश्चास्तु । तिथिवारनक्षत्रयोगकरणमुहूर्त-लग्नसम्पदस्तु" इत्युक्त्वा कुशहस्तः । प्राणानायम्य, देशकालौ सङ्कीर्त्य, "आत्रेयार्चनानसश्यावाश्व-त्र्यार्षेयप्रवरान्वित-आत्रेयगोत्र-आकाशशर्माऽहं मम समस्तपितॄणां निरतिशयानन्दब्रह्मलोकावास्त्यादि-कन्यादानकल्पोक्तफलावाप्तये अनेन वरेण अस्यां कन्यायां जनिष्यमाणसन्तत्या द्वादशावरान् द्वादश-परान् पुरुषांश्च पवित्रीकर्तुं आत्मनश्च श्रीश्रीनिवासप्रीतये मिथः समयरूपगान्धर्वविवाहाङ्गविधिना कन्यादानं करिष्ये" इति कुशमन्त्राक्षतजलेन सङ्कल्प्य वरं गन्धवस्त्रादिभिः अभ्यर्च्य (तत्पूजावशिष्ट-गन्धेन पद्माबाहू आलिप्य तयोः हस्ते हिरण्यं निधाय) सपत्नीकः वधूवराभ्यां सह उत्थाय कन्यां सम्प्रगृह्य "कन्यां कनकसम्पन्नां कनकाभरणैर्युताम् । दास्यामि विष्णवे तुभ्यं ब्रह्मलोकजिगीषया । विश्वम्भरः सर्वभूताः साक्षिणः सर्वदेवताः । इमां कन्यां प्रदास्यामि पितॄणां तारणाय च" इत्युक्त्वा दक्षिणस्थितपत्न्या सन्ततं क्रियमाणां पूर्वार्चितकलशपूरितशुद्धोदकधारामासिषेच । ततः "आत्रेया-र्चनानसश्यावाश्यत्र्यार्षेयप्रवरान्वित-आत्रेयगोत्राविर्भूतां पद्मानाम्नीं कन्यां वासिष्ठेन्द्रप्रमदाभरद्वसु-त्र्यार्षेयप्रवरान्वित-वसिष्ठगोत्रोद्भवाय वेङ्कटनाम्ने वराय श्रीधररूपाय श्रीरूपिणीं प्रजापतिदैवत्यां निरति-शयानन्दब्रह्मलोकावास्यर्थं तुभ्यमहं सम्प्रददे" इति सहिरण्यवरहस्ते कन्याहस्तं निधाय सश्रीतुलसीदलं साक्षतजलं दानोदकं कन्यास्वहस्ते धारारूपेण क्षिप्तं धारारूपेण अक्षिपत् । "कन्यां प्रतिगृह्णातु भवान्" इत्याह । वरः "ॐ स्वस्ति" इत्युक्त्वा कन्यां स्पृष्ट्वा "क इदं कस्मात् आदित्यादि वृष्टिरसि द्यौस्त्वा ददातु पृथिवी प्रतिगृह्णात्" इत्युक्त्वा प्रतिगृह्णामीत्याह ॥ आकाशः "गौरीं कन्यां इमां कृष्ण यथाशक्ति विभूषिता । गोत्राय वर्मणे तुभ्यं दत्तां कृष्ण समाश्रय । पद्मे ममाग्रतो भूयाः त्वद्दानात् मोक्षमाप्नुयाम् । मम यस्य छलोद्भूता पालिताकाशभाषया । तुभ्यं कृष्ण मया दत्ता पुत्रपौत्रप्रवर्धिनी ॥ धर्मे च अर्थे च कामे च नातिचरितव्या" इति ॥ श्रीनिवासः "नातिचरामि" इति ॥

अथ श्रीनिवासः स्वशेखरपुष्पमेकं आदाय क्षीरघृतेन आप्लाव्य पद्माफाले तिलकं निदधौ ॥ पद्माऽपि स्वशेखरस्थपुष्पदलमादाय क्षीरेणाप्लाव्य वेङ्कटललाटे तिलकं अक्षिपत् । अथ पद्मा पतिकण्ठे मल्लिकाचम्पकामालां निदधौ । वेङ्कटस्वाम्यपि पद्माकण्ठे ।

अथ विप्राः वेदमन्त्रैः आशीः आशास्य अक्षतान् प्रसस्रुः । राजा सपुरोहितः मुनीनां अञ्जलिपुटे मुक्तादि-नवरत्नसम्मिश्र-अभग्नाग्र-घृतकुङ्कुममङ्गलशालितण्डुलान् ददुः । तान् प्रसारितवन्तः । तदा सकल-देव-ऋषि-गन्धर्व-अप्सरः प्रमुखानां आकाशराजगृहवासिनां पुरोहितादीनां परमानन्दजनक-

महोत्सवोऽभूत् ॥ तदा देवाः वियद्गङ्गाजलकणैः सह दिव्यपुष्पाणि कृत्वा वायुवशेन नारायणपुरोपरि दुन्दुभिं नादयन्तो ववृषुः ॥ ऋषयः साधु साध्विति साधुवादान् ऊदुः ॥ अप्सरसः ननृतुः । गन्धर्वाश्च जगुः । गुरुवसिष्ठाद्याः अतिचित्रविचित्र-श्रीपद्मासमेत-श्रीनिवाससौन्दर्यशोभातिशयदर्शन-सम्मुग्ध-चित्ताः अदेहाभिमानाः व्यत्यस्तवाग्व्यापाराः आसन् । मन्त्रास्तन्त्राणि यद्वा तद्वा बभूवुः । ततः कन्या-पुरोहितः गुरुः "विश्वेत्ताते सवने इति" मन्त्रं उच्चरन् पद्माहस्तेन श्रीनिवासदक्षिणकरे कङ्कणकौतुकसूत्रं बन्धयामास । ततः श्रीनिवासकरेण पद्मा वामे हस्ते "बृहत्साम" इत्युच्चरन् कङ्कणं बन्धयामास ॥ ततः सपुरोहितराजनिर्देशेन श्रीनिवासः मुक्ताप्रवालकृष्णमणियोजित-स्वर्णमय-माङ्गल्यसूत्रं ब्राह्मणैः मन्त्रपूतं ब्राह्मणानां वसिष्ठादीनां अरुन्धतीप्रभृतिसुवासिनीनां राज्ञः आकाशस्य च करस्पर्शपूर्वकं सुवासिनीषु "त्वं सावित्री भव । बहुपुत्रवती भव । सर्वलोकस्य जननी त्वं लोकमङ्गलदायिनी भव" इति शुभाशिषः गायन्तीषु सतीषु "माङ्गल्यतन्तुनाऽनेन जगज्जीवनहेतुना । कण्ठे बध्नामि सुभगे चिरं जीव मया सह" इत्येतदादि मन्त्रं उच्चरन् पद्माकण्ठे बबन्ध ॥

**मूलम्**

**वैवाहिकं समाप्याथ जग्मतुर्होममण्टपम् ।**
**वसिष्ठः कारयामास पद्मायाः त्र्यञ्जलार्पितम् ॥ ३६६ ॥**

**मुनिभिर्वेदविद्वद्भिर्लाजाहोमं पुरोहितः ।**
**यजुःशाखोक्तमार्गेण जुहावाग्नौ [1]महामतिः ॥ ३६७ ॥**

**सर्वं वैवाहिकविधिं वसिष्ठोऽथ समापयत् ॥ ३६८ ॥**

१. यथाविधि ।

**कल्याणकाण्डदीपः**

सार्धपद्यमेकं वाक्यम् । **वैवाहिकं** प्रायो दात्रधिकारिकं विवाहमण्डपे भवं वधूकुलाचार्यप्रधानकं कर्मजातं **समाप्य** वधूवरौ पूर्वोक्तलक्षणलक्षितं होममण्टपं उत्तरतः स्थितं **जग्मतुः** । अथ **वसिष्ठः** अतिशयेन तपोविद्यादिवसुमान् **वसिष्ठः** कुलाचार्यः । **यजुःशाखोक्तमार्गेण अग्नौ** पूर्वं सायमौपासनं हुत्वा आत्मसमारोपितप्रत्यवरूढपूर्वविवाहगृह्याग्नौ जातवेदसमिध्मेन प्रजापतिं प्रजापतिमाघारावाज्येन । त्रिरग्निं पवमानं प्रजापतिमाज्येन स्वयं जुहाव । अथ पाणिग्रहणादि गृह्योक्ततन्त्रेण महामुनिरपि वसिष्ठो

**वेदविद्भिः** विश्वामित्रबृहस्पत्यादिभिः मुनिभिः अनुमोदितः । **पद्मायाः त्र्यञ्जलार्पितं** त्रयाणां अञ्जलीनां समाहारस्त्र्यञ्जलं, तस्मिन्नर्पितम् । त्रिवारं पद्माञ्जलौ भ्रात्रा वसुदानेन निरुप्तं लाजाख्यं हविर्यथा स्यात् तथा कृत्वा **लाजाहोमं** तन्नामकं कर्म भार्यात्वाय श्रीनिवासेन कारयामास इत्यर्थः । द्वित्रिभ्यामञ्जलेरिति टच् । अभेदात् समुदायेन समुदायिषु पर्यवसानम् । नित्यसापेक्षत्वात् समासः ।

### गूढकर्तृकव्याख्यानम्

एवं विवाहमण्टपे कर्तव्य-वधूकुलाचार्यप्रधानकं कर्म समाप्य पाणिग्रहणं गृह्योक्ततन्त्रेण वसिष्ठः वेदविद्भिः विश्वामित्रबृहस्पत्यादिभिः अनुमोदितः त्रिः पद्मावत्यञ्जल्यार्पितलाजैः भार्यात्वाय श्रीनिवासेन लाजहोमाख्यं कर्म कारयामास । होममण्टपे वसिष्ठः आदौ आत्मसमारोपित-पूर्वविवाह-गृह्याग्नौ यजुःशाखामन्त्रोक्तमार्गेण त्रिः अग्निं पवमानं प्रजापतिं आज्येन स्वयं जुहाव । एवं वैवाहिकसर्वविधिं वसिष्ठः समापयत् ।

### मूलम्

**ततः पुरोहितो राज्ञः स्वस्तिवाचनपूर्वकम् ।**
**मुनीनामञ्जलिपुटे नवरत्नाक्षतान् ददौ ॥ ३६९ ॥**

**ते वेदमन्त्रैर्जगदीशमूर्ध्नि**
**रत्नाक्षतान् वेदविदः प्रचिक्षिपुः ।**
**तदा नृणां तत्र महोत्सवोऽभूत्**
**आकाशराजस्य पुरीनिवासिनाम् ॥ ३७० ॥**

**तस्मिन् काले महाराजः दक्षिणां ब्रह्मवादिनाम् ।**
**दापयामास संहृष्टो विप्रैस्ताम्बूलपूर्वकम् ।**
**गवां कोटिसहस्राणि चाश्वानामयुतं तथा ॥ ३७१ ॥**

**वस्त्राणां निचयं राजन् विप्रेभ्यो दत्तवान् [1]पृथक् ।**
**एवं महोत्सवस्तत्र समभूद्दशमीदिने ॥ ३७२ ॥**

१. विभुः ।

**कल्याणकाण्डदीपः**

**गवां कोटिसहस्राणीति** । व्याख्यातमेतत् । **वस्त्राणामिति** । **निचयं** कृत्वा राशिं विधाय यद्यद्विप्राणामिष्टं तत्र तेभ्यः पृथक् पृथक् दत्तवान् । अथ सप्तपदीमाक्रम्य उत्तरीयान्तग्रन्थिं विसृज्य वध्वा सह अरुन्धतीं सप्तर्षीन् ददर्श श्रीनिवासः । **एवं महोत्सव इति** । **अथ** सप्तर्षिदर्शनानन्तरम् । पुनर्वेद्यामुपविष्टः श्रीनिवासः । अथ कल्याणार्हणं पूर्वं लक्ष्मीं स्वयमुत्थाय स्वर्णकुम्भाम्भोभिः काञ्चन पतद्ग्राहप्रतिष्ठितध्वजवज्राङ्कुशाचिह्नवत् पादौ मन्त्रवदभिषिच्य वस्त्रेण परिमृज्य कुम्कुमरागेणानुरज्य अञ्जल्योरर्घ्यं समर्प्य आचमनीयेनाचम्य मुखे नेत्रे चाञ्जिते, अनर्घ्यवस्त्राभरणानि अध्यावाहनिकानि दत्वा, सुगन्धिहरिचन्दनेन बाह्वाद्यालिप्य, अक्षतान् फाले क्षिप्त्वा गन्धतैलेन हृदयं नागवल्लीदलेन स्निग्धीकृत्य पिष्टातकमुष्टीर्विकीर्य कण्ठे पुष्पमालां निधाय शिरसि पुष्पाक्षतवृष्टिं विधाय पूर्णफल-ताम्बूलानि पात्रे पुरतो निधाय नत्वा वामतस्तस्थौ । अथ पद्माऽप्युत्थाय लक्ष्मीवदर्हणं कृत्वा दक्षिणतः तस्थौ ।

अथ ब्रह्माद्याः श्रीनिवासाय पारितोषकानि रथवस्त्राभरणानि स्वस्वोचितं प्रददुः । तद्द्रव्यं तदा पर्वतायितम् । अथ पतिपुत्रवतीभिः अरुन्धत्यादिसुवासिनीभिर्नीराजितविग्रहो गन्धाक्षतपूर्वकमर्चितेभ्यो दत्तदक्षिणाफलताम्बूलादिभ्यो ब्राह्मणेभ्यः स्वीकृतमन्त्राशीरक्षतः वधूभ्यां सह स्वभासा सभां सभा-सयन्नभ्यनन्दन्नास ।

**गूढकर्तृकव्याख्यानम्**

ततः राजपुरोहितः स्वस्तिवाचनपूर्वकं मुनीनां अञ्जलिपुटेषु नवरत्नाक्षतान् ददौ । ते मुनयः वेदवेदाङ्गादितत्त्वज्ञाः वेदोक्तमन्त्रैः आशिषोऽभिनन्दन्तः साक्षात् जगदीशश्रीनिवासशिरसि रत्नाक्षतान् प्रचिक्षिपुः । एवं तस्मिन् दशमीदिने आकाशराजपुरीनिवासिजनानां सर्वेषां परमसम्भ्रममहोत्सवः जातः । तदा आकाशः ब्राह्मणेभ्यः विप्रैः ताम्बूलदक्षिणाः दापयामास । किञ्च विप्रेभ्यः अनर्घ्यवस्त्राणि सानन्दं ददौ ॥ वस्त्रराशिं निधाय यद्यद्विप्राणां इष्टं तत्तत्तेभ्यः पृथक् पृथक् दत्तवान् ॥ ततः श्रीनिवासः उत्तरीयान्तग्रन्थिं विसृज्य वध्वा सह अरुन्धतीं सप्तर्षीन् ददर्श ॥

अथ लक्ष्मीः स्वयं उत्थाय स्वर्णकुम्भोदकैः काञ्चनपतद्ग्राहप्रतिष्ठितध्वजवज्राङ्कुशपद्मचिह्नवत् श्रीनिवासपादौ अभिषिच्य वस्त्रेण परिमृज्य कुङ्कुमरागेण अनुरज्य अञ्जल्योः अर्घ्यं समर्प्य आचमनीयेन आचम्य अनर्घ्यवस्त्राभरणानि अध्यावाहनकानि दत्त्वा सुगन्धेन बाहू आलिप्य अक्षतान् फाले क्षिप्त्वा गन्धतैलेन हृदयं नागवल्लीदलेन स्निग्धीकृत्य पिष्टातकमुष्टीः विकीर्य कण्ठे पुष्पमालां निधाय शिरसि

पुष्पाक्षतावृष्टिं विधाय पूर्णफलताम्बूलानि पात्रे पुरतो निधाय नत्वा पुरतः तस्थौ । अथ पद्माऽपि उत्थाय लक्ष्मीवत् अर्हणं कृत्वा दक्षिणतः तस्थौ । अथ विधिमुखाः श्रीनिवासस्य पारितोषकानि रथवस्त्राभरणानि स्वस्वोचितं प्रददुः । तद्द्रव्यं तदा पर्वतायितम् । अथ पतिपुत्रवती अरुन्धतीप्रभृतिसुवासिन्यः श्रीनिवासं नीराजयामासुः ॥

**मूलम्**

**वधूवरौ प्रतिष्ठाप्य [1]भोजनार्थं नरेश्वरः ।**
**अन्नं बहुविधं सूपरसभक्ष्यसमन्वितम् ॥ ३७३ ॥**

**पुरोहितेन सहितो पुत्रपौत्रादिभिर्वृतः ।**
**भोजनं कृतवान् कृष्णः पद्मावत्या समन्वितः ॥ ३७४ ॥**

**आकाशराजो [2]राजेन्द्र भुक्तवान् कृष्णसन्निधौ ।**
**लक्ष्मीसमेता धरणी तथा बकुलमालया ॥ ३७५ ॥**

१. भोजयामास वै ततः । २. धर्मात्मा ।

**कल्याणकाण्डदीपः**

**वधूवराविति** । अथ रात्रौ पञ्चदशघटिकातः पूर्वं विवाहमण्टपे भोजनार्थं **वधूवरौ** पद्माश्रीनिवासौ एकासने प्रतिष्ठाप्य सूपापूपरसान्वितं **बहुविधमन्नं** षड्विधान्नं पत्नीहस्तेन पूर्वदत्तभोजनपात्रे परिवेषयामास । अथ श्रीनिवासः स्वपुरतः उपविष्टेन वसिष्ठेन सह राज्ञा चन्द्रेण कारितं चन्द्राभिमतं चन्द्रान्तर्गतकेशवाधिष्ठितं तदधिष्ठितब्रह्मांशेन बृहच्छरीरनृसिंहाग्नौ घृतवत् संस्कृतममृतान्नमक्षारलवणं **हरिः भोजनं कृतवान्** । **आकाशराजाऽपि** कृष्णसन्निधौ पुरतो वसिष्ठसमीपोपविष्टगुरुणा सह भुक्तवान् । कृष्णस्य दक्षिणतः लक्ष्मीसमेता सा **धरणी बकुळमालया सह** भुक्तवती । तत्पङ्क्तौ वध्वष्टकन्याः वामे सरस्वतीपार्वत्याद्या अष्टकन्याः पुरतो यथोचितं वधूवरपक्षीयाः पुमांसः तोण्डिमेन्द्राद्याः ।

अथ श्रीनिवासः उत्सवं द्रष्टुं पुनर्मिळितसभामध्ये पुनर्वेदिकायामुपविश्य सुवासिनीभिर्नीराजितविग्रहो दत्तताम्बूलदक्षिणेभ्यो ब्राह्मणेभ्यो आशिषो गृहीत्वा पद्मावत्या सहाभिनन्दन्नास्ते । श्रीनिवासाय मङ्गळम् । देवाः प्रसन्नाः ऋषयः साधुवादाः गन्धर्वाश्च जगुः कलम् । ननृतुरप्सरसः । गीतवाद्यं मृदु नेदुः । ब्राह्मणा आनन्दनिर्भराः ॥

सर्वे जना लक्ष्मीपद्माश्लिष्टश्रीनिवासजगन्मोहनसौन्दर्यलीलासन्दर्शनसञ्जातानन्दरसाब्ध्युद्वेदोलोल्लोलकल्लोलविकासान्दोलिताः विगळितवेद्यान्तरहृदयाम्भोजसन्निविष्टा कौतुकवेद्यधिष्ठितलक्ष्मीपद्मासमाश्लिष्टश्रीनिवासास्तिष्ठन्तीति सर्वं मङ्गळम् ॥

श्रीमदस्मद्गुर्वन्तर्गतश्रीमन्मन्त्रालयविलासीगुरुराजेशश्रीभारतीशमुख्यप्राणात्मकद्रौपदीरमणभीमसेनान्तर्गत कल्याणश्रीनिवासात्मक रुक्मिणी-सत्यासमेत श्रीकृष्णार्पणस्तु ॥

अत्रेदं बोध्यम्— ननु गन्धर्वस्यावां दम्पती भवाव इति परस्परसमययुद्धहरणान्यतररूपत्वात्रोदकपूर्वकत्वम् । केवलं परिश्रयमात्रेण स्वत्वसिद्धेः । अस्याप्यन्तरङ्गाभिप्रायेण गन्धर्वत्वमेव । स्वयंवरस्यान्योन्यसमयरूपत्वात् । अत एव दशलक्षणं वाराहे गान्धर्व एव उक्तः । अत्राप्युदकपूर्वकत्वस्य अनुक्तेः । कथं ब्राह्मवद्धारासेचनादि ऋषिदर्शनान्ताचारक्रमलेखनमिदम् ? इति चेत्, मैवम् । गान्धर्वादीनामुदकपूर्वकत्वमस्त्येव । तदुक्तं ब्राह्मे—

"युक्तं तु पाणिग्रहणं सर्ववर्णेषु सर्वशः ।
जलपूर्वं तु विप्राणामन्येषामपि काम्यया ॥" इति पारिजाते ।

अनेन ब्राह्मोऽपि विवाहः क्षत्रियादीनामुक्तो भवति । गान्धर्वादि चतुर्षु उदकपूर्वं दानं विना स्वत्वे जातेऽपि अग्निसाक्षिकं पुनर्वैवाहिको विधिः कार्य इत्युक्तम् ।

"गान्धर्वादिविवाहेषु पुनर्वैवाहिको विधिः ।
कर्तव्यश्च त्रिभिर्वर्णैः समर्थेनाग्निसाक्षिकम् ॥" इति ।

(बृहद्योगी याज्ञवल्क्यस्मृतिः ८.१७५)

किञ्च अत्रैव ब्राह्मविवाहप्रयोगं सम्पूर्णमुक्त्वा गान्धर्वादिविवाहेषु एवं कुर्याताम् इत्युक्तम् । रामायणेऽपि—

"इत्युक्त्वा प्राक्षिपद्राजा मन्त्रपूतं जलं तथा ।
एवं दत्वा तथा सीतां मन्त्रोदकपुरस्कृताम् ॥"

इति स्वयंवरस्योदकपूर्वकत्वमुक्तं इत्येवम् ।

ननु धर्मसारे कांस्यपात्रस्थकन्याञ्जलेरुपरि वराञ्जलिं निधाय इत्याद्युक्तिरस्ति । अतः कथं सहिरण्यवरहस्ते कन्याहस्तं निधाय ? इति चेत्, न । तस्य दक्षिणस्थितपत्न्या क्रियमाणसन्ततशुद्धोदकदानाङ्गधारासेचनविषयत्वात् । अस्य च अङ्गीभूतदानात्मकसाक्षताविच्छिन्नोदकधाराप्रक्षेपविषयत्वेन अविरोधात् ।

पुष्पाक्षतावृष्टिं विधाय पूर्णफलताम्बूलानि पात्रे पुरतो निधाय नत्वा पुरतः तस्थौ । अथ पद्माऽपि उत्थाय लक्ष्मीवत् अर्हणं कृत्वा दक्षिणतः तस्थौ । अथ विधिमुखाः श्रीनिवासस्य पारितोषकानि रथवस्त्रा-भरणानि स्वस्वोचितं प्रददुः । तद्द्रव्यं तदा पर्वतायितम् । अथ पतिपुत्रवती अरुन्धतीप्रभृतिसुवासिन्यः श्रीनिवासं नीराजयामासुः ॥

मूलम्

**वधूवरौ प्रतिष्ठाप्य [१]भोजनार्थं नरेश्वरः ।**
**अन्नं बहुविधं सूपरसभक्ष्यसमन्वितम् ॥ ३७३ ॥**

**पुरोहितेन सहितो पुत्रपौत्रादिभिर्वृतः ।**
**भोजनं कृतवान् कृष्णः पद्मावत्या समन्वितः ॥ ३७४ ॥**

**आकाशराजो [२]राजेन्द्र भुक्तवान् कृष्णसन्निधौ ।**
**लक्ष्मीसमेता धरणी तथा बकुलमालया ॥ ३७५ ॥**

१. भोजयामास वै ततः । २. धर्मात्मा ।

कल्याणकाण्डदीपः

**वधूवराविति** । अथ रात्रौ पञ्चदशघटिकातः पूर्वं विवाहमण्टपे भोजनार्थं **वधूवरौ** पद्माश्रीनिवासौ एकासने प्रतिष्ठाप्य सूपापूपरसान्वितं **बहुविधमन्नं** षड्विधान्नं पत्नीहस्तेन पूर्वदत्तभोजनपात्रे परिवेष-यामास । अथ श्रीनिवासः स्वपुरतः उपविष्टेन वसिष्ठेन सह राज्ञा चन्द्रेण कारितं चन्द्राभिमतं चन्द्रान्त-र्गतकेशवाधिष्ठितं तदधिष्ठितब्रह्मांशेन बृहच्छरीरनृसिंहाग्नौ घृतवत् संस्कृतममृतान्नमक्षारलवणं **हरिः भोजनं कृतवान्** । **आकाशराजाऽपि** कृष्णसन्निधौ पुरतो वसिष्ठसमीपोपविष्टगुरुणा सह भुक्तवान् । कृष्णस्य दक्षिणतः लक्ष्मीसमेता सा **धरणी बकुळमालया सह** भुक्तवती । तत्पङ्क्तौ वध्वष्टकन्याः वामे सरस्वतीपार्वत्याद्या अष्टकन्याः पुरतो यथोचितं वधूवरपक्षीयाः पुमांसः तोण्डिमेन्द्राद्याः ।

अथ श्रीनिवासः उत्सवं द्रष्टुं पुनर्मिळितसभामध्ये पुनर्वेदिकायामुपविश्य सुवासिनीभिर्नीराजित-विग्रहो दत्तताम्बूलदक्षिणेभ्यो ब्राह्मणेभ्यो आशिषो गृहीत्वा पद्मावत्या सहाभिनन्दन्नास्ते । श्रीनिवासाय मङ्गळम् । देवाः प्रसन्नाः ऋषयः साधुवादाः गन्धर्वाश्च जगुः कलम् । ननृतुरप्सरसः । गीतवाद्यं मृदु नेदुः । ब्राह्मणा आनन्दनिर्भराः ॥

सर्वे जना लक्ष्मीपद्माश्लिष्टश्रीनिवासजगन्मोहनसौन्दर्यलीलासन्दर्शनसञ्जातानन्दरसाब्ध्युद्रेदोलोल्लोलकल्लोलविकासान्दोलिताः विगळितवेद्यान्तरहृदयाम्भोजसन्निविष्टा कौतुकवेद्यधिष्ठितलक्ष्मीपद्मासमाश्लिष्टश्रीनिवासास्तिष्ठन्तीति सर्वं मङ्गळम् ॥

श्रीमदस्मद्गुर्वन्तर्गतश्रीमन्मन्त्रालयविलासीगुरुराजेशश्रीभारतीशमुख्यप्राणात्मकद्रौपदीरमणभीमसेनान्तर्गत कल्याणश्रीनिवासात्मक रुक्मिणी-सत्यासमेत श्रीकृष्णार्पणरस्तु ॥

अत्रेदं बोध्यम्— ननु गन्धर्वस्यावां दम्पती भवाव इति परस्परसमययुद्धहरणान्यतररूपत्वान्नोदकपूर्वकत्वम् । केवलं परिश्रयमात्रेण स्वत्वसिद्धेः । अस्याप्यन्तरङ्गाभिप्रायेण गन्धर्वत्वमेव । स्वयंवरस्यान्योन्यसमयरूपत्वात् । अत एव दशलक्षणं वाराहे गान्धर्व एव उक्तः । अत्राप्युदकपूर्वकत्वस्य अनुक्तेः । कथं ब्राह्मवद्धारासेचनादि ऋषिदर्शनान्ताचारक्रमलेखनमिदम् ? इति चेत्, मैवम् । गान्धर्वादीनामुदकपूर्वकत्वमस्त्येव । तदुक्तं ब्राह्मे—

> "युक्तं तु पाणिग्रहणं सर्ववर्णेषु सर्वशः ।
> जलपूर्वं तु विप्राणामन्येषामपि काम्यया ॥" इति पारिजाते ।

अनेन ब्राह्मोऽपि विवाहः क्षत्रियादीनामुक्तो भवति । गान्धर्वादि चतुर्षु उदकपूर्वं दानं विना स्वत्वे जातेऽपि अग्निसाक्षिकं पुनर्वैवाहिको विधिः कार्य इत्युक्तम् ।

> "गान्धर्वादिविवाहेषु पुनर्वैवाहिको विधिः ।
> कर्तव्यश्च त्रिभिर्वर्णैः समर्थेनाग्निसाक्षिकम् ॥" इति ।

(बृहद्योगी याज्ञवल्क्यस्मृतिः ८.१७५)

किञ्च अत्रैव ब्राह्मविवाहप्रयोगं सम्पूर्णमुक्त्वा गान्धर्वादिविवाहेषु एवं कुर्याताम् इत्युक्तम् । रामायणेऽपि—

> "इत्युक्त्वा प्राक्षिपद्राजा मन्त्रपूतं जलं तथा ।
> एवं दत्वा तथा सीतां मन्त्रोदकपुरस्कृताम् ॥"

इति स्वयंवरस्योदकपूर्वकत्वमुक्तं इत्येवम् ।

ननु धर्मसारे कांस्यपात्रस्थकन्याञ्जलेरुपरि वराञ्जलिं निधाय इत्याद्युक्तिरस्ति । अतः कथं सहिरण्यवरहस्ते कन्याहस्तं निधाय ? इति चेत्, न । तस्य दक्षिणस्थितपत्न्या क्रियमाणसन्ततशुद्धोदकदानाङ्गधारासेचनविषयत्वात् । अस्य च अङ्गीभूतदानात्मकसाक्षताविच्छिन्नोदकधाराप्रक्षेपविषयत्वेन अविरोधात् ।

ननु शुद्धोदकदानाङ्गधारासेचनं अङ्गीभूतसाक्षतोदकप्रक्षेपणं च इति किमर्थं द्वैविध्यम् ? इति चेत् । अयमभिप्रायः । महादानस्य धारापूर्वकत्वात् तत्पूर्वकत्वार्थम् । तर्हि पारिजातादावेकवारोक्तेः कोऽभिप्रायः ? एकवारं धारासेचनेऽपि उदकप्रक्षेपणस्य धारापूर्वकत्वसम्पादकत्वात् । परन्तु पौर्वापर्यकालस्य स्थूलसूक्ष्मत्वमात्रं भेदः ।

ननु धारायाः कन्याहस्तपर्यन्तत्वं कुतः ? अमोहमस्मि सा त्वं सा त्वमस्य मोहम् । द्यौरहं पृथिवी त्वं सामाद्रमुक्तं तावेवं विवाहवहै ऋच्यध्यूढं साम गीयते । वृष्टिरसि द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णातु इत्यादि मन्त्रलिङ्गात् । "दत्तां विप्र समाश्रय" इति स्मृतेश्च । "न मम" इति स्वत्वत्यागाभावाच्च । वरवरणोक्तेश्च वरप्रतिगृहीतद्रव्यस्य गृहगृहिण्यपरनामकपत्नीपात्रत्वाच्चेति । अन्येषामर्थान्तरे तात्पर्यादविरोधादनुमतमेवेति । अत एव पृथिवी त्वा प्रतिगृह्णात्वित्यंशस्य उक्त्यनुक्तीति ।

## मूलम्

**भुक्त्वाऽन्नं रससंयुक्तं सुप्तो भार्यासमन्वितः ॥ ३७६ ॥**

## कल्याणकाण्डदीपः

**भुक्त्वेति । रससंयुक्तं** गोक्षीररसंयुक्तं **अन्नं भुक्त्वा । भार्यासमन्वितः** भार्याभ्यां लक्ष्मीपद्माभ्यां समन्वितः **सुप्तः** । पयःफेननिभे । अपर्यङ्कैकशयने सह ब्रह्मचर्येण निद्रामकरोत् ।

## गूढकर्तृकव्याख्यानम्

अतः रात्रौ पञ्चदशघटिकातः पूर्वं विवाहमण्टपे भोजनार्थं वधूवरौ पद्माश्रीनिवासौ एकासने प्रतिष्ठाप्य सूप-अपूप-रसान्वितं षड्विधान्नं पत्नीहस्तेन पूर्वदत्त-भोजनपात्रे परिवेषयामास । अथ श्रीनिवासः पुरतः उपविष्टवसिष्ठेन सह "अन्नाभिमानी चन्द्रस्तु केशवस्तत्र देवता" इति चन्द्रान्तर्गतकेशवाधिष्ठितं अमृतान्नं अक्षारलवणं भोजनं चकार । आकाशः श्रीनिवाससन्निधौ पुरतः वसिष्ठसमीपोपविष्टगुरुणा सह भुक्तवान् । श्रीनिवासदक्षिणतः रमासहिता धरणी बकुलमालया सह भुक्तवती । तत्पङ्क्तौ वधू अष्टकन्याः । वामे सरस्वतीपार्वतीमुखाः अष्टकन्याः । पुरतः यथोचितं वधूवरपक्षीयाः पुमांसः तोण्डिमेन्द्रादयः ॥ ततः तद्रात्रौ श्रीनिवासः पयःफेननिभे अपर्यङ्कैकशयने रमापद्माभ्यां ब्रह्मचर्येण निदद्रौ ॥

## मूलम्

**ततः प्रभाते राजेन्द्र सुवासिन्यः सुरेश्वरम् ।**
**मज्जनं कारयामासुः गन्धतैलैः सुनिर्मलैः ॥ ३७७ ॥**

**कल्याणकाण्डदीपः**

**तत इति** । ततः शुद्धदशम्या अनन्तरं अतिरिक्तदशम्याः **प्रभाते उषसि** । **सुरेश्वरं** श्रीनिवासम् । **सुनिर्मलैः नवैः सुगन्धितैलैः सुवासिन्यः मज्जनं** अभ्यङ्गं **कारयामासुः** ।

**मूलम्**

**अन्योन्यं पूजनं तत्र अन्योन्यपरिरम्भणम् ।**
**स राजा विप्रमुख्यानां सुराणां बहुभोजनम् ॥ ३७८ ॥**

**कल्याणकाण्डदीपः**

**अन्योन्यमिति** । वरगृहस्थितब्रह्मादिमानुषान्तानां बन्धुभोजनाद्युपचारायागतान् तोण्डिमानवसुदानधरण्यादीन् वरगृहस्थित इन्द्रादयोऽभिगमनपरिरम्भणपाणिपत्नीरासनवीजनगन्धमाल्यताम्बूलफललड्डुकादिभिरुपचेरुः । आहूतागतानां जन्यनानानाञ्जनीजना अप्येवं इत्यन्योन्येषां पूजनं परिरम्भणं च प्रावर्तत इत्यर्थः । **स राजेति** । **सुराणां** ब्रह्मरुद्रादीनां **विप्रमुख्यानां** ब्रह्मर्षीणां एषां पुंसां स्त्रीणां **च बहुमानक्रमेण** गुणानुसारेण चन्द्रेण अमृतेन **बहुभोजनं** सम्पूर्णं भोजयामासेत्यर्थः ।

**मूलम्**

**स्त्रीणां च पुरुषाणां च बहुमान[1]क्रमेण सः ।**
**देवानां च ऋषीणां च नृपाणां मानुषात्मनाम् ॥ ३७९ ॥**
**यथेष्टं दापयामास हृष्ट आकाशभूमिप ।**
**अपूपान् विविधान् दिव्यान् सूपशाकादिकांस्तथा ॥ ३८० ॥**

१. पुरस्सरम् ।

**कल्याणकाण्डदीपः**

**देवानामिति** । **देवानां ऋषीणां** देवर्षीणां **मानुषात्मनां नृपाणां** मानुषाणां नृपाणां च **विविधानपूपान्** पौल्यादिपिष्टकान् **दिव्यान्** देवेष्टान् **सूपशाकादिकान्** अग्निमुखेन तथा चक्रे । सम्पूर्णं भोजयामासेत्यर्थः ।

**गूढकर्तृकव्याख्यानम्**

एवं शुद्धदशमी गता । अनन्तरं अतिरिक्तदशमी उषःकाले सुरेश्वरं श्रीनिवासं सुवासिन्यः नूतनसुगन्धितैलैः अभ्यङ्गं कारयामासुः । वरगृहस्थितानां ब्रह्मादिमानुषान्तानां बन्धुभोजनाद्युपचाराय

आगतान् तोण्डमानवसुदानधरण्यादीन् वरगृहस्थित-इन्द्रादयः अभिगमन-परिरम्भण-वीजन-गन्ध-माल्य-ताम्बूल-फल-लड्डुकादिभिः उपचेरुः । आहूतागतानां जन्यजनीनां जनी जना अपि एवं इत्यन्योन्येषां पूजनं परिरम्भणं च प्रावर्तत । ततः आकाशः ब्रह्मरुद्रादिसुराणां विप्रमुख्यानां एतेषां स्त्रीणां देवर्षीणां मानुषात्मनां नृपाणां मानुषाणां च बहुमानक्रमेण गुणानुसारेण चन्द्रेण अमृतेन सम्पूर्णं भोजयामास । नाना अपूपान् पौल्यादिपिष्टकान् देवेष्ट-सूपशाकादिकान् अग्निमुखेन पाचयित्वा भोजयामास ।

**मूलम्**

**घृतकुल्यं क्षीरकुल्यं दधिकुल्यमतःपरम् ।**
**तत उद्धृत्य निक्षिप्तं बहिर्भुक्तवतां नृणाम् ॥ ३८१ ॥**

**उच्छिष्टपत्रजालं च पुष्कलान्नादि संयुतम् ।**
**सारमेयगणाकीर्णं राक्षसानां गणैस्तथा ॥ ३८२ ॥**

**कल्याणकाण्डदीपः**

**घृतकुल्यमिति । अतःपरं** भोजनोत्तरं पानकपानीयेक्षुरसाम्रकदल्यादि- रसायनकुल्यं **घृतकुल्यं क्षीरकुल्यं दधिकुल्यं सारमेयगणाकीर्णं** चक्रे । **राक्षसानां गणैः** तथा तद्वत् आकीर्णं यथा स्यात् तथा चक्रे इत्यर्थः ।

अत्रेत्थं बोध्यम्— तथा हि । श्रीमद्भोजनशालाया मध्ये महान् महानसः भूश्च कुट्टिमता । तत्र शालायां शाल्योदनानां राशयः शुभ्रवस्त्राच्छन्नाः पर्वतोपमाः सानस्काः । तथा नानाविधभक्षशाखादीनां राशयोऽपि । एवं पानकपानीयेक्षुरसाम्रकदल्यादिरसायनघृतक्षीरदधितक्रसाराम्रसूपपायसाद्यन्धवो ह्रदोपमाः सघटीयन्त्राः । एवंविधस्य पाकस्थानस्य समन्ततो दिक्षु विदिक्षु उपदिक्षु च योजनायामासंहता विरळाः समाभोजनपङ्क्तयः । एतासां पुरतः अनुच्छिष्टसम्पर्काणि परिवेषणसुकराणि स्तिमितानि द्रोणायमानानि जानु-दघ्नानि सपरिवेषपात्राणि पूर्वोक्तपानकादिपायसान्तानां कुल्यानि विश्वकृतानि सौवर्णान्यासुः ।

तथा मुखशोधनगण्डूषपाणिपादप्रक्षालनार्थानि प्रवहच्छुद्धजलकुल्यान्यपि । एवं विभवसम्पन्नायां शालायां सुरादीनां भोजने निवृत्ते फेलापात्राणां सम्मार्जनाय बहिः प्रक्षेपे कृते कुल्यान्यप्यत्यन्तुं तेन यदा बहिर्निःसारितानि तदा सारमेयगणा राक्षसगणाश्चोच्छिष्टाहाराय सङ्कीर्णाः इति । एतत्सर्वं उद्देश्य

कारयितृकर्तृभोक्तृश्रीनिवासविवाहे इन्द्रविश्वकर्मदेवादिमाहात्म्यात् पर्यवसितार्थोक्त्या अनुक्तसिद्ध-न्यायेनार्थापत्त्योन्नेयमिति सङ्क्षेपः ।

### गूढकर्तृकव्याख्यानम्

भोजनानन्तरं श्रीमद्भोजनशालायाः मध्ये महान् महानसः । भूश्च कुट्टिमा । भोजनशालायां शाल्योदनानां राशयः शुभ्रवस्त्रच्छन्नाः । तथा नानाभक्षशाकादीनां राशयः । एवं पानक-पानीय-इक्षुरस-आम्रकदल्यादि-रसायन-घृत-क्षीर-दधि-तक्र-साराम्र-सूप-पायसादयः ह्रदोपमाः । सघटी-यन्त्राः पाकस्थानस्य समन्ततः दिक्षु विदिक्षु च योजयामास । तथा मुखशोधन-गण्डूष-पाणिपाद-क्षालनार्थं प्रवहत् शुद्धजलकुल्यानि निर्मितानि ॥ एवं वैभवसम्पन्नशालायां सुरादीनां भोजने निवृत्ते फेलापात्राणां सम्मार्जनाय बहिःप्रक्षेपे कृते क्षीर-घृत-रसायन-पानक-कुल्यानि तुम्बेन यदा बहिर्निस्सा-रितानि तदा बहिः सारमेयगणाः राक्षसगणाः उच्छिष्टाहाराय सङ्कीर्णाः ॥

### मूलम्

**एवं कोलाहलं चक्रे दिनानि चतुरस्तथा ।**
**आसीत् तत्र विनोदश्च नित्यमङ्गलमेव च ॥ ३८३ ॥**

### कल्याणकाण्डदीपः

**एवमिति** । **चतुरः** सर्वकार्यनिपुणो राजा **दिनानि** शुद्धविद्धदशमीद्वादश्यात्मकानि त्रीणि दिनानि । **एवं कोलाहलं** बहुगुणं **चक्रे** । कोलनं कोलः एकीभावः तं हलति भिनत्तीति **कोला-हलः** । इति कोशव्याख्यानात् । **आसीत् तत्र विनोद इति** । **तत्र** साधनद्वादश्यां मध्याह्नादुपरि **विनोदः** । क्षणमपि विश्लेषो भा भूदिति संश्लिष्टयोः वस्तुनोः केनचित्कारणेन विश्लिष्टयोः पुनः समागम-कालपर्यन्तमाभासेन विप्रलम्भेन कालयापनं विनोदः । अत एवोक्तं "विनोदो विरहयापनम्" इति । सोऽपि **आसीत्** । अथ **नित्यमङ्गलं च** कल्याणवरपूजाब्राह्मणादिसभापूजामङ्गळनीराजनाशीरादि नित्यं क्रियमाणं मङ्गळं च आसीदित्यर्थः । अत्रेत्थं बोध्यम् । तथा हि ।

### गूढकर्तृकव्याख्यानम्

एवं चत्वारि दिनानि महाकोलाहलः जातः । प्रतिदिनं नित्योत्सवः नित्यमङ्गलं आसीत् । नित्य-मङ्गलं नाम वरपूजा, विप्रादिसभापूजा, मङ्गलनीराजनं, आशीरादिनित्यक्रिया । सर्वेषां हास्यविनोदोऽपि अभूत् ॥ विनोदो विरहयापनम् । साधनद्वादशीमध्याह्नादुपरि विनोदः प्रवृत्तः । कीदृशविनोदः ? नाटकं

नाटयामासुः । राजकन्याकिरातीयं नाम नाटकम् । नाटकं राजकन्यां पद्मां किरातः प्रचकार इति । श्रीनिवासः बालस्त्रीताडितः स्त्रीजितः इति त्यक्तहय इति । शुकनारदौ अनृतवादिनौ इति । बकुलाऽपि अनृतवादिनीति । श्रीनिवासः किरातः अधमर्ण इति ॥ एवं हासः अभूत् ॥

मूलम्

दिवसे पञ्चमे प्राप्ते कृत्वा नाकबलिं नृप ॥ ३८४ ॥

कलशांश्चतुरो न्यस्य दीपज्वालाविराजितान् ।
वधूवरौ प्रतिष्ठाप्य रत्नसिंहासने शुभे ॥ ३८५ ॥

पूजयामास गोविन्दं जामातारमनामयम् ।
आकाशराजो धर्मात्मा क्षीरपात्रं करे दधौ ॥ ३८६ ॥

मातरं वासुदेवस्य राजन् बकुलमालिकाम् ।
पूजयित्वा विधानेन वस्त्रालङ्कारभूषणैः ॥ ३८७ ॥

नाभिं क्षीरेण संमृज्य पुत्रीं पद्मावतीं तदा ।
अर्पयामास दुःखेन [1]ब्रह्मणस्तु महीपते ॥ ३८८ ॥

१. ब्रह्मण्यो राजसत्तमः ।

महालक्ष्म्या नाभिमूलं सघृतं क्षीरसेचनम् ।
अर्पयामास पुत्रीं स्वां रुदन् गद्गदकण्ठवान् ॥ ३८९ ॥

### श्रीनिवासेन सह शेषाचलं प्रति पद्मावतीप्रेषणम्

श्रीनिवासस्य कृष्णस्य शेषाचलनिवासिनः ।
राजभार्या महाभागा रुदन्ती कुररी यथा ॥ ३९० ॥

पुत्रीहस्तं स्वहस्तेन धृत्वा राजकुलाङ्गना ।
क्षीरं संयोज्य कृष्णस्य नाभिमूलेऽतिदुःखिता ।
भृशं रुदन्ती मन्त्रेण दुःखसन्दिग्धलोचना ॥ ३९१ ॥

अर्पयामास कृच्छ्रेण पुत्रीं पद्मावतीं ततः ।
प्रोवाच च श्रीनिवासं रुदन्ती राजवल्लभा ॥ ३९२ ॥

### गूढकर्तृकव्याख्यानम्

पञ्चमे दिने प्राप्ते नाकबलि-आख्यं कर्म प्रवृत्तम् । दीपज्वालाभिः विराजित-चतुःकलशान् संस्थाप्य मङ्गलकर-रत्नमयसिंहासने वधूवरौ प्रतिष्ठाप्य धर्मात्मा आकाशः दोषरहित-जामातृ-श्रीनिवासं पूजयामास ॥ अनन्तरं क्षीरपात्रं करे धृत्वा आकाशः श्रीनिवासमातरं बकुलमालिकां यथाविधि वस्त्रा-लङ्कारभूषणैः पूजां कृत्वा (क्षीरेण बकुलावतिनाभिं संषिच्य, विप्रप्रियः राजश्रेष्ठः आकाशः दुहितरं पद्मां श्रीनिवासाय अर्पयामास । तथैव महालक्ष्मीनाभिमूलं घृतयुतक्षीरेण संषिच्य रुदन् गद्गदकण्ठः कृच्छ्रेण पुत्रीं अर्पितवान् ॥ ततः महाभाग्यशालिनी राजभार्या धरणी कुररीव रोदनं कुर्वन्ती शेषाचलनाथ ! श्रीनिवास ! इति पुत्रीपद्माहस्तं प्रदाय अत्यन्तं दुःखिष्ठा दुःखसन्दिग्धलोचना श्रीनिवासनाभिमूलं क्षीरेण संषिच्य जीवं रुदन्ती मन्त्रेण बहुकष्टेन पद्मां अर्पयामास ।

### मूलम्

धरण्युवाच—

पालितां लालितां पुत्रीं नवमासधृतां मया ।
त्वदधीनां जगन्नाथ करिष्ये मम नन्दनाम् ॥ ३९३ ॥

इत्येवमर्पयामास श्रीनिवासकराम्बुजे ॥ ३९४ ॥

स तस्या रोदनं दृष्ट्वा राजा दुःखपरायणः ।
रुरोद दीनवदनः पुत्रीमालिङ्ग्य भूपतिः ॥ ३९५ ॥

राजोवाच—

हा पुत्रि मन्दभाग्योऽहं त्वद्वियोगेन केवलम् ।
जीवनं मम कल्याणि न स्थिरं च भविष्यति ॥ ३९६ ॥

[१]क्रीडागृहं राजपुत्रि तव भोजनकर्म च ।
भ्राता तव [२]वरारोहे कथं क्रीडां करिष्यति ॥ ३९७ ॥

नाटयामासुः । राजकन्याकिरातीयं नाम नाटकम् । नाटकं राजकन्यां पद्मां किरातः प्रचकार इति । श्रीनिवासः बालस्त्रीताडितः स्त्रीजितः इति त्यक्तहय इति । शुकनारदौ अनृतवादिनौ इति । बकुलाऽपि अनृतवादिनीति । श्रीनिवासः किरातः अधमर्ण इति ॥ एवं हासः अभूत् ॥

मूलम्

दिवसे पञ्चमे प्राप्ते कृत्वा नाकबलिं नृप ॥ ३८४ ॥

कलशांश्चतुरो न्यस्य दीपज्वालाविराजितान् ।
वधूवरौ प्रतिष्ठाप्य रत्नसिंहासने शुभे ॥ ३८५ ॥

पूजयामास गोविन्दं जामातारमनामयम् ।
आकाशराजो धर्मात्मा क्षीरपात्रं करे दधौ ॥ ३८६ ॥

मातरं वासुदेवस्य राजन् बकुलमालिकाम् ।
पूजयित्वा विधानेन वस्त्रालङ्कारभूषणैः ॥ ३८७ ॥

नाभिं क्षीरेण संमृज्य पुत्रीं पद्मावतीं तदा ।
अर्पयामास दुःखेन [1]ब्रह्मणस्तु महीपते ॥ ३८८ ॥

१. ब्रह्मण्यो राजसत्तमः ।

महालक्ष्म्या नाभिमूलं सघृतं क्षीरसेचनम् ।
अर्पयामास पुत्रीं स्वां रुदन् गद्गदकण्ठवान् ॥ ३८९ ॥

श्रीनिवासेन सह शेषाचलं प्रति पद्मावतीप्रेषणम्

श्रीनिवासस्य कृष्णस्य शेषाचलनिवासिनः ।
राजभार्या महाभागा रुदन्ती कुररी यथा ॥ ३९० ॥

पुत्रीहस्तं स्वहस्तेन धृत्वा राजकुलाङ्गना ।
क्षीरं संयोज्य कृष्णस्य नाभिमूलेऽतिदुःखिता ।
भृशं रुदन्ती मन्त्रेण दुःखसन्दिग्धलोचना ॥ ३९१ ॥

**अर्पयामास कृच्छ्रेण पुत्रीं पद्मावतीं ततः ।**
**प्रोवाच च श्रीनिवासं रुदन्ती राजवल्लभा ॥ ३९२ ॥**

**गूढकर्तृकव्याख्यानम्**

पञ्चमे दिने प्राप्ते नाकबलि-आख्यं कर्म प्रवृत्तम् । दीपज्वालाभिः विराजित-चतुःकलशान् संस्थाप्य मङ्गलकर-रत्नमयसिंहासने वधूवरौ प्रतिष्ठाप्य धर्मात्मा आकाशः दोषरहित-जामातृ-श्रीनिवासं पूजयामास ॥ अनन्तरं क्षीरपात्रं करे धृत्वा आकाशः श्रीनिवासमातरं बकुलमालिकां यथाविधि वस्त्रा-लङ्कारभूषणैः पूजां कृत्वा (क्षीरेण बकुलावतिनाभिं संषिच्य, विप्रप्रियः राजश्रेष्ठः आकाशः दुहितरं पद्मां श्रीनिवासाय अर्पयामास । तथैव महालक्ष्मीनाभिमूलं घृतयुतक्षीरेण संषिच्य रुदन् गद्गदकण्ठः कृच्छ्रेण पुत्रीं अर्पितवान् ॥ ततः महाभाग्यशालिनी राजभार्या धरणी कुररीव रोदनं कुर्वन्ती शेषाचलनाथ ! श्रीनिवास ! इति पुत्रीपद्माहस्तं प्रदाय अत्यन्तं दुःखिष्ठा दुःखसन्दिग्धलोचना श्रीनिवासनाभिमूलं क्षीरेण संषिच्य जीवं रुदन्ती मन्त्रेण बहुकष्टेन पद्मां अर्पयामास ।

**मूलम्**

**धरण्युवाच—**

**पालितां लालितां पुत्रीं नवमासधृतां मया ।**
**त्वदधीनां जगन्नाथ करिष्ये मम नन्दनाम् ॥ ३९३ ॥**

**इत्येवमर्पयामास श्रीनिवासकराम्बुजे ॥ ३९४ ॥**

**स तस्या रोदनं दृष्ट्वा राजा दुःखपरायणः ।**
**रुरोद दीनवदनः पुत्रीमालिङ्ग्य भूपतिः ॥ ३९५ ॥**

**राजोवाच—**

**हा पुत्रि मन्दभाग्योऽहं त्वद्वियोगेन केवलम् ।**
**जीवनं मम कल्याणि न स्थिरं च भविष्यति ॥ ३९६ ॥**

**[1]क्रीडागृहं राजपुत्रि तव भोजनकर्म च ।**
**भ्राता तव [2]वरारोहे कथं क्रीडां करिष्यति ॥ ३९७ ॥**

**एवं रुदन्तमालोक्य भ्रातरं दीनचेतसम् ।**
**तोण्डिमानो नृपश्रेष्ठः दुःखितो वाक्यमब्रवीत् ॥ ३९८ ॥**

१. क्रीडागृहे राजपुत्रि तथा भोजनसद्मनि ।
२. कथं क्रीडां भोजनं वा ।

गूढकर्तृकव्याख्यानम्

ततः धरणी रुदन्ती श्रीनिवासं प्रति "भो जगन्नाथ ! श्रीनिवास ! नवमासान्तं धृत्वा इमां पुत्रीं लालितवती पालितवती । अद्य इमां तव अधीनां कृतवती" इति वदन्ती पद्मां श्रीनिवासकराम्बुजे अर्पयामास । पत्नीं धरणीं दुख्यन्तीं दृष्ट्वा आकाशोऽपि दीनमुखः सन् पुत्रीं आलिङ्ग्य रोदनं कर्तुं आरेभे । राजा पुत्रीं प्रति अतिदुःखेन "हे मङ्गलकरि ! हा पुत्रि ! अहं केवलं तव वियोगेन अत्यन्तं मन्दभाग्यो जातः । इतः मम जीवनं स्थिरं न भविष्यति । राजपुत्रि ! त्वयि प्रयातायां क्रीडागृहे भोजनशालायां तव अनुजः वसुदानः विष्वक्सेनः तव वियोगेन कथं वा क्रीडति ? कथं वा भोजनं करिष्यति ?" इति दुःखेन पृच्छति ।

**तोण्डिमान उवाच—**

**वयं दरिद्रा निर्भाग्या(ः) [1]त्वं हि भद्रे गमिष्यसि ।**
**वयं मरणमापन्ना नात्र कार्या विचारणा ॥ ३९९ ॥**

१. कृपणा दीनचेतसः ।

**एतादृशी च कल्याणी नैव लब्धा कलौ युगे ।**
**इत्थं वयं निश्चिनुमो वियोगभृशदुःखिताः ॥ ४०० ॥**

**एवं तान् रुदतो दृष्ट्वा विष्वक्सेनोऽतिदुःखितः ।**
**भगिनीं दीनवदनामालिङ्ग्य प्ररुदन् मुहुः ॥ ४०१ ॥**

गूढकर्तृकव्याख्यानम्

एवं रुदन्तं दीनमनस्कं आकाशं दृष्ट्वा अनुजतोण्डमानः अपि दुःखितः सन् वदति "पद्मावति ! त्वयि यातायां वयं सर्वे दरिद्राः निर्भाग्याः कृपणाः दीनमनस्काः जाताः । वयं तव वियोगेन मरणं

प्राप्स्यामः । सन्देह एव न ॥ तव वियोगे अतिदुःखिता वयं एतादृशीं मङ्गलकरीं पुत्रीं अस्मिन् कलौ नैव प्राप्स्याम इति निश्चिनुमः'' इति ॥

**वसुदान उवाच—**

**मातरं बालकं त्यक्त्वा [1]यथालोभार्जितं धनम् ।**
**तथा मां भगिनीहीनं क्व नु गच्छसि भामिनी ॥ ४०२ ॥**

१. यथा लोके धनार्जकः ।

**एवं प्रसङ्गस्तत्रासीद्देवानामपि भूमिप ।**
**ऋषीणां कश्यपादीनां दुःखमत्यन्तदारुणम् ॥ ४०३ ॥**

**रुदन्तं नृपतिं दृष्ट्वा श्रीनिवासः सताङ्गतिः ।**
**स्वयं रुरोद गोविन्दो भगिनीं पार्थवल्लभाम् ।**
**स्मृत्वा श्रीदेवकीपुत्रस्तदद्भुतमिवाभवत् ॥ ४०४ ॥**

**गूढकर्तृकव्याख्यानम्**

एतान् दुःखेन रुदतो दृष्ट्वा अनुजो वसुदानोऽपि अतिदुःखितः अग्रजां पद्मां आलिङ्ग्य दीनवदनां प्रति मुहुः रुदन् वदति ''भगिनि पद्मावति ! लोके धनार्जकपुरुषः मातरं बालकं त्यक्त्वा यथा प्रयाति तथा मां त्यक्त्वा कुत्र गच्छसि ?'' इति । एवं आकाशराजगृहे इष्टजनवियोगावसरनिमित्तं सर्वेषां दुःखप्रसङ्गोऽभूत् । देवानां कश्यपादि ऋषीणां अपि अतिदुःखं जातम् ॥ तदा सकलसज्जनगतिप्रद-श्रीनिवासः रुदन्तं नृपतिं दृष्ट्वा सभगिनीं पार्थपत्नीं सुभद्रां स्मरन् दुःखेन रोदिति स्म ॥ एवं साक्षात् जगदीशः वेदप्रतिपाद्यः देवः लोकविडम्बनं करोति स्म ॥ तत् पश्यतो लोकस्य अतिविचित्रं अभवत् ॥

**मूलम्**

**इत्थं लौकिककर्माणि ऐरावतमुपास्थितः ॥ ४०५ ॥**

**पद्मावत्या तया सार्धं सर्ववाद्यसमन्वितः ।**
**ग्रामं प्रदक्षिणीकृत्य रमानारायणावुभौ ॥ ४०६ ॥**

स्वनिवेशगृहं भेजे पद्मासनभवादिकैः ।
ततो हरिः श्रीनिवासः स्वस्थानं गन्तुमैहत ॥ ४०७ ॥

गरुडस्कन्धमारूढः पत्नीं पद्मावतीमपि ।
आरोपयन् वरारोहामन्योन्यं परिरभ्य च ॥ ४०८ ॥

गरुडस्कन्धमारूढो गन्तुं स्वस्थानमुत्सुकः ।
हरिरामन्त्रणार्थं तु श्वश्रूश्वशुरयोस्तदा ॥ ४०९ ॥

पुनर्गृहं [१]प्रवेश्याथ गमनेच्छु[२]र्भवान् हरिः ।
श्वश्रूं च श्वशुरं चैव साष्टाङ्गं प्रणनाम च ॥ ४१० ॥

---

१. सम्प्रविश्य । २. रभूत् तदा ।

आशीर्वादं ततश्चक्रे जामातरमनामयम् ।
आकाशराजश्वशुरः श्वश्वा च धरया सह ॥ ४११ ॥

आकाशराज उवाच—

दीर्घायुर्भव गोविन्द सर्वलोकधुरन्धर ।
आशिर्भिरभिनन्द्याथ वासुदेवमभाषत ॥ ४१२ ॥

धरणी उवाच—

मासान्ते गच्छ गोविन्द वध्वा सह स्वकं गृहम् ।
इदं ते श्वशुरं वाक्यं मानयस्व महामते ॥ ४१३ ॥

स तस्या वचनं श्रुत्वा वासुदेवोऽब्रवीन्नृपम् ॥ ४१४ ॥

श्रीनिवास उवाच—

नृप वाक्यं शृणु मम कार्यस्य महती त्वरा ।
तस्मादाज्ञां च मे देहि राजंस्ते स्यात् कृपा मयि ॥ ४१५ ॥

इत्युक्त्वा वासुदेवस्तु गरुडस्कन्धमारुहत्।
जगाम भगवान् साक्षात् सर्वदेवसमन्वितः ॥ ४१६ ॥

आकुलं व्याकुलं रम्यं पुरस्थजनसङ्कुलम्।
प्राकारगोपुरारूढाः पश्यन्ति स्म स्वचक्षुषा ॥ ४१७ ॥

जना ऊचुः—

धन्या राजकुलोत्पन्ना [1]सखी कमललोचना।
अनुगच्छति गोविन्दं पश्य कालविपर्ययम्(ः) ॥ ४१८ ॥

१. पद्मा।

### गूढकर्तृकव्याख्यानम्

एवं लोकव्यापारान् विडम्बयन् श्रीनिवासः ऐरावतं पद्मया सह आरुरोह । सर्वमङ्गलवाद्यानि वादन्ति स्म । ब्रह्मरुद्रादिभिः युक्तः श्रीनिवासः ग्रामं प्रदक्षिणीकृत्य स्वकीयमन्दिरं प्रविवेश ॥ ततः स्वस्थानं वेङ्कटाचलं गन्तुं अपेक्षां चक्रे ॥ अन्योन्यं आलिङ्गनं कृत्वा श्रीनिवासः गरुडं आरूढवान् । पद्मा च गरुडं आरूढवती । स्वस्थलगमनात् पूर्वं गरुडारूढः श्रीनिवासः श्वश्रूश्वशुरयोः आमन्त्रणार्थं पुनः राजगृहं प्रविष्टः, तौ साष्टाङ्गं प्रणिपत्य तौ प्रति 'जिगमिषुरस्मि, अनुज्ञा दीयताम्' इति प्रार्थितवान् । तदा आकाशः धरण्या सह दोषरहितं जामात्रे "हे वेदप्रतिपाद्य श्रीनिवास ! त्वं दीर्घायुष्मान् भव । त्वं सर्वलोकपावनधुरन्धरो भव" इति आशीश्चक्रे । ततः श्वश्रूः धरणी "हे श्रीनिवास ! नूतन-विवाहितपत्नीसहितः सन् अत्रैव मासं वसन् ततो याहि । हे महामते श्रीनिवास ! इदं मम वचनं तव साकं श्वशुरवचनमेव मत्वा वाक्यं मानय" इति उवाच । तस्याः वचः श्रुत्वा श्रीनिवासः आकाशं प्रति "हे राजश्रेष्ठ ! मम विज्ञापनं शृणु । मया त्वरितं कर्तव्यं कार्यम् अस्ति । राजन् ! तव मयि कृपा चेत् मे प्रयातुं आज्ञां देहि" इत्याह ॥

एवं तदनुज्ञया श्रीनिवासः अव्याहतषड्गुणैश्वर्यसम्पन्नः ब्रह्मादि सकलदेवयुतः गरुडं आरूढः स्वस्थलं यातुं प्रवृत्तः ॥ तदा नगरवासिसर्वजनाः एतादृशावसरात् भृशं व्याकुलाः केचन प्राकारान् केचन गोपुरान् आरूढाः प्रयातान् श्रीनिवासपद्मादीन् पश्यन्ति स्म । ते स्वयं वदन्ति "कमलदलवत् विशालनयना पद्मा राजकुलोत्पन्ना धन्या । पुण्यवती । पद्मा श्रीनिवासं पतिं अनुसृत्य धैर्येण गच्छन्ती पश्यत पश्यत कालवैपरीत्यम्" इति ॥

मूलम्

**पद्मावतीश्रीनिवासयोर्वियन्नृपप्रेषितपारिबर्हादिः**

तदा ददौ महाराजः पारिबर्हान् श्रियः पतेः ।
तण्डुलान् शालिसम्भूतान् वृषभाणां तथोपरि ॥ ४१९ ॥

आरोप्य प्रेषयामास शतं खारी वियन्नृपः ।
मुद्गान् गोस्वामिसंरूढांस्त्रिंशत्खारीर्ददौ हरेः ॥ ४२० ॥

गुडभारं [1]समुद्भूतं तिन्त्रिणीभारमेव च ।
पयोघटसहस्राणि दधिभाण्डशतानि च ॥ ४२१ ॥

सहस्रार्धं घृताक्तानि चर्मपात्राणि सर्षपान् ।
मेथिकान् हिङ्गुलवणं तैलपात्राणि [2]पञ्च च ॥ ४२२ ॥

१. महान्तं च । २. चैव हि ।

ददौ शर्करसम्पूर्णघटानां द्विशतं तथा ।
[1]वार्ताकचूतकदळीराजरम्भाफलानि च ॥ ४२३ ॥

१. उर्वारकं चूतकं च ।

कूष्माण्डं कन्दमूलानि मधुभाण्डशतानि च ।
रम्भाफलानि राजेन्द्र पत्राणां निचयं तथा ॥ ४२४ ॥

अश्वानामयुतं दत्वा गजानां च सहस्रकम् ।
धेनूनां पञ्चसाहस्रमाविकानां शतं तथा ॥ ४२५ ॥

दासीनां द्विशतं राजन् [1]त्रिशतं राजवर्गिणाम् ।
वस्त्राणि विविधान्याशु पर्यङ्कं रत्नभूषितम् ॥ ४२६ ॥

१. दासानां त्रिशतं तथा ।

उपबर्हसमोपेतमुपबर्हणसंयुतम् ।
एवमादीनि वस्तूनि गृहीत्वा नृपसत्तमः ॥ ४२७ ॥
पुत्रेण सहितो राजा श्रीनिवासपरायणः ।
आकाशराजो धर्मज्ञः श्रीनिवासस्य सन्निधिम् ॥ ४२८ ॥
आगतं श्वशुरं दृष्ट्वा उत्थाय जगदीश्वरः ।

श्रीनिवास उवाच—

दूराध्वानं महाराज किमर्थं [1]गमनं कृतम् ॥ ४२९ ॥

**वियन्नृपस्य श्रीनिवासदत्तस्वभक्तिनैरन्तर्यरूपवरप्राप्तिः**

दातव्यं किं नृपश्रेष्ठ तव पुत्रस्य मेऽनघ ।
कन्यां दत्वा [2]शुभां प्राप्तं सुकृतं किं कृतं त्वया ॥ ४३० ॥
सन्तोष[3]मतुळं प्राप्तं मम तात न संशयः ।
किं ते मनोगतं राजन् तन्ममाचक्ष्व भूपते ॥ ४३१ ॥
सन्देहं मा कुरुष्वात्र दानादाने महीपते ।
वासुदेववचः श्रुत्वा वासुदेवमभाषत ॥ ४३२ ॥

१. त्वं समागतः । २. सुखं । ३. श्वातुलं प्राप्तो ।

**गूढकर्तृकन्याख्यानम्**

ततः श्रीनिवासप्रयाणकाले आकाशः श्रीनिवासाय पारिबर्हं (बळुवळि) ददौ ॥ किं किं ददौ ? शालितण्डुलशतखारीः वृषभाणां उपरि आरोप्य प्रेषयामास । मुद्गत्रिंशतखारीः प्रेषयामास । महान्तं गुडभारम् । महान्तं त्रिन्त्रिणीभारम् । पयोघटसहस्राणि । दधिभाण्डशतानि । सहस्रार्धघृतपूर्णचर्म-पात्राणि । सर्षप-मेथिका-हिङ्गु-लवणानि । तैलपूरितपात्राणि । शर्करापूर्णद्विशतघटान् । उर्वारुक-चूत-राजरम्भाफल-कूष्माण्ड-कन्दमूलफल-मरीचि-आमलकानि च । द्विशतमधुपूर्णभाण्डानि । रम्भापत्राणि काष्ठकान् । अयुत-अश्वान् । सहस्रगजान् । धेनुपञ्चसाहस्रम् । आनिकशतम् । दासी द्विशतम् । दास-त्रिशतम् । विविधवस्त्राणि । रत्नखचितपर्यङ्कम् । उपबर्हसहितशय्याम् । एवमादीनि वस्तूनि गृहीत्वा धर्मज्ञः राजश्रेष्ठः आकाशः पुत्रवसुदानसहितः श्रीनिवासभक्तः श्रीनिवासं अभ्यगात् ।

श्वशुरं प्राप्तं दृष्ट्वा श्रीनिवास उत्थाय तं वदति "हे महाराज ! बहुदूरपर्यन्तं त्वं समागतः खलु । किमर्थम् ? तव बालकस्य मे किं दातव्यं अस्ति ? हे अनघ राजन् ! पूर्वं कन्यादानं कृत्वा सुखं लब्ध-वान् । किं सुकृतं कृतं त्वया ? हे तात ! तव सुकृतेन मम असदृशानन्दो जातः । अत्र संशयो न । राजन् ! तव मनसि किं वर्तते ? मां वद" इति पप्रच्छ । दानप्रतिग्रहादिकर्मसु संशयं मा कृथाः । "दातव्यं इति यद्दानं दीयतेऽनुपकारिणे । देशे काले च पात्रे च तद्दानं सात्त्विकं विदुः" इत्युक्तेः "दानेन सात्त्विकेन भाव्यम्" इत्युवाच ।

**मूलम्**

**सर्वं सम्पूर्णमस्माकं त्वत्प्रसादेन केशव ।**
**नान्यं याचे जगन्नाथ तव पादसरोरुहे ॥ ४३३ ॥**

**भक्तिं देह्यचलां कृष्ण सकुटुम्बस्य मेऽनघ ।**
**तच्छ्रुत्वा वचनं तस्य [1]शूरस्य च महात्मनः ॥ ४३४ ॥**

१. श्वशुरस्य ।

**दत्तवान् तस्य सायुज्यमाकाशनृपतेस्तदा ।**
**शालकस्य ददौ वस्त्रं स्वाङ्गस्थं मधुसूदनः ॥ ४३५ ॥**

**स जामात्राभ्यनुज्ञातः प्रययौ ससुतः पुरीम् ।**
**पुत्रि गमिष्ये नगरं विहरस्व हरिप्रिये ॥ ४३६ ॥**

**शयने श्रीनिवासस्य शयनं कुरु मङ्गले ।**
**सान्त्वयित्वा सुतां वीरः पुत्रीं कमललोचनाम् ॥ ४३७ ॥**

**शासिता सा स्वपित्राऽऽशु शीघ्रमाप रथं नृप ।**
**रुदन् गद्गदकण्ठेन जगाम नगरं नृपः ॥ ४३८ ॥**

**गूढकर्तृकव्याख्यानम्**

एतादृशश्रीनिवासवचनं श्रुत्वा राजा आकाशः श्रीनिवासं प्रति "हे केशव, – कश्च ईशश्च केशौ । तौ अवतीति केशवः – तव परमानुग्रहेण अस्माकं सर्वं सम्पूर्णं अस्ति । हे जगन्नाथ ! अहमद्य

अन्यत् किमपि न याचे । श्रीनिवास, तव पादारविन्दयोः अचलां भक्तिं देहि" इति प्रार्थयामास । श्वशुरप्रार्थनां श्रुत्वा तदा श्रीनिवासः आकाशाय सायुज्यं अनुजग्राह । स्वशालकवसुदानाय स्वदेहगतवस्त्रं ददौ । ततः जामात्रा श्रीनिवासेन आज्ञप्तः आकाशः पुत्रीपद्मागृहं आगत्य तां प्रति "श्रीनिवासप्रिये ! पद्मे ! अहं नारायणपुरं प्रति गच्छामि । त्वं श्रीनिवासेन सह विहारं कुरुष्व । श्रीनिवासे सुप्ते त्वं शयनं कुरु ।" एवं कमललोचनां पद्मां सान्त्वयित्वा उवाच । पित्राज्ञानुसारेण क्षणात् पद्मा श्रीनिवाससमीपमगात् । पद्मायां गतायां वियोगेन गद्गदकण्ठेन रुदन् आकाशः नगरं जगाम ॥

**मूलम्**

**भगवत्कृतषण्मासावधिकागस्त्याश्रमवासप्रतिज्ञा**

[1]पद्मावत्याऽनु गोविन्दो ब्रह्मरुद्रादिकैर्युतः ।
सुवर्णमुखरीं प्राप्य तत्र वासमकल्पयत् ॥ ४३९ ॥

१. पद्मावत्यनुगो देवो ।

षण्मासावधिपर्यन्तं दीक्षितोऽहं महीपते ।
न शैलराजमारोह इति निश्चित्य देवराट् ।
अगस्त्यभवनं गत्वा तत्र वासमकल्पयत् ॥ ४४० ॥

**स्वावासं प्रति भगवत्कृतदेवादिप्रेषणम्**

देवान् सम्प्रेषयामास स्वधामानि वृषाकपिः ।
ब्रह्मादीनां सुराणां च मुनीनामूर्ध्वरेतसाम् ॥ ४४१ ॥

ददौ वस्त्रं यथायोग्यं भगवान् भक्तवत्सलः ।
तेनाज्ञसा जगद्धात्रा जग्मुर्लोकं स्वकं सुराः ॥ ४४२ ॥

ऋषयश्च ततोऽरण्यं जग्मुर्नारायणाज्ञया ।
लक्ष्मीर्जगाम राजेन्द्र करवीरपुरं तदा ॥ ४४३ ॥

महोत्सवं [1]तमनुभूय देवता
ब्रह्मेशपूर्वाः [2]सहसाऽतिसम्भ्रमात्।
जग्मुः स्वकं धाम महानुभावा
राजेन्द्रपूज्यं प्रशशंसुरादरात् ॥ ४४४ ॥

१. तं त्वनुभूय। २. समहर्षिसत्तमाः।

गते देवगणे तत्र अगस्त्यनिलये हरिः।
भुञ्जानो भोगमतुलं तत्रास्ते भगवान् हरिः ॥ ४४५ ॥

### गूढकर्तृकव्याख्यानम्

क्रीडादिगुणविशिष्टः श्रीनिवासः पद्मया सहितः विधिभवेन्द्रादिदेवैः युतः सुवर्णमुखरीं प्राप्य तद्देशे वासं अकल्पयत्। "षण्मासावधिपर्यन्तं विवाहदीक्षायां स्थितः पर्वतारोहणं न कुर्यात्" इति निश्चित्य अगस्त्याश्रमं प्राप्य तत्र वासं कर्तुं आरेभे ॥ ततः वृषाकपिशब्दवाच्यः श्रीनिवासः ब्रह्मादिसुराणां ऊर्ध्वरेतस्कमुनीनां च यथायोग्यं वस्त्राणि दत्वा स्वस्वधाम गन्तुं अनुज्ञां ददौ ॥ भक्तवत्सलदेवाज्ञप्ताः देवाः सर्वाः स्वलोकं जग्मुः ॥ ऋषयः तदाज्ञप्ताः अरण्यं जग्मुः ॥ पत्याज्ञया लक्ष्मीः जगन्माता कोल्लापुरं गता। विधिभवेन्द्रादि सर्वसुराः श्रीनिवासकल्याणमहोत्सवानन्दं अनुभूय राजेन्द्रपूज्य-महानुभाव-आकाशं सादरं स्तुवन्तः स्वधाम ययुः ॥ एवं देवमुन्यादि सकललोके गते श्रीनिवासः अगस्त्याश्रमं गतः। तत्र अव्याहतषडैश्वर्यसम्पन्नः श्रीनिवासः असदृशभोगान् अनुभवन् तदाश्रमे षण्मासं अवसत् ॥

### मूलम्

### विवाहाध्यायफलश्रुतिः

शतानन्द उवाच—

विवाहाध्यायमहिमां ये शृण्वन्ति जनेश्वर।
तेषां भाग्योदयं वक्ष्ये शृणु राजन् सविस्तरम् ॥ ४४६ ॥

कोटिकन्याप्रदानस्य यावद्भूमेः प्रदानतः।
यत्फलं लभते देही तत्फलं श्रवणाल्लभेत् ॥ ४४७ ॥

उत्सवं ये करिष्यन्ति उत्सवो जगदीशितुः ।
तस्योत्सवो भवेद्राजन् वेङ्कटेशप्रसादतः ॥ ४४८ ॥

इति ते कथितं राजन् विवाहचरितं हरेः ।
शृणुयात् श्रावयेद्वाऽपि सर्वाभीष्टमवाप्नुयात् ॥ ४४९ ॥

शुभदं शृण्वतां चैव सर्वेषां मङ्गलप्रदम् ॥ ४५० ॥

*इति श्रीमद्भविष्योत्तरपुराणे श्रीवेङ्कटाचलमाहात्म्ये पद्मावतीपरिणयः श्रीनिवासविवाहप्रशंसनं नाम एकादशोऽध्यायः ॥*

*(गूढकर्तृकव्याख्यानानुसारेण द्वादशोऽध्यायः ॥)*

॥ श्रीकृष्णार्पणमस्तु ॥

★ ★ ★

**कल्याणकाण्डदीपः**

आकाशराजा एकादश्यां रात्रौ विश्रान्तः पद्मयादिभ्यो लब्धमिष्टं निवेदयन् आनन्दयामास । किमिति ? पद्माया उचितवरलाभेन तस्या योगचिन्तापरिहार आसीत् । शुभं शीघ्रं विधीयतामिति विवाहविधानेन श्रीनिवासानुग्रहेण च अकस्माद्बहिरागतेन वसन्तवनागतकिरातवृत्तान्तेन अन्यपूर्वकत्व-शङ्कया विघ्नो नायातः । अतो वयमस्मिन् जन्मनि धन्याः स्मः इति । परन्तु स वृत्तान्तः कदा बहिरायाति किं वा भविष्यति तन्मा भूत् । एवमेव भूयात् इति क्षेमचिन्तामात्रमवशिष्टम् । अयोनिजायाः सीताया इवानर्थपरम्परा मा भूत् । अथ सर्वसाक्षी श्रीनिवासः राज्ञः तमप्यातङ्कं परिहर्तुं पद्मां प्रेरयामास । सा तेन प्रेरिता राजकन्या किरातीयनामकपटनाटकं विषयनिगरणेन नारदमुखेन कारयित्वा विश्वकर्ममुखेन चित्रयित्वा च विनोदार्थं नारदमिश्रं लक्ष्मीपद्मे विवाहमण्टपे उपविश्य नाटयामासतुः । किं ततः प्राप्तम् ? श्रीनिवासस्य बालस्त्रीताडितत्वात् स्त्रीजित इति त्यक्तहय इति च प्राप्तम् । अजित इति प्रवादमात्रम् । शुकनारदयोरनृतवादिनौ इति बकुळया अपि विद्यावान् धनवान् बलीति वरं स्तुत्वा तज्ज्येष्ठपत्नीं अनपत्यान्धा त्यक्तलज्जेति विनिन्द्य कन्यां घटयित्री अनृतवादिनीति प्राप्तवरस्याधर्मण-त्वात् । ज्येष्ठपत्न्या निर्दुष्टत्वात् । अतः श्रीनिवासशुकनारदबकुळालक्ष्मीनां यथासम्भवं कोपावेश इति च प्राप्तम् ।

एवं प्राप्ते सायाह्ने सन्ध्यामुपास्याग्निं हुत्वा वसिष्ठशुकनारदैः बकुळया च सह होममण्डप एव तस्थौ । पद्मा लक्ष्मीश्च विवाहमण्टपे सम्भृतपूजासम्भारे श्रीनिवासागमनं निरीक्षन्त्यौ स्तः । सूत-मागधबन्दिनः गन्धर्वाप्सरसो वैणिकादय उत्सवप्रकृतयः उत्सवोत्सुकसभाजना अपि कुतो विलम्बः ? इति विचारितवन्तः । राजाऽपि कुतो विलम्बः ? इति गुरुमुखाद्विचारितवान् । अथ गुरुः श्रीनिवास-सन्निधिं गत्वा इङ्गितेन श्रीनिवासः कुतो वा विमना इवाभाति ? मुखप्रसादो न दृश्यत इत्याह । तच्छ्रुत्वा राजाऽपि पूर्वाशङ्कितकिरातवृत्तान्तातङ्केन वालुकसेत्वन्तर्गत जल इव परिक्षीणो बभूव । अथ धैर्यमालम्ब्य राजगुरुणा सह वसिष्ठशुकनारदादिभिः सम्भूय पुनः विशेषतो विचारे नारदमुखेन पद्मालक्ष्मीकृत-नटनादिविनोदोपलम्भेन कोपो न क्रोध इति ज्ञातम् । अथ राजा जीवितमात्मानं मेने । कस्मात् ? सोऽनर्थः तावत् नागतः । असदुपालम्भनिमित्तः स्त्रीषु कोपः प्रत्यायनपर्यन्तः । कथञ्चिन्निबर्हणीयो भवति ? इति पुनः पृष्टः पुरुषो बभूव । प्रत्युताशङ्कितानर्थ-परिहारायायं कोपो दैवादागत इति भातीति ।

अथ राजा पद्माया मध्यस्थो भूत्वा नारदं पप्रच्छ । नटनादिषु नामग्रहणाभावेन कुतः श्रीनि-वासादीनां कोपावेशः ? इति । अथ नारदः श्रीनिवासस्य मध्यस्थो भूत्वा स्वस्वकृतस्य स्वस्वसाक्षि-सिद्धतया स्वस्मिन् स्वस्मिन् स्वस्मिन् पर्यवसाय तेषां तेषां कोपावेश इत्याह । तर्हि तत्सोढव्यमेव । कुतः कोप ? इति राजा । अथ नारदः— साधोः परमधार्मिकस्य राज्ञस्तवेक्षणिकया शक्तेनापि यत् क्षान्तं तत्साधुषु भूषणमपि सा असूयेषु दूषणायितम् । राजा— न हि रणाजिरस्य सङ्कोचः । इदानी-मपि परीक्षा भवत्विति पद्मावती वक्तीत्याह अथ तथाऽस्त्विति श्रीनिवासेनोक्तेन विवाहदीक्षायां तस्य अवसर इत्याहुः । तर्हि कः कोपशान्त्युपाय इति राजा । असदुपालम्भक्षमापनमेवेति नारदः । तत् कीदृशम् ? इति राजा । अपहृतहयप्रत्यर्पणं नवरत्नोपायनमाहृत्य सभामध्ये शिरोनमनमित्येवं दळ-द्वयात्मकमित्याह नारदः । अथ राजा पद्मामदृष्ट्वा स्वयमेव अन्यथाभूतस्य तस्य प्रत्यर्पणमशक्यमिति कर्काणा सह सम्प्रति निधातव्यमिति तोण्डिना सह आलोचयामास । तज्ज्ञातं वसुदानेन । अथ राजा नारदं प्रत्यालोचितमाह । अथ नारदः श्रीनिवासं पृष्ट्वा तथा प्रतिश्रुतस्य श्रीतुलस्युदकधारां श्रीनिवास-हस्ते सिञ्चेत्याह । अतस्तथाऽकरोद्राजा ।

एतन्मध्ये वसुदानं सेन्दिरा पद्मायै आलोचितं विज्ञापयामास । अथ लक्ष्म्याह । तन्न प्रतिनिधा-तव्यम् । अपराध आसज्जते । श्रीनिवासारूढस्य तस्य हयस्यान्यथाभावः कदा स्यात् ? मत्सहजो मत्सन्निधावस्ति तमेव प्रत्यर्पयामीत्यादि । अथ तच्छ्रुत्वा श्रीनिवासः परमसंहृष्टः महान् लाभो

जातः सोऽपि प्रत्यर्पणीयः । प्रतिश्रुतमपि देयमेव । अन्यथा प्रतिश्रुतपरित्यागापत्तेरिति राजानं बोधयामास । एवमेकस्मिन् प्राकारे व्यवस्थिते पद्मा । अस्तु नामैतत् । द्वितीयो न न्याय्यः । शिलाप्रहारातिक्रमातिचारशान्तिरूपः । तत् कथमिति नारदः । तत्रैव अतिक्रमो वृत्त इति पद्मा । नारदः मृगयागतं पुरुषं निष्पुरुषैकान्तप्रदेशेऽपि लोचनसंज्ञया आहूय वरणं प्रतिवरणं च कृत्वा गान्धर्वे विवाहे जाते क्षत्रियस्य परिग्रहे कोऽतिक्रमः । तस्मात् द्वितीयोऽपि न्याय्य एव । तथा चोभयरूपं क्षमापनं कर्तव्यमेव । अहं शुकश्च नानृतवादिनौ । श्रुत्यर्थानुवादित्वात् । विवाहानृतपातकाभावाच्च । बकुळापि नाऽनृतवादिनी । तद्वचनस्यार्थान्तरे तात्पर्यात् । तच्चोपपादितं पुरस्तात् । अथ पद्मालक्ष्म्यौ स्वभावतो हरितन्व्यावपि श्रीनिवासं किञ्चिदपराधव्याजेन सभामध्ये प्रणन्तुं पुरतो वसुदानशिरसा विशालस्वर्णपात्रे नवरत्नफलपुष्पोत्करानुद्धार्य अलङ्कृतं तं हयं गुञ्जामणिं च पार्श्वतः पुरस्कृत्य विवाहमण्टपात् प्रतस्थतुः । तथा देवदुन्दुभयो नेदुः । जगुः गन्धर्वाः, ननृतुः अप्सरसः । पुष्पवृष्टिश्च खाच्चुता । तदा ब्रह्माऽपि तत्समागमसन्दर्शनार्थं उन्मर्यादम् । किमुतान्ये सभाजनाः । तदा ब्रह्मण्यपि मार्गाजनानपसारयतां पद्मालक्ष्मीचाराणां श्रीनिवासपदकाङ्कित कृष्णाजिनप्रहार आपतितः । का अन्येषां मशकसहचराणां कथा । एवं महोत्सवेन श्रीनिवासाधिष्ठितं होममण्डपं प्रत्यागत्य हयं समर्प्य रत्नोपायनं पुरतो निधाय शिरोनमनं चक्रतुः ।

अथ श्रीनिवासः परमस्नेहविक्लिद्यमानहृदय उत्थायते उद्वाहोत्सवार्थं विवाहमण्टपं प्रति जगामेति । ततो नित्यमङ्गळम् । अथ राजा क्षेमेऽपि निरातङ्को भूत्वा अभिननन्द । जनाश्च तत् स्मारं स्मारं आनन्दभरिता अभूवन् ॥

एवमेतत्पुरावृत्तमाख्यानं भद्रमस्तु वः ।
प्रव्याहरत विश्रब्धं बलं विष्णोः प्रवर्धताम् ॥

कल्याणाद्भुतगात्राय कामितार्थप्रदायिने ।
श्रीमद्वेङ्कटनाथाय श्रीनिवासाय ते नमः ॥

काण्डपात्रस्नेहदशालोकैरंशैः सुशोभितः ।
काशतां काण्डदीपोऽयं यावदाचन्द्रतारकम् ॥

गोत्रकाण्डो नाकपुत्रः वेङ्कटस्नेहसम्भृतः ।
किरातादि दशः पद्मा लोकोऽयं काण्डदीपकः ॥

एवं प्राप्ते सायाह्ने सन्ध्यामुपास्याग्निं हुत्वा वसिष्ठशुकनारदैः बकुळया च सह होममण्डप एव तस्थौ । पद्मा लक्ष्मीश्च विवाहमण्टपे सम्भृतपूजासम्भारे श्रीनिवासागमनं निरीक्षन्त्यौ स्तः । सूत-मागधबन्दिनः गन्धर्वाप्सरसो वैणिकादय उत्सवप्रकृतयः उत्सवोत्सुकसभाजना अपि कुतो विलम्बः ? इति विचारितवन्तः । राजाऽपि कुतो विलम्बः ? इति गुरुमुखाद्विचारितवान् । अथ गुरुः श्रीनिवास-सन्निधिं गत्वा इङ्गितेन श्रीनिवासः कुतो वा विमना इवाभाति ? मुखप्रसादो न दृश्यत इत्याह । तच्छ्रुत्वा राजाऽपि पूर्वाशङ्कितकिरातवृत्तान्तातङ्केन वालुकसेत्वन्तर्गत जल इव परिक्षीणो बभूव । अथ धैर्यमालम्ब्य राजगुरुणा सह वसिष्ठशुकनारदादिभिः सम्भूय पुनः विशेषतो विचारे नारदमुखेन पद्मालक्ष्मीकृत-नटनादिविनोदोपलम्भेन कोपो न क्रोध इति ज्ञातम् । अथ राजा जीवितमात्मानं मेने । कस्मात् ? सोऽनर्थः तावत् नागतः । असदुपालम्भनिमित्तः स्त्रीषु कोपः प्रत्यायनपर्यन्तः । कथञ्चिन्निबर्हणीयो भवति ? इति पुनः पृष्टः पुरुषो बभूव । प्रत्युताशङ्कितानर्थ-परिहारायायं कोपो दैवादागत इति भातीति ।

अथ राजा पद्मायाः मध्यस्थो भूत्वा नारदं पप्रच्छ । नटनादिषु नामग्रहणाभावेन कुतः श्रीनि-वासादीनां कोपावेशः ? इति । अथ नारदः श्रीनिवासस्य मध्यस्थो भूत्वा स्वस्वकृतस्य स्वस्वसाक्षि-सिद्धतया स्वस्मिन् स्वस्मिन् स्वस्मिन् पर्यवसाय तेषां तेषां कोपावेश इत्याह । तर्हि तत्सोढव्यमेव । कुतः कोप ? इति राजा । अथ नारदः— साधोः परमधार्मिकस्य राज्ञस्तवेक्षणिकया शक्तेनापि यत् क्षान्तं तत्साधुषु भूषणमपि सा असूयेषु दूषणायितम् । राजा— न हि रणाजिरस्य सङ्कोचः । इदानी-मपि परीक्षा भवत्विति पद्मावती वक्तीत्याह अथ तथाऽस्त्विति श्रीनिवासेनोक्तेन विवाहदीक्षायां तस्य अवसर इत्याहुः । तर्हि कः कोपशान्त्युपाय इति राजा । असदुपालम्भक्षमापनमेवेति नारदः । तत् कीदृशम् ? इति राजा । अपहृतहयप्रत्यर्पणं नवरत्नोपायनमाहृत्य सभामध्ये शिरोनमनमित्येवं दळ-द्वयात्मकमित्याह नारदः । अथ राजा पद्मामदृष्ट्वा स्वयमेव अन्यथाभूतस्य तस्य प्रत्यर्पणमशक्यमिति कर्काणा सह सम्प्रति निधातव्यमिति तोण्डिना सह आलोचयामास । तज्ज्ञातं वसुदानेन । अथ राजा नारदं प्रत्यालोचितमाह । अथ नारदः श्रीनिवासं पृष्ट्वा तथा प्रतिश्रुतस्य श्रीतुलस्युदकधारां श्रीनिवास-हस्ते सिञ्चेत्याह । अतस्तथाऽकरोद्राजा ।

एतन्मध्ये वसुदानं सेन्दिरा पद्मायै आलोचितं विज्ञापयामास । अथ लक्ष्म्याह । तन्न प्रतिनिधा-तव्यम् । अपराध आसज्यते । श्रीनिवासारूढस्य तस्य हयस्यान्यथाभावः कदा स्यात् ? मत्सहजो मत्सन्निधावस्ति तमेव प्रत्यर्पयामीत्यादि । अथ तच्छ्रुत्वा श्रीनिवासः परमसंहृष्टः महान् लाभो

जातः सोऽपि प्रत्यर्पणीयः । प्रतिश्रुतमपि देयमेव । अन्यथा प्रतिश्रुतपरित्यागापत्तेरिति राजानं बोधयामास । एवमेकस्मिन् प्राकारे व्यवस्थिते पद्मा । अस्तु नामैतत् । द्वितीयो न न्याय्यः । शिलाप्रहारातिक्रमातिचारशान्तिरूपः । तत् कथमिति नारदः । तत्रैव अतिक्रमो वृत्त इति पद्मा । नारदः मृगयागतं पुरुषं निष्पुरुषैकान्तप्रदेशेऽपि लोचनसंज्ञया आहूय वरणं प्रतिवरणं च कृत्वा गान्धर्वे विवाहे जाते क्षत्रियस्य परिग्रहे कोऽतिक्रमः । तस्मात् द्वितीयोऽपि न्याय्य एव । तथा चोभयरूपं क्षमापनं कर्तव्यमेव । अहं शुकश्च नानृतवादिनौ । श्रुत्यर्थानुवादित्वात् । विवाहानृतपातकाभावाच्च । बकुळापि नाऽनृतवादिनी । तद्वचनस्यार्थान्तरे तात्पर्यात् । तच्चोपपादितं पुरस्तात् । अथ पद्मालक्ष्म्यौ स्वभावतो हरितन्व्यावपि श्रीनिवासं किञ्चिदपराधव्याजेन सभामध्ये प्रणन्तुं पुरतो वसुदानशिरसा विशालस्वर्णपात्रे नवरत्नफलपुष्पोत्करानुद्धार्य अलङ्कृतं तं हयं गुञ्जामणिं च पार्श्वतः पुरस्कृत्य विवाहमण्टपात् प्रतस्थतुः । तथा देवदुन्दुभयो नेदुः । जगुः गन्धर्वाः, ननृतुः अप्सरसः । पुष्पवृष्टिश्च खाच्युता । तदा ब्रह्माऽपि तत्समागमसन्दर्शनार्थं उन्मर्यादम् । किमुतान्ये सभाजनाः । तदा ब्रह्मण्यपि मार्गाञ्जनानपसारयतां पद्मालक्ष्मीचाराणां श्रीनिवासपदकाङ्कित कृष्णाजिनप्रहार आपतितः । का अन्येषां मशकसहचराणां कथा । एवं महोत्सवेन श्रीनिवासाधिष्ठितं होममण्डपं प्रत्यागत्य हयं समर्प्य रत्नोपायनं पुरतो निधाय शिरोनमनं चक्रतुः ।

अथ श्रीनिवासः परमस्नेहविक्लिद्यमानहृदय उत्थायते उद्वाहोत्सवार्थं विवाहमण्टपं प्रति जगामेति । ततो नित्यमङ्गळम् । अथ राजा क्षेमेऽपि निरातङ्को भूत्वा अभिननन्द । जनाश्च तत् स्मारं स्मारं आनन्दभरिता अभूवन् ॥

एवमेतत्पुरावृत्तमाख्यानं भद्रमस्तु वः ।<br>
प्रव्याहरत विश्रब्धं बलं विष्णोः प्रवर्धताम् ॥

कल्याणाद्भुतगात्राय कामितार्थप्रदायिने ।<br>
श्रीमद्वेङ्कटनाथाय श्रीनिवासाय ते नमः ॥

काण्डपात्रस्नेहदशालोकैरंशैः सुशोभितः ।<br>
काशतां काण्डदीपोऽयं यावदाचन्द्रतारकम् ॥

गोत्रकाण्डो नाकपुत्रः वेङ्कटस्नेहसम्भृतः ।<br>
किरातादि दशः पद्मा लोकोऽयं काण्डदीपकः ॥

ज्वालानृकेसरिक्षेत्रवासिना बुधबन्धुना ।
पुराणयात्रापान्थानामुपकृत्यै प्रबोधितः ॥

*इति श्रीमद्भविष्योत्तरपुराणे वेङ्कटगिरिमाहात्म्यव्याख्याने पादीन्मध्यमलान्तादि नृसिंहार्यप्रकाशिते श्रीकल्याणकाण्डदीपे पद्मालोकारोहणं नाम एकाधिकदशमोऽध्यायः ॥*

**गूढकर्तृकव्याख्यानम्**

एवं निरूप्य शतानन्दः जनकं प्रति ''जनकराज ! श्रीश्रीनिवासविवाहाध्यायमाहात्म्यं ये शृण्वन्ति तेषां भाग्योदयं वक्ष्ये । विस्तरेण शृणु ।'' कोटिसङ्ख्याककन्याप्रदानेन आसमुद्रभूमिदानेन यावत् फलं लभ्यते तावत् फलं एतद्विवाहाध्यायमाहात्म्यसादरश्रवणात् प्राप्यते । ये जनाः श्रीनिवासकल्याणोत्सवं करिष्यन्ति कारयन्ति, जनकराज ! श्रीवेङ्कटेशानुग्रहेण तेषां उत्सवो भवत्येव ।

हे जनकनृप ! एवं श्रीनिवासविवाहचरित्रं ते कथितवान् । एतत् श्रीनिवासविवाहचरित्रं शृण्वतां शुभकरम् । शृण्वतां श्रावयतां अपि सर्वाभीष्टानि सिद्ध्यन्ति । सर्वेषां मङ्गलप्रदम् ॥ इत्येवमादि श्रीश्रीनिवासविवाहप्रशंसनात्मकविषयं शतानन्दः जनकं प्रति निरूपितवान् । तमेवांशं सूतः शौनकादि विप्रान् प्रति निरूपितवान् ॥

*इति श्रीमद्भविष्योत्तरपुराणे श्रीवेङ्कटेशमाहात्म्ये श्रीनिवासविवाहप्रशंसनं नाम द्वादशोऽध्यायः समाप्तः ॥*

॥ श्रीकृष्णार्पणमस्तु ॥



श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

# ॥ श्रीराजराजेश्वरतीर्थविरचितं मङ्गलाष्टकम् ॥

लक्ष्मीर्यस्य परिग्रहः कमलभूः सूनुर्गरुत्मान् रथः
पौत्रश्चन्द्रविभूषणः सुरगुरुः शेषश्च शय्या पुनः ।
ब्रह्माण्डं वरमन्दिरं सुरगणा यस्य प्रभोः सेवकाः
स त्रैलोक्यकुटुम्बपालनपरः कुर्याद्धरिर्मङ्गलम् ॥ १ ॥

ब्रह्मावायुगिरीशशेषगरुडा देवेन्द्रकामौ गरु-
श्चन्द्रार्कौ वरुणानलौ मनुयमौ वित्तेशविघ्नेश्वरौ ।
नासत्यौ निरृतिर्मरुद्गणयुताः पर्जन्यमित्रादयः
सस्त्रीकाः सुरपुङ्गवाः प्रतिदिनं कुर्वन्तु नो मङ्गलम् ॥ २ ॥

विश्वामित्रपराशरौर्वभृगवोऽगस्त्यः पुलस्त्यः क्रतुः
श्रीमानत्रिमरीच्युचथ्यपुलहाः शक्तर्वसिष्ठोऽङ्गिराः ।
माण्डव्यो जमदग्निगौतमभरद्वाजादयस्तापसाः
श्रीमद्विष्णुपदाम्बुजैकशरणाः कुर्वन्तु नो मङ्गलम् ॥ ३ ॥

मान्धाता नहुषोऽम्बरीषसगरौ राजा पृथुर्हैहयः
श्रीमान् धर्मसुतो नलो दशरथो रामो ययातिर्यदुः ।
इक्ष्वाकुश्च विभीषणश्च भरतश्चोत्तानापादध्रुवा-
वित्याद्या भुवि भूभुजश्च सततं कुर्वन्तु नो मङ्गलम् ॥ ४ ॥

श्रीमेरुर्हिमवांश्च मन्दरगिरिः कैलासशैलस्तथा
माहेन्द्रो मलयश्च विन्ध्यनिषधौ सिंहस्तथा रैवतः ।
सह्याद्रिर्वरगन्धमादनगिरिर्मैनाकगोमन्तका-
वित्याद्या भुवि भूधराश्च सततं कुर्वन्तु नो मङ्गलम् ॥ ४ ॥

गङ्गा सिन्धु सरस्वती च यमुना गोदावरी नर्मदा
कृष्णा भीमरथी च फल्गुसरयूः श्रीगण्डकी गोमती ।
कावेरी कपिला प्रयागकिटिजानेत्रावतीत्यादयो
नद्यः श्रीहरिपादपङ्कजभवाः कुर्वन्तु नो मङ्गलम् ॥ ६ ॥

वेदाश्चोपनिषद्गणाश्च विविधाः साङ्गाः पुराणान्विता
वेदान्ता अपि मन्त्रतन्त्रसहितास्तर्काः स्मृतीनां गणाः ।
काव्यालङ्कृतिनीतिनाटकयुताः शब्दाश्च नानाविधाः
श्रीविष्णोर्गुणनामकीर्तनपराः कुर्वन्तु नो मङ्गलम् ॥ ७ ॥

आदित्यादिनवग्रहाः शुभकरा मेषादयो राशयो
नक्षत्राणि सयोगकाश्च तिथयस्तद्देवतास्तद्गणाः ।
मासाब्दा ऋतवस्तथैव दिवसाः सन्ध्यास्तथा रात्रयः
सर्वे स्थावरजङ्गमाः प्रतिदिनं कुर्वन्तु नो मङ्गलम् ॥ ८ ॥

इत्येतद्वरमङ्गलाष्टकमिदं श्रीराजराजेश्वरे-
णाख्यातं जगतामभीष्टफलदं सर्वाशुभध्वंसनम् ।
माङ्गल्यादिशुभक्रियासु सततं सन्ध्यासु वा यः पठे-
द्धर्मार्थादिसमस्तवाञ्छितफलं प्राप्नोत्यसौ मानवः ॥ ९ ॥

तदेव लग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव ।
विद्याबलं दैवबलं तदेव लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि ॥ १० ॥

मङ्गलं भगवान् विष्णुर्मङ्गलं मधुसूदनः ।
मङ्गलं देवकीपुत्र मङ्गलं गरुडध्वजः ॥ ११ ॥

इति श्रीराजराजेश्वरतीर्थविरचितं मङ्गलाष्टकं संपूर्णम् ॥

★ ★ ★

# मङ्गलाष्टकम्

श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

श्रीक्षोण्यो रमणीयुगं सुरमणी पुत्रोऽपि वाणीपतिः
पौत्रश्चन्द्रशिरोमणिः फणिपतिः शय्यासुराः सेवकाः ।
तार्क्ष्यो यस्य रथो महश्च भवनं ब्रह्माण्डमाद्यः पुमान्
श्रीमद्वेङ्कटभूधरेन्द्ररमणः कुर्याद्धरिर्मङ्गलम् ॥ १ ॥

यत्तेजो रविकोटिकोटिकिरणान् धिक्कृत्य जेजीयते
यस्य श्रीवदनाम्बुजस्य सुषमाराकेन्दुकोटीरपि ।
सौन्दर्यं च मनोभवानपि बहून् कान्तिश्च कादम्बिनीं
श्रीमद्वेङ्कटभूधरेन्द्ररमणः कुर्याद्धरिर्मङ्गलम् ॥ २ ॥

नानारत्नकिरीटकुण्डलमुखैर्भूषागणैर्भूषितः
श्रीमत्कौस्तुभरत्नभव्यहृदयः श्रीवत्ससल्लाञ्छनः ।
विद्युद्वर्णसुवर्णवस्त्ररुचिरो यः शङ्खचक्रादिभिः
श्रीमद्वेङ्कटभूधरेन्द्ररमणः कुर्याद्धरिर्मङ्गलम् ॥ ३ ॥

यत्फाले मृगनाभिचारुतिलकी नेत्रेऽब्जपत्रायते
कस्तूरी घनसारके सरमिलत् श्रीगन्धसारद्रवैः ।
गन्धैर्लिप्ततनुः सुगन्धसुमनोमालाधरो यः प्रभुः
श्रीमद्वेङ्कटभूधरेन्द्ररमणः कुर्याद्धरिर्मङ्गलम् ॥ ४ ॥

एतद्दिव्यपदं ममास्ति भुवि तत् सम्पश्यतेत्यादरात्
भक्तेभ्यः स्वकरेण दर्शयति यद् दृष्ट्वादि सौख्यं गतः ।
एतद्भक्तिमतो महानपि भवाम्भोधिर्नदीति स्पृशन्
श्रीमद्वेङ्कटभूधरेन्द्ररमणः कुर्याद्धरिर्मङ्गलम् ॥ ५ ॥

गङ्गा सिन्धु सरस्वती च यमुना गोदावरी नर्मदा
कृष्णा भीमरथी च फल्गुसरयूः श्रीगण्डकी गोमती ।
कावेरी कपिला प्रयागकिटिजानेत्रावतीत्यादयो
नद्यः श्रीहरिपादपङ्कजभवाः कुर्वन्तु नो मङ्गलम् ॥ ६ ॥

वेदाश्चोपनिषद्गणाश्च विविधाः साङ्गाः पुराणान्विता
वेदान्ता अपि मन्त्रतन्त्रसहितास्तर्काः स्मृतीनां गणाः ।
काव्यालङ्कृतिनीतिनाटकयुताः शब्दाश्च नानाविधाः
श्रीविष्णोर्गुणनामकीर्तनपराः कुर्वन्तु नो मङ्गलम् ॥ ७ ॥

आदित्यादिनवग्रहाः शुभकरा मेषादयो राशयो
नक्षत्राणि सयोगकाश्च तिथयस्तद्देवतास्तद्गणाः ।
मासाब्दा ऋतवस्तथैव दिवसाः सन्ध्यास्तथा रात्रयः
सर्वे स्थावरजङ्गमाः प्रतिदिनं कुर्वन्तु नो मङ्गलम् ॥ ८ ॥

इत्येतद्वरमङ्गलाष्टकमिदं श्रीराजराजेश्वरे-
णाख्यातं जगतामभीष्टफलदं सर्वाशुभध्वंसनम् ।
माङ्गल्यादिशुभक्रियासु सततं सन्ध्यासु वा यः पठे-
द्धर्मार्थादिसमस्तवाञ्छितफलं प्राप्नोत्यसौ मानवः ॥ ९ ॥

तदेव लग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव ।
विद्याबलं दैवबलं तदेव लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि ॥ १० ॥

मङ्गलं भगवान् विष्णुर्मङ्गलं मधुसूदनः ।
मङ्गलं देवकीपुत्र मङ्गलं गरुडध्वजः ॥ ११ ॥

इति श्रीराजराजेश्वरतीर्थविरचितं मङ्गलाष्टकं संपूर्णम् ॥

★ ★ ★

# मङ्गलाष्टकम्

श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

श्रीक्षोण्यो रमणीयुगं सुरमणी पुत्रोऽपि वाणीपतिः
पौत्रश्चन्द्रशिरोमणिः फणिपतिः शय्यासुराः सेवकाः ।
तार्क्ष्यो यस्य रथो महश्च भवनं ब्रह्माण्डमाद्यः पुमान्
श्रीमद्वेङ्कटभूधरेन्द्ररमणः कुर्याद्धरिर्मङ्गलम् ॥ १ ॥

यत्तेजो रविकोटिकोटिकिरणान् धिक्कृत्य जेजीयते
यस्य श्रीवदनाम्बुजस्य सुषमाराकेन्दुकोटीरपि ।
सौन्दर्यं च मनोभवानपि बहून् कान्तिश्च कादम्बिनीं
श्रीमद्वेङ्कटभूधरेन्द्ररमणः कुर्याद्धरिर्मङ्गलम् ॥ २ ॥

नानारत्नकिरीटकुण्डलमुखैर्भूषागणैर्भूषितः
श्रीमत्कौस्तुभरत्नभव्यहृदयः श्रीवत्ससल्लाञ्छनः ।
विद्युद्वर्णसुवर्णवस्त्ररुचिरो यः शङ्खचक्रादिभिः
श्रीमद्वेङ्कटभूधरेन्द्ररमणः कुर्याद्धरिर्मङ्गलम् ॥ ३ ॥

यत्फाले मृगनाभिचारुतिलकी नेत्रेऽब्जपत्रायते
कस्तूरी घनसारके सरमिलत् श्रीगन्धसारद्रवैः ।
गन्धैर्लिप्ततनुः सुगन्धसुमनोमालाधरो यः प्रभुः
श्रीमद्वेङ्कटभूधरेन्द्ररमणः कुर्याद्धरिर्मङ्गलम् ॥ ४ ॥

एतद्दिव्यपदं ममास्ति भुवि तत् सम्पश्यतेत्यादरात्
भक्तेभ्यः स्वकरेण दर्शयति यद् दृष्ट्वादि सौख्यं गतः ।
एतद्भक्तिमतो महानपि भवाम्भोधिर्नदीति स्पृशन्
श्रीमद्वेङ्कटभूधरेन्द्ररमणः कुर्याद्धरिर्मङ्गलम् ॥ ५ ॥

यः स्वामीसरसस्तटे विहरतो श्रीस्वामिनाम्नः सदा
सौवर्णालयमण्डितो विधिमुखैर्बर्हिर्मुखैः सेवितः ।
यः शत्रून् हनयन् निजानवति च श्रीभूवराहात्मकः
श्रीमद्वेङ्कटभूधरेन्द्ररमणः कुर्याद्धरिर्मङ्गलम् ॥ ६ ॥

यो ब्रह्मादिसुरान् मुनींश्च मनुजान् ब्रह्मोत्सवायागतान्
दृष्ट्वा हृष्टमना बभूव बहुशः तैरर्चितः संस्तुतः ।
तेभ्यो यः प्रददात् वरान् बहुविधान् लक्ष्मीनिवासो विभुः
श्रीमद्वेङ्कटभूधरेन्द्ररमणः कुर्याद्धरिर्मङ्गलम् ॥ ७ ॥

यो देवो भुवि वर्तते कलियुगे वैकुण्ठलोकस्थितो
भक्तानां परिपालनाय सततं कारुण्यवारां निधिः ।
श्रीशेषाख्यमहीध्रमस्तकमणिर्भक्तैकचिन्तामणिः
श्रीमद्वेङ्कटभूधरेन्द्ररमणः कुर्याद्धरिर्मङ्गलम् ॥ ८ ॥

शेषाद्रिप्रभुमङ्गलाष्टकमिदं कृष्णेन यस्येशितः
प्रीत्यर्थं रचितं रमेशचरणद्वन्द्वैकनिष्ठावता ।
वैवाहादिशुभक्रियासु पठितं यैः साधु तेषामपि
श्रीमद्वेङ्कटभूधरेन्द्ररमणः कुर्याद्धरिर्मङ्गलम् ॥ ९ ॥



## ॥ श्रीवेङ्कटेशद्वादशनामस्तोत्रम् ॥

श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

श्रीवेङ्कटेशमतिसुन्दरमोहनाङ्गं श्रीभूमिकान्तमरविन्ददलायताक्षम् ।
प्राणप्रियं परमकारुणकम्बुराशिं ब्रह्मेशवन्द्यममृतं वरदं नमामि ॥ १ ॥

अखिलविबुधवन्द्यं विश्वरूपं सुरेशं अभयवरदहस्तं कञ्जजाक्षं रमेशम् ।
जलधरनिभकान्तिं श्रीमहिभ्यां समेतं परमपुरुषमाद्यं वेङ्कटेशं नमामि ॥ २ ॥

वेङ्कटेशो वासुदेवो वारिजासनवन्दितः ।
स्वामिपुष्करिणीवासः शङ्खचक्रगदाधरः ॥ ३ ॥

पीताम्बरधरो देवो गरुडारूढशोभितः ।
विश्वात्मा विश्वलोकेशो विजयो वेङ्कटेश्वरः ॥ ४ ॥

एतानि द्वादशनामानि त्रिसन्ध्यं यः पठेन्नरः ।
सर्वपापविनिर्मुक्तो विष्णोः सायुज्यमाप्नुयात् ॥ ५ ॥

*इति श्रीवेङ्कटेशद्वादशनामस्तोत्रं सम्पूर्णम् ॥*



## ॥ श्रीवेङ्कटेशअष्टोत्तरशतनामावलिः ॥

१. ॐ श्रीवेंकटेशायः नमः
२. ॐ शेषाद्रिनिलयाय नमः
३. ॐ वृषदृग्गोचराय नमः
४. ॐ विष्णवे नमः
५. ॐ सदञ्जनगिरीशाय नमः
६. ॐ वृषाद्रिपतये नमः
७. ॐ मेरुपुत्रगिरीशाय नमः
८. ॐ स्वामिसरस्तटजुषे नमः
९. ॐ कुमारकल्पसेव्याय नमः
१०. ॐ वज्रदृग्विषयाय नमः
११. ॐ सुवर्चलासुतन्यस्तसेनापत्यकराय नमः
१२. ॐ श्रीरामाय नमः
१३. ॐ पद्मनाभाय नमः
१४. ॐ सदा वायुस्तुताय नमः
१५. ॐ त्यक्तवैकुण्ठलोकाय नमः
१६. ॐ गुहाकुञ्जविहारिणे नमः
१७. ॐ हरिचन्दनगोत्रेन्द्रस्वामिने नमः
१८. ॐ राजीवनेत्राब्जविषयाय नमः
१९. ॐ वसुपरिचरित्राय नमः
२०. ॐ कृष्णाय नमः
२१. ॐ अब्धिकन्यापरिष्वक्तवक्षसे नमः
२२. ॐ वेंकटाय नमः
२३. ॐ सनकादिमहायोगिपूजिताय नमः

२४. ॐ देवजित्प्रमुखानन्तदैत्यसङ्घप्रणाशिने नमः
२५. ॐ श्वेतद्वीपवसन्मुक्तपूजिताङ्घ्रियुगाय नमः
२६. ॐ शेषपर्वतरूपत्वप्रकाशनवराहाय नमः
२७. ॐ सानुस्थापिततार्क्ष्याय नमः
२८. ॐ तार्क्ष्याचलनिवासिने नमः
२९. ॐ मायागूढविमानाय नमः
३०. ॐ गरुडस्कन्धवासिने नमः
३१. ॐ अनन्तशिरसे नमः
३२. ॐ अनन्ताक्षाय नमः
३३. ॐ अनन्तचरणाय नमः
३४. ॐ श्रीशैलनिलयाय नमः
३५. ॐ दामोदराय नमः
३६. ॐ नीलमेघनिभाय नमः
३७. ॐ ब्रह्मादिदेवदृष्टाय नमः
३८. ॐ विश्वरूपाय नमः
३९. ॐ वैकुण्ठागतसद्धेमविमानान्तर्गताय नमः
४०. ॐ अगस्त्याभ्यर्चित-अशेषजनदृग्विषयाय नमः
४१. ॐ वासुदेवाय नमः
४२. ॐ हरये नमः
४३. ॐ तीर्थपञ्चकवासिने नमः
४४. ॐ वामदेवप्रियाय नमः
४५. ॐ जनकेष्टप्रदाय नमः
४६. ॐ वाक्पतिब्रह्मपात्रे नमः
४७. ॐ चन्द्रलावण्यदायै नमः
४८. ॐ मार्कण्डेयमहातीर्थजातपुण्यप्रदाय नमः

४९. ॐ नारायणनगेशाय नमः
५०. ॐ ब्रह्मकल्पोत्सवाय नमः
५१. ॐ शङ्खचक्रगदापद्मलसत्करतलाय नमः
५२. ॐ द्रवन्मृगमदासक्तविग्रहाय नमः
५३. ॐ केशवाय नमः
५४. ॐ नित्ययौवनमूर्तये नमः
५५. ॐ अर्थितार्थप्रदाय नमः
५६. ॐ विश्वतीर्थाघहारिणे नमः
५७. ॐ स्वामितीर्थसरःस्नातजनाभीष्टप्रदाय नमः
५८. ॐ कुमारधारिका-स्कन्द-महाभक्तिप्रदाय नमः
५९. ॐ जमदग्निसमुद्भूतपौत्रिणे नमः
६०. ॐ कूर्ममूर्तये नमः
६१. ॐ किन्नरद्वन्द्वशापान्तप्रदात्रे नमः
६२. ॐ माधवाय नमः
६३. ॐ वैखानसमुनिश्रेष्ठपूजिताङ्घ्रियुगाय नमः
६४. ॐ सिंहाचलनिवासिने नमः
६५. ॐ श्रीमन्नारायणाय नमः
६६. ॐ सद्भक्तनीलकण्ठाय नमः
६७. ॐ नृसिंहाय नमः
६८. ॐ कुमुदाक्षगणश्रेष्ठसेनापत्यप्रदात्रे नमः
६९. ॐ दुर्मेधः प्राणहर्त्रे नमः
७०. ॐ वामनाय नमः
७१. ॐ क्षत्रियान्तकरामाय नमः
७२. ॐ मत्स्यरूपाय नमः
७३. ॐ पाण्डवाघप्रहर्त्रे नमः

७४. ॐ श्रीधराय नमः

७५. ॐ उपत्यकाप्रदेशस्थशङ्करध्यानमूर्तये नमः

७६. ॐ रुक्माब्जसरसीकुललक्ष्मीकृततपस्विने नमः

७७. ॐ लसल्लक्ष्मीकराम्भोजदत्तकल्हारकस्रजे नमः

७८. ॐ सालिग्रामनिवासिने नमः

७९. ॐ शुकदृग्विषयाय नमः

८०. ॐ मृगयारसिकायाथवृषभासुरहारिणे नमः

८१. ॐ अञ्जनागोत्रपतये नमः

८२. ॐ वृषभाचलवासिने नमः

८३. ॐ अञ्जनासुतदात्रे नमः

८४. ॐ माधवाय नमः

८५. ॐ अघहारिणे नमः

८६. ॐ प्रियङ्गुप्रियकोलाय नमः

८७. ॐ श्वेतकोलवराहाय नमः

८८. ॐ नीलधेनुपयोधरसेकदेहोद्भवाय नमः

८९. ॐ सगरप्रियमित्राय नमः

९०. ॐ चोलपुत्रप्रियाय नमः

९१. ॐ सुधर्मणी सुचैतन्यप्रदात्रे नमः

९२. ॐ मधुघातिने नमः

९३. ॐ कृष्णाख्यविप्रवेदान्तदैशिकत्व प्रदात्रे नमः

९४. ॐ वराहाचलवासिने नमः

९५. ॐ बलभद्रप्रियानुजाय नमः

९६. ॐ त्रिविक्रमाय नमः

९७. ॐ महते नमः

९८. ॐ हृषीकेशाय नमः

९९. ॐ अच्युताय नमः

१००. ॐ नीलाद्रिनिलयाय नमः

१०१. ॐ क्षीराब्धिनाथाय नमः

१०२. ॐ वैकुण्ठाचलवासिने नमः

१०३. ॐ मुकुन्दाय नमः

१०४. ॐ अनन्ताय नमः

१०५. ॐ विरिञ्चाभ्यर्चित-अशेषनित्यसौम्यरूपाय नमः

१०६. ॐ सुवर्णमुखरीस्नातमनुजाभीष्टदायिने नमः

१०७. ॐ हलायुधजगत्तीर्थसमस्तफलदायिने नमः

१०८. ॐ गोविन्दाय नमः ॥ १०८ ॥

॥ भारतीरमणमुख्यप्राणान्तर्गत-श्रीभूवराहात्मक-श्रीलक्ष्मीवेङ्कटेशप्रसादोऽस्तु ॥



*सूचना : एकादशाध्यायकथासङ्क्षेपे पुट ५९१ पंक्ति ४ अनन्तरं अधोमुद्रितभागः २ पुटपरिमितः संयोजनीयः । अयं भागः पाठान्तरम् ॥)*

आकाशो जामात्रे कोटिसङ्ख्याकनिष्कान् ददौ । श्रीनिवासः— "महाराज ! भवान् दानपरायणः । दातव्यं देहि" इति पप्रच्छ । तदा श्रीनिवासाय शतभारमितकिरीटं कटिकाञ्चीं केयूर-नूपुरपादुकापदक-मौक्तिकामाला-कर्णभूषण-कङ्कण-नागभूषणं अङ्गुलीयवीरमुद्रिकाः ददौ । भोजन-पात्र-लघुपात्र-सलिलबृहत्पात्र-कचोल-इत्यादिपदार्थान् ददौ ।

ततः कन्यातः पुरोहितो गुरुः, वरतः पुरोहितो वसिष्ठः, गोत्रप्रवरान् अब्रुवन् । "अत्रिगोत्रोद्भवां सुवीरप्रपौत्रीं सुधर्मपौत्रीं आकाशपुत्रीं पद्मां कन्यां श्रीनिवासाय वराय वृणीध्वम्" इति गुरुः । "वासिष्ठगोत्रोद्भवाय ययातिप्रपौत्राय शूरसेनपौत्राय वसुदेवपुत्राय श्रीनिवासाय वराय पद्मां कन्यां स्वीकुर्मः" इति वसिष्ठः । एवं गोत्रप्रवरान् अब्रूताम् । ततः आकाशः "कृष्ण ! इमां कन्यां प्रदास्यामि" इत्युक्त्वा धरण्या स्रावित-मन्त्रपूत-सकनक-स्वामिपुष्करिणीतीर्थधारां श्रीनिवासदक्षिणकरे प्रक्षिप्य पद्मां समर्पयत् । ततः वधूवरयोः करयोः कङ्कणं अन्योन्यं बन्धयामासुः । ततः विप्रसुवासिनी-करस्पर्शपूर्वकं सुमङ्गलीषु अशिषः अभिनन्दन्तीषु गायन्तीषु श्रीनिवासः पुरोहितनिर्देशेन "माङ्गल्यं तन्तुनाऽनेन जगज्जीवनहेतुना । कण्ठे बध्नामि सुभगे चिरं जीव मया सह" इति वदन् माङ्गल्यं पद्माकण्ठे बबन्ध । वसिष्ठः पद्माञ्जल्यर्पितलाजैः श्रीनिवासेन यजुःशाखाक्रमेण लाजाहोमं कारयामास । मुनयः मन्त्रैः नवरत्नाक्षतान् श्रीनिवासमूर्ध्नि प्रचिक्षिपुः । विप्रसुवासिनीभ्यः वस्त्राभरणताम्बूलदक्षिणाः आकाशः ददौ । एवं दशम्यां महोत्सवोऽभूत् ॥ पद्माश्रीनिवासौ पुरोहितपुत्रपौत्रादिभिः अभुञ्जाताम् । आकाशः कृष्णसन्निधौ बुभुजे । लक्ष्म्या सह धरणी बकुला च बुभुजाते । एवं तद्दिनं प्राचरत् ॥

परेद्युः प्रातः सकलानां भोजनम् । बहिर्भुक्तवतां अपि पुष्कलं अन्नादिभिः भोजनं समाचरत् । एवं चतुरो दिवसान् महासम्भ्रमकोलाहलः अभूत् । पञ्चमे दिने नागबलिः प्रावर्तत । ततो राजा देवमातरं बकुलां पूजयित्वा पुत्रीं पद्मां अर्पयामास । ततः धरणी रुदन्ती पद्मां श्रीनिवासकरे अर्पयत् । ततः कन्यार्पणनिमित्तेन राज्ञी-राज-तोण्डमानादीनां किञ्चित् दुःखं अभूत् । तेन देवादीनाम् । ततः श्रीनिवासोऽपि भगिनीं स्मृत्वा रुरोद । ततः श्रीनिवासः रमया पद्मया सह ग्रामं प्रदक्षिणीकृत्य स्वस्थानं जिगमिषुः श्वश्रूश्वशुरौ प्रणम्य ताभ्यां आशिषो लब्ध्वा तयोरनुज्ञया पद्मया सह गरुडारूढः सर्वदेवैः सह प्रययौ । जामात्रे राजा पारिबर्हादिकं ददौ । प्रयाणे श्वशुरस्य स्वभक्तस्य सायुज्यं अन्वगृह्णात् । आकाशः पद्मायै हितं उपदिश्य प्रत्यावर्तत ॥ ततः हरिः पद्मया सुवर्णमुखरीं प्राप्य शैलानारोहण-

दीक्षानिमित्तं अगस्त्याश्रमे षण्मासान् अवसत् ॥ सकलदेवान् स्वधामानि प्रेषयामास । ऋषयः सर्वे अरण्यं जग्मुः । हर्याज्ञया लक्ष्मीः कोल्लापुरं गता ॥ गते देवगणे श्रीहरिः अगस्त्यालये सुखं उवास ॥

शतानन्दो वदति— "जनकनृप ! श्रीनिवासविवाहाध्यायमाहात्म्यं ये शृण्वन्ति तेषां भाग्योदयं शृणु— कोटिसङ्ख्याककन्याप्रदानेन यावद्भूमिदानेन यत्फलं लभ्यते तत्फलं श्रीनिवासकल्याणाध्याय-माहात्म्यश्रवणेन लभ्यते । ये श्रीनिवासविवाहोत्सवं कुर्वन्ति तेषां वेङ्कटेशानुग्रहेण महोत्सवो भवति । हे राजन् ! ते मया श्रीनिवासविवाहचरित्रं उक्तम् । इदं चरित्रं श्रोतॄणां शुभप्रदं, मङ्गलप्रदम् । श्रोता श्रावयिता च सर्वाभीष्टान् प्राप्नोति हि ।"

इत्येवं श्रीनिवास-विवाह-प्रशंसनं यत् शतानन्दमुनिभिः जनकराजं प्रति निरूपयामास तदेवांशं सूतमुनिः शौनकादिविप्रान् प्रति निरूपयामास ।

*इति श्रीमद्भविष्योत्तरपुराणे श्रीवेङ्कटेशमाहात्म्ये द्वादशाध्यायकथासङ्क्षेपः ॥*

॥ श्रीकृष्णार्पणमस्तु ॥



# ॥ प्रमाणानामाकरः ॥

*पुराणम्–*

## उदाहृतेतरप्रमाणानि–

# ॥ व्याकरणविचाराः ॥

★ ★ ★

# ॥ न्यायाः तथा सूक्तयश्च ॥





## ॥ शब्दव्युत्पत्तयः ॥

अपत्यम् – गू–७६ ।

अब्दव्रतम् – गू–७७ ।

पतिव्रता – क–७९ ।

बाह्यभोगविवर्जिता – क–८० ।

पुरुषम् – गू–९४ ।

द्विसप्तवर्षः – क–१०२ ।

स्वरः – गू–१११ ।

श्राद्धम् – क–१४३ ।

विश्रान्ताः – गू–१४३ ।

वेङ्कटः – क–१५१ ।

सुमख – क–१६० ।

कश्यपादिमुनीश्वराः – क–१६० ।

नारदः – क–१६३ । गू–१६५ ।

संशयार्थम्– क–१६३ ।

किरीटमकुटोज्वलम्– क–१६६ ।

मांसजन्मना– क–१७६ ।

क्रोशार्धद्वयमातृके– क–१८४ ।

कुन्दः – क–१९० ।

मातङ्गः – क–१९१ ।

भल्लूकः – क–१९२ ।

स्वामिपुष्करिणीजले – क–१९९ ।

★ ★ ★

## ॥ कोशाः ॥

| | |
|---|---|
| अमरकोशः | क–१३, १५, २४, २७, ३२, ३३, ४६, ५९, ९९, १०५, १०६, १०७, ११०, ११६, १२६, १३८, १४७, १६३, १६६, १६९, १७६, १९०, १९१, १९२, १९९, २०६, २१३, २१४, २२७, २२८, २४५, २४८, २७१, ३१८, ३२०, ३२३, ३२६, ३३९, ३४६, ३६७, ४१०, ४१४, ४२७, ४४२, ४७९, ४८५, ५०३, ५२५, ५३५, ५७७, ५७८, ५९६, ५९७, ६३९, ६८५, ६९९ । |
| | गू–११४, ३५२ । |
| वैजयन्ती | क–३६, १५२, १५३, १६३, १९०, १९२, २३९, ३३४ । |
| नानार्थकोशः (रत्नमाला) | क–१९९, २१३, २३९, ३११, ३२०, ३४२, ३६४, ४०८, ४१२, ४२९, ४६१, ५५८, ६१२ । |
| निघण्टुः – | क–२८५ । |
| अभिधानम् | क–३२० । |
| विश्वः | क–५३२ । |
| पारिजातः | क–५६३ । |



श्रीवेङ्कटेशमाहात्म्यगतश्लोकानां

# श्लोकार्धानुक्रमणिका

★ ★ ★

